**या ओषधी**—रोषधय **पूर्वाः**—पुरातन्यो **जाता**—उत्पन्ना केभ्य सकाशात् **देवेभ्यः** जगन्निर्मातृभ्यः यद्वा देवा द्योतमाना ऋतव तेभ्य कस्मिन् काले **त्रियुगं**—त्रिषु युगेषु विशेषेण प्रादुर्भावापेक्षया कृतादियुगत्रयमुक्त कलौ त्वत्यन्ताऽन्यत्वादुपेक्षित अथवा **त्रिषु युगेषु** वसन्ते प्रावृषि शरदि चेत्यर्थ । **अहं बभ्रूणां**-बभ्रूवर्णाना सोमाद्योषधीना **शतं सप्त च धामानि** अनुलेपसम्माजनाभषेकादिरूपेणाऽऽश्रयभूतानि स्थानानि तु क्षिप्र **मन्ने**—मन्ये सम्भावयामीत्यर्थ । अत्र वाजसनेयक **या ओषधीः पूर्वा जाता देवेभ्यस्त्रियुगं पुरेति** ऋतवो वै देवास्तेभ्य एतास्त्रिपुरा जायन्ते वसन्ते प्रावृषि शरदि मनै नु बभ्रूणामहमिति सोमो वै बभ्र सोम्या ओषधय औषध. पुरुष शत धामानीति यदिद शतायु शतघं शतवीर्य एताभि र्हास्यशत धामानि सप्त चेति य एवमेव सप्त शीर्षन् प्राणास्तानेनदाहेति । अत्र निरुक्तञ्च—या ओषधय पूर्वा जाता देवेभ्यस्त्रीणि युगानि पुरा मन्ये नु तद्बभ्रूणामह बभ्रूवर्णाना हरणाना भरणानामिति वा शत धामानि सप्त चेति धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानीति जन्मान्यत्राभिप्रेतानि **सप्तशतानि**—सप्तशत पुरुषस्य मर्मणा तेष्वेना दधातीति ॥ ऋ० १० । ९७ । १ । वा० स० १२।७५

Herbs that sprang up in time of gold, three ages earlier than the Gods,
Of these, whose hue is brown, will I declare the hundred powers and seven.

**६—शतं वो अम्ब धामानि सहस्रमुत वो रुहः । अथाशतक्रत्वो यूयमिमं मे अगदं कृत ॥**

हे **अम्ब**—मातर ओषधयो **वः**—युष्माक **धामानि**—स्थानानि जन्मानि वा **शतं**—अपरिमितानि उतापि च **व.**—युष्माक **रुहः** प्ररोह. प्रोद्गम **सहस्रं**—अपरिमित **अथ**—अपि च हे **शतक्रत्वः**—शतकर्माणो **यूयमिमं मे**—मा मदीय वा जनमामयग्रस्तम**गदं**—गदो रोग. तद्रहित **कृत**—कुरुत ॥ २ ॥ वा० स० १२।७६

Ye mothers, have a hundred homes, yea, and a thousand are your growth.
Do ye who have a thousand powers, free this my patient from diseases.

**७—ओषधीः प्रति मोदध्वं पुष्पवतीः प्रसूवरीः । अश्वा इव सजित्वरी वीरुधः पारयिष्णवः ॥**

हे **ओषधीः**—ओषधय **प्रतिमोदध्वं**—इम रुग्णं प्रति मुदिता हृष्टा भवत कीदृश्यो यूय पुष्पवती' पुष्पवत्य **प्रसूवरीः**-प्रकर्षेण सूयन्त उपभोगायेति प्रसवाः फलानि तद्वत्य किं **चाश्वा इव**—अश्ववाना हया इव **सजित्वरीः**—सहरोगं जयन्त्यः **वीरुधो**—विरहन्त्य **पारयिष्णवः**—पुरुष पारयन्त्यो रोगात् ॥ ३ ॥ वा० स० १२।७७

Be glad and joyful in the plants, both blossoming and bearing fruits,
Plants that will lead to success like men who conquer, in the race.

**८—ओषधीरिति मातरस्तद्वो देवीरुपब्रुवे । सनेयमश्वं गां वास आत्मानं तव पूरुष ॥**

हे **ओषधीः**—ओषधय **देवी**—दैव्यो द्योतनादिगुणका हे **मातर**—जनाना मातृभूना मातृवद्धितकारित्वान्मातृत्वोपचार अथवा मातर आरोग्यनिमात्र्यो **वो**—युष्माकं सम्बन्धिन भिषजं तद्वक्ष्यमाण इति—इत्थ **उपब्रुवे**—उपब्रवीमि किं तदितिचेत् उच्यते—ओषध्यर्थं अह **अश्वं गां वासोंऽशुकं** किं बहुना आत्मानमपि हे **पुरुष**—चिकित्सक **तव**—तुभ्य **सनेयं**—ददामि ॥ ४ ॥ वा० स० १२।७८

Plants, by this name I speak to you, mothers, to you the Goddesses'
Steed, cow, and garment may I win, win back thy very self O man.

**९—अश्वत्थे वो निषदनं पर्णे वो वसतिष्कृता । गोभाज इत्किलासथ यत्सनवथ पूरुषम् ॥**

हे ओषधिदेवता **वः**—युष्माक**मश्वत्थे निषदनं** नितरा वर्तन तथा **वः**—युष्माक **पर्णे**—पलाशे **वसति**—निवास' कृता । तृतीयस्यामितो दिवि सोम आसीत्त गायत्र्याहरत्तस्य पर्णमाच्छिद्यत तत्पर्णोऽभवत्तत्पर्णस्य पर्णत्वमिति ब्राह्मणात् । **पलाशस्य**—पर्णत्वप्रसिद्धि अश्वत्थपलाशयोर्यज्ञयोग्यत्वप्राधान्याऽपेक्षयोपादानम् । किंच **गोभाज इत्किल**—गवो भाजयित्र्य एवाऽऽ**सथ**—भवथ खलु यद्यपि **सनवथ**—सभजध्व पुरुष तर्ह्येव भवथेति । वनु षणु सभक्तौ, लेट्यडागम. व्यत्ययेन उः प्रत्ययः यद्वा औत्सर्गिकः शप्चेति विकरणता ॥ ५ ॥ वा० सं० १२।७९

The holy fig tree is your home, your mansion is the Parna tree·
Winner of cattle shall ye be if ye regain for me this man again.

१०—यत्रौषधीः समग्मत राजानः समिताविव । विप्रः स उच्यते भिषग्रक्षोहाऽमीवचातनः ॥

यत्र—यस्मिन्देशे ओषधीरोषध्य समग्मत—सगच्छन्ते राजानः—समिताविव—सङ्ग्रामे यथा तत्र तथा संगता भवन्ति तद्वत् तासां नानाविधानामोषधीना सगमन यस्मिन्देशे अस्ति तत्र विप्रः—प्राज्ञो ब्राह्मण स भिषगुच्यते रक्षोहा—रक्षोहन्ता अमीवचातनः—अमीवा व्याधि· तस्य चातनश्चातयिता च भवति तदानीम् ॥६॥वा०स०१२।८०

He who hath store of herbs at hand—like kings amid a crowd of men.
Physician is that sage's name, fiend slayer, chaser of desease.

११—अश्वावती सोमावती मूर्जयन्ती मुदोजसम् । आवित्सि सर्वा ओषधीरस्मा अरिष्टतातये ॥

अश्वावत्यादय प्रधानभूता ओषध्यश्चतस्र· ता सर्वा औषधीरावित्सि—आजाने स्तौमीत्यर्थ अस्मा—अरिष्टतातये—अस्मै रोगाय अमु रोग विनाशयितुमित्यर्थ ॥ ७ ॥ वा० स० १२।८१

Herbs rich in Soma, rich in steeds, in nourishment, in strengthening power,
All these have I provided here, that this man may be whole again.

(The words 'rich in steed' etc do not convey any meaning concerning any medicinal qualities. The meaning of these words seems to be here as follows:—

अश्वावतीं=वाजीकरणम् Vajikarana. सोमावतीं=आयुर्वर्धकम् Ayurvardhaka. ऊर्जयन्तीं=वृष्यम् Vrishya. उदोजसम्=रसायनम् Rasayana.

The above mentioned qualities are well-known in the Ayurveda, of the medicines.)

१२—उच्छुष्मा ओषधीनां गावो गोष्ठादिवेरते । धनं सनिष्यन्तीनामात्मानं तव पूरुष ॥

ओषधीना शुष्मा—बलानि उदीरते-उद्गच्छन्ति रुग्णे सवीर्यं प्रोद्गमयन्तीत्यर्थं । गावोगोष्ठादिव—ता तथा तत· सकाशादुदीरते तद्वत् कीदशानामोषधीना उच्यते धनं—स्वसामर्थ्यलक्षणं सनिष्यन्तीना—गातुमिच्छन्तीना किं प्रतीति उच्यते हे पूरुष—पुरुष रोगग्रस्त तवात्मान शरीर प्रति । यद्वा प्ररोहन्तीरोषधी दृष्ट्वा वदति हे पुरुष प्रियङ्गवाद्योषधिस्वामिन् तव आत्मान वर्धयितु धन सनिष्यन्तीना व्रीह्याद्योषधीना शुष्मा उदीरते ॥ ८ ॥ वा० स० १२।८२

The healing virtues of the Plants stream forth like cattle from the stall.
Plants that shall win me store of wealth, and save thy Vital breath, O man,

१३—इष्कृति र्नाम वो माताथो यूयं स्थ निष्कृतीः । सीराः पतत्रिणीः स्थन यदामयति निष्कृथ ॥

हे ओषधयो वो माता—जननी इष्कृतिर्नाम—सर्वेषा रुग्णाना निष्कर्त्रीति प्रसिद्धा यस्मात्सा रुग्णं निष्करोति अथो—अतो यूयमपि निष्कृतीः—निष्कृतय स्थ—भवथ किंच यूयं सीराः—मरणशीला पतत्रिणीः—पतनवत्यश्च स्थन—भवथ तप्तनविति—थनादेश । किंच पुरुषो यद्यदि आमयति—व्याधितोभवति त निष्कृत—सस्कुरुथ ॥ ९ ॥
वा० स० १२।८३

Reliever is your mother's name, and hence Restorer are ye called,
Rivers are ye with wings that fly, keep for whatever brings disease.

१४—अतिविश्वाः परिष्ठाः स्तेन इव व्रजमक्रमुः । ओषधीः प्राचुच्यवु र्यत्किञ्च तन्वो ३ रपः ॥

**विश्वा**—व्याप्ता' **परिष्ठाः** परितः स्थिता ओषधय' **अत्यक्रमुः**—व्याधीन् अतिक्रान्तवत्य' **स्तेन इव व्रजं**—यथास्तेनो व्रजं अत्यक्रमीत् तद्वत् तथा कृत्वा **ओषधी**—ओषधयः **प्रचुच्यवुः**—प्रच्यावयन्ति यत्किञ्च **तन्व**—रुग्णशरीरस्य **रप** पाप व्याधिलक्षणमस्ति तदिति ॥ १० ॥ वा० सं० १२।८४

Over all fences have they passed, as steals a thief into the fold,
The Plants have driven from the frame, whatever malady was there.

**१५—यदि मा वाजयन्नहमोषधी र्हस्त आदधे । आत्मा यक्ष्मस्य नश्यति पुरा जीवगृभो यथा ॥**

अह यद्यदीमा ओषधीर्हस्ते **आदधे**—आधारयामि किंकुर्वन् वाजयन् रुग्ण बलिन कुर्वन् तत. यक्ष्मस्य रोगस्याऽऽत्मा नश्यति । **जीवगृभो**—यथा जीवाना शकुन्यादीना ग्राहकात् व्याधात्यथा जीवा नश्यन्ति तद्वत् । यद्वा जीवगृभ —मृत्यो सकाशात् जीवो बध्यते तद्वत् ॥ ११ ॥ वा० स० १२।८५

When, bringing back the vanished strength, I hold these herbs within
my hand,
The spirit of disease departs ere he can seize upon the life.

**१६—यस्यौषधीः प्रसर्पथाङ्गमङ्गं परुष्परुः । ततो यक्ष्मं विबाधध्व उग्रो मध्यमशीरिव ॥**

हे ओषधी'—ओषधयो यस्य रुग्णस्याऽङ्गमङ्ग यदङ्ग परु परु यद्यत्पर्व प्रसर्पथ प्रकर्षेणाश्रयथ ततोङ्गात् पर्वणश्च यक्ष्मं व्याधिं विबाधध्वे उग्र उद्गूर्णबलो मध्यमशी मध्यमस्थाने वर्तमानो राजा यथोपद्रवकारिण समनन्तर शत्रून् पदेपदे विबाधते तद्वत् ॥ १२ ॥ वा० स० १२।८६

He through whose frame, O plant ye creep member by member, joint by joint,
From him ye drive away disease like some strong arbiter of strife.

**१७—साकं यक्ष्म प्रपत चाषेण किकिदीविना । साकं वातस्य ध्राज्या साकं नश्य निहाकया ॥१३॥**

हेऽस्मदीयस्य पुरुषस्य शरीराधिष्ठायिन् **यक्ष्म**—व्याधे त्वम् साक सहैव **प्रपत**—प्रकर्षेण शीघ्र गच्छ केन साकमिति उच्यते—चाषेण अतिशीघ्र पतता चापाख्येण पक्षिणा सह तथा **किकिदीविना**—पक्षिणा च सह तथा वातस्य शीघ्रं गच्छतो वायो **ध्राज्या**—प्रजुतौ गत्या वेगेन सह गच्छ तथा **निहाकया** गोधिकया साक **नश्य** नाशं प्राप्नुहि ॥ १३ ॥ वा० स० १२।८७

Fly, spirit of disease, be gone, with the blue joy and kingfisher,
Fly with wind's impetuous speed, vanish together with the storm.

**१८—अन्या वो अन्यामवत्वन्यान्यस्या उपावत । ताः सर्वाः संविदाना इदं मे प्रावता वचः ॥ १४ ॥**

हे ओषधयो वो युष्माक मध्ये अन्या ओषधिरन्यामोषधिमवतु प्राप्नोतु अवतिरत्र गत्यर्थं । तथान्यान्यस्या समीपमुपावत उपागच्छत एव या' सन्ति क्षित्यामोषधय ता सर्वा. सविदानाः परस्परमैकमत्य प्राप्ताः सत्य इद मे मदीय वच. प्रार्थनालक्षण वचनं प्रावत प्ररक्षत ॥ १४ ॥ वा० स० १२।८८

Half every one the other, lend assistance each of you to each,
All of you be accordant, give furtherance to this speech of mine.

**१९—याः फलिनी र्या अफला अपुष्पा याश्च पुष्पिणीः । बृहस्पतिप्रसूतास्ता नो मुञ्चन्त्वंहसः ॥१५॥**

या **फलिनी'**—फलवत्य या **अफलाः**—फलवर्जिता या अपुष्पा पुष्परहिता याश्च पुष्पिणी पुष्पवत्य बृहस्पतिप्रसूता बृहस्पति मन्त्राभिमानी देव तेनाऽनुज्ञातास्ता नोऽस्मान् अहसो मुचन्तु मोचयन्तु ॥१५॥ वा० स० १२।८९

Let fruitful plants, and fruitless, those that blossom, and blossomless,
Urged onward by Brihaspati, release us from our pain and grief.

२०—मुञ्चन्तु माशपथ्या ३ दथो वरुण्यादुत । अथोयमस्य पड्वीशात्सर्वस्माद्देवकिल्विषात् ॥१६॥

मा—मा ओषधयः शपथ्यात्—शपथसजातादेनसः पापान्मुञ्चन्तु अथो—अपिच वरुण्यात्—वरुणसम्भवात् मां मुञ्चन्तु वरुणोऽपि स्वपाशेन जातमात्रं पुरुष बध्नाति उतेति—पूरण, अथोअपिच यमस्य पड्वीशात् पादबन्धनात् निगडात् मुञ्चन्तु न केवल वरुणादेः पापात् सर्वस्मात् देवकिल्विषात्—देवैः कृतात्पापात् मुञ्चन्तु ॥ १६ ॥
वा० सं० १२।९०

Release me from the curses, plague and who that comes from 'Varuna';
Free me from Yama's father, from sin and offence against the Gods.

२१—अवपतन्तीरवदन्दिव ओषधयस्परि । यं जीवमश्नवामहै न स रिष्याति पूरुषः ॥ १७ ॥

दिवो—द्युलोकादवपतन्तीरवपतन्त्य ओषधय इत्य पर्यवदन् किमिति उच्यते य जीव जीवन्तमश्नवामहै व्याप्नुमो न स पूरुष पुरुषो रिष्याति—रिष्यति न हिंस्यते ॥ १७ ॥
वा० स० १२।९१

What time descending from the sky, the Plants flew earthward, thus they spake,
No evil befall the man whom, while he liveth we pervade.

२२—या ओषधीः सोमराज्ञी र्बह्वीः शतविचक्षणाः । तासां त्वमस्युत्तमारं कामाय शं हृदे ॥१८॥

या ओषधीरोषधय सोमराज्ञी सोमो राजा स्वामी यासा तास्तथोक्ता बह्वीः—असह्याताः शतविचक्षणाः बहुदर्शनाः हे सोमाख्य ओषधे तासामोषधीना त्वमुत्तमासि यस्मादेव तस्मात् आरमल पर्याप्त कामाय—कान्ताय हृदे हृदयाय श सुखकरी भवेति शेषः ॥ १८ ॥
वा० स० १२।९२

Of all the many Plants whose king is Soma, Plants of hundred forms,
Thou art the plant most excellent, prompted to the wish, sweet to the heart.

२३—या ओषधीः सोमराज्ञी र्विष्ठिताः पृथिवीमनु । बृहस्पतिप्रसूता अस्यै संदत्त वीर्यम् ॥ १९ ॥

या ओषधीः सोमराज्ञी पृथिवीमनुविष्ठिता विविध स्थिता दिव सकाशात् आगत्य पृथिव्या नानाभेदेन स्थिता. बृहस्पतिप्रसूता बृहस्पतिनाऽनुज्ञाता सत्यो यूय अस्यै रुग्णतनवे वीर्यं सन्दत्त सन्धत्त ॥ १९ ॥ वा० स० १२।९३

O all ye various herbs, whose king is Soma, that overspread the earth,
Urged onward by Brihaspati, combine your virtue in this plant.

२४—मा वो रिषत्खनिता यस्मै चाऽहं खनामि वः । द्विपच्चतुष्पदस्माकं सर्वमस्त्वनातुरम् ॥ २० ॥

हे ओषधयो—वो युष्मान् मारिषत् मा हिंस्यात् क खनिता भूमे खननकर्ता यस्मै रुग्णाय चाहं खनामि वो युष्मान् किञ्चाऽस्माक सम्बन्धि द्विपत् पुत्रभृत्यादिक चतुष्पत् गोमहिष्यादिक यदस्ति तत्सर्वमनातुरमरोगमस्तु ॥ २० ॥
वा० स० १२।९५

Unharmed he be, who digs you up, unharmed the man for whom I dig
And let no malady attack biped or quadruped of ours

२५—याश्चेदमुपशृण्वन्ति याश्च दूरं परागताः । सर्वाः सङ्गत्य वीरुधोऽस्यै संदत्त वीर्यम् ॥२१॥

याश्चौषधय इद स्तोत्रमुपशृण्वन्ति याश्चौषधयो दूर परागता सर्वा वीरुध सङ्गत्य सङ्गता सत्यो हे वीरुधोऽस्यै रुग्णतन्वे वीर्यं सन्दत्त ॥ २१ ॥ वा. स. १२।९४

All plants that hear this speech, and those that departed far away,
Come all assembled and confer your healing power upon this herb

२६—ओषधयः संवदन्ते सोमेन सह राज्ञा । यस्मै कृणोति ब्राह्मणस्तं राजन् पारयामसि ॥२२॥

ओषधय· सर्वाः सोमेन राज्ञा सह संवदन्ते संवादं कुर्वन्ति किमिति तदुच्यते–यस्मै–रुग्णाय ब्राह्मणः–ओषधि-सामर्थ्यज्ञो ब्राह्मणो वैद्य कृणोति–करोति चिकित्सा त रुग्ण हे राजन् पारयामसि–पारयाम उदतोमसि ॥ २२ ॥

With Soma as their Sovereign Lord, the Plants hold colloquy and say :
O King, we save from death whose cure a Brahman uudertakes,

**२७—त्वमुत्तमास्योषधे तव वृक्षा उपस्तयः । उपस्तिरस्तु सो ३ स्माकं यो अस्माँ अभि दासति ॥२३॥**

हे ओषधे–सोमाख्ये त्व ओषधीनामन्यासामुत्तमासि तव वृक्षा सर्वे उपस्तयः–अध शायिन एव तथा सति स उपस्तिरस्तु–अध शायी भवतु योस्मानभिदासति–अभिहिनस्ति भ्रातृव्य इति ॥ २३ ॥

Most excellent of all art thou, O Plant thy vessels are the tiees.
Let him be subject to our power, the man who seeks to injure us.

**२८—उत देवा अवहितं देवा उन्नयथा पुनः । उतागश्चक्रुषं देवा देवाजीव यथा पुनः ॥ २४ ॥**

उतापि च हे देवा अवहितमुन्नयथ उतापि च हे देवा आगः–अपराध चक्रुप कृतवन्तं मा तस्मादगसो रक्षत हे देवाः रक्षित्वा च पुन पश्चाज्जीवयथ चिरजीविनं कुरुत ॥ १ ॥

Ye Gods, raise up once more the man whom ye have humbled and brought low.
O Gods, restore to life again the man who hath committed sin.

**२९—यदान्त्रेषु गवीन्यो र्यद्वस्तावधि संस्रुतम् । एवाते मूत्रं मुच्यतां बहि र्बालिति सर्वकम् ॥ ६ ॥**

आन्त्रेषु उदरान्तर्गतेषु पुरीतत्सु । यत्–मूत्र सश्रित समवस्थित रोगवशाद् यथाकाल बहिरनिर्गच्छत् निरुद्धम् अभूत् तथा गवीन्यो । आन्त्रेभ्यो विनिर्गतस्य मूत्रस्य मूत्राशयप्राप्तिसाधने पार्श्वद्वयस्थे नाड्यौ गवीन्यौ इत्युच्येते । तयोरपि यत् मूत्रं सश्रितम् तथा वस्तौ । धनुराकारो मूत्राशयो वस्तिरुच्यते । तत्रापि यत् मूत्र सश्रितम् अस्ति ते–तव उक्तस्थानेषु निरुद्ध तत् मूत्रम् एव–एवम् । यथापूर्वं मुच्यता निर्गच्छतु । निर्गमनप्रकारमेवाऽऽह । सर्वकं–सर्व तत् मूत्रम् । तत् मूत्रं बाल्–अनुकरणशब्दोऽयम् । इति–एवमात्मक शब्द कुर्वत् बहि शरीराद् बाह्यप्रदेशे मुच्यताम् इति सम्बन्ध ॥ अथर्व १।३।६ ॥

Griffith's Translation—

> Whatever hath gathered, as it flowed, in bowels, bladders, or in groins,
>
> By this may I bring health unto thy body let the channels pour their burthen freely as gold.

Whitney's Translation.—

> What in thine entrails, thy (two) groins (Gavinis), what in thy bladder has flowed together, so be thy urine released, out of thee with a splash, all of it

**३०—प्र ते भिनद्मि मेहनं वर्त्रं वेशन्त्या इव । एवा ते मूत्रं मुच्यतां बहिर्बालिति सर्वकम् ॥अथर्व १।३।७॥**

हे मूत्रव्याधिपीडित ते–तव मेहनम् । मिह्यति सिञ्चति अनेनेति मेहन मूत्रनाल । तत् मेहन प्रभिनद्मि लोहशलाकया मूत्रनिर्गमनार्थं विदारयामि । तत्र दृष्टान्त । वर्त्रम्–वर्तते प्रवहति जलम् अत्रेति वर्त्रो–मार्गं । तं वेशन्त्या इव । विशन्ति तिष्ठन्ति अस्मिन् आप इति वेशन्त पल्वलम् । तत्र भवा आपो वेशन्त्या । ता यथा सुनिर्गमनमार्गं विदारयन्ति तयेत्यर्थ· । एव–एवम् इत्थम् मूत्रनिरुद्धनि सरणाय मार्गस्य कृतत्वात् ते मूत्र मुच्यताम् इत्यादि पूर्ववद् व्याख्येयम् ॥७॥

Griffith's Translation—

I lay the passage open as one cleanses the dam that bars the lake :
Thus let the channels &c.;

Whitney's Translation—

I split up thy urinator, like the weir of a tank.
So be thy etc., etc.

३१—विपितं ते वस्तिविलं समुद्रस्योदधेरिव । एवा ते मूत्रं मुच्यतां बहि र्बालिति सर्वकम् ॥ ८ ॥

हे मूत्ररोगार्त ते–तव वस्तिविल वस्तिद्वार व्याधिवशात् निरुद्ध मूत्रवर्त्म विपित विमुक्त मूत्रानि सरणयोग्य अस्तु । तत्र दृष्टान्त । समुद्रस्य–समुनत्ति स्वकीयेन जलेन कृत्स्नं जगत् क्लेदयतीति समुद्र । उदधे·–उदकानि धीयन्ते धार्यन्तेऽस्मिन्निति उदधि । अनेन बिलवदवस्थितेषु नदीमुखेषु समुद्रजलस्य नि सरणयोग्यता उक्ता । उदकपूर्णसमुद्रस्य नदीमुखपूर्णलक्षण जलनि सरणद्वार यथा विवृत भवति एव वस्तिविलमपि विवृत भवत्वित्यर्थ । एव–एवम । उक्त प्रकारेण वस्तिबिले विपिते सतीत्यर्थ । शेष पूर्ववद् व्याख्येयम् ॥ अथर्व १।३।८ ॥

Griffith's Translation—

Now hath portal been unclosed as of the sea that holds the flood :
Thus let etc. :

Whitney's Translation—

Unfastened (be) thy bladder-orifice, like that of water-holding sea.
So be thy etc.

३२—यथेषुका परापतदवसृष्टाधिधन्वनः । एवाते मूत्रं मुच्यतां बहि र्बालिति सर्वकम् ॥ ९ ॥

अल्पा इषु इषुका । अधिधन्वनः–आनतज्याद् धनुष· सकाशाद् अवसृष्टा–विमुक्ता सती यथा–येन प्रकारेण परापतत् परापतति–अनिरुद्धवेगा शीघ्रं लक्ष्योद्देशं गच्छति । एव–एवम् । शेष पूर्ववत् ॥ अथर्व १।३।९ ॥

Griffith's Translation—

Even as the arrow flies away when loosened from the archer's bow,
Thus let the burthen be discharged from channels that are checked no more.

Whitney's Translation—

As the arrow flew forth let loose from the bow—So be thy etc., etc.

३३—अमूर्या यान्ति योषितो हिरा लोहितवाससः । अभ्रातर इव जामयस्तिष्ठन्तु हतवर्चसः ॥ १ ॥

योषित·—स्त्रिया सवन्धिन्य अमूः—एता पुरतो दृश्यमाना लोहितवाससः—लोहितवर्णवस्त्रा· । लोहितवर्णा इत्यर्थ । यद्वा लोहितस्य रुधिरस्य निवासभूता, ईदृश्यो या हिरा सिराः रजोवहननाड्य यान्ति–गच्छन्ति । व्याधिवशात् सर्वदा प्रवहन्तीत्यर्थ । ता· सिरा क्रियमाणेन अनेन भैषज्यकर्मणा हतवर्चस —हततेजस्का· प्रणष्टरोगवीर्या सत्य तिष्ठन्तु स्थेयासु । मा प्रवाक्षुरित्यर्थ । तत्र दृष्टान्तः । अभ्रातर इव न विद्यन्ते भ्रातरो यासा ता अभ्रातरः । यथा अभ्रातृका जामय भगिन्य· ता यत उत्पन्नास्तत्रैव पितृकुले सन्तानकर्मणे पिण्डदानाय च तिष्ठन्ति तद्वद् इत्यर्थः ॥१॥

अ० वे० १।१७।१

Griffith's Translation—

Those maidens there, the veins, who run their course in robes of ruddy blues,
Must now stand quiet, reft of powers, like sisters who are brotherless.

Whitney's Translation—

You women ( Yoṡit ) that go, veins with red garments, like brotherless sisters, ( Jami )—let them stop with their splendour smitten

**३४—तिष्ठाऽवरे तिष्ठऽपर उत त्वं तिष्ठ मध्यमे। कनिष्ठिका च तिष्ठति तिष्ठादिद्धमनिर्मही ॥२॥**

इदानीं धमनी प्रार्थयते। हे **अवरे**–शरीरस्य अधोभागवर्तिनि सिरे त्वं **तिष्ठ** शस्त्राद्यभिघातजनितरुधिरस्रावाद् निवृत्ता भव। तथा हे **परे**–ऊर्ध्वाङ्गवर्तिनि सिरे त्वमपि **तिष्ठ**—। **उत** अपि च हे मध्यमे। मध्ये भवा मध्यमा। शरीरस्य मध्यभागवर्तिनि सिरे त्वमपि तिष्ठ। पूर्वार्धे प्रत्यक्षेण धमनीना स्थानभेदभिन्नाना प्रार्थना कृता। अधुना परिमाणतो भिन्नाना तासामेव पारोक्ष्ये प्रार्थना क्रियते। कनिष्ठिका सूक्ष्मतरा च नाडी तिष्ठति। तत्र यत्नविशेषो न कर्तव्य इत्यर्थ। अस्मिन् पक्षे चकार त्वर्थे। यद्वा पञ्चमलकारोऽयम्। कनिष्ठिका च तिष्ठतु महती चेति। मही महती स्थूलतरा धमनिः सिरा **तिष्ठादित्** तिष्ठत्वेव। अनेन प्रयोगेण निवृत्तरुधिरस्रावा अवतिष्ठताम् ॥ २ ॥

Griffith's Translation—

Stay still, thou upper vein, stay still, thou lower, stay thou midmost one,
The smallest one of all stands still, let the great vessel e'en be still.

Whitney's Translation—

Stop, lower one ! stop upper one ! do thou too stop midmost one ! if smallest stops, shall stop for sooth the great tube ( Dhamani )

**३५—शतस्य धमनीनां सहस्रस्य हिराणाम्। अस्थुरिन्मध्यमा इमाः साकमन्ता अरंसत ॥ ३ ॥**

शतस्य–शतसंख्यानाम् धमनीना हृदयगताना प्रधाननाडीनाम्। तथाच मुण्डकोपनिषदि अग्रे समाम्नायते। "शत चैका च हृदयस्य नाड्यस्तासा मूर्धानम् अभिनि सृतैका" ( क. उ. ६–१६ ) इति। तथा **सहस्रस्य**–सहस्रसंख्याकाना **हिराणां**–सिराणा शाखानाडीनाम्। सहस्रशब्दस्य अपरिमितपर्यायत्वात् श्रुतिप्रसिद्धाना सर्वासा शाखानाडीनाम् **एतद्** उपलक्षणम्। तथा च प्रश्नोपनिषदि वक्ष्यति। "अत्रैतद् एकशत नाडीना तासा द्वासप्तति द्वासप्तति प्रति शाखानाडीसहस्राण्यासु व्यानश्चरति" ( प्र. उ. ३–६ ) इति। आचार्यैरपि प्राधान्यविवक्षया काश्चन नाड्यः परिगणिताः—

**मध्यस्थायाः सुषुम्णायाः पर्वपञ्चकसम्भवाः। शाखोपशाखतां प्राप्ताः सिरा लक्षत्रयात्परम् ॥**
**अर्धलक्ष इति प्राहुः शरीरार्थविचारकः ॥ इति।**

तासा उभयविधाना नाडीना मध्यमाः मध्ये भवा इमा पूर्वं व्याधिवशात् स्रवन्त्यो नाड्यः **अस्थुरित्**–इच्छब्दः अवधारणे अतिष्ठन्नेव अधुना मन्त्रप्रभावात् निवृत्तरुधिरस्रावा भवन्त्येवेत्यर्थ। अत परं निवृत्तरुधिरस्रावाभिर्नाडीभिः **साकम्**–सार्धम् **अन्ताः**–अन्तिमाः अवशिष्टाः सर्वा नाड्य **अरंसत**–यथा पूर्वं रमन्ते स्म ॥ ३ ॥

Griffith's Translation—

Among the thousand vessels charged with blood, among a thousand veins,
Even these the middlemost stand still and their extremities have rest.

Whitney's Translation—

Of the thousand tubes, of the thousand viens, have stopped for sooth.
These midmost ones the end have rested ( ram ) together.

**३६—परिवः सिकतावती धनूर्बृहत्यक्रमीत्। तिष्ठते लयता सु कम् ॥ ४ ॥**

हे नाड्य व –युष्मान्। **सिकतावती**–सिकता रजासि तद्वती तदाधारभूता नाडी। यद्वा अश्मर्याख्यो व्याधिविशेषो यस्माद् उत्पद्यते सा नाडी सिकतावती। **धनूः**–धनुर्वद् वक्रो मूत्राशयो नाडीविशेष। स्मर्यतेहि—

मूत्राशयो धनुर्वक्रो वस्तिरित्यभिधीयते ॥ इति ॥

तथा बृहती=महती । उक्ता सा नाडी पर्यक्रमीत्=परितो व्याप्नोत् । सर्वान् रुधिरप्रवहणमार्गान् निरुध्य वर्तेत इत्यर्थः । अस्माद्धेतो. हे नाड्यो यूयं तिष्ठत=निवृत्तस्रावा भवत । कम्=सुखम् अस्य जनस्य सु=सुष्ठु इलयत=प्रेरयत । स्रावव्याधिविनिर्मुक्ता सुखं प्रयच्छतेत्यर्थः ॥ ४ ॥

(G) A mighty rampart built of sand hath circled and encompassed you
Be still and quietly take rest.

(W) About you hath gone ( Kram ) a great gravelly sand-bank ( Dhanu), stop ( and ) be quiet, I pray ( Sukam ).

अथ हृद्रोगकामलादिरोगनिवर्त्तकं सूक्तम् ॥

पञ्चमे अनुवाके सप्त सूक्तानि । तत्र "अनुसूर्यम्" इत्येतत् प्रथमं सूक्तम् । तेन हृद्रोगकामलादिरोगोपशान्तये रक्तवृषभरोममिश्रोदकं पाययेत् । तथा तेनैव रक्तगोचर्मच्छिन्नमणिं गोक्षीरे प्रक्षिप्य सम्पात्य अभिमन्त्र्य तन्मणिबन्धनम् तत्क्षीरपानञ्च कारयेत् । तथा रोहिणं हरिद्रौदनं भोजयित्वा तदुच्छिष्टानुच्छिष्टेन आप्रपदं प्रलिप्य खट्वायाम् उपवेश्य तदधः शुककाष्ठशुकगोपीतनकाल्यानाम् त्रयाणां पक्षिणां सव्यजङ्घाया हरितसूत्रेण आबन्धनम् इत्येवमादिकं सूत्रोक्तं कुर्यात्। सूत्रं च—" अनुसूर्यमिति मन्त्रोक्तस्य लोममिश्रम् आचामयति० " इत्यादि " जातरूपेणा०-पिधाप्य बध्नाति " इत्यन्तम् ( कौ० ४-२ ) "

३७—अनुसूर्यमुदयतां हृद्द्योतोहरिमा च ते । गो रोहितस्य वर्णेन तेन त्वा परि दध्मसि ॥ १ ॥

हे व्याधितपुरुष ते=तव हृद्द्योत.=हृदयं द्योतयति दीपयति सतापयतीति हृद्द्योतः हृद्रोगः यद्वा हृद्रोगजनित. सन्तापो हृद्द्योतः । तथा हरिमकामिलादिरोगजनितः शारीरो हरिद्वर्णः । व्याधिद्वयमपि सूर्यम् गच्छन्तं भानुं अनु= लक्षीकृत्य उदयताम् । उद्गच्छतु । उक्त· सन्तापो हरिद्वर्णश्च अस्माच्छरीरादुत्क्रम्य सन्तापकं हरिद्वर्णं सूर्यमेव प्राप्नोतु इत्यर्थः । अननिमतरोगजनितवर्णापगमानन्तरम् इष्टवर्णसयोजनमाह=गोरिति रोहितस्य लोहितवर्णस्य गो गोजातीयस्य वर्णेन लौहित्येन तेन प्रसिद्धेन तस्मात् पृथक् कृतेन हे रुग्ण त्वा=त्वा परिदध्मसि=परिदध्म. आच्छादयामः तव शरीरं प्रकृष्टवर्णोपेतं कुर्म इत्यर्थः । अथर्व० १।२२।१

(G) As the Sun rises let thy sore disease and yellowness depart.
We compass and surround thee with the colour of a ruddy ox

(W) Let them ( both ) go up toward the sun, thy heart-burn ( dyota ) and yellowness , with the colour of the red bull, with that we enclose (·paridhā ) thee.

३८—परि त्वा रोहितैः वर्णैः दीर्घायुत्वाय दध्मसि । यथायमरपा असदथो अहरितो भुवत् ॥ २ ॥

उक्तमेव लोहितवर्णपरिधानफलप्रकटनार्थं पुनराह—हे व्याधित त्वा=त्वा रोहितैः लोहितैर्वर्णैः प्रागुक्तैः गोसम्बन्धिभिः परि दध्मसि=परिदध्मः । किमर्थम् इति तदाह । दीर्घायुत्वाय=दीर्घं शतसवत्सरपरिमितं आयुर्जीवनकालो- यस्यासौ दीर्घायु.। तस्य भावस्तत्त्वम्। तदेव कथम् इत्यत आह। यथा=येन प्रकारेण अयम् चिकित्सित· पुरुष अरपा = रप इति पापनाम । अपगतपापः असत्=भवेत् । अथो पापक्षयानन्तरमेव अहरित·=कामिलादिरोगजनितहरिद्वर्णरहित भुवत्=भवेत् । रोगनिदानभूतपापक्षये सति तच्छान्तौ सत्याम् यथा दीर्घायुर्भवति तथा परिदध्म इति वाक्यार्थः ॥ २ ॥

(G) With ruddy hues we compass thee that thou mayest live a lengthened life:
So that this man be free from harm, and cast his yellow tint away.

(W) With red colours we enclose thee, in order to length of life; that this man may be free from complaints (-rapas), also may become not yellow.

**३९—या रोहिणी देवत्या ३ गावो या उत रोहिणीः । रूपरूपं वयोवयस्ताभिष्ट्वा परि दध्मसि ॥ ३॥**

**देवत्याः**=देवतासु भवा । देवसम्बन्धिन्यो **रोहिणीः**=रोहिण्य लोहितवर्णा । उक्तवर्णा या कामधेन्वादयो गाव. सन्ति । **उत**=अपि च या मनुष्यसम्बन्धिन्यो **रोहिणी**=रोहिण्य लोहितवर्णा गाव सन्ति ताभि उभयविधाभि- र्गोभि रूपरूप सर्वगोव्यक्तिगत कृत्स्नम् अरुणरूप तथा **वयोवय**.=सर्वव्यक्तिगत कृत्स्न यौवनम् । तत्सर्वम् आहृत्य हे रुग्ण **त्वा**=त्वा **परिदध्मसि**=परिदध्म । गोगतवर्णवद् उज्ज्वलैर्वर्णवयोविशेषैस्त्वदीय शरीर सयोजयाम इत्यर्थ. । यद्वा । ताभि. उक्तवर्णोपेताभिर्गोभि हे रुग्ण त्वा परिदध्मसि । परिधानप्रकारभेदमाह । रूपरूपम् रोगविशेषदूषित सर्वशरीर- गत रूप **वयोवयः**=उक्तप्रकार वयश्च परिदध्मसि । अथर्व० १।२२।३

(G) Devatyās that are red of hue, yea, and the ruddy-coloured kine,
Each several form, each several age,—with these we compass thee about.

(W) They that have the red one for divinity, and the kine that are red-form after form, vigour (Vayas) after vigour, with them we enclose thee

**४०—शुकेषु ते हरिमाणं रोपणाकासु दध्मसि । अथो हारिद्रवेषु ते हरिमाणं नि दध्मसि ॥ ४ ॥**

पूर्व गवादिगतस्य उज्ज्वलस्य रक्तवर्णस्य रुग्णशरीरे प्रवेशोऽभिहित । तच्छरीरे पूर्वम् अवस्थितस्य रोगजनितस्य हरिद्वर्णस्य का तर्हि गतिरिति तदुच्यते । हे रोगार्त **ते**=तव शरीरगत **हरिमाणम्**=रोगजनित हरिद्वर्णम् । तद्वर्ण **शुकेषु**-कीरेषु तथा **रोपणाकासु**=काष्ठशुकाऽऽख्येषु हरिद्वर्णेषु पक्षिषु **निदध्मसि**=निदध्म । वर्णत समानाकृतिषु पक्षि- विशेषेषु स्थापयाम इत्यर्थ । **अथो**=अपि च हारिद्रवेषु गोपीतनकाख्येषु हरिद्वर्णेषु पक्षिविशेषेषु **ते**=त्वदीय **हरिमाणं**- हरिद्वर्ण **निदध्मसि**=निदध्म स्थापयाम । अथर्व० १।२२।४ ऋ० १।५०।१२। पाठभेदेन

(G) To parrots and to starlings we transfer thy sickly yellowness'
Now in the yellow-coloured birds we lay this yellowness of thine.

(W) In the parrots, in the ropanākās, we put thy yellowness, likewise in the hāridravas we deposit thy yellowness

## अथ श्वेतकुष्ठपलितादिनाशनाय सूक्तम् ॥

" नक्त जाता " " सुपर्णो जात. " इति सूक्तद्वयेन श्वेतकुष्ठाऽपनोदाय भृङ्गराजहरिद्रेन्द्रवारुणीनीलिका पिष्ट्वा शुष्क- गोमयेन श्वित्रप्रदेशम आलोहितदर्शन प्रघृष्य लेपयेत्। पलितनाशनेऽपि पलितानि आच्छिद्य सूक्तद्वयेन पूर्ववद् विलिम्पेत् । उक्तरोगद्वयशान्तये अनेनैव सूक्तद्वयेन आज्यहोमादीनि मारुतकर्माणि च वृष्टिकर्मोक्तवत् । सूत्रित च । " नक्त जाता (१।२३) सुपर्णो जात (१।२४) इति मन्त्रोक्त शकृता आलोहित घृष्य आलिम्पति पलितान्याच्छिद्य मारुतान्यपिहितः" इति (कौ ४. २.)

**४१—नक्तं जाताऽस्योषधे रामे कृष्णे असिक्नि च । इदं रजनि रजय किलासं पलितं च यत् ॥१॥**

हे **ओषधे**-ओष. फलपाकः अस्या धीयत इति ओषधि· । हे **ओषधे** हरिद्राख्ये त्व **नक्तं**—रात्रौ **जाता**—उत्पन्ना **असि**-भवसि । अतएव श्वैत्यनिवर्तनेन कार्ष्ण्यं आपादयितु शक्ता भवसीत्यर्थ । तथा हे **रामे**-तथा हे **कृष्णे**- कृष्णवर्णे- कृष्णवर्णापादिके वा इन्द्रवारुणि हे **असिक्नि** असितवर्णे असितवर्णाऽऽपादिके वा नीलि । पूर्व ओषधिशब्देन निर्दिष्टाया हरिद्राया जननक्रियासम्बन्धित्वेन कुण्ठितशक्तित्वात् रञ्जनक्रियायामपि सम्बन्ध दर्शयितु पुनराह-**रजनीति** । यद्वा अत्र निर्दिष्टाना रामादीना चतसृणाम् ओषधीनामपि उत्पत्तिरुच्यते **नक्तं जातास्योषध** इति । हे **ओषधे**-रामादिरूपे **त्वं** नक्त जातासि । इत्यतो न पुनरुक्तिशङ्काऽवकाश. । हे **रजनि** । रञ्जयति स्वसंसृष्टवस्त्रादिकमर्थमिति रजनी । हे रामाद्योषधे त्वम् इदम् वक्ष्यमाणम् अङ्गम् **रजय**-श्वित्रादि दोषनिबर्हणेन स्वकीय राग सश्लेषय । तदेवाङ्गम् आह । **किलासः**-कुष्ठ- रोगः । तद्युक्तम् अङ्गम् तथा **पलितम्**=जराऽवस्थाप्राप्त केशाना शौक्ल्य तद्युक्तम् अङ्गम् च । ईदृश यद् अङ्गम् **अस्ति** इति पूर्वेण सम्बन्ध· । अथर्व का० १।२३।१

(G) O Plant, thou sprangest up at night, dusky, dark-coloured, black in hue!
So, Rajani, re-colour thou these ashy spots, this leprosy.

(W) Night-born art thou, O herb, O dark, black (and) dusky one, O colourer (Rajani) do thou colour this leprous spot and what is pale (palita).

४२—किलासं च पलितं च निरितो नाशया पृषत् । आ त्वा स्वो विशतां वर्णः परा शुक्लानि पातय ॥२॥

किलासम् पलितम् उक्तलक्षणम् । परस्परसमुच्चयार्थौ चकारौ । इतः=अस्मात् व्याधिदूषितात् शरीरात् पृथक्=पृथक्कृत्य हे ओषधे त्वं निर्णाशय निरवशेषं घातय । अनन्तरम् हे रुग्ण त्वा=त्वां स्वः=स्वकीयः प्राग् अवस्थितो वर्णः लौहित्यादिरूपः आ विशताम् प्रविशताम् । शौक्ल्यस्य पुनरुद्भवपरिहाराय आह । शुक्लानि=शरीरकेशगतशुक्लरूपाणि परापातय=पराचीनं दूरं प्रेरय । यथा पुनरेनं पुरुषं न स्पृशन्ति तथा कुरु इत्यर्थः ॥ अथर्व० १।२३।२ ॥

(G) Expel the leprosy, remove from him the spots and ashy hue
Let thine own colour come to thee, drive far away the specks of white.

(W) The leprous spot, what is pale, do thou cause to disappear from hence, the speckled, let thine own colour enter thee, make white things (śukla) fly away.

४३—असितं ते प्रलयनमास्थानमसितं तव । असिक्न्यस्योषधे निरितो नाशया पृषत् ॥ ३ ॥

अनया नीलीमेव अवयुत्य प्रार्थयते । हे नीलि ते=तव प्रलयनम्=प्रकर्षेण लीयते संश्लिष्यते अत्रेति प्रलयनम् उत्पत्तिस्थानम् असितम्=कृष्णवर्णं भवति । तथा तव आस्थानम्=प्रक्षेपणभाजनादिरूपमसितं=कृष्णं भवति कुत एतद् इत्यत आह । हे ओषधे=नीलि त्वं असिक्नी=असितवर्णा असि=भवसि । यतस्तव अयं स्वभावः अतः इतः=अस्मात् श्वित्रादिरोगदूषिताङ्गात् आलेपादिना त्वत्सम्बन्धात् पृथक् किलासं पलितं च पृथक् कृत्य निर्णाशय=निःशेषेण विनष्टं कुरु ॥ अथर्व० १।२३।३ ॥

(G) Dark is the place of thy repose, dark is the place thou dwellest in:
Dusky and dark, O Plant, art thou· remove from him each speck and spot

(W) Dusky is thy hiding-place, dusky thy station (āsthāna), dusky art thou, O herb, make the speckled disappear from hence.

४४—अस्थिजस्य किलासस्य तनूजस्य च यत् त्वचि । दूष्याकृतस्य ब्रह्मणा लक्ष्म श्वेतमनीनशम् ॥

अनया अस्थ्यादिधातुगतस्य उत्सावस्य किलासस्यैव निवृत्तिम् आह । अस्थिजस्य तथा तनूजस्य । अत्र तनूशब्देन त्वगस्थ्नोर्मध्यवर्ती मांसधातुः उच्यते । तस्माद् यज्जातं तस्य । तथा त्वचि त्वग्धातौ यद् वर्तमानं तस्य सर्वस्य किलासस्य कुष्ठव्याधेः तथा दूष्या=दूषयति प्राणिनं हिनस्तीति दूषिः शत्रूत्पादिता कृत्या । तया कृतस्य उत्पादितस्य च किलासस्य लक्ष्म=लक्ष्मभूतं चिह्नं श्वेतं शरीराऽवयवगतं श्वैत्यम् । ब्रह्मणा=अनेन प्रयुज्यमानेन मन्त्रेण अनीनशम् नाशितवान् अस्मि ॥ अथर्व० १।२३।४ ॥

(G) I with my spell have chased away the pallid sign of leprosy.
Caused by infection, on the skin, sprung from the body, from the bones.

(W) Of the bone-born leprous spot, and of the body-born that is in the skin, of that made by the spoiler (dushi)-by incantation have I made the white (s'veta) mark disappear.

" सुपर्णो जात " इति सूक्तस्य पूर्वसूक्तेन सह उक्तो विनियोगः ॥

**४५—सुपर्णो जातः प्रथमस्तस्य त्वं पित्तमासिथ । तदासुरी युधा जिता रूपं चक्रे वनस्पतीन् ॥ १ ॥**

अस्य औषधस्य वीर्यातिशयं प्रकटयितुं आख्यायिकया उत्पत्तिम् आह **सुपर्णः**=शोभनपक्षोपेतो गरुत्मान् । **प्रथमः**=आदिभूतः सन् **जातः**=उत्पन्नः । हे नील्याद्योषधे **त्वं तस्य**=गरुत्मतः **पित्तम्**=शरीरगतः पित्ताख्यो दोषः अथवा धातुः **आसिथ**=पूर्वं बभूविथ । **तत्**=तथाविधं पित्तम् **आसुरी**=असुराणां माया काचन स्त्री । सा **युधा**=युद्धेन सुपर्णेन सह संग्रामं कृत्वा **जिता**=जितवती । जयेन लब्धं तत् पित्तं **रूपं चक्रे**=ओषध्यात्मना सेव्यम् आकारम् अकार्षीत् । तदेव रूपमाह । **वनस्पतीन्**=नील्यादीन् । एतेषां नील्यादीनां सुपर्णपित्तकार्यत्वरूपप्रतिपादनेन अमोघवीर्यत्वम् उक्तं भवति ॥ १ ॥ अथर्व १।२४।१

(G) First, before all, the strong-winged Bird was born, thou wast the gall thereof. Conquered in fight, the Asuri took then the shape and form of plants.

(W) The eagle ( suparna ) was born first, of it thou wast the gall; then the Asura-woman, conquered by fight ( yúdh ), took shape as forest-trees.

**४६—आसुरी चक्रे प्रथमेदं किलासभेषजमिदं किलासनाशनम् । अनीनशत् किलासं सरूपामकरत्त्वचम्**

**आसुरी**=पूर्वमन्त्रोक्ता असुरमायारूपा स्त्री प्रथमा श्वित्रचिकित्सकानां आदिभूता सती इदं सुपर्णपित्तेन निर्मितं नील्यादिकं किलासभेषजम् किलासस्य श्वित्रस्य निवर्तकम् औषधम् **चक्रे**=कृतवती । अतः **इदम्**=नील्यादिकं इदानीमपि लोके **किलासनाशनम्**=किलासस्य रोगस्य निवर्तकं भवति **तद्**=नील्याद्यौषधं प्रयुज्यमानं सत् **किलासम्** श्वित्ररोगम् **अनीनशत्**=नाशयति स्म । तथा **त्वचम्**=त्वग्धातुं श्वित्रदूषितां **सरूपाम्**=समानरूपाम् श्वित्ररहितत्वचा समानवर्णाम् **अकरत्**=अकार्षीत् ॥ अथर्व० १।२४।२ ॥

(G) The Asuri made, first of all, this medicine for leprosy, this banisher of leprosy. She banished of leprosy, and gave one general colour to the skin.

(W) The Asura-woman first made this remedy for leprous spot, this effacer of leprous spot, it has made the leprous spot disappear, has made the skin uniform ( sarúpa ).

**४७—सरूपा नाम ते माता सरूपो नाम ते पिता । सरूपकृत् त्वमोषधे सा सरूपमिदं कृधि ॥ ३ ॥**

हे ओषधे **ते**=तव **माता**=जननी भूमिः **सरूपा**=त्वया समानरूपा कृष्णवर्णैव । तथा **ते**=तव **पिता**=द्यौः । "द्यौः पिता पृथिवी माता" ( तै. ब्रा. ३–७–५–४ ) इति हि निगमः । बीजविशेषो वा पितृशब्देन विवक्षितः सोऽपि **सरूपः**=समानवर्णः । उभयत्राऽपि नामशब्दः प्रसिद्धिपरः । हे **ओषधे**=नील्यादिरूपे त्वम् **सरूपकृत्**=स्वससृष्टं पदार्थम् आत्मना समानवर्णं करोति सा सरूपकृत् । तादृश्यसि । सा समानरूपमातापितृजाता त्वम् इदम् श्वित्ररोगदूषितम् अङ्गं **सरूपं कृधि**=त्वया समानवर्णं कुरु। अथर्व० १।२४।३

(G) One-coloured is thy mother's name, One-coloured is thy father called. One-colour maker, Plant ! art thou give thou one colour to this man.

(W) Uniform by name is thy mother, uniform by name is thy father, uniform making art thou, O herb, (so) do thou make this uniform.

**४८—श्यामा सरूपङ्करणी पृथिव्या अध्युद्भृता । इदं सु प्रसाधय पुना रूपाणि कल्पय ॥ ४ ॥**

**श्यामा**=श्यामवर्णा **सरूपङ्करणी**=तादृशी त्वं पृथिव्या अधिभूमेरुपरि उद्भृता आसुर्या मायया उत्पादिता । अतः कारणात् हे ओषधे त्वम् **इदम्**=किलासाक्रान्तम् अङ्गं **सु प्रसाधय**=सुष्ठु रोगविनिर्मुक्तं कुरु तथा **रूपाणि** व्याधिसम्भवात् पूर्वम् अवस्थितानि **पुनः**=व्याधिनिवर्हणानन्तरमपि **कल्पय**=संपादय ॥ अथर्व० १।२४।४

(G) Syāmā who gives one general hue was formed and fashioned from the earth Further this work efficiently. Restore the colours that were his.

(W) The swarthy, uniform-making one ( is ) brought up off the earth, do thou accomplish this, we pray, make the forms right again.

**४९—शं नो भवन्त्वाप ओषधय शिवाः। इन्द्रस्य वज्रो अपहन्तु रक्षस आराद्विसृष्टा इषवः पतन्तु रक्षसाम् ॥ ६ ॥**

औषधार्थं प्रयुज्यमाना आपः ओषधयश्च शिवाः=सुखहेतवः सत्यः नः=अस्माकं शम्=रोगाणां शमनाय भवन्तु। रक्षसः=राक्षसान् रोगोत्पादकान् इन्द्रस्य वज्रः अपहन्तु=हिनस्तु। विसृष्टाः=मनुष्याणां पीडनाय प्रयुक्ता रक्षसाम् इषवः=रोगादिरूपा आरात्=अस्मत्तो दूरे पतन्तु ॥ अथर्व २।३।६॥

(G) Bless us the Waters! be the Plants auspicious!
May Indra's thunderbolt drive off the demons. Far from us fall the shafts they shoot against us.

(W) Weal be to us the waters, propitious the herbs, let Indra's thunderbolt smite away the demoniacs ( Rakshas ), far away let the discharged arrows of the demoniacs fly.

"अक्षीभ्याम्" इतिसूक्तेन अक्षिनासाकर्णशिरोजिह्वाग्रीवादिसर्वाऽवयवजरोगभैषज्यकर्मणि वाह्वादिपर्वसु बद्धं व्याधितं सम्पातितोदकेन पर्वग्रन्थीन् विमुच्य अवसिञ्चेत्। सूत्रितं हि। "अक्षीभ्यां त इति विवर्हम् उदपात्रेण सपातवताऽवसिञ्चति" इति ( कौ. ४-२ )॥

तथा अस्य सूक्तस्य अंहोलिङ्गगणे पाठात् तस्य गणस्य यत्र यत्र सर्वरोगभैषज्यादिषु विनियोग उक्तस्तत्र सर्वत्र अस्य विनियोगोऽनुसन्धेय। सूत्रितं हि—"औषधिवनस्पतीनाम् अनुक्तान्यप्रतिषिद्धानि भैषज्यानाम् अंहोलिङ्गानि" इति ( कौ. ४-८ ) अत्र अक्षीभ्यां ते ( २-३३ ) मुञ्चामि त्वा ( ३-११ ) उत देवा ( ४-१३ ) आवतस्ते ( ५-३० ) शीर्षक्तिम् ( ९-५ ) इति पञ्चप्रतीको गणो विवक्षित।

तथैव अश्वमेधादिषु दीक्षावतो यजमानस्य भैषज्यकर्मणि एतत् सूक्तं विनियुक्तं वैताने। "अथ भैषज्याय यजमानम् अक्षीभ्यां ते मुञ्चामि त्वा" इति ( वै ७-२ )

**५०—अक्षीभ्यां ते नासिकाभ्यां कर्णाभ्यां छुबुकादधि। यक्ष्मं शीर्षण्यं मस्तिष्काज्जिह्वाया वि वृहामि ते ॥१॥**

हे यक्ष्मगृहीत ते=तव अक्षीभ्याम्=चक्षुर्भ्यां यक्ष्मम्=रोगं विवृहामि=उद्धरामि विश्लेषयामीत्यर्थः। तथा नासिकाभ्यां=घ्राणेन्द्रियाऽधिष्ठानाभ्यां कर्णाभ्याम्=श्रोत्राभ्यां च छुबुकात्=ओष्ठस्याधः प्रदेशाच्च। अधि अनर्थकः। अपि च शीर्षण्यम्=शिरसि भवो रोगः शीर्षण्यः। ईदृशं यक्ष्मं रोगं ते=तव मस्तिष्कात्=शिरसोऽन्तरवस्थितो मांसविशेषो मस्तिष्कः तस्मात् जिह्वायाः=रसनायाश्च सकाशात् विवृहामि=उद्धरामि पृथक् करोमीत्यर्थः ॥ अथर्व० २।३३।१ ऋ० वे. १०।१६३।१ इत्यत्राप्येषर्क् वर्तते।

(G) From both thy nostrils, from both eyes, from both thine ears, and from thy chin,
Forth from thy brain and tongue I root Consumption seated in thy head.

(W) Forth from thy ( two ) eyes, ( two ) nostrils, ( two ) ears, chin, brain, tongue, I eject ( vi-vru ) for thee the yakshma of the head.

(G) From bowels and intestines, from the rectum and the belly, I
Extirpate thy Consumption, from flanks, navel, and mesentery

(W) Forth from thine entrails, guts, rectum, belly, ( two ) paunches, plāśi, navel, I eject for thee the yakshma

५४–ऊरुभ्यां ते अष्ठीवद्भ्यां 'पार्ष्णिभ्यां' प्रपदाभ्याम् । यक्ष्मं भसद्यं श्रोणिभ्यां भासदं भंससो वि वृहामि ते

हे रोगार्त ते=तव ऊरुभ्याम् अष्ठीवद्भ्यां=जानुभ्याम् । पार्ष्णिभ्यां=पादयोरपरभागाभ्या प्रपदाभ्यां=पादाग्राभ्या यक्ष्मम् । विवृहामीति सर्वत्र सम्बन्ध । तथा भसद्यम्=भसत् कटिप्रदेश तत्र भव यक्ष्म रोगम् श्रोणिभ्याम्=कट्योरवरभागाभ्या विवृहामि । एव ते=त्वदीय भासदम्=गुह्यप्रदेशभवम् रोग भंससः=भासमानाद् गुह्यस्थानाद् विवृहामि ॥ अथर्व० २।३३।५ ॥ ( ऋ० वे० १०।१६३।४ इत्यत्राऽप्येपर्क् पाठभेदेन वर्तते )

(G) Forth from thy thighs & from thy knees, heels & the foreparts of thy feet,
Forth from thy loins and hips, I draw Consumption settled in thy loins.

(W) From thine two thighs, knees, heels, front feet, hips, fundament ( bhansas), I eject for thee the yakshma of the rump.

५५—अस्थिभ्यस्ते मज्जभ्यः स्नावभ्यो धमनिभ्यः । यक्ष्मं पाणिभ्यामङ्गुलिभ्यो नखेभ्यो विवृहामि ते॥६॥

भाष्यम्–अस्थिमज्जशब्दौ सर्वधातूपलक्षकौ । सूक्ष्मा सिरा स्नावशब्देन उच्यन्ते । धमनिशब्देन स्थूला । शिष्टं निगदसिद्धम् । अथर्व० २।३३।६

(G) Forth from thy marrows and thy bones, forth from thy tendons and thy veins
I banish thy Consumption, from thy hands, thy fingers, and thy nails.

(W) From thy bones, marrows, vessels, (two) hands, fingers, nails, I eject for thee the Yakshma

५६-अङ्गे अङ्गे लोम्निलोम्नि यस्ते पर्वणिपर्वणि। यक्ष्मं त्वचस्यं तव यं कश्यपस्य विबर्हेण विष्वञ्चं विवृहामसि

इत्थं प्रसिद्धावयवेभ्यो रोगस्याऽपनोदन प्रतिपाद्य अप्रसिद्धावयवेभ्योपि अपनोदन प्रतिपाद्यते । हे रुग्ण ते=तव अङ्गेअङ्गे–अनुक्तेषु सर्वेष्ववयवेषु लोम्निलोम्नि=सर्वेषु रोमकूपेषु पर्वणिपर्वणि=सर्वेषु सन्धिषु यो यक्ष्मो जात. । तं यक्ष्म विवृहामसीत्युत्तरत्र सम्बन्ध । तथा ते=तव त्वचस्यम्=त्वचि भवं यक्ष्मम् । वयं विवृहाम । सूक्तार्थम् उपसंहरति । विष्वञ्चम्=चक्षुरादिसर्वाऽवयवव्याप्त रोगजात कश्यपस्य महर्षे विबर्हेण=विवृहत्यनेनेति विबर्हं सूक्तम् । तेन वय विवृहामसि=विवृहाम । मन्त्रद्रष्टुर्महर्षे सङ्कीर्तनेन इदानीं प्रयुज्यमानस्यापि मन्त्रस्य अमोघवीर्यत्व सूचितं भवति ॥ अथर्व० २।३३।७ ( ऋ० १०।१६३।६ इत्यत्राऽप्येपर्क्–पाठभेदेन वर्तते )

(G) In every member, every hair, in every joint wherein it lies,
We with exorcising spell of Kaśyapa drive far away Consumption settled in thy skin

(W) What Yakshma is in thine every limb, every hair, every joint—the Yakshma of thy skin do we, with Kaśyapa's ejector ( vibruha ) eject away ( viśvan ).

५७–द्वाविमौ वातौ वात आसिन्धोरापरावतः । दक्षंते अन्य आवातु परान्योवातुयद्रपः । ऋ०१०।१३७।२

इमौ–दृश्यमानौ द्वौ वातौ=पुरोवात पश्चाद्वातश्च आसिन्धो=आसमुद्रात् मर्यादायामाकार. यद्वा आपरावतः=समुद्रादपि यो दूरदेश. त देशमवधीकृत्य वातः=गच्छत । "वा" गतिगन्धनयोः आदादिक । तयोर्वातयोः अन्य-एक हे स्तोत ते=तव दक्षं=बल आवातु=आगमयतु अन्यश्च त्वदीयं यद्रपः=पाप तत्परावातु=परागमयतु ॥ २ ॥

Two several winds are blowing here, from Sindhu, from a distant land.
May one breathe energy to thee, the other blow disease away.

५८—आ वात वाहि भेषजं वि वात वाहि यद्रपः । त्वं हि विश्वभेषजो देवानां दूत ईयसे ॥ ३ ॥

हे वात भेषजं=सुखं व्याध्युपशमनमौषध वा आवाहि=आगमय हे वात यद्रपोऽस्मदीय पाप तद्विवाहि=विगमय अस्मत्तो विश्लेषय त्वं हि खलु देवाना दूत विश्वभेषज =विश्वानि भेषजानि यस्मिन् बहुव्रीहौ विश्व सज्ञायामिति पूर्वपदान्तोदात्तत्व ईदृशश्च सन् ईयसे=सतत गच्छसि ईट्गतौ दैवादिक श्यनोनित्यत्वात् "ञ्नित्यादिर्नित्य" मित्याद्युदात्तत्व । हि चेति निघातप्रतिषेध ॥ ऋक्०१०।१३७।३ ॥

Hither, O Wind, blow healing balm, blow all disease away, thou Wind,
For thou who hast all medicine comest as envoy of the Gods

५९—आ त्वा गमं शंतातिभिरथो अरिष्टतातिभिः । दक्षंते भद्रमाभार्षं परा यक्ष्मं सुवामि ते ॥४॥

हे स्तोत त्वा=त्वा शंतातिभिः=सुखकरैं अथो=अपिच अरिष्टतातिभिः=अहिंसाकरैश्च रक्षणैं आगमं=आगतवानस्मि "शिवशमरिष्टस्य कर" इति उभयत्र तातिल् प्रत्यय " लितीति" प्रत्ययात्पूर्वस्योदात्तत्व । अपि च भद्रं कल्याण ते=तव दक्षं=बल आभार्षं=आहार्षं वायुसकाशादानैष तथा ते=तव यक्ष्मं रोग च परासुवामि=विनाशयामि ।

I am come nigh to thee with balms to give thee rest and keep thee safe
I bring thee blessed strength, I drive thy weakening malady away.

६०—त्रायन्तामिह देवास्त्रायन्तां मरुतां गणः । त्रायन्तां विश्वा भूतानि यथा यमरपा असत् ॥ ५

इहाऽस्मिन्देशे सर्वे देवाः त्रायन्तां=अस्मान् पालयन्ता तथा मरुतां गणः=सघ स त्रायन्तां विश्वा= विश्वानि सर्वाणि अन्यानि च भूतानि=भूतजातानि त्रायन्तां=अस्मान् रक्षन्तु यथा अयमस्मदीय शरीरादि ररपा असत्=पापरहितो भवति तथेत्यर्थं रप इति पापनाम नञा बहुव्रीहौ "नञ् सुभ्या" मित्युत्तरपदान्तोदात्तत्व अस्तेर्लेट्यडागम यावद्यथाभ्यामिति निघाताऽभाव ॥ ऋक्०१०।१३७।५ ॥

Here let the Gods deliver him, the Maruts' band deliver him:
All things that be deliver him that he be freed from his disease.

६१—आप इद्वा उ भेषजीरापो अमीवचातनीः । आपः सर्वस्य भेषजीस्तास्ते कृण्वन्तु भेषजम् ॥६॥

आपइद्वै—आप एव खलु भेषजीः=भेषजभूता स्नानपानादिना सुखहेतव यद्वा ओषधिरूपेण परिणता रोगोपशमनहेतवो भवन्ति केवलमामकेत्यादिना भेषजशब्दात् उदात्तनिवृत्तिस्वरेण टीप् उदात्तत्व "जसिवा छन्दसीति" पूर्वसवर्णदीर्घः यत एवमत' कारणात् आप'—अमीवचातनीः अमीवचातन्यः रोगाणा नाशयित्र्यो भवन्ति चातयति वधकर्मा किंच आपः=सर्वस्य प्राणिजातस्य भेषजी=भैषजभूता भवन्ति न कतिपयस्य तास्तथाविधा आप ते=तव भेषजं कृण्वन्तु=कुर्वन्तु ॥ ऋक्०१०।१३७।६ ॥

The Waters have their healing power, the Waters drive disease away.
The Waters have a balm for all let them make medicine for thee.

६२–हस्ताभ्यां दशशाखाभ्यां जिह्वा वाचः पुरोगवी । अनामयित्नुभ्यां त्वा ताभ्यां त्वोपस्पृशामसि ।७।

दशशाखाभ्यां=दशाङ्गुलय' शाखाभूता ययोस्ताद्दृश्याभ्या प्रजापतेर्हस्ताभ्यां सृज्यमाना जिह्वा=रसना वाचः= शब्दस्य पुरोगवी=पुरतोगन्त्री जाता यत्र यत्र शब्दः तत्र सर्वत्र तस्य शब्दस्योच्चारणाय पुरतो व्याप्रियते इत्यर्थ' । अनामयित्नुभ्यां=सम्यगारोग्यहेतुभ्या ताभ्यां=हस्ताभ्यां हे स्तोतः त्वा=त्वा उपस्पृशामसि=उपस्पृशाम. "इदन्तो-मसि" त्वेति पुनरुक्ति' पूरणार्था ॥ ऋक्० १०।१३७।७ ॥

The tongue that leads the voice precedes. Then with our ten-fold branching hands,
With these two chasers of disease we stroke thee with a gentle touch.

६३—ब्रह्मणाऽग्नि' संविदानो रक्षोहा बाधतामितः । अमीवा यस्ते गर्भं दुर्णामा योनिमाशये ॥ १ ॥

**ब्रह्मणा**=मन्त्रेण सह **संविदानः** ऐकमत्यं प्राप्तो **रक्षोहा**=रक्षसां हन्ता **अग्निः इतः** अस्मात् स्थानात् राक्षसादिकं **बाधतां** हिनस्तु यो राक्षस **अमीवा** रोगरूप सन् ते तव **गर्भमाशये** आशेते "लोपस्त आत्मनेपदेष्विति" तलोप हन्तु प्राप्नोति, **दुर्नामा** आख्यो रोगः तद्रूप सन् यश्च ते=तव **योनिं** रेतस आधान गर्भस्थानं आशेते त बाधतामित्यन्वय ॥ ऋ०१०।१६२।१

May Agni, yielding to our prayer, the Rakshas-slayer, drive away—
The malady of evil name that hath beset thy labouring womb.

**६४—यस्ते गर्भममीवा दुर्णामा योनिमाशये। अग्निष्टं ब्रह्मणा सह निष्क्रव्यादमनीनशत् ॥ २ ॥**

गत पूर्वोर्धचं तं क्रव्यादं=मांसाशिनं रक्षसादिकं **ब्रह्मणा**=सहितोऽग्निः **निः**शेषेण **अनीनशत्**=नाशयतु ॥२॥

Agni, concurring in the prayer, drive off the eater of thy flesh,
The malady of evil name that hath attacked thy babe and womb.

**६५.—यस्ते हन्ति पतयन्तं निषत्स्नुं यः सरीसृपम्। जातं यस्ते जिघांसति तमितो नाशयामसि॥**

हे योषित् ते=तव गर्भाशये **पतयन्तं**=पतन्त रेतोरूपेण गच्छन्त तदनन्तर तत्र **निषत्स्नुं**=निषीदन्तञ्च गर्भं यो राक्षसादिर्हन्ति=हिनस्ति ततो मासत्रयादूर्ध्वं प्राप्तसर्वावयव **सरीसृपं**=सर्पणशीलञ्च गर्भं यो हन्ति **जातं**=दशसु मासेषूत्पन्न ते=तव शिशुं यो राक्षसादि **जिघांसति**=हन्तुमिच्छति **तमितः**=स्थानान्नाशयामसि=नाशयाम ॥ ३ ॥

That which destroys the sinking germ, the settled, moving embryo.
That which will kill the babe at birth—even this will we drive far away.

**६६—यस्त ऊरू विहरत्यन्तरा दम्पती शये। योनिं यो अन्तरा रेळ्हि तमितो नाशयामसि ॥ ४ ॥**

हे योषिन् ते=तव **ऊरू**=पादमूलौ यो राक्षसादि **विहरति**=गर्भघाताय विश्लिष्टौ करोति **दंपती** अन्तरा जायापत्यो मध्ये गर्भहननार्थं यश्च **शये**=शेते यश्च **योनिमन्तः** प्रविश्य **आरेळ्हि**=निषिक्त रेतो जिह्वया आस्वादयति भक्षयतीत्यर्थं । **लिह** आस्वादने आदादिक कपिलकादित्वाल्लत्वविकल्प **तं**=सर्वमितो=नाशयाम ॥ ऋ० १०।१६२।४

That which divides thy legs that it may lie between the married pair,
That penetrates and licks thy side—even this will we exterminate.

**६७—याभिः शचीभि र्वृषणा परावृजं प्रान्धं श्रोणं चक्षस एतवे कृथ।**
**याभि र्वर्तिकां ग्रसितामुमुञ्चतं ताभिरू षु ऊतिभिरश्विना गतम् ॥** ऋ० १।११२।८

हे **वृषणा**=कामाना वर्षितारावश्विनौ **याभिः शचीभिः** कर्मभि प्रज्ञाभिर्वा **परावृजं**=एतन्नामकमृषिं पङ्गु सन्तमपङ्गुमकुरुतम् तथा **अन्धं**=दृष्टिरहित सन्तमृज्राश्वमृषिं **चक्षसे**=प्रकाशाय सम्यक् चक्षुषा दर्शनाय **याभिरूतिभिः प्रकृथः** प्रकर्षेण कुरुथ. **याभिश्च श्रोणं** विगुणजानुकमेव सन्तमृषिं एतवे गन्तु प्रकृथ प्रकर्षेण कृतवन्तौ अपिच याभिरूतिभि **वर्तिकां**=चटकसदृशस्य पक्षिण स्त्रियं **ग्रसितां**=वृकेण ग्रस्ता **अमुञ्चतं**=वृकास्यान्निर्मुक्तामकुरुतम् यास्कपक्षे तु वृकेण विवृतज्योतिष्केण सूर्येण याभिर्ग्रस्ता वर्तिका प्रत्यहमावर्तमानामुषस तस्मादमोचयतमिति योज्यम्। तामि सर्वाभिरूतिभिरस्मानप्यागच्छतम्। वृषणा 'वृष'सेचने 'कनिन्युवृषी' त्यादिना कनिन्। परावृजम्='वृजी'वर्जने पराग्वृणक्ति तपसा पाप विनाशयतीति परावृक् क्विप् चेति क्विप् कृदुत्तरपदप्रकृतिस्वरत्वम्। एतवे '**तुमर्थेसेसेनिति**' एतेस्तवेन्प्रत्यय. । कृथः **डुकृञ्** करणे बहुल छन्दसीति विकरणस्य लुक्। ऋ० १।११२।८

Mighty ones, with what powers ye gave Parāvrij aid what time ye made the blind and lame to see and walk;

Wherewith ye set at liberty the swallowed quail,—come hither unto us, O Aśvins, with those aids.

**६८—जुजुरुषो नासत्योत वव्रिं प्रामुञ्चतं द्रापिमिव च्यवानात्।**
**प्रातिरतं जहितस्यायुर्दस्रादित्पतिमकृणुतं कनीनाम् ॥** ऋ० १।११६।१०

अत्रेदमाख्यानम्—वलीपलितादिभिरुपेतो जीर्णोद्धः पुत्रादिभिः परित्यक्तश्च्यवनाख्य ऋषि. अश्विनौ तुष्टाव स्तुतावश्विनौ तस्मै ऋषये जरामपगमय्य पुन यौवन अकुरुतामिति तदेतदाह—हे **नासत्यावश्विनौ जुजुरुषो**=जीर्णात्

The disinfection of water is maintained by certain remedies as indicated below the use of boiled water for drinking purposes, disinfection of water by potassium permanganate, quick lime and leaving the water-supply unused for several days are essentially recommended, quick lime is to be used for the excreta and vomit They are to be buried under dry soil The patients and the persons of the infected house are to be strictly forbidden not to touch the water-supplies such as tanks and wells. The infected water-supplies are to be left unused, clearly exposed to sun and air for a week or two. Nature tries to clean and cure all voluntarily Whenever the solutions of disinfecting drugs are not available, the water should be simply left unused and exposed to sun and air. Both kinds of methods ancient as well as modern strengthen the same view.

Nature tries to keep certain usual proportion of the constituents of things under normal circumstances. Impurity of things is nothing but addition or omission of external and internal substances to a thing so as to render it harmful for its natural purpose. The sun and the dry weather are powerful enough to remove the impurities of water and to kill the infective germs very soon.

Indian writers on medicine paid special attention to the properties and uses of क्षारs of all kinds They used to prepare various kinds of preparations out of it for their medical purposes. Suśruta (Sútrasthāna 11) gives also the properties and uses of lime It is treated as a purifying remedy and is recommended for diverse purposes in medicine. It is termed as शोधन, पेचन, or क्रम्यामकफकुष्ठविषमेदसामुपहन्ता । सुश्रुत. सू. ११।५, because it has undoubtedly the properties to destroy insects and minute organisms which remain unnoticed and infect water and food-materials. It quickens the power of digestion and removes the impurities very rapidly. लवण is regarded as a natural substance while क्षार is not treated in the same way by the writers on medicine The reason may be due to a difference of opinion in the classification of रस which differ according to different writers. Some divide them into one kind, others into two, three, four, five or six (मधुराम्ललवणकटुतिक्तकपाया.); the last number of division is commonly admitted and approved of by many.

Nimi of Videha added क्षार as a distinct 'rasa' to the six, Vadiśa extended them to eight, while Kānkāyana went so far as to remark that their number was unlimited (अपरिसख्येया.) The characteristic of क्षार is mentioned as 'कटुकलवणप्रधान' Ātreya confirms the view of sixfold classification षडेव रसा इत्युवाच भगवानात्रेय पुनर्वसु । मधुराम्ललवणकटुतिक्तकपाया । तेपा पण्णां रसाना योनिरुदकम् । छेदनोपशमने द्वे कर्मणी । तयोर्मिश्रीभावात्साधारणत्व स्वाद्वस्वादुता भक्ति । द्वौ हिताऽहितौ प्रभावौ। पञ्च महाभूतविकारास्त्वाश्रया ॥ चरक. सू. २६।९।
They all declared that their origin is in the water and their double work is to remove (impurities or disease) and to suppress (them) The combination of the two produces common effects, their taste either sweet or otherwise depends

upon the senses of the objects Rasas produce either wholesome or unwholesome effect on the substratum, which is the modification of the five elemental substances. Though the classification differs according to the views of individuals yet the authors almost agree on the point of utility and properties The purification of the internal impurities and the prevention of the external ones are admitted unanimously. Lime is a purifying substance; walls are washed with it from times immemorial in the past. The word सौध ( सुधया निर्मित सौधम् ) is so called from the fact that either it is built up with lime or washed with it. Indian villagers often throw a quantity of lime into the tanks or wells whenever they suspect that their water-supplies are contaminated with harmful impurities.

## CONCLUSION

In conclusion it is necessary to point out that the foregoing pages of this introduction are meant to introduce the layman to the subject of Āyurveda that obtains in India from times immemorial If this introduction will create some interest for Āyurveda in the minds of English-speaking persons who are not in direct touch with Sanskrit or Hindi, we think our efforts will not go in vain

The *table* containing Sanskrit anatomical words with their equivalent terms in English is appended at the end of the Sanskrit Introduction, to which the kind attention of the reader is drawn.

The *errata* of certain misprints which have crept in the body of the Introduction through oversight are published at the end of the entire Introduction and just before the beginning of the text They will be corrected at the time of the second edition Moreover if any error, which is not included in the errata, comes to the notice of the reader, we hope he will be good enough to communicate the same to us, and we assure him that after due consideration we will not fail in our duty to right it at the time of the second edition.

The reader's attention is drawn to the List of Books referred to in the introduction and which is printed just after the close of this Introduction. We are highly indebted to the authors as well as the publishers of those books, for the use we have made in the body of the Introduction.

VAIDYA PANDIT HARIPRAPANNAJI.

# अथ रसयोगसागरस्योपोद्घातः

सर्वेषां स्थावरजङ्गमात्मकानां भावानां सत्तोत्कर्षाऽपकर्षाः प्रकृतिकालसमवेतसंयुक्तभावाधीनाः । यद्य-नुकूलभावानां समुचितपरिमाणेनेतरभावाऽविरोधी संयोगः स्यात्तदा स संयुक्तभावोत्कर्षदः । एवंविधे सङ्घटने प्रायः प्रकृतिसाहाय्यमत्युपयोगि । यतोऽनुभवापेता भावाः प्रकृतेः साहाय्यमानुकूल्यञ्चाऽलब्ध्वा स्वसत्तामपि जहतीति बहुधा दृश्यते । किन्तु जगति स्रष्टुः कृपाकौशलाऽऽदर्शभूतो मनुष्यो बलादपि प्रकृतिं स्वाऽनुकूलां करोति । अत एव स सर्वानन्यान्भावानतिशेते । यदि प्रकृति र्मनुष्यस्य प्रेष्येत्युच्येत तर्हि नात्यन्तमेतदनुचि-तम् । किन्त्वनेकेष्ववसरेषु स तादृशं प्रकृत्यधिकारमन्यथोपयुङ्क्ते ततोऽन्येऽचेतनाश्चेतना वा भावाः प्रायेण स्वप्रकृतौ निश्चलाः । यदि क्वचिन्मनुष्येतरभावेषु प्रकृतिपरिवर्तनं दृश्यते तत्राऽसाधारणकारणोपस्थितिः नूनं भवेत् । किन्तु मनुष्यः प्रायेण प्रकृतेराधिपत्यं दधत्प्रकृतिनियमपरिवर्तने स्वच्छन्दः । स्वाऽनुभवेन प्रकृतिनियमान् यथेच्छं निर्धारयति तानाचरति ततश्च सुखं भुनक्ति । कतिपयेष्ववसरेषु तु अज्ञान, अलसता, विषयकामः, अपेक्षित-वस्त्वलाभः, एतेषामन्यतमेन द्वाभ्यां बहुभिर्वाऽधीनीकृतो मनुष्यः स्वं प्रकृत्यधिकारमन्यथोपयुज्य स्वयमेव दुःखा-न्युत्पादयति स्वस्याहितं जनयति । अतोऽस्माकं पूर्वर्षयः सकलमानवजातिहितकाम्यया दीर्घायुःप्रदान् सुख-करांश्च नियमान्निर्मितवन्तः ।

यद्यपि धर्मयोगादिशास्त्राणामाचार्याः परमसुखैकसाधनभूतस्वास्थ्यकरान्नियमानरचयन्, येषु च सम्य-गनुसृतेषु बाह्याऽऽभ्यन्तरदुःखानि नूनं नश्यन्ति किन्तु सञ्जातेषु रोगेषु तत्प्रशमोपाया दुर्बलानाञ्च सबल-करणोपायास्तैर्न विस्तरेण दर्शिताः । यतो नासीत्तेषां स वक्तव्यो विषयः ।

आयुर्वेदप्रणेतार आद्या ऋषयस्तु रोगिणामारोग्यविधायकान् दुर्बलानां बलवत्त्वसम्पादकांश्च नियमान्नि-र्मातुमतीव प्रयत्नभारं स्वशिरःसु न्यधुः । पुराणे खलु भारतीयाऽऽयुर्वेदे न केवलं शस्त्रप्रहारादीनामागन्तुका-नाञ्ज्वरादीनां कायिकानां किन्तु कामक्रोधादीनामान्तराणां क्षुत्तृडादीनां स्वाभाविकानामपि प्रतिक्रियोपदिष्टा-ऽस्ति । यथा चाऽऽयुर्वेदसिद्धान्तः शार्ङ्गधरेण समासेन दर्शितः । तद्यथा—

स्वाभाविकागन्तुककायिकाऽन्तरा रोगा भवेयुः किल कर्मदोषजाः ।
तच्छेदनार्थं दुरितापहारिणः श्रेयोमयान्योगवरान्नियोजयेत् ॥ शा० १ । ५

यद्यप्यनुकूलसमयेन सर्वास्वेव विज्ञानशाखास्वभिनवाऽनुभववृद्धिर्जायते, तत्त्वगवेषिभिश्च सुधीभिः स्वाऽनु-भवजनितै र्नव्यै र्विज्ञानाऽऽविष्कारैरन्वहं चमत्क्रियते लोकः । किन्तु प्रकृतमेव ब्रूमो यदार्याणां पूर्वऋषयो यावदा-युर्वेदमजानन् यावच्चोपादिशन् ततश्च यावत्स्वधिषणाबलमस्माभिरधिगम्यते न तावदुन्नतम्मन्या देशा जातयश्चाऽऽ द्यापि ज्ञातुं प्राभवन् । कतिपयेष्वायुर्वेदीयविषयेषु तु तेषां तादृगासीन्नैपुण्यं यादृङ् कुत्राऽपि भूमिपृष्ठे द्रष्टुं लभ्यते ।

'भारतीयवाङ्मयेतिहास' (History of Indian Literature) रचयिता वेबराख्यः (Weber) कश्चित्पाश्चात्यपण्डितः स्वग्रन्थे इत्यमाशेते " संस्कृतभाषायां वैद्यकग्रन्थसङ्ख्या, ग्रन्थकर्तृसङ्ख्या चातीव विस्तीर्णा । तत्र ग्रन्थास्तु सर्वविज्ञानरिक्थीभूतं स्वदेशमाश्लिष्यन्तीव । प्रतिविषयञ्च ते मूर्तानि विस्तृतक्षेत्राणीव भान्ति, येषां प्रतिसंस्करणानि मध्यकालीनराजानां साहाय्येन जातानि । तत्र नूनं मूर्त इव विज्ञानराशी राजते

स्वमान्यत्वञ्च दर्शयति । आहारपरिणामादिदर्शकानि भोजनविधिशास्त्राणि रोगनिदानानाञ्च विवरणानि तेषां तद्विषये सूक्ष्मविचारान्दर्शयति । शल्यतन्त्रे च भारतीया विशिष्टा योग्यतामधुः । अद्याप्यस्मिन्विषये पाश्चात्यास्तेषां शिष्या इव सन्ति । नून नासारोगविशेषे तु ( Rhinoplasty ) शल्यचिकित्सा तेभ्योऽवगत्य ते साम्प्रतमपि तेषामधमर्णाः । स्थावरजङ्गमौषधविषये धातूपधात्वौषधविषये च तेषामुपदेशो महार्घः । नूनमेव द्रव्यगुणविवृतिस्तेषां प्रकृतिक्षेत्रेऽतीव तत्तत्त्वदर्शिता विज्ञापयति । गवाश्वादीनामपि रोगादिविज्ञाने तत्रासीद्विशेषता । " ब्रेट (Brett) महोदयश्च ब्रूते " कुष्ठरोगौषधज्ञाने वय भारतीयानामधमर्णाः" इति । हार्नले (Hoernle) महोदयोऽपि स्वकीये ' प्राचीनभारतीयाऽऽयुर्वेदाभ्यास ' ( The Study in the Medicine of Ancient India ) नामनि ग्रन्थ इत्थमुल्लिखति "सम्भवत एतद्वृत्तश्चकितीकरिष्यति यदहमपि प्राचीनभारतीयग्रन्थेषु शारीरविषय यदा गवेषितुमारब्धवास्तदा चकितोऽभूवम् । अस्य विषयस्य तत्र वास्तविकभावो विस्तारश्चाऽऽश्चर्यप्रदौ । विशेषतश्च यदा वय तेषां तत्कालोत्पत्तिं पश्यामः प्रायेण खीष्टात् ( Christ ) षष्ठ्या पूर्वशताब्द्याम्-- ( वस्तुतस्तु स समयो भारतीयगौरवस्य निर्वाणकाल आसीत् । बौद्धादीना समये भारतकीर्तिरुच्छ्वसन्त्येवाऽभवन्न तरुणी, किन्तुमुमूर्षन्त्यपि साऽऽर्यकीर्तिवैजयन्ती पाश्चात्येभ्यो विस्मयजननी समभवत्—ग्रन्थकर्ता ) एषा चानुमितिः केनाऽपि न प्रत्याख्यायेत खीष्टजन्मनः पूर्व चतुर्थशताब्द्या **टेसियसः** ( Ktesias ) तृतीयस्याञ्च शताब्द्या **मेगस्तनीजः** ( Megasthenes ) उभावपि ग्रीसीयौ स्वदेशे यशस्विनौ वैद्यौ भारतस्योत्तरस्या भुवि स्वविषय द्रढयितुं चिरमुषितवन्तौ " इति ॥ यद्यपि प्रयत्नशीलैः पाश्चात्यैरतीव श्रम कृत्वा प्राचीनसस्कृतग्रन्थाववोधाय साधुसाधनान्युपपादितान्युपपाद्यन्ते च किन्तु—अनभिज्ञबुभुक्षितहस्ते कठोरावरणाऽऽवृतनारिकेलवत् तेभ्यस्तथापि गीर्वाणगीरद्यावधि दुरधिगमैव । अस्या गिरोविस्तृताऽनेकार्थशब्दवत्त्वादनेकव्यवहारभिन्नतायाश्च ते तथ्यमर्थं प्रायो नैवाऽजानन् ।—यथा सस्कृतव्याकरणन्तु सर्वविषयद्वारीभूतं किन्तु तदाचार्या एव तस्य दीर्घकालापेक्षकत्व वेदयन्ति । एतस्या भाषाया ये विषयास्सन्ति ते प्रायेण सर्वेषामेव दुरधिगमाः । येषा देशभाषाऽस्याः सुदूरवर्तिनी तेषान्तु किमुत ? । अथच कतिपयेष्ववसरेषु पक्षपातो दुराग्रहश्च यथार्थज्ञानज्ञापनप्रतिद्वन्द्विनौ, अत एव केचित्पाश्चात्या विवेकाऽपेता स्वसम्मतिं भारतीयविद्याविषये दर्शितवन्तः । यथा **व्हिटनी** ( Whitney ) ब्रूते—' यद्यपि भारतीयाऽऽयुर्वेदस्याऽऽरम्भो वेदमप्यन्तर्भावयति । वेदेष्वपि यतो मन्त्रोपचारैः सहौषधीनामुपयोगा दृश्यन्ते किन्तु तेषा नोल्लेखनीयता । भारतीयाना वास्तविक आयुर्वेदो नातिप्राचीनः' इति । **व्हिटनी** रथर्ववेदस्याग्लभाषानुवादकस्तेन तत्राऽपि सम्यगविचार्यैत्थं मतमित्यतीव विस्मयो जायते । यत्किमपि कोऽपि मन्येत मन्यताम् वयन्तु सोपपत्ति ब्रूमः । शारीरं—शल्यतन्त्र—रसशास्त्रं, धातुवादोऽन्यश्च विज्ञानराशिर्वेदे वरीवृत्यत इति । एतत्सर्व समासेनाऽस्मिन्नेव निवन्धे यथाप्रकृतमुपरिष्टान्निर्देक्ष्यामः ।

नून प्राचीना ऋषयः सर्वानेव विषयानतिसङ्क्षेपेण स्वकृतिषु निहितवन्तः । यथैकस्यामेवर्च्यथर्ववेदे बह्व्यः शल्यक्रिया दर्शिताः । **तद्यथा**—

वि ते भिनद्मि मेहनं वि योनिं वि गवीनिके ।

वि मातर च पुत्र च वि कुमार जरायुणाऽव जरायु पद्यताम् ॥ अथर्व० १ । ११ । ५

अत्र प्रकृतमनुसृत्य **'वि ते भिनद्मि मेहनं'** एतावता वाक्येन हे गर्भिणि=गर्भग्रहणयोग्ये तव मूत्रमार्गं विभिद्य तत्र तिष्ठन्तीमश्मरीं वहिर्निष्कासयामीत्याशयित सूच्यते । यतोऽश्मरी रोगोऽतिभयङ्करः तस्य प्रतीकारे नातिकालोऽपेक्षणीयः । यथा—"**अश्मरी** दारुणोव्याधिरन्तकप्रतिमो मतः । औषधै-

स्तरुणः साध्यः प्रवृद्धश्छेदमर्हति ॥. तस्य पूर्वेषु रूपेषु स्नेहादिक्रम इष्यते । तेनास्याऽपचयं यान्ति व्याधेर्मूलान्यशेषतः ॥" सु. चि. ७।३–४ यद्यपि गर्भावस्थाया त्रासविधायिकाः सर्वा एव क्रिया वर्ज्याः, किन्तूपस्थिते महाकष्टे यदाऽकृताया शस्त्रादिक्रियाया मृत्युर्नियतो दृश्यते कृतायाञ्च मृत्युविकल्पः स्यात्तदा मृत्युपरिहारं लक्ष्यीकृत्य नून क्रियाः कर्तव्याः तद्यथा—" अक्रियायां ध्रुवो मृत्युः क्रियाया संशयो भवेत् । तस्मादापृच्छ्य कर्तव्यमीश्वरं साधुकारिणा ॥ " अस्यव व्याख्यान सुश्रुते यथा—" घृतैः क्षीरैः कषायैश्च क्षीरैः सोत्तरवस्तिभिः । यदि नोपशमं गच्छेच्छेदस्तत्रोत्तरो विधिः ॥ कुशलस्याऽपि वैद्यस्य यतः सिद्धिरिहाऽध्रुवा । उपक्रमो जघन्योऽयमतः स परिकीर्तितः ॥ " सु. चि. ७।२७-२८ ॥ अथचः—
" अथ रोगान्वितमुपस्निग्धमपकृष्टदोषमीपत्कर्षितमभ्यक्तस्विन्नशरीर भुक्तवन्तं कृतवलिमङ्गलस्वस्तिवाचनमग्रोपहरणीयोक्तेन विधानेनोपकल्पितसम्भारमाश्वास्य, ततो वलवन्तमविक्लवमाजानुसमे फलके प्रागुपवेश्य पुरुषं, तस्योत्सङ्गे निषण्णपूर्वकायमुत्तानमुन्नतकटीक वस्त्राधारकोपविष्ट सङ्कुचितजानुकूर्परमितरेण सहावबद्धं सूत्रेण शाटकै र्वा, ततः स्वभ्यक्तनाभिप्रदेशस्य वामपार्श्वं विमृद्य मुष्टिनाऽवपीडयेदधोनाभे र्यावदश्मर्यधः प्रपन्नेति, ततः स्नेहाऽभ्यक्ते क्लृप्तनखे वामहस्तप्रदेशिनीमध्यमे पायौ प्रणिधायाऽनुसेवनीमासाद्य प्रयत्नबलाभ्या पायुमेढ्रान्तरमानीय, निर्व्यलीकमनायतमविषम च वस्तिं सन्निवेश्य, भृशमुत्पीडयेदङ्गुलिभ्या यथा ग्रन्थिरिवोन्नत शल्य भवति ॥ ३० ॥

स चेद्गृहीतशल्ये तु विवृताक्षो विचेतनः । हतवल्गुन्नतशीर्षश्च निर्विकारो मृतोपमः ॥ ३१ ॥
न तस्य निर्हरेच्छल्य निर्हरंस्तु म्रियेत सः । विना त्वेतेषु रूपेषु निर्हर्तुं समुपाचरेत् ॥ ३२ ॥

सव्ये पार्श्वे सेवनीं यवमात्रेण मुक्त्वाऽवचारयेच्छस्त्रमश्मरीप्रमाण, दक्षिणतो वा क्रियासौकर्यहेतोरित्येके, यथा न भिद्यते चूर्ण्यते वा तथा प्रयतेत। चूर्णमल्पमप्यवस्थितं हि पुनः परिवृद्धिमेति, तस्मात् समस्तामग्रवक्रेणाऽऽददीत, स्त्रीणा तु वस्तिपार्श्वगतो गर्भाशयः सन्निकृष्टः, तस्मात् नासामुत्सङ्गवत् शस्त्र पातयेत्, अतोऽन्यथा खल्वासा मूत्रस्रावी व्रणो भवेत्, पुरुषस्य वा मूत्रप्रसेकक्षणनान्मूत्रक्षरणम्, अश्मरीव्रणादृते भिन्नो वस्तिरेकधा न भवति, द्विधाभिन्नवस्तिराश्मरिको न सिध्यति, अश्मरीव्रणनिमित्तमेकधाभिन्नवस्ति र्जीवति क्रियाऽभ्यासात् शास्त्रविहितच्छेदात् निःस्यन्दपरिवृद्धत्वाच्च शल्यस्येति । उद्धृतशल्य तूष्णोदकद्रोण्यामवतार्य स्वेदयेत्, तथाहि वस्तिरसृजा न पूर्यते, पूर्णे वा क्षीरवृक्षकषाय पुष्पनेत्रेण विदध्यात् ॥ ३३ ॥

क्षीरवृक्षकषायं तु पुष्पनेत्रेण योजितम् । निर्हरेदश्मरी तूर्णं रक्त वस्तिगतन्तथा ॥ ३४ ॥

**ननु** सुश्रुतसहिता कथमथर्ववेदस्य भाष्यभूता मन्येतेति चेन्न, सुश्रुतसंहितायामेवाऽस्य सन्देहस्य निराकृतत्वात् तद्यथाः—" **इह खलु** आयुर्वेदमष्टाङ्गमुपाङ्गमथर्ववेदस्याऽनुत्पाद्यैव प्रजाः श्लोकशतसहस्रमध्यायसहस्र च कृतवान् स्वयम्भूः, ततोऽल्पायुष्ट्वमल्पमेधस्त्व चाऽऽलोक्य नराणा भूयोऽष्टधा प्रणीतवान् ॥ सु. सू. १॥५ ॥ " उपाङ्गानि खलु वेदस्यानेकदेशीयानेव स्वविषयान् व्याख्यान्ति वर्तन्ते ।

' **वि योनिम्**,—हे गर्भिणि (गर्भग्रहणयोग्ये ) तवाऽतिसङ्कुचिता या योनिस्ता शस्त्रयन्त्रादिभिर्भिनद्मि विकसितीकरोमीत्यर्थः । यथा सुखेन गर्भस्थोऽर्भको वहिरेतुं शक्नुयात् । अन्यच्चः—तव गर्भाशये यो गुल्मस्तं क्षारादिप्रयोगैरपनयामि । तथाच—

यः स्पन्दते पिण्डित एव नाङ्गैश्चिरात्सशूलः समगर्भलिङ्गः ।
स रौधिरः स्त्रीभवएव गुल्मो मासे व्यतीते दशमे चिकित्स्यः ॥ च. चि. ५ । १८

अस्य व्याख्यानं तत्रैव द्रष्टव्यम् । तथाच—

रौधिरस्य तु गुल्मस्य गर्भकालव्यतिक्रमे । स्निग्धस्विन्नशरीरायै दद्यात्स्नेहविरेचनम् ॥

पलाशक्षारपादे द्वे द्वे पादे तैलसर्पिषोः । गुल्मशैथिल्यजननीं पक्त्वा मात्रां प्रयोजयेत् ॥

प्रभिद्येत न यद्येव दद्याद्योनिविशोधनम् । क्षारेण युक्तं पललं सुधाक्षीरेण वा पुनः ॥

व्या० मेहन्ति अनेनेति व्युत्पत्त्या आन्त्रगतसूक्ष्ममूत्रवाहिस्रोतो मर्यादीकृत्य शरीराद्बहिर्निर्गमनमार्गं यावन्मेहनशब्देन मूत्राऽऽशयशब्देन च मूत्राऽऽकर्षणप्रवहणसञ्चयनबहिर्निर्गमनस्थानानि गृह्यन्ते । तस्य च (भागस्य) कुत्रचिदेकः कुत्रचिद्द्वौ कुत्रचित्त्रयः कुत्रचिच्चत्वारो विभागा वर्णनसौकर्यार्थं प्रकल्प्यन्ते । '**कार्यो-** वस्तिगते चापि विधिर्वस्तिविशोधनः' सु० चि० ४।६, इत्यनेन एकस्मिन्नेव भागे समस्तमूत्राशयो दर्शितः । "**वस्तौ** वाऽप्यथवा नाले मणौ वा यस्य देहिनः । मूत्रं प्रवृत्तं सज्जेत सरक्तं वा प्रवाहतः ॥ सु० उ० ५८।१५" इत्यत्र वृक्कद्वयाऽऽवद्धगवीनीपर्यन्तो भागः प्रथमः प्रकल्पितः, वस्तिर्द्वितीयः, वस्तिद्वारमारभ्य मणिपर्यन्तस्तृतीय इति कृत्वा मूत्रस्थानं त्रिधा विभज्य दर्शितम् ।

"पक्वाशयगतास्तत्र नाल्यो मूत्रवहास्तु याः । तर्पयन्ति सदा मूत्रं सरितः सागरं यथा ॥ सूक्ष्मत्वान्नोपलभ्यन्ते मुखान्यासां सहस्रशः । नालीभिरुपनीतस्य मूत्रस्याऽऽमाशयान्तरात् ॥ जाग्रतः स्वपतश्चैव स निःस्यन्देन पूर्यते । आमुखात्सलिले न्यस्तः पार्श्वेभ्यः पूर्यते नवः । घटो यथा तथा विद्धि वस्तिर्मूत्रेण पूर्यते ॥ सु० नि० ३।२१--२२--२३ ॥" पक्वाशयगताः याः सहस्रशो नाल्यः सन्ति ताः सरितो गङ्गाद्या नद्यो यथा--येन प्रकारेण सागरं तर्पयन्ति पूरयन्ति तथा--तेनैव प्रकारेण मूत्र--मूत्राऽऽशयं सदा तर्पयन्ति पूरयन्ति । अत्र मूत्रेण मूत्रस्य तर्पणकर्तृत्वाऽभावान्मूत्राऽऽशयशब्दस्य "**विनापि** प्रत्ययं पूर्वोत्तरयोः पदयो र्वा लोपो वाच्यः" इति पाणिनीय ५।३।८३ सूत्रे पठितवार्तिकेनोत्तरपदस्य लोपो द्रष्टव्यः । अत एव '**जाग्रतः** स्वपतश्चैव स निस्यन्देन पूर्यते, इत्यत्र 'स' इत्यनेन पूर्वं मूत्रशब्देन निर्दिष्टो मूत्राशयः परामृश्यते । सोऽप्यत्र वृक्कद्वयोपेतगवीनीसहितभागाववोधकस्तावन्मात्रो भागश्चाऽत्र वस्तिशब्दवाच्यः । अत एव प्रायशो वैद्यकसिद्धान्ते तथा प्रयोगा दृश्यन्ते । तासां नालीनां सहस्रशो विद्यमानान्यपि मुखानि सूक्ष्मत्वात् स्थूलदृष्ट्या न दृश्यन्ते । अमुमेवाऽर्थं दृष्टान्तान्तरेण दृढयति **नवः**—पूर्वं जलसम्पर्करहितः । आमुखात्—गलाऽवधि जले न्यस्तः—निमज्जितः पार्श्वेभ्यः पार्श्वच्छिद्रेभ्योऽत्राप्युत्तरपदलोपो द्रष्टव्यः, यथा येन प्रकारेण पूर्यते—सम्भृतो भवति तथा--तेनैव प्रकारेण आमाशयान्तरात्—आमपक्वाशयाऽन्तरादत्राऽप्युत्तरपदलोपो द्रष्टव्यः । नालीभिः पूर्वोक्ताभिः उपनीतस्य वृक्कद्वये प्रापितस्य मूत्रस्य निस्यन्देन सततप्रवाहेण जाग्रतः स्वपतश्च पुरुषस्य सः पूर्वोक्तो वस्तिः पूर्यत इति विद्धि । अत्र मूत्रस्थानं स्थानद्वये विभज्य प्रदर्शितम् । **इदं सूत्रमसम्बद्धमस्तीति** केचित्स्थूलवादिनो वदन्ति तत्तु विचाराऽभावप्रयुक्तमित्यभ्युपगन्तव्यम् ।

यदान्त्रेषु गवीन्योर्यद्वस्तावधि संस्रुतम् ।
एवा ते मूत्रं मुच्यतां बहिर्बालिति सर्वकम् ॥ अथर्वका. १ । ३ । ६

सा० भाष्यम्—आन्त्रेषु—उदरान्तर्गतेषु पुरीतत्सु । यत्—मूत्रं संश्रितं समवस्थितं रोगवशाद् यथाकालं बहिरनिर्गच्छत् निरुद्धम् अभूत् तथा गवीन्योः । आन्त्रेभ्यो विनिर्गतस्य मूत्रस्य मूत्राशयप्रापिसाधने पार्श्वद्वयस्थे नाल्यौ गवीन्यौ इत्युच्येते । तयोरपि यत् मूत्रं संश्रितं तथा वस्तौ । धनुराकारो मूत्राशयो

वास्तिरुच्यते । तत्रापि यत् मूत्रं संश्रितम् अस्ति ते तव उक्तस्थानेषु निरुद्धं तत् मूत्रम् एव एवम् । यथा-पूर्वं मुच्यता निर्गच्छतु । निर्गमनप्रकारमेव आह । सर्वक सर्वं तत् मूत्रम् । बाल् । अनुकरणशब्दोऽयम् । इति एवमात्मकं शब्दं कुर्वत् बहिःशरीराद् बाह्यप्रदेशं ... मिति सम्बन्धः ॥

अस्मिन्मन्त्रे आन्त्राणि गवीन्यौ वस्तिः बहिर्निर्गमनमार्गश्चेति । चतुर्धा विभज्य मूत्राऽऽशयः प्रदर्शितः । वृक्कद्वयस्य तु गवीनीसम्बद्धत्वात्तत्रैवान्तर्भावो बोध्यः । कुत्रचित्तु तयोः स्वातन्त्र्येण परिगणनं भवति यथा यजुर्वेदे " **मतस्नाभ्या** दिवं वृक्काभ्या गिरीन् यजु० २५।८ " अत्र गवीनीस्थाने मतस्ना-शब्दो गृहीतः । यद्यपि वाजसनेय्या **उव्वटमहीधराभ्यां** ग्रीवाऽधस्ताद्भागस्थितहृदयोभयपार्श्वस्थे अस्थिनी मतस्ने इति व्याख्यातं । परन्तु तन्न समीचीनम् । पञ्चविंशाऽध्यायस्यारम्भादेवाऽश्वाङ्गाना तत्तद्देवतोद्देशेन कृतविभागत्वात् । तत्र चतुर्थपञ्चममन्त्राभ्या प्रतिपार्श्वं त्रयोदशसङ्ख्यात्वेन वर्तमानाना पर्शुकास्थ्ना तत्तद्दिशो-पदेवताभागत्वेन पक्षतिनाम्ना कृतोपयोगत्वात् । हृदयस्य मासपिण्डात्मकत्वात् पर्शुकातिरिक्तास्था तत्राऽभावाच्च । **मतस्ना**शब्दश्च प्रायो देवतोद्देशेऽस्थिरहितपेशीमयाऽवयवेषुमध्ये परिगण्यते यथा—"अग्निं हृदयेनाऽशनिं हृदयाग्रेण पशुपतिं कृत्स्नहृदयेन भव यक्ना । मतस्नाभ्यामीशान मन्युना महादेवमन्तः पार्श्वव्येनोग्र देव वनिष्ठुना वसिष्ठहनुः शिङ्गीनि कोश्याभ्याम् । वा० स० ३९।८, १९।८५ । इन्द्र. सुत्रामा हृदयेन सत्यं पुरोडाशेन सविता जजान । यकृत् क्लोमान वरुणो भिषज्यन्मतस्ने वायव्यै र्न मिनाति पित्तम् । यत्ते यकृत् ये च ते मतस्ने यदान्त्रं याश्च ते गुदा' अ० १०।९।१६ इत्यादौ सूक्ष्मदृष्ट्या गवेषणीयम् । अयञ्च शब्दो बहुसमयात्स्वाऽर्थग्रहे किमेतदिति शङ्कास्थानमासीत् । अत एव हृदयात्ते परिक्लोम्नो० अ० २।३३।३ इतिमन्त्रव्या-ख्याने **मतस्नाभ्यां**-उभयपार्श्वसम्बद्धाभ्या वृक्काभ्या तत्समीपस्थपित्ताऽऽधारपात्राभ्या वेति समशेत सायणोऽपि । "आभ्या वा भावितान् दद्याद्योनौ कटुकमत्स्यकान् । वराहमत्स्यपित्ताभ्या लक्तकान्वा सुभावितान् ॥ अधोहरै-श्चोर्ध्वहरै र्भावितान्वा समाक्षिकान् । किण्व वा सगुडक्षार दद्याद्योनिविशोधनम् ॥ रक्तपित्तहरं क्षार लेहयेन्मधु-सर्पिषा । लशुनं मदिरा तीक्ष्णा मत्स्याश्चास्यै प्रदापयेत् ॥ वस्तिं सक्षीरगोमूत्रं सक्षारं दाशमूलिकम् । अदृश्य-माने रुधिरे दद्याद्गुल्मप्रभेदनम् ॥ प्रवृत्तमाने रुधिरे दद्यान्मासरसौदनम् । घृततैलेन चाऽभ्यङ्ग पानार्थे तरुणा सुराम् ॥ रुधिरेऽतिप्रवृत्ते तु रक्तपित्तहराः क्रियाः । च. चि. ५।१६८

**'विगवीनिके'**—भिनद्मीति पूर्वेण सम्बन्धः । हे गर्भग्रहणयोग्ये ! ते गवीनिके भिनद्मि । यद्यपि वृक्कद्वयादागतयो र्वस्तिसम्बद्धयो मूत्रवहयोः स्रोतसो र्गवीनिकेत्यभिधानम् तथाऽप्यत्र सवृक्कयोस्तयो र्ग्रहणम् । ततश्चाऽत्र मेहन गवीनिके चेति मूत्राशयो द्विधा विभक्त. । यद्यश्मरी, वृक्कयो र्गवीनिकयोर्वा जायेत तदा तत्रैव तन्निराकरणाय शस्त्रादिक्रिया विधेया । एतावानेव **'वि गवीनिके'** भिनद्मी, त्यस्याशयः । क्वचित्तु मूत्र-नालशब्देन उपर्युक्तमङ्ग व्यवह्रियते यतस्तत्रैव मूत्ररोधकारी रोग उदेति यथा—

> **वस्तौ** वाऽप्यथवा नाले मणौ वा यस्य देहिनः । मूत्र प्रवृत्त सज्जेत सरक्तं वा प्रवाहतः ॥
> स्रवेच्छनैरल्पमल्प सरुजं वाऽथ नीरुजम् । विगुणाऽनिलजो व्याधिः स मूत्रोत्सङ्गसञ्ज्ञितः ॥
>
> सु. उ. ५८।१५–१६

अस्य व्याख्याने डल्हणविपणाया महान्भ्रमोऽजनि । नाऽतस्तद्विश्वसनीयम् । अश्मरीमन्तराऽपि कुत्रचिद्वातजनितगुल्मोऽश्मरीलक्षणो दृश्यते तत्रापि शस्त्रक्रियाऽत्यावश्यकी । यथा च सुश्रुतोत्तरतन्त्रे—

अभ्यन्तरे वस्तिमुखे वृत्तात्यः स्थिर एवच । वेदनावानतिसदा मूत्रमार्गनिरोधनः ॥
जायते सहसा यस्य ग्रन्थिरश्मरिलक्षणः । स मूत्रग्रन्थिरित्येवमुच्यते वेदनादिभिः ॥ सु. उ. ५८।१२–१९

'वि' इत्युपसर्गः प्रायेण विकारवाचकः । अतो '**वियोनिम्**'=विकृता सविकारा सरोगा या योनिस्तामिति मध्यमपदलोपिसमास कृत्वाऽर्थोऽवगन्तव्यः । भेदनशब्दस्य च पृथक्करण, विस्तृतीकरण, कर्तनच्छेदनादयोऽर्था बोद्धव्याः । एतेपामर्थानां ऋग्वेदसुश्रुतसहितयो र्नाऽप्रसिद्धिः ।

'**विमातरम्**' ( च भिनद्मि=विशेपाऽवस्थाया यदा तत्कालमेव मातुर्मृतिर्भवेत्, गर्भाशयस्पन्दादिना तत्स्थोऽर्भको जीवतीत्यनुमीयेत तदा )—केनाऽपि कारणेन मातु प्राणान्तः स्यात्तदा गर्भाशयः सम्यक् परीक्षणीयः । यदि गर्भः स्पन्दमानो दृश्येत तदाऽचिरादेवोदर पाटयित्वा स वहिर्निष्कास्यः । यदुक्त सुश्रुतेन—
वस्तमारविपन्नाया कुक्षिः प्रस्पन्दते यदि । तत्क्षणाज्जन्मकाले त पाटयित्वोद्धरेद्भिपक् ॥ सु० नि० ८ ।१४

'**विपुत्रं**' च भिनद्मि,=यदा गर्भो विपन्नो माता च जीवति मृतो गर्भश्च केनाऽप्युपायेन न वहिरायाति तदा गर्भमुत्कृत्य वहिरानयेत्कुशलो भिपक् । यथाऽऽह सुश्रुत —"अथातो मूढगर्भचिकित्सित व्याख्यास्यामः सु० चि० ॥१–२॥ नाऽतः कष्टतममस्ति यथा मूढगर्भशल्योद्धरणम्, अत्रहि योनियकृत्प्लीहान्त्रविवरगर्भाशयाना मध्ये कर्म कर्तव्यं स्पर्शेन, उत्कर्पणाऽपकर्पणस्थानाऽपवर्तनोत्कर्तनभेदनच्छेदनपीडनर्जूकरणदारणानि च एकहस्तेन गर्भ गर्भिणी चाऽहिंसता, तस्मादधिपतिमापृच्छ्य पर च यत्नमास्थायोपक्रमेत् ॥ ३ ॥ तत्र समासेनाऽष्टविधा मूढगर्भगतिरुद्दिष्टा, स्वभावगता अपि त्रयः सङ्गा भवन्ति शिरसो वैगुण्यादसयो र्जघनस्य वा ॥ ४ ॥

जीवति तु गर्भे सूतिकागर्भनिर्हरणे प्रयतेत । निर्हर्तुमशक्ये च्यावनान् मन्त्रानुपश्रृणुयात् तान् वक्ष्यामः
'इहामृत च सोमश्च चित्रभानुश्च भामिनि । उच्चैःश्रवाश्च तुरगो मन्दिरे निवसन्तु ते ॥ ६ ॥

इदममृतमपा समुद्धृत वै तव लघु गर्भमिम प्रमुञ्चतु स्त्री ।
तदनलपवनार्कवासवास्ते सह लवणाम्बुधरै र्दिशन्तु शान्तिम् ॥ ७ ॥

मुक्ताः पाशा विपाशाश्च मुक्ता सूर्येन्दुरश्मयः । मुक्तः सर्वभयाद्गर्भ एह्येहि माचिर स्वाहा ॥ ८ ॥

औपधानि च विदध्यात् यथोक्तानि । मृते चोत्तानाया आभुग्नसक्थ्या वस्त्राधारकोन्नमितकट्या धन्वननगवृत्तिका शाल्मलीमृत्स्नावृताभ्या म्रक्षयित्वा हस्त योनौ प्रवेश्य गर्भमुपहरेत् । तत्र सक्थिभ्यामागतमनुलोममेवाञ्छेत्, एकसक्थ्ना प्रपन्नस्येतरसक्थि प्रसार्याऽपहरेत्, स्फिग्देशेनाऽऽगतस्य स्फिग्देश प्रपीड्योर्ध्वमुत्क्षिप्य सक्थिनी प्रसार्याऽपहरेत्, तिर्यगागतस्य परिघस्येव तिरश्चीनस्य पश्चादर्धमूर्ध्वमुत्क्षिप्य पूर्वार्धमपत्यपथ प्रत्यार्जवमानीयाऽपहरेत्, पार्श्वाऽपवृत्तशिरस सम्पीड्योर्ध्वमुत्क्षिप्य शिरोऽपत्यपथमानीयाऽपहरेत्, वाहुद्वयप्रतिपन्नस्योर्ध्वमुत्पीड्यासौ शिरोऽनुलोममानीयापहरेत्, द्वावन्त्यावसाध्यौ मूढगर्भौ, एवमशक्ये शस्त्रमवचारयेत् ॥९॥ सचेतन च शस्त्रेण न कथञ्चन दारयेत् । दार्यमाणोहि जननीमात्मानं चैव घातयेत् ॥१०॥

तत्र स्त्रियमाश्वास्य मण्डलाग्रेण अङ्गुलीशस्त्रेण वा शिरो विदार्य, शिरः कपालान्याहृत्य शङ्कुना गृहीत्वोरसि कक्षायां वाऽपहरेत्, अभिन्ने शिरसि चाक्षिकूटे गण्डे वा, असससक्तस्यासदेशे वाहु छित्त्वा, दृतिमिवाऽऽतत वातपूर्णोदरं वा विदार्य निरस्यान्त्राणि शिथिलीभूतमाहरेत्, जघनसक्तस्य वा जघनकपालानीति

यद्यदङ्ग हि गर्भस्य तस्य स्वजति तद्भिपक् । सम्यग् विनिर्हरेच्छित्वा रक्षेन्नारीं च यत्नतः ॥ १२ ॥
गर्भस्य गतयश्चित्रा जायन्तेऽनिलकोपतः । तत्राऽनल्पमति वद्यो वर्तेत विधिपूर्वकम् ॥ १३ ॥

नोपेक्षेत मृतं गर्भं मुहूर्तमपि पण्डितः । स ह्याशु जननी हन्ति निरुच्छ्वासः पशु यथा ॥ १४ ॥
मण्डलाऽग्रेण कर्तव्य छेद्यमन्तर्विजानता । वृद्धिपत्र हि तीक्ष्णाऽग्र नारी हिंस्यात्कदाचन ॥ १५ ॥
अथाऽपतन्तीमपरा पातयेत्पूर्ववद्भिषक् । हस्तेनाऽपहरेद्वाऽपि पार्श्वाभ्या परिपीड्य वा ॥ १६ ॥
धुनुयाच्च मुहुर्नारीं पीडयेद्वासपिण्डिकाम् । नैलाक्तयोनेरेव ता पातयेन्मतिमान्भिषक् ॥ १७ ॥
एव निर्हृतशल्या तु सिञ्चेदुष्णेन वारिणा । ततोऽभ्यक्तशरीराया योनौ स्नेहं निधापयेत् ॥ १८ ॥

एवं मृद्वी भवेद्योनिस्तच्छूल चोपशाम्यति ॥ " इति सु. चि. १५ अत्र मूढगर्भस्यैव शल्यत्वम् । शल्यनिष्कासनोपायाश्च साधारण्येन—' हस्तशक्यं यथामार्गेण हस्तेनैवाऽपहर्तु प्रयतेत ॥ ११ ॥ हस्तेनाऽपहर्तुमशक्य विशस्य शस्त्रेण यन्त्रेण वाऽपहरेत् सु० सू० २७ । १२

' **वि कुमारं** च जरायुणाभिनद्मि '=( यदाकेनापि कारणेन गर्भो न वहिरेति तदा किं विधेयमित्ये-तद्वाक्य दर्शयति ) जरायो' कुमार विश्लेषयामीत्यर्थ. । यथा—" **गर्भसङ्गे** तु योनिं धूपयेत् कृष्णसर्पनिर्मो-केणपिण्डीतकेन वा । वध्नीयाद्धिरण्यपुष्पीमूल हस्तपादयोः धारयेत्सुवर्चला विशल्या वा ॥ सु. शा. १०।११ ॥" इत्याद्यष्टाङ्गसङ्ग्रहादिष्वपि वहव उपाया. दर्शिता' ते तत्रतत्र द्रष्टव्या' । प्रसवादनन्तरमुल्बपाते यदा विलम्ब' स्यात्तदा ' **जरायुअवपद्यताम्** ' इति जरायो र्वहिरानयनाय सुश्रुतादिषूपाया दर्शिताः ।

" अथापराऽपतन्त्यानाहाध्मानौ कुरुते, तस्मात् कण्ठमस्याः केशवेष्टितयाऽङ्गुल्या प्रमृजेत्, कटुकाला-वुकृतवेधनसर्षपसर्पनिर्मोकैर्वा कटुतैलविमिश्रैर्योनिमुख धूपयेत्, लाङ्गलीमूलकल्केन वाऽस्या. पाणिपादतल-मालिम्पेत्, मूर्ध्नि वास्या महावृक्षक्षीरमनुपेचयेत्, कुष्ठलाङ्गलीमूलकल्क वा मद्यमूत्रयोरन्यतरेण पाययेत्, शालमूलकल्क वा पिप्पल्यादिं वा मद्येन, सिद्धार्थककुष्ठलाङ्गली महावृक्षक्षीरमिश्रेण सुरामण्डेन वाऽऽस्थापयेत्, एतैरेव सिद्धेन सिद्धार्थकतैलेनोत्तरवस्तिं दद्यात्, स्निग्धेन क्लृप्तनखेन हस्तेनाऽपहरेत् ॥ सु. शा. १०।२१ ॥

यद्यप्यनेकाऽनुचितोचितव्याख्यानपटुरपि **सायण** इमं मन्त्र स्तोक यथार्थमिव व्याख्यात् । **ह्विटनी**-प्रभृतयस्तु पाश्चात्यास्तद्व्याख्यानेऽसम्बद्धमिव प्रालपन्, भारतीयस्तु न कोऽपि तथा व्याख्यास्यत् ।" अहं तव मूत्रकमङ्ग पृथग्विदारयामि, पृथक् तवयोनिं, उभय मातर शिशु च ( विदारयामि ) जरायो र्बालं पृथक् ( किम् ? ) । जरायुरवतरतु । " इति **ह्विटनी**महोदयस्याशय एतन्मन्त्रानुवादे ।

एकस्मिन्नेवास्मिन्मन्त्रे कति हस्तलाघवमपेक्षिण्यः सूक्ष्मतमाश्च शस्त्रक्रियाः प्रदर्शिता येन वैदिकर्षीणां शल्यतन्त्रेऽतीवपाटव दृश्यते।अस्य मन्त्रस्य व्याख्यानविस्तरःपाठकानामस्माकञ्चाल्पेतरं कालमपेक्षतेऽतो दिङ्मात्रमेव दर्शितम् । प्राचीनानामृषीणा यावच्छक्यमल्पसङ्ख्यैश्शब्दैरनल्पाना गूढानाञ्च विचाराणा विन्यासपद्धतिः सुप्रसिद्धैव । एतत्तु नाऽविदितं संस्कृतव्याकरणं सर्वभाषाव्याकरणेभ्यो विस्तृततरं सुनियमञ्चेति । किन्तु पाणि-निविरचिताऽष्टाध्यायी, इयत्यविस्तृता यथा यामद्वयेन प्रवक्तु शक्यते नच क्रेतु महार्घा । तस्याश्च व्याख्यानभूता ग्रन्थाः सुदीर्घकालाधिगम्या व्याकरणस्याऽतिविस्तरदर्शकाश्च । वेदास्तु सर्वेषामेव ज्ञानविज्ञानाना राशयस्तेषु चातीव सङ्क्षेपेण सर्वे एव विषया वरीवृत्यन्तेऽतो न केवलं पाणिनिव्याकरणस्य किन्तु सर्वव्याकरणाना सिद्धान्तास्तत्र द्विचत्वारिंशदक्षरैरेव ( Syllables ) दर्शिताः । तद्यथा—" चत्वारि शृङ्गा त्रयो अस्य पादा द्वे शीर्षे सप्त हस्तासो अस्य । त्रिधा वद्धो वृषभो रोरवीति महोदेवो मर्त्या आविवेश ॥ " इति । चत्वारि शृङ्गाणि । चत्वारि पदजातानि नामाख्यातोपसर्गनिपाताश्च । त्रयो अस्य पादाः । त्रयः काला भूतभविष्यद्वर्त-मानाः । द्वे शीर्षे द्वौ शब्दात्मानौ नित्यः कार्यश्च । सप्तहस्तासो अस्य सप्त विभक्तयः । त्रिधा वद्धः—त्रिषु

स्थानेषु बद्ध उरसि कण्ठे शिरसीति । वृषभो वर्षणात् । रोरवीति शब्दं करोति । कुत एतत् ? रौतिः शब्द-कर्मा । महोदेवो मर्त्या आविवेशेति महान्देवः शब्दो मर्त्या मरणधर्माणो मनुष्यास्तानाविवेश ॥ **महाभाष्यम्** १।१।१ ॥ अनेन नैतदनुमीयेत यत्पाणिनिसमये वर्तमानकालवद् वेदसमये च पाणिनिकालवन्नासीद्व्यापावि-स्तरो व्यवहारो वा । किन्त्वेषा शैलीपूर्वाचार्याणा निसर्गसिद्ध यदल्पाऽक्षरै र्बहुगभीरभावदर्शकं नियम ज्ञापयति ।

## भारतीया ग्रीसीयाश्च

दूरस्थिता बह्वयो मनुष्यजातयो या मध्यकाले भारतवर्षेण सह सम्बन्ध बभ्रुस्तासा मिस्रीया ( Egyptians ) **ग्रीसीयाश्च** ( Greeks ) प्रधानतमत्वेनोल्लेखनीयाः । यद्यप्याऽऽयुर्वेदमधिकृत्याऽऽर्बीया ( Arabians ) अपि भारतस्याधमर्णाः किन्तु तेषा ता प्रवृत्तिं भूयो वक्ष्याम । यतोऽस्त्रदेशोत्थानतः प्रागेव ग्रीसीया विजिगीषयाऽधिजिगीषया च भारतवर्ष प्रविविशु । अय देशश्च तदा चिराय स्वसभ्यतया विभवितया चाऽतीव प्रसिद्धोऽभवत्प्रागपि खीष्ट— ( Christ ) जन्मत । अलक्षेन्द्र ( Alexander The Great ) कृतादुपप्लवादपि पूर्वं खीष्टजन्मतः षट्शतसवत्सर प्राक् **पाथेगोरस** ( Pythagoras ) नामा कश्चिद्ग्रीसीयो ज्ञानपिपासोपशान्तये देशेऽस्मिन्नभ्राम्यत् । **मेगस्थनीजो**ऽपि ( Megasthenes ) भारतीयाना राजनीतिमवलोकितु **सेल्यूकसेन** ( Selucus Necatar ) मौर्यसम्राजश्चन्द्र-गुप्तस्य राजससदि खीष्टजन्मतो द्वादशोत्तरत्रिशतवर्षपूर्वं प्रेषित आसीत् । अयञ्च ग्रीसीयो राजदूतः स्वसमयसमयदर्शकं भारतवृत्त व्यलिखच्चन्द्रगुप्तराजससदञ्च कतिपयवारानगात् । सकलञ्चैन देशमपश्यत् कश्चिच्च ब्राह्मणः कल्याणाऽभिधोऽलक्षेन्द्रचाटुकृतिकैतवेन विश्वासितो भारताद्ग्रीसदेशमयात्तत्र च पश्चात्तापं विधायाऽऽत्महननमकरोत् । उणादिसूत्रसिद्धस्य दीनारशब्दस्य ग्रीसदेशे व्यवहारोऽपि ग्रीसभारतवर्षयोः सम्बन्ध ज्ञापयति (दीङोनुडचि+दीनारः सुवर्णाभरणम्) भट्टोजिदीक्षितादिमते दीनार. सुवर्णाभरणम् । मनुस्मृतौ दण्डिमते पञ्चतन्त्रादौ च दीनारः सुवर्णमुद्राविशेषः । यद्यपि रोमग्रीसयो रौप्यमुद्राया दिनेरियस इति सञ्ज्ञा भारते तु सुवर्णमुद्रायास्तथापि भारतस्योभाभ्या देशाभ्या सहैतत् सम्बन्ध ज्ञापयति ।

दक्षिणदेशे च पाण्ड्या राजान आसन् । तैस्सह रोमराजस्याऽऽ**गष्टसस्य** ( Augustus the Emperor of Rome ) मैत्र्याऽऽसीत् । पञ्चाशीत्यधिकैकशततमे क्रीडामहोत्सवप्रसङ्गे ( Olympiad ) भारतीयः पाण्ड्यराज अगस्टसस्य समीप सन्धीच्छया शिष्टगण प्राहिणोदिति **जोर्जियस-सिंसेलसः** ( Georgius Syncellus ) ब्रूते । खीष्टजन्मनस्तृतीयशताब्द्या पेरिप्लसमेरिस इरिथोकि कथनानुसार मदुरापत्तनं पाण्ड्याना राजधानी बभूव । तत्र च नद्याः पुलिनतले लब्धेभ्यो बहुभ्यो रोमराज-मुद्राङ्कितताम्रकार्षापणेभ्यस्तत्रैव रोमकाणामपि पूर्वमुपनिवेश आसीदिति **सैवेल** ( Sewell ) महोदयस्य मतम् ।

वर्तमानाऽऽयुर्वेदस्येतिहासकालो बौद्धधर्मप्रादुर्भावकालादारभ्यते । यदि वयमुपर्युक्तानीतिहासप्रमाणानि सूक्ष्मतया विचारयामस्तदोपर्युक्तपाश्चात्यजातिद्वयस्य ज्ञानविज्ञानविचारव्यवहारा भारतीयैः सहाऽभवन्बौद्धयुग इति नूनमवगम्यत एव । बौद्धाना धर्मस्तु बहिरव विस्तारमवाप्तोत्ततश्चाऽस्याऽनुयायिना स्वजन्मभूमिं प्रति प्रवृत्तिमुदपादयत् । धर्मक्षेत्रदर्शका अन्ये च भारतीयाना धर्मक्षेत्राणि विद्याकेन्द्राणि च द्रष्टुमारब्धवन्तस्ते तक्षशिला ( Taxile ) नालन्दा ( Nalanda ) प्रभृतीनि विद्याकेन्द्राणि ददृशुः । यद्यपि बौद्धा राजानः शारीरज्ञानाय चिकित्साया अपि शल्यक्रिया प्रतिषिध्याऽऽयुर्वेदस्यैतन्मुख्याङ्ग सत्रुटि विदधुस्तथाप्य**शोक, बिम्बसार, नागार्जुना**दयो बौद्धा राजान आयुर्वेदमुपकृत्य मनुष्याणा पशूनाञ्च हिताय चिकित्सालयानने-

कानस्थापयन् । राज्ञा नागार्जुनेन पुराणी प्रकृतसम्बन्धापेता, इतस्ततो विकीर्णैव सुश्रुतसंहिता प्रतिसंस्कृतेति तु निर्मूलैव जनश्रुतिरस्ति । **हार्नले** महोदयोऽप्यस्मिन् विषय इत्थं स्वमतं दर्शयति—" निश्चितमेवैतत् सुश्रुतसंहिता गच्छति कालेऽसम्बद्धेवाऽजनि, जातायाश्चाऽत्रस्यताया सा बहून्वारान् पुनः प्रतिसंस्कृता । प्रथमश्च प्रतिसंस्कार उत्तरतन्त्ररूपेण साम्प्रतमपि वर्तते । स च खीष्टद्वितीयशताब्द्या नागार्जुनकृत इति वृद्धकिंवदन्ती " इत्यादि ।

आर्यावर्तः पुरा समुन्नतेः परां सीमानमधिगतवान् । तस्य च सर्वेऽन्येऽज्ञानबहुला देशाः ज्ञानरश्मिप्रकाशं तस्माद्गृहीत्वाऽधमर्णाः । भारतगौरवाऽन्तकर्तृणो महाभारतीययुद्धादत्यर्वागन्येषां देशानां ज्ञानोन्नतीं विकसितुं समारब्धे । भारतस्य च प्राग्गौरवं महाभारतीययुद्धादारभ्य क्षयोन्मुखमभवत् । तच्च युद्धमितः प्रायः पञ्चसहस्रवर्षपूर्वमभवदिति वृद्धाः । युधिष्ठिरविहितस्य संवत्सरगणनाक्रमस्य स्थूलसरणिमनुसृत्याऽद्यावधि शतोत्तरपञ्चसहस्रमिता वत्सरा अयुरिति प्रायोवादः । युधिष्ठिरस्य वर्षक्रम. ( Era ) कलिवर्षक्रमो वा कुरुपाण्डवयुद्धसमाप्तेरेवारब्ध इत्युच्यते किन्तु **'प्राचीनलिपिमाला'** निर्माता **गौरीशङ्कर** शर्मा मन्यते—' खिष्टीयद्वितीयमासस्याऽष्टादशेऽहनि द्व्युत्तरैकत्रिंशच्छततमे खीष्टजन्मनः पूर्ववत्सरे ( 18th February 3102 B. C. ) कलिवर्षगणनारम्भोऽजनि, इति । विक्रमार्कवर्षक्रमे चतुश्चत्वारिंशदुत्तरत्रिसहस्रवर्षाणि संयोज्य च कलिवत्सरा भवन्तीति । एवञ्चाऽद्यावधि षड्विंशदुत्तरपञ्चसहस्रमिता वत्सराः कलेर्जाताः ( 3044+1982=5026 ) । स एव शर्मा महोदयः पुनर्ब्रूते—' दक्षिणदेशे **अहोलि पूलकेशी**स्थानयोश्चालुक्यवंशीयाना राज्ञां समयकृता. शिलालेखा वर्तन्ते मन्दिरभग्नावशेषेषु । दृश्यते च तत्र तन्मन्दिर कलेः पञ्चत्रिंशदुत्तरसप्तत्रिंशच्छततमे वत्सरे; षट्पञ्चाशदुत्तरपञ्चशततमे च शकवत्सरे निर्मितमासीदिति । एतेन च कलिवत्सराः शकवत्सराऽऽरम्भे सप्तनवत्युत्तरैकत्रिंशच्छतमिता भवन्ति, इति । बहवस्तु कलेः प्रथमवर्ष एव भारतीययुद्धमभवदिति मन्यन्ते, किन्तु राजतरङ्गिणीरचयिता **कल्हणो**ऽन्यदेव दर्शयति यथा—" **भारतं** द्वापरान्तेऽभूद्वार्तयेति विमोहिताः । केचिदेतां मृषा तेषां कालसङ्ख्यां प्रचक्रिरे ॥ " " शतेषु षट्सु सार्धेषु त्र्यधिकेषु च भूतले । कलेर्गतेषु वर्षाणामभवन् कुरुपाण्डवाः " इति । एतन्मते तु भारतीययुद्धात्प्राक् त्रिपञ्चाशदुत्तरषट्शततमे वत्सरे कलिप्रारम्भोऽजनीति सिद्ध्यति । यत्किमप्येतेषां मतानां साधीयः स्यात्, प्रायः पञ्चसहस्र वत्सराः महाभारतयुद्धकालादद्यावधि गता इति निर्विवादम् । यद्यपि युधिष्ठिरकालात्कलेरारम्भोऽजनि तथाप्याबौद्धकालं भारतगौरवं पूर्वां स्वां छायां न जहौ । पाश्चात्याः प्रायेण बौद्धकालादेवेतिहासवृत्तं प्रमाणत्वेन मन्यन्ते । ततः पूर्वेतिहासस्य प्रमाणार्हतायाः सम्यगनुपलब्धिश्च तैर्मता । वयं तत्र विषये न किमपि स्वमतं दर्शयामः । एषां पाश्चात्यानां मते महाभारतकालोऽतीतेतिहासविषयः ( Pre-historic ) । ततोऽपि सिद्ध्यत्येवम्—सर्वेषां देशानामितिहासकालाऽऽरम्भात् प्रागेव भारतगौरवँल्लोकान्तरप्रस्थानोन्मुखमभवदिति । बौद्धानां समयात्पूर्वमितिहासप्रमाणाऽलब्धे वयमप्यर्वाचीनाऽऽयुर्वेदेतिहासं बौद्धकालादेव गणयामः । ततश्चाऽर्वाचीनाऽऽयुर्वेदकालः खीष्टजन्मन. षष्ठीं पूर्वशताब्दीमारभ्य तत एवार्वाङ् नवम्यां शताब्द्यां निवर्तते बौद्धकालश्चाऽस्य प्रारम्भाच्छङ्कराचार्यकालावधि गण्यतेऽतोऽर्वाचीनाऽऽयुर्वेदसमयोऽपि स एव । अस्मिन्नेव समये यथा भारतवर्षप्रभवा बौद्धधर्मसिद्धान्ता अन्यदेशप्रवेशमापुस्तथैवाऽन्येपि विज्ञानविचारा मिश्र ( Egypt ) ग्रीस ( Greece ) प्रभृतिषु देशेषु प्रसारमलभन्त । आयुर्वेदप्रचारोऽपि तेन सह भारताद्बहिरभूत् । सविश्वासमेतन्निश्चीयते च मिश्रदेशीयानां सभ्यताऽनेकदेशविस्तृतसन्तानवती भारतीयसभ्यतैव । मिश्रीयाणां पूर्वजास्तु भारतीया एवाऽऽसन् ।

ते ततोऽप्यनेकेषु देशेषु विजित्य तास्तान्देशान् भारतगौरवं दर्शयन्तो न्यवसन् । यो देशस्साम्प्रतं इजिप्ट ( Egypt ) इति प्रसिद्धस्तस्य प्राचीन नाम Mysser इत्यासीत्, तच्च संस्कृतभाषाया मिश्र इति प्रसिद्धम् ।

अधोनिहितप्रमाणयुक्तिभ्य. समीचीनमवगतं भविष्यति यद्ग्रीसीयाना सर्वे.साञ्च पाश्चात्यजातीना सभ्यता ज्ञानविज्ञाने च भारत एव जन्म लेभिरे । ततश्च ते सर्वेऽपि भारतीयानामधमर्णा' । पोकाकनामकः कश्चित्पाश्चात्यपण्डितः स्वकृतौ ( in India in Greece by E. Pococke ) एतत्सविस्तरं दर्शितवान् । पाश्चात्यज्ञानविज्ञानमूलभूता ग्रीसीयाना विद्यासम्पद्भारतीयविद्यासम्पदो दुहितेति स आशंते । अस्माभि' पूर्व-मुक्तमेव यन्मिश्रीयास्तिद्देशज्ञानकीर्तिसम्पदश्च भारतमूला एवेति ।

ग्रीसीया मिश्रीयेभ्यो विद्या गृहीतवन्त इति सर्वेषामेव पाश्चात्याना विदुषा मतम् । किन्तु Pococke महोदयोऽन्यदेव स्वमतं दर्शयाति यथा—"अहं ता मानवजातीरुल्लिखिष्यामि या भारतपश्चिमदेशादन्तर्धाय पुनर्ग्रीसदेश उदिताः । येषा राजवंशाना युद्धकौशलजनितानि यशास्यद्यापीतिहासग्रन्थेषु साभिमानमुल्लिख्यन्ते । ये च भारतस्य पश्चिमोत्तरदेशवासिन आसन् । येषाञ्च योद्धृगण' ट्रोयीययुद्धे (The Battle of Troy) परा-क्रममदर्शयत् । वस्तुतश्च पौसीडन ( Poseidon ) ज्यूस ( Zeus ) यो. कल्पितदेवत्वादारभ्य ट्रोयीय युद्धावधि ( Trojan war ) तेषा भाषा-स्वभावः—धर्म' सन्धिविग्रहादिनियमाश्च साक्षाद्भारतीया एवाऽभवन् । एतत्प्रमाणीकरणे वहहं स्वमतं स्थापयिष्यामि—वहु च भविष्यद्विचाराऽधीनम् । तथापि यावन्मया सम्यगन्वे-षित तावदपि मम मतस्थिरीकरणायाऽलम्, तस्मादेवाऽय निश्चयो मे जायते इभिमेरसो ( Evemerus ) मन्यते—' 'पूर्वं केऽपि मनुष्या जेतारो राजानो मानवजातिहितकृतश्च भूत्वा ( भारतीयाः ) हीनतामाप्नुवन् । इति तस्य नाऽतथ्यकल्पनम् । यद्यस्मिन्विषये विस्तरेण नाऽहं किमपि दर्शयामि तर्हि नैतत्प्रमाणाऽल्पतायाः, विरूपीकृतग्रीसीयगणकृत्रिमवेषाऽऽकृतिनिराकरणाय प्रमाणाल्पत्वञ्च किन्तु सुदीर्घसमयव्ययेन स्वकृतिपूर्तौ सन्देहात् । तथापि—एथेनीयाना ( Athenians ) औटोक्योनियाना ( Authocthons ) घासजीविनामन्येषाञ्च वास्तविकरूपदाने यत्नमकरवम् । ते हि साधारण्येन भारतीयाऽऽचारप्रतिभुव इव दृश्यन्ते । वर्तमानशार्मण्य ( German ) साम्प्रदायिकेश्वरवाद ( Theology ) वत्, पैलीफेटस ( Paleaphatus ) विकासवा-दवच्च न मत्कथनममूलमिति पाठकैः समीचीन दृश्यताम् । मदुक्तिः सम्भवद्भ्रान्तान्नैव विशदीकरोति । तस्यास्तु निश्चितवृत्तमूलतायास्तत्र चोत्तमतया सोपपत्त्यनुवादाज्जटिलविचाराणाम् । विद्वान् जैकवः ( Jacob Bryant ) स्वपाण्डित्यमिममेव विचारमव्यवहार्यसाधनेन साधयितु ( भारतीयाना पाश्चात्यानामेकमूलत्व ) प्रकटयितु वहु यतनमक्षपयत् । स विविधासु भाषासु तमेव निश्चयममार्गयद्य एकस्यामेव भाषायां ( संस्कृते ) लभ्यते । स्वचिकीर्षितमलब्ध्वैव स्वमतनिर्णयमसमाप्य चैतदितिहासवृत्तगवेषण स उज्झाञ्चकार । अहन्त्वन्य-देशस्थिताना भारतीयाना मूलभाषादर्शितपथो यथाशक्ति स्वमतं दर्शयितुं प्रभविताऽस्मि । इतस्ततो विस्तृतां स्वागम विस्मृतां जनता तस्याः क्षयवृद्धी च सम्यक् परीक्ष्याऽहं स्वाऽऽशय प्रकटीकरोमि । येनोदारविचारै-र्णेतिहासगवेषणावता विदुषां पाश्चात्यराष्ट्रागमनिर्णय. सम्भाव्यते । यद्यपि ममैतस्मिन्नुभयजनतैकीकरणे दोषा

---

" सिसिली (Sicily ) द्वीपान्तर्गतमेसेनी ( Messene ) ग्रामवासी इभिमेरस (Evemerus) स्वभा-षायां भारतीयव्यवहारदर्शकानि नव पुस्तकानि ईपा ऐरेपेन( Iepa Araypain ) नाम्नाऽलिखत् तत्र । वहूना देवानां नामानि वर्तन्ते ते च भारतीया इव भान्ति । स च पञ्चनददेश यावद्धर्मव्यवहारादि द्रष्टुमभ्राम्यदिति पुरातत्त्वविदा मतम् इति स्मिथ ( Smith ) महोदयः स्वपुस्तके ( in Greek and Roman Biography ) दर्शयति ।

नाऽसम्भवाः । अपूर्णता चाऽऽवश्यकी । किन्तु स्वोपपत्तिपर्याप्ततया स्वसत्यत्वे च नूनं विश्वसिमि । भारतीयेतिहासज्ञा आद्यग्रीसदेशस्थापनेतिहासं प्राप्य तदा प्रसत्स्यन्ति यदा ते तत्रापि जैनन्यायवादं पूर्णतया द्रक्ष्यन्ति । यद्यप्यय विदुषा मतभेदस्य नाऽविषयः किन्तु सर्व एव सन्देहा इतिहाससत्यत्वे परिणता भविष्यन्ति' इति । उभाभ्यामुपर्युक्ताभ्या जातिभ्या तयोश्चाऽऽचारादिसम्पदा सह भारतीयाना यः सम्बन्धः स केवल कल्पनारूढो न, न च शब्दशास्त्रलब्धमनोभावपरिणामः किन्तु बहूना विदुषा शब्दशास्त्र ( Philology ) पुराणाऽध्यात्मशास्त्रेषु गवेषितमताना संहतेश्चरमः परिणामोऽयम् । यद्यप्यत्र वयं शब्दशास्त्र—( Philology ) लब्धान्येव प्रमाणानि मुख्यतया दर्शयितुं यतामहे तथापि तथ्यमन्यत्राऽपि लब्धमस्माभि र्नोपेक्षिष्यते । स्ववक्तव्येऽस्मिन् तदपि न हास्यामो यज्ज्ञानज्योतिः संस्कृतभाषया विश्वस्मै प्रदत्तम् । सर्वस्य जगतो ज्ञानज्योतिर्मूलमन्विष्यन्यदि कोऽपि प्रमाणार्हं साफल्यं लिप्सेत स भारतीयानामध्यात्मशास्त्र, धर्मशास्त्र पुराणानि साहित्यञ्च मूलभाषायामेवा ( संस्कृते ) ऽधीत्य तेषा सद्योविचारजान् राद्धान्तान् दृष्ट्वा सत्य परीक्षेत । सर्वमेव स्थूलं सूक्ष्मञ्च जगदुन्नतेः कारणं भारत एवोत्पन्नमिति यद्युच्येत तर्हि नैवैतदत्यनुचितम् । सर्वेषामेव विषयाणां मूलान्वेषण यदि कोऽप्यारभेत तदैव स तदुत्पत्तिस्थानं तन्मूलभाषां, तत्प्रथमव्यवहर्तॄणां विचारान् सम्यक् परीक्षेत । समयनिर्धारणञ्चाऽत्रात्युपयोगि । न च वयमेतदुपेक्षामहे यच्छब्दपठनमात्रमितिहासतथ्यज्ञानाय नाऽलम् । तत्तु विश्वसनीयतापेतमनावश्यकमनर्घञ्च । किन्त्वन्यप्रमाणोपस्थितौ तदेवाऽऽचारव्यवहारेतिहासज्ञानायाऽसाधारणसाधन भवति । यत अध्यात्मधर्माचारवादाभ्या विना शब्दशास्त्रमनुपयोगि ।

कथं भारतीया एव विद्वांसोऽन्यदेशान् गत्वा समस्तजगतो मानवजाती र्ज्ञानाचारान् शिक्षयित्वोन्नता अकुर्वन्निति पाश्चात्यैरेव स्वमतं दर्शितम् । यद्यपि पौकाक् ( Pococke ) महोदयेन दर्शिता युक्तयोऽनेकैतिहासिकविरोधविरोधाऽक्षमास्तथाप्यस्माकमत्र वक्तव्यं पोषयितुं तासा पर्याप्तता स्वपद्धतौ च ता उत्तमाः ।

“ किन्तु सम्भवत ईदृद् न कुत्रापि समजनि यथा गुरुपरिणामभाञ्जि दीर्घकालवर्तीनि विस्तृतदेशव्यापीनि धर्मयुद्धानि भारतवर्षे प्रादुरभवन् । तेषा युद्धाना बहुयोद्धृगणनिर्वासनावधि नाजायत विरतिः । ये च तदा निर्वासितास्तेषा बहवो युद्धजीविनो वीरा अन्ये च भारतीयधर्माऽऽचारप्रचारकुशला उत्तरस्या दिशि हिमालयाद् दक्षिणस्याञ्च सिंहलद्वीपात् ( Ceylon ) पश्चिमायाञ्च दिशि सिन्धुतीरभुवः पार गत्वा यत्रयत्राऽऽनुकूल्यममन्यन्त तत्रतत्राऽवसन् । भारतीयविद्याकलाविज्ञानादीनाञ्च बीजवापं विदधिरे । यतश्च वर्तमानपाश्चात्य (European ) विज्ञानकलाद्यङ्कुरित पल्लवितं पुष्पित फलितञ्च दृश्यते । महानदपूर इव भारतीयजनगणः पञ्चनद ( Punjab ) देशात्पर भारतसीमानमुल्लङ्घ्य कुल्याद्वारेव ‘ एशिया’ ( Asia ) ‘ यूरोप ’ ( Europe ) महाद्वीपयोः स्ववंशबीजमावाप्य सर्वस्यैव जगतो भुव सदाचारोर्वरा कर्तुं स्ववैधेयमादर्शयत् । ततश्च भारते ब्राह्मणानुयायिनो बुद्धाऽनुयायिनश्चास्य दीर्घजीविनो मिथोविरोधस्य वीराः प्रतिद्वन्द्विनोऽभवन् । बौद्धधर्मिणा नेतारश्च तद्विरोधिभिः साधारणस्वत्वलसीम्नो बहिर्निष्क्रामिताः । आर्या हि तान् विजिग्यिरे । आर्यै र्विजिता बहिष्कृताश्च बौद्धाः स्वधर्मविश्वास स्वाचार्यभक्ति ज्यौतिषस्थापत्याभ्या सह युद्धवाणिज्यादिषु च चमत्कारि कौशल बैक्ट्रिया ( Bactria), पर्शिया (Persia,), लघ्वेशिया ( Asia minor ), ग्रीस ( Greece ), फिओनीशिया ( Pheonicia ), आङ्ग्ल ( Great Britain ), देशेषु नीतवन्तः । भारते तु मिथो धर्मद्वेषो दृढतामविन्दत । तदानीन्तनाश्चाऽऽर्याऽऽचार्याः स्वधर्मविरोधिना ( बौद्धाना ) विरोधे निबन्धान् रचयित्वा जगुस्तेषु चाऽप्राकृत वन्यकल्पं व्याख्यान विधाय बौद्धनिष्क्रामणरूपं स्वपौरुषं बहुमन्यन्त । तद्विज-

योऽपि तद्विरोधिनिष्कासनान्नानूनयशाः । अस्यैव मिथोविरोधवत उत्साहस्येयं परिणति र्येदेशिया ( Asia ), महाद्वीपस्योत्तरप्रदेशतः कतिपयवर्षशतकावधि सर्वस्मिञ्जगति( भारत ) भक्तेः प्रसरणम् । एतच्च सिन्धुनदप-श्चिमप्रदेशात् ' हरक्युलीजस्तम्भावधि, ( the Pillars of Hercules ) स्वतेजःप्रसाराय प्राभवत् । एत-त्सिद्धीकरणाय ग्रीसीयभाषायामेव यद्वा ग्रीकनाम्न्या विकृतसस्कृतभाषाया विश्वसनीयतमानि जाग्रत्प्रमाणानि वर्तन्ते । बौद्धधर्मप्रचारक एक एव सिद्धान्त एकस्यामेव भाषायामासीत् । सा च विकृता संस्कृतभाषैवान्यदे-शवासित्वादव्यवहृतेर्ग्रीसीयै विकृताऽऽकारेणेव गृहीता । यज्जातिनामानि नदीना पर्वतानाञ्च नामानि विकृत-यापि माध्यमभाषया समीचीन सस्कृतभाषायामनूदितु शक्यन्ते । तन्ममैतस्मिन् कथने सत्यमतीव प्रमाण-यितुं परं साधनम् । ये तु भाषाया रूपपरिवर्तनकारणानि विकाराश्च सम्यक् जानन्ति ते ममैतन्मतं तत्र सत्यञ्च शब्दविकारान्वेषणशक्तिसारल्याभावाज्जवेन न मंस्यन्ते, इति स मन्यते ।

अयं ग्रन्थकारः कथ भारतीयै ग्रीसदेश उपितमिति प्रमाणयितुं सम्यगयतत । अथ च शतशस्तत्र व्यक्तीना नामानि ग्रीसीयदेवाना, तत्रत्यपर्वतनद्यादीनाञ्च नामानि ग्रीसीयभाषाया न कथमपि व्याकर्तु शक्यन्ते प्रत्युत संस्कृते च सम्यग्व्याकर्तु शक्यन्त इति स आशेते । निरुक्तकारवद् व्यक्तिनामानि कमपि यौगिकार्थांशं नून बिभ्रति यतश्च तेषा प्रसिद्धिरिति तस्यापि मतम् । यदि कस्यापि देशस्य कस्या अपि जातेरितिहासः कथमपि नाऽवगम्यते तर्हि तद्देशभाषाया भूविभागनगरादीना धर्मादिमतानाञ्च वाचकानि पदानि कया व्याकृत-भाषया सह सङ्गच्छन्त कस्याश्च भाषाया विकृतानीव तानि पदानि ज्ञायन्ते इत्यन्वेषितव्यम् । एवं देशजा-त्योरुपर्युक्तनामदातॄणा तदागमेतिहासश्च सम्यक् भोत्स्यते । ग्रीसदेशस्य च स्टीम्फा ( Stympha ) दोनोदा Donoda ) केम्बुनी मूटीस ( Cembunii-Mootes ) हेलोपीस ( Hellopes ) एथीसीस ( Aithices ) बोडन ( Bodon ) फोसीस ( Phoces ) लोएरी ( Loeri ) मैगनीसिया ( Magnesia) थीसप्रोशिया ( Thesprotia) ब्रेटिया ( Bretia) आरकेडिया ( Arcadia ) इत्यादीना भूभागनगरा-दिनाम्ना ग्रीसभाषाया व्याकृतिरनुवादश्च नव भवितु शक्नोति किन्तु गीर्वाणभाषया तद्वयं नातीव दुष्करम् । यद्यपि अनेन ( Pococke ) दर्शिताः सवा एव युक्तयो जवेन केनापि मानयितुं न प्रमाणवत्य' किन्तु वय-मत्र तदुक्तिं सर्वथैव नोपेक्षामहे । पलासीजी ( Palasegi ) इति ग्रीसीयजातिवाचकः शब्दः पलाशशब्द-स्यैवापभ्रंश इति सोऽनुसन्धत्ते । पैलास ( Pelasa ) शब्दो बूटिया ( Butea ) फ्रोदोष ( Frodosa ) शब्दौ च पलाशशब्दादतीव विकृतापभ्रंशाः । पेलासका ( Pelaska ) शब्दस्तु पलाशशब्दस्य न बहुवि-कृतोऽपभ्रंशस्ततश्च ग्रीसीयभाषाया पेलासगो ( Pelasgos) शब्दो विकृतीभूत' । बौद्धसमये हि मगधदेशो ( Modern Bihar ) बौद्धधर्मस्य दुर्गायितं केन्द्रमासीद्ब्राह्मणाश्च तं धर्म जुगुप्साञ्चक्रुः । य प्रदेश बौद्धा विहार इति वव्रुस्तस्य नाम पूर्वं मगध इति बभूव । मगधशब्दादेव मैकडोनिया ( Makedonia ) इत्यपभ्रंश शब्दस्योत्पत्तिः । महाभारतकाल मघनाम्न ऋषे र्गोत्रजा ब्राह्मणा अस्मिन् प्रदेशे स्ववसतिं स्थापयामासुरिति बहूनां पाश्चात्याना विदुषा मतम् । पेलास ( Pelasa ) सिकद ( Sikada ) मगध ( Magadha ) विहार ( Bihar ) इत्येतानि नामान्येकस्यैव प्रदेशस्य पूर्वं व्यवजह्रिरे । बौद्धाना जैना-नाञ्च यतिमठाना विहार इति सज्ञा भवति तद्बाहुल्यादस्य प्रदेशस्यैतदाभिधानम् ।

**पौकक** महोदयस्तु सेण्डिनेव्हियस ( Scandinavius peninsula ) पुथागोरा ( Gr. Puthagorás, Eng. Pythagorus ) शब्दयोरपि स्कन्धनाभबुद्धगुरु ( अत्र बहुव्रीहिसमासः ) शब्दाभ्यामुत्पत्तिं

मन्यते । पाथेगोरसः शाक्यमुने र्लोकान्तरप्रस्थानात्परमचिरादेव स्वमतोपदेशं कर्तुमारभत । अतो न दृश्यते तन्मतेऽसङ्गतिः पौक्कमहोदयस्य मते भारतग्रीसयो र्देशयोः परस्पर सम्बन्ध आसीदिति तस्योद्दिष्टसिद्धान्तं वयमाद्रियामहे। किन्तु बहुत्र युक्तीरुपेक्ष्य केवलमुत्कण्ठयैव तेन स्वग्रन्थे ( India in Greece ) यद्यल्लिखितं तदुपेक्ष्यमाणा अपि वयं तस्योद्देशमत्र दर्शयामः ।

एतेन ग्रीसीयाना मिश्रीयाणाञ्चायुर्वेदोन्नतौ भारतीयाना प्रधानत्वमासीदिति नूनं वक्तुं शक्यते । इतिहासानभिज्ञा अपि भारतीयानामायुर्वेददिनकर उभयोरेवैनयोरुत्थानात्प्रागेवोदितवानित्यत्र नैव सन्देक्ष्यन्ति ।

वेदसंहितातः पुराणाः केऽपि ग्रन्था अद्यावधि केनापि नैव लब्धा । आयुर्वेदविषयश्च वेदेषु सम्यग् लभ्यते अत आर्याणामायुर्वेद सर्वमानवजातिवाङ्मयप्रारम्भादेव सत्ता धत्ते । यद्यदस्माभिरुपरि दर्शितम् तस्य सम्भवत्वे पौकक आदीनामितिहासगवेषकाणा मतानि ग्रीसीयादीनां पुराणकथासु भारतीयानामिव पृथग्देवताविशेषेभ्यो ज्ञानविज्ञानादीनामुद्भवश्च प्रमाणार्हता दृढीकरोति ।

## भारतीया रोमीयाश्च ।

के रोमीया ( Romans ) इति वहोः कालात्कतिपय पाश्चात्यविदुषा मनसि महानय प्रश्न उदैत् । तैश्चैतस्मिन्विषये वहुपर्यालोचितम् । तेषामेकस्य प्रसिद्धस्य सम्मतिं वयमत्र दद्मः । गायाकोमोबोनी ( Giacomo Boni ) नामकस्य प्रसिद्धभारतीयपुरातत्वविदः स्मृत्युत्सवप्रसङ्गे विकहमूस्टीड ( Wickham Steed ) नामक. कश्चित् पाश्चात्य' ( Review of Reviews ) नाम्नि मासिकपत्रेऽत्र स्वमतमदर्शयत्—यच्च रोमे फौरम ( Forum ) विषये सोऽनुसमधात् । कुतो रोमीया जलप्रायामुपत्यका पौरव्यवहारेभ्यः शवनिखननाय चोपयुक्तामन्यन्त, यत्र च टिवर ( Tiber ) नद्याः पूरेण सर्वदा अनिष्टशङ्का जायत इति वहोः कालात् सोऽचिन्तयत् । एकदा सहसैव स निसचिनोत्—प्राचीनलातीन ( Latins ) भाषार्यभाषैवासीदार्याश्च भारतोत्तरप्रदेशात् पर्शिया ( Persia ) लब्वेशिया ( Asia minor ) द्वाराऽत्रागच्छन्निति । अत एव पूर्वे रोमराज्यसस्थापकाश्च सस्कृतग्रन्थेषु विशेषतश्च धर्माचारावविकृत्य वेदेषु श्रद्दधुरिति स ( Giacomo Boni ) निरणयदिति स ( Wickham Steed ) मन्यते । फौरम ( Forum ) प्रहेलिकायाश्चोद्घाटन वेदेष्वेव लभ्यत इति स आशास्ते स्म । ततश्च स वेदाभ्यास एव चिरं न्यमज्जत् । अन्ते च सोत्कण्ठं स्वगवेषणासुफल सर्वेभ्योऽघोषयत् तत्र ( in Forum ) शान्ते नदीजल पूरीभवति स्थले वा शवा निखाता भवेयुरिति तत्रत्यपूर्वपुरोहिताना सम्मतिरासीत् । एतदेव त ( Boni ) स्वगवेषितं निर्णेतु प्राभावयत् । प्रशान्तं जल पूरीभवत्स्थल पवित्रवर्त्म ( Sacred way तेषा कल्पनैषा पुरासीत् ) च कालेन भूगर्भगतान्युपर्युक्तकथनपरिचायकानि तत्रादृश्यन्त । प्राचीनतमलातीनीय ( Latins ) शवनिखननस्थलान्वेषणमेव तस्य विधेयतम तदाऽभवत् । कियद्भ्योऽपि दिनेभ्यः पश्चाद्बोनिः ( Boni ) स्टीड ( Steed ) महाशयं प्रत्यालापयन्त्र-( Telephone ) द्वारा न्यवेदयन्मया स्वलिप्सितमलम्भित्वमपि तद्द्रष्टुमेहीति । स्टीड ( Steed ) महाशयस्तत्र गत्वैक कृष्णमृन्मय चिताभस्माधारं पवित्रमार्गसमीपे षड्हस्तगभीरे दरेऽपश्यत् । अन्यानि च तथाविधान्येव कतिपयानि पुराणमृत्पात्राणि तत्राऽऽसन् । तेषामन्यतमस्मिन् शवभस्माप्यासीत् । निखातशवसूचकानि प्रत्यभिज्ञानानि च तत्रासन् । भारतीयरोमीययोरेकमूलत्वप्रमाणीकरणे नव्यमेवैतत्तेनादर्शि यतो भारतीयानामेवेयं शवदाहपद्धतिः । अनेन भारतेतिहासगवेषकाणा नव्यमेवोपकरणं दर्शितम् ।
( The Indian Daily Mail, Saturday the 5th September 1925 )

पुराणेतिहासाख्यानजनश्रुत्यनुसार ब्रह्माऽऽयुर्वेदशास्त्रस्य प्रथम आचार्यो ग्रन्थकारश्च । सुश्रुतचरक-संहिते अपीत्थमेव मन्येते मिश्रीयाणाञ्चाद्यायुर्वेदाचार्यः थौथः ( Thoth ) आसीत् । स च बहूनां पुराण-मिश्रीयायुर्वेदग्रन्थाना रचयिता समभवत् । मिश्रीयाणा पुराणमते ओसिरिसो राजा ( King Osiris ) तस्य पुत्रो हार्न्सः ( सूर्यदेव इति मतः Horns the Egyptian Sun god ) चायुर्वेदाविष्कारकौ स्तः । यदि भारतमिश्रयोस्तुलना क्रियेत तर्हि यथाऽत्र ब्रह्मदक्षसूर्याः क्रमेणायुर्वेदाचार्यास्तथा तत्रापि थौथौसिरसहार्न्सास्ते । मिश्रीयाणा थौथस्य ग्रीसीया हेर्मीस ( Hermes ) इति नामाहुः । ग्रीसीयाश्चेतिहासगवेषका हेर्मीसस्य भारतीयप्रभवत्व मन्यन्ते तस्यैव च नाम्ना देवद्वयनामान्यभिदधति । भारतीयदेवभारत्या वाल्मीकिवत् ग्रीसीयवाङ्मयस्याद्यो होमरः ( Homer ) कविः । तस्यैव इलियाड ( Iliad ) नामनि ग्रन्थे तस्मिन्देशे सर्वतः पूर्व दृश्यते चिकित्साविषयः । भारते तु ततोऽपि बहुपूर्वभवे महाभारते शल्यतन्त्रस्यान्यस्य च चिकित्साशास्त्रस्य विद्यमानत्व दृश्यते तद्यथा—

> उपातिष्ठन्नथो वैद्याः शल्योद्धरणकोविदाः । सर्वोपकरणै र्युक्ताः कुशलैः साधु शिक्षिताः ।
> तान् दृष्ट्वा जाह्नवीपुत्रः प्रोवाच तनयं तव । धन दत्त्वा विसृज्यन्ता पूजयित्वा चिकित्सकाः ॥
> एव गते मयेदानीं वैद्यैः कार्यमिहास्ति किम् । क्षत्रधर्मे प्रशस्ता हि प्राप्तोऽस्मि परमा गतिम् ॥
> नैष धर्मो महीपालाः शरतल्पगतस्य मे । एभिरेव शरैश्चाह दग्धव्योऽस्मि नराधिपाः ॥
> तच्छ्रुत्वा वचन तस्य पुत्रो दुर्योधनस्तव । वैद्यान् विसर्जयामास पूजयित्वा यथार्हतः ॥

महाभारते भीष्मपर्वणि अ. १२१

इममेव शल्यतन्त्रविषयमविजिगीषुः कचो दैत्यगुरोरन्तेवासी बभूवेति च पौराणिकी कथाऽत्र प्रमाणम् ।

ग्रीसीयाना वृद्धकथाऽनुसारं हीपोक्रीटीसः ( Hyppocrates ) पाश्चात्यायुर्वेदस्य जनकः । तस्योपक्रमे निद्रादेव्या मन्दिरे गत्वा तत्र मनोभावपरिवर्तनेन रोगनाशो जायत इति लभ्यते । आर्याश्चिकित्सका अपि मानसोपक्रममित्थमेवाशेरते । साम्प्रत यो विविर्नव्य इव पाश्चात्यैः Hypnotism इत्युपयुज्यते सोऽस्माकं प्राचीनानामृषीणामेव सिद्धान्तः । भारतमिश्रयोः प्राड् नासीत्तदनभिज्ञता । भगवता धन्वन्तरिणा शल्यतन्त्रप्रधान आयुर्वेदः काश्यामध्यापितः । हीपोक्रीटीसेन (Hyppocrates) तु ग्रीसदेशे कौस-(Cos) नाम्नि मन्दिर आयुर्वेदप्रयोगोऽकारि । अत्र साम्यमिवाऽऽभाति । अत एव हास ( Mr Haas ) महोदयो हीपोक्रीटीसं धन्वन्तरेः कौसस्थानञ्च काश्या अपरनामन्येवेत्याशिष्ये । तस्य मतन्तु स्पष्टमेवाऽमान्यम् । यत एकदेशगत साम्यं न तुलनामर्हति । काशी तु न्यूनतोन्यून चतुःसहस्रवर्षपुराणी नैव कौसस्थानापरनामवती इति सुव्यक्तमेव तस्य काश्या अतीव कनिष्ठत्वात् । शतपथब्राह्मणमहाभारतादिष्वतीव पुराणेषु ग्रन्थेषु काश्या नाम वर्तते । द्वौ ग्रीसीयवैद्यौ टेसियस मेगस्थनीजौ भारतोत्तरदेशान् दृष्टवन्तौ तत्रोषितवन्तौ च । प्रागाचार्याणा कालनिर्णयो बहुल्याशयोऽनिश्चितरूप एव भारतीयपुराणजनश्रुतिषु इति मन्यमानोऽपि हार्नले महोदयो न्यूनतोन्यून खीष्टाब्दारम्भात् षट्शतवर्षपूर्वं सुश्रुत चरकयोः कालं निरधारयत् तन्मतन्तु—“ एव सति हीपोक्रीटीससम्प्रदाये मानवशरीरशल्यक्रियायाः किमपि प्रमाण न वय लभामहे । किन्तु खीष्टाब्दारम्भाच्चतुःशतवर्षपूर्वं टेसियसो ( Ktesias ) भारतमागच्छत् । अतो ग्रीसीयाना शारीरशास्त्रोद्भवो भारत एवेति नैतदुपेक्षितु क्षमामहे ।” इतीह वर्तते ।

एतादृग्भिरनेकै र्वाक्यैर्नूनं ज्ञायते ग्रीसीया एव भारताद्विद्या वित्तञ्च लब्धुमचीकमन्त। भारतीयेतिहास-पुराणादिषु ब्रह्मण आरभ्य सुदीर्घाऽऽयुर्वेदाचार्यपरम्परा वर्तते। तद्यथा—ब्रह्मा दक्ष, स चाऽश्विनौ, ताविन्द्रं स भरद्वाज, स आत्रेय धन्वन्तरिं वा, तौ पृथग्बहूनन्यानाऽऽयुर्वेदमध्यापयामासुः। दक्षः प्रजापतिरदितेः पुत्र इति ऋग्वेदे लभ्यते[1]। आयुर्वेदाऽऽचार्यपरम्परा ब्रह्मदक्षाभ्यामारभ्य नागार्जुनान्ता नापेक्षत एकस्य वाहीकस्य वहु-र्वाचीनस्य स्वत्रुटिपूर्तये प्रवेशम्। हिपोक्रीटीस पष्ट्युत्तरचतुःशततमे खिष्टा पूर्वेऽब्दे जातः। काशी तु ततो वहुपुराणी वर्तते। वुद्ध काश्यामेव प्रथम स्वमतोपदेशमकरोदतो वुद्धसमये काश्या गौरवाऽवस्था सम्यगनु-मीयते। ततोऽपि पुराणेषु पुराणेतिहासेषु हरिश्चन्द्रकथायामपि काश्या वर्णनं वरीवर्ति। अतो **हास** महोदयस्य वचनं नैव मान्यम्।

## भारतीया आरवीयाश्च.

पाश्चात्यविज्ञानसम्पदो मूल ग्रीसरोमयो र्देशयोरङ्कुरितमभवत्। किन्तु वहवो यूरोपिया आरवीयभाषा-लिखितेभ्यो ग्रन्थेभ्योऽप्यस्माभि र्महार्घ विज्ञानमलम्भीति स्वीकुर्वन्ति। एतत्तु स्पष्टमेवारवीया वहवो विद्वासो भारतीयविद्याकेन्द्रेषु स्वदेशे वा भारतीयेभ्यो विद्या लेभिरे भारतेन सह सुदीर्घकालस्थाय्यारवीया राजानो वणिजश्च सन्धान दधुरिति च। वगदादसम्राजो राजससदि भारतीया वहवो विद्वास आमन्त्रिता आसन्। आरवीयैरङ्कवीजगणितशास्त्रे भारतीयेभ्य एवाधात इति तत्रत्य वृद्धदन्तकथा नाऽसत्यमूला.।

रायमहोदयः (Dr. P. C. Ray D Sc) स्वकृतौ (In The History of Indian Chemistry Ch. VI.) मुहम्मदीया आयुर्वेदमविक्रम्य भारतीयानामधमर्णा इति स्वप्रमाण प्रकटयति तद्यथा—किताव—उल्—फिहरिस्त ग्रन्थकारो यः खिष्टीय दशमशताब्द्या मध्येऽभवत्, हाजी खलीफा, इब्न—अवू—उसे वियाहः, यौ च खिष्टीय त्रयोदश शताब्द्यारम्भे अभूताम्, स्पष्टमेवोल्लिखन्ति—**हारुं** (Horun) मन्सूर (Mansur) योरनुज्ञया वहव आयुर्वेदग्रन्था द्रव्यगुणग्रन्थाश्च सस्कृतभाषाया आरवीयभाषायामनूदिताः—इति।

वहुना यत्नेन एनेलेक्टामेडिका (Analecta Medica) ग्रन्थकार डिज (Deitz) गेश्चिचूटे डेर अरव अक्रजटे (Geschichte Der Arab Acrzte) ग्रन्थकारः क्यूरेटन (Cureton) फ्लुजल (Flugel) मूलर (Muller) प्रभृतिभ्य आरवीयेतिहासगवेषकेभ्य इदं सर्वं सूचनमलभ्भि" इति।

**एच. एच. विलसन** (H. H Wilson) नामक. कश्चित्पाश्चात्यपण्डित "वैद्यकशास्त्रे, निदानतन्त्रं विषचिकित्सा स्त्रीरोगचिकित्साऽन्यच्च यद्यदायुर्वेदविज्ञानमारवीयेषु प्रचलितं व्यवह्रियमाणञ्च पूर्वमासी-त्तत्सर्वमेव मूलतोऽनुवादतो वा पार्शीय (Persian) वाङ्मयप्रचारात्पूर्वमेव **हारून्** (Harun) **मन्सूर**-(Mansur) यो राज्यं शासतोरारवीय भाषायामनूदितानीति साक्षाद्बहूनि प्रमाणानि लभ्यन्ते" इत्येकस्मिन् पत्रे स्वाशय प्रकटयति।

" अरवदेशे हारूं उल्-रसीदनामकः सम्राट् यदा केनापि दुश्चिकित्स्येन रोगेणाऽऽक्रान्त आसीत् तदैकेन **मङ्ख** (Mankh) नामकेन भारतीयेन नीरोगः कृतस्ततःप्रभृति स तत्रैव (वगदादराजधान्या) राजकीय-

---

१ भूर्जज्ञ उत्तानपदो भुव आशा अजायन्त। अदिते र्दक्षो अजायत दक्षाद्वदितिः परिः॥ ऋ० वे० १०। ७२।४ भूरुत्तानपदोवृक्षान् जज्ञे तथा भुवः सकाशादाशा अजायन्त तथा अदिते र्दक्षः अजायत उत्पन्नः दक्षाद्ु दक्षादपि अदिति· पर्यजायत। सायण भा०

चिकित्सालयाध्यक्षपदे सम्राजा नियोजितस्तेन च सशरद्ग्रन्थः ( संस्कृतभाषायां सुश्रुतशब्दस्याऽयमपभ्रंशः ) अरबभाषायामनूदितः " इति किताबुल्फ़हरिस्त ( Kitab-al-Fihrist ) ग्रन्थकारः फ्लुगल: ( Flugel ) ब्रूते " इति पी. सी. राय. ( Dr P. C Ray, D. Sc ) महोदयस्य मतम्। वयं चाऽऽरबीयविदुषा विशेषतश्च हाजीखलीफानामकस्य विस्तृतानि प्रमाणभूतानि वाक्यानि दृष्ट्वो वदामः यत्. सेर्ष्यसम्राजससदि तत्रोपितु प्रलोभितेभ्यो भारतीयमृतकाध्यापकेभ्यो ज्यौतिषबीजगणिताऽऽयुर्वेदा अधीता इति। मुहम्मदीया विद्यापिपासोत्कण्ठिता भूत्वा भारतीयविद्याकेन्द्राण्यागत्य ज्ञानसुधां पपुः। येनाविकृतभाषया विद्यां लब्धुं तदा भारतयात्राऽकारि स तेषु बहुमानमलभत। मध्यकाले तु भारताऽरबदेशयोः नौस्थलमार्गाभ्यां मिथो वाणिज्यव्यवहार आसीत्। खिष्टीयाष्टमशताब्द्या आरभ्य प्रायः सहस्रवत्सरावधि मुहम्मदीयाः पुनः पुनः भारतमुपाप्लवन्त। तदारभ्य एव चारबीयवाङ्मयस्योपः कालोऽजनि। तदैव च तद्भाषाया बहवो विज्ञानग्रन्था अलिख्यन्त। अयञ्च नव्यः पूर्वदेशसम्बन्धो अरबीयेभ्यो बहून् विज्ञानविषयान् पर्शियानां भारताच्चानूदितुं साहाय्यमदित। तदा च मुहम्मदीया सिन्धुतीरदेशावधि भारतं प्रविश्यात्रत्यमूलभाषामध्येतुमारभमाणा आसन्। हारू-उल्-रसीदः ( ७८६ खीष्टाब्दात् ८०८ खीष्टाब्दावधि तस्य कालः ) बगदादराजधानीमध्यास्त। यत्र च तत्रोद्भूताना विज्ञानानां केन्द्रमरिष्टशय्या चासीत्। तस्य सम्राजो राजससदि मुहम्मदीया भारतीयाश्च स्वविद्योन्नत्यै साम्येन साहाय्यमलभन्त। कायचिकित्सा शल्यतन्त्राद्यासु सर्वास्वेव विज्ञानशाखासु ये विद्वत्तमास्ते देशजात्योर्विचारमविधाय समं सम्मानिता आसन्। अस्यैव राजससदि कतिपये मुहम्मदीया. विद्येप्सवः तत्रस्थितेभ्यो भारतीयेभ्यो विद्यां लब्ध्वा तत्पूर्णतायै मूलभाषायैवाध्येतुं छात्रा भूत्वा भारतमागच्छन्। अस्यैव शासनकाल एकस्समय आसीत्। यदा भारते विद्यामलब्ध्वा कोऽप्यारबीयः पण्डितः पण्डितो नाऽमन्यत। सर्वैरित्थमनुमीयते आरबीयैः ग्रन्थकारैस्सर्व एव संस्कृतशब्दा स्ववर्णलिप्यो र्व्यवहृत्य बहु विकृतीकृता इति। गच्छति काले विकारपरम्परां भजन्तस्त एव शब्दाः पृथगन्यभाषाया इवाद्याभासन्ते। तदानींच पेल्हवी ( Pelhvi ) इत्याद्याः कत्यपि आरबीयपार्शीयेभ्यः पृथग्भाषा आसन् याः संस्कृताऽपभ्रंशरूपाः भारतपर्शियारबदेशाना माध्यमिकत्वेन व्यवह्रियन्त। यदि ताभिर्भाषाभि र्भारतीयविद्या आरबैरन्यैर्वा अधीता अभवन् तदा भाषाविकारो नाऽसम्भवः। शब्दा एकभाषातोऽन्यभाषामेकलिपितोऽन्यलिपिमेकदेशादन्यदेशं यदा यान्ति तदाऽविचिकीर्षिता अपि स्वभावत एव विकारमापद्यन्ते ततश्चान्यत्वं भजन्ति। एवमनिवार्येषु हेतुषूपस्थितेष्वप्यद्यापि तत्रत्याऽऽयुर्वेदविज्ञानशाखावाच्याः बहवः शब्दाः स्वमूलभूतायाः संस्कृतभाषायाः शब्देभ्यो नाऽसङ्गतिं बहुभजन्ति यथा आरबीयभाषाया 'सरक' शब्दश्चरकशब्दस्य, 'सशरद्' शब्दः सुश्रुतशब्दस्य, 'बदान' शब्दो निदानशब्दस्य 'शङ्कुर' शब्दोऽष्टाङ्गशब्दस्य, प्रतिभाव्य विकृतत्वञ्च सम्यग्दर्शयति। यद्यपि 'राय' महोदयप्रभृतयो निदानबदानशब्दयोरेकमूलत्वमेकार्थत्वञ्च मन्यन्ते तथापि सुश्रुतचरकयोरन्तरेव निदानोपस्थितेरर्थवैषम्याच्च पृथङ्निदानस्य कथं विद्यमानतेति नैतत्सन्देहापेतम्।

पूर्वदर्शितकालात्परमारबीयविद्येप्सूनामन्य एव युगारम्भोऽजनि। खिष्टीयैकादशशताब्द्याः प्रारम्भे गज्नी ( Gazni ) देशजो मुहम्मदनामको मुहम्मदीयसामन्तो बहूनां विदुषां विद्योन्नत्यै साहाय्यमदात्। स स्वयमपि भारत विजिगीषुः स्ततश्च धनलिप्सुः स्त्रत्या विद्या स्वयं स्वपोषितविद्येप्सुद्वारा चाविशन्तु स्वसम्प्रदायविस्तारं चिकीर्षुश्च भारतमुपप्लवमानो कतिपयानि भारतीयविद्याकेन्द्राण्यलुण्ठत्। अस्मिंश्च काले भारतीयमुहम्मदीययो र्मध्ये युद्धानामुपस्थिते र्मुहम्मदीयानाञ्च धनादिलिप्साप्राचुर्यात् सौहृद्यशमविरहाच्च यद्यपि मुहम्मदीया भारतीया विद्यास्तथा न ग्रहीतुमशक्नुवन् यथाऽन्येषु कालेषु, तथापि विद्यापरा एव ये तेषामासन् ते विद्याग्रहणेनैव

स्वगतिमरुन्धन् । ततः परं मुगल ( Moghal ) शासका अपि बहून् संस्कृतज्ञान् विदुषो नियोज्य पार्शीयभाषाया बहूना संस्कृतग्रन्थानां बहूनाञ्च विषयाणामनुवाद कारयित्वा बहु भारतीय पुराण ज्ञाननिधिं स्वोपयोगिनं भावयाम्बभूवु ।

भारतस्य दक्षिणेऽपि प्रदेशे पूर्वमासीद्विस्तृतमार्यक्षत्रियशासितं राज्यम् । तस्य राजधानी विजयनगरपत्तनमभवत् । यदा मुहम्मदीया भारतोत्तरप्रदेशानुपप्लुत्य विजित्य च बह्वी भारतीयपुराणकला विनाश्य प्रायः सर्वेषामेवोत्तरप्रदेशाना यथा तथा शासनं कर्तुमारभन्त तदा दक्षिणदेशे विजयनगरराजधानी धर्मविद्याकलावाणिज्यादिषु परामुन्नतिं भजन्ती स्वकीर्तिवैजयन्तीमुच्चैर्दीपयन्त्यासीत् ।

भारतपश्चिमप्रदेशजा बह्वयो जातयो नाविककर्मणि कुशला आसन् । ता नाविककर्मणि नियोज्य बहवो भारतीया अरबदेशेन सह वाणिज्यसम्बन्धमधुः । यदोत्तरप्रदेशेष्वन्वह भारतीयमुहम्मदीययोः कलहा युद्धानि चाऽजायन्त ततो वाणिज्यमपि विस्तारं नाऽलभत । किन्तु विजयनगरराजधानी तदा परं दुरासदाऽऽसीद्यत्र राजानो विद्वांसो वणिजश्च यथास्वं स्वधर्मविद्याकलाविज्ञानवाणिज्ये यशसः परा सीमानमधिगत्याऽऽरबीयान् स्ववाणिज्यविज्ञानादिविस्ताराय भारताभिमुखमाचक्रुषिरे । भारतमाजिगमिषतामयुयुत्सतामारबीयाणा तु शान्त्या स्वेप्सितलाभाय तदेवस्थान तदोपयुक्तमासीत् । तस्योर्जितस्य राज्यस्य पतनात्पश्चादपीतस्ततो विकीर्णा धनविज्ञानसम्पदो वाञ्छन्त आरबीयास्तत्र बहुवारमयुः । तदापि सर्वं विनाश्य तत्र विज्ञानकलाना नाऽजायत सर्वथाऽदर्शनम् । स्ववैभवकाले तद्देशशासकैरायुर्वेद उपेक्षित इति तु निसर्गविरुद्धमेव । आसन् हि तत्र बहवो राजकीयचिकित्सालया आयुर्वेदविद्यालयाश्च । यदा वाणिज्यायाऽत्रागता आरबीया पार्शीयाश्च तत्रत्य राजव्यवहार दृष्ट्वा तच्छास्त्रमधीत्य स्वदेशगमीयुस्तथैव भारतीयमायुर्वेदमप्यधीत्य स्वदेश गत्वा तत्रैता भारतीयज्ञानसम्पदः प्रचारयामासुः । **सुलेमान**नामको बसरापत्तननिवासी कश्चिन्मुहम्मदीयो नौवणिक् विजयनगरं दृष्ट्वा यदा स्वदेश गतस्तदा आरबीयभाषाया विजयनगरवृत्तान्तमलिखत् । विजयनगरे आयुर्वेदोन्नतिः कथ स्यादित्युपायचिन्तन तदनुष्ठानञ्च राज्ञो व्यसनमिवासीदिति ।

## आयुर्वेदस्य मध्यकालः

आर्याणा सकलविद्यानिधाने वेदे पूर्वतम आयुर्वेदाचार्यो भिषक् च रुद्र आसीदिति "प्रथमो दैव्यो भिषक्, यजु० १६।५" "भिषक्तम त्वा भिषजा शृणोमि, ऋक्० २।७।१६" एताभ्या वाक्याभ्यामवगम्यते । एतदादीनि वाक्यानि पुरातना वैदिकर्षयो भिषजामतीवाऽऽदरं व्यधुरिति दर्शयन्ति । पृथक् चैतच्छास्त्र ( चरणव्यूहानुसारमृग्वेदस्याऽऽयुर्वेद उपवेद. सुश्रुतादिमते त्वथर्ववेदस्य ) मुपवेदत्वाद्वेददेशीयमेव । किन्तु मध्यकाले वेद्यानामुपयोगित्वे सत्यपि नासीद्वेददर्शित इव समादरः ।

बहवश्च तथ्या आयुर्वेदविषया अतीवपुराणे शुद्धवेदयुगे अधीयमाना व्यवह्रियमाणाश्चाऽऽसन् । वेदानामेकदेशिपाण्डित्य भजता हस्तगतत्वादुचितानुचितयज्ञादिकर्मपरैः र्व्याख्यातत्वादितस्ततोविकीर्णा विरूपीकृताश्च ते विषया अद्य श्रमेण वेदेभ्यो लभ्यन्ते । ये ब्राह्मणा यथा कथमपि सदसद्वा यज्ञकर्मैव चरम वेदोद्देशममन्यन्त तैर्महार्घविश्वोपयोगिचिकित्साविषयदर्शकानामपि वेदमन्त्राणा स्वार्थसाधकान्येव व्याख्यानानि कृतानि । अतो वैदिकाऽऽयुर्वेदज्योतिरपि सीमाधिकानेकयज्ञरजआच्छन्नमभवत् । किन्तु दिष्ट्याऽऽयुर्वेदाचार्यास्तमेव वैदिक विषय पृथगुपादिशन् तथापि सूत्रादिग्रन्थनिर्माणसमये चरकसुश्रुतयोः पूर्वं नाऽभवद्यथार्हा आयुर्वेदसम्पदो वृद्धिः । किमत्राऽऽसीत्कारणमिति सोपपत्ति वक्तु न शक्यते । कर्मकाण्डयुगे ( सूत्रग्रन्थनिर्माणयुगे ) वैद्यकवृत्ते नासी-

त्सम्यगादृतता जनैः । देवभिषजावश्विनौ बहूनां वेदसूक्तानां देवत्वं भजमानौ वेदैः स्तूयमानावपि न यज्ञभागमार्हतामिति वैद्यविरोधिभिराख्यायिका प्रकल्पिता । तौ च्यवनमृषिं वृद्धमपि स्वोपक्रमेण युवानं व्यधुस्ततः प्रभृति यज्ञभागमभजतामिति तत्कथाया उपसंहृतिः । ततोऽपि भिषजा सम्यगादरस्य नाऽजायताऽवतारः । सूत्रकालप्रतिसंस्कृतेषु मन्वादिधर्मशास्त्रेषु तु स्वाहास्वधाप्रधानकर्मणो भिषजो निमन्त्रणमपि प्रतिषिद्धं दृश्यते तत्र कारणं त्वन्यदेवाऽनुमीयते । तद्यथा—भिषजो यज्ञकर्मणि वेदेऽदृष्टविधीनि सूत्रकल्पितगोमांसभक्षणसुरापानादिकर्मकाण्डपरकल्पितानि बहून्यन्यान्यप्येतादृंशि कर्माण्यहितानि मत्वा नूनं तन्निषेधं विधास्यन्ति यतो वैद्या हितकराण्येव कर्माणि धर्मं इति मन्यन्ते, हिताहितविवेके च सर्वदा स्वचक्षुर्मनसी सावदधते । तादृशयज्ञकृतश्च स्वकल्पितदेवताः प्रीणयितुं हितमहितञ्चाऽविचार्येन्द्रियविषयतर्पणं नैव हास्यन्ति ततश्च भिषग्यजमानयो र्मतवैषम्यमागङ्क्यैव तत्र वैद्यानामामन्त्रणं कल्पितधर्मशास्त्रविरोधि तै र्मतम् । वयं विश्वस्ततया सूत्रकाले किमासीदायुर्वेदस्य विकासाभावकारणमिति सप्रमाणं वक्तुं न शक्नुमः । बहूनामायुर्वेदग्रन्थानां तदानीन्तनानामन्यानेकविविधविज्ञानग्रन्थानामिव केनापि कारणेन नष्टताऽपि नाऽसम्भवा । यद्वाऽस्मिन्विषये तत्कालोद्भूता ये ग्रन्था आसन् तेभ्योऽर्वाचीनग्रन्थानां सुगमतरतयाऽधिकोपयोगित्वाच्च पुराणग्रन्थानामनावश्यकत्वे जातेऽप्येतत्सम्भवति । यथा पाणिनीयव्याकरणोत्पत्तेर्बहूनां पुराणव्याकरणानां लोप इवाऽजनि ।

## आयुर्वेदस्य प्राक्कालः

आयुर्वेदमन्तर्भाव्य सर्व एव ज्ञानविज्ञानविषया वैदिकर्षिभिः पूर्वं वेदद्वारा मूलरूपेण विकासरूपेण वा दर्शिता इति सर्व एव वयमार्या विश्वसिमः । अर्वाचीनाऽऽयुर्वेदेतिहासश्च बुद्धकालमारभ्य खिष्टीयाऽष्टमशताब्द्यवधि वर्तत इति प्रायः सर्वेषामितिहासविदां मतम् । तस्मिंश्च काले सुप्रसिद्धाः सर्वसम्मताः सुश्रुतचरकादयो बहव आयुर्वेदग्रन्थाः प्रतिसमस्क्रियन्त व्यरच्यन्त च । तदैव चाऽन्यानां प्राचीनाऽऽर्षग्रन्थानां प्रतिसंस्करणं सूत्रग्रन्थानाञ्च प्रचारप्राचुर्यमभवत् । ततः पूर्वः काल आयुर्वेदोन्नत्यकरणेन न परिवादभाजनम् । तदा तु व्याकरणमध्यात्मवादैकदेशविषयञ्चान्तरा प्रायेण न किमपि शास्त्रमुन्नतिं लेभ इतीतिहासविदां निर्णयः । प्रायेण सर्व एव विषया अवसरप्राप्तामेवोन्नतिं लभन्ते । तस्मिन् काले तु सुखेन कालं नयन्त आर्या रोगाऽबाहुल्याद्बाह्याभ्यन्तरोपप्लवादिविरहाच्च धर्मादिविषयस्यैव व्याख्यानं स्वविद्याफलं मेनिरे । अत एव तदोपनिषदामारण्यकानाञ्च प्रचारप्राचुर्यवृद्धयोऽजायन्त । एवञ्च गच्छति साङ्ख्यवैशेषिकादिभौतिकविषयाणां बहूनां ग्रन्थानां जन्मविस्तारवृद्धयो जाताः । ततः परमायुर्वेदविस्तारे चैते विषयाः स्तोकं साहाय्यमकुर्वन् ।

वयमत्र भारतीयान् वेदकालप्रसिद्धान् कतिपयानायुर्वेदविषयान् दर्शयामः । सर्वतः पूर्वं रसरक्तसञ्चारविषये वक्तुमुचितम् । अथर्ववेदद्रष्टार ऋषय इमं सिद्धान्तं सम्यगवागच्छन् । यत उभयविधरक्तवाहिनीनं

---

१ युवं च्यवानं जरसोऽमुमुक्तंनिषेदव ऊहथुराशुमश्वम् । निरहसस्तमसः स्पर्तमत्रिं निजाहुष शिथिरे धातमन्तः ॥ ऋ० वे० ७ । ७१ । ५ इत्यादि

२ स वो मनासि ( अ० वे० ३-८ विनियोग ) इत्यादि ।

"सं वो मनांसि, सज्ञानं न" इति साम्मनस्यान्युदकुलिजं सम्पातवन्तं ग्रामं परिहृत्य मध्ये निवपत्येव सुराकुलिजं त्रिहायण्या वत्सतर्याः शुक्लानि पिशितान्याशयति भक्तं सुरा प्रपां सम्पातवत् करोति इति ( कौ० २-३ )। अत्र सूक्ते विनियोगदर्शितानां विधीनां लेशोऽपि नास्ति ।

३ अहितान्युपदेक्ष्यामः..............गोमांसं मृगमांसानाम्......महिषवसाऽऽनूपमृगवसानाम् । चरक सू० २५ । ३८

नाडीनां ' हिराः ' ' धमन्यः ' इति पृथङ्नामद्वयं तत्र वर्तते । अतस्त ऋपय एतत्सिद्धान्ताभिज्ञत्वेन सम्मानमर्हन्ति । **हिरा**शब्दार्थोऽर्वाचीनसंस्कृतवाङ्मये शिराशब्देन वोच्यते । सुश्रुतचरकाभ्यां तु भूयोऽपि तद्व्याख्यानमकारि । यद्यपि सुश्रुतचरकयोराधुनिकपाश्चात्यविवृतिवत् सोपपत्ति सविस्तरञ्च विवरणं नास्ति किन्तु नासीत्तयोस्तज्ज्ञानाऽभाव. । एतत्सर्व सुश्रुते ( शारीर अ. ७ इत्यादि ) चरके ( सू० स्था० अ० ३० इत्यादौ ) च द्रष्टव्यम् । येन त्वाङ्ग्लदेशे नूतनतयैपराद्धान्त आविरक्रियत स आसीत्कश्चित्पाश्चात्यो **हार्वे** नामकः ( Prophessór Harvey.1628. A. D. ) यद्यपि **हार्वे**महोदयस्यास्मिन्विपये भूरि विज्ञानवन्ति विवरणानि वर्तन्ते किन्त्वार्याणा पुराण एव स राद्धान्तस्तेन व्याख्यातो न नव्यः ।

एप राद्धान्त. कमप्यन्यशास्त्रराद्धान्तमाश्रयते नवेत्यालोचयामस्तावत् । रक्तस्य ( हृदये ) निर्गमप्रवेशावुच्छ्वासनिश्श्वासाभ्या पृथग् भिन्ना विज्ञानज्ञेयक्रियामाश्रित्य वर्तेते । **यद्यपि** भौतिकविज्ञानानुसार निर्गमप्रवेशावुच्छ्वासनिःश्वासौ च भिन्नत्व भजन्ते **तथापि** जगदुत्पत्तिवादे ( In Cosmology ) स्फुरणमभिन्नवदिति मत्वैकरूप्येण प्रकृतिस्फुरणं कारणत्वेन मतम् । हिरण्यगर्भः ( भौतिकेऽर्थे स्फुरत्प्रकृतिगोलः ) प्राचीनतमभारतीयसर्गवादिभि' सर्वजगत्कारणमिति मतः । वेदर्षीणामपि स्फुरणं, सञ्चारः ( रक्तस्यापि शरीरे ), हृदये हृदयाच्च रक्ताऽऽगमनिर्गमौ स्फुरणंकर्म, चैतेपां पृथग्भावः समुदायेनैकभावश्च सुविदितावभूताम् । तैः शरीरे येये भावाः कर्माणि चादृश्यन्त त एव ब्रह्माण्डसर्गेऽपि, शरीरस्य ब्रह्माण्डाऽल्पप्रतिकृतिरूपत्वाद्वर्णिताः । पुरुषोऽयंलोकसम्मितः ... .. ..यावन्तो हि लोके भावविशेपास्तावन्तः पुरुषे यावन्तः पुरुपे तावन्तोलोके च० शा० ५ । ३ एकस्यैव स्फुरणस्याऽऽकर्पणविश्लेपणकर्मद्वयत्वाद्गुणभेदात् ' अग्नीपोममयजगत् ' इति जगदुत्पादनस्थापनविधायिकयोः शक्त्यो निंदर्शनमकारि पूर्वतमै ऋपिभिः ।

**एम्पीडोक्लीसः** ( Empedokles ) यः सर्वपाश्चात्याऽध्यात्मवादजन्मदातु ग्रीसीयाऽध्यात्मवादस्याऽऽचार्य खीष्टात् चतुश्चत्वारिंशदधिकचतुःशततमे वर्षेऽजनि, स्वमतमित्थमेव प्रदर्शयति—आकर्षणशक्तिः ( Love ) विश्लेपणशक्तिश्च ( Strife ) मिलित्वा जगदारम्भकारणमिति । भूयश्चोभे एवैते शक्ती जगत्स्थितिकारणमिति च । **बरनेट** ( Burnet ) महोदयेनाग्लभाषाया तस्य मतमित्थं दर्शितम् तद्यथा—

" **एम्पीडोक्लीस** श्चतुर्भ्य एतेभ्यो भूतेभ्यः ( पृथिव्यप्तेजोवायुभ्यः ) अन्यदपि शक्तिद्वयं ( Filia and neikos ) मन्यते यतश्चोच्छ्वासनिःश्वासाद्यनुमीयते । स चैते शक्ती स्वरूपतः पृथङ्मन्यते । यथा चैतयोः शक्त्योः कर्मोत्पद्यते तत्सर्वमेव तेन क्लैप्सीड्रा ( Klepsydra ) परीक्षणे दर्शितम् । अस्माकमारम्भः परमाणुसहतिरूपगोलकवत् ( Like the sphere of parmadides ) भवति, यत्र च चत्वार्येवभूतानि नीरक्षीर इव समवेतानि । प्रथमशक्त्या द्वितीया शक्तिश्च बहिरावृणोति । यदा द्वितीया शक्तिः शनैः शनैः तद्गोलकं प्रविशति तदा प्रथमा शक्तिश्चतुर्णा भूताना मध्यतम केन्द्र प्रति वलाद्गच्छति येन च चतुर्ष्वेव भूतेषु ते शक्ती युगपत्प्रविश्य तत्तद्भूताऽनुकूल कर्म तैः कारयतः । भूतानाञ्च पृथक् प्रत्यक्ष भवति । एकशरीरप्रादुर्भावस्य पुराणोऽय राद्धान्तो ब्रह्माण्डनिर्माणराद्धान्तेन सङ्गच्छते । "

" सः ( Empedokles ) भूयोऽप्युभयजातीय श्वसनं हृदयस्य ( Systole and diastole ) नामिकयोः शक्त्योरधीनामिति ब्रूते अतो ज्ञायते भूतसहतेरुपमध्य यदा विश्लेषणशक्ति र्याति तदाऽऽकर्पणशक्तिस्तस्या मध्यतमे भागे रुद्धा भवति तदा मिथो विरुद्धाना कर्मणामारम्भो जायते । परस्परविरुद्धयोः शक्त्योः कर्मणोर्जायमानयोर्विश्लेपणशक्तिराकर्पणशक्त्या जीयते बहिष्क्रियते च । तदा भूतसहतिं प्रथमैव शक्ति

व्याप्नोति यथा कस्मिन्नपि पात्राद्यवकाशे प्रवेश्यमाने जले वायुर्भूतं वहिर्निष्क्रामति तथैवाऽत्रापिज्ञेयम्। वस्तुत आकर्षणशक्ति ( Love ) र्विश्लेषणशक्तिश्च ( Strife ) ब्रह्माण्डेन सह तादृशैव कर्मणा सम्बद्धे स्तो यादृशेन शरीरेण सह रक्त वायुश्च। सृष्ट्युत्पत्तिशास्त्रेण सह शारीरशास्त्रस्य स्वभावसिद्ध यत्साम्यं तेनैवाऽऽयुर्वेदशास्त्रस्य मूलोत्पत्तिरायुर्वेदाचार्याणा मनस्यजायतेति नैवाऽसङ्गत भविष्यति। यतो वैद्यकशास्त्राऽऽचार्याणा स्वशास्त्रनिर्माणकाले हृदये हृदयाच्च रक्ताऽऽगमनिर्गमौ समग्राऽऽयुर्वेदविस्तरायोपयोगिनौ नूनं साधनभूतत्वाज्ज्ञेयावभवताम्। आकर्षणशक्त्याः (Love) इति नाम च शारीरशास्त्रादेवोत्पन्नमिति स ब्रूते। या या' शक्तयः कर्मणि लग्नाः स्वशरीरे मनुष्या' अनुभवन्ति ता एव महति ब्रह्माण्डे तथैव कर्मलग्नाः, मनुष्यादिशरीरजीवनाऽऽधारभूता या शक्ति' सैव ब्रह्माण्डस्थितिकारणमिति न केनाप्यद्यावधि दृष्टमिति स भूयो ब्रूते ( Fr 17-2-26 ) [1]। भिषज' सृष्ट्युत्पत्तिप्रधानैककारणभूते इमे द्वे शक्ती ( Systole and Dastole ) शरीरान्तर्यन्त्रसञ्चालनकार्यावपि स्त इति न जानन्ति। यत एकशरीरस्थिति र्ब्रह्माण्डस्थितिरिव वर्तते।

नश्वर जगद्यावदस्माभि र्ज्ञायत आकर्षणविकर्षणशक्त्युपस्थित्यवधि स्थातुं शक्नोति नाऽत. परम्। अतश्च जन्मद्वयं विरतिद्वयञ्च नश्वराणा भावाना भविष्यतः। प्रथमाया तत्र शक्तौ वर्धमानायां यदा सर्व एव भावा एकरूपा भवन्ति, तदैकम्। यदा च द्वितीया शक्ति र्भूयो भूतगोलक प्रविश्य सर्वान् भूतान् पृथक् पृथक् करोति तदा द्वितीय। सूक्ष्मा एव मूलभावा अनादयोऽनन्ताश्च। विशेषाणि वस्तूनि यानि वय प्रत्यक्षाणि कुर्म स्तान्यनित्यानि केवलमनेकेषा सूक्ष्मभावाना समवायः। स च समवाय एकस्माद्रूपादन्यद्रूप लभमान एकस्मात्स्थानादन्यत्र तिष्ठतीत्येषा तेषा परिवर्तनपरम्परा। ते चाऽनित्या भावा मरणधर्माणो नश्वराश्च। तेषा जन्म, उत्पत्तिर्वा केवल सूक्ष्मभावाना समवायोऽस्ति। मृत्यु र्नाशो वा समवेतानामेव विप्रकृष्टता नाऽन्यत्। नाऽनश्वर किमपि तेजसो, वायोः, क्षिते, र्जलाच्चाऽन्यत् तानि च भूतान्याकर्षणशक्तिभ्या सह जगत्कारणानि भवन्ति।" इति

वेदानामतीव पुराणत्वमद्यापि सर्वेषा पुरातत्वविदा समाज र्न प्रत्याख्यातम्। धार्मिका आर्यास्तु सकलविद्यानिधान यज्ज्ञानज्योतिः सर्गादौ परमेश्वरेण मनुष्यहितायार्षिद्वारा प्रकाशितमासीत्तदेव वेद इति मन्यन्ते। एप आर्याणा विश्वासः प्रकृतादन्यतोऽपि यदि निर्धीयेत ततोऽपि वेदाना माहात्म्यं सकलमानवजातिहिताय द्विगुणं द्विविधश्चाऽस्ति॥ ( १ ) प्रथमन्तु वेदाः पुराणतमाया मनुष्यजातेराचारान् व्यवहारांश्चाऽऽदर्शवत् दर्शयित्वेतिहासज्ञानेन निगूढ विषय स्वज्योतिषा प्रकटयति। ( २ ) द्वितीयतस्तु भाषाणा मूलज्ञानाय वेदानामतीवाऽऽवश्यकत्वमस्ति। यतश्च शब्दशास्त्रस्या ( Philology ) ऽपूर्णता नश्यति। सर्वेषु समाजेषु सर्वासु च पृथग्ज्ञानवजातिषु ये ये शब्दा व्यवह्रियन्ते ते सर्व एव जनताया आचारव्यवहाराणा निखाताऽवशिष्टानि रूपदर्शकचिह्नानीव बहुत्रशब्दा एवेतिहासेऽज्ञातविषयज्ञानाय प्रामाण्यमर्हन्ति ज्ञाताऽज्ञातेतिहासविषययोर्दूरङ्गतयोरेकत्व विधाय जनानुपकुर्वन्ति। शब्दशास्त्रेणैव जगति विस्तृताना भारतीययुरोपियाणा मेकमूलत्व प्रमाणीकृत्येतिहासगवेषकै गूढोऽय विषय' सरलीकृतः। सर्वमानवजातिमूलपुरुषाणा ( आर्याणा ) मेकैव भाषा पूर्वमा [illegible]त्। यदा च ते भिन्नासु दिक्षु विकीर्णा स्तत्तद्देशवायुजलजनितस्तेषाभाषाया उच्चारणभेदोऽजायत। भूयश्च [illegible] नामनेका व्यवहारा अपि देशप्रकृत्यनुकूला आवश्यका'। अवश्यताया भिन्नत्वेन कालेन बहूना

---

१ आर्याऽऽचार्यास्तु वेदकालादपीम सिद्धान्त जानन्ति, ग्रीसीयानन्यान्वा स्वशातिवेश्यान् दृष्ट्वैतत्प्रकटीकृतमनेनेति ज्ञायते।

नूतनाऽऽविष्कृतवस्तूना बहूनाञ्च तत्तद्देशोपयोगितत्रत्यवस्तूना भिन्नासु पृथग्भूतासु जनतासु व्यवहाराभ्या गच्छति सुदीर्घकाल एकस्या एव भाषाया· शाखाभूता अनेका भाषा भिन्ना इवाद्याऽऽभासन्ते । शब्दशास्त्रनियमै. प्रमाणीकृतै राद्धान्तै. सर्वेषामेकभाषा भाषित्वात्सर्वेषा मूलपुरुषाणा मूलधर्माऽऽचारव्यवहारज्ञानविज्ञानादीनामेकत्र निश्चितमेव । अतो वेदा एव सर्वजगद्वयाप्तविज्ञानानां निधिभूता मूलभूताश्च तेभ्य एव न केवलमस्माक किन्तु सर्वस्य जगतो वैद्यकशास्त्रेतिहास आरभ्यते, परम्परया साक्षाद्वा ॥

आयुर्वेदस्याऽर्वाचीनेतिहासकालो बुद्धकालात् खिष्टीयाऽष्टमशताव्यवधि वर्तत इति पूर्वमुक्तमेवाऽस्माभि· । पुराणस्तु कालो वेदकाल एव । धार्मिका आर्या वेदानामनादित्व मन्यन्ते । आयुर्वेदस्यै ऋग्वेदोपाङ्गत्वा त्सर्वासा विद्याना वेदे केनापि रूपेण विद्यमानत्वादायुर्वेदोऽपि वेदवदनादिरेव किन्त्वाऽऽयुर्वेदस्य विकासमविकृत्य वेदानाञ्च काल यावद्गति निर्णेतु यतामहे । पुराणप्रमाणानि विहाय न वेदाना वास्तविक काल केनाऽपि निर्णेतुं शक्यते । यद्यपि ब्राह्मणाऽऽरण्यकादयो वेदेभ्योऽर्वाचीना एव ग्रन्थास्तेषामपि काल कोऽपि निर्णेतुमक्षमः । बहवः पाश्चात्या विद्वासः वैदिककालनिर्णयचिकीर्षया बहुविकल्पान्विधायाऽर्वाचीनत्वसीमानं प्राचीनत्वसीमानञ्च दर्शयितुमायतन्त । खीष्टकालञ्च सर्वेषामेवाऽद्यतनपाश्चात्यविदुषा केन्द्रभूतमिष्टमिव । तेषा निर्णये सहस्राणा वर्षाणामान्तरत्वद्दृश्यते । एकस्य च मतमन्यमताद्भेद वहति । आर्यास्तु वेदान् सनातनान्मन्यमाना: केवलं प्रतिसर्गं प्रतियुग वर्षिभिस्तेषा दर्शनमेव मन्यन्ते नोत्पत्तिम् । अस्तु तावदासा पुराणतमसहिताना दर्शनकाल एव निर्णयपन्नं भजेत । **वेबराख्यः** ( Weber ) कश्चित्पाश्चात्यपण्डितो जटिलतममिम विषयं निर्णेतु बहु यतित्वाऽन्ते निर्णयनैराश्यं दुष्करत्वञ्चाऽत्राऽपश्यत् । अन्येऽपि बहव इममेव विषयमविकृत्य यत्किमपि प्रालपन् तन्समासतो दर्श्यते । यथा—( १ ) मोक्षमूलर–( Max Muller ) सिद्धान्ताऽनुसारं खिष्टात्पूर्वं दशमी द्वादशी वा शताब्दी वेददर्शनकालस्याऽर्वाचीनतमसीमा । किन्तु प्राचीनताया वेदकालस्य कोऽवधिरिति किमपि मत तेन न दर्शितम् । तन्मते सहिताब्राह्मणग्रन्था आरण्यकग्रन्थाश्चेति यथाक्रममनुमित्या प्रत्येकं वर्षशतद्वयमितं कालं निर्माणायाऽपेक्षते ( वेदनिर्माणाद्वर्षशतद्वयपश्चाद् ब्राह्मणग्रन्थनिर्माणं, ततश्च तावदेवकाल पश्चादारण्यकग्रन्थनिर्माणं, तेषा त्रयाणामेव प्रचार· ततश्च तत्सिद्धान्तविरोधोत्पत्तिर्बौद्धधर्माऽपदेशेनाऽजनि ) ततश्च तद्विरोधी बौद्धधर्म उत्पन्न. । एतत्सर्व न्यूनतोन्यून प्रत्येक शतद्वय वर्षाणामपेक्षते । बौद्धधर्मोत्पत्तिश्च खीष्टात्पूर्व प्राय. षट्शतवर्षमिते काले जाता । एतेन **मोक्षमूलर**मताऽनुसार वेदसहिताकालः प्रायेण खीष्टात्पूर्वं त्रयोदशी शताब्दी एतच्च तस्यानुमान वेदसहिताना कालस्याऽर्वाचीनतमा सीमा । एतन्मतं यद्यपीतिहासगवेषणापद्धत्या नैवाऽतिगर्हित तथाऽप्यन्येऽस्मिन्विषये या उपपत्तीर्दर्शितवन्तस्तदपेक्षया **मोक्षमूलर**स्योक्तयोऽतीव दुर्बला. । एतादृशि गभीरे विषये नैव बह्वर्थाः । अन्ते **मोक्षमूलरेण**—पृथिव्या वर्तमाना न काऽपि शक्ति र्या निश्चित वेदकालं निर्णेतु शक्नोतीत्यपि प्रकटितम् ।

( २ ) **ल्यूडविग** ( Ludwig ), **जैकोबी** ( Jacobi ), **तिलकश्च** ( Tilak ) इमं विषय निर्धारयितु यतितवन्त. किन्तु तत्राऽपि सर्वेषा नैकमत्यम् । **जैकोबी** महोदयस्तिलकमहोदयश्च स्वमतमित्यमदर्शयताम्—विस्तृतज्यौतिषशास्त्रस्याऽऽरम्भात्पूर्वमेव वेदर्षिभि सौरचान्द्रमासाना नियतीकरणमत्याऽऽवश्यक मतमासीत् । पूर्णोदिताना नक्षत्रविशेषाणा वर्षस्य प्रथमर्तुसम्बन्धो नियतीकृत. । यदि ऋग्वेददर्शितो नक्षत्रसम्बन्धस्तथ्यो भवेत्तर्हि गणनया वेदकालनिर्णयो नाऽतिदुष्कर. । बहुभि ऋग्वेदवाक्यै मृगशिरोनक्षत्रे सूर्यस्य साम्येनाऽहोरात्रमध्ये स्थितो वसन्तप्रारम्भ इति ज्ञायते । एवंविधश्च कालोऽतीवपर. । ब्राह्मणादिग्रन्थेषु वसन्तप्रारम्भो मृगशिरःस्थाने कृत्तिकासु दृश्यते । एव सौरनक्षत्रकालपरिवर्तने वर्षसहस्रद्वयमपेक्षते यदा मृगशिर·सु

सूर्यस्य वसन्ते गतिरासीत्तदा पञ्चचत्वारिंशच्छत खीष्टात्पूर्ववर्षाणामभवत् । कृत्तिकाकालश्च खीष्टात्पूर्वं पञ्चविंशतिशतमितेषु वर्षेष्वनुमीयते । एवञ्च प्रायः खीष्टात्पूर्वं षट्सहस्रवर्षमितः कालो वेदसंहितानिर्माणकालोऽनुमीयत इति ॥ ( ३ ) **जैकोबी**महोदयस्त्वन्यमेव ज्यौतिषाऽनुसार वेदकालमनुमिमीते **तद्यथा**—आर्याणा विवाहविधौ स्ववर्मेऽविचलितरूपेण स्थातुं ध्रुवनक्षत्र वध्वै दर्श्यते । एष च विधिः कतिपयेभ्यो गृह्यसूत्रेभ्यो लभ्यते । अद्याऽपि उत्तरदिक्स्थध्रुवनक्षत्रदर्शनमार्यविवाहेषु विद्यत एव। साम्प्रतमृक्षर्क्षी ध्रुवनक्षत्ररूपेण दीप्यते । किन्तु, इतो द्विसहस्रवर्षपूर्वमेतदेव नक्षत्र पृथिवीतो बहुदूरस्थितत्वाददृश्यमासीत्। तत्स्थाने चान्यत्किमपि........ नक्षत्रमासीत् । तच्च नक्षत्र खीष्टात्पूर्वं ख-गिरि-दृग्-वसु-कर-२८२७० मितवर्षपूर्वमेव भूमरदृश्यत तदा च न ततोऽन्यत्किमपि नक्षत्र गृह्योक्ताऽऽर्यविवाहविधिपूर्तये उपयोगार्हमासीत् । यद्यपि ऋग्वेदे नैष विधि र्लभ्यते तथापि वेदेभ्योऽल्यर्वाचीनकल्पग्रन्थानामपीत्थ पुराणत्वाद्वेदाना ततोऽपि पुराणत्व मान्यमेव । एवञ्च वैदिकाऽऽचाराः खीष्टादयुतत्रयवर्षप्राचीना इति ।

अस्य युक्तयो ज्यौतिषाऽनुसार वर्तन्तेऽतो मान्यतराः । एष च कालो वेदानामितिहासज्यौतिषाभ्यामर्वाचीनतमत्वेन दर्शितः । प्राचीनस्तु सर्गादिरेव ।

वेदर्षीणामन्येषाञ्च पूर्वाचार्याणामौषधादिप्रयोगैः सह मन्त्रादिप्रयोगोऽप्युपक्रमेऽवर्तत । क्वचिदौषधोपक्रमं क्वचिन्मन्त्रोपक्रम ते व्यधुः । भारतेऽद्यावधि चिकित्सकेषु त्रयाणामेवैतेषामुपक्रमाणा नाऽस्त्यभावः । मन्त्रप्रयोगा औषधप्रयोगैः सह विना वा कमपि प्रभावमुत्पादयन्ति न वेतिव्याख्यानं नाऽस्माकमत्र वक्तव्यो विषयः । किन्तु रसशास्त्रं ( Medical Chemistry ) शल्यतन्त्र ( Surgery ) मन्ये चाऽऽयुर्वेदविषया वेदे वरीवृत्यन्त इत्यस्माकं प्रतिज्ञा न केवलमेते विषया वेदेषु सत्तामात्रभाजः किन्तु तत्र स्वसत्ताया श्चरमां सीमानमेपि नोज्झन्ति । यद्यपि तत्र तेषा विषयाणामल्पैरेव पदै र्निर्देश. कृतोऽस्ति तथापि तत्कारण न ज्ञानविस्ताराऽभावः किन्तु तद् द्रष्टॄणामृषीणा यावत्सम्भवमल्पशब्दप्रयोगपद्धत्युपस्थितेः । यद्यपि मन्त्रादिभिः महौषधि--रस--शस्त्र-चिकित्सा या या वेदेषु दर्शितास्ता आधुनिकपाश्चात्यसरण्यनुसर्तॄणा सर्वा एव सम्मता न भविष्यन्ति किन्तु ता गभीरविचाराऽपेक्षिण्यो न च सुकराः । रसशास्त्रविस्तरन्तु वेदादारभ्याऽर्वाचीनाऽऽयुर्वेदावधि पृथक् प्रकरणे दर्शयिष्यामः । ये ये प्रकृता विषया वेदेभ्यो निर्देक्ष्यन्ते तत्सत्ताप्रमाणभूताः कतिपये वेदमन्त्रा अस्माभिराङ्गलभाषोपोद्घाते विहिता स्सन्ति ते तत्रैव द्रष्टव्याः ।

उपरिदर्शितै र्वेदमन्त्रै र्वेदकाल आयुर्वेदस्य न केवल विद्यमानता किन्तु महत्युन्नतिरासीत् । डा. जी. एन. मुख्योपाध्यायमहोदयः स्वकृतौ ( Surgical Instruments of the Hindus ) उद्धरति—"नैतदविदितं संस्कृतग्रन्थकाराणा शैली सङ्क्षिप्ततमैः शब्दैरेव स्वाऽभिप्रेतनिदर्शने प्रसिद्धेति । पुराणतमग्रन्थकारविषये त्वतीवसत्यमेतत्। यथा प्रसिद्धपाश्चात्येतिहासपण्डितथ्यूसीडीडीसस्य ( Thucydides ) विषयेऽपि जनश्रुतिः प्रसिद्धैव **तद्यथा**—'तस्य विशेषविषयप्रतिपादने यावच्छक्यमधिकाना भावाना यावच्छक्यमल्पैः शब्दै र्बहूना भावानामेकस्मिन्भावे च स्वकृतिषु निदर्शने प्रयतनं स्फुटमेव । यतोऽध्येतारः स्वमतिमपि व्ययीकृत्य भावस्फुटीकरणपूर्तिं विदधीरन् । ततश्च कतिपयेष्ववसरेषु तस्यैव शब्दसङ्क्षेपोऽन्यथाऽप्यर्थं गमयति" ॥ ईदृशी येषा ग्रन्थपद्धतिस्तेषा शब्दसङ्ख्ययैव भावपरिमापणमनुचितमेव । एषा सरणिर्न केवलं वेदर्षीणामेव किन्तु सर्वेषामेव पुराणग्रन्थरचयितॄणामार्याऽऽचार्याणामासीत् । पाश्चात्यौ तत्र प्रसिद्धौ वैदिकपुरातत्वविदौ **मैकडानलकीथौ** ( Dr. Macdonell and Dr. Keith ) स्वकृतावभिप्रेतः । **तद्यथा**—

"वेदकालवर्तिन आर्याः शल्यक्रियाया पाटवं दधुरितिस्वीकृतिस्तु भ्रान्तिरेवाऽस्ति। नूनं ते क्षतव्रणादिष्वौ-पधालेपबन्धनादीनि विधाय चिकित्सा व्यधु'। किन्तु तेषामुपक्रम. शल्यक्रिया च शैशवदशायामेवाऽसीत्। यावदथर्ववेदे चिकित्साशास्त्र दर्शितं तत्सर्वमेव समन्त्राणा वनस्पतीना जलाशादीना पुराणतम उपयोगो न विज्ञानदृष्ट्या महार्घः" (वैदिक इण्डैक्स पृ. १०५)। यदा वय तयोरेव वैदिकाऽऽयुर्वेदविषये स्वविरोधिन एव शब्दान् पश्यामस्तदाऽऽश्चर्यो जायते। यथा—"अथ चाऽश्विभ्यामाश्चर्यजनिताश्चिकित्सा व्यधायिषन्त। खञ्जाऽन्धाभ्या स्वोपक्रमेण गतिदृष्टिप्रदान, च्यवनर्षये पुरन्ध्याः पत्ये च तथैव पुनर्युवत्वप्रदानं, विष्पलाया नष्टचरणस्थान आयस्या जङ्घाया योजन तस्याश्चाङ्गवद्गतिरित्यादीनि वैदिकाना भिषजा (अश्विनोः) कर्माणि दृश्यन्ते"॥ अतो वयमश्विनौ शल्यतन्त्रे चिकित्सायाञ्च पटुतमावास्तामिति न वक्तुमर्हाम' कञ्चित्।

उपनिषत्स्वपि यज्ञमुख्याङ्गतया भैषज्यकर्म दृश्यते किन्तु तासामध्यात्मविषयत्वान्नाऽऽयुर्वेदविस्तरः। रामायणेऽपि कुशलाना वैद्याना परितुष्टानाञ्चोल्लेखो दृश्यते। महाभारते (महाभारतकाले) शल्यक्रियाया अन्यासाञ्च चिकित्सानामतीव पाण्डित्यमासीद्भारतीयभिषक्ष्विति दर्शितमेवाऽस्माभिः। (पृष्ठे १४ द्रष्टव्यम्)।

दर्शयामस्तावद्वेदेष्वन्येषु च पुराणाऽऽर्षग्रन्थेष्वायुर्वेदग्रन्थेषु च कीदृक् सर्वाङ्गपूर्ण चिकित्साज्ञान निहि-तमस्ति। वेदास्त्वायुर्वेदवत् सर्वज्ञानविज्ञाननिधानीभूता मूलभूताश्च। अतस्तत्र यथाऽन्यानि ज्ञानविज्ञानानि वर्तन्ते तथैवाऽऽयुर्वेदोऽपि। किन्तु ब्राह्मणाऽऽरण्यकोपनिषत्पुराणेतिहासधर्मशास्त्रादीना मुख्यो व्याख्यातव्य-विषय आयुर्वेदो न तथाप्यानुषङ्गिकरूपेण तत्र बहूनामायुर्वेदविज्ञानविषयाणामस्त्यन्तर्भाव। अतस्तेषामायुर्वेदे-तरशास्त्रसंज्ञा वयं व्यवहरिष्याम। इतस्ततोविकीर्णमप्यायुर्वेदविज्ञानमेषु ग्रन्थेषु बहु वर्तते। येन विनाऽऽयुर्वे-दशास्त्रं न पूर्णता भजति यच्चाऽऽयुर्वेदस्य द्वारभूतं तच्छारीरशास्त्र वेदेषु, आयुर्वेदेतरशास्त्रेष्वायुर्वेदे च कियत्की-दृक् चाऽस्ति, कियच्च पाश्चात्यविज्ञानविस्तारभाश्च तत्तेन सङ्गच्छत इत्युपोद्घाताऽन्तेऽस्माभि र्दर्श्यते तत्तत्रैव द्रष्टव्यम्।

## आयुर्वेदपरम्परा।

सुश्रुतमते "ब्रह्मा प्रोवाच ततः प्रजापतिरधिजगे, तस्मादश्विनौ, अश्विभ्यामिन्द्रः, इन्द्रादहं, मया त्विह प्रदेयमर्थिभ्य' प्रजाहितहेतो. सु. सू. १।१८" इत्यायुर्वेदपरम्परा॥ सा चेत्थम्—

ब्रह्मा
|
प्रजापतिः (दक्षः)
|
अश्विनौ
|
इन्द्रः
|
धन्वन्तरिः (काशिराजो दिवोदासो वा)
|

| सुश्रुतः | औपधेनवः | औरभ्रः | पौष्कलावतः | वैतरणः | करवीर्यः |
|---|---|---|---|---|---|
| | | | गोपुररक्षितः | | |

चरकमते च " ब्रह्मणा हि यथाप्रोक्तमायुर्वेदं प्रजापतिः । जग्राह निखिलेनादावश्विनौ तु पुनस्ततः ॥ अश्विभ्यां भगवान् शक्रः प्रतिपेदे ह केवलम् । ऋषिप्रोक्तो भरद्वाजस्तस्माच्छक्रमुपागमत् ॥.. ...... ऋषयश्च भरद्वाजाज्जगृहुस्तं प्रजाहितम् । . . अथ मैत्रीपरः पुण्यमायुर्वेदं पुनर्वसुः । शिष्येभ्यो दत्तवान् षड्भ्यः सर्वभूतानुकम्पया ॥ अग्निवेशश्च भेलश्च जतूकर्णः पराशरः । हारीतः क्षारपाणिश्च जगृहुस्तन्मुनेर्वचः ॥ अ. १ " इत्यायुऽऽर्वेदपरम्परा ॥ सा चेत्थम्—




चरकदृढबलाद्या अन्ये तत्तन्त्रप्रतिसंस्कर्तारः ।

ब्रह्मपुराणे आयुर्वेदाऽवतारपरम्परैका वर्तते ॥ वेदेषु रुद्राऽश्विवरुणेन्द्रसूर्या दिव्यभिषजो मताः । तत्र—

१ **रुद्रः**—साम्प्रतं यद्यपि न कोऽप्यायुर्वेदग्रन्थो रुद्ररचितः प्रसिद्धः । तान्त्रिकाः प्रायेण सर्वेऽपि रुद्रमताऽनुयायिनः । ते च रसशास्त्रधातुवादयोः कुशला इति सत्यदेश्येव जनश्रुतिः । रसशास्त्रं हि चिकित्साविषयेऽतीव समाद्रियते । किन्तु तद्ग्रन्थाः साम्प्रतं विचेया दुर्लभाश्च । वेदेषु " प्रथमो दैव्यो भिषक् " इति रुद्रो वर्णितः । अर्वाचीनाऽऽयुर्वेदग्रन्थेषु पञ्चसप्ततिरौषधानि रुद्रनाम्ना शिवनाम्ना वा प्रसिद्धानि ।

२ **सूर्यः**—अयमपि वेदे भिषक्त्वेन मतः । कतिपय औषधप्रयोगा अप्यस्य नाम्नाऽद्यतनाऽऽयुर्वेदग्रन्थेषूक्ताः । साम्प्रतं सूर्यनाम्ना प्रसिद्धः कोऽपि ग्रन्थो नैव प्रचलितो लभ्यते । मुखोपाध्यायकथानुसारं, आङ्ग्लदेशस्य विचित्रवस्त्वागारे ( British Museum) स्थिते भारतकार्यालयसम्पद्भूते शर्मदेशराजधान्याः पुस्तकालयस्थपुस्तकनामाङ्कनपत्रे भास्करसंहिताया वैद्यकविषये नाम वर्तते । ततश्च ' आरोग्यं भास्करादिच्छेत् ' इति सङ्गच्छते ।

३ **इन्द्रः**—पूर्वं दर्शितमेव भगवान् धन्वन्तरिरिन्द्रेणाऽध्यापित आसीदिति । सुश्रुतचरकयोरुभयोरपीन्द्र आयुर्वेदाऽऽचार्यत्वेन मतः । इन्द्ररचितायां बलभित्संहिताया नाम **गणनाथसेन**महोदयकृत**प्रत्यक्षशारीर**ग्रन्थे दृश्यते नाऽन्यत्राऽन्यत्र । चरकसंहितायामिंद्रोक्तरसायनमितीन्द्रप्रोक्तस्यौषधप्रयोगस्य साक्षादेव नामाऽस्ति । कतिपयाऽन्यान्यप्यौषधानीन्द्रनाम्नाऽऽयुर्वेदग्रन्थेषु सुप्रसिद्धानि । ऋग्वेदे सूक्तं पूर्णमेकं राजयक्ष्मचिकित्सकंभिषगितीन्द्रं स्तुवद् दृश्यते ।

**४ अश्विनौ**—वेदब्राह्मणपुराणाऽऽयुर्वेदग्रन्थेषु सर्वत्रैव भैषज्यप्रकरणेऽश्विनो महानादरो वरीवर्ति। प्रसिद्धिश्च महती तयोः। वेदे तु प्रायोऽर्द्धशतं सूक्तानामश्विनोः स्तव एव प्रयुक्तम्। अन्येषु च बहुषु स्थानेषु तयोश्चरित्रं, चिकित्सोत्कर्षो देवतात्वेन स्तुतिश्च दृश्यते। अद्यप्रचलिताऽऽयुर्वेदग्रन्थेषु बहुत्र बहून्यौषधानि तयोर्नाम्ना सह लभ्यन्ते मुखोपाध्यायमहोदयो मद्र (Madras) पत्तनराजकीयपुस्तकालयेऽश्विसंहितानामकस्यैकस्याऽमुद्रितपुस्तकस्य सत्तामपि ज्ञापयति।

**५ वरुणः**—वेदेषु वरुणस्य भिषक्तमत्वं भिषगधिष्ठातृत्वं, चिकित्सालयाऽध्यक्षत्वञ्च दृश्यते किन्तु न कोऽपि तन्नाम्ना ग्रन्थो न वा किमप्यौषधमुपलभ्यते।

सङ्क्षेपेणाऽत्र वेदादिवर्णिताऽऽयुर्वेदाऽऽचार्याणा नामानि दर्शितानि। साम्प्रतं व्यवह्रियमाणानामन्येषाञ्च ग्रन्थाना कालेतिहासावधिकृत्य स्वमत दर्शयामः।

**१ सुश्रुतसंहिता**—कतिपयानां विदुषाम्मते सुश्रुताच्चरकस्य ज्येष्ठत्वमस्ति किन्तु न तदुपपत्तिसहम्। वर्तमानचरकग्रन्थकारो बहून् सुश्रुतीयराद्धान्तान् स्वकृतौ निबन्धे। ये ये सिद्धान्ताः सुश्रुतीयाश्चरके वर्तन्ते परोक्षरूपेण तत्र 'धान्वन्तराः' एके, इत्यादयः शब्दा दृश्यन्ते*। सुश्रुतसहितानिर्माणस्य कः काल इति पूर्णतया निश्चेतुमतीव दुष्करम्। अस्मिन्विषये हार्नलेमहोदय. सुश्रुतनिर्माणकाल खीष्टात्पूर्वं षष्ठी शताब्दीमनुसंदधानः "यदा सुश्रुतनिर्माणकालो निर्णेतुमारभ्यते तदाऽनुमीयते सुश्रुतसंहिताकार श्चरकीयान् राद्धान्तान् पर्यचिनोदिति यतो मनुष्यशरीरस्थाऽस्थिगणनामुपक्रम्य चरकीयराद्धान्ताना स्वेपाञ्च भिन्नत्व ज्ञापयति। अतः सुश्रुतकारश्चरककारान्न प्राचीन इति प्रमाणीभवति। तथाच वेददेशीयस्य शतपथब्राह्मणस्य रचयिता सुश्रुतीयसिद्धान्ताभिज्ञोऽभवदिति निश्चीयते। अस्य ग्रन्थस्य निर्माणकालस्तथ्यो न ज्ञायते। खीष्टात् पूर्वं षष्ठी शताब्दी भवेदिति नैवोपपत्तिविरोधः। अतः सम्भाव्यते सुश्रुतकारो न केवलमात्रेयस्य किन्तु तच्छिष्यस्याऽग्निवेशस्य समकालीन" इत्यभिधत्ते। भूयश्च 'त्रीणि सषष्टीन्यस्थिशतानि वेदवादिनो भाषन्ते' इति निर्दिशन् सः "आयुर्वेदवादिनस्त्रीणि सषष्टीन्यस्थिशतानीति भाषन्त इति सुश्रुतकारस्य लक्ष्यभूत आत्रेयराद्धान्त एव।"

हार्नलेमहोदयः शतपथब्राह्मणचरकसुश्रुतानामस्थिसङ्ख्यायाः समानत्वेन भ्रान्तिं प्रापितः। अस्मिन्विषये तदुक्त न समीचीनम्। यतः सर्व एव प्राचीना आर्याऽऽचार्या अभिन्न वेदमतमवालम्बन्त। प्राचीनार्याऽऽचार्याणा सरणिरेषा— स्वपूर्वेषा वेदस्य वा नाम्ना तदनुकूलमेव स्वसिद्धान्त त उपादिशन्। वेदानुकूलत्वन्तु सर्वेषामेवाऽऽसीत्। सुश्रुतेन त्रीणि सषष्ठीनीति शतपथब्राह्मणवद्वेदराद्धान्तः साक्षान्निर्दिष्टो न परम्परागत.। तत्र वेदविदो भाषन्त इति न केवलमायुर्वेदविदः किन्तुपूर्णाऽऽम्नायविद एव। अतः सुश्रुतसहिता चरकसंहितायाः प्राचीनैव। तस्या निर्माणकालश्चरकसहिताया निर्माणकालाद् द्विशतवर्षपूर्वमिति नाऽसङ्गतम्।

**चरकसंहिता**—चरकसहितामधिकृत्य हार्नलेमहोदयः "नवीनभारतीयाऽऽयुर्वेदसरण्यनुसारमन्यैका जनश्रुतिः प्रसिद्धा। सा च बौद्धाना जातकेषु तेषामेव साधारणधर्मग्रन्थेषु च दृश्यते—बौद्धकाले विश्वविद्यालयद्वयमासीद्यत्राऽऽयुर्वेदमन्तर्भाव्य सर्व एव विज्ञानविषया (सब्बसिप्पाणि=सर्वशिल्पानि) बहुभिरुपाध्यायैर-

---

* 'सर्वाङ्गनिर्वृत्तिर्युगपदिति धन्वन्तरि.' चरक शा. ६।१८। 'परिदृष्टकर्मणा शल्यहर्त्राऽऽहरणमित्येके (धान्वन्तराः)' च० शा. ८।२९। 'दाहे धन्वन्तरीयाणामत्रापि भिषजा बलम्' च चि ५।६४। 'इदन्तुशल्यहर्तॄणा कर्म स्याद्दृष्टकर्मणाम्' च० चि. १३।१८२। 'ता शल्यविद्धि. कुशलैश्चिकित्स्या शस्त्रेण सशोधनरोपणैश्च' च. चि. ६।५८ इत्यादि। चरकात्सुश्रुते पाठा उद्धृता इति तु न युज्यते प्रत्यक्षविरोधात्।

पाठ्यन्त । तेषाञ्चोपाध्यायाना बौद्धेषु प्रचलित नाम ( दिसप्पमोखा—आचारिअ=दिशाप्रमुख्याऽऽचार्यः ) इत्यवर्तत । एतयोश्च विश्वविद्यालययोरेको भारतपूर्वदेशे काश्यामपरश्च भारतपश्चिमदेशे तक्षशिलायामासीत् । पश्चिमदेशस्थस्तु ( तक्षशिलाया ) प्रसिद्धतरोऽभवत् । तक्षशिलीयविद्यालये बुद्धकाले स्तोक तत्पूर्ववर्तिनि वा काले 'आत्रेयः' आसीदायुर्वेदाऽध्यापकः । तस्य चाऽत्रेयस्य शिष्येणाऽग्निवेशेन निर्मिता मूलचरकसंहिता । अतश्च तस्याः कालः खीष्टात्पूर्व षष्ठी शताब्दी ज्ञायते " इत्याह । एतत्तु पूर्वमपि सुश्रुतप्रकरणेऽस्माभि र्दर्शितम्—हार्नलेमहोदयो बहुत्र नामसाम्येन भ्रान्तिमवाप्नोदिति । तक्षशिलाविश्वविद्यालये भवेन्नाम कोऽप्यात्रेय आयुर्वेदाऽध्यापको बौद्धजातकदृष्टः किन्तु स एव मूलचरकसंहिताकारस्याऽग्निवेशस्य गुरुरिति तु नितान्तमसङ्गतम् । तक्षशिला हि बौद्धानामेवाऽऽसीद्विद्याकेन्द्र बौद्धकाले । चरके बहुत्र बौद्धमतविरोधदर्शनान्नैव बौद्धविद्यालयाऽध्यापकस्तस्योपदेष्टेत्यनुमातुमपि शक्यते । अस्मन्मते तु पतञ्जलिर्यो व्याकरणमहाभाष्यप्रणेता स एव चरकस्येति य प्रायोवादः स एव साधीयान् । न केवलं प्रचलितजनश्रुतिरेवैतन्मूलं किन्तु बहूनां पुराणविदुषामपि तत्राऽऽनुकूल्ये सम्मति. ॥ ( १ ) "सूत्राणि योगशास्त्रे वैद्यकशास्त्रे च सहितामतुलां । कृत्वा पतञ्जलिमुनिः प्रचारयामास जगदिद त्रातुम्" पतञ्जलिचरिते सर्ग ५।२२ ॥ ( २ ) "योगेन चित्तस्य पदेन वाचा मल शरीरस्य च वैद्यकेन । योऽपाकरोत्त वरद मुनीना पतञ्जलिं प्राञ्जलिरानतोऽस्मि" ॥ योगवार्तिक० ( ३ ) 'इति चरके पतञ्जलिः'—मञ्जूषा ( ४ ) "यदा मत्स्याऽवतारेण हरिणा वेद उद्धृत. । तदा शेषश्च तत्रैव वेदं साङ्गमवाप्तवान् । अथर्वान्तर्गत सम्यगायुर्वेदञ्च लब्धवान् ॥ . .. ... . . . . . . . . . . . सञ्चिन्त्य स स्वयं तत्र मुनेः पुत्रो बभूवह । प्रसिद्धस्य विशुद्धस्य वेदवेदाङ्गवेदिनः ॥ यतश्चर इवाऽऽयातो न ज्ञातः केनचिद्यत । तस्माच्चरकनामाऽसौ विख्यातः क्षितिमण्डले ॥ इत्यादिभि र्महाभाष्यकृतः पतञ्जलेश्चरक इति नामान्तरमेव निर्धार्यते । महाभाष्यनिर्माणकाल एव चरकसंहितानिर्माणकाल इति स्पष्टमेव, अतस्तमेवाऽऽधिकृत्य किमपि ब्रूम. ॥—" चन्द्राऽऽचार्यादिभिर्लब्ध्वा देश तस्मात्तदाऽऽगमत् । प्रवर्तितं महाभाष्य स्वञ्च व्याकरणं कृतम् ।" राजतरङ्गिण्या. १।१७६ ॥ इत्यभिमन्युराज्यकालमधिकृत्य राजतरङ्गिणीकारेण चन्द्राऽऽचार्यादिभिर्ग्रन्थमात्राऽवशिष्टमेक महाभाष्यपुस्तक दक्षिणदेशादानीय काश्मीरदेशे पुन. प्रचारितमिति ज्ञाप्यते । अभिमन्युकालश्च प्रायेण खिष्टीयद्वितीयशताब्द्या अन्ते बहुभिः पाश्चात्यै र्मतः । तथा चेदं विचार्य सम्पन्नम्—एतादृशो महान् ग्रन्थः कियता कालेनाऽप्रचरद्रूपो भूत ?—तत क्रमात्कियता च कालेन लुप्तदशा गत ? इति । एष महाभाष्यकारस्तु गोनर्ददेशीय. । तथा ह्याह स स्वयमेव तत्र बहुत्रैव—'गोनर्दीयस्त्वाह' इत्येवमादि ( पा. १।१।२१ ) व्याख्यातञ्च तत् तट्टीकाकृता कैयटेन 'महाभाष्यकारस्त्वाह' इति । कैयटटीकाकृन्नागेशोऽपि तथैव व्याचष्टे—'गोनर्दीयपद व्याचष्टे भाष्यकार' इति । गोनर्ददेशवासित्वादेव च पतञ्जले र्गोनर्दीयत्वम् । स च गोनर्ददेशोऽद्यतनीयो 'गोण्डा' इति प्रसिद्धोऽयोध्याप्रदेशीय इत्यपि निर्णीतमस्मद्देशीयाऽध्यापकविशेषेण रामकृष्णगोपालभण्डारकरेण । एष—एव 'गोण्डा' गोनर्दो भवतु मा भूद्वा । गोनर्दस्तु प्राग् देशविशेषस्तत्र नाऽस्त्येव संशय । काशिकायाम् 'एङ्प्राचा देशे ( पा. १।१।७५ ) इत्यस्योदाहरणेषु 'गोनर्दीय.' इतिपदस्याऽपि दर्शनात् । तदानीञ्च नाऽऽसन् खल्विदानीन्तना इव लौहवर्त्मगा अपि धूमयानशकटाः । आसश्च प्रायः प्रति नगरान्तेषु दुर्लङ्घ्याः कान्ताराश्च, प्रसङ्गतस्तदप्युक्त महाभाष्ये—'कश्चित्कान्तारे समुपस्थिते सार्थमुपादत्ते' स यदा निष्कान्तारीभूतो भवति तदा साऽर्थं जहाति ( १ अ. १ पा. ९ आ. ), इति । प्रदर्शितवाक्यपदीयवचनात्त्वेवगम्यत एवैतत्, चन्द्राऽऽचार्यादिभि र्दाक्षिणात्येष्वेकमेव लुप्ताऽवशिष्ट महाभाष्यपुस्तकमवाप्तमिति । तदद्य विचार्यता

तावद् धीमद्भिः—तदानीं खलु प्राच्यदेशतो दक्षिणदेशं यावत् भाष्यप्रचलनाय कत्यब्दाः प्रयोजनीयाः सञ्जाता आसन् ? कतिष्वब्देषु च तत्प्रचरद्रूपं स्थितम् ? कियता च कालेन पुनर्लोपदशांगतमलम्भि च चन्द्राऽऽचार्यादिभिरिति ।

अस्मन्मते त्वभिमन्युराज्यकालतोऽन्यूनसार्धद्विशतवर्षपूर्वं प्रणीतमेतन्महाभाष्यम् । अन्तरेण हि सार्धद्विशताऽब्दकालमेतादृशस्य महतो ग्रन्थस्याऽऽर्यावर्तीयप्राच्यदेशाद्दक्षिणदेश यावत्प्रचारो लुप्तप्रायता च न सम्भवेदिति । तथा च महाप्रभावः खल्वालेग्जण्डरो दिग्विजयाय यदेमं भारत प्रविष्टः ( इ० ३२७ खी० पू० ) तत्पूर्वमेव प्रणीतं महाभाष्यमिति । अतएव दिग्विजयिना तेन ग्रीकनृपतिना कृतः साङ्कलनगरध्वंसो नाऽत्रगतो महाभाष्यकारस्यैतस्य पतञ्जलेः । सति ह्यवगते तस्मिन् " सङ्कलादिभ्यश्च ( पा० ४ । २ । ७५ ) इति सूत्रेऽवश्यमेवोच्येत 'सङ्कलेन निर्वृत्तः साङ्कलो जनपद इदानीं ध्वस्तः' इति । कस्य हि नाम ग्रन्थकारस्य शताब्दवृत्तं किञ्चिदधिकशताब्दवृत्त वा जनपदध्वंसनविवरणमपि न कृत स्यात् नापि स्मृतिपथमवरोहेत् अथवा सङ्कलेन निर्वृत्तः साङ्कलो जनपदः क्वाऽऽसीदित्येवमप्याशङ्केतैव ।

यद्युच्येत इरावत्याः पश्चिमोपतटस्थितशाकलमेव नगरमासीत्पुरा साङ्कलमिति प्रसिद्धम्, तदेव ग्रीकनृपतिना विध्वस्तमपि पुनः कालात्प्रादुर्भूत चैनिकपरिव्राजकेन **होएन्थसाङ्गे**नाऽपि ( ६२९ खी० पू० ) दृष्टमिति **ह्येयेन्थसाङ्ग**तो बहुपूर्वजस्य भाष्यकारस्य न तत्र ध्वसनकथनाऽवसरो नाऽपि सन्देहाऽवसर इति । तत्र ब्रूमः—शाकलसाङ्कलयोरुभयोरव पाणिनीये गणपाठे पृथगवस्थानान्नैवाऽस्ति तादृशकथनाऽवसरः । किन्तु तेन हि दिग्विजयिना, इरावतीं समुत्तीर्यैव, इरावतीपूर्वोपतटस्थमराजकप्राय साङ्कल विध्वस्तमित्येवमवैतिहासिकम्, चैनिकपरिव्राजकस्य **होयेन्थसाङ्ग**स्य निर्देशतस्त्ववगम्यते तत्तीर्थयात्राकाले शाकल नाम नगर त्विरावत्याः पश्चिमोपतटे एव स्थितमिति । तथा च नामभेदात् संस्थानभेदाच्चानयोः पार्थक्य सुव्यज्यत एव, तदिहाऽवश्यमेव स्वीकार्यमः—पाणिनिकाले योऽसौ साङ्कलो नामासीत् कश्चन महाजनपदः पूर्वोपतटस्थ एवेरावत्याः, स एव कालात् श्रीभ्रष्टः श्रीमता दिग्विजयिना तेन ध्वस्तश्च, शाकलमिति तु तस्माद् विभिन्नमेव स्थानमिरावत्याः पश्चिमोपतटे चिरात् स्थितम् तदेव दृष्ट्वा यथावद्वर्णित तीर्थयात्रागतेन तेन चैनिकपरिव्राजकेनेति । अपि तेन हि चैनिकपरिव्राजकेन यस्य शाकलस्य नगरत्व वर्णितं तस्यैव " शाकलं नाम वाहीकग्रामः ( ४ अ० २ पा० २ आ० )" इति ग्रामत्वेन व्यपदेशो दृश्यते महाभाष्ये, ततश्च ज्ञायते—इह चैनिकपरिव्राजकागमन समये तस्य स्थितं नगरत्वम् । ततः पुरा भाष्यकारसमये तु ग्रामत्वमेवाऽऽसीत्तस्येति ग्रामो हि नगरत्वमाप्तु युज्यत एव क्रमोन्नत्येति । एवं चेह चैनिकपरिव्राजकाऽऽगमनाद्बहु पूर्वं, तस्य हि ग्रीक् नरपते र्विजयाऽऽगमनाच्च पूर्वमेव सुतरा खीष्टजन्मतः सार्धत्रिशतवर्षतोऽपि प्राक् प्रणीतं पातञ्जलं महाभाष्यमिति चावाप्यते ।

किञ्चाऽस्य पतञ्जलेः शाक्यबुद्धपरभवत्वनिर्णये हेतुरयम्, अस्ति च सूत्रम्—'इतराभ्योऽपि दृश्यन्ते ( पा० ५ । ३ । १४ ), इति अनेन च तसिलादयो विधीयन्ते ते खलु भाष्यकृता भवदादिभि र्योग एवेष्टाः । भवदादिषु च 'देवानाम्प्रियः' इत्येतदपि समस्त पदं पठितम् । दृश्यते च बौद्धग्रन्थे बौद्धाना 'देवानाप्रियः' इति प्रशंसाख्यानम् । अतो ज्ञायत एवास्य भाष्यकारस्य शाक्यबुद्धजन्मपरभवत्वम् । तथैवाऽस्ति " **षष्ठ्या** आक्रोशे' ( ६ । ३ । २१ ) इति पाणिनिसूत्रम् । अत्र च सन्ति कात्यायनकृतानि कतिचिद्वार्तिकानि, तेषु चैकम् " देवानाम्प्रिय इति च मूर्खे" इति । भाष्यकारस्तु तत्र 'मूर्खे' इत्यंश परित्यज्यैवाऽब्रवीत् 'देवानाम्प्रिय इति चोपसङ्ख्यान कर्तव्यम्' इति । तथाचेदमपि सुव्यक्तम—कात्यायनकाले मूर्खाऽभिधानमेवाऽऽसीत् 'देवा-

नाम्प्रिय,' इति । ततोऽतीते बहुतिथे बौद्धमान्याऽभिधानमभूत्तदेव, तत्कालज एवैष पतञ्जलिः सामयिकव्यवहारानुरोधत एव पृथगकरोत् ततो वार्तिकात् 'मूर्खे' इति । वस्तुतो यथेह भारते महम्मदीयराज्यस्थापनात् प्रागण्यपरदेशे हिन्दुरितिव्यवहार आसीदेवाऽधार्मिकेषु, तत उत्तरं सैव समाख्या तदाक्रोशकर्तोपचरितैवाऽस्मासु च । व्यवह्रियते ततो वयमपि "हीनञ्च दूषयत्यस्मात् हिन्दु" इति ( मेरुतन्त्रे ) व्युत्पादनमभिमत्याऽऽत्मनो हिन्दुनाम कथनेऽपि गौरवमेव मन्यामहे । तथैव पुरा खलु पाणिनिकाले 'देवानाम्प्रियः' इति पदद्वयमसमस्तमेवासीद् व्यवहार्यम्, एतेन चाऽसमस्तपदद्वयेन यज्ञीयपशोरेव बोधश्च भवतिस्म । तत उत्तर कात्यायनकाले मूर्ख एव तत् समस्तमेकपदीभूतं पशुतुल्यताव्यञ्जक व्यपदिष्टम् । ततोऽनन्तर बौद्धाना मूर्खत्वमेवाऽभिमन्वानै रार्यैः प्रयुक्त तत्तेषु । काले तदेव पदं प्रशसावचनमिति कृत्वा गृहीत स्वस्वनामसु तैर्बौद्धैरिति तदानीं तात्कालिकव्यवहारानुरोधत एव परित्यक्तो वार्तिकीयो 'मूर्खे' इत्यशो भाष्यकृतेति । एतावता तु सामान्यतः खीष्टजन्मतः सार्धत्रिशतवर्षपूर्वम्, शाक्यबुद्धनिर्वाणतश्चाऽन्यूनपञ्चाशद्वर्षोत्तरम् ( खी० पू० ३५०–५०० ) पतञ्जलिसमयोऽनुमं यते ।

यत्तूच्यते 'वर्तमाने लट्' ( पा. ३–२–१२३ ) इति सूत्रीयभाष्ये "इह पुष्पमित्रं याजयामः" इत्युत्तमपुरुषप्रयोगात्पतञ्जलेः पुष्पमित्रार्त्विज्यमपि स्फुटम्, तदलं तात्कालिकत्वात्तत्कालिकत्वविचारेणेति, तदपि न विचारसहम् । यद्येवमुत्तमपुरुषप्रयोगदर्शनादेव तस्य याजकत्वमङ्गीक्रियेत तर्हि तत्रैव 'इह वसामः' इति प्रयोगदर्शनादेव तस्य पाटलीपुत्रवासित्वमप्यङ्गीकरणीयं भवेत् । न च पुष्पमित्रयागानुरोधेनैव तदानीं तस्य तत्र वासश्चाऽऽसीदिति वाच्यम्, सति हि तस्य तादृशवक्तव्याभिमते तिष्ठाम इत्येव क्रिया प्रयुज्यते न तु वसाम, इति गोनर्दवासित्वात्तस्य । किञ्च तत्रैव 'इहाधीमहे' इत्यप्युक्तमस्ति, तत्किं तदानीमपि पतञ्जलिस्तत्र पाटलिपुत्रेऽध्ययनार्थं स्थितः ? गुरुमुखादर्थग्रहणमेव ह्यध्ययनमाचार्यसम्मतम्, तदिदानीं तत्र पतञ्जले र्न कथमपि सम्भाव्यते केनचिदपि, तथा चाऽवश्यमेव वक्तव्यम्—एवमादिपूत्तमपदप्रयोगदर्शनं न तु पतञ्जलेः स्वस्य तद्व्यापाराश्रयत्व गमयति, अपि तु वैयाकरणानामुदाहरणप्रत्युदाहरणप्रदर्शनायैव प्रयोगास्त्ववश्यमेव कल्पनीयाः सदैवेति । तदेव यथैवोक्तम्—'इह वसामः' इति, यथैव च 'इह अधीमहे' इति तथैव 'इहपुष्पमित्र याजयामः' इति च, **नच** तेभ्यः किमप्यैतिहासिक तथ्यं लभ्यमस्ति । वस्तुतः पतञ्जलि र्दृष्टपाटलीपुत्र इति वक्तु शक्यत एव, पर पाटलीपुत्रस्थ एवेद भाष्य व्यरचयदिति तु न कदापि वक्तुं युज्यते, यतो भाषितमेतच्च तेनैव—"यया देवदत्त इह भूत्वा पाटलीपुत्रे भवति, सा नून क्रिया ( १ अ. ३ पा. १ आ. ) इति, पुनस्तत्रैव किञ्चिदग्रे–'स इहस्थः पाटलीपुत्रस्थं देवदत्तमुपदिशति, अङ्गदी कुण्डली व्यूढोरस्को वृत्तबाहुर्लोहिताक्षस्तुङ्गनासिको विचित्राभरण ईदृशो देवदत्त इति ( १ अ. ३ पा. १ आ. ) इति च । एवमादिप्रयोगदर्शनाच्च कः खलु प्रज्ञावान् मनसापि शङ्कितुं समर्थः पाटलीपुत्रनगरे स्थित एव पतञ्जलिः प्रणिनायैतद्भाष्यमिति । किञ्च प्रदर्शितयोरुदाहरणयो र्यथा किल देवदत्तो भाष्यकृत्कल्पित एव जनः, एव प्रख्याताश्चाद्यापि दृश्यन्त एव बहवो देवदत्ताः । यथा च–"पश्य देवदत्त कष्ट श्रितो विष्णुमित्रे गुरुकुलम् ( २ अ. १ पा. १ आ. )" इत्यत्र च देवदत्तविष्णुमित्रौ कल्पितौ, तथैव तत्र पुष्पमित्र-चन्द्रगुप्तावित्यपीत्यत्र च नास्त्येव सन्देहलेशोऽपीति ।

अद्यप्रचलितमहाभारतात् पूर्वजत्वं त्वेतन्महाभाष्यस्य, तस्माच्च तस्य खीष्टजन्मतो द्विशताब्दीपूर्वोद्भूतत्वन्तु पाश्चात्यैरपि स्वीकार्यम्, महाभारतस्याऽस्य हि खीष्टजन्मतो द्विशताब्दीपूर्वप्रणीतत्वे सर्वेषामेव तेषा मतैक्यात् । पुष्पमित्रस्य राज्याऽऽरम्भकालस्तु तैः खीष्टजन्मतः शताब्दीपूर्वमित्येव निर्णीतम्, तथा च स्वकृतसि-

द्धान्तव्याकोपभियाऽपि तेषां स्वीकार्यमेवाऽस्य पतञ्जलेः तत्पुष्पमित्रतोऽतिपूर्वजत्वम्, तथा तादृशोदाहरणे श्रुतस्य तस्य कल्पितव्यक्तित्वञ्च। स्वीकृते त्वेव तत्तुल्यतया 'चन्द्रगुप्तसभा' इत्यत्र चोदाहरणे चन्द्रगुप्तेत्याख्यव्यक्तेरपि भाष्यकृत्स्वकपोलकल्पितत्व सुवचमेवेत्यलमतिजल्पनेनेति।

अस्ति 'अनद्यतने लङ्'(पा. ३–२–१११) इत्येकं सूत्रम्। तद्भाष्ये च वार्तिकोदाहरणतया द्वे वाक्येऽवलोक्येते—'अरुणद् यवनः साकेतम्, अरुणद् यवनो माध्यमिकान्' इति। अत्र कश्चिद्धीमान् माध्यमिकानिति नागार्जुनमतानुगतबौद्धसम्प्रदायविशेषस्थितानेव मत्वा पतञ्जलिकालनिर्णये यतितवान्, तदपि भ्रमसङ्कुलमिवैवाभाति, राजतरङ्गिणीपर्यालोचनया हि स्फुटमेवाऽवगम्यते नागार्जुनोऽसावभिमन्युसमकालिक एवेति। तथाहि—'अथ निष्कण्टको राजा कण्टकोत्साप्रहारद। अभीर्वभूवाऽभिमन्युः शतमन्युरिवाऽपरः॥ स्वनामाङ्कशशाङ्काङ्कशेखरं विरचय्य सः। परार्घ्यविभवं श्रीमानभिमन्युपुर व्यधात्॥ चन्द्राचार्यादिभिः × × × × व्याकरण कृतम्। तस्मिन्नवसरे बौद्धा देशे प्रबलतां ययुः॥ नागार्जुनेन सुधिया बोधिसत्त्वेन पालिता। ते वादिनः पराजित्य वादेन निखिलान् बुधान्॥ क्रिया नीलपुराणोक्तामच्छिन्दन्नागमद्विषः। (रा. त. १–१७४–१७८)" इति। अभिमन्युसमये एव च चन्द्राचार्यादिभि र्बह्वन्वेषणतो ह्येक महाभाष्यपुस्तकं दक्षिणदेशादानीतमिति तु सर्ववादिसम्मतमेवेत्युक्तम्, तत्कथमभिमन्युतो बहुपुराणस्य पतञ्जलेः किलाभिमन्युसमकालोत्पन्नमाध्यमिकज्ञानसम्भवो यतश्च तादृशाना माध्यमिकानामवरोधदर्शनमपि तस्य सम्भाव्येत नामेति सुधीभिरेव विभाव्यताम्।

यच्च कश्चित् "तथाच सूच्यते हि भगवता पिङ्गलेन पाणिन्यनुजेन" इति षड्गुरुशिष्योक्तं दृष्ट्वैव पाणिनिसमकालिकत्व पतञ्जलेः स्वीकर्तुमीष्टे, पतञ्जले. पिङ्गल इति नामान्तरश्रवणात्, तस्य खल्वनुत्तमधियः प्रशंसावादाः कथन्नु सम्भवेयुरेकमुखेन? यतोऽनुद्भूतपूर्वमेवैतत्तेन निर्णीत हिमवद्विन्ध्ययो र्मिलनमिवाऽतीवचित्रम्। पाणिनिपतञ्जल्यो. प्रायोऽष्टादशशताब्द्यन्तरितत्वावगमात्। अत एव भगवता पतञ्जलिना क्वचित्क्वचित् पाणिनिकाले व्यवहृतं लौकिकं किञ्चिद्बोधयितु 'पुराकल्पे,' इति तदुल्लेखः कृत.। तथाहि—"पुराकल्पे एतदासीत् × × × शब्दा उपदिश्यन्ते × × × एवं विप्रतिपन्नबुद्धिभ्योऽध्येतृभ्यः सुहृद्भूत्वा आचार्य इद शास्त्रमन्वाचष्टे (१ अ० १ पा० १ आ०) इति" "पुराकल्पे एतदासीत् षोडशमाषा कार्षापणं षोडशपलाश्च माषशवव्य· (१ अ० २ पा० ३ आ०=सरूपाणामितिसूत्रभाष्यान्ते) इति चैवमादि। यद्यपि पाणिन्यनुजश्च पिङ्गलः, पतञ्जलेश्च नामान्तर पिङ्गल इति भवितुमर्हतीति सत्यम्। परमनयो र्न चैक्यं स्वीकुर्मो वयम्, अपितु बहुभिन्नकालिकत्वमेव। वस्तुतोऽङ्गवर्णानुसारत एव कृष्ण, पिङ्गल, गौरश्यामेति नामानि तदानीमाख्यातानि भवन्तिस्म। छान्दोग्येऽपि श्रूयते चैकत्र पिङ्गलस्तथाहि—"अथ या एता हृदयस्य नाड्यस्ताः पिङ्गलस्याणिम्नस्तिष्ठन्ति (८–६–२) इत्यादि। नचाऽत्रापि पिङ्गलनाम्नः पाणिन्यनुजस्यान्यस्य वा कस्यचिन्मत इत्येवमर्थो गम्यते, 'शुक्लस्य' इत्यादेः 'आदित्यः पिङ्गल.' इत्यादेश्चोत्तरत्र तत्रैव श्रवणात्; छान्दोग्यस्य तस्य पाणिनिपूर्वजत्वावधारणाच्च। दृश्यते हि छान्दोग्येऽनेकत्र शौनकः कापेयः (पा० ४–३–५–६, ७) प्रत्युदाहरणञ्च तदेव पदमनुभूयते "कपिबोधादाङ्गिरसे (४–१–१०७)" इति पाणिनिसूत्रस्येतीह दिक्।

अपि दृश्यते चाऽत्र महाभाष्ये (पा० ४–२–६०) आख्यायिकात्वेन वासवदत्ताया ग्रहणम्। "आख्यायिका—वासवदत्तिक·" इति। सुबन्धुकृतैवाख्यायिका सेति प्रसिद्धा, सुबन्धुश्च कविः रामायणस्य महाभारतस्य, तत्परिशिष्टरूपस्य हरिवंशस्य, विक्रमादित्यस्य च परभव एव। तथाहि—"रामायणेनैव सुन्दरका-

ण्डचारुणा " इति, " भारतेनेवसुपर्वणा " इति, हरिवशैरिव पुष्करप्रादुर्भावरमणीयैः, इति । 'सा रसवत्ता विहिता नवका विलसन्ति चरति नो कं कः । सरसीव कीर्तिशेषं गतवति भुवि विक्रमादित्ये' इति च । तदेवमस्य हि महाभाष्यस्य वासवदत्तापरभवत्वस्वीकारपूर्वकं रामायणादिपरभवत्वमपि मन्तव्यमित्येवमपि कश्चित् शङ्कितुमुत्सहेतैव । परमवश्य तस्येमानि च त्रीणि वितर्क्याणि भवेयुः । यदि हि स्वर्गते च विक्रमादित्ये स्थितस्य सुबन्धोः समनन्तरमेव प्रणीतं स्यात् पातञ्जल नाम महाभाष्यम् । तर्हि काश्मीरराजाभिमन्युसमये विक्रमादित्यजन्मतो बहुपूर्वमपि चन्द्राचार्यादिभिः कथ तद्भाष्यपुस्तकमवाप्तमिति प्रथमम् । सर्वैरेव पुरातत्वमनुसन्धित्सुभि र्महाभाष्यस्यास्य खीष्टजन्मपूर्वप्रणीतत्वमेकवाक्यतो निर्णीतमेव, स सर्वसिद्धान्तोऽपि कथं न व्याकुप्येतैवेति द्वितीयम् । अपि यदि हि नाम महाभाष्यकार खल्विदानीं प्रचलितान्महाभारतादपि परभव स्यात्, तर्हि महाभाष्येऽत्र प्रदर्शित वृद्धकुमार्युपाख्यान प्रचलितमहाभारतीयानुरूपमेव कथ न दृश्येतेति तृतीयम् ।

अस्मन्मते तु कालात्नष्टाक्षरताङ्किते तन्महाभाष्यपुस्तके सुबन्धुपरज एव कश्चित्तत्र 'वासवदत्तिकप्रभृत्यभिनिवेश्य तस्य नष्टाक्षरत्वमुद्धधारेति । अत एव प्रवादोऽपि " यत्र लालायितः फणी " इति ।

भगवत पतञ्जलेः सुबन्ध्वादिबहुपूर्वभवत्वे, अपरा चैषोपपत्तिः समालोच्या—यो हि नाम वासवदत्ताकृतः सुबन्धोरप्युत्तरभव, तेन चाऽवश्य कालिदासस्य कवेरप्युत्तरभवेन भवितव्यम्, स्वीकृते च तथा कालिदासकृतान् प्रयोगानप्यवेक्ष्याऽवश्य तत्र भाष्ये तथैवेष्टय प्रणीता दृश्येरन्, न च तथा दृश्यन्ते, नाऽपि तेषु भाष्यकृता कश्चन विचार कृत इति पश्यामः, प्रत्युत सिद्धान्तकौमुद्यादौ तादृशप्रयोगानामपप्रयोगत्वमेव निर्णीतमवलोक्यते । तथाहि—'अवैहि' इति वृद्धिरसाधुरेव, इति (अ. स) किञ्च—कथ तर्हि शार्वरस्य तमसो निषिद्धये इति कालिदास, अनुदिनौपधरागा इति भारविः, समानकालीनम्, प्राक्कालीनम्,—इत्यादि च ? अपभ्रंशा एवैते इति प्रामाणिकाः, इति (तद्धि. शै.) । अपरमप्यत्रेदं विवेच्यम्—महाभाष्यप्रयुक्ताना पाणिन्यादिविरुद्धानामपि प्रयोगाणा साधुत्व मन्यते, कालिदासादीना तु तत्पूर्वजत्वे तत्तत्प्रयुक्ताना कथमुच्यतेऽसाधुत्वमिति ? यथा दृश्यत एव हि पाणिनीयधातुपाठविरुद्ध प्रयोगोऽसौ भाष्यकारस्य—" आदित्यश्चाभिप्राये सज्जते," इति । न चेदृगप्रयोगस्याऽसाधुत्वमाशङ्कितमपि केनचित् प्रत्युताह च कैयटः—" सज्जते इति, भाष्यकारवचनादात्मनेपदम् (३ अ. १ पा. २ आ.) " इति । तत उत्तरमिदानीन्तु भागवतादपि बहुत्रैव प्रयुक्त दृश्यते 'सज्जते' इति । ततो वयमपि तथा प्रयोक्तुं सदैव सज्जामहे एव । एव " भाष्यकारस्तु त्वकत्पितृको मकत्पितृक इति रूपे इष्टापत्तिं कृत्वेद सूत्र प्रत्याचख्यौ " इत्येवमादयश्चोक्ता दीक्षितादिभिः । अहो मतप्राबल्य तस्य भगवतो व्याकरणेषु । अस्ति सूत्रं पाणिनीयम् " अवाद्ग्रः (१-३-५१) इति " एतेन पाणिनिमतेऽनुभूयत एव 'अवगृणीते' इत्येवमादीनामपि प्रयोगाणा साधुत्वं, परमत्र भाष्यकृता—'गृणातिस्त्ववपूर्वो न प्रयुज्यत एव, इत्युक्तम् । तस्मादेव शासनाद 'वगृणीते' इत्येवमादीन् प्रयोक्तु न क्षमते कश्चिदपि । तदेवं कालिदासादीनामपप्रयोगानवेक्ष्य तेषा साधुत्वाख्यापनाय पातञ्जले महाभाष्ये कस्याप्येकस्य यत्नस्यानुपलम्भात् । पाणिन्यादिमतविरुद्धानामपि भाष्योक्ताना प्रयोगाणा पतञ्जलिचरिताना व्यवहारदर्शनाच्चाऽवश्यमेव महाभाष्यकारस्य भगवतः पतञ्जलेः किल कालिदासादितो बहुप्राचीनत्व मन्तव्यमेवेति किं तस्य सुबन्धुपूर्वजत्वविचारेणेत्यलम् ।

वेदान्तसूत्राणा प्रणेतुश्चाऽयं परभवः । यदस्त्येतत्सूत्रं पाणिनीयम् " पाराशर्यशिलालिभ्या भिक्षुनटसूत्रयोः (४-३-११०)" इति । अत्र पाराशर्यशब्देन वेदान्तसूत्रकृतो व्यासस्यैव बोधात् । अद्य वेदान्ते-

तिप्रसिद्धानामेवहि सूत्राणां पाणिनिकाले भिक्षुसूत्रेति व्यपदेश आसीत्, न चाऽन्यत्किञ्चन भिक्षुसूत्र नामेति । अत एव वेदान्तसूत्रभाष्यवार्तिककृत् बालकृष्णाऽऽनन्दोऽपि सर्वेष्वधिकरणेषु भिक्षुसूत्रकृतमित्याद्युक्त्या पाराशर्यं व्यासमेव प्रणनाम विविधप्रकारेण वर्णयन् । तथाहि—आत्माधिकरणभाष्यवार्तिकारम्भे (सू. ४—१—२ "आत्मेति तूपगच्छन्ति ग्राहयन्ति च")

पाराशर्यः प्रथयतु पर भावमन्याऽऽहतं स्व, सूत्रे स्वीये सकलविदुषा मोदमूलस्वभावम् ।
शिष्यै र्विश्वैरपि परिवृत. पैङ्गपूर्वैः प्रतीतैः, आचूड मे सजलजलदाकारदायादमूर्तिः ॥ इति ।

तथाध्यक्षाधिकरणभाष्यवार्तिकारम्भे (सू. ४—२—३ 'सोऽध्यक्षे तदुपगमादिभ्यः')—"भिक्षुयोगकृतं व्यास शाङ्करञ्च गुरुं परम् । स्मृत्वा व्याकुर्महेऽध्यक्षसूत्रभाष्यस्य वार्तिकम्" इति । एवञ्च यान्यखिलसूत्राणि भिक्षुसूत्राणीति च कथ्यन्त इति स्फुटम् । सङ्ग्रहकारस्तु **व्याडिः** पतञ्जलेरस्मात् पूर्वतंन इति तु "सङ्ग्रहेऽस्तमुपागते" इति वाक्यपदीयवचनादिभ्यश्च सिद्धमेव, तस्मिन् व्याडिकालेऽप्यस्य वेदान्तदर्शनस्य ब्रह्मविद्येति प्रसिद्धिरासीत् । तथाहि—विकृतिवल्यारम्भे श्लोकितमेतत्स्वयमेव व्याडिना—"ब्रह्मविद्यागुरुं श्रेष्ठ भारद्वाज बृहस्पतिम् (१—३)" इति । तदेतस्य ग्रन्थस्य पातञ्जलात् प्राक्तनत्वस्य तु का कथा ? व्याडितः, पाणिनितश्चापि प्राक्तनत्वमेवेति ।

न्यायवैशेषिककाराभ्यामप्यय पतञ्जलिः परभव एव । दृश्यत एव हि नैयायिकाद्यनुमानप्रणाल्यादिकं तत्कृते महाभाष्ये तथाहि—"धूम दृष्ट्वा अग्निरत्रेति गम्यते" (२ अ. १ पा. १ आ.) इत्यादि ।

साङ्ख्याचार्यात्कपिलाच्चाऽयं परभव । अत एवोक्त दृश्यते कपिलमतम् "अथवा भवति वै कश्चित् जाग्रदपि वर्तमान कालं नोपलभते, तद्यथा—वैयाकरणाना शाकटायनः रथमार्गे आसीनः शकटसार्थ यान्तं नोपलेभे । किं पुनः कारण जाग्रदपि वर्तमानं काल नोपलभते ? मनसा सयुक्तानीन्द्रियाण्युपलब्धौ कारणानि भवन्ति, मनसोऽसान्निध्यात् (३ अ. २ पा. २ आ.) इति । अपरत्र चैवम् "षड्भिः प्रकारैः सतो भावानामनुपलब्धिर्भवति । अतिसन्निकर्षात्, अतिविप्रकर्षात्, मूर्त्यन्तरव्यवधानात्, तमसावृतत्वात्, इन्द्रियदौर्बल्यात्, अतिप्रमादादिति (४ अ. १ पा. १ आ)" इति । तदेवमादीना दर्शनात् कापिलशास्त्रप्रचारात् परभवत्व चास्य पतञ्जलेः सुव्यक्तम् । अपि वास्य कापिलपरभवत्वविचारस्तु दूरे आस्ताम्, तत्सम्प्रदायीयद्वितीयपुरुषादासुरेश्चाऽयं पतञ्जलिर्वह्वर्वाचीन एव, एतत्पूर्वजेनापि हि वार्तिककारेण कात्यायनेन "आसुरे रुपसङ्ख्यानम् (पा. ४--१--१९)" इत्युक्तत्वात् । आसुरि र्हि साङ्ख्याचार्येषु द्वितीय इति दृश्यते । तथा ह्युक्तमीश्वरकृष्णेन—"पुरुषार्थज्ञानमिद गुह्यं परमर्षिणा समाख्यातम् × × । एतत्पवित्रमग्र्य मुनिरासुरयेऽनुकम्पया प्रददौ" (सा. त. कौ. ६९--७०) इति 'परमर्षिणा कपिलेन' इति च तत्र वाचस्पतिमिश्रकृता टीका । प्रवचनभाष्येऽप्युक्तम्, "आदिविद्वान् निर्माणचित्तमधिष्ठाय कारुण्याद् भगवान् परमर्षिरासुरये जिज्ञासमानाय तन्त्र प्रोवाच" १।२५ इति ।

एतैः प्रमाणतर्कै र्महाभाष्यचरकसंहितादिग्रन्थकृतश्चरकपतञ्जलीत्यादिनामभृतो महर्षेः प्रादुर्भावः खीष्टात्प्रथमाया श्चतुर्थशताब्द्याः पूर्वमेवाऽनिश्चितोऽपि काल. सर्वसम्मत एव ।

**भेलसंहिता**—एषा च संहिता चरकसंहितायाः वयस्यभूतेव । एकमेवापूर्णमस्य पुस्तकं मुद्रितं लभ्यते । प्रकरणविभागश्चास्य संहितायाः सुश्रुतचरकयो रिवैवाऽस्ति । बहोः कालादव्यवहृतेरेषग्रन्थो न केनाऽपि व्याख्यात इत्यनुमीयते । भगवत आत्रेयस्य शिष्याणामन्यतमेन भेलेनेय निर्मिता संहिता बहुषु विषयेष्वन्याः स्वसम्प्रदायसंहिता अतिशेते ।

**वाग्भटः**—वैद्यकशास्त्रे वाग्भटरचितौ द्वौ ग्रन्थौ प्रसिद्धौ अष्टाङ्गसङ्ग्रहोऽष्टाङ्गहृदयञ्च । अष्टाङ्गसङ्ग्रहकारो वाग्भटः न्यूनतो न्यूनं चतुर्दश शतवर्षपूर्वतनः । हार्नलेमहोदयोऽष्टाङ्गसङ्ग्रहकारस्य सप्तम्यां खीष्टशताब्द्या इत्सिंगनाम्नश्चीनीयस्य भारतीययात्रिणो वचनाद्विद्यमानता प्रसिद्धिश्च दर्शयति । अष्टाङ्गहृदयकारश्चान्य एव वाग्भटः । तदीयग्रन्थपाठा माधवकरेण चक्रपाणिना चोद्धृतास्सन्ति । यद्यप्युभयोरेव ग्रन्थकारयोर्वाग्भट इति नाम वर्तते, मूलेऽदृष्टाऽपि मुद्रकै र्लेखकैश्च सिंहगुप्तसूनोर्वाग्भटस्य कृताविति प्रायः स्थानादि समाप्तौ निहित तथापि नैतयो रैक्यमनुमीयते । यत एकस्मिन्नेव शास्त्रे तादृग्विस्तृतं ग्रन्थद्वयं न कोऽपि निर्मातुं प्रवर्तेत । अष्टाङ्गसङ्ग्रहस्यैव सङ्क्षेपोऽष्टाङ्गहृदयमित्यपि न, यतो विस्तरेऽष्टाङ्गहृदयमप्यष्टाङ्गसङ्ग्रहदेश्यमेव । किन्तु ये विषया अष्टाङ्गसङ्ग्रहे वर्तन्तेऽतीव सङ्क्षेपण ते प्रायोऽनुपयोगिन इव दर्शिताः । यथाऽस्थिविवरणादीनि । यद्यपि बहुत्र एक एव पाठः समाना वाऽष्टाङ्गसङ्ग्रहाष्टाङ्गहृदययो र्दृश्यन्ते तथापि तत्रैकगोत्रयोर्नामसाम्यं स्वपूर्वजगौरवततये तत्पाठग्रहणञ्च नाऽसम्भवम् । रसरत्नसमुच्चयकारस्तु ताभ्यामन्य एव वाग्भटः ग्रन्थरचनाशैल्यादौ महान्तरत्वात् ।

**माधवः**—माधवनिदानाऽपरपरपर्यायस्य रोगविनिश्चयनामकस्य प्रसिद्धग्रन्थस्य सङ्ग्रहकारः । यमुद्दिश्य निदाने माधवः श्रेष्ठ इति प्रवृत्ता जनश्रुतिः । सोऽय वाग्भटात्परकालिकः स्वकीयसङ्ग्रहेऽष्टाङ्गहृदयपाठाना प्रायश उद्धरणात् । वृन्दचक्रपाणिभ्यान्तु पूर्वतनो यतस्तद्रचितसङ्ग्रहयो रोगविनिश्चयोक्तक्रमेणाचिकित्सोपदेशात् । "नानामतप्रथितदृष्टफलप्रयोगैः प्रस्ताववाक्यसहितैरिह सिद्धयोगः । वृन्देन मन्दमतिनाऽऽत्महितार्थिनाऽय सलिख्यते गदविनिश्चयजक्रमेण ॥" वृ० श्लो० २ इति स्वय वृन्देनोक्तत्वात् चक्रदत्ताऽऽख्येपि तथैव दर्शनात् । वृन्दस्य खीस्तीयनवमशताब्दी चक्रपाणेरेकादशी शताऽब्दी निश्चिता इतिहासगवेषकै । माधवकारस्य तु अष्टाङ्गहृदयकारवृन्दयोर्मध्यकालजातत्वमस्ति ।

**भावमिश्रः**—भावप्रकाशरचयिता भावमिश्रो नूनं षोडश्या खीष्टशताब्द्यामभवत् । यतस्तस्य ग्रन्थे फिरङ्गरोग इत्युपदंशविशेषस्य नाम दृश्यते । फिरङ्गाणा भारतप्रवेशस्तु षोडश्या शताब्द्या आरम्भे जातः । अतोऽनुमीयते षोडश्या शताब्द्या मध्ये भावमिश्रो भावप्रकाशमरचयत् ।

अतोऽन्येऽपि शार्ङ्गधरादयो बहवो वैद्यकग्रन्था वर्तन्ते न पौरस्त्यैर्नच पाश्चात्यै विद्वद्भिस्तेषा कालनिर्णयाय कोऽपि श्रमः कृतः । मुगलाना राज्यकाले तादृशानामर्वाचीनग्रन्थाना रचना अभूवन्निति निर्विवादमेव ।

अथेदं दर्शयामो बहवो रोगाः पाश्चात्यै र्येषामुत्पत्ति राधुनिकी मता ते प्राचीनतमैरप्यार्यैर्नोऽज्ञाता आसन् । पाश्चात्या हि यदा प्रभृति तास्तान्रोगाननुभवन्ति जानन्ति च तदाप्रभृत्येवतेषामितिहासाऽऽरम्भमपि कल्पयन्ति । भवन्तु नाम ते रोगाः पुराणाऽऽयुर्वेदग्रन्थेषु नाममात्रसत्ताभाजो जनैरननुभूयमानाश्च न केवलमार्याणा पुराणग्रन्थेषु किन्तु वेदकालेऽप्यपयस्तानजानन् तद्यथा—( १ ) Syphilis—पाश्चात्यरोगेतिहासेऽस्य रोगस्य जन्मकालः प्रायेण पञ्चनवत्युत्तरखिष्टीयचतुर्दशशततमे वर्षे मन्यते । यद्यपि सैनिका अमेरिकादेशादिमं रोगमानिन्युरिति ते मन्यन्ते येनचाऽस्य रोगस्य तत्कालपूर्ववर्तित्वं न विहन्यते तथापि तेषा मतेऽज्ञाताऽऽविर्भावकालस्याऽप्यस्य रोगस्य नैव प्राचीनत्वम् । सुश्रुतसंहिताया पञ्चविधा ये उपदंशरोगा वर्णितास्तेषामेव भेदेष्वयमपि सङ्करत्वेपेणान्तर्भवति । अननुभूतप्रायमदृष्टश्चेम रोगमार्या आयुर्वेदविषयाणा पूर्णतयाऽभिज्ञत्वादवजग्मुरेव । अस्य रोगस्याऽतीतप्रत्यक्षव्यवहारत्वादेवाऽधुनिकपाश्चात्यग्रन्थेष्विवाऽऽर्याणा पुराणेषु ग्रन्थेषु सुविस्तृता विवृति र्न लभ्यते । अयं हि रोगोऽथर्ववेदे जायान्यशब्देन व्यवहृतः यथा—

**पक्षी जायान्यः** पतति स आविशति पूरुषम् । तदक्षितस्य भेषजमुभयोः सुक्षतस्य च ॥ अथर्व का. ७।५०।४

अन्यो नाऽऽनेय इति निरुक्ते व्याख्याततत्वान्नीधातोः कर्मणि **अचो**यदिति यत्प्रत्यये वाहुलकाट्टिलोपे न्य इति निष्पद्यते । जायाभिरर्थवशात्पुंश्चलीस्त्रीभिर्यो न्य· आनेतु योग्यो रोगो जायान्यः उपदंशाख्यो रोगः, स हि प्रायेण दुष्टस्त्रीससर्गात्सङ्क्रामति, अस्य विस्तरः **सुश्रुते** द्रष्टव्यस्तथाहि—"तत्रातिमैथुनादतिब्रह्मचर्याद्वा तथा ब्रह्मचारिणीं चिरोत्सृष्टां रजस्वलां दीर्घरोमां कर्कशरोमां सङ्कीर्णरोमां निगूढरोमामल्पद्वारां महाद्वारामप्रियामकामामचौक्ष्यसलिलप्रक्षालितयोनिमप्रक्षालितयोनिं योनिरोगोपसृष्टां स्वभावतो वा दुष्टयोनिं वियोनिं वा नारीमत्यर्थमुपसेवमानस्य तथा करजदशनविषशूकनिपातनाद् वन्धनाद्धस्ताभिघाताच्चतुष्पदीगमनादचौक्ष्यसलिलप्रक्षालनादवपीडनाच्छुक्र मूत्र-वेगविधारणान्मैथुनान्ते वाऽप्रक्षालनादिभिर्मेढ्रम गम्य प्रकुपिताः दोषाः क्षतेऽक्षते वा श्वयथुमुपजनयन्ति, तमुपदंशमित्याचक्षते सु० नि. १२।७ ॥" तस्य रोगस्य द्वौ प्रकारौ भवतः । एको वाह्यो द्वितीयश्चाऽऽभ्यन्तर· । तत्राऽऽद्यः शोथकोथपिडकादिभिर्घोरलः परं सिद्धौषधैरुपक्रान्तश्शीघ्रप्रशान्तिशीलः, × **द्वितीयस्तु** कस्यचिदुपस्थमुखान्तश्चर्मणि सर्षपाऽऽकारा वेदनारहिता अल्पसङ्ख्याकपिडिका भूत्वा ज्ञाताऽज्ञातास्सन्त्यो नश्यन्ति । परमय कालविपाकेन वद्धमूलो भूत्वाऽऽखुविषमिव नानारूपाणि दर्शयन् दुरुपक्रमः सम्पद्यतेऽयं द्वितीयः पक्षः, इति कृत्वा **पक्षी** द्विप्रकारकः सन् पतत्यागच्छति । स च **पूरुषं आ स**मन्तात्सप्तधातुपर्यन्तं **विशति** तत्प्रवेशेन च **अक्षितस्य** गवाक्षवत् छिद्रसहस्रैर्व्याप्तोपस्थस्याऽथ च **सुक्षतस्य** प्रथमत एव क्षतयुक्तस्याऽर्थाद्वाह्याऽऽख्योपदंशस्य एवं कृत्वोभयोरुपदंशयोः कृते **पक्षी** पक्षीवपक्षी अग्नावुड्डयनशीलः तालक मनःशिला मल्लवलि तुत्थक नरसार दरद पारदविषकर्पूरभाण्डकर्पूराऽऽत्मको गणो**भेषज**मस्ति । तत्रापि रसेन्द्रो विशेषेणभेषजमस्ति । वर्तमानसमयेऽपि एतेषाम्मिश्रणविशेषैरेव वहुधोपदंशनिवर्तका योगाः सङ्कठिताः दृश्यन्ते । यथा—"दरदतालकमल्लमनःशिलाः, रसविषु विषद शिखितुत्थकम् । समभिद सकलं सुरया सम नवशरावयुगोद्धृतपाचितम् ॥ १७२८ ॥ मुनिमितैश्च कृतै रस पातनै, रसवरोविधुचन्द्रिकयासमः । युवतिदुष्टसमागमसम्भवान्, हरति सोमसमो विधिसेवितः ॥१७२७॥ **रसयोगसागरे** पृ० १८३ इत्यादि । सायणेनाऽयं मन्त्रो राजयक्ष्मपरत्वेन व्याख्यातस्तस्यमूलं "**यो हरिमा** जायान्योऽङ्गभेदो विसल्यकः । सर्वं ते यक्ष्ममङ्गेभ्यो वहिर्निर्हन्त्वाञ्जनम् " ॥ अथर्व का. १९।४४।२ इति मन्त्राऽऽगताऽर्थस्मरणम्—कर्मकाण्डनिष्ठस्य च तस्य चिकित्सायामनभिज्ञत्वेन भेषजशब्देन तन्मन्त्राभिमन्त्रितं वीणातन्त्रीखण्डादिरूपं भेषजंनिवर्तनौपयं भवतीति व्याख्यातं तदपि न श्रद्धास्पदं कर्मकाण्डलीनचित्ताः समग्रमपि वेदं विलक्षणाऽदृष्टजनकं मन्यन्ते तत्र नास्ति कश्चिदुपायः येन ते स्वाऽऽग्रहं परित्यजेयुरिति ।

वेदेऽक्षितः सुक्षितश्चेति प्रकारपरत्वेनद्वैविध्यमस्य रोगस्य दर्शितम् । सुश्रुतसंहितायान्तु दोषपरत्वेन पञ्चप्रकारा अस्य दर्शिता. । चरकसंहितायाञ्च ध्वजभङ्गजनितक्लैब्यरोगेऽन्तर्भावितस्तद्यथा—

वीजोपघातज क्लैब्यं ध्वजभङ्गकृतश्शृणु । अत्यम्ललवणक्षारविरुद्धाऽजीर्णभोजनात् ॥
अत्यम्बुपानाद्विषमात्पिष्टान्नगुरुभोजनात् । दधिक्षीरानूपमांससेवनाद् व्याधिकर्षणात् ॥
कन्यानां चैवगमनादयोनिगमनादपि । दीर्घरोगां चिरोत्सृष्टां तथैव च रजस्वलाम् ॥
दुर्गन्धां दुष्टयोनिं च तथैव च परिस्रुताम् । ईदृशीं प्रमदां मोहाद्यो गच्छेत्कामहर्षितः ॥
चतुष्पदाभिगमनाच्छेफसश्चाभिघाततः । अधावनाद्वा मेढ्रस्य शस्त्रदन्तनखक्षतात् ॥
काष्टप्रहारनिष्पेषाच्छूकानां चाऽतिसेवनात् । रेतसश्च प्रतीघाताद्ध्वजभङ्ग. प्रवर्तते ॥
भवन्ति यानि रूपाणि तस्य वक्ष्याम्यतः परम् । श्वयथुर्वेदना मेढ्रे रागश्चैवोपलक्ष्यते ॥
स्फोटाश्च तीव्रा जायन्ते लिङ्गपाको भवत्यपि । मांसवृद्धिर्भवेच्चास्य व्रणाः क्षिप्रंभवन्त्यपि ॥

पुलाकोदकसंकाशः स्रावः श्यावारुणप्रभः । वल्यीकुरुते चापि कठिनश्च परिग्रहः ॥
ज्वरस्तृष्णा भ्रमो मूर्च्छा च्छर्दिश्चास्योपजायते । रक्तं कृष्णं स्रवेच्चापि नीलमाविललोहितम् ॥
अग्निनेव च दग्धस्य तीव्रो दाहः सवेदनः । बस्तौ वृषणयो र्वापि सीवन्या वङ्क्षणेषु च ॥
कदाचित्पिच्छिलो वापि पाण्डुस्रावश्च जायते । श्वयथुश्च भवेन्मन्दस्तिमितोऽल्पपरिस्रवः ॥
चिराच्च पाकं व्रजति शीघ्रं वाऽथ प्रमुच्यते । जायन्ते क्रिमयश्चापि क्लिद्यते पूतिगन्धि च ॥
विशीर्यते मणिश्चाऽस्य मेढ्रं मुष्कावथापि च । ध्वजभङ्गकृतं क्लैब्यमित्येतत्समुदाहृतम् ॥
एवं पञ्चविधं केचिद् ध्वजभङ्गं वदन्त्यपि । चरक० चि० अ० ३ । १६२—१७५

Small Pox—अस्यापि रोगस्य नामनिदानरूपचिकित्सा, नाऽतिप्राचीना इति यथापाश्चात्या मन्यन्ते न तथा । एतत्तु पूर्वमेवाऽस्माभिरुक्तम्, देशकालयुगभेदेन रोगाणां स्वरूपादावपि स्तोकं भेदो जायते किन्तु प्राचीना अर्वाचीनाश्च आर्या रोगमेनमजानन् । पुराणेषु तन्त्रग्रन्थेषु चाऽऽस्य रोगस्य शीतलेति नाम, आयुर्वेदग्रन्थेषु त्वनेकक्षुद्ररोगसङ्करभूतोऽयं रोग । मसूरिका. स्फोटाश्चानेन रोगेण प्रायः सङ्गच्छन्ते यथा "दाहज्वररुजावन्तस्ताम्राः स्फोटाः सपीतकाः । गात्रेषु वदने चाऽन्तर्विज्ञेयास्ता मसूरिका "॥ सुश्रुत. नि. १३।३६

( २ ) Cholera—अयं रोगः पाश्चात्याऽऽधुनिकभिषग्भिरशुद्धपूतिगन्धजलोपयोगादुत्पद्यत इति मन्यते । जलद्वारैवाऽयं रोगः प्रायः सङ्क्रामति जलप्रायेषु च प्रदेशेष्वस्याऽऽधिक्यमिति च तन्मतम् । यद्यप्याधुनिका एनं रोगं सप्तदशोत्तराऽष्टादशशततमे खिष्टाऽब्दे प्रथममेवाऽवतीर्णं मन्यन्ते, किन्तु न केवलमार्याणां वेदादिष्वन्येषु चाऽऽयुर्वेदग्रन्थेष्वस्य नामसत्ताविवृतिश्च, किन्तु पाश्चात्यानामपि पुराणेषु ग्रन्थेष्वस्य नाम निदान सम्प्राप्तिचिकित्सा दृश्यन्ते । शुक्लयजुर्वेदसंहितायामस्य रोगस्य नाम **विपूचिकेति** वर्तते ( या व्याघ्रं विपूचिकोभौ वृकं च रक्षति । श्येनं पतत्रिणं सिंहं सेमं पात्वंहसः ॥ यजु० १९ । १० ) आयुर्वेदग्रन्थेष्वस्य रोगस्य **विसूचिकेति**नाम । युगे युगे पञ्चमहाभूतानामवस्थाभेदात्सर्वेषामेव रोगाणां यथाभूतावस्थं मन्दता तीव्रता वा जायते यतश्च बहूनां रोगाणां पुरा अद्य च सम्प्राप्तौ भेदो दृश्यते अतएव वेदीयाऽऽयुर्वेदीय विपूचिकाविसूचिकयोरपि वर्तमानकौलेराख्यरोगात्कोऽपि भेदः न ऽसम्भवः । किन्तु निदानमारभ्याऽऽसम्प्राप्ति प्रायेण विसूचिकारोगान्नाऽयं भिद्यते—

अजीर्णमामं विष्टब्धं विदग्धञ्च यदीरितम् । विसूच्यलसकौ तस्माद्भवेच्चापि विलम्बिका ॥
सूचीभिरिव गात्राणि तुदन्संतिष्ठतेऽनिलः । यस्याऽजीर्णेन सा वैद्यै रुच्यते हि विसूचिका ॥
न तां परिमिताऽऽहारा लभन्ते विदितागमाः । मूढास्तामजितात्मानो लभन्ते कलुषाशयाः ॥
मूर्च्छातिसारौ वमथुः पिपासा शूलं भ्रमोद्वेष्टनजृम्भदाहाः । वैवर्ण्यकम्पौ हृदये रुजश्च भवन्ति यस्यां शिरसश्च भेदः ॥
कुक्षिरानह्यतेऽत्यर्थं प्रताम्यति विकूजति । निरुद्धो मारुतश्चापि कुक्षौ विपरिधावति ॥
वातवर्चोनिरोधश्च कुक्षौ यस्य भृशं भवेत् । तस्याऽऽलसकमाचष्टे तृष्णोद्गारावरोधकौ ॥
दुष्टं तु भुक्तं कफमारुताभ्यां प्रवर्तते नोर्ध्वमधश्च यस्य । विलम्बिकां तां भृशदुश्चिकित्स्यामाचक्षते शास्त्रविदः पुराणाः ॥
यत्रस्थमामं विरुजेत्तमेव देशं विशेषेण विकारजातैः । दोषेण येनावततं स्वलिङ्गैस्तं लक्षयेदामसमुद्भवैश्च ॥
यः श्यावदन्तौष्ठनखोऽल्पसंज्ञश्छर्दर्दितोऽभ्यन्तरयातनेत्रः । क्षामस्वरः सर्वविमुक्तसन्धिर्यायान्नरः सोऽपुनरागमाय ॥
साध्यासु पार्ष्ण्योर्दहनं प्रशस्तमग्निप्रतापो वमनं च तीक्ष्णम् । पक्वे ततोऽन्ने तु विलङ्घनं स्यात्सम्पाचनं चापि विरेचनञ्च
विशुद्धदेहस्य हि सद्य एव मूर्च्छातिसारादिरुपैति शान्तिम् । आस्थापनं चापि वदन्ति पथ्यं सर्वासु योगानपरान्निबोध

सु. उ. ५६।३—१३

तं द्विविधमामप्रदोषमाचक्षते भिषजः—विसूचिकामलसकञ्च । तत्र विसूचिकामूर्ध्वं चाधश्च प्रवृत्तामदोषां यथोक्तरूपा विद्यात् ॥ १४ ॥

अलसकमुपदेक्ष्यामः—दुर्बलस्याल्पाग्नेर्बहुश्लेष्मणो वातमूत्रपुरीषवेगविधारिणः स्थिरगुरुबहुरूक्षशीतशुष्काऽन्नसेविनस्तदन्नपानमनिलप्रपीडितं श्लेष्मणा च विबद्धमार्गमतिमात्रप्रलीनमलसत्वान्नबहिर्मुखीभवति, ततश्छर्द्यतीसारवर्ज्यान्यामप्रदोषलिङ्गानि यथोक्तान्यभिदर्शयत्यतिमात्राणि, अतिमात्रप्रदुष्टाश्च दोषाः प्रदुष्टामबद्धमार्गास्तिर्यग्गच्छन्तः कदाचित्केवलमेवास्य शरीरं दण्डवत्स्तम्भयन्ति, ततस्तमलसकमसाध्यं ब्रुवते ॥१५॥

विरुद्धाध्यशनाजीर्णाशनशीलिनः पुनरामदोषमामविषमित्याचक्षते भिषजः, विषसदृशलिङ्गत्वात्, तत्परमसाध्य, आशुकारित्वाद्विरुद्धोपक्रमत्वाच्चेति ॥ १६ ॥ इत्यादि ॥ चरक वि. अ. २

एवंविधा बहवो रोगाः पाश्चात्यैः केवलं क्रिमिजन्या मन्यन्ते, आयुर्वेदे त्वेतादृशाः सर्वेष्यागन्तुषु यथा सिंहव्याघ्रर्क्षतरक्ष्वादयः स्थूलजन्तवः कारणानि सन्ति तथा नानाऽऽकारा स्सूक्ष्माऽतिसूक्ष्माः क्रिमयो व्याधिकारणेषु निविशन्ते तद्यथा-रोगाणा निदानानि ( कारणानि ) अपरिसङ्ख्येयानि भवन्ति तेष्वागन्तुषु क्रिमयो विशेषेण कारणानि अदृष्टत्वेन तेषा दुष्परिहार्य्यत्वात् । तेषाञ्च क्रिमीणा परिसर्पणशीलत्वात्सर्पा इति तत्तद्वेदनासमूहस्य कारणत्वाद्यातुधाना इति च नाम यजुर्वेदे स्थापितम् । तथाहि—"**नमोऽस्तु** सर्पेभ्यो ये के च पृथिवीमनु । ये अन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नमः ॥ वा. स. १३।६ ॥भा०" ये सर्पाः—सर्पणशीलाः क्रिमयः **पृथिवीं** पार्थिवद्रव्यम**नु** लक्षीकृत्य तत्साहाय्येनेत्यर्थः । ये **अन्तरिक्षे** वायुमण्डले **ये च दिवि** द्युलोके आकाशपरमाणुषु सर्पन्ति-सर्वतो भ्रमन्ति तन्मयत्वाल्लोकस्य, तेभ्यो नमोऽस्तु मदीयनमस्कारेण तुष्टास्ते अबाधका भवन्त्वित्यर्थः ॥ ६ ॥ ननु तेभ्यो नमस्करणे किम्प्रयोजनमित्याह—" **या इषवो** यातुधानाना ये वा वनस्पती१ँ॥रनु । ये वाऽवटेषु शेरते तेभ्यः सर्पेभ्यो नमः॥१३।७॥भा०" **याः** क्रिमिसृष्टयो **यातुधानानां** यातुं वेदना दधतीति यातुधाना विविधवेदनोत्पादकाना यक्षरक्षःपिशाचादीनां **इषवः** बाणा इव दुःखोत्पादकारणानि सन्ति, ननु कथमेतत्स्यादित्यत आह—**ये वनस्पतीः** स्थूल सूक्ष्मप्राणिमात्राऽऽहारसाधना**न्यनु** लक्षीकृत्य वर्तन्ते । अथच ये **अवटेषु** अवनतप्रदेशेषु **शेरते** तेभ्यः सर्पेभ्यो नमोऽस्तु ॥ ७ ॥ तेषा साधारणस्थानानि निर्दिश्योत्कृष्टस्थानानि निर्देष्टुमाह—" **ये ऽवामी** रोचने दिवो ये वा सूर्यस्य रश्मिषु । येषामप्सु सदस्कृत तेभ्यः सर्पेभ्यो नमः ॥ १३।८॥ **दिवो** द्युलोकस्य सम्बन्धिनि **रोचने** प्रकाशमयस्थाने **ये च** सूर्यस्य रश्मिषु वर्तन्ते येषाञ्च अप्सु समस्तजगज्जीवनाऽऽधारेषु **सदस्कृतं** स्थानं वर्तते तेभ्यः सर्वेभ्य स्सर्पणशीलेभ्यो नमोऽस्तु। अत्र **शतपथे** अग्नावात्मनि च प्राधान्यं निर्दिश्य लोकास्सर्वे परिभ्रमणशीला स्सन्तीति विज्ञाप्य ते अग्न्यात्माऽधीना इत्यर्थं निर्दिश्योपरिनिर्दिष्टार्थः प्रतिपादितस्तथाहि—" अथ सर्पनामैरुपतिष्ठते । इमे वै लोकाः सर्पास्ते हाऽनेन सर्वेण सर्पन्ति यदिदं किञ्च सर्वेषामु हैष देवानामात्मा यदग्निस्ते देवा एतमात्मानमुपधायाऽबिभयु र्यद्वै न इमे लोका अनेनाऽऽत्मना न सर्पेयुरिति ॥ २५ ॥ त एतानि सर्पनामान्यपश्यन् । तैरुपातिष्ठन्त तैरस्माऽइमा लोकानस्थापयस्तै रनमयन्यदनमयस्तस्मात्सर्पनामानि । तथैवैतद्यजमानो यत्सर्पनामैरुपतिष्ठत ऽइमानेवास्माऽएतल्लोकान्स्थापयतीमा लोकान्नमयति तथो हास्यैत ऽएतेनात्मना न सर्पन्ति ॥ २६ ॥ यद्वेव सर्पनामैरुपतिष्ठतऽइमे वै लोकाः सर्पा यद्धि किं च सर्पत्येष्वेव तल्लोकेषु सर्पति तद्यत् सर्पनामैरुपतिष्ठते । यैनेषु लोकेषु नाष्ट्रा ( अतिक्रूराः ) यो व्यद्वरो ( व्यदनशीलो दन्दशूकादिः ) या शिमिदा ( विषहेतुर्वृश्चिकादिः ) तदेवैतत्सर्वं शमयति ॥ २७ ॥ नमोऽस्तु सर्पेभ्यो ये के च पृथिवीमनु । येऽन्तरिक्षे ये दिवि तेभ्यः सर्पेभ्यो नम इति । य एवैषु त्रिषु लोकेषु सर्पास्तेभ्य एतन्नमस्करोति ॥ २८ ॥ **या इषवो** यातुधानानामिति । यातुधानप्रे-

पिता हैके दशन्ति ये वा वनस्पतीँरनु ये वाऽवटेषु शेरते तेभ्य एतन्नमस्करोति ॥ २९ ॥ ये वाऽमी रोचने दिवो । ये वा सूर्यस्य रश्मिषु येषामप्सु सदस्कृतं तेभ्यः सर्पेभ्यो नम इति । यत्र यत्रैते तदेवैभ्य एतन्नमस्करोति नमो नम इति । यज्ञो वै नमो यज्ञेनवैनानेतन्नमस्कारेण नमस्यति तस्माद्ध ह नायज्ञिय ब्रूयान्नमस्तऽइति । यथा हैन ब्रूयाद्यज्ञस्तऽइति तादृक् तत् ॥ ३० ॥ शत० ७ प्र. ३।१।२४ ॥ ”

इदं प्रकरणमथर्ववेदे सूक्तत्रयेण स्पष्टतया प्रतिपादितम् तथाहि—

“ इन्द्रस्य या मही ” इति सूक्तेन शरीरगतविविधक्रिमिरोगेषु तच्छान्तये घृतमिश्रान् कृष्णचणकान् जुहुयात् । तथा गोवालवेष्टित शरकाण्ड साभिद्य अग्नौ प्रताप्य आदध्यात् । एवमेव रथ्यापासु सव्यहस्तेनाऽऽदाय दक्षिणहस्तेन सम्मृज्य दक्षिणामुखः एतत्सूक्त जपन् व्याधितस्योपरि किरति ॥

तथैव एतत्सूक्त जपन् व्याधितो हस्ताभ्यां पासु मर्दयेत् । तथा अनेन सूक्तेन पलाशोदुम्बरादयाः समिध आदध्यात् । तदुक्त कौशिकेन । “ इन्द्रस्य या महीति खल्वाङ्गान् अलाण्डुहननान् घृतमिश्रान् जुहोति । वालान् असितकाण्डे सव्यं परिवेष्ट्य सम्भिनत्ति प्रतपत्यादधाति सव्येन दक्षिणामुखः पासुमुपमथ्य परिकिरति सम्मृद्वात्यादधाति ” इति ( कौ. ४–३ ) ॥

**इन्द्रस्य** या मही दृषत् क्रिमे विश्वस्य तर्हणी । तया पिनष्मि स क्रिमीन् दृषदा खल्वाँ इव ॥ १ ॥

सा०भा० इन्द्रस्य देवस्य सम्बन्धिनी या **मही** महती । **दृषत्** शिलास्ति । तामेव विशिनष्टि । **विश्वस्य** सर्वस्य क्रिमेस्त**र्हणी** हन्त्री । तया उक्तप्रभावया दृषदा **क्रिमीन्** शरीरान्तर्गतान् सर्वान् क्षुद्रजन्तून् **सम्पिनष्मि** संचूर्णयामि । तत्र दृष्टान्तः । दृषदा पेषण्या **खल्वान्** चणकानिव ॥ १ ॥

**दृष्टम**दृष्टमतृहमथो कुरीरमतृहम् । अलाण्डून्त्सर्वाञ्छलुनान् क्रिमीन् वचसा जम्भयामसि ॥ २ ॥

सा०भा० **दृष्टम्** चक्षुर्गोचरम् **अदृष्टम्** तदगोचरम् अन्तरवस्थित क्रिमिजातम् **अतृहम्** तृणेह्मि हन्मि । **अथो** अपि च कुरीरम् जालम् । तद्वद् अन्तरवस्थित क्रिमिकुलम् अतृहम् । नाशयामीत्यर्थः । तानेव विशेषतो दर्शयति अलगण्डून् इति । एतन्नाम्नः क्रिमिविशेषान् **शलुनान्** एतन्नाम्नश्च सर्वान् अन्यानपि क्रिमीन् **वचसा** मन्त्रेण जम्भयामसि जम्भयामः नाशयामः ।

**अलगण्डून्** हन्मि महता वधेन दूना अदूना अरसा अभूवन् ।
शिष्टानशिष्टान् नि तिरामि वाचा यथा क्रिमीणा नकिरुच्छिषातै ॥ ३ ॥

सा० भा० अलगण्डून्=शोणितमासदूषकान् जन्तून् **महता** प्रभूतेन **वधेन** हननसाधनेन मन्त्रौषधादिना हन्मि । ते च दूनाः मत्कृतौषधादिना परितप्ताः **अदूनाः** अपरितप्ताश्च ये सन्ति ते सर्वे **अरसाः** शुष्का निर्जीवा अभूवन् । तथा शिष्टान् कान् । **अशिष्टान्** प्राग् अहतान् क्रिमिविशेषान् **वाचा** मन्त्रेण **नितिरामि** निहन्मि । **यथा** येन प्रकारेण **क्रिमीणां** नानाविधाना मध्ये कश्चिदपि **नकिः** उच्छिषातै नैवोच्छिष्यात् । तथा नि तिरामीति सम्बन्धः ॥ ३ ॥

**अन्वान्त्र्यं** शीर्षण्यमथो पार्ष्टेयं क्रिमीन् । अवस्कवं व्यध्वरं क्रिमीन् वचसा जम्भयामसि ॥ ४ ॥

सा०भा० **अन्वान्त्र्यं** अनुक्रमेण आन्त्रेषु भव क्रिमिजातं **शीर्षण्यम्** शिरसिभव च । **अथो अपि** च पार्ष्टेयम् पृष्ठिभवं क्रिमिम् । एतान् उक्तान् क्रिमीन् । जम्भयामसीत्युत्तरत्र सम्बन्धः । **अवस्कवम्** अवागमनस्वभावम् । अन्तरन्तः प्रविश्य वर्तमानमित्यर्थः । **व्यध्वरम्** विविधमार्गोपेतम् । नानाद्वाराणि कृत्वा तत्र गच्छन्तमित्यर्थः ।

यद्वा ध्वरो हिंसा विविधैरौषधादिभिरपि न विद्यते ध्वरो यस्य स तथोक्तः । एव नानाजातीयान् सर्वान् क्रिमीन् वचसा मन्त्रेण जम्भयामसि जम्भयामः ॥ अथर्व० २।३१।४ ॥

**ये क्रिमयः** पर्वतेषु वनेष्वोषधीषु पशुष्वप्स्वन्तः । ये अस्माक तन्वमाविविशुः सर्व तद्धन्मि **जनिम** क्रिमीणाम् ॥

पर्वतादिषु **अन्तः** मध्ये ये क्रिमयः स्थिताः तेऽस्माक **तन्वः** तनूः शरीराणि आविविशुः व्रणमुखेन अन्नपानादिद्वारेण वा प्रविष्टाः । सर्वं निरवशेष **तत्** उक्तविध क्रिमीणा **जनिम** जन्म उत्पत्तिमेव हन्मि नाशयामि ॥ ५ ॥ अथर्व० २।३१ इति प्रथमम् सूक्तम्

षष्ठे अनुवाके पञ्चसूक्तानि । तत्र " उद्यन्नादित्यः " इति प्रथमसूक्तेन गोक्रिमिभैषज्यकर्मणि सन्ध्यात्रयेऽपि क्रिमियुतव्रणमुख दर्भैस्ताडयेत् । तथा अनेन सूक्तेन साऽऽज्यकृष्णचणकहोमादिक पूर्वसूक्तोक्तप्रकारेणैव कुर्यात् । सूत्रित हि । " उद्यन्नादित्य इत्युद्यति गोनामेत्याह असाविति । सूक्तान्ते **ते हता** इति दर्भैरभ्यस्यति मध्यन्दिने च प्रतीचीम् अपराह्णे बालस्तुकाम् आच्छिद्य खल्वादीनि " इति ( कौ. ४–३ ) ॥

**उद्यन्नादित्यः** क्रिमीन् हन्तु निम्रोचन् हन्तु रश्मिभिः । ये अन्तः क्रिमयो गवि ॥ १ ॥

**आदित्यः** उद्यन् उदय प्राप्नुवन् **रश्मिभिः** व्यापनशीलैः स्वकिरणैः **क्रिमीन् हन्तु** हिनस्तु । **निम्रोचन् अस्तं** गच्छंश्च रश्मिभिः क्रिमीन् हन्तु । कुत्रत्यान् क्रिमीन् इति तत्राह ये क्रिमयः गवि । जातावेकवचनम् । गोशरीरेषु **अन्तः** मध्ये सन्ति । तान् क्रिमीन् इति पूर्वत्र सम्बन्धः ॥ अथर्व० २।३२।१ ॥

**विश्वरूपं** चतुरक्ष क्रिमिं सारङ्गमर्जुनम् । शृणाम्यस्य पृष्टीरपि वृश्चामि यच्छिरः ॥ २ ॥

**विश्वरूपं** नानाकारं **चतुरक्षम्** चतुर्नेत्रम् सारङ्गं=शवलवर्णम् **अर्जुनम्** शुभ्रवर्णम् एव अनेकाऽऽकारं क्रिमिं शृणामि हन्मि । अस्य उक्तलक्षणस्य क्रिमेः**पृष्टीः**पार्श्वावयवानपि **यच्छिरः** शरीरान्तर्गतमासादिभक्षकं प्रधानं अङ्गं तदपि वृश्चामि छिनद्मि ॥ अथर्व० २।३२।२ ॥

**अत्रिवद्** वः क्रिमयो हन्मि कण्ववज्जमदग्निवत् । अगस्त्यस्य ब्रह्मणा सं पिनष्म्यहं क्रिमीन् ॥ ३ ॥

हे क्रिमयः वः युष्मान् **अत्रिवत् कण्ववत्** । **जमदग्निवत्** ते यथा मन्त्रसामर्थ्यात् क्रिमीन् निघ्नन्ति एवं अहमपि हन्मि । तथा अगस्त्यस्य महर्षे ब्रह्मणा मन्त्रेण अहं क्रिमीन् सर्वान् सम्पिनष्मि पुनरुद्भवो यथा न भवति तथा नाशयामि । एतेषा क्रिमिनिवारकत्व श्रुत्यन्तरे प्रसिद्धम् । " अत्रिणा त्वा क्रिमे हन्मि कण्वेन जमदग्निना विश्वावसो ब्रह्मणा हतः । " इति ॥ अथर्व० २।३२।३ ॥

**हतो** राजा क्रिमीणामुतैषा स्थपति र्हतः । हतो हतमाता क्रिमि र्हतभ्राता हतस्वसा ॥ ४ ॥

**क्रिमीणां** राजा हतः अस्मत्प्रयुक्तमन्त्रौषधादिना नष्टः । **उत** अपि च एषा क्रिमीणा **स्थपतिः** सचिवो एव **हतमाता** नष्टमातृकः **हतस्वसा** नष्टभगिनीकश्च **क्रिमिर्हतः** नष्टः । सस्वामिक सामात्य सबान्धवं कृत्स्न क्रिमिकुल निरवशेष नष्टमित्यर्थः ॥ अथर्व० २।३२।४ ॥

**हतासो** अस्य वेशसो हतासः परिवेशसः । अथो ये क्षुल्लका इव सर्वे ते क्रिमयो हताः ॥ ५ ॥

अस्य क्रिमिकुलस्य **वेशसः** निवेशनस्थानानि मुख्यगृहा हतासः हताः । एव **परिवेशसः** परितः स्थिताः समीपगृहाश्च **हतासः** हताः । **अथो** अपिच ये **क्षुल्लका** इव बीजावस्थाः सूक्ष्मरूपा दुर्लक्ष्याः क्रिमयः सन्ति ते सर्वेऽपि क्रिमयः **हताः** नाशिताः ॥ अथर्व० २।३२।५ ॥

**प्र ते** शृणामि शृङ्गे याभ्या वितुदायसि । भिनद्मि ते कुषुम्भ यस्ते विषधानः ॥ ६ ॥

हे **क्रिमे ते** त्वदीये श्रृङ्गे विषाणे प्र **श्रृणामि** प्रभिनद्मि **याभ्यां** श्रृङ्गाभ्यां **वितुदायसि** विशेषेण तुदसि व्यथयसे। ते इति सम्बन्धः। **ते** तव कुकम्भम् (कुपुम्भम्) अवयवविशेषं भिनद्मि विदारयामि। तमेवाऽवयवं विशिनष्टि। **ते** तव सम्बन्धी यः अवयवः विषधानः। विषं धीयतेऽस्मिन्निति **विषधानः** विषस्थानम्। तम् इति पूर्वत्र सम्बन्धः॥ ६॥ अथर्व० २।३२॥ इति द्वितीयम्॥

**ओतो मे द्यावापृथिवी ओता** देवी सरस्वती। ओतौ म इन्द्रश्चाग्निश्च क्रिमिं जम्भयतामिति॥ अथर्व. ५।२३।१॥
**अस्येन्द्र** कुमारस्य क्रिमीन् धनपते जहि। हता विश्वा अरातय उग्रेण वचसा मम॥ २॥
**यो अक्ष्यौ** परिसर्पति यो नासे परि सर्पति। दतां यो मध्यं गच्छति तं क्रिमिं जम्भयामसि॥ ३॥
**सरूपौ** द्वौ विरूपौ द्वौ कृष्णौ द्वौ रोहितौ द्वौ। बभ्रुश्च बभ्रुकर्णश्च गृध्रः कोकश्च ते हताः॥ ४॥
**ये क्रिमयः** शितिकक्षा ये कृष्णाः शितिबाहवः। ये के च विश्वरूपास्तान् क्रिमीन् जम्भयामसि॥ ५॥
**उत पुरस्तात्** सूर्य एति विश्वदृष्टो अदृष्टहा। दृष्टांश्च घ्नन्नदृष्टांश्च सर्वांश्च प्रमृणन् क्रिमीन्॥ ६॥
**ये वापासः** कष्कषास एजत्काः शिपवित्नुकाः। दृष्टश्च हन्यतां क्रिमिरुतादृष्टश्च हन्यताम्॥ ७॥
**हतो येवापः** क्रिमीणां हतो नदनिमोत। सर्वान् नि मष्मषाकरं दृषदा खल्वाँ इव॥ ८॥
**त्रिशीर्षाणं** त्रिककुदं क्रिमिं सारङ्गमर्जुनम्। श्रृणाम्यस्य पृष्टीरपि वृश्चामि यच्छिरः॥ ९॥
**अत्रिवद्** वः क्रिमयो हन्मि कण्ववज्जमदग्निवत्। अगस्त्यस्य ब्रह्मणा सं पिनष्म्यहं क्रिमीन्॥ १०॥
**हतो** राजा क्रिमीणामुतैषां स्थपतिर्हतः। हतो हतमाता क्रिमिर्हतभ्राता हतस्वसा॥ ११॥
**हतासो** अस्य वेशसो हतासः परिवेशसः। अथो ये क्षुल्लका इव सर्वे ते क्रिमयो हताः॥ १२॥
**सर्वेषां च** क्रिमीणां सर्वासां च क्रिमीणाम्। भिनद्म्यश्मना शिरो दहाम्यग्निना मुखम्॥ १३॥

अथर्व० का. ५।२३।१—१३ (इति तृतीयम्)

इदमेव प्रकरणं ऋग्वेदेऽपि वर्तते यथा—

**कङ्कतो न कङ्कतोऽथो सतीनकङ्कतः। द्वाविति प्लुषी इति न्य१दृष्टा अलिप्सत॥** ऋ० वे० १।१९१।१

**कङ्कतः**—अल्पविषः कश्चि**न्नकङ्कतः**—तद्विपरीतः अनल्पविषो महारोगादिः तकतेर्गत्यर्थस्य वर्णव्यत्ययेन कङ्कत इति अतन् भवति। **अथो** अपिच **सतीनकङ्कतः**—सतीनमित्युदकनाम सतीनं गहनमिति तन्नामसुपाठात्। उदकचारी अल्पविषवान् कश्चित् डुण्डुभादिः एवं **द्वाविति** अल्पविषमहाविषभेदेन जलस्थलभेदेन वा द्विप्रकारौ इति **प्लुषी**—इति। प्लोषणाविति प्रकारद्वैविध्य दाहकत्वयो प्रतिपादनायेतिकारद्वयम् तथा **अदृष्टा**=अदृश्यमानरूपा एतत्सञ्ज्ञकाश्च केचित् विषधरा एवमुक्तप्रकारा ये सन्ति ते नूनं मा **न्यलिप्सत**—नि शेषेण लिम्पन्ति सर्वाण्यङ्गानि विषेणाऽऽवृण्वन्ति केनैव कृतमिति न ज्ञायते इति भाव॥ १॥

Venomous, slightly venomous, or venomous aquatic Worms—
Both creatures, stinging, unobscured, with poison have inflicted me.

**अदृष्टान्हन्त्यायत्यथो हन्ति परायती। अथो अवघ्नती हन्त्यथो पिनष्टि पिंषती॥ २॥**

अनेन विषघ्न्योषधि स्तूयते **आयति**=विषदष्टस्य सकाशमागच्छन्ती विषनिर्हरणसाधनौषधि **अदृष्टान्**—अदृश्यमानान् विषधरान् **हन्ति**=हिनस्ति **अथो**—अपिच **परायती**—परागच्छन्ती सम्मार्जनसमये वाक् प्रवृत्ता हन्ति नाशयति जलचरविषधरान् **अथो**=अपिच **अवघ्नति**—कर्मणि कर्तृप्रत्यय अवहन्यमानौषधि स्वगन्धेन हन्ति बहुविषान् यद्वा—काचिदौषधिः दशकान्मारयत्येव। अथो=अपिच **पिंषती** पेषण कर्त्री दृषत्पिष्यमाणा वौषधि **पिनष्टि**—चूर्णीकरोत्यल्पविषान्। अथवा सर्वेषु वाक्येष्वविशेषेण सर्वविषकारिणा नाश उक्त॥ ऋ० १।१९१।२॥

Coming, it kills the unobserved, it kills them as it goes away,
It kills them as it drives them off, and bruising bruises them to death.

शरासः कुशरासोदर्भासः सैर्या उत । मौञ्जा अदृष्टा वैरिणाः सर्वे साकं न्यलिप्सत ॥३॥

अन्याश्च विषहेतूनाह—**शरासः**=शरा वेणुदण्डसदृशा अन्तश्छिद्रास्तृणविशेषाः **कुशरासः**=कुत्सितशरा अल्पच्छिद्राः शरसदृशा तृणविशेषा **दर्भासो**—दर्भा —कुशा सैर्या तटाकादिप्रान्तोद्भवास्तृणविशेषा अश्ववाला इति प्रसिद्धा **उतापिच मौञ्जाः**—मुञ्जा प्रसिद्धा **वैरिणाः**—वीरणप्रकारा एतेषु वर्तमाना **अदृष्टाः**—उक्तरूपा सर्वे विषधरा **साकं**—मिलित्वा **न्यलिप्सत**=निलिपन्ति स्म ॥ ऋ १।१९१।३ ॥

Śara grass, Darbha, Kuśara, and Sairya, Munja, Virama,
Where all these creatures dwell unseen, with poison have infected me.

निगावो गोष्ठे असदन्नि मृगासो अविक्षत । नि केतवोजनानां न्य१दृष्टा अलिप्सत ॥४॥

**गावो गोष्ठे न्यसदन्** निषीदन्ति **मृगासो**=मृगा **न्यविक्षत** निविष्टा स्वस्वस्थान उपरता **जनानां** प्राणिना **केतवः** प्रज्ञानानि उपसर्गश्रुतेर्योग्यक्रियाध्याहार नीचान्यभवन् एतस्मिन् समये अदृष्टा अदृश्यमानरूपा सन्तो **न्यलिप्सत** निलिम्पन्ति विशेषेण ॥ ऋ १।१९१।४ ॥

The cows had settled in their stalls, the beasts of prey had sought their lairs
Extinguished were the light of men, when things unseen infected me.

एत उ त्ये प्रत्यदृश्रन्प्रदोषं तस्करा इव । अदृष्टा विश्वदृष्टाः प्रतिबुद्धा अभूतन ॥५॥

**त्ये**-ते एते सर्पा **प्रत्यदृश्रन्**=प्रतिदृश्यन्ते रात्रौ श्वासादिलिङ्गेन। उः पूरण यद्वा ते रात्रौ हन्तारः दिवा एते प्रतिदृश्यन्ते तत्र दृष्टान्त —**प्रदोषं**=रात्रिर्दोषा रात्रिं प्रति तमसाभिभूतासु रात्रिषु **तस्करा इव**=हिंसकाश्चोरा दृश्यन्ते तथा तद्वत् कीदृगास्ते **अदृष्टाः**—अपरिदृश्यमाना **विश्वदृष्टाः**=विश्वं दृष्टं यैस्ते तादृशा प्रतिदृश्यन्ते अतो हे नरा **प्रतिबुद्धा–अभूतन**—भवत ॥ ऋ १।१९१।५ ॥

Or these, these .... are obscured, like lurking thieves at evening time,
Seer of all, themselves unseen be therefore very Vigilant

द्यौर्वः पिता पृथिवी माता सोमो भ्राता दितिः स्वसा । अदृष्टा विश्वदृष्टास्तिष्ठतेलयता सु कम् ॥६॥

अत पर **विषचिकित्सा**—तत्रतावत् हे सर्पा **वो**=युष्माक **द्यौः पिता पृथिवीमाता सोमोभ्राता=अदिति**-र्देवमाता **स्वसा** एव महानुभावा महोरगा **अदृष्टाः**—अन्यैरदृश्यमानरूपा स्वय तु **विश्वदृष्टाः**—सर्वस्य द्रष्टारो यूय **तिष्ठत** स्वस्वस्थाने सांप्रति मागच्छत **सु**—सुतरा **कं**—सुख यथातथा **इलयत**=ईरयत गच्छत सोमशब्देन सोमाधारो=द्युलोक उच्यते पृथिव्यन्तरिक्षद्युस्थानस्थाः सर्पा स्वस्वस्थान प्राप्नुत अस्मद्बाधा माकुरुतेत्यर्थ ॥ ६ ॥

Heaven is your sire, your mother earth, Soma your brother.
Diti your sister, seeing all unseen keep still and dwell ye happily.

ये अंस्या ये अङ्ग्याः सूचीका ये प्रकङ्कताः । अदृष्टाः किञ्चनेह वः सर्वे साकं नि जस्यत ॥७॥

ये **अंस्याः**=असार्हाः अंसगाः अंसे भवाः अंसाभ्यां खादन्तोवा तथा ये **अङ्ग्याः**—अङ्गगा अङ्गेन शरीरेण हन्तारोवा लूतिकादय **सूचीकाः**—सूचीदृशः पुच्छरोमाणो वृश्चिकाद्या येच **प्रकङ्कताः**=प्रकृष्टविषा प्रकृष्टगामिनो वा महोरगाः **अदृष्टाः**=अदृश्यमानाः **किञ्चन**—यत्किञ्चित्सर्पजातमस्ति इहाऽस्मिन् समीपे **वो**=युष्माक किमस्ति अतः यूय सर्वे **साकं**—सह **नि जस्यत**—मुञ्चतास्मान् जसु–मोक्षणे दैवादिक ॥ ऋ० १।१९१।७ ॥

Biters of shoulder or of limb, with needle-stings, most venomous,
Unseen whatever ye may be, vanish together and be gone.

**उत्पुरस्तात्सूर्य एति विश्वदृष्टो अदृष्टहा । अदृष्टान्त्सर्वाञ्जम्भयन्त्सर्वाश्च यातुधान्यः ॥ ८॥**

असौ सूर्य **पुरस्तात्**पूर्वस्या दिशि **उत्**=उदेति कीदृश स **विश्वदृष्टः**—विश्वे द्रष्टव्या यस्य स तादृश **अदृष्टहा**—अदृष्टा विषविशेषा विषधरविशेषा वा तेषा हन्ता । यद्वा अदृष्टदर्शनमज्ञान अन्धकारस्तस्य हन्ता सूर्ये उदिते सति सर्वे विषधरा विषाणि वा पलायन्ते किंकुर्वन्नुदेतीति चेदुच्यते—**सर्वान् अदृष्टान्**=अद्रष्टव्यान् विषराक्षसादीन **जम्भयन्**=हिंसयन् तथा **सर्वायातुधान्यश्च**—यातवो यातना तीव्रवेदना तासा धात्रीरुत्पादयित्रीर्महोरगी राक्षसीर्वा **जम्भयन्**—पुरस्तादुदेति अ-तोऽस्मत्तोनिजस्यतेति सम्बन्ध ॥ ऋ०१।१९१।८ ॥

Slayer of things unseen, the sun, beheld of all mounts, eastward up,
Consuming of that are not seen, and evil spirits of the night.

**उदपप्तदसौ सूर्य पुरु विश्वानि जूर्वन् । आदित्य· पर्वतेभ्यो विश्वदृष्टो अदृष्टहा ॥ ९॥**

**असौ**—पुरस्ताद् दृश्यमान **सूर्यः**—सर्वस्य प्रेरक आदित्य **उदपप्तत्**—ऊर्ध्व गच्छति पततेर्लुङ्टि पुषादित्वादङ् **निकुर्वन्** **विश्वानि**=बहूनि विषाणि **पुरु** प्रभूतं **जूर्वन्**—हिंसन् कीदृशोऽसौ **पर्वतेभ्यः**—पर्ववद्भ्य प्राणिभ्य तेषामुपकाराय **आदित्य** विषोदकादीनामदनशील **विश्वदृष्टः**=विश्व दृष्ट येन तादृश **अदृष्टहा**=अदृष्टाना विषविशेषाणा हन्ता एव महानुभाव सूर्य ऊर्ध्वमारोहति अतो विषशङ्का न कार्या ॥ ऋ०१।१९१।९ ॥

There hath the sun-god mounted up, who scorches much and everything,
Even the Aditya from the hills, all seen, destroying things unseen.

**सूर्ये विषमासजामि दृतिं सुरावतो गृहे । सोचिन्नु न मराति नो वयं मरामाऽऽरे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥ १० ॥**

आदित्यमण्डले चतुर्थेनाऽङ्गुलिना विषमादाय मधुकृत्य योजयित्वा निर्विषोभवेदिति यदेतद्विषविद्यायामुक्त तदिदमत्रोच्यते-**अहं**—विषाद्भृतोऽगस्त्य **सूर्ये**—सर्वस्य प्रेरयितरि मधुविद्यारूपे सूर्यमण्डले विषमाहृत्य वर्तमान सूर्ये **आसजामि**—आसक्त करोमि तत्र दृष्टान्त —**सुरावतो गृहे** सुरानिर्मातृसद्मने **दृति**मिव चर्ममयसुरापात्रमिव यथा तत्कर्तु न दोषाय भवति तद्वद्विषमा-दित्यस्य न बाधकमित्यर्थ **सोचित्**—चितपूजाया **नुः**—प्रसिद्धौ पूज्य स सूर्य खलु **न मराति** न म्रियते नो वय **मराम**= तदनुग्रहात्तत्रैव विषस्य योजितत्वाद्वयमपि न म्रियामहे उभयोरमरणे कारणमाह—**हरिष्ठाः**=हरयोश्वा तेषु स्थित आदित्य **आरे**=दूरे **अस्य** विषस्य **योजनं** प्रापण **चकार**—तदेवोच्यते हेविष **त्वा**—त्वा **मधु** अमृत **चकार** विषस्य विषभाव दूरेऽपनोद्याऽमृतीचकारेति एवैव **मधुला** मधुदात्री निर्विषीकर्त्री मधुविद्या यद्वेतदादित्यस्य मण्डले विषयोजन तेन चाऽमृती-करण यदस्ति एषा मधुविद्या ॥ ऋ०१।१९१।१० ॥

I hang the poison in the sun, in a wine-skin in a winer's house.
He will not die, nor shall we die, his path is far, he whom—
Bay horses bear hath turned thee to sweetmeat.

**इयत्तिका शकुन्तिका सका जघास ते विषम् । सोचिन्नु न मराति नो वयं मरामारे अस्य योजनं हरिष्ठा मधु त्वा मधुला चकार ॥ ११ ॥**

**इयत्तिका**=इयत्ता कुर्वाणा इयत्तावती वा बालेत्यर्थ । **शकुन्तिका**=शकुन्त शकुन तस्य स्त्री ता कपिञ्जली-माहु **सका**—सा ते=तव विष **जघास** भक्षितवती सा=विषहर्त्रीति प्रसिद्धा **सोचित्**=साउ इति निपातसमुदाय एक पद साऽपि शकुन्तिका न म्रियते नित्यप्रतिपक्षत्वाद्विषस्य शिष्ट व्याख्यातचर । अनेन विद्याया यद्दहाऽऽहृत विष तस्य शकुनेभ्य आदित्याय च प्रदानमस्तीत्युक्त भवति ॥ ऋ०१।१९१।११ ॥

This little bird, so very small, hath swallowed all thy poison up,
She will not die, nor shall we die, his path is far, he whom—
Bay horses bear hath turned thee to sweetmeat.

इत्यादयो बहवो मन्त्रा दृष्टाऽदृष्टरोगोत्पादकक्रिमिविषजन्यरोगनाशकाः सन्ति, तत्र च ये क्रिमिविषजन्यरोगास्ते सङ्क्रामकाऽसङ्क्रामकभेदेन बहुविधाः सन्ति परन्तु तेषामायुर्वेदे सङ्क्रमणं शरीरबलापेक्ष भवतीति न परिगणितमन्यथैकसाङ्क्रामिकरोगिणः सम्पर्कात्समस्तजगत उपप्लवः स्यात्, यथा विसूचिकादावेकेनाऽपि रोगिणा समस्तदेशस्य प्रलयः स्यात् पारम्परिकससर्गस्य दुर्वारत्वात् । विसूचिकाग्रस्ताया मातुः स्तनन्धयस्याऽपि रोगाऽवस्थाया स्तन्यपान कुर्वतोऽपि रोगेणाऽग्रस्तस्य दृष्टत्वात् । तस्मात्साङ्क्रामिकरोगाणां सङ्क्रमणे जनाना जठरादिशक्तिबलाऽबलत्वमसाधारण कारणम् । अतः कीटाणुवादो न साक्षाद्रोगजनकत्वेन निर्दिष्टः किन्तु दोषा एव प्रधानतया कारणत्वेन ऋषिभिर्गणिताः सन्तीति तेषा सूक्ष्मदर्शिता विचार्य हठ हित्वा ते नितरां धन्यवादार्हा इति स्वीकरणीयम् ।

शारीरविभागे यथैषा सूक्ष्मदर्शिताऽऽसीत्तथाऽग्रे निहितसन्दर्भेणाऽऽकलनीयम्—

बहोः कालाच्छारीरज्ञानस्य लुप्तप्रायतया कर्मठानां भिषजाञ्च प्रत्यक्षस्य तु का कथा अनुमातुमपि मनो नाऽलम् । पाश्चात्येष्वीश्वराऽनुग्रहाच्छारीरशास्त्रज्योतिषोऽभ्युदयकालेऽपि वेदीयपदार्थाऽन्वेषणेऽहरहो व्याप्रियमाणेष्वपि नाऽस्ति वेदीयशारीरपदार्थानामिदमित्थन्तया परिचयः । तत्र तेषान्न कोऽपि दोषः, वेदानामुद्भवस्थाने ( भारतवर्षे ) एवाऽज्ञानतमसः प्रसृतत्वात् । संस्कृतभाषाया प्राय' पदार्थवर्णन सङ्क्षिप्ततया दृश्यते इति भाषासहजस्वभावोऽस्ति । तत्राऽपि वेदेषु सोऽतिमात्रतया स्वीकृतोऽस्ति । तत्र च समस्तसृष्टेर्गुणत्रय—(सत्त्वरजस्तमोरूपस्य) स्याऽवस्थाविशेषैराविर्भावतिरोभावौ वर्णितौ दृश्येते । आयुर्वेदेऽपि स एव सिद्धान्त' स्वीकृतोऽस्ति । गुणेषु साक्षात्कर्षणबृंहणादिक्रियाया' कर्तुमशक्यत्वाद्गुणाना स्थूलपरिणामेषु ( पञ्चमहाभूतेषु ) प्राधान्येन व्यपदेशा भवन्तीति न्यायमुररीकृत्य शारीरीयपरिणामविशेषञ्चाऽऽश्रित्य वातपित्तश्लेष्माण इति कक्षात्रये समस्त जङ्गमशरीर प्रविभक्तम् । पञ्चमहाभूतानाञ्च विचित्रसाङ्कर्येणोत्पन्नत्वाच्छुद्धस्वरूपाणामेकान्ततोऽभावेऽपि व्यवहारार्थ प्राधान्यमनुसृत्य वर्णन कृतमस्ति, तेनैव च बीजेन चिकित्सा व्यापारिता । गुणगुणिनोश्च भिन्नत्वेनाऽनुपलम्भात्पञ्चमहाभूतस्थगुणकर्मणामपि कथनमेकमुद्रयैव प्राय' समागच्छति, अतोऽय विषयो जटिलतया परमगहन आसीत् । अत्र च पल्लवग्राहिणः स्थूलसूक्ष्मवर्णनादिभेदमबुद्ध्वाऽऽयुर्वेदीयसिद्धान्ते एवाऽमूलकत्वमध्यवस्यन्तीति विप्लव विज्ञाय चेतोऽतितरा खिद्यते । अयञ्च दोषो नाऽधुनिकेषु पाश्चात्यपद्धतिचिकित्सकेष्वेव किन्तु शतपथादिब्राह्मणग्रन्थेष्वपि यत्रतत्र दृश्यते । तदर्वाचीननिरुक्तकारादिष्वपि तथैवाऽऽसाद्यते । तदर्वाचीनवेदभाष्यकर्तृषु सायणादिषु त्वत्याधिक्येन स लब्धप्रतिष्ठो बभूवेत्यनुपदमेव स्पष्टीभविष्यति, अस्याऽपराधस्य मूलमायुर्वेदस्य प्रचाराऽभावः । कृतयुगादौ ब्रह्मचर्यतपोहोमादितत्परेषु जनेषु नैरुज्ययुक्ततया प्रयोजनाऽभाव एव मुख्य कारणमाकलय्यते । यस्य च शास्त्रस्य पठनपाठनादिशैली विच्छिन्ना भवेत्तत्र संशयविपर्यासादयः शतशो दोषाः समुत्तिष्ठन्तेऽत्र किमतिवैचित्र्यम् ? एतस्य यत्किञ्चिद्दिग्दर्शनमधस्तनसन्दर्भेण द्रष्टव्यम् ।

## अथाऽऽर्षशारीरतत्त्वम्

तिस्रो ह प्रजा अत्यायमायन् न्यन्या अर्कमभितो विशन्त ।
बृहन् ह तस्थौ रजसो विमानो हरितो हरिणीरा विवेश ॥ अथर्व. १०।८।३ ॥

परमात्मनोऽचिन्त्याद्भुता शक्तिः सकलजगत्कारणत्वादुच्यते प्रकृतिः, सा च सृष्टिसमये परमात्मेच्छाजीवाऽदृष्टकालस्वभावोपबृंहिता सती सत्त्वरजस्तमसा पृथक्स्वरूप यथापूर्व प्रादुरभावयत् । तानि च प्रकृतेः प्रजाः उच्यन्ते, तास्तिस्रः प्रजाः अत्यायमतिविस्तारमयतेरिणश्च वा घञ् प्रत्ययः । आयन्—प्राप्नुवन् अन्या उक्तत्रिवि-

धप्रजाभ्यः भिन्नाः प्रजा=महदादयः—अर्कमन्त्रपरिणामं निरुक्तेः अन्ननामत्वात्, स्थावरजङ्गमात्मकोभयसृष्टिमभितः= सर्वतः, अभित इति कथनेन सूक्ष्म( लिङ्ग )स्थूलशरीरघटकसामग्रीमभिगन्त । अत्र गुणत्रयस्याऽविशेषेण सृष्टेः कारणत्वेऽपि रजसो रजोगुणस्य विशिष्टं मानं परिमाणं यस्य स विमानो विस्तारो बृहन् अनिविरनृतास्तन् तस्थौ प्रादुर्भूतो ददृशे हेति प्रसिद्धौ, इममेवाऽभिप्राय व्याख्याय सुश्रुतः प्राह—" अथातः सर्वभूतचिन्ताशारीरं व्याख्यास्यामः ॥ १ ॥ सर्वभूतानां कारणमकारणं सत्त्वरजस्तमोलक्षणमष्टरूपमखिलस्य जगतः सम्भवहेतुरव्यक्तं नाम । तदेकं बहूनां क्षेत्रज्ञानामधिष्ठानं समुद्र इवौदकानां भावानाम् ॥ २ ॥ तस्मादव्यक्तान्महानुत्पद्यते तल्लिङ्ग एव, तल्लिङ्गाच्च महतस्तल्लक्षण एवाऽहङ्कार उत्पद्यते, स तु त्रिविधो वैकारिकस्तैजसो भूतादिरिति । तत्र वैकारिकादहङ्कारात् तैजससहायात् तल्लक्षणान्येवैकादशेन्द्रियाण्युत्पद्यन्ते, तद्यथा—श्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाग्घस्तोपस्थपायुपादमनांसीति । तत्र पूर्वाणि पञ्च बुद्धीन्द्रियाणि, इतराणि पञ्च कर्मेन्द्रियाणि, उभयात्मकं मनः । भूतादेरपि तैजससहायात् तल्लक्षणान्येव पञ्चतन्मात्राण्युत्पद्यन्ते तद्यथा—शब्दतन्मात्रं, स्पर्शतन्मात्रं, रूपतन्मात्रं, रसतन्मात्रं, गन्धतन्मात्रमिति । तेषां विशेषाः शब्दस्पर्शरूपरसगन्धाः, तेभ्यो भूतानि=व्योमाऽनिलाऽनलजलोर्व्यः, एवमेषा तत्त्वचतुर्विंशतिर्व्याख्याता ॥ ३ ॥ तत्र बुद्धीन्द्रियाणां शब्दादयो विषयाः, कर्मेन्द्रियाणां यथासङ्ख्यं वचनाऽऽदानाऽऽनन्दविसर्गविहरणानि ॥ ४ ॥ अव्यक्तं महानहङ्कारः पञ्चतन्मात्राणि चेत्यष्टौ प्रकृतयः, शेषाः षोडशविकाराः ॥ ५ ॥ स्वः स्वश्चैषां विषयोऽधिभूतं, स्वयमध्यात्मं, अधिदैवतमथ—बुद्धेर्ब्रह्मा, अहङ्कारस्येश्वरः, मनसश्चन्द्रमाः, दिशः श्रोत्रस्य, त्वचो वायुः, सूर्यश्चक्षुषः, रसनस्यापः, पृथिवी घ्राणस्य, वचनोऽग्निः, हस्तयोरिन्द्रः, पादयोर्विष्णुः, पायोर्मित्रः, प्रजापतिरुपस्थस्येति ॥ ६ ॥ सु. शा. अ० १ ॥" सर्व एवाऽचेतन एष वर्गः । नन्विन्द्रियाणि अचेतनानि भूत्वा कथं स्वस्वगुणग्रहणे प्रवर्तन्त इत्यपेक्षायामाह—हरितः=ग्रहणधारणपोषणादिनिर्वर्तको जीवो, हरिणी=विषयग्रहीत्रीरिन्द्रियाख्यव्यक्तीरथ च रसादिधातुसमुदायवाहयित्रीः प्रणालीरात्मसत्ताद्विवेश=व्याप्त इवाऽऽसीत् । जीवसम्बन्धे सत्येवैतत्परिणामस्य दृष्टत्वात् । " पुरुषः पञ्चविंशतितमः कार्यकारणसंयुक्तश्चेतयिता भवति । सु. शा. १।८ " " खादीनि बुद्धिरव्यक्तमहङ्कारस्तथाऽष्टमः । भूतप्रकृतिरुद्दिष्टा विकाराश्चैव षोडश ॥ बुद्धीन्द्रियाणि पञ्चैव पञ्च कर्मेन्द्रियाणि च । समनस्काश्च पञ्चार्था विकारा इति सञ्ज्ञिताः ॥ इति क्षेत्रं समुद्दिष्टं सर्वमव्यक्तवर्जितम् । अव्यक्तमस्य क्षेत्रस्य क्षेत्रज्ञमृषयो विदुः ॥ जायते बुद्धिरव्यक्ताद्बुद्ध्याऽहमिति मन्यते । परं खादीन्यहङ्कारादुत्पद्यन्ते यथाक्रमम् ॥ ततः सम्पूर्णसर्वाङ्गो जातोऽभ्युदित उच्यते । पुरुषः प्रलये चेष्टैः पुनर्भावैर्वियुज्यते ॥ अव्यक्ताद्व्यक्ततां याति व्यक्तादव्यक्ततां पुनः । रजस्तमोभ्यामाविष्टश्चक्रवत्परिवर्तते ॥ येषां द्वन्द्वे पराऽऽसक्तिरहङ्कारपराश्च ये । उदयप्रलयौ तेषां न तेषां ये त्वतोऽन्यथा ॥ प्राणापानौ निमेषाद्या जीवनं मनसो गतिः । इन्द्रियान्तरसञ्चारः प्रेरणं धारणञ्च यत् ॥ देशान्तरगतिः स्वप्ने पञ्चत्वग्रहणं तथा । दृष्टस्य दक्षिणेनाऽक्ष्णा सव्येनाऽवगमस्तथा ॥ इच्छा द्वेषः सुखं दुःखं प्रयत्नश्चेतना धृतिः । बुद्धिः स्मृतिरहङ्कारो लिङ्गानि परमात्मनः ॥ यस्मात्समुपलभ्यन्ते लिङ्गान्येतानि जीवतः । न मृतस्याऽऽत्मलिङ्गानि तस्मादाहुर्महर्षयः ॥ शरीरं हि गते तस्मिञ्छून्याऽऽगारमचेतनम् । पञ्चभूताऽवशेषत्वात्पञ्चत्वं गतमुच्यते ॥ अचेतनं क्रियावच्च मनश्चेतयिता परः । युक्तस्य मनसा तस्य निर्दिश्यन्ते विभोः क्रियाः ॥ चेतनावान् यतश्चात्मा ततः कर्ता निरुच्यते । अचेतनत्वाच्च मनः क्रियावदपि नोच्यते ॥ चरक शा. १।६३–७६ " " अष्टौ प्रकृतयः प्रोक्ता विकाराः षोडशैव तु । क्षेत्रज्ञश्च समासेन स्वतन्त्रपरतन्त्रयोः ॥ " तस्य सुखदुःखे इच्छाद्वेषौ प्रयत्नः प्राणाऽपानावुन्मेषनिमेषौ बुद्धिर्मनःसङ्कल्पो विचारणा स्मृतिर्विज्ञानमध्यवसायो विषयोपलब्धिश्च गुणाः ॥ सु. शा. १।१७ " ननु हरितशब्देन जीवार्थः कथं गृहीत इति चेत्सूक्तस्य प्रारम्भे—" यो भूतं च भव्यं च सर्वं

यश्चाऽधितिष्ठति । स्वर्यस्य च केवलं तस्मै ज्येष्ठाय ब्रह्मणे नमः ॥ १ ॥ स्कम्भेनेमे विष्टभिते द्यौश्च भूमिश्च तिष्ठतः । स्कम्भ इद सर्वमात्मन्वद् यत् प्राणन्निमिषच्च यत् ॥ अ० १०।८।१—२ " इति मन्त्रद्वयेन परमेश्वरस्य सर्वनियामकत्वसर्वव्यापकत्वतटस्थत्वादीनि निरूपितानि । तृतीयमन्त्रस्य त्रिभिः पादैः प्रकृतेः समस्तप्रपञ्चस्य प्रतिपादितत्वेन पारिशेष्याज्जीव एव बुद्ध्यारूढो भवति । द्वितीयमन्त्रे स्कम्भेति परमेश्वरस्य नामत्वात् तत्सखित्वादपि जीवो ग्रहीतुमुचितः, स्कम्भेनाऽधिष्ठितत्वात् ।

" द्वादश प्रधयश्चक्रमेकं त्रीणि नभ्यानि क उ तच्चिकेत । तत्राहतास्त्रीणि शतानि शङ्कवः षष्टिश्च खीला अविचाचला ये ॥ अ. १० । ८ । ४ " द्वादश=एतत्सङ्ख्याकाः प्रधयः=परिधयस्तत्सदृशरक्षणकर्तृत्वात्पञ्चभूताऽग्नयः पञ्च च धात्वग्नयो मिलित्वा द्वादश । ननु परिधयश्चक्राऽऽधीना भवन्ति अत्र तत्स्थाने कस्य नियोजनमित्यपेक्षायामाह—एकं=प्रधान सामान्ये नपुसकम्, अन्नपक्ता ( उदर्योऽग्निः ) अग्निश्चक्र=चक्रवत्प्रधानम् । "भौमाऽप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः । पञ्चाऽऽहारगुणान् स्वान्स्वान् पार्थिवादीन् पचन्ति हि ॥ यथास्वैरेव पुष्यन्ते देहे द्रव्यगुणा पृथक् । पार्थिवा. पार्थिवानेव शेपाः शेपाश्च कृत्स्नशः ॥ सप्तभिर्देहधातारो धातवो द्विविध पुनः । यथास्वमग्निभिः पाक यान्ति किट्टप्रसादतः ॥ च. चि. १५ । १३—१५ " इति द्वादशाऽग्नयः । " इति भौतिकधात्वन्नपक्तॄणा कर्म भाषितम् । अन्नस्य पक्ता सर्वेषा पक्तॄणामधिपो मतः ॥ तन्मूलास्ते हि तद्वृद्धिक्षयवृद्धिक्षयाऽऽत्मकाः । तस्मात्त विधिवद्युक्तैरन्नपानेन्धनैर्हितैः ॥ पालयेत्प्रयतस्तस्य स्थितौ ह्यायुर्बलस्थितिः ॥ च. चि. १५ । ३९—४० " अत्र स्पष्टतयोदर्याऽग्नेः प्रधानत्व प्रतिपादितम् । " षड्भिः केचिदहोरात्रैरिच्छन्ति परिवर्तनम् । सन्तत्या भोज्यधातूना परिवृत्तिस्तु चक्रवत् ॥ च चि. १५ । २१ " इत्यनेन चक्रसादृश्यमपि स्पष्टमुक्तम् ।

" सुश्रुते तु त एते शरीरधारणाद्धातव इत्युच्यन्ते । सु. सू. १४ । २० " ते च " रसाद्रक्तं ततो मासं मासान्मेदः प्रजायते । मेदसोऽस्थि ततो मज्जा मज्ज्ञः शुक्रन्तु जायते ॥ सु. सू. १४ । १० " इत्यनेन सप्त परिगणिताः तत्राऽपि—" तत्र पाञ्चभौतिकस्य चतुर्विधस्य षड्रसस्य द्विविधवीर्यस्य अष्टविधवीर्यस्य वाऽनेकगुणस्योपयुक्तस्याऽऽहारस्य सम्यक् परिणतस्य यस्तेजोभूतः सारः परमसूक्ष्मः स रस इत्युच्यते, तस्य च हृदय स्थानम् ॥ सु. सू. १४ । ३" इत्यनेन रसस्य पञ्चभूतात्मकत्वनिर्देशात्पञ्चभूतानि सप्त च धातव इति कृत्वा द्वादश पूर्यन्ते । तेषाञ्च सर्वेषा रसे विद्यमानत्वम् इति द्वादशप्रधित्वमव्याहतम् । तत्राऽपि शरीरस्योर्ध्वाऽधरविभागद्वयेन रसवहा धमन्य ऊर्ध्वं द्वादश अधश्च द्वादश इति प्रतिविभागाऽपेक्षया द्वादशत्वस्य विद्यमानत्वाच्चतुर्विंशतित्वेऽपि द्वादशत्वमव्याहतम् । तिर्यग्गाणा मध्यपातित्वादर्द्धमर्द्धं प्रतिभागे स्थापनीयम् । अत्र सर्वासा हृदयस्थानत्वात्तदेव एक=मुख्य चक्रम् इति स्पष्टमेवाऽऽयाति द्वादशप्रधयश्चक्रमेकमिति ।

त्रीणि=त्रित्वसङ्ख्याविशिष्टानि वातश्लेष्मपित्ताख्यानि नभ्यानि=रथचक्रमध्यफलकानीव प्रधानानि वर्तन्त इति अथवा सन्तीत्युचितक्रियाऽध्याहारः करणीयः । ननु रथे शङ्कुसङ्घातो भवति अत्र तत्स्थाने किमस्तीत्यपेक्षायामाह, तत्र=शरीरनिर्माणे त्रीणि शतानि षष्टिश्च शङ्कवः=शङ्कुवद्धारणनियामकानि खीलाः परस्पर सन्धानानि । अविचाचलाः=स्थिराः निहिताः क उ कोऽपि महान् एतच्चिकेत जानाति । सायणेन तु ऋग्वेदे (१ । १६४ । ४८) "द्वादश=एतत्सङ्ख्याकाः प्रधयः=परिधयः प्रहिता वर्तन्ते तत्स्थानीयाः द्वादशमासा एक अद्वितीय चक्र क्रमणस्वभावं संवत्सराख्यं चक्र आश्रिताः तथा त्रीणि त्रिसङ्ख्याकानि नभ्यानि=नाभ्याश्रयाणि फलकानि तत्स्थानीयानि ग्रीष्मवर्षाहेमन्ताख्यानि आश्रितानि, यथा सूर्यरथचक्रस्य द्वादशपरिधयो नाभ्याश्रयाणि त्रीणि फलकानि सन्ति तद्वत्

कालचक्रस्याऽपि क उ कोऽपि महान् तच्चक्रं चिकेत=जानाति । तस्मिन् चक्रे साकं सह शङ्कवो न शङ्कव इव अत्र पुरस्तादुपाचारोऽपि न शब्दः सामर्थ्यादुपमार्थीयः । तस्मिन्नपि सम्वत्सरचक्रे त्रिशता, एतत्सङ्ख्याकाः षष्टिर्न न शब्दश्चार्थे षष्टिश्चारा=अरस्थानीयान्यहानि अर्पिताः अर्पितानि । कीदृशानि तानि चलाचलासः एकश्चल-शब्दो द्विर्भावं प्राप्तः चलाः चलनस्वभावानीत्यर्थः ।" इत्यन्तेन सन्दर्भेण संवत्सरपरत्वेन व्याख्यातः । निरुक्तेऽपि संवत्सरपरत्वमेव स्वीकृत्य शतपथाऽनुकरणं कृतम्, तत्र ऋग्वेदे कस्यचिदेकप्रकरणस्याऽभावाच्छरीरपरत्वेनाऽपि व्याख्याने क्षत्यभावः । परमत्र ( अथर्ववेदे ) प्रारम्भादेव शारीरवर्णनस्योपक्रमात्संवत्सरपरकव्याख्यानं केनाऽपि प्रकारेण न सहृदयहृदयङ्गमतां भजति यतोऽस्य सूक्तस्याऽष्टममन्त्रे चतुर्थमन्त्रोक्तानां त्रिषष्ट्यधिकत्रिशतानाऽस्थ्ना-मुत्तमाऽधमनिकृष्टविभागेन दर्शितत्वात्, तथाहि—

पञ्चवाही वहत्यग्रमेषां प्रष्टयो युक्ता अनुसंवहन्ति ।
अयातमस्य ददृशे न यातं परं नेदीयो वरं दवीयः ॥ अ. १०।८।८

एषामुक्तसङ्ख्याकाऽस्थ्नां मध्ये अग्रं=श्रेष्ठं भागं पञ्च=शब्दस्पर्शरूपरसगन्धान् वहत्याहरतीति पञ्चवाही, इन्द्रियस्थानत्वान्मूर्धा धारयति समस्तशरीराऽपेक्षया शिरोऽस्थ्नां निर्माणशैलीवैचित्र्यादत्याहत तत्राऽग्रत्वम् । अनु=शिरोऽस्थ्यपेक्षया जघन्यभागं युक्ताः संयुक्ता प्रष्टयोऽर्थात् पृष्ठवंशः संवहन्ति धारयन्ति शिरःकपालरचनाऽपेक्षया पृष्ठि-रचनाया निकृष्टत्वात् । अन्विति सादृश्याऽपरभावमिति यास्कः अस्य=एतच्छरीराऽधिष्ठातुः परं नेदीयः=अति-समीपतरमयातमगमनम् वरं दवीयः=अतिदूरतरं यातम्=गमनं च न ददृशे केनाऽपीत्यध्याहारः, अथवा ददृश इति वर्तमानार्थकत्वेन तस्य गमनाऽगमनं प्रत्यक्षतो न केनाऽपि दृश्यते अपि तु जीवलिङ्गैः कल्प्यते यथा—

प्राणापानौ निमेषाद्या जीवनं मनसो गतिः । इन्द्रियान्तरसञ्चारः प्रेरणं धारणञ्च यत् ॥
देशान्तरगतिः स्वप्ने पञ्चत्वग्रहणं तथा । दृष्टस्य दक्षिणेनाऽक्ष्णा सव्येनाऽवगमस्तथा ॥
इच्छा द्वेषः सुखं दुःखं प्रयत्नश्चेतना धृतिः । बुद्धिः स्मृतिरहङ्कारो लिङ्गानि परमात्मनः ॥
यस्मात्समुपलभ्यन्ते लिङ्गान्येतानि जीवतः । न मृतस्यात्मलिङ्गानि तस्मादाहुर्महर्षयः ॥
शरीरं हि गते तस्मिञ्छून्यागारमचेतनम् । पञ्चभूताऽवशेषत्वात्पञ्चत्वं गतमुच्यते ॥
अचेतनं क्रियावच्च मनश्चेतयिता परः । युक्तस्य मनसा तस्य निर्दिश्यन्ते विभोः क्रियाः ॥
चेतनावान् यतश्चात्मा ततः कर्ता निरुच्यते । अचेतनत्वाच्च मनः क्रियावदपि नोच्यते ॥
यथा स्वेनाऽऽत्मनाऽऽत्मानं नयति सर्वयोनिषु । प्राणैस्तन्त्रयते प्राणी न ह्यन्योऽस्त्यस्य तन्त्रकः ॥
चरक. शा. १ । ७०–७७

किञ्चाऽस्यैव सूक्तस्यैकविंशतितममन्त्रस्योत्तरार्द्धे—" चतुष्पाद् भूत्वा भोग्यः सर्वमादत्त भोजनम् ॥ अ. १०।८।२१ " " पुण्डरीकं नवद्वारं त्रिभिर्गुणेभिरावृतम् । तस्मिन्यद्यक्षमात्मन्वत्तद्वै ब्रह्मविदो विदुः ॥४३॥ अकामो धीरो अमृतः स्वयम्भू रसेन तृप्तो न कुतश्च नो नः । तमेव विद्वान्न बिभाय मृत्योरात्मानं धीरमजरं युवानम् ॥ अ. १० । ८ । ४४" एभिर्मन्त्रैः शारीरवर्णनस्य निस्संशयीकृतत्वात् । अत्राऽपीत्यमेव शारीरवर्ण-नस्तुत्यादिपरकमन्त्राणामायुर्वेदाऽनभिज्ञैः सायणादिभाष्यकृद्भिः प्रायः संवत्सरपरत्वेन व्याख्यानं कृतं दृश्यते । यत्र च संवत्सरपरत्वेनाऽपि सङ्गतिर्नाऽऽगता तत्र तत्प्रकरणमेव परित्यक्तम् । यथा इदमेव सूक्त ( अ. १० । ८ ) तथा च ' केन पार्ष्णी आभृते पूरुषस्य० ( अ. १० । २ ), अस्मिन् सूक्ते पूरुषस्याऽर्थान्मनुष्यस्य माहात्म्यं वर्ण्यते । तच्च तद्भिन्नभिन्नाऽवयवान् को देवोऽकरोदित्यादिप्रश्नरूपेण तत्तत्प्रश्नानामुत्तररूपेण च । **यज्ञलम्पटाः** साम्प्रदायिकास्तु एतत्सूक्तं पुरुषमेधे विनियोजयन्ति इत्यादिना विनियोगं निर्दिश्य मौनमालम्बित

सायणेन, अहो कियान्महत्वविपयो महात्मभिः (टीकाकारैः) परित्यक्तोऽस्यैव दुर्विपाकेनाऽध्याऽऽर्यशारीरे याज्ञिकानां चिकित्सकानाञ्चेयान्मतिभ्रमः समजनि। शतपथब्राह्मणे तु "सहस्रशीर्षा पुरुषः०पुरुष एवेद ँसर्वं०" (वा. स. ३१।१-२) इत्यादौ पुरि शेते पुरुष इति साधारणव्युत्पत्त्या जीवेश्वरयोरेकमुद्रया प्रतिपादनाज्जीवपक्षे स्थावरजङ्गमभेदेन सहस्रयोनिग्रहणादथ च स्वेदजाऽण्डजोद्भिज्जरायुजभेदेन सहस्रशाखत्वम्। ईश्वरपक्षे तु सर्वत्र व्यापकतया तत्सत्त्व मत्वा पुरुपस्य यज्ञादिना नैकधा सादृश्य प्रतिपादितम् तद्यथा—"पुरुषो वै यज्ञः" शत०१।३।२।१ इज्यते अनेन इति यज्ञः सर्वस्याऽपि यज्ञोपकरणत्वात् तद्यथा—"पुरुषो वै संवत्सरः। तस्य पादावेव प्रायणीयोऽतिरात्रः पादाभ्या हि प्रयन्ति तयोर्यच्छुक्लं तदह्नो रूप यत्कृष्णं तद्रात्रे नखान्येवौपधिवनस्पतीना रूपमूरूचतुर्विंशमहरुरोऽभिप्लवः पृष्ठ पृष्ठ्यः॥ १॥ अयमेव दक्षिणो बाहुरभिजित् इम एव दक्षिणे त्रयः प्राणाः स्वरसामानो मूर्धा विषुवानिम एवोत्तरे त्रयः प्राणाः स्वरसामानः॥ २॥ अयमेवोत्तरो बाहुर्विश्वजित्। उक्तौ पृष्ठ्याभिप्लवौ यावत्राञ्चौ प्राणौ ते गो आयुपी अङ्गानि दशरात्रो मुख महाव्रत हस्तावेवोदयनीयोऽतिरात्रो हस्ताभ्या ह्युद्यन्ति तयोर्यच्छुक्ल तदह्नो रूप यत्कृष्ण तद्रात्रेर्नखान्येव नक्षत्राणा रूप स एप सवत्सरोऽध्यात्मं प्रतिष्ठितः स यो हैवमेतं सवत्सरमध्यात्मं प्रतिष्ठित वेद प्रतितिष्ठति प्रजया पशुभिरस्मिँल्लोकेऽमृतत्वेनामुष्मिन्॥ शत० १२।१।३।

"पुरुषो वै संवत्सरः। तस्य प्राण एव प्रायणीयोऽतिरात्रः प्राणेन हि प्रयन्ति वागेवारम्भणीयमहर्वाचा ह्यारभन्ते यद्यदारभन्ते॥ १॥ अयमेव दक्षिणो हस्तोऽभिप्लवः षडहः। तस्येदमेव प्रथमहस्तस्येदमेव प्रातःसवनमिद माध्यन्दिन सवनमिदं तृतीयसवन गायत्र्या आयतने तस्मादियमासा ह्रसिष्ठा॥२॥ इदमेव द्वितीयमहः। तस्येदमेव प्रातः सवनमिद माध्यन्दिन सवनमिद तृतीयसवन त्रिष्टुभ आयतने तस्मादियमस्यै वर्षीयसी॥३॥ इदमेव तृतीयमहः। तस्येदमेव प्रातः सवनमिद माध्यन्दिन सवनमिद तृतीयसवन जगत्या आयतने तस्मादियमासां वर्षिष्ठा॥ ४॥ इदमेव चतुर्थमहः। तस्येदमेव प्रातःसवनमिद माध्यन्दिनं सवनमिदं तृतीयसवन विराज आयतनेऽन्न वै विराट् तस्मादियमासामन्नादितमा॥ ५॥ इदमेव पञ्चममहः। तस्येदमेव प्रातःसवनमिद माध्यन्दिन सवनमिद तृतीयसवन पङ्क्तेरायतने पृथुरिव वै पाङ्क्तिस्तस्मादयमासा प्रथिष्ठः॥ ६॥ इदमेव षष्ठमहः। तस्येदमेव प्रातःसवनमिदं माध्यन्दिन सवनमिद तृतीयसवनमतिच्छन्दस आयतने तस्मादयमासा वर्षिष्ठो गायत्रमेतदहर्भवति तस्मादिद फलक ह्रसिष्ठ स इतोऽभिप्लवः षडहः स इतः स इतः स इत आत्मा पृष्ठ्यः॥ ७॥ एतद्ध स्म वै तद्विद्वानाह पैङ्ग्यः। प्लवन्तऽइव वाऽभिप्लवास्तिष्ठतीव पृष्ठ्य इति प्लवत इव ह्ययमङ्गैस्तिष्ठतीवात्मनेति॥ ८॥ शिर एवास्य त्रिवृत्। तस्मात्तत्त्रिविध भवति त्वगस्थि मस्तिष्कः॥ ९॥ ग्रीवाः पञ्चदशः। चतुर्दश वा एतासा करूकराणि वीर्यं पञ्चदश तस्मादेताभिरण्वीभिः सतीभि र्गुरु भारं हरति तस्माद्ग्रीवाः पञ्चदशः॥ १०॥ उरः सप्तदशः। अष्टावन्ये जत्रवो अष्टावन्य उरः सप्तदश तस्मादुरः सप्तदशः॥ ११॥ उदरमेकविंशः। विंशति र्वा अन्तरुदरे कुन्तापान्युदरमेकविंश तस्मादुदरमेकविंशः॥१२॥ पार्श्वे त्रिणवः। त्रयोदशान्याः पर्शवस्त्रयोदशान्याः पार्श्वे **त्रिणवे** तस्मात्पार्श्वे त्रिणवः॥ १३॥ **अनूकं** त्रयस्त्रिंशः। द्वात्रिंशद्वा एतस्य करूकराण्यनूक त्रयस्त्रिंशं तस्मादनूक त्रयस्त्रिंशः॥ १४॥ अयमेव दक्षिणः कर्णोऽभिजित्। यदिदमक्ष्णः शुक्ल स प्रथमः स्वरसामा यत्कृष्ण स द्वितीयो यन्मण्डल स तृतीयो नासिके विपुवान्यदिदमक्ष्णो मण्डल स प्रथमोऽर्वाक्सामा यत्कृष्ण स द्वितीयो यच्छुक्ल स तृतीयः॥ १५॥ अयमेवोत्तरः कर्णो विश्वजित्। उक्तौ पृष्ठ्याभिप्लवौ यावञ्चाञ्चौ प्राणौ ते गो आयुपी अङ्गानि दशरात्रो मुख महाव्रतमुदान एवोदयनीयोऽतिरात्र उदानेन ह्युद्यन्ति स एप सवत्सरोऽध्यात्म प्रतिष्ठितः स यो हैवमेत सवत्सरमध्यात्मं प्रतिष्ठितं वेद प्रतितिष्ठति प्रजया पशुभिरस्मिँल्लोकेऽमृतत्वेनामुष्मिन्॥ १६॥ (शत० १२।२।४)

" पुरुषो वै संवत्सरः । पुरुष इत्येकं संवत्सर इत्येकमत्र तत्समं । द्वे वै संवत्सरस्याहोरात्रे द्वाविमौ पुरुषे प्राणावत्र तत्समम् । त्रय ऋतव संवत्सरस्य त्रय इमे पुरुषे प्राणा अत्र तत्समम् । चतुरक्षरो वै संवत्सरश्चतुरक्षरोऽय यजमानोऽत्र तत्समम् । पञ्चर्तवः संवत्सरस्य पञ्चेमे पुरुषे प्राणा अत्र तत्समम् । षड् ऋतवः संवत्सरस्य षडिमे पुरुषे प्राणा अत्र तत्समं । सप्तर्तवः संवत्सरस्य सप्तेमे पुरुषे प्राणा अत्र तत्समम् ॥ १ ॥ द्वादश वै मासाः संवत्सरस्य द्वादशेमे पुरुषे प्राणा अत्र तत्समम् । त्रयोदश वै मासाः संवत्सरस्य त्रयोदशेमे पुरुषे प्राणा नाभिस्त्रयोदश्यत्र तत्समम् । चतुर्विंशतिर्वै संवत्सरस्यार्धमासाश्चतुर्विंशोऽय पुरुषो विंशत्यङ्गुलिश्चतुरङ्गोऽत्र तत्समम् । षड्विंशति र्वै संवत्सरस्यार्धमासाः षड्विंशोऽय पुरुषः प्रतिष्ठे षड्विंश्यावत्र तत्समम् ॥२॥ त्रीणि च वै शतानि षष्टिश्च संवत्सरस्य रात्रयस्त्रीणि च शतानि षष्टिश्च पुरुषस्यास्थीन्यत्र तत्समम् । त्रीणि च शतानि षष्टिश्च संवत्सरस्याहानि त्रीणि च शतानि षष्टिश्च पुरुषस्य मज्जानोऽत्र तत्समम् ॥ ३ ॥ सप्त च वै शतानि विंशतिश्च संवत्सरस्याहोरात्राणि सप्त च शतानि विंशतिश्च पुरुषस्यास्थीनि च मज्जानश्चात्र तत्समम् ॥ ४ ॥ दश च वै सहस्राण्यष्टौ च शतानि संवत्सरस्य मुहूर्ता यावन्तो मुहूर्तास्तावन्ति पञ्चदशकृत्वः क्षिप्राणि यावन्ति क्षिप्राणि तावन्ति पञ्चदशकृत्व एतर्हीणि, यावन्त्येतर्हीणि तावन्ति पञ्चदशकृत्व इदानीनि, यावन्तीदानीनि तावन्तः पञ्चदशकृत्वः प्राणा, यावन्त प्राणास्तावन्तोऽना, यावन्तोऽनास्तावन्तो निमेषा यावन्तो निमेषास्तावन्तो लोमगर्ता, यावन्तो लोमगर्तास्तावन्ति स्वेदायनानि, यावन्ति स्वेदायनानि तावन्त एते स्तोका वर्षन्ति ॥ ५ ॥ एतद्ध स्म वै तद्विद्वानाह वार्कलिः । सार्वभौम मेव वर्षन्त वेदाहमस्य वर्षस्य स्तोकानिति ॥६॥ तदेष श्लोकोऽभ्युक्तः । अप्रमादन्यत्र परिवर्तमानस्तिष्ठन्नासीनो यदि वा स्वपन्नपि । अहोरात्राभ्यां पुरुषः समेन कतिकृत्वः प्राणिति चाप चानितीति ॥ ७ ॥ तदेष श्लोकः प्रत्युक्तः । शतं शतानि पुरुषः समेनाष्टौ शता यन्मितं तद्वदन्ति । अहोरात्राभ्यां पुरुषः समेन तावत्कृत्वः प्राणिति चापचानितीति ॥ ८ ॥ (शत० १२।३।२)

अत्र ब्राह्मणे प्राणानां द्वित्वे उच्छ्वासनिःश्वासौ ग्रहीतव्यौ । प्रादनितेः करणे घञि, प्राणशब्दस्योत्पन्नत्वेन उच्छ्वासनिःश्वासयोर्ग्रहणं तयोर्मुख्यजीवनसाधनत्वात् । योगिनो मुक्त्वा तयोरवरुद्धयोश्शीघ्रमेव पञ्चत्वस्य प्रत्यक्षदृष्टत्वात् । त्रित्वपक्षे प्राणाऽपानसमाना ग्राह्या उदानव्यानयोस्तु तेष्वेवाऽन्तर्भावो बोध्यः । अथवा वातपित्तकफाना ग्रहण बोध्यम्, आयुर्वेदसिद्धान्तेऽनुकूलत्वेन वर्तमानेष्वेतेषु जीवनसद्भावात् । पञ्चत्वपक्षे प्राणाऽपानसमानव्यानोदाना ग्राह्याः । षट्त्वपक्षे खादयश्चेतनाषष्ठा धातवो ग्राह्याः—खादयश्चेतना षष्ठा धातवः पुरुषः स्मृतः । च. शा. १।१६" अधिकमासस्य यथामासर्तुगणनात्सप्त ऋतुत्वम्, अत्र रसरक्तादिसप्तधातूनां प्राणत्वेन ग्रहणम् । द्वादशप्राणत्वगणनाया भूताग्नयः पञ्च धात्वग्नयश्च सप्त इति कृत्वा द्वादशाऽग्नीनां ग्रहणम् । त्रयोदशप्राणगणनायामन्नपक्ताऽविकत्वेन संयोजनीयः । शतपथे तु प्रतिपदङ्गमूर्द्धाऽवरभागेन द्वित्व परिसङ्ख्याय नाभेस्त्रयोदशत्व सङ्ख्यातम् । अथवा अग्नय एवाऽभिप्रेताः स्युरन्नपक्तुरग्ने र्मध्यशरीरवर्तित्वेन नाभित्वव्यपदेशो बोध्यः । चतुर्विंशत्यर्द्धमासतुलनाया प्राकृतिकचतुर्विंशतितत्त्वान्यादाय साम्य साधनीयम् । तत्र लिङ्गशरीरस्य स्थूलशरीरे निवसनात्पुरुषत्वं गौणमिति बोध्यम् । मूले तु " विंशत्यङ्गुलिश्चतुरङ्गोऽत्र " इत्यनेनाऽतिस्थूलसादृश्य साधितमिति द्रष्टव्यं सूक्ष्मदर्शैः । अधिकमासार्द्धमासयोः सम्मेलनात्संवत्सरे षड्विंशतित्वम् । प्रकृतितत्त्वेषु जीवेश्वरयोस्सहमेलनात्पुरुषे षड्विंशतित्वम् । मूले तु विंशतिरङ्गुलयः, हस्तपादान्तराधिमूर्धान इति चतुर्विंशतिः, हस्तपादतले च सम्मेल्यातिस्थूल सादृश्य साधितम् । मासार्द्धवदस्थ्यर्द्धगणनया विंशत्यधिकसप्तशतसङ्ख्या पूरिता । नच मासार्द्धानामस्थिभिः सह सादृश्यदानमनुचितम् द्विभागत्वेनाऽस्थ्नामप्रसिद्धेरितिवाच्य ? अखण्डवस्तुन्यपि मध्ये भग्नमिति व्यवहारस्याऽऽबालवृद्धप्रसिद्धत्वात् । परमाणुसंयोगसृष्टिवादपक्षे त्वस्थिपरमाणूनामसङ्ख्यत्वात्तत्र कियानपि विभागः क्रियेत चेत्सोऽपि न्यूनत्वे एवाऽवतिष्ठते शरीरस्थपरमाणूनां चेतनत्वेन तत्तदीयजीवन-

व्यापारस्याऽपि पार्थक्यान्नानाप्राणाः। प्राणाऽपरपर्यायश्च निमेषशब्दोऽक्षिनिमेषाद्भिन्नोऽप्यस्ति अतो यावन्तो निमेषास्तावन्तो लोमगर्ता इत्यादि ग्रन्थः सङ्गच्छ , अन्यथा समप्रमाणाऽऽपन्नयोर्दिनरात्र्योः प्रत्यक पञ्चदश मुहूर्ता भवन्ति मिलित्वा त्रिंशत्, तत्रैकैकस्मिन्मुहूत सुश्रुतमते विंशतिः कलाः त्रिंशति मुहूर्तेषु ६०३ कलाः। एकस्याः कलायास्त्रिंशतिः काष्ठाः त्र्यधिकषट्शतकलाना १८०९० काष्ठा । एकैकस्या काष्ठाया पञ्चदशाऽक्षिनिमेषाः। नवत्यधिकाऽष्टादशसहस्रकाष्ठाना २७१३५० अक्षिनिमेषाः, एते एकदिवसस्याऽक्षिनिमेषाः। एकवर्षस्य ९७६८६००० जाता अक्षिनिमेषाः। शतपथे ५४६७५०००० एते निमेषास्सञ्जाता अत इमे (शतपथीयनिमेषाः) नाऽक्षिनिमेषाः किन्तु तत्तदीयसहस्रशश्चेतनपरमाणुपुञ्जेषु यो जीवनाऽनुकूलो व्यापारः प्रस्फुरणात्मकस्तद्वाचकाः अतो न परस्परं विरोधः। कालस्य पुरुषस्य च सूक्ष्माऽवयवानामानन्त्यात्तत्सङ्ख्यातु योगिनोऽपि न प्रभवन्ति परन्तु निमेषादिगणना व्यवहारसिद्ध्येऽतिस्थूला प्रकल्पिताऽस्ति। तथैव पुरुषस्याऽपि शुक्रशोणितसयोगः प्रकल्पितोऽस्ति, सूक्ष्मत्वेन तु शुक्रशोणितपरमाणुसूक्ष्मविभागगतविकारवैचित्र्येण विकारवैचित्र्यं प्रजायते तद्यथा—“ यतस्तु कार्त्स्न्येनाऽविनश्यन्विकृतिमापद्यते तदनुव्याख्यास्यामः—यदा स्त्रिया दोषप्रकोपणोक्तान्यासेवमानाया दोषाः प्रकुपिताः शरीरमुपसर्पन्तः शोणितगर्भाशयावुपपद्यन्ते न तु कार्त्स्न्येन शोणितगर्भाशयौ दूषयन्ति तदेव गर्भ लभते स्त्री, यदा गर्भस्य तस्य मातृजानामवयवानामन्यतमोऽवयवो विकृतिमापद्यते एकोऽथवाऽनेके, यस्य यस्य ह्यवयवस्य वीजे वीजभागे वा दोषाः प्रकोपमापद्यन्ते, त तमवयव विकृतिराविशति। यदा ह्यस्याः शोणिते गर्भाशयवीजभागः प्रदोषमापद्यते तदा वन्ध्या जनयति। यदा पुनरस्याः शोणिते गर्भाशयवीजभागाऽवयवः प्रदोषमापद्यते तदा पूतिप्रजा जनयति। यदा त्वस्याः शोणिते गर्भाशयवीजभागाऽवयवः स्त्रीकराणाञ्च शरीरवीजभागानामेकदेशः प्रदोषमापद्यते तदा स्त्र्याकृतिभूयिष्ठामस्त्रिय वार्ता नाम जयनति ता स्त्रीव्यापदमाचक्षते ॥ ३० ॥ एवमेव यदा पुरुषस्य वीजे वीजभागः प्रकोपमापद्यते तदा वन्ध्या जनयति, यदा पुनरस्य वीजे वीजभागाऽवयव प्रदोषमापद्यते तदा पूतिप्रजा जनयति। यदा त्वस्य वीजे वीजभागाऽवयवः पुरुषकराणाञ्च शरीरवीजभागानामेकदेशः प्रदोषमापद्यते तदा पुरुषाऽऽकृतिभूयिष्ठमपुरुष तृणपूलिकं नाम जनयति, ता पुरुषव्यापदमाचक्षते ॥ ३१ ॥ एतेन मातृजाना पितृजाना चाऽवयवाना विकृतिव्याख्यानेन सात्म्यजाना रसजानां सत्त्वजानां चाऽवयवाना विकृति र्व्याख्याता ॥ ३२ ॥ निर्विकारः परस्त्वात्मा सर्वभूताना निर्विशेषः। सत्त्वशरीरयोस्तु विशेषाद्विशेषोपलब्धिः ॥३३॥ तत्र त्रयस्तु शरीरदोषाः—वातपित्तश्लेष्माणः, ते शरीरं दूषयन्ति, द्वौ पुनः सत्त्वदोषौ-रजस्तमश्च, तौ सत्त्व दूषयत , ताभ्या च सत्त्वशरीराभ्या दुष्टाभ्या विकृतिरुपजायते, नोपजायते चाऽप्रदुष्टाभ्याम् ॥ ३४ ॥ (च. शा. ४)” इत्यादावतिसूक्ष्मो विचारः कृतोऽस्ति। पुरुषस्य यथास्थूलसूक्ष्मविभागेन स्वरूपद्वैविध्य विद्यते तथा संवत्सरस्याऽपि मूर्ताऽमूर्तभेदेन स्वरूपद्वैविध्य स्वीकृत चाऽस्ति—“ भूतानामन्तकृत्कालः कालोऽन्यः कलनात्मकः। स द्विधा स्थूलसूक्ष्मत्वान्मूर्तश्चामूर्त एव च ॥ १० ॥ प्राणादिः कथितो मूर्तस्त्रुट्याद्योऽमूर्तसञ्ज्ञकः। षड्भिः प्राणै र्विनाडी स्यात्तत्षष्ठ्या नाडिका स्मृता ॥ ११ ॥ नाडीषष्ठ्या तु नाक्षत्रमहोरात्र प्रकीर्तितम्। तत्त्रिंशता भवेन्मासः सावनोऽर्कोदयैस्तथा ॥ १२ ॥ ऐन्दवस्तिथिभिस्तद्वत्सङ्क्रान्त्या सौर उच्यते। मासै र्द्वादशभिर्वर्ष दिव्य तदहरुच्यते ॥ १३ ॥ इत्यादि ( सू. सि. १ )” सवत्सरेण साक पुरुषस्य तुलनायामन्योऽपि गूढाभिप्रायोऽस्ति स यथा—निमेषकालाद्भावाना कालः शीघ्रतरोऽत्यये। च. शा. १। ४८” शारीरधातवः सूक्ष्माऽतिसूक्ष्मविभागानारभ्य स्थूलपर्यन्त प्रतिक्षणं परिणामशालिनः सन्ति स च परिणामो निमेषकालाद्व्यावहारिकाऽक्षिनिमेषकालादथ च शतपथीयजीवनाऽनुकूलव्यापारनिर्वर्तकादतिसूक्ष्मतमकालादपि अर्थादतिसूक्ष्मकालादपि भावाना ( शारीराणामन्येषाञ्च ) अत्यये विनाशे शीघ्रतरः कालोऽस्ति यदा च सौक्ष्मिकभावानामुत्प-

त्तिविनाशौ सूक्ष्मदर्शकयन्त्रादिना साक्षात्क्रियेते तर्हि कालकालिकयोरभेदेन प्रतीति र्भवति अथ च अखण्डाऽत्मनि काले यथा निमेषादिको भेद औपाधिकः कल्प्यते—“ कालो हि नाम भगवान् स्वयम्भुरनादिमध्यनिधनोऽत्र रसव्यापत्सम्पत्ती जीवितमरणे च मनुष्याणामायत्ते । स सूक्ष्मामपि कला न लीयत इति कालः, सङ्कलयति कालयति वा भूतानीति कालः ॥ ३ ॥ तस्य सवत्सरात्मनो भगवानादित्यो गतिविशेषेण निमेषकाष्ठाकलामुहूर्ताऽहोरात्रपक्षमासर्त्वयनसवत्सरयुगप्रविभाग करोति ॥ ४ ॥ सु. सू० ६ ॥ ” तथा बाल्यस्थविरादिसमस्तोपाधिरहितस्य पुरुषस्यौपाधिको भेदः कल्प्यते—“ निष्क्रियञ्च स्वतन्त्रञ्च वशिन सर्वग विभुम् । वदन्त्यात्मानमात्मज्ञाः क्षेत्रज्ञं साक्षिणं तथा ॥ च. शा. १।४ ” ननु कथ्यासावुपाधिरिति चेत् ? “ तत्र स्त्रीपुसयोः संयोगे तेजः शरीराद्वायुरुदीरयति, ततस्तेजोऽनिलसन्निपाताच्छुक्र च्युतं योनिमभिप्रतिपद्यते ससृज्यते चार्तवेन, ततोऽग्निसोमसयोगात् ससृज्यमानो गर्भाशयमनुप्रतिपद्यते क्षेत्रज्ञो वेदयिता स्प्रष्टा घ्राता द्रष्टा श्रोता रसयिता पुरुषः स्रष्टा गन्ता साक्षी धाता वक्ता योऽसावित्येवमादिभिः पर्यायवाचकै र्नामभिरभिधीयते दैवसङ्गादक्षयोऽचिन्त्यो भूतात्मना सहान्वक्ष सत्त्वरजस्तमोभि र्दैवासुरैरपरैश्च भावै र्वायुनाऽभिप्रेर्यमाणो गर्भाशयमनुप्रविश्याऽवतिष्ठते ॥ सु. शा. ३।४ ” अतो यथा निरुपाधिकः पुरुषः समग्रविशेषणरहितो भवति तथा सूर्यचन्द्रादिसयोगरहितः कालोऽपि निरवच्छिन्नो भवति अतः पुरुषेण साक संवत्सरस्य तुलनोचिताऽस्ति त दृष्ट्वा सायणादय सर्वेऽपि यत्र यत्र “ द्वादशारं नहि तज्जरायव र्वर्ति चक्र परिद्यामृतस्य । आपुत्रा अग्ने मिथुनासो अत्र सप्तशतानि विंशतिश्च तस्थुः ॥ ११ ॥ पञ्चपाद पितर द्वादशाकृतिं दिव आहुः परे अर्धे पुरीषिणम् । अथेमे अन्य उपरे विचक्षण सप्तचक्रे षळर आहुरर्पितम् ॥ १२ ॥ ( ऋ. १।१६४ ) ” “ सप्त युञ्जन्ति रथमेकचक्रमेको अश्वो वहति सप्तनामा । त्रिनाभिचक्रमजरमनर्व यत्रेमा विश्वा भुवनानि तस्थुः ॥ ऋ. १।१६४।२ ” इत्यादयः प्रत्यक्षशारीरवर्णनपरा अपि मन्त्राः सवत्सरादिपरत्वेन व्याख्याता अतो विज्ञायते वहोः समयाच्छारीरविषये उदासित जनैरिति । उक्तशतपथब्राह्मणे तु यथाकथञ्चित्सादृश्य प्रदर्शित, निरुक्तकारेणाऽपि तदेवाऽऽलम्बितमिति विचार्य नितरा खिद्यते नश्चेत इति ।

## अथ त्रिदोषविवरणम्

वातपित्तश्लेष्माणश्च आयुर्वेदे तिलेषु तैलमिव व्यापका दृश्यन्ते, तेषा यथार्थस्वरूप परिचाययितुमायुर्वेदाऽध्यापका अपि न प्रभवन्ति च्छात्राणान्तु कथैव दूरेऽपास्ता । टीकाकारैस्तु यथास्थानसमागत यथेच्छं व्याख्यायि तत्स्वरूप यथार्थतयैकत्र स्थानेऽनासाद्य भारतवर्षादायुर्वेद स्वदेशं नीतवद्भि र्ग्रीसीयैः—“ वमने स्वेदप्रसेकौषधकफपित्ताऽनिलाः क्रमेण प्रवर्तन्ते तथा विरेचने वातमूत्रपुरीषपित्तानि पुनश्चान्ते वायुः ॥ अष्टाङ्गसं. सू. २७ ॥ यथा च वमने प्रसेकौषधकफपित्ताऽनिलाः क्रमेण गच्छन्ति, एव विरेचने मूत्रपुरीषपित्तौषधकफा इति, सु. चि. ३३।२२ ” इत्यादिवाक्यानि दृष्ट्वा अधोवातादौ वातः, कासादौ तन्तुमच्छ्वेतपदार्थः कफः, वमने हरितपीतनीलवर्णो द्रवः पित्तमिति स्थूलस्वरूप वातादीना निरचायि । तद् दृष्ट्वा गताऽनुगतिकतया तत्समीपवर्तिदेशीयैरपि तत्रैव वातादीना स्वरूप स्थिरीकृतम् । ततश्च भारतीयाऽऽयुर्वेदे न किञ्चित्सूक्ष्मशारीरतत्त्व चिकित्सातत्त्वञ्चाऽस्तीति विविधमप्याक्षेपि । तद् दृष्ट्वा विदेशीयविज्ञानझञ्झावातप्रकम्पितमस्तिष्का भारतीया अपि अस्मत्पूर्वजाश्चिकित्सारहस्य न किमपि ज्ञातवन्त इति प्रतिपद प्रत्यहञ्च अधिक्षिपन्ति तद् दृष्ट्वा दग्धे क्षारदानमिवाऽऽसाद्य नितरा विषीदति चेतः । तत्कालुष्य निर्मिमार्जिषवो वैद्यवरा ‘ आयुर्वेदीयत्रिदोषवादोऽत्यन्तमनुमानविषयः इन्द्रियसृष्टेरपि गहनविषयः स च रत्नपरीक्षकैरिवाऽऽजन्माऽभ्यस्तः यत्किञ्चिन्मात्र हृदये स्फुरति, इत्यादि वाग्जालमास्तीर्य पुनरपि त विषय भ्रमगुहाया पिदधति । तदाऽऽकलय्याऽऽयुर्वेदाऽध्यायिना

बुद्धि नितरा कुण्ठिता भवति। तत्र यत्किञ्चिद्यथाशक्ति विचार्यते—"सर्वेषां व्याधीनां वातपित्तश्लेष्माण एव मूलं तल्लिङ्गत्वाद् दृष्टफलत्वादागमाच्च। यथाहि—कृत्स्नं विकारजातं विश्वरूपेणाऽवस्थितं सत्त्वरजस्तमांसि न व्यतिरिच्यन्ते, एवमेव कृत्स्नं विकारजातं विश्वरूपेणाऽवस्थितमव्यतिरिच्य वातपित्तश्लेष्माणो वर्तन्ते। सु. सू. २४।८" अत्र सत्त्वरजस्तमांसि विश्वरूपेण=समस्तब्रह्माण्डरूपेण अवस्थितं=दृश्याऽदृश्यरूपेण स्थितं तत्कृत्स्नं समग्रमपि विकारजातं=कार्यजातं मृदो घटादिवत् स्वस्वरूपाऽभिन्नं सत्त्वरजस्तमांसि=समस्तसृष्टेः कारणभूतानि न व्यतिरिच्यन्ते स्वस्वरूपतस्तानि पृथग्भूत्वा न दृश्यन्ते, स्वस्वरूपस्यैवाऽऽकारविशेषेण विकारजातस्य परिणतत्वात् मृद्घटस्य मृदभिन्नत्वेनैव जायमानत्वाद् इयत्परिमाणमृद्भागेन घट उत्पन्नस्तावतो भागस्य पृथग्वर्तमानत्वं घटं विहाय न दृश्यते, दृश्यते तु तस्मिन् घटे एव। मृत्पिण्डस्य घटरूपेण परिणतत्वादाकारमात्रस्यैव विशेषत्वम्, वस्तुतस्तु येयं मृत्पिण्डरूपे आसीत् सैव घटेऽप्यस्ति उपादानकारणस्य कार्यात्पृथग्दर्शनं न भवत्येवेति सर्वजनीनः सिद्धान्तः। एवमनेनैव प्रकारेणेदं=पुरतो दृश्यमानं विश्वरूपेण=शारीराऽऽरम्भकसूक्ष्माऽतिसूक्ष्माऽवयवानारभ्य स्थूलाऽऽकारपर्यन्तं परिणतं आकारविशेषमासादयद्विकारजातं=शरीररूपम्। अवस्थितं=नानाप्रकारेण वर्तमानं व्यतिरिच्य=पृथक् स्थापयित्वा वातपित्तश्लेष्माणो न वर्तन्ते। अयमत्राऽभिसन्धिः, यथा—विश्वरूपं जगत् सत्त्वरजस्तमसां परिणामरूपमस्ति तथा इदं शरीरं वातपित्तश्लेष्मणां परिणामरूपम्। शरीरस्योपादानकारणानि ह्येते, न च वाच्यमन्योऽन्याऽऽश्रयो दोष इति मातापित्रोः शुक्रशोणितयोरेव तद्रूपत्वात्। तथाच—"नर्ते देहः कफादस्ति न पित्तान्न च मारुतात्। शोणितादपि वा नित्यं देह एतैस्तु धार्यते॥ सु. सू. २१।४" अयं देहः सूक्ष्माऽतिसूक्ष्माऽवयवैः सङ्घीभूयोपचितः कफादृते=कफं विहाय, ल्यब्लोपे पञ्चमी। एवं पित्तात्=पित्तं विहाय, एवं मारुतात्=मारुतं विहाय नास्ति। एतान् पृथक् स्थापयित्वा नैव द्रष्टुं शक्यते (उपादानकारणत्वादेषाम्) अत्र वातपित्तकफानां स्वरूपस्याऽपरिचितत्वादाह—शोणितादपि वेति। शोणितं विहाय पृथक् कृत्वा शरीरं भिन्नतया केनाऽपि द्रष्टुमशक्यं, एतैः परिचिताऽपरिचितैः देहो धार्यते। अथवा शोणितशब्देन मातृरजसो ग्रहणमस्ति। एतेषां देहधारणे मृदा घटो धार्यत इतिवदुपादान(समवायि) कारणत्वं बोध्यम्। न पुनः शिक्येन घटो धार्यत इतिवत् निमित्तकारणत्वम्। तत्र शोणितस्य शरीराऽऽरम्भकत्वम् सर्वजनप्रसिद्धम्। तत्रैषा धातूनामन्नपानरसः प्रीणयिता। रसजं पुरुषं विद्याद्रसं रक्षेत्प्रयत्नतः। अन्नात्पानाच्च मतिमानाचाराच्चाऽप्यतन्द्रितः॥ सु. सू. १४।११–१२" अत्र वातपित्तकफा अपरिचितास्ते के कुत्र च निवसन्तीति प्रश्ने स्वयमेवोत्तरयति—"तत्र वा गतिगन्धनयोरिति धातुः, तप सन्तापे, श्लिष आलिङ्गने एतेषां कृद्विहितैः प्रत्ययैः वातः पित्तं श्लेष्मेति च रूपाणि भवन्ति॥ सु. सू. २१–५" अत्र केवला शब्दसिद्धिः प्रदर्शिता तत्स्फोटाऽभावेन न किमपि प्रयोजनं सिद्धमतोऽत्राऽयमभिप्राय आचार्यस्य बोध्यः। सृष्टिप्रपञ्चे सत्त्वरजस्तमोभिर्यथा विश्वोत्पत्तिर्वर्णिताऽस्ति तथा चिकित्साशास्त्रे पञ्चमहाभूतेभ्यः शरीरवर्णनं कृतमस्ति तावन्मात्रे चिकित्साशास्त्रस्याऽधिकारत्वात्—"भूतेभ्यो हि परं यस्मान्नाऽस्ति चिन्ता चिकित्सिते॥ सु. शा. १।१३" भूतेभ्यः=पञ्चमहाभूतेभ्यः परमुपरिष्टाच्चिकित्सिते=चिकित्साशास्त्रे चिन्ता (गवेषणा)नाऽस्ति प्रयोजनाऽभावात्, शोधनसंशमनरूपक्रियायाः पञ्चभूतेष्वेव सम्भवात्। नन्विन्द्रियाणां तदर्थानाञ्चाऽऽयुर्वेदे प्रतिपदं वर्णनमस्ति, अथ कथमुच्येत चिकित्सिते भूतेभ्यः परं चिन्ता नाऽस्तीति अत आह—"भौतिकानि चेन्द्रियाण्यायुर्वेदे वर्ण्यन्ते तथेन्द्रियार्थाः॥ सु. शा. १।१४" यद्यपीन्द्रियाणि न भौतिकानि सन्ति किन्तु वैकारिकादहङ्काराज्जातानीति साङ्ख्यशास्त्रे प्रसिद्धम्। तथापि कार्यकारणयोरभेदबुद्धिमास्थाय चिकित्सकानां पठनपाठनाद्यानुकूल्याय इन्द्रियेषु भौतिकत्वं कल्पितमस्ति। यथार्थतस्तु वैकारिकाण्येवेन्द्रियाणि, स्थूलेन्द्रियार्थास्तु भौतिका एवेत्यर्थं बोधयितुं भौतिकानि चेन्द्रियाण्यायुर्वेदे वर्ण्यन्ते=व्य-

वहारार्थमङ्गीक्रियन्ते न तु सिद्धान्तरूपेण तथैव स्थिरीक्रियन्ते । एवञ्च सति शोणितस्य रसरूपत्वात्पुरुषस्य च रसजातत्वाद्रसस्य पुनरुद्भवः पञ्चभूतेभ्यः ( उपादानकारणत्वात् ) सर्वस्य च कार्यजातस्य सत्त्वरजस्तमांस्युपादानानि, पञ्चभूतेषु च कथं तेषां स्थितिरित्यत आह—"सत्त्वबहुलमाकाशं, रजोबहुलो वायुः, सत्त्वरजोबहुलोऽग्निः, सत्त्वतमोबहुला आपः, तमोबहुला पृथिवीति ॥ सु. शा. १।१९" सृष्टिप्रपञ्चे विशुद्धगुणानामभावात् प्राधान्येन व्यपदेशा भवन्तीति न्यायात्सत्त्वादिबहुलत्वव्यवहारः—"अन्योऽन्याऽनुप्रविष्टानि सर्वाण्येतानि निर्दिशेत् । स्वे स्वे द्रव्ये तु सर्वेषां व्यक्तं लक्षणमिष्यते ॥ सु. शा. १।२०" मूलकारणानां त्रिविधत्वात्पञ्चभूतान्यप्यायुर्वेदे त्रिभागविभक्तानि कृतानि सन्ति । अप्पृथिव्योस्तमोबहुलत्वेनैककक्षां स्वीकृत्य श्लिष्यते=श्लिष्टो भवति श्लेषयति वा स श्लेष्मा । शुद्धश्लिष्धातोरन्तर्भावितण्यर्थाद्वा "सर्वधातुभ्यो मनिन्निति ( उ. ४।१४६ ) मनिन् प्रत्यये श्लेष्मेति रूपं भवति तेन जलपृथिव्योः क्रोडीकरणमस्ति—"सन्धिसंश्लेषणस्नेहनरोपणपूरणबलस्थैर्यकृत् श्लेष्मा पञ्चधा प्रविभक्तः उदककर्मणा अनुग्रहं करोति । सु. सू. १५।६" वायो रजोबहुलत्वात्सः स्वतन्त्रामेव कक्षां समासादयति रजोगुणस्योपस्तम्भनचलनगुणप्रधानत्वात् ( सत्त्वं लघुप्रकाशकमिष्टमुपष्टम्भकं चलञ्च रजः । गुरुवरणकमेव तमः प्रदीपवच्चार्थतो वृत्तिः । सां. का. १३ ) सत्त्वतमसोः सञ्चालकत्वेनाऽवतिष्ठते, अयमभिप्रायो "वा गतिगन्धनयो"रिति कथनेन सूचितः । वैयाकरणनिकाये ज्ञानगमनमोक्षप्राप्तयोऽर्था गतित्वेनाऽभिधीयन्ते । अतएव "स्वयम्भूरेष भगवान् वायुरित्यभिशब्दितः । स्वातन्त्र्यान्नित्यभावाच्च सर्वगत्वात्तथैव च ॥ सर्वेषामेव सर्वात्मा सर्वलोकनमस्कृतः । स्थित्युत्पत्तिविनाशेषु भूतानामेष कारणम् ॥ अव्यक्तो व्यक्तकर्मा च रूक्षः शीतो लघुः खरः । तिर्यग्गो द्विगुणश्चैव रजोबहुल एव च ॥ अचिन्त्यवीर्यो दोषाणां नेता रोगसमूहराट् । आशुकारी मुहुश्चारी पक्वाधानगुदालयः ॥ सु नि. १।५-८" इत्यारभ्याऽध्यायसमाप्तिपर्यन्तं गत्यर्थविस्तारो वर्णितः । गन्धनम्=सूचनम्, तेन ज्ञानतन्तूनधिष्ठाय समग्रशरीराऽवयवान् यथायोग्यं यथासमयञ्च चेष्टयते । "वायुस्तन्त्रयन्त्रधरः, प्राणोदानसमानव्यानाऽपानाऽऽत्मा प्रवर्तकश्चेष्टानामुच्चावचानां, नियन्ता प्रणेता च मनसः, सर्वेन्द्रियाणामुद्योजकः, सर्वेन्द्रियार्थानामभिवोढा, सर्वशरीरधातुव्यूहकरः, सन्धानकरः शरीरस्य, प्रवर्तको वाचः, प्रकृतिः स्पर्शनशब्दयोः, श्रोत्रस्पर्शयोर्मूलं, हर्षोत्साहयो र्योनिः, समीरणोऽग्नेः, दोषसंशोषणः, क्षेप्ता बहिर्मलानां, स्थूलाऽणुस्रोतसां भेत्ता, कर्ता गर्भाकृतीनां, आयुषोऽनुवृत्तिप्रत्ययभूतो भवत्यकुपितः, कुपितस्तु खलु शरीरे शरीरं नानाविधै र्विकारैरुपतपति बलवर्णसुखायुषामुपघाताय, मनो व्याहर्षयति, सर्वेन्द्रियाण्युपहन्ति, विनिहन्ति गर्भान् विकृतिमापादयत्यतिकालं धारयति, भयशोकमोहदैन्याऽतिप्रलापाञ्जनयति, प्राणांश्चोपरुणद्धि ॥ च. सू. १२।८" इत्यनेन गन्धनार्थो वर्णितः, अतो वायुः स्वतन्त्रामेव कक्षामवगाहते । अग्नेः सत्त्वरजोबहुलत्वात्समस्तपाककारणत्वम्, स च स्थूलरूपेण द्विविधः बाह्यश्शारीरश्च । बाह्यस्य पाककर्तृत्वमाबालवृद्धप्रसिद्धम्, शारीरस्य त्वनुमानगम्यत्वम् तथाहि—"जाठरो भगवानग्निरीश्वरोऽन्नस्य पाचकः । सौक्ष्म्याद्रसानाददानो विवेक्तुं नैव शक्यते ॥ प्राणाऽपानसमानैस्तु सर्वतः पवनैस्त्रिभिः । ध्मायते पाल्यते चाऽपि स्वे स्वे स्थाने व्यवस्थितैः । सु. सू. ३५।२७-२८" अयमेवाऽग्निः पित्ततेजश्शब्दवाच्यः, यथा—"अशितं खादितं पीतं लीढं कोष्ठगतं नृणाम् । तज्जीर्यति यथाकालं शोषितं पित्ततेजसा । सु. शा. ४।१९॥ अन्यच्च नष्टशल्यप्रकरणे—काञ्चनं राजतं ताम्रं रैतिकं त्रपुसीसकम् । चिरस्थानाद्विलीयन्ते पित्ततेजः प्रतापनात् ॥ सु. सू. २६।२०" बाह्याग्नेर्यथा कोकिलाद्याधारा भवन्ति तथैव शारीरस्य पित्तमाधारो भवति । **ननु** किमिदं पित्तमित्यत आह—तप सन्तापे इति धातोः क्तप्रत्यये पित्तमिति रूपं भवति, यथा स्थाल्यां तण्डुलजलं निक्षिप्य चुल्यामधिष्ठाप्य यावदुचितोऽग्नि र्न ज्वाल्यते तावदोदननिष्पत्ति र्न दृश्यते । एवमेवौदने भुक्ते यावज्जाठराऽग्नि र्न व्याप्रियते तावद्रसोत्पत्ति र्न भवति अतोऽनुमीयते शारीरोऽग्नि-

र्वाह्याऽग्निरिवाऽस्तीति । शरीरस्य द्रवप्राधान्यादामाशयक्लोमाऽन्याशयाऽन्नद्रवाः समुपतिष्ठन्ते एषु प्रायशः कट्वम्ललवणा रसाः सन्ति प्रधानतया तेष्वाग्नेयत्वम् अग्नेरेव पाचननिर्वर्तकत्वम्, यथा—" कटुको दीपनः पाचनो रोचनः शोधनः स्थौल्यालस्यकफकृमिविषकुष्ठकण्डूपगमनः सन्धिबन्धविच्छेदनोऽवसादनः, स्तन्यशुक्रमेदसामुपहन्ता चेति। सु. सू. ४२।१५" अम्लो रसः—अम्लो जरण पाचनो दीपनं पवननिग्रहणोऽनुलोमनः कोष्ठविदाही बहिः शीतः क्लेदनः प्रायशो हृद्यश्चेति। सु. सू. ४२।१३" लवण संशोधन. पाचनो विश्लेषणः क्लेदनः शैथिल्यकृदुष्णः सर्वरसप्रत्यनीको मार्गविशोधनः सर्वशरीराऽवयवमार्दवकरश्चेति ॥ सु. सू. ४२ । १४ ॥" कटुकलवणरसभूयिष्टः क्षारस्तु न रसः किन्तु द्रव्य—" क्षरणात्क्षारो नाऽसौ रसः द्रव्य तदनेकरससमुत्पन्नमनेकरस कटुकलवणभूयिष्ठमनेकेन्द्रियार्थसमन्वितं करणाऽभिनिर्वृत्तम्। च. सू. २६ । ९" तैरेतैराग्नेयै रसै भुंक्तस्याऽन्नजातस्य स्थूलाशान् पृथक्कृत्य शरीरोष्मसाहाय्येन जडपरमाणुषु सजीवता स्थाप्यते । तत्र प्रधानतया उक्तद्रव्येषु तपनकर्तृत्वात्पित्तत्वं साङ्केतिक स्थापितमस्ति । " रागपक्त्योजस्तेजोमेधोष्मकृत्पित्त पञ्चधा प्रविभक्तमग्निकर्मणा अनुग्रह करोति ॥ सु. सू. १५ । ५" " तच्च अदृष्टहेतुकेन विशेषेण पक्वाऽऽमाशयमध्यस्थ पित्त चतुर्विधमन्नपान पचति, विवेचयति च दोषरसमूत्रपुरीषाणि, तत्रस्थमेव चात्मशक्त्या शेषाणा पित्तस्थानाना शरीरस्य च अग्निकर्मणा अनुग्रह करोति, तस्मिन् पित्ते पाचकोऽग्निरिति सञ्ज्ञा। यत्तु यकृत्प्लीह्नोः पित्त तस्मिन् रञ्जकोऽग्निरिति सञ्ज्ञा, स रसस्य रागकृदुक्तः । यत्पित्त हृदयसस्थ तस्मिन् साधकोऽग्निरिति सञ्ज्ञा, सोऽभिप्रार्थितमनोरथसाधनकृदुक्तः यद् दृष्ट्या पित्त तस्मिन् आलोचकोऽग्निरिति सञ्ज्ञा, स रूपग्रहणाऽधिकृतः । यत्तु त्वचि पित्तं तस्मिन् भ्राजकोऽग्निरिति सञ्ज्ञा, सोऽभ्यङ्गपरिषेकाऽवगाहाऽवलेपनादीना क्रियाद्रव्याणा पक्ता छायानाञ्च प्रकाशकः ॥ सु. सू. २१ । १० ॥" तदीयगुणाश्च—पित्त तीक्ष्ण द्रव पूति नील पीत तथैव च। उष्णं कटुरसञ्चैव विदग्ध चाऽम्लमेव च ॥ सु. सू. २१ । ११ " अन्नरसस्य रञ्जकत्वाद्रक्तस्याऽधिकपित्तस्याऽऽकर्षकत्वाद्यकृदधिकतया पित्तस्थान निर्दिश्यते, अतएव तस्मिन् व्यापन्ने कामलाप्रभृतय. शतशः पित्तजरोगा प्रादुर्भवन्ति, तदीय व्यापन्निवृत्तौ चानायासेन शाम्यन्ति, इति चिकित्साशास्त्ररहस्यम्। अथ द्रवसमूह. परिणताऽऽन्नरसेन सह समस्तशरीरचक्र परिभ्राम्यति । अन्तरान्तरा यकृदादौ गच्छस्तत्रतत्रस्थैः सूक्ष्मस्रोतोभिः पुना रक्तान्निःसार्यते स पूर्ववत्पुनरप्यन्नरसे ससृज्य शरीरपोषणमहरहो निर्वर्तयति, अस्याऽशरय पित्तमिति सञ्ज्ञा । पित्तादीना स्थानानि तु प्राधान्येन व्यपदेशा भवन्ति इति न्यायेन निर्दिश्यन्ते इयत्ता कर्तुन्तु न कोऽपीश्वरः । पञ्चीकरणतयाऽन्योऽन्यमुपकारकोपकार्यभाव प्राप्ताना पृथक्करणाऽसम्भवात् । इममेवाऽभिप्रायमाशय्याऽऽह सुश्रुतः—" जाठरो भगवानग्निरीश्वरोऽन्नस्य पाचकः । सौक्ष्म्याद्रसानाददानो विवेक्तु नैव शक्यते ॥ सु. सू. ३५ । २७" " स एष इह प्रविष्टः आनखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वम्भरो वा विश्वम्भरकुलाये त न पश्यन्त्यकृत्स्नो हि सः ॥ श. ब्रा. १४ । ४ । २ । १६ " स्थानकालसयोगविशेषादस्य कार्याण्यप्यसङ्ख्येयानि भवन्ति यथा—शुक्तिलाला परिपाकान्मुक्तारूपतां भजति, तथा च नेत्रमणौ मुक्ताऽऽकारिता दृश्यते स एवाऽविक्षीरोष्मदानादिभिः मुक्ताऽनुकारिता च भजति, तथा स्थानादिविशेषै. पदार्था नानाऽऽकारता भजन्तो विपुलबुद्धीनामप्याकलय्यमानाः समोह जनयन्तीति द्रव्यविशेषपरिणामतत्त्वविदा प्रत्यक्षसिद्धम्। एव श्लेष्मणोऽपि ( जलपृथ्वीभागस्याऽपि ) पञ्चात्मकत्वम् । " माधुर्यात्पिच्छिलत्वाच्च प्रक्लेदित्वात्तथैव च । आमाशये सम्भवति श्लेष्मा मधुरशीतलः ॥ १३ ॥ स तत्रस्थ एव स्वशक्त्या शेषाणा श्लेष्मस्थानाना शरीरस्य च उदककर्मणा अनुग्रह करोति, उरःस्थस्त्रिकसन्धारणमात्मवीर्येण अन्नरससहितेन हृदयाऽवलम्बन करोति । जिह्वामूलकण्ठस्थो जिह्वेन्द्रियस्य सौम्यत्वात् सम्यक् रसज्ञाने वर्तते, शिरःस्थः स्नेहसन्तर्पणाऽधिकृतत्वात् इन्द्रियाणामात्मवीर्येण अनुग्रहं करोति।

सन्धिस्थस्तु श्लेष्मा सर्वसन्धिसंश्लेषात् सर्वसन्ध्यनुग्रह करोति ॥ सु. सू. २१ । १३–१४" अत्र भुक्तपीतस्य जलपार्थिवभागस्य मिलित्वा वातपित्तसाहाय्येन कणशः पृथग्भूय श्लेषणरूपतां प्राप्तत्वाच्छ्लेष्मेति नामाऽऽसादयितुं योग्यता जायते । ततश्चाऽऽमाशयिकाऽधोद्वारेणाऽधःप्रपन्ने श्लेष्माऽन्याशयिकद्रवेण ( पित्तेन ) विशेषरूपेण तीक्ष्णोष्णत्वादिगुणविशिष्टेन ससृज्य पक्वाशय गन्तु प्रक्रमते—" तत्राऽऽमाशयः पित्ताऽऽशयस्य उपरिष्टात् तत्प्रत्यनीकत्वादूर्ध्वगतित्वात् तेजसश्चन्द्र इव आदित्यस्य स चतुर्विधस्य आहारस्य आधारः, स च तत्र औदकै र्गुणैराहारः प्रक्लिन्नो भिन्नसङ्घातः सुखजरश्च भवति ॥ सु. सू. २१ । १२ " " अन्नमादानकर्मा तु प्राणः कोष्ठं प्रकर्षति । तद् द्रवै र्भिन्नसङ्घात स्नेहेन मृदुता गतम् ॥ ६ ॥ समानेनाऽवधूतोऽग्निरुदर्यः पवनेन तु । काले भुक्तं सम सम्यक् पचत्यायुर्विवृद्धये ॥ ७ ॥ एव रसमलायान्नमाशयस्थमधः स्थितः । पचत्यग्नि र्यथा स्थाल्यामोदनायाम्बुतण्डुलम् ॥ ८ ॥ अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः । मधुरात्प्राक् कफो भावात्फेनभूत उदीर्यते ॥ ९ ॥ पर तु पच्यमानस्य विदग्धस्याम्लभावतः । आशयाच्च्यवमानस्य पित्तमच्छमुदीर्यते ॥ १० ॥ च. चि. १५ " अत उत्तर पक्वाशयप्रारम्भ यावद्ग्रहणीस्थानं अन्त्रत्यकलायां [ Mucous Membranes ] ( सूक्ष्माऽभ्यन्तरपटले ) अन्नपाचकद्रवस्य निर्झरेण प्रतिपद ससृज्यमानः प्रतिष्ठान दैवस्थापितया शक्त्या स्वस्थानोचितपाकाऽवधि सङ्गृह्य शनैः शनै र्भूनागीयव्यापारेण भूनागोदरस्थमृदो वाहिर्निक्षेप इव पुरीतद्व्यापारेण पक्वाशयाऽभिमुख प्रक्षिप्यते, अस्य ( पक्वाऽऽमाशयमध्याख्यस्थानस्य ) वेदे पुरीव ततत्वात्पुरीतदिति सञ्ज्ञा । पाश्चात्यशरीरे Duodenum- Jejunum. Ileum. सञ्ज्ञात्रयम् । सम्प्रत्युपलभ्यमानार्षशारीरे पक्वाऽऽमाशयमध्यमिति सञ्ज्ञा एतदभ्यन्तरीयकलायास्तु सङ्ग्राहणशक्तियुतत्वात्सङ्ग्रहणी सञ्ज्ञा कृताऽस्ति यथा—" षष्ठी पित्तधरा नाम या कला परिकीर्तिता । पक्वामाशयमध्यस्था ग्रहणी सा प्रकीर्तिता ॥ सु. उ. ४०।१६८ " एतदाधारस्य ग्रहणीत्वग्रहस्तु भ्रममूलक एव पदार्थरहस्यव्याकुलीकरणेन महानर्थाऽऽवहत्वात् । अस्य विशेषविवरणं कलाटिप्पण्या द्रष्टव्यम् । स च द्रव उक्तप्रकारेण परिपक्वस्तैलिकचक्रवत् परिपीडितश्च पक्वाशयप्रथमद्वार यावत्प्रदीप्ताग्नेस्तैलखलविभाग इव मलरसरूपविभागद्वयमासादयति । तत्र मले विड्रूपतामासाद्य पक्वाशयात्तदीयव्यापारेणाऽपानवायुना च प्रणुन्नो गुदद्वारेण यथासमयं बहि र्निर्याति । साररूपतया निष्कृष्टो रसश्च सूक्ष्मस्रोतोभी रसप्रपामासाद्य यकृत्प्लीहानौ प्राप्य रागमुपगम्य हृदयाद्यभिमुखं प्रतिष्ठते । " पक्वाशय तु प्राप्तस्य शोष्यमाणस्य वह्निना । परिपिण्डितपक्वस्य वायुः स्यात्कटुभावतः ॥ ११ ॥ अन्नमिष्ट ह्युपक्वतमिष्टै र्गन्धादिभिः पृथक् । देहे प्रीणाति गन्धादीन् प्राणादीनिन्द्रियाणि च ॥ १२ ॥ भौमाप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः । पञ्चाऽऽहारगुणान्स्वान्स्वान् पार्थिवादीन् पचन्तिहि ॥ १३ ॥ यथास्वैरेव पुष्यन्ते देहे द्रव्यगुणाः पृथक् । पार्थिवाः पार्थिवानेव शेषाः शेषाश्च कृत्स्नशः ॥ १४ ॥ सप्तभि र्देहधातारो धातवो द्विविध पुनः । यथास्वमग्निभिः पाक यान्ति किट्टप्रसादतः ॥ १५ ॥ च. चि. १५ " " तत्र पाञ्चभौतिकस्य चतुर्विधस्य षड्रसस्य द्विविधवीर्यस्य अष्टविधवीर्यस्य वाऽनेकगुणस्योपयुक्तस्याहारस्य सम्यक् परिणतस्य यस्तेजोभूतः सारः परमसूक्ष्मः स रस इत्युच्यते, तस्य च हृदयं स्थान, स हृदयाच्चतुर्विंशतिधमनीरनुप्रविश्य ऊर्ध्वगा दश दश चाऽधोगामिन्यश्चतस्रश्च तिर्यग्गाः कृत्स्न शरीरमहरहस्तर्पयति वर्धयति धारयति यापयति च अदृष्टहेतुकेन कर्मणा । तस्य शरीरमनुसरतोऽनुमानात् गतिरुपलक्षयितव्या ॥ सु. सू. १४।३" " स खलु आप्यो रसो ( पाञ्चभौतिकत्वेऽपि द्रवप्राधान्यादाप्य इति ) यकृत्प्लीहानौ प्राप्य रागमुपैति ॥ ४ ॥ रञ्जितास्तेजसा त्वापः शरीरस्थेन देहिनाम् । अव्यापन्नाः प्रसन्नेन रक्तमित्यभिधीयते ॥ ५ ॥ रसादेव स्त्रिया रक्त रजःसञ्ज्ञं प्रवर्तते । तद्वर्षाद् द्वादशादूर्ध्वं याति पञ्चाशतः क्षयम् ॥ ६ ॥ सु. सू. १४" स च ( रसः ) " व्यानेन रसधातुर्हि विक्षेपोचित·

कर्मणा । युगपत्सर्वतोऽजस्रं देहे विक्षिप्यते सदा ॥ च. चि. १५।३६" निरन्तरं शरीरे चक्रवन्नानामार्गे विविधस्वरूपैश्च भ्रमति, तेन रक्तादिसमस्तधातव आप्यायन्ते । अत्राऽधिकतया जलपृथिव्योरेव भागौ स्तस्तयोरायुर्वेदे श्लेष्मेति साङ्केतिकी सञ्ज्ञा । यद्यपि रसादेव रक्तादीनां धातूनामुत्पत्तिः प्रदर्शिता यथा—" रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते । मेदसोऽस्थि ततो मज्जा मज्ज्ञः शुक्रन्तु जायते सु. सू. १४।१०" परन्तु तद्गर्भाऽवस्थामभिप्रेत्य कथितं प्रतिभाति तत्र हि विलक्षणप्रपाकाद्युगपदेव सर्वधातूनां सम्भवो भवति यथा—" गर्भस्य खलु सम्भवतः पूर्वं शिरः सम्भवतीत्याह शौनकः शिरोमूलत्वात्प्रधानेन्द्रियाणाम्, हृदयमिति कृतवीर्यो बुद्धेर्मनसश्च स्थानत्वात्, नाभिरिति पाराशर्यस्ततो हि वर्धते देहो देहिनः, पाणिपादमिति मार्कण्डेयस्तन्मूलत्वाच्चेष्टाया गर्भस्य, मध्यशरीरमिति सुभूतिर्गौतमस्तन्निबद्धत्वात्सर्वगात्रसम्भवस्य । तत्तु न सम्यक् । सर्वाण्यङ्गप्रत्यङ्गानि युगपत्सम्भवन्तीत्याह धन्वन्तरि गर्भस्य सूक्ष्मत्वान्नोपलभ्यन्ते वंशाऽङ्कुरवच्चूतफलवच्च । तद्यथा—चूतफले परिपक्वे केशरमांसाऽस्थिमज्जानः पृथक् पृथग् दृश्यन्ते कालप्रकर्षात्तान्येव तरुणे नोपलभ्यन्ते सूक्ष्मत्वात्तेषां सूक्ष्माणां केशरादीनां कालः प्रव्यक्ततां करोति, एतेनैव वंशाऽङ्कुरोऽपि व्याख्यातः । एवं गर्भस्य तारुण्ये सर्वेष्वङ्गप्रत्यङ्गेषु सत्स्वपि सौक्ष्म्यादनुपलब्धिः, तान्येव कालप्रकर्षात् प्रव्यक्तानि भवन्ति ॥ सु. शा. ३।३२" इत्यत्र कृतनिर्णयेन निःसंशयत्वात् रसाद्रक्तमितिक्रमस्तु तत्तद्धातूनामभिव्यक्तिमुद्दिश्य कृतोऽस्तीति प्रतीयते, कथमन्यथा आचार्यः पूर्वापरविरुद्धानि वाक्यान्युच्चारयेत् ? । " तत्र प्रथमे मासि कललं जायते, द्वितीये शीतोष्माऽनिलैरभिप्रपच्यमानानां महाभूतानां सङ्घातो घनः सञ्जायते । यदि पिण्डः पुमान्, स्त्री चेत्पेशी, नपुंसकं चेदर्बुदमिति । तृतीये हस्तपादशिरसां पञ्च पिण्डका निर्वर्तन्तेऽङ्गप्रत्यङ्गविभागश्च सूक्ष्मो भवति । चतुर्थे सर्वाङ्गप्रत्यङ्गविभागः प्रव्यक्ततरो भवति, गर्भहृदयप्रव्यक्तीभावाच्चेतना धातुरभिव्यक्तो भवति, कस्मात् ? तत्स्थानत्वात् ॥ सु. शा. ३।१८" अत्र निर्दिष्टेनाऽपि क्रमेण युगपत्सम्भव एव समायाति । " अप एव ससर्जादौ तासु बीजमवासृजत् ॥ मनु० १।" अत्राप्ययमेव क्रमः स्वीकृतोऽस्ति । पाश्चात्यशारीरे स्पर्मेटोजेति ( Spermatozoa ) प्रसिद्धं पुरुषशुक्रे आर्तवे च 'ओवम्' ( Ovum ) इत्याख्यया यत्प्रसिद्धं बीजं तदेव पुरुषप्रादुर्भावाय निर्दिष्टमस्ति "तदण्डमभवद्धैमं सहस्रांशुसमप्रभम् ॥ मनु० १।९" इत्यनेनाऽण्डाकृतित्वेन निर्देशात् । जरायुजाऽण्डजस्वेदजसृष्टेः क्रमः प्रदर्शितोऽस्ति । त्रिष्वपि प्रथममण्डाऽऽकारत्वेन दृश्यं भवति । इयमेव रचना परमगहना या ईश्वरादन्येन न निष्पादयितुं शक्या । अत्र बीजे ईश्वरेणैव यथायोनि यथास्थानं यथाऽवयवञ्च शारीरविभागप्रविभाजकाः पदार्थाः गर्भशरीरे सूक्ष्मतया निहिताः सन्ति, अत एव वर्तमाना धातवो मातुर्हृदयरसेन परिपोष्यन्ते न तु नूतनतया प्रादुर्भाव्यन्ते । नूतनप्रादुर्भावपक्षे यथायोनि समानरचना न जायेत । एवं सति रसाद्रक्तमित्यादिक्रमोऽभिव्यक्तेरेव द्योतकः स्वीकार्यः, तत्स्वीकृतौ च सर्व एव पन्थाः निष्कण्टको भवति । आयुर्वेदे साधारणतया रसादिक्रमकथनन्तु—"भौतिकानि चेन्द्रियाण्यायुर्वेदे वर्ण्यन्ते तथेन्द्रियार्थाः ॥ सु. शा. १।१४" इतिवत् स्थूलग्राहिणामुपकाराय कृतमस्तीति निश्चीयते । अनेनैव पथा क्षीरदधि, केदारीकुल्या, खलेकपोतन्यायाः स्वस्वबुद्ध्या धातुपोषणे तैस्तैष्टीकाकारैः स्वीकृताः सङ्गच्छन्ते । एतद्रहस्यज्ञानाऽनन्तरं शरीरोद्भवे शङ्कोदय एव नोपतिष्ठते । प्रकृतमनुसराम—तस्मिन् ( श्लैष्मिकपरिणामे शरीरे ) जलपृथिवीपरिणामौ प्रत्यक्षसिद्धौ वायव्याग्नेयौ त्वनुमानगम्यौ । तत्राऽऽग्नेयभागस्य स्थितिः प्रदर्शिता । श्लैष्मिकश्च द्रवरूपेण प्रविश्य शरीरेऽग्निवाताभ्यामनुगृहीतस्तत्तदाकारानासाद्य मलरूपतां प्राप्तो मूत्रस्वेदादिमार्गैर्बहिर्निक्षिप्यते, नूतनश्च पूर्ववदशनपानजो भागः पोषणचक्रमासादयति एवमिदं शरीरमहरहो जलपृथिवीभागाभ्यां पोष्यमाणं स्वसत्तामासादयति तदाऽरुग्णमिति स्वस्थमिति वा सञ्ज्ञां लभते पोषणक्रियाया अनवरुद्धत्वादथ च स्वस्वमर्यादाया वातपित्तश्लेष्मणां विद्यमानत्वात् ।

यदाऽस्मिंश्चक्रे केनाऽपि प्रकारेणाऽवरोधो विपरीतो वा क्रम उपतिष्ठते तदा रुग्णमिति अस्वस्थमिति वा सञ्ज्ञा समागच्छति पोपणाक्रियाभङ्गत्वादथ च वातपित्तश्लेष्मणां स्वस्वमर्यादावहिर्भूतत्वात्। इत्यनेनप्रवादं **श्लेष्मस्वरूपम्। वातस्वरूपं** वर्णितपूर्वं, स च प्रत्येकस्रोतोद्वारेणाऽन्तः प्रविशति निःसरति च। किञ्च सृष्टिप्रकरणाऽनुसन्धानेन भूतत्रितयस्य कारणत्वादन्नपानरूपेणाऽपि तत्प्रवेशो भवत्येतच्च सूक्ष्मदृशः पश्यन्ति न स्थूलदृशः, स्थूलरूपेण तु नासिकाद्वारेणाऽऽकाशामृत (ऑक्सिजन Oxygen) मादायोदानाऽऽधारयोः (फुफ्फुसयोः) प्रविशति, तत्र च शरीरभ्रमणपोपणादिना स्वसामर्थ्यक्षयात्कलुषित यद्रक्त तत्कालुष्याऽपाकरणाय स्वस्थमाकाशाऽमृत निक्षिप्य रक्तमलं (हायड्रोजन Hydrogen) स्वस्मिन्नादाय यथाऽऽगतमार्गेणाऽऽगत्य वहिर्निःक्षिपति एवमहरहः स्वकीयव्यापारेण रक्तशुद्धिं विदधाति वायोर्विकृतभागाश्च स्थूलसूक्ष्मस्रोतोभि र्वहिर्निःसरन्ति शुद्धाश्च प्रविशन्ति। अस्य सूक्ष्मौ प्रवेशनिर्गमावनुमानगम्यौ। पित्तश्लेष्मणोरप्येतत्साहाय्यं विना शरीरे प्रवेशनिर्गमौ भवितुमशक्यौ, अतएवोक्तं "स्वयम्भुरेप भगवान् वायुरित्यभिशब्दितः। स्वातन्त्र्यान्नित्यभावाच्च सर्वगत्वात्तथैव च॥ सर्वेपामेव सर्वात्मा सर्वलोकनमस्कृतः॥ सु. नि. १।५-६" इत्यादिनाऽध्यायसमाप्तिपर्यन्त विकृताऽविकृतस्य नामानि रूपाणि कर्माणि च वर्णितानि। अस्य "प्राणोदानौ समानश्च व्यानश्चाऽपान एव च। स्थानस्था मारुताः पञ्च यापयन्ति शरीरिणम्॥ सु. नि. १।१२" प्राणादीनि पञ्चनामानि विहितानि परन्तु सङ्क्षेपेण शरीरोर्ध्वाऽधःकार्यपरत्वेन प्राणाऽपानेति नामद्वयमेव दृश्यते तथाहि—

"प्रविशत प्राणापानावनड्वाहाविव व्रजम्। व्यन्ये यन्तु मृत्यवो यानाहुरितराञ्छतम्॥ अ. ३।११।५"
भा०—हे प्राणाऽपानौ शरीरधारकौ युवां प्रविशतम् यक्ष्मगृहीतस्य शरीरमिति शेपः। मन्त्रसामर्थ्येन निर्गन्तुकामयोरपि पुन.प्रवेशाऽभिधानेन अनिर्गतयोस्तयोः कैमुतिकन्यायेन स्थैर्यं प्रार्थित भवति। तत्र दृष्टान्तः। अनड्वाहौ अनसः शकटस्य वोढारौ वलीवर्दौ व्रज स्वनिवासस्थानम् गोष्ठमिव। अन्ये राजयक्ष्मव्यतिरिक्ता मृत्यवः मृतिहेतवो रोगादयः वि यन्तु विमुखा गच्छन्तु। तानेवाह। यान् इतरान् अन्यान् मृत्यून् शत शतसङ्ख्याकान् आहुः कथयन्ति अभिज्ञाः। शतम् इति अपरिमितनाम। तथैव प्राग् आम्नातम्। "मे मम अन्ये मृत्यवो हिंसिपुः शत ये" (२-२८-१) इति शाखान्तरेऽपि "ये ते सहस्रम् अयुतं पाशा मृत्यो मर्त्याय हन्तवे" (तै. ब्रा. ३।१०।८।२) इति।

"इहैव स्तं प्राणापानौ मापगातमितो युवम्। शरीरमस्याङ्गानि जरसे वहत पुनः॥ अ. ३।११।६॥"
भा०—हे प्राणाऽपानौ युवाम् इहैव अस्मिन्नेव शरीरे(स्तम्)भवतम्। इतः अस्माच्छरीरात् जव शीघ्रं अकाले मापगातम् मापगच्छतम्। पुनः शब्दस्त्वर्थे। किन्तु अस्य व्यावितस्य शरीर अङ्गानि हस्तपादादीनि च जरसे जरार्थम्। जरापर्यन्तमित्यर्थः वहतम् धारयतम्॥

सुश्रुतेनाऽपि प्राणोदानौसमानश्चेति समागतसूत्रे प्राणाऽपानयोराद्यन्तयोः समावेशः कृतोऽस्ति, तेनाऽन्येपां त्रयाणामत्रैवाऽन्तर्भावोऽस्तीति ध्वनितम्। "वायुर्यो वक्त्रसञ्चारी स प्राणो नाम देहधृक्। सोन्न प्रवेशयत्यन्तः-प्राणाश्चाऽप्यवलम्वते॥ प्रायश. कुरुते दुष्टो हिक्काश्वासादिकान्गदान्॥ सु. नि. १। १३" इत्यनेन वायुकर्तृकाकाशामृतग्रहणरक्तविपवहिर्निःसारणे ध्वनिते ते अन्तरा देहधारणाऽसम्भवात्। "पक्वाऽऽधानालयोऽपानः काले कर्पति चाऽप्ययम्। समीरणः शकृन्मूत्रशुक्रगर्भाऽऽर्तवान्यधः॥ क्रुद्धश्च कुरुते रोगान् घोरान् वस्तिगुदाश्रयान्॥ सु. नि. १। १९" अनेनाऽपानव्यापार. कथितः। उचितवस्तूना प्रवेशनिर्गमावनयो र्मुख्यौ धर्मौ, ताभ्यामनुकूलाभ्यामिद शरीर पाल्यते धार्यते याप्यते च। प्रतिकूलाभ्यान्तु झटिति पञ्चाऽवस्थता नीयते। "उदानो

नाम यस्तूर्द्ध्वमुपैति पवनोत्तमः । तेन भाषितगीतादिविशेषोऽभिप्रवर्तते ॥ ऊर्द्ध्वजत्रुगतान् रोगान् करोति च विशेषतः, ॥ सु. नि. १।१५" अयं प्राणवायोरेव विशेषः, व्यवहारार्थं विभिन्नसञ्ज्ञा कृताऽस्ति । वायुद्वयत्वपक्षे प्राणे एव समाविशति । "आमपक्वाशयचरः समानो वह्निसङ्गतः । सोऽन्नं पचति तज्जांश्च विशेषान् विविनक्ति हि ॥ गुल्माऽग्निसादाऽतीसारप्रभृतीन् कुरुते गदान् ॥ सु. नि. १।१६" अयञ्चाऽपानस्य विशेषः । आकाशाऽमृताऽन्नपानादि वस्तुजातं यः शरीरान्तःप्रवेशयति सः प्राणः, यश्च शरीरात् पदार्थान् वहिर्निःसारयति स अपान इति प्रवेशनिर्गमकर्माभ्यामेव वायो द्वैविध्यं जायते वस्तुतस्त्वेक एवाऽस्ति । " कृत्स्नदेहचरो व्यानो रससंवहनोद्यतः । स्वेदाऽसृक् स्रावणश्चाऽपि पञ्चधा चेष्टयत्यपि ॥ क्रुद्धश्च कुरुते रोगान् प्रायशः सर्वदेहगान् ॥ सु. नि. १ । १८" अत्र प्राणापानयोरुभयोरपि कार्यसाङ्कर्यादुभयत्र समावेशः । इम भेद " प्राणाऽपानौ समौ कृत्वा नासाऽभ्यन्तरचारिणौ ॥ गीता. ५।२७" इत्यनेन गीताया भगवानुक्तवान् । तत्र स्पष्टतया प्रवेशनकर्मणः प्राणत्व, अपनोदनकर्मणोऽपानत्व स्वीकृत्य वायौ द्वैविध्यमेव स्वीकृतम् । कूर्मकृकलादयो दशभेदाः पौराणिका ऊनपञ्चाशद्भेदाश्चाऽप्यत्रैवाऽन्तर्भवन्ति कर्मपरत्वेनाऽवान्तर्भेदकल्पनायामानन्त्यप्रसङ्गात् । आयुर्वेदे प्राणादयः पञ्च भेदास्तु चिकित्सासौकर्यार्थं प्रतिपादयितव्या एव । प्राणवायोः फुफ्फुसावाधारौ, अपानस्य तु गुदपर्यन्त वृहदन्त्रम् । तत्र फुफ्फुसयो **वातवहे** स्रोतसी अपस्तम्भौ चेति नाम्नी । यद्यपि वातवहे इति नाम धमनीव्याकरणे समागतमस्ति ( सु शा. ९ ) परन्तु तत्राऽध्याये प्रारम्भादेकादशसूत्रपर्यन्तभागस्य प्रतिसंस्कारकर्तृकृतप्रक्षेपरूपत्वादथ चैकादशसूत्रपर्यन्तमेव धमनीव्याकरणस्याऽधिकारत्वादथवा "अतऊर्ध्वं स्रोतसा मूलविद्धलक्षण व्याख्यास्याम" इत्यनेनाऽविकारान्तरस्य प्रारम्भादध्यायसमाप्तौ च " मूलात्खादन्तरं देहे प्रसृत त्वभिवाहि यत् । स्रोतस्तदिति विज्ञेय सिराधमनिवर्जितम् ॥ सु. शा ९ । १३" इत्यनेन स्रोतसां लक्षणस्योपदेशादुक्तशङ्काऽवकाश एव नाऽस्ति अतो, **वातवहे स्रोतसी** इति फुफ्फुसयोरेव नाम । " उभयत्रोरसो नाड्यौ वातवहे अपस्तम्भौ ( मैवा ) नाम, तत्र वातपूर्णकोष्ठतया कासश्वासाभ्या मरणम् । सु. शा. ६ । २६ " अत्र फुफ्फुसयोः स्पष्टतया कथनमस्ति । द्विस्थानत्वेऽपि पक्वाऽऽधानस्य यद्वाताशयत्वेन विशेषतः प्रसिद्धिरस्ति तस्येदं कारणम् । अनिच्छतोऽपि पुरुषस्य स्रोतोऽवरोधाऽभावे मुखे निहितमन्नपानाद्यन्तः प्रविशति परन्तु यावदपानः स्वकार्यं सुष्ठुतया न निर्वर्तयेत्तावद् वलादामाशये प्रक्षिप्ताऽन्नपानस्य परिणाम एव न स्यात् कुतस्तस्माद्रसाद्युत्पत्त्यपेक्षा । यथास्थानञ्च तत् ( अवरुद्धमन्नपान ) विविधरोगजालेन सम्पीड्य झटिति प्राणै र्वियोजयेत्, अतो नूतनरसोत्पादने अपान एवाऽविकृतः । तस्य च मुख्यतथा गुदपर्यन्त स्थूलाऽन्त्रं स्थान, तत्स्थितः सः आमाशयक्लोमाऽग्न्याशयग्रहणीवृक्कगवीनीवस्तिकटि (सुषुम्णामूल) प्रजननेन्द्रियाणि यथायोग्यं स्वस्वकार्याणि निर्वर्तयितुं सञ्चालयति । अत्र सर्वत्रैवाऽपानो व्याप्रियते, तद्विकृतावुक्तस्थानकार्यविप्लवे रसोत्पत्त्यादिक्रियैव स्थगिता जायते, तत्स्थगने च झटिति पञ्चत्वप्राप्ति. । तत्स्वस्थताऽऽपादनार्थं निरूहणाऽऽस्थापनोत्तरवस्तयो विहिताः । " शाखागताः कोष्ठगताश्च रोगाः मर्मोर्द्ध्वसर्वाऽवयवान् गताश्च । ये सन्ति तेषा नहि कश्चिदन्यो वायोः परं जन्मनि हेतुरस्ति ॥ ३८ ॥ विण्मूत्रपित्तादिमलाशयाना विक्षेपसङ्घातकरः स यस्मात् । तस्याऽतिवृद्धस्य शमाय नाऽन्यद् वस्ते र्विना भेषजमस्ति किञ्चित् ॥ ३९ ॥ तस्माच्चिकित्सार्धमिति ब्रुवन्ति सर्वा चिकित्सामपि वस्तिमेके । नाभिप्रदेशञ्च कटिञ्च गत्वा कुक्षिं समालोड्य पुनश्च पार्श्वम् ॥ ४० ॥ सस्नेह्य काय शिथिलांश्च कृत्वा दोषान् पुरीष ग्रथित विमथ्य । ससक्तवेगः सपुरीषदोषः प्रत्यागतो वस्तिरिति प्रशस्त. ॥ च. सि. १।३८-४१" इत्यादि चिकित्सारहस्यमाकलय्य प्रतिभाति यत्प्रवेशकर्मणः प्राणादपानस्याऽतिमहत्त्वम् । हठयोगे गुदप्रजननेन्द्रियद्वारेण दुग्धतैलादयोऽपानेनाऽऽकृष्यन्ते जार्यन्ते परिपाच्यन्ते शतशो व्याधयो निर्ह्रियन्ते च । अपि च सुषुम्णामूलमपि पक्वाशयसन्निहितम्, समस्तशरीरचेष्टाना सुषुम्णाऽधीनत्वादायुर्वेदे च वातस्यैव

सुषुम्णाऽधिष्ठितस्य कार्यकरत्वात्। अपाने विकृते सुषुम्णाकार्यविक्लवेऽपस्माराऽऽक्षेपकादिभयङ्कररोगाः समुपतिष्ठन्ते यथा––" सञ्ज्ञावहेषु स्रोतःसु दोषव्याप्तेषु मानवः । रजस्तमःपरीतेषु मूढो भ्रान्तेन चेतसा ॥ विक्षिपन् हस्तपादौ च विजिह्मभ्रूर्विलोचनः । दन्तान् खादन् वमन् फेनं विवृताक्षः पतेत्क्षितौ ॥ अल्पकालान्तरश्चाऽपि पुनः सञ्ज्ञां लभेत सः । सोऽपस्मार इति प्रोक्तः स च दृष्टश्चतुर्विधः ॥ सु. उ. ६१।८–१०" "पक्वाशयगते चाऽपि देयं स्नेहविरेचनम् । बस्तयः शोधनीयाश्च प्राशाश्च लवणोत्तराः ॥ सु. चि. ४।५" तच्छान्तौ च मुख्यतया बस्तिरभिहितोऽस्ति । ततश्चाऽन्नपानस्य रसादिपरिणामसाधने प्रधानत्वाद्रस्यादि चिकित्सितस्य मुख्याऽऽधारत्वात्परिणतेषु धातुषु परिपोषयितुं परिभ्रमद्रक्तस्थ यत्कालुष्यं तस्य फुफ्फुसद्वारेण बहिर्निःसारकत्वादपानस्य प्रधानत्वं बोध्यम्। प्राणवायोस्तु अन्नपानाऽऽकाशाऽमृतानामन्तः प्रवेशनमात्रे प्रधानत्वात्तदपेक्षयाऽपानस्याऽधिककार्यकरत्वात्प्रधानत्वम्। अतश्च **प्रवेशनकर्माऽधिकृतः प्राणः अपनोदनकर्माऽधिकृतश्चापान** इति तयो र्निष्कृष्टं लक्षणम्।

यः प्राणेन द्यावा पृथिवी तर्पयत्यपानेन समुद्रस्य जठरं यः पिपर्ति। तस्य० ॥ अ. १३।३।४

यः=रोहितः समस्तशरीरे रोहणकर्तृत्वाद्रोहितसञ्ज्ञां लभते स च परमेश्वरो वा स्याज्जीवो वा स्यात् । स प्राणेन=प्राणाख्यवायुना करणेन द्यावापृथिवी चतुर्दश लोकान् शरीरस्योर्ध्वाऽधरभागौ वा तर्पयति पोषयति। यश्च अपानेन=अपानसञ्ज्ञकेन वायुना करणेन सम्यग् द्रवन्ति गङ्गाद्या नद्यो रसरक्तादिवाहिन्यो वा यत्तत् समुद्रं प्रसिद्धं, समस्तशरीरं वा तस्य जठरं स्थूलभागानारभ्य सूक्ष्माऽतिसूक्ष्मभागपर्यन्तं यः पिपर्ति=यथास्थितं स्वप्रमाणे स्थापयति। अथ च क्षीणं नवीनरक्ताऽभिसारणेन पूरयति स देव इत्यादि । अत्र प्राणस्य बाह्यो व्यापारः प्रदर्शितः अपानस्य तु शरीरान्तर्वर्तिरक्ताद्यभिसारणादिक्रियाऽधिष्ठातृत्वं स्पष्टतया कथितमतो प्राणाऽपानशब्दयोरुक्तं निष्कृष्टं लक्षणं समीचीनं प्रतिभाति। किञ्च—

सहस्राह्ण्यं वियतावस्य पक्षौ हरे र्हंसस्य पततः स्वर्गम्।
स देवान्त्सर्वानुरस्युपदद्य सपश्यन् याति भुवनानि विश्वा ॥ तस्य० ॥ अ. १३।३।१४

सहस्राणामह्नां समाहारः सहस्राह्नम् तस्मै हितं सहस्राह्ण्यम्। अत्र सहस्रशब्दोऽसङ्ख्येयतावाचकः, तेनाऽसङ्ख्यदिवसाऽवधि यद्धितं निवासायाऽनुकूलं स्वर्गमभिलषणीयं लिङ्गाख्यमथ च स्थूलाख्यं शरीरं किं वा ब्रह्मलोकाद्यभिधं स्थानं पततः=गच्छतः हंसस्य=हंसरूपस्य अथ चाऽग्नीषोमयोरधिष्ठातृरूपस्य हरेः सुखदुःखाद्युपभोक्तु र्जीवस्य वियतौ शरीरान्तरवकाशे वर्तमानस्य अस्य पक्षौ प्राणाऽपानाख्यौ द्वे साधने स्तः । हंरूपमेकं द्वितीयञ्च सोरूपं मिलित्वा हंस इति तन्नाम स्थापनात् सः=देवः उरसि उरःप्रधाने शरीरे सर्वान्=समस्तान् देवानस्थीनि ( अनूकटिप्पणी द्रष्टव्या ) अथ च तदधिष्ठातॄनिन्द्रादीन् देवान् उपदद्य समर्प्य स्थिरीकृत्येत्यर्थः। विश्वानि समस्तानि भुवनानि जलपरिणामान् रसादीन् धातूनथ च शरीरस्य लोकसम्मितत्वाच्छरीरान्तर्वर्तिनो लोकान् सपश्यन् साक्षात्कुर्वन् याति अपानरूपेण बहिर्गच्छति समस्तधातून् रसं च प्रापयति अथ च प्राणरूपेण शरीरान्तः प्रविशति। अत्र विस्पष्टतया प्राणाऽपानयोः कार्यस्य वर्णनं कृतमस्ति। अन्यच्च—

" द्वाविमौ वातौ वात आ सिन्धो रापरावतः । दक्षं ते अन्य आ वातु व्यन्यो वातु यद्रपः ॥ अ. ४।१३।२" इमौ लोके दृश्यमानौ द्वौ वातौ पश्चाद्वातः पुरोवातश्च, " पश्चाद्वातं प्रति मीवति पुरोवातमेव जनयति । तै. सं. २।४।९।१ " इति । आसिन्धोः समुद्रपर्यन्तं तथा आपरावतस्तस्मादपि दूरदेशपर्यन्तं वातौ गच्छत इति बाह्यवातप्रार्थना । अथ च इमौ प्राणाऽपानौ द्वौ वातौ आसिन्धोः=स्यन्दत इति सिन्धुरिति

व्युत्पत्त्या नासिकादिस्थूलस्रोतांस्यारभ्य आपरावतः=सूक्ष्माऽतिसूक्ष्मतमस्रोत पर्यन्तम् । परावदिति दूरनाम अर्थान्नासिकातः प्रविश्य सिराधमनीरसायनीस्वेदायनमलायनेषूचितकार्याणि निर्वर्त्याऽन्तिममार्गं र्वातो गच्छति । वर्तमानकालेनाऽखण्डितव्यापारप्रार्थना । तत्र द्वयोरपि वातयो. कार्यं दर्शयति द्वयो र्मध्ये अन्य=एकः प्राणाख्यस्ते=तव दक्षं बलं आकाशाऽमृतग्राहणेन फुफ्फुसादिस्थे रक्ते निरुक्ते बलनामसु पठित्वा अन्ते " बल कस्माद्बल भर भवति विभर्त्तेः । नि. अ. ३ ख. ९ " आ वातु आगमयतु समस्तधातुपोषणेन व्ययीभूत पुनरागमयतु, आकाशाऽमृतस्य पुनराधानाऽभावे रक्तस्य कार्यकरत्वाऽभावात् । तदपि प्राणसाध्य भवत्यतस्तस्मात्तत्करण प्रार्थ्यते । अथो रक्ते बलस्थापनेऽपि यावता तत्स्थ कालुष्य वहि र्न निक्षिप्यते तावदप्यभीष्टसिद्धि र्दु'साधेत्यत आह व्यन्य इति । अन्यः=प्राणादन्योऽपान इत्यर्थः । स यद्रक्ते स्थित रप'=पाप " रपोरिप्रमिति पापनामनी भवतः । शमनञ्च रोगाणा यावन च भयानामिति । नि. अ. ४ ख. २१ " तत्-आसमन्ताद् वातु=वहि र्नयतु । " प्राण एवोत्प्राणेन ह्युत्तिष्ठति वाग्गी' वाचो ह गिर इत्याचक्षतेऽन्न य अन्नेन हीद सर्वं स्थितम् । छा. ब्रा. ३-३" इद=पुरतो दृश्यमानं जगत् अन्नेन=खादितपदार्थेन अद्यत इत्यन्नमित्यर्थात् सर्वं=स्थावरजङ्गमात्मक स्थितम्=आत्मानं धारयद् दृश्यते पोषणमन्तरा कस्याऽपि वस्तुनः सत्ताया अभावात् । नन्वन्नमपि कथमद्यते, अदने च किमसाधारण कारणमस्तीत्याह प्राण इत्यादिना प्राणः=प्रवेशनकर्मा वायुः, उत्प्राणेन शरीराद्बहिर्निःसर्तुमूर्ध्वव्यापारेणाऽपानवायुना साकमुत्तिष्ठति=व्याप्रियते तेनाऽन्नप्रवेशनपाचनादिकं भवत्यथ च आकाशाऽमृताहरण रक्तरसमलादीना बहिर्निक्षेपश्च भवति इत्यनया रीत्या जगदुत्पत्तिस्थिती भवतः । यदा त्वस्माद्विपरीतता भवति तदा सर्वं स्वस्वकारणे लीयते । अयमेवाऽर्थः " तच्छयोरावृणीमहे गातु यज्ञाय गातु यज्ञपतये दैवी स्वस्तिरस्तु नः स्वस्तिर्मानुषेभ्य' । ऊर्ध्वं जिगातु भेषज शन्नो अस्तु द्विपदे श चतुष्पदे ( नि. अ. ४ ख. २१ ) इत्यनेन दर्शितः । इज्यत इति यज्ञो विष्णुः " यजयाचयतविच्छप्रच्छरक्षोनङ् " ( पा. ३।३।९० ) इति साधुः त गातु स्तोतु अथ च इज्यते विष्णुरनेनेति यज्ञः सम्भारस्तस्य पतिरपि विष्णुरेव तं गातु तत्=प्रसिद्ध आकाशाऽमृताऽन्नादीना प्राणकर्तृकं शरीरान्तर्निर्विघ्नतया प्रवेशनं अथ च योः=अपानवायुकर्तृक रसरक्तमलादीनां यथोचितवहिर्निक्षेप आ=समन्ताद् वृणीमहे=याचामहे । देवा=अनूकाऽस्थीनि ( अनूकटिप्पणी द्रष्टव्या ) तेषा सम्बन्धिनी या सम्पत् सुषुम्णातन्तुसहतिरूपा तस्याःस्वस्तिरस्तु अव्यापन्ना तिष्ठत्वित्यर्थः । एव मनुष्याणामिमे मानुषाः कामक्रोधादयस्तेभ्यः सकाशात् स्वस्तिरभयमस्तु । भेषजम्=उपक्षीयमाणशरीराशपोषकमन्नपानादिक अथ च बृंहणादिद्रव्यं भुक्तं ऊर्ध्वं=यथासमय परिपच्य रसस्रोतोद्वारा समस्तशरीर जिगातु विशेषेण स्वस्वद्वारेण व्याप्नोतु । एव नोऽस्माकं सम्बन्धिने द्विपदे=द्विपदविशिष्टाय स्त्रीकलत्रादिरूपाय, अथ च चतुष्पदे=गोमहिष्यादिसमुदायाय श=नैरुज्यरूपं कल्याणमस्तु । निरुक्ते श शब्देन रोगाणा शमन युशब्देन च भयाना यावन व्याख्यातम् । तथाहि " शमनञ्च रोगाणा यावनञ्च भयानाम् । नि. अ. ४ खं.२१" इति । " अथाऽपि शयु र्बार्हस्पत्य उच्यते " इति तु पौराणिकीकथामनुसृत्य लोकरञ्जनाय कथितम्, तत्त्वकिञ्चित्करम् । तच्छयोरित्यस्योपलभ्यमानं भाष्य नाऽतिस्पृहणीय शारीराशारीरविषयसाङ्कर्यदूषितत्वात् ।

" या ते प्राण प्रिया तनू र्यो ते प्राण प्रेयसी । अथो यद्भेषज तव तस्य नो धेहि जीवसे ॥ अ. ११।६।९" हे प्राण ते=तव या प्रिया=प्रीतिविषया तनूः=शरीरम् अस्ति तथा प्राण ते तव यौ=ये प्रेयसी प्रियतमरूपे प्राणाऽपानवृत्तिद्वयात्मके अग्नीषोमरूपे वा । अथो अपि च तव सम्बन्धि यद् भेषज अमृतत्वप्रापक औषधमस्ति तस्य=सर्वस्य प्रियतनुःप्रभृतिकस्य सकाशात् नः अस्माकं जीवसे जीवनाय धेहि अमृतत्वसाधनं औषधं प्रयच्छ ॥ ( सा० भा. ) ॥ क्रियावशात् वायोः प्राणाऽपानादीनि नानारूपाणि सन्ति तेषा मध्ये या

प्राणाना=रसादिधातुपरिणामाना कृते प्रिया=असाधारणकारणरूपा तनू:=त्वत्स्वरूपं सा आकाशजन्या (औक्सिजनाख्या Oxygen) हे प्राण=वायो प्रेयसी=अतितमा स्पृहणीया (तामन्तरा मनुष्यजीवनाऽसम्भवात् तया प्रतिक्षण दुष्ट रक्त विशोध्य नूतनाऽवस्थाया स्थाप्यते तदप्राप्त्या शोथकोथादिना शीघ्रमेव पञ्चत्वप्राप्ति: स्यादित्यभिप्राय: )ऽस्ति। ननु तया तन्वा त्वया किङ्कर्तव्यमस्तीत्यपेक्षायामाह—अथो यदिति। अपि च तस्य=तव यदाऽऽकाशजन्याख्य भेषज जीवनसाधनममृतमस्ति येन त्व नोऽस्माञ्जीवसे=जीवयसि तदमृतमस्मासु धेहि।

"प्राण: प्रजा अनु वस्ते पिता पुत्रमिव प्रियम्। प्राणो ह सर्वस्येश्वरो यच्च प्राणति यच्च न॥ अ. ११।६।१०॥" प्रिय=प्रीतिपात्र पुत्र पितेव य: प्रजा: प्रजायमाना अनु=अनुकूल यथा स्यात्तथा वस्ते आच्छादयति स:=प्राण: प्राणाऽऽख्या लभते हेति प्रसिद्धौ स: यच्च मनुष्यादि प्राणति यच्च स्थावर न प्राणति तस्य सर्वस्यापीश्वर: प्राण:=वायुरेवाऽस्ति।

"प्राणाय नमो यस्य सर्वमिद वशे। यो भूत. सर्वस्येश्वरो यस्मिन्त्सर्वं प्रतिष्ठितम्॥ अ. ११।६।१" इद=पुरतो दृश्यमान स्थावरजङ्गमात्मक सर्व जगत् यस्याऽनिर्वचनीयस्य वायो वशेऽस्ति, यस्मिंश्च सर्व प्रतिष्ठितमस्ति यश्च सर्वस्य भूत:=भूतकालाऽवच्छिन्न:=न तु भविष्यन् सर्वदा लब्धसत्ताकत्वात् ईश्वर:=ईशिताऽस्ति तस्मै प्राणाय वायवे ते=तुभ्यं नमोऽस्तु॥

"नमस्ते प्राण क्रन्दाय नमस्ते स्तनयित्नवे। नमस्ते प्राण विद्युते नमस्ते प्राण वर्षते॥ अ. ११।६।२" हे प्राण=जीवननिर्वहण क्रन्दाय=आनुकूल्ये हर्षणाय प्रातिकूल्ये रोदनाय वातप्रातिकूल्ये सर्वेऽपि रुदन्ति। 'क्रदि' आह्वाने रोदने च, अच् प्रत्यय:। तथा स्तनयित्नवे स्तनयित्नुरभ्र तद्रूपाय अथ च तद्वद् ध्वनिकर्त्रे ते=तुभ्य नमोऽस्तु। अथ च हे प्राण विद्युते=विद्युद्रूपाय अपि च सुषुम्णावैभवनिर्वर्तकाय तद्वैभवस्य वायुनिर्वर्त्यत्वात् अथ च शरीराऽग्निनिर्वर्तकाय पित्तकफयो: सत्त्वतमोरूपयो र्वातव्यापारमन्तरा स्वस्वकार्यकरणाऽसम्भवात्। हे प्राण वर्षति=सिञ्चतीति वर्षन् तस्मै वर्षते=सेचनकर्त्रे 'वृषुसेचने' शता। यद्यपि शरीरे रसस्य सेचनकर्तृत्वाच्छ्लेष्मरूपत्वमस्ति न तु वातरूपत्वं तथापि वातसाहाय्यमन्तरा तत्करणाऽसम्भवात्तथा कथितमिति बोध्यम्।

"नमस्ते प्राण प्राणते नमो अस्त्वपानते। पराचीनाय ते नम: प्रतीचीनाय ते नम. सर्वस्मै त इदं नम:॥ अ. ११।६।५" सायणभा०—हे प्राण देव प्राणते=प्राणनव्यापार कुर्वते ते=तुभ्य नमोऽस्तु। तथा अपानते=अपाननव्यापार कुर्वते अपानवृत्त्यात्मकाय तुभ्य नमोऽस्तु। तथा पराचीनाय पराञ्चनाय परागमनस्वभावाय देहाद् वहिरवस्थिताय ते=तुभ्य नमोऽस्तु तथा प्रतीचीनाय प्रतिमुख अञ्चते देहमध्ये वर्तमानाय ते=तुभ्य नमोऽस्तु। किं वहुना सर्वस्मै सर्वव्यापारकर्त्रे सर्वप्राणिशरीरान्तर्वर्तिने ते=तुभ्य इद नम अय नमस्कारो भवतु॥

"नमस्ते अस्त्वायते नमो अस्तु परायते। नमस्ते प्राण तिष्ठत आसीनायोत ते नम.॥ अ. ११।६।७" एतीति आयस्तस्मै आयते, आङ्पूर्वकादिण् गतावित्यस्माच्छता। आकाशाऽमृतङ्गृहीत्वा शरीरान्त: प्रविशते। हे प्राण ते नमोऽस्तु। अथ च परायते=रक्तकालुष्य गृहीत्वा वहिर्गच्छते अथ च आसीनाय=अन्त:शरीर सञ्चरते ते नम.। अनेनोदानसमानव्यानाना ग्रहणम्।

"प्राणमाहुर्मातरिश्वानं वातो ह प्राण उच्यते। प्राण ह भूतं भव्यं च प्राणे सर्वं प्रतिष्ठितम्॥ अ. ११।६।१६" मातरि=अन्तरिक्षे श्वसिति वर्तते स मातरिश्वा (औक्सिजन Oxygen) अर्थादाकाशे वर्तमानो विशुद्धात्मा वायुस्त प्राण=प्राणाख्यमाहु:। मातरिश्वेति कथनेन शरीराद्बहिर्नि:सरतो वायोरनायासेनाऽपानत्व सिद्धम्। कर्मभेदादेवाऽनयो र्भेदोऽस्ति न वास्तविक:। प्राणे=प्राणवायौ सति भूत=भूतकालाऽवच्छिन्नमथ

च भव्यम्=भवितुमिच्छद्वस्तु सर्वं=वर्तमानाद्यवान्तरभेदयुक्तं वा वस्तु प्राणे प्रतिष्ठितमस्ति तमन्तराकालव्यवहार-स्याऽप्यसम्भवो भवेत्।

"आथर्वणीराङ्गिरसी र्दैवी र्मनुष्यजा उत। ओषधयः प्र जायन्ते यदा त्वं प्राण जिन्वसि॥ अ. ११।६।१६" आथर्वणी=अथर्वणा महर्षिणा सृष्टा शान्तिपुष्ट्यादिकाः क्रिया:=अथ च आङ्गिरसीः=अङ्गिरोभि र्ऋषिभिरुत्पादिताः कृत्योत्थापननिवर्तनादिरूपाः, या उद्दिश्य "श्रुतीरथर्वाऽङ्गिरसीः कुर्यादित्यभिचारयन्। वाक्-छस्त्रं वै ब्राह्मणस्य तेन हन्यादरीन्द्विजः॥ मनु० ११।३३" अथ च मनुष्यजाः=मनुष्यप्रयत्नसाध्याः स्वस्ति-वल्युपनयननमस्कारमङ्गलादिरूपाः क्रिया ओषधयः=ओषः पाको धीयते यासु ता ओषधयः अर्थाद्यथेष्टफलका-रिण्यस्तदा सम्पद्यन्ते हे प्राण यदा त्वं जिन्वसि=लब्धसत्ताको भवसि यद्वा आनुकूल्येन साहाय्यं करोषि रणा-ऽङ्गणादौ यस्मिन् पक्षे वायोरानुकूल्यं भवति तस्यैव पक्षस्याऽव्याहतो जयो भवतीति प्रत्यक्षसिद्धम्। एवं शरीरे यदा वायुः सानुकूलो भवति तदा भरणपोषणादयः सर्वा अपि क्रियास्सफला भवन्ति तत्प्रातिकूल्ये तु सर्वा एव प्रतिकूला भवन्तीत्यायुर्वेदसिद्धान्तः।

"एकं पादं नोत्खिदति सलिलाद्धंस उच्चरन्। यदङ्ग स तमुत्खिदेन्नैवाद्य न श्वः स्यान्न रात्री नाहः स्यान्न व्युच्छेत् कदाचन॥ अ० ११।६।२१" सायणभा०—अथ वा हन्ति गच्छति कृत्स्नशरीरं व्याप्य वर्तत इति हंसः प्राणः। सलिलात् सलिलोपलक्षितात् पाञ्चभौतिकाद् देहाद् उच्चरन् प्राणवृत्त्यात्मना ऊर्ध्वं गच्छन् एकं पादं अपानवृत्त्यात्मकं नोत्खिदति नोत्क्षिपति। यदि स प्राणस्तमपि अपानात्मकं पादम् उत्खिदेत् शरीराद् उत्क्षिपेत् तदा प्राणस्य कार्त्स्न्येन शरीरतो निर्गतत्वात् मृतशरीरस्य तस्य अद्य श्वः रात्रिः अहः इत्येव-मात्मकः कालविभागो न स्यात्। कदाचिदपि न व्युच्छेत् तमसो निवृत्तिर्न स्यात्। अतः जगत् सजीवं कर्तुं एकं पादं नोत्खिदतीत्यर्थः॥" अत्र योगमार्गे तन्त्रशास्त्रे च सः इति सोमात्मकः, प्राणवायुरभिहित आकाशा-ऽमृतरूपत्वेन तस्य सोमात्मकत्वात्। हमिति अहङ्कारात्मकः, अहङ्कारे तमः प्राधान्यात्कालुष्ययुक्तो वायुरर्थादपानो ऽभिप्रेतः। एवङ्कृत्वा च पादद्वयं भवति तत्राऽहङ्कारेण बहिरायाति सः कारेणाऽन्तः प्रविशति, अनयो र्वर्णयोरा-नुलोम्यवैलोम्याभ्यां सोहम्—हंसः इति मन्त्रद्वयं निष्पद्यते अयमेवाऽजपागायत्रीशब्दवाच्यो मन्त्रः इमं सञ्जातं श्वासोच्छ्वासाभ्यां यथासम्प्रदायमावर्तमाना विधूतपापाः पूर्णयोगिनः सायुज्यादिमुक्तिभाजोभवन्ति। अवशिष्टाऽष्ट-ष्टरङ्गमयस्त्वणिमादिसिद्धिसम्पन्नास्सम्पद्यन्ते। इममेवप्रकारं "प्राणाऽपानौ समौ कृत्वा नासाभ्यन्तरचारिणौ॥ गी० ५।२७" भगवानुक्तवान्। अस्य मन्त्रस्य परमगोप्यत्वादेव भगवता सूचितम्। प्राणाऽपानस्थितेः परमेश्वर-सत्ताऽधीनत्वात्कुत्रचित्प्राणशब्देन परमेश्वरोऽपि निर्दिश्यते "यथा प्राण बलिहृतस्तुभ्यं सर्वाः प्रजा इमाः। एवा तस्मै बलिं हरान् यस्त्वा शृणवत् सुश्रवः॥ अ० ११।६।१९" इत्यादौ।

"यो अस्य सर्वजन्मन ईशे सर्वस्य चेष्टतः। अतन्द्रो ब्रह्मणा धीरः प्राणो मानु तिष्ठतु॥ अ. ११।६।२४" यः=प्राणः=प्रवेशनाऽपनोदनकर्मा (प्राणाऽपानभेदेनेति तत्त्वम्) सर्वाणि=नानारूपाणि जन्मानि= रूपग्रहणानि यस्य तथा चेष्टतः=नानाप्रकाराः क्रियाः कुर्वतः सर्वस्य=स्थावरजङ्गमात्मकस्य अस्य=पुरतो दृश्य-मानस्य जगतः ईशे ईष्टे स प्राणः अतन्द्रः=अनवरुद्धगतिः तथा धीरः=प्रवेशनिर्गमादावुचितव्यापारमालम्बमानः ब्रह्मणा=सर्वत्र व्यापकस्वभावेन स्वीयव्यापारेण साकं मा=शरीरधारिणं माम् अनु=अनुकूलं यथा स्यात्तथा तिष्ठतु= अनुवर्तताम्॥

"ऊर्ध्वः सुप्तेषु जागार ननु तिर्यङ् नि पद्यते। न सुप्तमस्य सुप्तेष्वनु शुश्राव कश्चन॥ अ. ११।६।२५" सुप्तेषु=निद्रावशीभूतेषु प्राणिषु यः प्राणः ऊर्ध्वः=आकाशाऽमृतस्य शरीरं प्रवेशकस्सन् जागार=निरन्तरं व्या-

म्रियते । पुनश्च यस्तिर्यङ् निपद्यते तिर्यग्व्यापारमालम्बमानः अर्थात् फुफ्फुसाभ्यां शुद्धरक्तमादाय हृदयङ्गत्वा शरीरे पोषणाय स्थूलसूक्ष्माऽवयवसङ्घात प्रविशति । अथ च रसायनीद्वारा रस गृहीत्वा निपद्यते सर्वत्र यथोचितपाकं प्रापय्य निक्षिपति । नन्विति शङ्कायां सर्वेऽपि प्राणिनो विश्रमार्थं यथा स्वपन्ति तथाऽस्य ( प्राणस्य ) स्वापे का गतिः स्यादिति प्रश्ने उत्तरयति—न सुप्तमस्येत्यादिना । अस्य प्राणस्य सम्बन्धि सुप्त=स्वाप कश्चन कोऽपि न शुश्राव=न श्रुतवान् । अयन्तु सर्वदा व्याप्रियमाण एवाऽऽस्ते, तत्स्वापे तु सर्वस्याऽपि प्रलयः स्यात्तद्दिग्दर्शन वाल्मीकिना कृत तद्यथा—"तस्मिंस्तु पतिते चाऽपि वज्रताडनविह्वले । चुक्रोधेन्द्राय पवनः प्रजानामहिताय स. ॥ ४८ ॥ प्रचार स तु सङ्गृह्य प्रजास्वन्तर्गतः प्रभुः । गुहा प्रविष्ट. स्वसुतं शिशुमादाय मारुतः ॥ ४९ ॥ विण्मूत्राशयमावृत्य प्रजाना परमार्तिकृत् । रुरोध सर्वभूतानि यथा वर्षाणि वासवः ॥ ५० ॥ वायुप्रकोपाद्भूतानि निरुच्छ्वासानि सर्वतः । सन्धिभिर्भिद्यमानैश्च काष्ठभूतानि जज्ञिरे ॥ ५१ ॥ निःस्वाध्यायवषट्कारं निष्क्रिय धर्मवर्जितम् । वायुप्रकोपात्त्रैलोक्य निरयस्थमिवाऽभवत् ॥ ५२ ॥ ततः प्रजा' सगन्धर्वाः सदेवाऽसुरमानुषाः । प्रजापतिं समाधावन्दुःखिताश्च सुखेच्छया ॥ ५३ ॥ ऊचुः प्राञ्जलयो देवा महोदरनिभोदराः । त्वया तु भगवन्सृष्टाः प्रजा नाथ चतुर्विधाः ॥ ५४ ॥ त्वया दत्तोऽयमस्माकमायुषः पवनः पतिः । सोऽस्मान् प्राणेश्वरो भूत्वा कस्मादेषोऽद्य सत्तम ॥ ५५ ॥ रुरोध दु.ख जनयन्नन्तः पुर इव स्त्रिय. । तस्मात्त्वा शरण प्राप्ता वायुनोपहता वयम् ॥ ५६ ॥ वायुसरोधज दुःखमिद नो नुद दुःखहन् । एतत्प्रजाना श्रुत्वा तु प्रजानाथः प्रजापति' ॥ ५७ ॥ कारणादिति चोक्त्वासौ प्रजाः पुनरभाषत ॥ यस्मिंश्च कारणे वायुश्चुक्रोध च रुरोध च ॥ ५८ ॥ प्रजाः शृणुध्व तत्सर्व श्रोतव्य चात्मनः क्षमम् । पुत्रस्तस्यामरेशेन इन्द्रेणाद्य निपातितः ॥ ५९ ॥ राहोर्वचनमास्थाय ततः स कुपितोऽनिलः । अशरीरः शरीरेषु वायुश्चरति पालयन् ॥ ६० ॥ शरीरं हि विना वायु समता याति दारुभिः । वायुः प्राणः सुखं वायु र्वायुः सर्वमिदं जगत् ॥ ६१ ॥ वायुना सम्परित्यक्त न सुख विन्दते जगत् । अद्यैव च परित्यक्त वायुना जगदायुषा ॥ ६२ ॥ अद्यैव ते निरुच्छ्वासाः काष्ठकुड्योपमाः स्थिताः । तद्यामस्तत्र यत्रास्ते मारुतो रुक्प्रदो हि नः ॥ मा विनाश गमिष्याम अप्रसाद्यादिते. सुतम् ॥ ६३ ॥ वा. रा. उ. का. ३५" प्राणाऽपानयोः शारीरक्रियासु प्रतिष्ठानसाङ्कर्यमस्ति तच्चात्राऽस्ति, अत्र च नाऽस्तीति विवेक्तुमशक्यम् तद्यथा—

"प्राणाऽपानौ व्रीहियवावनड्वान् प्राण उच्यते । यवे ह प्राण आहितोपानो व्रीहि रुच्यते ॥ अ. ११।६।१३" पाणाऽपानौ प्रवेशनाऽपनोदनकर्माणौ वातौ व्रीहियवौ ताभ्या तुल्यौ यज्ञनिष्पत्तिमिव शारीरक्रियानिर्वर्तकौ तत्र यवा यथाऽवस्थिता होमे विनियुज्यन्ते । व्रीहयस्तु कण्डनादिना विगततुषा एव "व्रीहीनवहन्ती—" त्याद्युपदेशात् इममेव भेद प्रदर्शयति—यवे ह प्राण आहित इत्यादिना । प्राणवायोराकाशाऽमृतरूपत्वेन शुद्धत्वाद्यथास्थितस्वरूप एव कार्यकारी भवति तस्मिंस्त्याज्याशस्य विशेषतोऽभावोऽस्ति अतस्स यवशब्देनोपमितः फुफ्फुसाभ्या हृदयमभिगमनकालादथ चाऽऽमाशयादेरसायनीस्रोतोऽभिगमनसमयादेव अपाने स्थले स्थले प्रत्यवयवे आकृष्टस्याऽऽकाशाऽमृतस्योपक्षीणत्वाद्दुष्टबाष्पाणाञ्च ससर्गात्कालुष्यसत्त्वात्त्याज्याशयुक्ततया व्रीहिशब्दोपमा दत्ता । अतएवाऽऽर्याणा माङ्गलिककार्येषु यववपनस्य प्रथाऽस्ति । क्षतक्षीणादौ तत्क्षण बललाभार्थं यवसक्तुमन्थः प्रयुज्यते । पाश्चात्यभिषजस्तु सर्वस्मिन्नपि रोगे बलार्थं यवपेया (बार्लीवाटर Barly Water) मुपदिशन्ति । नन्वेव सति शारीरक्रियानिर्वर्तने को विशेषतयोपकारीति प्रश्ने उत्तरयति—अनड्वानित्यादिना । यद्यपि प्रवेशनक्रियाया अभ्यर्हितता प्रतिभाति तथाप्येकेन तेन क्रियानिष्पत्तिर्न भवति यत' स अनड्वान्=अनःशरीररूप शकट वहतीति अनड्वान् एकोऽस्ति, द्वितीयस्थानेऽपान एव धुरा वहति । वर्तमानपाश्चात्यवैज्ञानिका अन्तकाले हृदयव्यापारविसृष्टिदशाया यन्त्रादिद्वारा प्राणवायुं प्रवेशयन्ति पर-

न्त्वपानवायोरवरुद्धव्यापारतया तद्यत्नस्य प्रायो निष्फलत्वमेव दृश्यते । सिद्धरसप्रयोगेण तु यदा यौगपद्येन प्राणाऽपानौ व्याप्रियेते तदा दृष्टाऽरिष्टोऽपि जीवति एतच्च सिद्धचिकित्सकेषु प्रत्यक्षदृश्यम् । क्रियाद्वैविध्यादेव च प्राणाऽपानत्वोपाधी वाते कल्पितौ चिकित्सासौकर्यात् । वातस्त्वेक एव, अत एव "प्राणो ह्युदानाऽनुगतः प्रदुष्टः सम्भिन्नकांस्यस्वनतुल्यघोषः। निरेति वक्त्रात्सहसा सदोषः कासः स विद्वद्भिरुदाहृतस्तु ॥ सु. उ. ५२। ४" इत्यादावपनोदनकर्मण्यपानेऽपि प्राणत्वकथन न दोषाय कल्पते । यत्तु पायुमार्गोऽधो निस्सरति सोऽपानः मुखात्तु प्राण इति केचिदाहुस्ते त्वायुर्वेदसिद्धान्ताऽनभिज्ञा एव । न च वाच्य "वायु र्यो वक्त्रसञ्चारी स प्राणो नाम देहधृक् । सोऽन्न प्रवेशयत्यन्त' प्राणाश्चाऽप्यवलम्बते ॥ १२ ॥ पक्वाऽऽधानालयोऽपानः काले कर्षति चाप्ययम् । समीरण' शकृन्मूत्रशुक्रगर्भार्तवान्यधः ॥ १९ ॥ सु. नि. १" इत्यादौ सुश्रुतेनाऽपि तथैव निर्देशः कृतोऽस्ति । उक्तसूत्रद्वयेन वातकर्तृकाऽन्नप्रवेशननिर्गमनकर्मणोरेव निर्देशः कृतोऽस्ति, सोऽपि (निर्देशः) स्थूलकर्मणोरेवाऽस्ति तदितरसूक्ष्मकर्मनिर्वर्तनार्थमुदानसमानव्यानाख्यास्त्रयो भेदाः पृथक्तया दर्शिताः । सूक्ष्मविचारे रक्तकालुष्यवहिर्निक्षेपणस्य कस्मिन् समावेशः स्यादिति महती चिन्ता उत्तिष्ठते । योगिनश्च मुखादिव पायुतो दुग्धतैलादिकमन्त. प्रवेशयन्ति तस्याऽपि का गतिरिति महत्यापत्तिरापतिष्यति । किञ्च "पक्वाऽऽधानालयोऽपान०" इत्यनेन पक्काशयोऽपानस्य स्थानमुक्तः, "आमपक्काशयचरः समानो वह्निसङ्गत." इत्यनेन तस्यैव समानस्थानत्वमुक्तमिति प्रत्यक्षविरोधः स्यादतो वायोः प्राणाऽपानाख्यभेदौ यवव्रीहिसदृशौ सन्तौ प्रतिस्थले मिश्रितौ दृश्येते तस्मात्प्रवेशनकर्मणि चाऽपानस्याऽधिकारो बोध्य. । वायु र्यो वक्त्रसञ्चारीत्यादयः स्थानभेदास्तु स्थूलग्राहिणा छात्राणामुपकाराय प्रदर्शितास्सन्तीति सर्वं समञ्जसम् । एवमुक्तसन्दर्भेण वातपित्तकफाना स्वरूप स्पष्टीभूत सञ्जातम् । लोके सत्त्वरजस्तमसा सूर्योऽनिलचन्द्राख्यैः स्थूलस्वरूपै र्यथेद स्थावरजङ्गमात्मक जगज्जायते स्थीयते लीयते च तथेद शरीरमपि पित्तवातश्लेष्मभि र्जायते स्थीयते लीयते च । "विसर्गाऽऽदानविक्षेपैः सोमसूर्योऽनिला यथा । धारयन्ति जगद्देह कफपित्ताऽनिलास्तथा ॥ सु. सू. २१ । ८" विशेषेण सर्जन पोषण विसर्गः, वि पूर्वकात् 'सृजविसर्गे, इति धातोर्भावे घञ् । आसमन्तादानं ग्रहण शोषणमिति यावत । आदानं 'डुदाञ् दाने , दाप् लवने' वा इत्याभ्या धातुभ्या भावे ल्युट् । विविध क्षेपण सञ्चालनं नयनं मूर्ताऽमूर्तपदार्थस्य विक्षेपः, विपूर्वकात् 'क्षिप प्रेरणे' इति धातो र्भावे घञ् । एभिः क्रियाभि. सोमः सोमगुणात्मकश्चन्द्रो वा, सवति=यथार्थपाकेन स्थावरजङ्गमात्मिका सृष्टिमुत्पादयति पाकाऽधीनत्वात्सृष्टेः, ऐश्वर्यं वा ददाति आरोग्यदानेन ऐश्वर्योऽर्जनसामर्थ्यं ददाति "आरोग्य भास्करादिच्छे-"दिति वचनात् । किं वा अग्नेरपि सूर्यरूपत्वादग्नेश्च "धनमिच्छेद्धुताशना-"दिति वचनेन अग्ने र्धनदातृत्वस्य प्रसिद्धत्वात्, "अग्नेरपत्य प्रथम हिरण्य-"मित्यादिवचनाद् रसशास्त्रे रससङ्क्रामणेन द्रव्योत्पादने अग्नेरसाधारणकारणत्वात् । 'षु प्रसवैश्वर्ययो-'रिति भौवादिकादादादिकाद्वा धातोः राजसूयसूर्य० (पा. ३।१। ११४) इत्यनेन निपातितो ज्ञेयः । 'षू प्रेरणे' तौदादिकात् 'षूङ्प्राणिगर्भविमोचने, इत्यादादिकात् 'षूङ्प्राणिप्रसवे' इति दैवादिकाद्वा रूपासिद्धिः । सर्वेषामेतेषा कर्मणा सूर्याभिनिर्वर्त्यत्वात् सूर्यमन्तरा सवत्सरविभागस्याऽप्यावृत्त्या सर्वस्याऽपि जगतः प्रलय एव स्यात् । अनिति 'प्राणयुक्ताञ्जीवान् करोति इत्यनिलः' 'अनप्राणने' इति धातोः सलिकल्यनि० (उ. १।५४) इत्यादिनोणादिसूत्रेण इलच् प्रत्ययः । एतै (सोमसूर्योऽनिलैः) र्यथा जगत्स्थावरजङ्गमात्मक धार्यते तथा श्लेष्मपित्ताऽनिलै रिद शरीर धार्यते । तत्र पृथिवीजलीयपरिणामाना तमोबहुलत्वेन श्लेष्मेति सञ्ज्ञेति पूर्वं निर्णीतम् । न च वाच्य विसर्गाऽऽदानविक्षेपैरित्यस्मिन् सूत्रे कफस्य सोमसादृश्यदानादेतदनौचित्यमापद्येत चन्द्रस्य प्रकाशात्मकत्वेन सत्त्वबहुलत्वात् । चन्द्रस्याऽपि जलपृथिव्यात्मकत्वमेवाऽस्ति ।

तथाहि—"नित्यमधःस्थस्येन्दो र्भाभिर्भानोः सितं भवत्यर्धम्। स्वच्छाययाऽन्यदसितं कुम्भस्येवाऽऽतपस्थस्य ॥१॥ सलिलमये शशिनि रवे र्दीधितयो मूर्च्छितास्तमो नैशम्। क्षपयन्ति दर्पणोदरनिहता इव मन्दिरस्यान्तः ॥ २ ॥ त्यजतोऽर्कतलं शशिनः पश्चादवलम्बते यथा शौक्ल्यम्। दिनकरवशात्तथेन्दोः प्रकाशतेऽध. प्रभृत्युदयः ॥ ३ ॥ प्रतिदिवसमेवमर्कात् स्थानविशेषेण शौक्ल्यपरिवृद्धिः। भवति शशिनोऽपराह्णे पश्चाद्भागे घटस्येव ॥४॥ वृ. सं. ४।१।४" तथा च भास्करसिद्धान्ते—"तरणिकिरणसङ्गादेष पीयूषपिण्डो दिनकरदिशि चन्द्रश्चन्द्रिकाभिश्चकास्ति। तदितरदिशि बालाकुन्तलश्यामलश्री र्घट इव निजमूर्तिच्छाययैवाऽऽतपस्थः ॥ सूर्यादध.स्थस्य विधोरधःस्थमर्धं नृदृश्यं सकलासितं स्यात्। दर्शेऽथ भार्धान्तरितस्य शुक्लं तत्पौर्णमास्यां परिवर्तनेन ॥ २ ॥ कक्षाचतुर्थे तरणे र्हि चन्द्रकरणान्तरे तिर्यगिनो यतोऽब्जात्। पादोनषट्काष्ठ ५ लवान्तरेऽतो दलं नृदृश्यस्य दलस्य शुक्लम् ॥ ३ ॥ उपचितिमुपयाति शौक्ल्यमिन्दोस्त्यजत इन व्रजतश्च मेचकत्वम्। जलमयजलजस्य गोलकत्वात् प्रभवति तीक्ष्णविषाणरूपताऽस्य ॥ ४ ॥ सि. शि. गो. शृङ्गोन्नतिवासनाध्याये १–४" अत्रार्थे श्रीपतिरपि—"धाम्ना-धामनिधेरयं जलमयो धत्ते सुधादीधितिः, सद्यः कृत्तमृणालकन्दविशदच्छाया विवस्वद्दिशि। हर्म्ये घर्मघृणेः करै र्घट इवाऽन्यस्मिन्विभागे पुन, र्बालाकुन्तलकालता कलयति स्वच्छा तनोश्छायया ॥" इति ॥

अन्यत्राऽपि—"तेजसा गोलकः सूर्यो ग्रहर्क्षाण्यम्बुगोलकाः। प्रभावन्तो हि दृश्यन्ते सूर्यरश्मिप्रदीपिता" इति। तथा च वेदे—"सुषुम्णः सूर्यरश्मिश्चन्द्रमा. ॥ वा. स १८।४०" शोभन सुम्न बल सुख वा यस्य यस्माद्वा स सुषुम्णश्चन्द्र', सूर्यस्य रश्मिभी रश्मयो यस्य स सूर्यरश्मिः, इत्यादिना चन्द्रमसो जलपृथिव्यात्मकत्वे न सन्देहः, निरुक्तेऽपि इन्दुरिति जलनाम दृश्यते। पृथिवीजलयोश्च तमोबहुलत्वम्—"भूतादेस्तन्मात्र. स तामसस्तैज-साद्भुभयम् ॥ सा. का. २५" इत्यनेन स्पष्टत्वेन तामसत्वप्रतिपादनात्। ननु"चन्द्रमा मनसो जातश्चक्षोः सूर्यो अजायत। श्रोत्राद् वायुश्च प्राणश्च मुखादग्निरजायत ॥ वा. स. ३१।१२" इत्यत्र चन्द्रमसो विराण्मनोजात-त्वस्योक्त्या विरोधः स्यादिति शङ्क्यम्? "सात्त्विक एकादशक प्रवर्तते वैकृतादहङ्कारात्। सा का. २५" इत्यनेन वैकृतादहङ्कारादुत्पन्नस्योक्तत्वेन तच्छङ्काऽवसर एव नोत्तिष्ठते। न च वाच्य तत्र एकादशात्मन इन्द्रिय-गणस्य सात्त्विकत्वमुक्तमिति सत्यम्? तत्राऽपि ( सात्त्विकत्वोक्तावपि ) वैकृतादिति विशेषणेन मनस्यसङ्ख्येया-त्मकत्व सूचितम्। त्रयाणामपि गुणाना मनस्यधिकारिभेदेन प्रत्यक्षतया दृश्यमानत्वात्। अनेनैवाऽभिप्रायेण चरके मनसस्त्रिविधत्वमुक्तं तथाहि—"त्रिविध खलु सत्त्व–शुद्ध, राजस, तामसमिति। तत्र शुद्धमदोषमाख्यातं कल्याणांशत्वात्, राजस सदोषमाख्यात रोषांशत्वात्, तथा तामसमपि सदोषमाख्यात मोहांशत्वात् ॥ च. शा. ४।३६" इति। उक्तकारिकायामपि तैजसादुभयमिति रजोयुक्तत्वस्य स्पष्टतयाऽभिधानम्, वैकृतादित्यनेन च तामसत्वकथनमतो न चरकीयकथनमसङ्गतम्। योगे तु "वृत्तयः पञ्चतय्य क्लिष्टाऽक्लिष्टाः। यो. १।५" इत्यत्र क्लिष्टाऽक्लिष्टत्वेन मनसो वृत्तिद्वयत्वमेवोक्तम्। तत्र रजस्तमोमयीना क्लेशकारणत्वा-त्क्लिष्टत्वम्। सात्त्विकीनान्तु सुखोदरत्वादक्लिष्टत्व कथितमिति न कश्चिद्विरोध'। एव गीतायामपि दैवाऽसु-रत्वेन प्रकृतिद्वयमुपन्यस्तम् तत्राऽप्ययमेवाऽभिप्राय। इममेवाऽभिप्रायमाश्रित्य—"रोहिण्यामतिसक्तस्य शरीरं नानुरक्षतः। आजगामाल्पतामिन्दो र्देहः स्नेहपरिक्षयात् ॥ दुहितॄणामसम्भोगाच्छेषाणाञ्च प्रजापतेः। क्रोधो निःश्वासरूपेण मूर्तिमान् निःसृतो मुखात् ॥ प्रजापते र्हि दुहितॄरष्टाविंशतिमंशुमान्। भार्यार्थं प्रतिजग्राह न च सर्वास्ववर्तत ॥ गुरुणा तमवध्यात भार्यास्वसमवर्तिनम्। रज' परीतमबलं यक्ष्मा शशिनमाविशत् ॥ च. चि. ८। ४–७" इति पौराणिकी कथाऽवतारः सङ्गच्छते। ये तु केचित्—"दूर्वेन्दीवरनिस्त्रिंशार्द्रारिष्टकशरकाण्डाना-मन्यतमवर्णः सुभगः प्रियदर्शनो मधुरप्रियः कृतज्ञो धृतिमान् सहिष्णुरलोलुपो बलवाश्चिरग्राही दृढवैरश्च

भवति ॥ ७२ ॥ शुक्लाक्षः स्थिरकुटिलातिनीलकेशो लक्ष्मीवान् जलदमृदङ्गसिंहघोषः । सुप्तः सन् सकमलहंसचक्रवाकान् सम्पश्येदपि च जलाशयान् मनोज्ञान् ॥ ७३ ॥ रक्तान्तनेत्रः सुविभक्तगात्रः स्निग्धच्छविः सत्त्वगुणोपपन्नः । क्लेशक्षमो मानयिता गुरूणा ज्ञेयो बलासप्रकृति र्मनुष्यः ॥ सु. शा. ४ । ७२–७४ " इत्यादि लक्षणा श्लेष्मप्रकृतिमुपलभ्य श्लेष्मणि सत्त्वप्राधान्य कल्पयन्ति तन्न श्रद्धेयम् यतः " दूर्वेन्दीस्थिरे०-" त्यादिना यानि लक्षणान्युक्तानि तानि समुपचितसमस्तगुणै र्जातस्य शरीरमभिलक्ष्य निर्दिष्टानि सन्ति । अस्मिंश्च शरीरे जलपृथिवीभागयोरधिकत्वेन सत्त्वात् सः विशुद्धः प्रचुरप्रमाणश्च भागो यदा शुक्रशोणितसयोगे सत्तामासादयन्नविरतस्ववृत्तिः प्रसवसमयपर्यन्तमवतिष्ठते तदा ह्येतानि लक्षणानि दृश्येरन् । तथात्वे च साम्याऽऽपन्नयो र्वातपित्तयोरपि कारणमस्त्यन्यथोक्तलक्षणस्य रसस्य दीर्घसमयपर्यन्ताऽवस्थितेरेवाऽसम्भाव्यत्वम् । सा च सामग्री विभूतिमत्सत्त्वेष्वेव द्रष्टुं शक्या न सर्वत्र यथा–" इक्ष्वाकुवशप्रभवो रामो नाम जनैः श्रुतः । नियतात्मा महावीर्यो द्युतिमान् धृतिमान्वशी ॥८॥ बुद्धिमान्नीतिमान्वाग्मी श्रीमाञ्छत्रुनिवर्हणः । विपुलासो महाबाहुः कम्बुग्रीवो महाहनुः ॥ ९ ॥ महोरस्को महेष्वासो गूढजत्रुररिन्दम । आजानुबाहु सुशिराः सुललाटः सुविक्रम ॥ १० ॥ समः समविभक्ताङ्गः स्निग्धवर्णः प्रतापवान् । पीनवक्षा विशालाक्षो लक्ष्मीवाञ्छुभलक्षणः ॥ ११ ॥ धर्मज्ञः सत्यसन्धश्च प्रजानाञ्च हिते रत. । यशस्वी ज्ञानसम्पन्नः शुचि र्वश्यः समाधिमान् ॥ १२ ॥ वा. रा. बाल० १।८–१२" इत्यादौ श्रीरामचन्द्रगुणवर्णन दृश्यते तत्रैवैतानि लक्षणानि सामस्त्येनैकत्र द्रष्टुं शक्यानि न प्राकृतजने । अत इद लक्षणं यथाऽपेक्षितप्रमाणयुक्तसमधातोरेवाऽस्ति नाऽनेन पृथिवीजलभागस्यैवाधिक्यं निर्णेतु शक्यम् । यत्र च समस्तान्यपि महाभूतानि किङ्करत्वेन कार्यकराणि समुपपद्यन्ते तत्र सत्त्वगुणस्याऽधिक्यसत्त्वे किं वैचित्र्यम् । अत एव " ब्रह्मरुद्रेन्द्रवरुणैः सिंहाश्वगजगोवृषैः । तार्क्ष्यहंससमानूकाः श्लेष्मप्रकृतयो नरा ॥ सु. शा ४।७६ " त्यनेन ब्रह्मादिभिः श्लेष्मप्रकृतेः सादृश्यं दर्शितम् । इयञ्च प्रकृष्टगुणयुक्तसर्वसमधातुकी एकैव प्रकृति., यदात्वकस्याऽपि कस्यचिदाधिक्य भवति तदाऽवश्यमेव विकृतिरुपतिष्ठते यथाऽत्रैव ( प्रकृतिवर्णने ) " तत्र यः प्रजागरूक शीतद्वेषी दुर्भग. स्तेनो मत्सर्यनार्यो गान्धर्वचित्त. स्फुटितकरचरणोऽल्परूक्षश्मश्रुनखकेशः क्रोधी दन्तनखखादी च भवति ॥ ६४ ॥ अधृतिरदृढसौहृदः कृतघ्नः कृशपरुषो धमनीततः प्रलापी । द्रुतगतिरटनोऽनवस्थितात्मा वियदपि गच्छति सम्भ्रमेण सुप्तः ॥ ६५ ॥ अव्यवस्थितमतिश्चलदृष्टि र्मन्दरत्नधनसञ्चयमित्रः । किञ्चिदेव विलपत्यनिबद्ध मारुतप्रकृतिरेष मनुष्य. ॥ ६६ ॥ वातिकाश्चाजगोमायुशशाखूष्ट्रशुना तथा । गृध्रकाकखरादीनामनूकैः कीर्तिता नराः ॥ ६७ ॥ सु. शा. ४ " इति वातप्रकृतेर्लक्षण तथैव " स्वेदनो दुर्गन्धः पीतशिथिलाङ्गस्ताम्रनखनयनतालुजिह्वौष्ठपाणिपादतलो दुर्भगो वलीपलितखालित्यजुष्टो बहुभुगुष्णद्वेषी क्षिप्रकोपप्रसादो मध्यमबलो मध्यमायुश्च भवति ॥ ६८ ॥ मेधावी निपुणमति र्विगृह्यवक्ता तेजस्वी समितिषु दुर्निवारवीर्यः । सुप्तः सन् कनकपलाशकर्णिकारान् सम्पश्येदपि च हुताशविद्युदुल्काः ॥ ६९ ॥ न भयात्प्रणमेदनतेष्वमृदुः प्रणतेष्वपि सान्त्वनदानरुचिः । भवतीह सदा व्यथितास्यगतिः स भवेदिह पित्तकृतप्रकृतिः ॥ ७० ॥ भुजङ्गोलूकगन्धर्वयक्षमार्जारवानरैः । व्याघ्रर्क्षनकुलाऽनूकैः पैत्तिकास्तु नराः स्मृताः ॥ ७१ ॥ सु. शा. ४ " इत्यनेन पित्तप्रकृतेश्च लक्षणमुक्तम् । अत्रोभयत्राऽपि वह्निवातयोराधिक्यमस्ति तच्च स्वगुणसहितपृथिवीजलभागयो र्न्यूनता स्पष्टतया प्रतिपादयति यथा जलीयगुणस्निग्धत्वाऽभावेन वातप्रकृतौ प्रजागरूकदुर्भगस्तेनमत्सराऽनार्यगान्धर्वचित्तस्फुटितकरचरणक्रोधिदन्तनखखादित्वान्यभिव्यक्तानि । एते वातगुणा वातगुणरूक्षत्वादिशामकस्नेहादिजलीयगुणानामल्पत्वे एव सत्तामासादयितुं प्रभविष्णवो जाताः स्वविरोध्यभावे एव विरोधिनः प्रभावो व्यज्यत इति सर्वजनीना प्रतीतिः । एव पृथिवीगुण-

गुरुत्वस्याऽल्पमात्रात्वेन स्वल्पाऽल्पश्मश्रुनखकेशत्वम् । अग्निगुणौष्ण्याऽत्पत्वे शीतद्वेषिना लव्ध्याऽऽस्पदा दृश्यते । एव पृथिवीजलगुणाना पित्तप्रकृतावल्पत्वेन स्वेदनदुर्गन्धत्वादीनि व्यक्तानि । वातस्याऽग्निसखित्वभावात्तदीयगुणानान्तु तद्वर्धकत्वेनैव परिणामो व्यक्ततयोपलक्ष्यत एव । अनयोः (वातिकपैत्तिक्योः) प्रकृत्योः सूक्ष्मतया गवेषणे कृते एतन्निश्चितं भवति यद्धातुत्रयस्य यत्र यत्र केनाऽपि कारणेन इयत्प्रमाणा हीनता भवति तत्र तत्कार्ये तत्प्रयुक्ता तावती हीनताऽवश्यं भवत्येव यथा—"श्लेष्मक्षये रूक्षताऽन्तर्दाहः आमाशयेतराशयश्लेष्माशयशून्यता सन्धिशैथिल्य तृष्णा दौर्बल्य प्रजागरणञ्च ॥ सु. सू. १५।११" एवमाधिक्येऽपि यथा—श्लेष्मवृद्धौ शौक्ल्यं शैत्य स्थैर्य गौरवमवसादस्तन्द्रा निद्रा सन्ध्यस्थिविश्लेषश्च । सु. सू १५।१७" खादितपीतलीढादीना जठराऽग्निपरिपाकाद्योऽय रस उदेति स सर्वेषा धातूना मूलकारण, तत्राऽपि जलपृथिवीभागस्यैवाऽधिक्यमस्ति स यदा कारणविशेषात्स्वप्रमाणाद्वर्धते क्षीयते वा तत्राऽपीयमेव व्यापत् । तत्र वृद्धौ यथा—"रसोऽतिवृद्धो हृदयोत्क्लेद प्रसेकञ्चाऽऽपादयति ॥ सु सू. १५।१८" क्षये यथा—"रसक्षये हृत्पीडा कम्पशोषशून्यता तृष्णा च ॥ सु सू १५।१३" अन्यच्च—"रसनिमित्तमेव स्थौल्य कार्श्यञ्च । तत्र श्लेष्मलाऽऽहारसेविनोऽध्यशनशीलस्य अव्यायामिनो दिवास्वप्नरतस्य च आम एव अन्नरसो मधुरतरश्च शरीरमनुक्रामन् अतिस्नेहान्मेदो जनयति, तदतिस्थौल्यमापादयति । तमतिस्थूल क्षुद्रश्वासपिपासाक्षुत्स्वप्नस्वेदगात्रदौर्गन्ध्यक्रथनगात्रसादगद्गदत्वानि क्षिप्रमेव आविशन्ति, सौकुमार्यान्मेदसः सर्वक्रियासु असमर्थः कफमेदोनिरुद्धमार्गत्वाच्च अल्पव्यवायो भवति । आवृतमार्गत्वादेव शेषा धातवो नाऽऽप्यायन्तेऽत्यर्थमतोऽल्पप्राणो भवति, प्रमेहपिडकाज्वरभगन्दरविद्रधिवातविकाराणामन्यतमं प्राप्य पञ्चत्वमुपयाति, सर्व एव चास्य रोगा बलवन्तो भवन्ति आवृतमार्गत्वात्स्रोतसा, अतस्तस्य उत्पत्तिहेतुं परिहरेत् । उत्पन्ने तु शिलाजतुगुग्गुलुगोमूत्रत्रिफलालोहरजोरसाञ्जनमधुयवमुद्गकोरदूषकश्यामाकोद्दालकादीना विरूक्षणच्छेदनीयाना च द्रव्याणा विधिवदुपयोगो व्यायामो लेखनवस्त्युपयोगश्चेति ॥ ३८ ॥ तत्र पुनर्वातलाहारसेविनोऽतिव्यायामव्यवायाऽध्ययनभयशोकध्यानरात्रिजागरणपिपासाक्षुत्कषायाऽल्पाशनप्रभृतिभिरुपशोषितो रसधातुः शरीरमननुक्रामन् अल्पत्वात् न प्रीणयति तस्मादतिकार्श्यञ्च भवति । सोऽतिकृशः क्षुत्पिपासाशीतोष्णवातवर्षभारादानेषु असहिष्णुः वातरोगप्रायोऽल्पप्राणश्च क्रियासु भवति । श्वासकासशोषप्लीहोदराऽग्निसादगुल्मरक्तपित्तानामन्यतम प्राप्य मरणमुपयाति, सर्व एव चाऽस्यरोगा बलवन्तो भवन्ति अल्पप्राणत्वात् । अतस्तस्य उत्पत्तिहेतु परिहरेत् । उत्पन्ने तु पयस्याऽश्वगन्धाविदारीविदारीगन्धा शतावरीबलाऽतिबलानागबलाना मधुराणामन्यासाञ्च औषधीनामुपयोग', क्षीरदधिघृतमासशालिषष्टिकयवगोधूमानाञ्च, दिवास्वप्नब्रह्मचर्याव्यायामबृंहणवस्त्युपयोगश्चेति ॥ ३९ ॥ यः पुनरुभयसाधारणानि उपसेवेत तस्य अन्नरसः शरीरमनुक्रामन् समान् धातून् उपचिनोति, समधातुत्वान्मध्यशरीरो भवति सर्वक्रियासु समर्थः क्षुत्पिपासाशीतोष्णवर्षातपसहो बलवाश्च, स सततमनुपालयितव्य इति ॥ ४० ॥ सु. सू. अ. १५" एव श्लेष्मसधर्मणो मेदसोऽपि वृद्धौ क्षये च व्यापत्, तत्र वृद्धौ—"मेदः स्निग्धाऽङ्गतामुदरपार्श्ववृद्धिकासश्वासादीन् दौर्गन्ध्यञ्च ॥ सु. सू. १५।१८" एव तदीयक्षयेऽपि यथा—"मेदः क्षये प्लीहाऽभिवृद्धिः सन्धिशून्यता रौक्ष्य मेदुरमासप्रार्थना च ॥ सु. सू. १५।१३" किञ्च "समदोषः समाऽग्निश्च समधातुमलक्रियः । प्रसन्नात्मेन्द्रियमनाः स्वस्थ इत्यभिधीयते ॥ सु. सू. १५।४५" इत्यत्र शरीरधारकसमग्रसामग्र्याः समत्वेनैव स्वस्थस्य लक्षण निर्दिष्टम् । साम्य पुनः स्वस्थतायामेवाऽनुमातु शक्यम् तथाहि—"एषा समत्व यच्चाऽपि भिषग्भिरवधार्यते । न तत्स्वास्थ्यादृते शक्य वक्तुमन्येन हेतुना ॥ सु. सू. १५।४४" तस्याः समताया निरन्तर रक्षण करणीयमिति विशेषतोऽभ्यनुज्ञा कृताऽस्ति यथा—"स्वस्थस्य रक्षण कुर्यादस्वस्थस्य तु बुद्धिमान् । क्षपयेद्बृंहयेच्चाऽपि

दोषधातुमलान् भिषक् ॥ तावद्यावदरोगः स्यान्नरो रोगसमन्वितः ॥ सु. सू. १५।४७ ” इत्यादिग्रन्थपर्यालोचनया सुश्रुते इन्दीवरेत्यादिना यच्छ्लेष्मप्रकृतिलक्षणमुक्तं तत् समसर्वधातुक्याः प्रकृत्या एवाऽस्ति न पुनर्वातपित्तप्रकृत्योरिव विषमताऽऽपन्नश्लेष्मप्रकृतेः। तस्माद्यत्र श्लेष्मण आधिक्य स्यात्तत्र तमोगुणजाताः कासश्वासदीर्घसूत्रित्वादयो दुर्गुणा अवश्यमेव भवन्ति यथा तामसकायनिरूपणे—“ दुर्मेधस्त्व मन्दता च स्वप्ने मैथुननित्यता । निराकरिष्णुता चैव विज्ञेयाः पाशवा गुणाः ॥ ९५ ॥ अनवस्थितता मौर्ख्यं भीरुत्व सलिलार्थिता । परस्पराऽभिमर्दश्च मत्स्यसत्त्वस्य लक्षणम् ॥ ९६ ॥ एकस्थानरति नित्यमाहारे केवले रतः । वानस्पत्यो नरः सत्त्वधर्मकामार्थवर्जित. ॥ ९७ ॥ सु. शा. अ. ४ ” दूर्वेन्दीवरेत्यादिना निर्दिष्टलक्षणानि तु न भवन्त्येव । “ शुक्रशोणितसंयोगे यो भवेद्दोष उत्कटः । प्रकृति जायते तेन तस्या मे लक्षणं श्रृणु ॥ सु. शा. ४ । ६३ ” शुक्रशोणितयोः पञ्चभूतात्मकयोः वैद्यकीयसङ्केतेन वातपितकफात्मकयो र्वा संयोगे यः पञ्चसु ( पञ्चभूतेषु ) त्रिषु ( वातपित्तश्लेष्मसु ) वा मध्ये दोषः=कारणसामग्रीसत्त्वे दोषोत्पादनशील: तदभावे तु पोषक इत्यर्थ स उत्कट । स्वेतराऽधिकवीर्यशाली भवेत् लब्धास्पदो भवति तेन दोषेण विषमताऽऽपन्नेन समत्वाऽऽपन्नेन वा प्रकृतिः प्रकरणवशात् तदतिरिक्तवस्तुन उपस्थित्यभावाद्वा स्वभावो जायते निर्वर्तते । तस्याः स्वभावस्य मे मम वदतो लक्षण ( स्वरूप ) श्रृणु अवगच्छेत्यर्थ , समसर्वधातुकायाऽपेक्षया सर्वस्मिन्नपि काये ये ये स्वभावा दृश्यन्ते तत्रतत्र यत्किञ्चिद् दूषणमवश्यमेवाऽवतिष्ठते । तच्च किंप्रयुक्तो भवतीति विचारे “ बलीयसाऽबल जीयते ” इति न्यायेन तदाऽऽरम्भकवस्तुन उत्कटताऽवश्य भवितु योग्या । तथात्वे च दुष्टिरवश्यमेवाऽभिव्यज्यते, अत एव सुश्रुते प्रकृतित्रयलक्षणान्युक्त्वाऽपि सात्त्विकराजसतामसकायाना वर्णन कृतमस्ति । परन्तु तत्र सत्त्वकायलक्षणेषु दूर्वेन्दीवरनिस्त्रिंशेत्यादि निर्दिष्टप्रकृते र्लक्षणानि सामस्त्येनैकत्र कुत्राऽपि न दृश्यन्त एव इति हृद्यम्, अत उत्कटदोषत्वेन समसर्वधातुकत्वेन च प्रकृतिद्वैविध्यम् । तत्र समसर्वधातुकत्वमेकविधमेव, केनाऽपि प्रकारेणाऽनेकत्वाऽसम्भवात् । उत्कटदोषत्वस्य तु तरतमत्वादिभेदेनाऽऽसङ्ख्येयत्वम् अत्र ( वातपित्तकफेषु ) दोषा धातवो मला इति शब्दत्रयाऽऽगमनमेकशो द्विशः समस्ततया वा दृश्यते, पञ्चभूताऽतिरिक्तवस्तुनश्च शरीरेऽभावात् नामत्रयं कथ समागच्छतीति विचार्यते—परिणामभेदात्कार्यभेदाच्च लोके भेदो दृश्यते तत्र परिणामभेदाद्यथागोधूमचणकादीना मोदकशष्कुलीवटकादीनि परिणामभेदेन नामानि भिद्यन्ते । यद्वा आम्रबीजस्याऽङ्कुरपल्लवपुष्पफलादीनि नामानि जायन्ते । कार्यभेदाच्च देवदत्तस्यैकत्वेऽपि पाचनभर्जनकर्षणखननादिक्रियानिर्वर्तकत्वेन पाचकभर्जकादीनि नामानि विभिन्नविभिन्नतया जायन्ते, तथा पञ्चमहाभूतीयाऽन्नपानस्य जठराऽग्निमासाद्य रसरक्तमासमेदोऽस्थिमज्जशुक्रौजःप्रभृतीनि नामानि सारात्सम्भवन्ति किट्ट पुनर्मलत्वमासादयति । तच्च तत्तदवयवैर्यथासमय बहिर्निःसार्यते । सारस्य अहरहः शरीरे सरणाद्वाणी रससञ्ज्ञा । रञ्जकादिपित्तेन रञ्जितत्वाद्रक्तसञ्ज्ञा, घनीभावान्माससञ्ज्ञा, स्नेहभागस्य पृथग्भवनान्मेदःसञ्ज्ञा, पार्थिवभागस्य विशेषतया परिपाकेन कठिनी भावादस्थिसञ्ज्ञा, अस्थ्यन्तर्वर्तिपदार्थस्य (स्नेहरूपस्य) मज्जसञ्ज्ञा, प्रसवकारणस्य रज.शुक्रसञ्ज्ञे, समस्तशरीरव्यापकतया जीवमाऽऽधारस्नेहस्य ओजःसञ्ज्ञा च जायते । एते विशेषाः पाञ्चभौतिकाऽन्नपानस्यैव परिणामभेदेन निष्पद्यन्ते। तेषाञ्च स्वरूपे गुणे क्रियासु च यावत्पर्यन्त शरीरपोषकत्वमवतिष्ठते तावत्पर्यन्त धातुरिति व्यवहारः, यदा तु केनाऽपि प्रकारेण दुष्टिरुत्पद्यते तदाऽशुभकार्योत्पादनत्वाद्दोष इत्याख्या, तथाहि—“वातपित्तश्लेष्माण एव देहसम्भवहेतवः। तैरेव अव्यापन्नैरधोमध्योर्ध्वसन्निविष्टैः शरीरमिद धार्यते आगारमिव स्थूणाभिस्तिसृभिरतश्च त्रिस्थूणमाहुरेके । त एव च व्यापन्नाः प्रलयहेतवः । तदेभिरेव शोणितचतुर्थैः सम्भवस्थितिप्रलयेष्वप्यविरहित शरीर भवति ॥ ३ ॥ नर्ते देहः कफादस्ति न पित्तान्न च मारुतात् । शोणितादपि वा नित्य देह एतैस्तु धार्यते ॥४॥ सु. सू. २१।३–४”

शरीरपोषणाऽनुपयुक्ततया बहिःक्षेप्तुमुचितानां मलिनीकरणतया मला इति व्यवहारः, नचैकान्ततो मलेषु शरीराऽपोषकत्वम्। यतः "पुरीषमुपस्तम्भं वाय्वग्निधारणञ्च। वस्तिपूरणविक्लेदकृन्मूत्रं। स्वेदः क्लेदत्वक्सौकुमार्यकृत्। सु. सू. १५।८" इत्युक्तत्वात्। तथाऽपि स्वकार्यकरणाऽनन्तरं तेषां बहिःक्षेप एव पर्यवसानात्तथात्वव्यवहार इति न विरोधः। अत एवोक्तं "दोषधातुमलमूलं हि शरीरम्। सु. सू. १५।३" यद्यपि वातपित्तकफा एव दोषत्वेन वर्णिताः परन्तु तदतिरिक्तपदार्थाऽभावात् तात्स्थ्यात्ताच्छब्द्यमितिन्यायाच्च तदवान्तरभेदाः तत्स्थगुणाः क्रियाश्च सर्वमपि तथात्वेन गृह्यते, तस्माद् यद्यच्छरीरनिर्वहणाऽनुकूल्यमुद्वहति तस्य धातुसञ्ज्ञा, तत्प्रतिपाक्षिणश्च दोषसञ्ज्ञा इति निर्व्यूढं लक्षणं बोध्यम्। तच्च द्रव्यं वा स्याद्गुणो वा स्यात्क्रिया वा स्यादित्यन्यदेतत्। रक्तादयः सर्वेऽपि पदार्थाः रसात्परिणमन्ति तथाहि—"रसजं पुरुषं विद्याद्रसं रक्षेत्प्रयत्नतः। अन्नात् पानाच्च मतिमानाचाराच्चाऽप्यतन्द्रितः॥ सु. सू. १४।१२" यद्यपि रसनाग्राह्यो गुणो रसः सोऽपां गुणः रसतन्मात्रादपां जायमानत्वात्। अद्भ्यश्च पृथिव्या जायमानत्वात्तत्राऽप्यस्ति, इतरभूतत्रये पञ्चीकरणेन रसस्य वर्तमानत्वाद्रसभेदे तदीयाऽभिव्यक्तौ च खादयस्त्रयः सहकारिकारणतया प्रत्यवतिष्ठन्ते। तथाहि—"रसनार्थो रसस्तस्य द्रव्यमापः क्षितिस्तथा। निर्वृत्तौ च विशेषे च प्रत्ययाः खादयस्त्रयः॥ च. सू. १।६४" रसनया जिह्वेन्द्रियेण अर्थ्यते=प्रार्थ्यते गृह्यत इति यावत् रसनार्थः रसनाग्राह्यो गुण इत्यर्थः। तस्य रसस्य द्रव्यं आधारकारणं आपस्तथा क्षितिश्च भवति। अप्सु अव्यक्तमधुररसस्यैव सत्त्वात् तद्विशेषे मधुरादिभेदे निर्वृत्तौ च प्रत्यक्षे च खादयस्त्रयः प्रत्ययाः। प्रतीयन्ते स्पष्टतयाऽभिव्यज्यन्ते एभिस्ते प्रत्ययाः सहकारिकारणानि ते खादयस्त्रयो भवन्ति। अस्य विशेष आत्रेयभद्रकाप्यीयेऽध्याये "परं चातः प्रवक्ष्यन्ते रसानां षड्विभक्तयः॥ च. सू. २६।३६" इत्यारभ्याऽध्यायसमाप्तिपर्यन्तं द्रष्टव्यः। सुश्रुते च रसविशेषविज्ञानीयाऽध्यायो द्रष्टव्यः। ते च साधारणतया षट् सन्ति यथा—"स्वादुरम्लोऽथ लवणः कटुकस्तिक्त एव च। कषायश्चेति षट्कोऽयं रसानां सङ्ग्रहः स्मृतः॥ च. सू. १।६४" एते च (मधुरादयः) सामान्यतया स्वतन्त्रे (आयुर्वेदीयतन्त्रे) परतन्त्रे च (न्यायवैशेषिकादौ) रसत्वेन सर्वजनीनां प्रतीतिमावहन्ति तथाऽप्यायुर्वेदे रसशब्दस्य खादितपीतादिसाररूपप्रथमपरिणामे तदुत्तरं रक्ते रक्तात्सूक्ष्मधमनीप्रतानैर्गालिते द्रवे च सङ्करो दृश्यते। तदर्थं "तत्र रसगतौ धातुः, अहरहः गच्छतीत्यतो रसः॥ सु. सू. १४।१३" इत्यनेन योगं प्रधानीकृत्य गौणीसञ्ज्ञा स्थापिता। अयञ्च रसः सर्वेषां धातूनां गुणानाञ्च योनिः। स्थलविशेषं सम्यगाकलय्याऽत्र यौगिको रसः रूढो वा रस इति विवेचनीयम्। प्रकृतमनुसरामः—उपरिनिर्दिष्टं यद् वातपित्तकफेषु **धातुत्वं दोषत्वं मलत्वञ्चेति** मलत्वञ्चेति सञ्ज्ञात्रयं तत्तदुपाधिभेदात्स्थापनीयम्। तत्रापि दोषमलशब्दाभ्यामधिकतया व्यवहारशैली दृश्यते। तया च बुद्धिर्व्याकुलीभवति तदनिवार्यम्। तत्र स्वकीयबुद्धेरेव विदुषा शोधनं कर्तव्यं येन सा सञ्ज्ञासाङ्कर्यदोषदुर्बुद्धे स्थलेऽविमूढा सती प्रकरणस्थतत्त्वं यथार्थतयाऽवबुध्येत। बुद्धिशोधनप्रकारस्त्वस्माभिरनुपदमेव न्यदर्शि। शरीराऽवयवानां गुणानां क्रियाणाञ्चाऽसङ्ख्येयत्वात्तदीयदुष्टीनामपि तथात्वात् तासामेव सामान्यतया रोगत्वाऽभिधानात् शृङ्गीग्राहिकतान्यायेन तदीयनामकरणाऽसम्भवात्, नामाऽकरणे च व्यवहाराऽसौकर्यात्स्वोपादानकारणैः (वातपित्तकफैः)रेव पृथग्द्वन्द्वसन्निपातभेदेन दुष्ट्यो (व्याधयो) निर्दिष्टाः। तेषां (विकृतवातपित्तकफानां) शमनोपायश्च वातपित्तकफस्थषड्भिर्गुणैः (मधुरादिभिः)रेव व्यापकत्वेन निर्दिष्टः। तेषु षट्सु गुणेषु कक्षात्रयं स्थापितं यथा—"स्वाद्वम्ललवणा वायुं जयन्ति, कषायस्वादुतिक्तकाः पित्तं जयन्ति, कषायकटुतिक्तकाः श्लेष्माणमिति। यत्त्रिकं यदीयदोषस्य शामकं तद्द्वितीयं पारिशेष्यादुत्पादकत्वे पर्यवस्यति, यथा स्वाद्वम्ललवणेषु वातशामकत्वं, तदितरकटुतिक्तकषायाख्ये तज्जनकत्वम्। एवं कषायस्वादुतिक्ताख्ये पित्तशामकत्वं तदितराऽम्ललवणकटुकाऽऽख्ये पित्तजनकत्वम्।

एवं कषायकटुतिक्तकाऽऽख्ये श्लेष्मनामकत्वं तदितरमधुराऽम्ललवणाख्ये तज्जनकत्वम्। अत्रेदं रहस्यम्—"एते रसाः स्वयोनिवर्धना अन्ययोनिप्रशमनाश्च। केचिदाहुरग्नीषोमीयत्वाज्जगतो द्विविधा रसाः सौम्या आग्नेयाश्च। तत्र मधुरतिक्तकषायाः सौम्याः, कट्वम्ललवणा आग्नेयाः, मधुराऽम्ललवणाः स्निग्धा गुरवश्च, कटुतिक्तकषाया रूक्षा लघवश्च, सौम्याः शीता, आग्नेयाश्चोष्णाः॥ ६॥ तत्र शैत्यरौक्ष्यलाघववैशद्यवैष्टम्भ्यगुणलक्षणो वायुस्तस्य समानयोनिः कषायो रसः, सोऽस्य शैत्यात् शैत्यं वर्धयति रौक्ष्याद्रौक्ष्यं लाघवाल्लाघवं वैशद्याद्वैशद्यं वैष्टम्भ्याद्वैष्टम्भ्यमिति॥ ७॥ औष्ण्यतैक्ष्ण्यलाघववैशद्यगुणलक्षणं पित्तं, तस्य समानयोनिः कटुको रसः, सोऽस्यौष्ण्यादौष्ण्यं वर्धयति तैक्ष्ण्यात्तैक्ष्ण्यं रौक्ष्याद्रौक्ष्यं लाघवाल्लाघवं वैशद्याद्वैशद्यमिति॥ ८॥ माधुर्यस्नेहगौरवशैत्यपैच्छिल्यगुणलक्षणः श्लेष्मा, तस्य समानयोनिर्मधुरो रसः, सोऽस्य माधुर्यान्माधुर्यं वर्धयति स्नेहात्स्नेहं गौरवाद्गौरवं शैत्यात् शैत्यं पैच्छिल्यात्पैच्छिल्यमिति॥ ९॥ तस्य पुनरन्ययोनिः कटुको रसः स श्लेष्मणः प्रत्यनीकत्वात् कटुकत्वान्माधुर्यमभिभवति रौक्ष्यात्स्नेहं लाघवाद्गौरवमौष्ण्यात् शैत्यं वैशद्यात्पैच्छिल्यमिति तदेतन्निदर्शनमात्रमुक्तम्॥ १०॥ सु. सू. ४२।६–१०" अनेन पथा स्वसमानैः क्षीणानां वृद्धिः, वृद्धानां स्वविपरीतैर्ह्रासः, साम्याऽऽपन्नानां युक्तितो रक्षणम्। "तत्र वातक्षये मन्दचेष्टता अल्पवाक्त्वमप्रहर्षो मूढसञ्ज्ञता च। पित्तक्षये मन्दोष्माग्निता निष्प्रभत्वञ्च। श्लेष्मक्षये रूक्षता अन्तर्दाह आमाशयेतराशयश्लेष्माशयशून्यता सन्धिशैथिल्यं तृष्णादौर्बल्यं प्रजागरणञ्च॥ सु. सू. १५।११" अनेन लक्षणेन क्षीणानां परिज्ञानम्। "अत ऊर्ध्वमतिवृद्धानां दोषधातुमलानां लक्षणं वक्ष्यामः। वृद्धिः पुनरेषां स्वयोनिवर्धनात्युपसेवनाद् भवति। तत्र वातवृद्धौ वाक्पारुष्यं कार्श्यं कार्ष्ण्यं गात्रस्फुरणमुष्णकामिता निद्रानाशोऽल्पबलत्वं गाढवर्चस्त्वञ्च। पित्तवृद्धौ पीताऽवभासता सन्तापः शीतकामित्वमल्पनिद्रता मूर्च्छा बलहानिरिन्द्रियदौर्बल्यं पीतविण्मूत्रनेत्रत्वञ्च। श्लेष्मवृद्धौ शौक्ल्यं शैत्यं स्थैर्यं गौरवमवसादस्तन्द्रा निद्रासन्ध्यस्थिविश्लेषश्च॥ सु. सू. १५।१७" अनेन वृद्धानां लक्षणं ज्ञातव्यम्। साम्याऽऽपन्नानान्तु यथोचितबलवर्णोपचयादीनां सम्यक् सम्पत्। अनेन सूत्रेण ज्ञाताऽज्ञातसहस्रशो व्याधीनां निदानानि प्रशमनानि च सम्यक्तया सुशिक्षितो वैद्योऽनायासेन कर्तुं समर्थो भवति। शृङ्गग्राहिकन्यायेन तु इदं कार्यं भवितुमयोग्यमेव। तथा एक एव दोषः स्थानभेदान्नानारूपाणि दर्शयति। तत्राऽप्यज्ञातसूत्रो वैद्यः कार्यं कर्तुं नाऽलम्। ज्ञातसूत्रस्तु स्थानभेदमनपेक्ष्यापि साधारणशैल्या यत्नं कर्तुमुद्युङ्क्ते, कार्यसाफल्यञ्च प्रायशो भवत्येव। कर्मजदोषविषये तदसाफल्ये न चिकित्सको विगर्हापात्रतामासादयति केवलचिकित्सया तन्निवृत्त्यसम्भवात्। तत्राऽपि प्रायश्चित्तोपवासदानादीनि कर्माणि कर्मविपाकाऽनुकूलं कर्तुं शास्त्रे प्रतिपादितम्। तेनाऽऽयुर्वेदशास्त्रं सर्वाऽवयवैः परिपूर्णं ऋषिभिः सङ्ग्रथितमित्याकलय्य दिव्यज्ञानसम्पदा ऋषीणां समस्तमपि जगद्धण्यास्ते। अयञ्च **त्रिदोषवादो** वेदेष्वपि बहुत्र स्थलेषु दरीदृश्यते स च त्रिधातुशब्देन समागच्छति यथा—"त्रि र्नो अश्विना दिव्यानि भेषजा त्रिः पार्थिवानि त्रिरु दत्तमद्भ्यः। ओमानं शंयोर्ममकाय सूनवे त्रिधातु शर्म वहतं शुभस्पती॥ ऋ. १।३४।६" हे अश्विना नः=अस्मभ्यं दिव्यानि द्युलोकवर्तीनि भेषजा औषधानि त्रिः दत्तं तथा पार्थिवानि पृथिव्यामुत्पन्नानि औषधानि त्रिः दत्तं अद्भ्य उ अन्तरिक्षसकाशादपि औषधानि त्रिः दत्त, आप इत्यन्तरिक्षनाम आपः पृथिवी भूरिति तन्नामसु पाठात् शयोरेतन्नामकस्य बृहस्पतिपुत्रस्य ते शयुं बार्हस्पत्यमब्रुवन्निति ब्राह्मणान्तरात्, तस्य सम्बन्धिनमोमानं सुखविशेषं ममकाय सूनवे मदीयाय पुत्राय दत्त हे शुभस्पती शोभनस्यौषधजातस्य पालकौ युवां त्रिधातु=वातपित्तश्लेष्मधातुत्रयशमनविषयं सुखं वहतं प्रापयतम्॥ (सायणभा.)॥ हे शुभस्पती शोभनानामौषधानां पालकौ दातारौ वा अश्विनौ दिव्यानि दिवोऽन्तरिक्षात् आगतानि भेषजा=भेषजानि प्राणाऽपानसमानाऽऽख्यान् वायून् अथवा शरीरान्तःप्रवेशपालन-

निर्गमकर्तॄन् वायून् न:=अस्मभ्यं भेषजा=भेषजानि अभिलषितकार्यकर्तॄन् दत्त परिणामयतम्। एवं "अग्निः पृथि-
वीस्थानो वायुर्वेन्द्रो वाऽन्तरिक्षस्थानः सूर्यो द्युस्थानः। निरुक्त० दै० ७।५।२" इति वाक्यात् पार्थिवानि अग्निसम्ब-
न्धीनि भेषजानि त्रिः पूर्ववत् कर्मातिशयनिष्पादकानि अग्नेः कर्माणि नोऽस्मभ्यं दत्त परिणामयतम्। एवं अद्भ्य उ
अद्भ्यश्च त्रिः पूर्ववत्कर्मातिशयनिर्वर्तकानि भेषजान्यस्मभ्यं दत्त परिणामयतम्। शंयोः=रोगाणां शमनस्य भयगमकस्य
मम स्तुतिकर्तुः कायस्य शरीरस्य मनसे सर्वस्मै प्राय शरीरेऽवस्थानुकूलाय अन्यस्याऽपि पुत्रस्य मनसे वा
तदर्थमित्यर्थः। ओमानं कल्याणं अस्य च त्रिधातु शर्म त्रयाणां वातपित्तकफानां धातुरूपाणां शरीरोपादान-
कारणानामिति यावत्। शर्म=कल्याणं वहतम् प्रापयतम्। शारीरमानसभेदभिन्नरोगनिवृत्त्या अस्मभ्यं
कल्याणं प्रयच्छतमिति निष्कर्षः। सायणाचार्यव्याख्याने तु पार्थिवादिभेषजविषये भूयान् भेदोऽस्ति,
तद्दर्शनार्थं पूर्वमेवाऽस्माभिर्लेखि। परन्तु तत्राऽपि त्रिधातुशब्देन वातपित्तश्लेष्माण एव (सायणेनाऽपि)
व्याख्याता इति समाना सम्मतिः।

तं युञ्जाथां मनसो यो जवीयान् त्रिवन्धुरो वृषणा यस्त्रिचक्रः।
येनोपयाथः सुकृतो दुरोणं त्रिधातुना पतथो विर्न पर्णैः॥ ऋ. १।१८३।१

हे वृषणा=कामानां वर्षयितारौ युवां यो मनसो जवीयान् मनोवेगवान् यश्च त्रिवन्धुरः=मनोबुद्ध्यह-
ङ्काराख्यमुख्यकरणत्रितयोपपन्नः पुनश्च यस्त्रिचक्रः=त्रीणि सत्त्वरजस्तमांसि चक्राणीव चक्राणि यत्र स त्रिचक्रः।
पुनश्च यः सुकृतः परमेश्वराऽतिरिक्तेन केनाऽपि शिल्पिना केनचिदपि कर्तुमशक्यस्य अनिर्वचनीयः देहं
लिङ्गाख्यमिति यावत्। त्रिधातुना=त्रयः वातपित्तकफात्मानः धातव इव धातवो यस्मिन् सः त्रिधातु वातपित्त-
कफैः निर्वर्तित इति यावत्। तेन त्रिधातुना स्थूलाख्येन देहेनेत्यर्थः। युञ्जाथाम् अस्मद्गतया सम्बद्धं कुर्वाथाम्।
अस्यैव संयोगस्य जीवनमिति संज्ञा, अनयोर्वियोग एव मरणं तथाहि—"यस्मात्समुपलभ्यन्ते लिङ्गान्येतानि
जीवतः। न मृतस्याऽऽत्मलिङ्गानि तस्मादाहुर्महर्षयः॥ शरीरं हि गते तस्मिञ्शून्याऽऽगारमचेतनम्। पञ्चभू-
ताऽवशेषत्वात्पञ्चत्वं गतमुच्यते॥ च. शा. १।७३-७४" कथम्भूतेन त्रिधातुना विः=पक्षी पर्णैः स्वकीय-
पक्षैः कृत्वा दुरोणं=स्ववासस्थानम् अथवा दूरत्र ऊनत्र उपस्थितत्वाद्दूरदेशोन लभ्यते समीपमिति यावत्,
तयोः समाहार इत्यस्मिन्नर्थे दुरोणमिति निपातः—"छन्दसि दृष्टानुविधिः" इति नियमात्। दूरदेशं समीपदेशं वा
स्ववाञ्छितस्थलमिति यावत् न=इव उपयाथ उपगच्छथस्तादृशेन। स्थूलशरीरमन्तरा केवलेन लिङ्गेन कस्यचि-
दपि कार्यस्य निर्वृत्त्यभावात् तथाहि—"अशरीरः शरीरस्य कृतेऽन्यस्य महामुनिः। वसिष्ठस्तु महातेजा जगाम
पितुरन्तिकम्॥ ५॥ सोऽभिवाद्य ततः पादौ देवदेवस्य धर्मवित्। पितामहमथोवाच वायुभूत इदं वचः
॥ ६॥ भगवन्निमिशापेन विदेहत्वमुपागमम्। देवदेवमहादेव वायुभूतोऽहमण्डज॥ ७॥ सर्वेषां देहहीनानां महद्दुःखं
भविष्यति। लुप्यन्ते सर्वकार्याणि हीनदेहस्य वै प्रभो॥ ८॥ देहस्याऽन्यस्य सद्भावे प्रसादं कर्तुमर्हसि॥ वा. रा. उ.
५६।५-९" येन स्थूलशरीरेण विना युवामपि किञ्चित्कार्यं कर्तुमशक्तौ तथा तेन रुग्णेन सताऽपि असमर्थौ भवतस्तर्हि
मादृशानान्तु कथैव दूरेऽपास्ता। अतो रोगरहितेन मम स्थूलशरीरेण साकं लिङ्गशरीरस्य योगं कुर्वाथामिति
प्रार्थना। एवं "त्रिर्नो अश्विना यजता दिवेदिवे परि त्रिधातुपृथिवीमशायतम्। तिस्रो नासत्या रथ्या परावत
आत्मेव वातः स्वसराणि गच्छतम्॥ ऋ. १।३४।७॥ अग्निरस्मि जन्मना जातवेदा घृतं मे चक्षुरमृतं म
आसन्। अर्कस्त्रिधातू रजसो विमानोऽजस्रो घर्मो हविरस्मि नाम॥ ऋ. ३।२६।७॥ त्रिरादिवः सवित
र्वार्याणि दिवेदिव आसुव त्रिर्नो अह्नः। त्रिधातुराय आसुवा वसूनि भग त्रात धिषणे सातये धाः॥ ऋ.
३।५६।६॥ अहमपो अपिन्वमुक्षमाणा धारयं दिवं सदन ऋतस्य। ऋतेन पुत्रो अदितेर्ऋतावोत त्रिधातु

प्रथयद्भिमूम ॥ ऋ. ४।४२।४" इत्यादीत्यादिमन्त्रेषु त्रिधातुशब्देन वातपित्तश्लेष्माणः कथिताः सन्ति । एषां मन्त्राणां भाष्यन्तु विस्तरभिया न कृतम् । सायणेन तु सर्वत्रैव कर्मकाण्डपरतया व्याख्यातं तत्सहृदयैरवगाह्यम् । त्रिधातुशब्दश्चाऽस्य वेदे त्रिधातवः त्रिदोषाः त्रिमला इत्येतेषां पर्यायवाचको न्यस्तोऽस्ति । आयुर्वेदे पदेपदे दुष्टेष्वदुष्टेषु च त्रिषु धातुषु ( वातपित्तश्लेष्मसु ) त्रिदोषशब्दाऽऽगमनं प्रायो दृश्यते । तत्र दुष्यन्ते विकृतिमापद्यन्ते विरुद्धकालकर्मादिना इति दोषाः, अथवा दूषयन्ति स्वस्थक्षीणाधिकगुणादिभिरन्यानपीति दोषा इति व्युत्पत्तिद्वयमाश्रित्य स्वेतरधातुदूषकत्वात् स्वेतरैर्वा स्वस्य दोषभाक्त्वात् सत्त्वरजस्तमोरूपदोषत्रयपरिणामत्वादात्मनो दिव्यंसामर्थ्यस्याऽवरोधकत्वाद् दोषा इति शब्देन व्यवहृताः सन्ति तथाहि—" भिन्ना दोषास्त्रयो गुणाः सु. उ. ६६।९". सत्त्वरजस्तमोरूपास्त्रयो गुणाः भिन्नाः=परिणामं प्राप्ता आयुर्वेदे दोषाख्या लभन्ते इत्यर्थः । चरकेण तु एतज्जालविच्छेदनाय शरीरधातुषु मलत्वं प्रसादत्वञ्चेति भेदद्वयं स्वीकृतं यथा—" शरीरधातवः पुनर्द्विविधाः सङ्ग्रहेण मलभूताः प्रसादभूताश्च, तत्र मलभूतास्ते ये शरीरस्य बाधकराः स्युः, तद्यथा—शरीरच्छिद्रेषूपदेहाः पृथग्जन्मानो बहिर्मुखाः परिपक्काश्च धातवः प्रकुपिताश्च वातपित्तश्लेष्माणो ये चाऽन्येऽपि केचिच्छरीरे तिष्ठन्तो भावाः शरीरस्योपघातायोपपद्यन्ते सर्वास्तान्मले सम्प्रचक्ष्महे, इतरांस्तु प्रसादे, गुर्वादींश्च द्रवान्तान् गुणभेदेन, रसादींश्च शुक्रान्तान् द्रव्यभेदेन ॥ च. शा. ६।१५" अत्र वातपित्तश्लेष्मसु प्रकुपितत्वं वृद्धिह्रासाभ्यामेव बोद्धव्यम्, लोके प्रकुपितेष्वधिकोत्पातकरणं मौनमालम्बनञ्चेति प्रकारद्वयदर्शनात् । वातपित्तश्लेष्माणश्च किंस्वरूपा इत्यपेक्षायां शरीरोत्पत्तौ "खादयश्चेतनाषष्ठा धातवः पुरुषः स्मृतः । चेतनाधातुरप्येकः स्मृतः पुरुषसञ्ज्ञकः ॥ च. शा. १।१४" इत्यत्र पञ्चमहाभूतान्येव कारणत्वेनोक्तानि । पुनरपि "तत्र शरीरं नाम चेतनाऽधिष्ठानभूतं पञ्चभूतविकारसमुदायात्मकं समयोगवाहि, च. शा. ६।४" इत्यनेन पञ्चभूतानामेव शरीरोपादानकारणत्वं प्रत्यपादि, पंञ्चमहाभूतविकारेषु च प्रसादत्वं मलत्वञ्चेति सङ्क्षेपेण द्वैविध्यं स्वीकृतम् तच्च द्वैविध्यं धातुत्वेनैव गृह्यते, शरीरे धात्वतिरिक्तपदार्थाऽभावात् । धातुषु यदा शरीरपोषकता तदा प्रसादत्वं यदा च तद्बाधकरत्वं तदा मलत्वमित्येतदध्यायस्यैव पञ्चदशसूत्रेण स्पष्टतया प्रतिपादितम् । पञ्चभूतेष्वेव कक्षात्रयं वातपित्तकफा इति स्वीकृतमिति प्रतिभाति । प्रायशः स्वसंहितायां ( चरके ) रोगाणां व्यस्ताः समस्ता वा वातपित्तश्लेष्माण एव हेतुतया उपन्यस्ताः । चिकित्सायामपि "स्वाद्वम्ललवणा वायुं कषायस्वादुतिक्तकाः । जयन्ति पित्तं श्लेष्माणं कषायकटुतिक्तकाः ॥ च. सू. १।६५, इत्यनेन त एव ( वातपित्तश्लेष्माणः ) अधिकृताः सन्ति । किञ्च " अतस्त्रिविधविकल्पा व्याधयः प्रादुर्भवन्ति आग्नेयसौम्यवायव्याः । च. नि. १।४" इत्यनेनाऽपि वातपित्तश्लेष्माण एव स्तुताः । एतदुत्तरं " द्विविधाश्चाऽपरे राजसास्तामसाश्च" इत्यनेन मानसव्याधिकारणं कथयता पारिशेष्यादाग्नेयसौम्यवायव्यशब्दैर्वातपित्तश्लेष्माणः शारीररोगाऽभिनिर्वर्तयितारः सन्तीति निर्विवादतया समायातम् । ते च ( वातपित्तश्लेष्माणः ) यदा साम्याऽऽपन्नास्तदा शरीराऽऽरोग्यकराः, वैषम्याऽऽपन्नाः पुनः क्लेशाय मरणाय वा सम्पद्यन्ते तथाहि—"यदा ह्यस्मिन् शरीरे धातवो वैषम्यमापद्यन्ते तदा क्लेशं विनाशं वा प्राप्नोति । च. शा. ६।४" वैषम्यनिवृत्तिप्रकारश्च समानगुणैराहारविहारैरभ्यस्यमानैर्दर्शितः । यथा " धातवः पुनः शारीराः समानगुणैः समानगुणभूयिष्ठैर्वाऽप्याहारविहारैरभ्यस्यमानैर्वृद्धिं प्राप्नुवन्ति ह्रासन्तु विपरीतगुणैर्विपरीतगुणभूयिष्ठैर्वाऽप्यभ्यस्यमानैः ॥ ९ ॥ तत्रेमे शरीरधातुगुणाः सङ्ख्यासामर्थ्यकराः, तद्यथा—गुरुलघुशीतोष्णस्निग्धरूक्षमन्दतीक्ष्णस्थिरसरमृदुकठिनविशदपिच्छिलश्लक्ष्णखरसूक्ष्मस्थूलसान्द्रद्रवाः, तेषु ये गुरवस्ते गुरुभिराहारगुणैरभ्यस्यमानैराप्याय्यन्ते लघवश्च ह्रसन्ति, लघवस्तु लघुभिराप्याय्यन्ते गुरवश्च ह्रसन्ति, एवमेव सर्वधातुगुणानां सामान्ययोगाद्वृद्धिं विपर्ययाद्ध्रासः, एतस्मान्मासमाप्याय्यते मासेन भूयस्तरमन्येभ्यः

शरीरधातुभ्यः, यथा लोहितं लोहितेन, मेदो मेदसा, वसा वसया, अस्थि तरुणाऽस्थ्ना, मज्जा मज्ज्ञा, शुक्रं शुक्रेण, गर्भस्त्वामगर्भेण ॥ च. शा. ६।९–१० ” एते गुर्वादयो गुणाः वातपित्तश्लेष्मणामेव निर्दिष्टाः। अत्रेदं रहस्यम् यदा समष्टिरूपतया शरीरधातवो निर्दिश्यन्ते तदा वातपित्तश्लेष्माण एव प्रत्युपतिष्ठन्ते यदा तु व्यष्टिरूपतया वक्तुमिच्छाऽस्ति तदा रसरक्तादिरूपेण गणना क्रियते तेन प्रकरणाऽऽशय दृष्ट्वा व्यवस्था करणीया। अवस्थाभेदेन वातपित्तश्लेष्माणः सर्वेषां (शरीरधातूनां) उत्पत्तिस्थितिविनाशेषु कारणानि तथाहि— “तेषां सर्वेषामेव वातपित्तश्लेष्माणो दुष्टा दूषयितारो भवन्ति दोषस्वभावात्। च. शा. ६।१६ ” अर्थापत्तिन्यायेनाऽदुष्टाः पोषयितार इति लभ्यते। ननु वातादीनां धातुत्वं स्पष्टतया न कुत्राऽप्युक्तमिति तु न उपरिनिर्दिष्टसूत्रशेषे तत्स्पष्टतया कथनाद्यथा—“ शरीरधातूनां प्रकृतिभूतानां तु खलु वातादीनां फलमारोग्यं तस्मादेषां प्रकृतिभावे प्रयतितव्यं बुद्धिमद्भिरिति ॥ च. शा. ६।१६ ” नन्वेवं तर्हि “ तत्राऽऽहारप्रसादाख्यो रसः किट्टञ्च मलाख्यमभिनिर्वर्तते। किट्टात्स्वेदमूत्रपुरीषवातपित्तश्लेष्माणः कर्णाऽक्षिनासिकाऽऽस्यलोमकूपप्रजननमलाः केशश्मश्रुलोमनखादयश्चाऽवयवाः पुष्यन्ति॥ च. सू. २८।४ ” इति कथमुपपद्येत। अत्र मलकोट्या वातपित्तश्लेष्मणां परिगणनं विधाय किट्टादेव च तत्पोषणमुक्तमिति सत्यं, अत्र सूक्ष्मस्वरूपविचारमकृत्वा स्थूलतया प्रत्यक्षतया दृश्यमानवातपित्तश्लेष्माणोऽभिप्रेताः यथा—“ अन्नस्य भुक्तमात्रस्य षड्रसस्य प्रपाकतः। मधुरात्प्राक् कफो भावात्फेनभूत उदीर्यते ॥ परन्तु पच्यमानस्य विदग्धस्याम्लभावतः। आशयाच्च्यवमानस्य पित्तमच्छमुदीर्यते ॥ पक्वाशयन्तु प्राप्तस्य शोष्यमाणस्य वह्निना। परिपिण्डितपक्वस्य वायुः स्यात्कटुभावतः ॥ च. चि. १५।९–११ ” अत्र निर्दिष्टाः कफपित्तवायवः स्थूलस्वरूपा एव सन्ति। “ किट्टमन्नस्य विण्मूत्रं रसस्य तु कफोऽसृजः। पित्तं मांसस्य खमलाः मलः स्वेदस्तु मेदसः ॥ च. चि. १५।१८ ” अनेन रसाद्यः सर्वाऽनुगतः श्वेतपिच्छिलगुरुत्वादि गुणविशिष्टः पदार्थो निर्वर्तते यस्य चाऽधिक्यात्कासश्वासादयः समुपपद्यन्ते सः कफत्वेनाऽभिप्रेतः। रक्ताद्यत् यकृता पृथक्कृत्य क्लोम्नि विसृज्यते तस्य रक्तात्पृथग्भावाद् रक्तमलत्वेन कथनाच्च तदेव पित्तत्वेनाभिप्रेतम्। “ परिपिण्डितपक्वस्य वायुः स्यात्कटुभावतः” इत्यत्राऽपि भुक्तादि परिपाकाऽवसाने योऽयं वायुरुत्पद्य पायुद्वारा बहिः निःसरति स एवाऽभिप्रेतः। एते त्रयोऽपि मलत्वे एव पर्यवस्यन्ति तेषां पोषणमपि यत्किट्टादुक्तं तदपि समीचीनमेवाऽस्ति परन्त्वनेन एतद्वाचका एव वातपित्तकफा इति नाऽध्यवसितुं शक्यम्। यतः “ वायुस्तन्त्रयन्त्रधरः, प्राणोदानसमानव्यानाऽपानात्मा, प्रवर्तकश्चेष्टानामुच्चावचानां, नियन्ता प्रणेता च मनसः, सर्वेन्द्रियाणामुद्योजकः, सर्वेन्द्रियार्थानामभिवोढा, सर्वशरीरधातुव्यूहकरः, सन्धानकरः शरीरस्य, प्रवर्तको वाचः, प्रकृतिः स्पर्शशब्दयोः, श्रोत्रस्पर्शनयोर्मूलं, हर्षोत्साहयो र्योनिः, समीरणोऽग्नेः, दोषसंशोषणः, क्षेप्ता बहिर्मलानां, स्थूलाणुस्रोतसां भेत्ता, कर्ता गर्भाकृतीनां, आयुषोऽनुवृत्तिप्रत्ययभूतो भवत्यकुपितः। कुपितस्तु खलु शरीरे शरीरं नानाविधैर्विकारैरुपतपति बलवर्णसुखायुषामुपघाताय, मनो व्याहर्षयति, सर्वेन्द्रियाण्युपहन्ति, विनिहन्ति गर्भान् विकृतिमापादयत्यतिकालं धारयति, भयशोकमोहदैन्याऽतिप्रलापाञ्जनयति, प्राणांश्चोपरुणद्धि ॥ च. सू. १२।८ ” “अग्निरेव शरीरे पित्तान्तर्गतः कुपिताऽकुपितः शुभाऽशुभानि करोति, तद्यथा—पक्तिमपक्तिं दर्शनमदर्शनं मात्रामात्रत्वमूष्मणः प्रकृतिविकृतिवर्णौ शौर्यं भयं क्रोधं हर्षं मोहं प्रसादमित्येवमादीनि चाऽपराणि द्वन्द्वानीति ॥ ११ ॥ तच्छ्रुत्वा मारीचिवचः काप्य उवाच—सोम एव शरीरे श्लेष्मान्तर्गतः कुपिताऽकुपितः शुभाऽशुभानि करोति तद्यथा—दार्ढ्यं शैथिल्यमुपचयं कार्श्यमुत्साहमालस्यं वृषतां क्लीबतां ज्ञानमज्ञानं बुद्धिं मोहमेवमादीनि चाऽपराणि द्वन्द्वानीति ॥ १२ ॥ तच्छ्रुत्वा काप्यवचो भगवान् पुनर्वसुरात्रेय उवाच—सर्व एव भवन्तः

सम्यगाहुरन्यत्रैकान्तिकवचनात् । सर्व एव खलु वातपित्तश्लेष्माणः प्रकृतिभूताः पुरुषमव्यापन्नेन्द्रियं बलवर्णसुखोपपन्नमायुषा महतोपपादयन्ति सम्यगेवाचरिता धर्मार्थकामा इव निःश्रेयसेन महतोपपादयन्ति पुरुषमिह चामुष्मिंश्च लोके, विकृतास्त्वेन महता विपर्ययेणोपपादयन्ति ऋतवस्त्रय इव विकृतिमापन्ना लोकमशुभेनोपघातकाले इति ॥ १३ ॥ तदृषयः सर्व एवाऽनुमेनिरे वचनमात्रेयस्य भगवतोऽभिननन्दुश्चेति ॥ च. सू. १२।११–१४ " इत्यादिभिर्वाक्यैः वातपित्तकफाना स्वरूपनिर्णयार्थमेव सम्मिलिता आत्रेयप्रमुखा महर्षयो महान्त विवाद कृत्वा यद्वातपित्तकफानानिर्णिन्यु स्तत् खपुष्पायितमेव स्यात् अतो सुश्रुतीय-सिद्धान्तेन समान एवाऽऽत्रेयसिद्धान्तोऽपि । तस्मात्स्थूलसूक्ष्मभेद सम्यगाकलय्य यथाऽऽगतस्थल निर्णयः कर्तव्यः । रजोगुणात्मनि वायौ वात इति सत्त्वगुणात्मनि पित्तमिति तमोगुणात्मनि श्लेष्मेत्यायुर्वेदसिद्धान्ते व्यवहारोऽस्ति । तत्राऽपि शारीरबाह्यवातयोर्वात इति समानो व्यवहारः । शरीरान्तः प्रविष्टानामाग्नेयपदार्थो-नामन्तरग्निसंयोगाद्योऽयमग्न्याधारपरिणामस्तत्र पित्तमिति जलपृथिव्यात्मना पदार्थाना शारीराऽग्निना परि-णताना श्लेष्मेति व्यवहारः । ते च पदार्थाः सूक्ष्मा वा स्युः स्थूला वा स्युः तत्स्थाः क्रियागुणाश्च वा स्युः सर्वेषामपि ग्रहणम् तात्स्थ्यात्ताच्छब्द्यमिति न्यायात् । शरीरान्तर्वर्तिलिङ्गशरीरातमव्यतिरिक्त यत्किञ्चिदपि वस्तुजातमस्ति तत्सर्वमपि वातपित्तश्लेष्मात्मकमेवाऽस्ति । अत एव परमकारुणिकेन भगवता धन्वन्तरिणेत्थ प्रतिज्ञात—" सर्वेषा व्याधीना वातपित्तश्लेष्माण एव मूल, तल्लिङ्गत्वाद् दृष्टफलत्वादागमाच्च । यथाहि कृत्स्नं विकारजात विश्वरूपेण अवस्थित सत्त्वरजस्तमासि न व्यतिरिच्यन्ते एवमेव कृत्स्न विकारजात विश्वरूपेण अवस्थितमव्यतिरिच्य वात-पित्तश्लेष्माणो वर्तन्ते । दोषधातुमलसंसर्गादायतनविशेषात् निमित्ततश्चैषा विकल्पः । दोषदूषितेष्वत्यर्थं धातुषु सञ्ज्ञा क्रियते रसजोऽय, शोणितजोऽय, मासजोऽय, मेदोजोऽय, अस्थिजोऽयं, मज्जजोऽय, शुक्रजोऽय व्याधि-रिति ॥ सु. सू. २४।८" इति । ये त्वायुर्वेदसिद्धान्ताऽनभिज्ञास्ते सर्वमपि स्थावरजङ्गमात्मक जगत् वातपित्त-श्लेष्मात्मकमिति वदन्ति तन्महद्धास्यास्पदम्,—प्राणवत्सृष्टिमुक्त्वा तदितरसृष्टौ तद्व्यवहाराऽदर्शनात् । न च वाच्य-मुक्तसूत्रमेव प्रमाण तत्र यथा समस्तविकारजातं सत्त्वरजस्तमासि मुक्त्वा पृथङ् न लभ्यते तथा वातपित्तश्लेष्मणो मुक्त्वा पृथङ्ङ् भवतीत्युभयत्र साम्यदर्शनादिति, तत्रैकत्र विकारजातेन महदादीना समुदायोऽभिप्रेतो द्वितीयस्थाने तु विकारजातेन शारीरीयरसादिधातवो विवक्षिताः सन्तीति महदन्तरत्वात् तेन समस्त स्थावरजङ्गमात्मक विश्वं यथा महदादिविकारजातेन व्याप्तमस्ति ते च ( महदादयश्च ) सत्त्वरजस्तमोभिः पृथक्स्वरूपा न सन्ति तथा प्राणिशरीर रसाद्यन्नजातेन विकारसमूहेन व्याप्तमस्ति ते च ( रसादयोऽन्नविकाराः ) वातपित्तश्लेष्मभिः पृथक्-स्वरूपा न सन्ति उपादानात्कार्यस्याऽपृथग्भावात् । प्राणिशरीराऽग्निसयोगेन जायमानाऽग्निपरिणामविशे-षस्य पित्तत्वादप्पृथिवीपरिणामस्य च श्लेष्मत्वात् तस्य च प्राण्यतिरिक्तस्वरूपेऽविद्यमानत्वात् । प्राण्यति-रिक्तस्वरूपवर्णने तु वायव्यः आग्नेयः जलीयः पार्थिव इत्येव व्यवहारः । शरीरसम्बन्धेन वायवीयादिपदार्थानां कः परिणामो भविष्यतीति विचारे आनुकूल्यप्रातिकूल्योदासीनता प्रत्युपतिष्ठन्ते, तेषा सर्वेषा विचारस्यात्राऽ-नवसरः परन्तु प्रातिकूल्ये विचारस्याऽवश्यताऽस्त्यतस्तत्रदिङ्मात्रमुदाहरामः—यथा—" हिक्काश्वासकर तूर्णं पित्तश्लेष्मलमाविकम् । च. सू. २७।२२२ ॥ सुरासमण्डारूक्षोष्णा यवाना वातपित्तला । गुर्वी जीर्यति विष्टभ्य श्लेष्मला तु मधूलिका ॥ च. सू. २७।१९८ ॥ वातपित्तहर वृष्यमुष्णं तिक्तमवा-तलम् । पटोल कटुक पाके वृष्य रोचनदीपनम् ॥ सु. सू. ४६।२१८ ॥ अत्यर्थं वातलं ग्राहि जाम्बव कफपित्तजित् ॥ सु. सू. ४६।१६६ ॥ पित्ताऽनिलकर बाल पित्तल बद्धकेसरम् । सु. सू. ४६।१५२ ॥ पालला: श्लेष्मजननाः शष्कुल्यः कफपित्तलाः ॥ सु. सू. ४६।४०१ " एवमेवमाहार-

गुणवर्णने द्रव्यगुणवर्णने च शरीरसम्बन्धे यद्यद् यस्य यस्य प्रतिकूलतया वर्धकं तत्र तत्र वातलं पित्तलं श्लेष्मलमिति शब्दाः प्रयुज्यन्ते । यदि चाऽऽग्नेयादिशब्दाना पर्याया वातपित्तकफा भवेयुस्तर्हि पित्तलादिशब्दप्रयोगा न सङ्गच्छन्त एव, यथा शरीरवर्णने वातः पित्त श्लेष्मा इत्येव प्रयोगाः समागच्छन्ति अतः आयुर्वेदीयसिद्धान्ते भूतविशेषपरिणामविशेषवाचका एवैते शब्दा न पुनः सामान्येन सर्वं जगद् वातपित्तश्लेष्ममयमिति वक्तु कथमपि युज्यते । निघण्टुषु तु यद्वातल पित्तल श्लेष्मलमित्यादिद्रव्यगुणाख्यापकत्वेन पदे पदे समागच्छति तत्तु समीचीनमेव । तस्माद् यद्यत्पदार्थसेवनेन शरीरान्तर्वर्तिवातीयव्यापारः प्रतिकूलतया परिणमति तत्र तत्र वातलत्व, विरुद्धवातस्यकरणात् । एव यद्यत्पदार्थसेवनेन शरीरान्तर्वर्त्याग्नेयव्यापारः प्रतिकूलतया परिणमति तत्र तत्र पित्तलत्व जठराऽग्निव्यापारस्य शरीरप्रातिकूल्ये योजनात् । एव यद्यत्पदार्थसेवनेन शरीरान्तर्वर्ती जलपार्थिवव्यापारः प्रतिकूलतया परिणमति तत्रतत्र श्लेष्मलत्व, शरीरीयसौम्यगुणाना प्रातिकूल्येऽवस्थापनात् । वातादि क्षये तु वातलादिपदार्थसेवनमेवोपशेते, तत्र तेषा प्रातिकूल्य न भवति परन्तु वातलादिव्यवहारस्तु अव्याहत एवाऽऽस्त इति रहस्यम् । एवञ्च—" सर्वशरीरचरास्तु वातपित्तश्लेष्माणो हि सर्वस्मिञ्छरीरे कुपिताऽकुपिताः शुभाऽशुभानि कुर्वन्ति । प्रकृतिभूताः शुभान्युपचयबलवर्णप्रसादादीनि, पुन र्विकृतिमापन्नानि विकारसञ्ज्ञकानि । च. सू. २०।९ ॥ लोके वाय्वर्कसोमाना दुर्विज्ञेया यथा गतिः । तथा शरीर वातस्य पित्तस्य च कफस्य च ॥ च. चि. २८।२४४ ॥ त्यागाद्विषमहेतूना समानाञ्चोपसेवनात् । विषमा नाऽनुबध्नन्ति जायन्ते धातवः समाः ॥ कथं शरीरे धातूना वैषम्य न भवेदिति ॥ समानाञ्चाऽनुबन्ध' स्यादित्यर्थं क्रियते क्रिया ॥ च. सू० १६।३५-३६ ॥ नाऽस्ति रोगो विना दोषै र्यस्मात्तस्माद्विचक्षणः । अनुक्तमपि दोषाणा लिङ्गैर्व्याधिमुपाचरेत् ॥ सु. सू. ३५।१९ ॥ एवमुत्पन्नस्त्वचि दोषस्तत्रतत्र च परिवृद्धिं प्राप्याऽप्रतिक्रियमाणोऽभ्यन्तर प्रतिपद्य धातूनभिदूषयति॥ सु. नि. ५।३ ॥ दोषाः क्षीणा बृंहयितव्याः, कुपिताः प्रशमयितव्याः, वृद्धा निर्हर्तव्याः, समाः परिपाल्या इति सिद्धान्तः ॥ सु. चि. ३३।३ ॥ यस्मिन् यस्मिन् ऋतौ ये ये दोषाः कुप्यन्ति देहिनाम् । तस्मिंस्तस्मिन् प्रदातव्या रसास्ते ते विजानता ॥ सु. चि. २४।१०२ ॥ " इत्यादीनि सर्वाण्येव वाक्यानि सङ्गच्छन्ते । इत्थञ्च दोषाणा वृद्धौ तद्वर्धकपदार्थसेवनेन महती व्यापत् । साधारण्ये साधारणा, क्षीणतायान्तु वर्द्धन गुणकरमेव सम्पद्यते समीहितकार्यकरणादित्यलमतिविस्तरेण ॥

---

अतोऽग्रे शारीराऽवयवबोधक कोष्ठक विन्यस्यते । तत्र दुर्दैववडवाऽग्निज्वालयोर्वरिता या या वेदीयसंहिता उपलब्धास्ताभ्यो यानियानि शरीराऽवयवनामान्यासादितानि तानितानि समाहृत्यैकत्र स्थाने उद्ध्रियन्ते । तत्र सायणभाष्यात्प्राचीनमेकमपि भाष्य नाऽऽसादितम् । सायणस्य केवलकर्मकाण्डनिष्ठतया शारीरविषये वाक्यानि न सन्देहाऽपाकरणसमर्थानि सन्ति तद्दिग्दर्शन वैदिकटिप्पण्या स्थलेस्थलेऽस्माभिः कृतमस्ति । वैदिकशब्दार्थनिर्णये शर्मण्य ( जर्मन ) देशनिवासिना " रौथ " नामाऽलङ्कुर्वता विदुषा बहु प्रायाति परन्त्ववलम्बनाऽभावात् कुशकाशाऽवलम्बनन्यायेनाऽगत्या तेनाऽपि सायणभाष्यमेवाऽलम्बि । तेन तदीयकोषेऽपि यथाऽवस्थित एव भ्रमोऽवशिष्टः । " हार्नले"महोदयैरप्यायुर्वेदीयशारीरसुद्धर्तुकामैरपि स एव पन्था अवलम्बित' । तत्पश्चात्तनैस्तु अन्धलग्नन्यायेन महती भ्रमगुहा निर्मिता, यथा क्लोमादिवर्णनेऽस्माभिः प्रकटीकृतम् । एतद्भ्रमनिराकरणायाऽस्माभिरय श्रमः स्वीकृतोऽस्ति । तत्र शान्तमनसा हससदृशा भूत्वा सम्पश्यन्त्विम सन्दर्भमिति विनीता प्रार्थना ।

# अथाऽर्षशारीराऽवयवाः

| संख्याक्रमः | वैदिक | शतपथ | सुश्रुत |
|---|---|---|---|
| १ | केशा· अ० ६।९।१ | केशा· १२।९।१।६ | मूर्धजाः शा. ३।७, केशाः शा. ३।३ |
| २ | शिर अ २।२५।२, शीर्षम् अ. ४।३४।१ मूर्धा अ. १६।३।१-२ | शिर. (त्वगस्थिमस्तिष्काः) १२।२।४।९ मूर्धा १४।७।२।३ | शिर.·शा ३।१८, मस्तकम् शा. ५।४, मूर्धा शा. ७।२० |
| ३ | कपालानि अ. ९।१३।२२ | कपालानि ३।४।१।१५ | शिरः कपालानि शा ५।२६ |
| ४ | मस्तिष्कम् अ.२।३३।१देव-कोशः अ.१०।२।२७हिर-ण्ययःकोशःअ.१२।२।३१ | मस्तिष्क ३।८।३।११ | मस्तिष्कम् सू. ३५।४ |
| ५ | ललाटम् अ. ९।१२।१ | ललाटम् ३।८।१।५ | ललाटम् शा. ५।४ |
| ६ | भ्रुवौ ऋ० ४।३८।७ | भ्रुवौ १२।९।१।५ | भ्रुवौ शा. ६।२८ |
| ७ | नेत्रम् अ. १०।१०।२२, अक्षिणी अ. २।३३।१, चक्षणी अ. १०।२।६ चक्षु. अ. २।३५।५, अम्बके वा. स. ३।६० | चक्षुषी १२।९।१।५ अक्ष्णा ३।८।३।२७ | नेत्रे उ. १।१३, अक्षिणी उ. १।१७, लोचने उ १।१४, नयने शा ४।६८ प्रेक्षणे सू. ३५।४ |
| ८ | पक्ष्माणि वा. स. २५।१ (उपरितनपक्ष्माणि पार्यैक्षवः-अधस्तनानि अवार्येक्षव.) | पक्ष्माणि १२।९।१।५ | अक्षिपक्ष्माणि शा ३।१४ (ऊर्द्ध्वाऽधोभागेन प्रत्यक्षि पक्ष्म-द्वयम्) |
| ९ | शुक्रम् वा. स. १९।८९ | अक्षिशुक्लम् १२।२।४।१५ | श्वेतभागः उ. १।१५ |
| १० | असितम् वा. स. १९।८९ | अक्षिकृष्णम् १२।२।४।१५ | कृष्णभागः उ. १।१५ |
| ११ | × × × | अक्षिमण्डल १२।२।४।१५ | दृष्टिमण्डलम् उ. १।१५ |
| १२ | कनीनिका अ. ४।२०।३ कनीनकम् वा. सं. ४।३२ | कनीनका १२।८।२।२६ | दृष्टिः उ. ७।४ |
| १३ | श्रुतिः वा. स. १८।१, कर्णौ अ. २।३३।१ | श्रोत्रे १२।९।१।५, कर्णौ १०।१।१।८ | कर्णौ सू. ५।४ |
| १४ | नासिके अ. १०।२।६ | नासिके १२।२।४।१५ | नासा शा. ५।४ |
| १५ | आस्यम् अ.६।५६।३, मुखम् अ. १०।२।६ | मुखम् १२।२।४।१६ | मुखम् शा. १०।१२ |
| १६ | ओष्ठौ वा. स. २५।२ | ओष्ठौ १०।१।१।८ | ओष्ठौ शा. ४।६८ |
| १७ | सृक्का अ. ९।१५।६ | × × | सृक्कण्यौ उ. ६०।१३ |
| १८ | दन्ताः अ. ५।१८।८ | दन्ताः १०।१।१।८ | दन्ताः शा. ५।१९ |

| संख्याक्रमः | वैदिक | शतपथ | सुश्रुत |
|---|---|---|---|
| १९ | दष्ट्राः अ. ११।८।२२ | × × | दष्ट्रा' क ३।४ |
| २० | दन्तमूलानि वा. स. २५।१ | × × | दन्तमूलानि नि. १६।१३ |
| २१ | तालु वा. स. २५।१ | × × | तालु शा. ४।६८ |
| २२ | जिह्वा अ. २।३३।१ | जिह्वा १२।९।१।३ | जिह्वा शा. ४।६८ |
| २३ | जिह्वाऽग्रम् अ. १।३४।२ | × × | जिह्वाऽग्रम् नि. १६।३९ |
| २४ | जिह्वामूलम् अ. १।३४।२ | × × | जिह्वामूलम् सू. २१।७ |
| २५ | श्मश्रूणि अ. ५।१९।१४ | श्मश्रूणि ( सिंहलोमानि ) १२।९।२।६) | श्मश्रव शा. ३।३३ |
| २६ | हनू अ. १०।२।८ | × × | हनू चि. ४०।५५ |
| २७ | छुबुकम् अ. २।३३।१ | × × | चिबुकम् शा ५।४ |
| २८ | ग्रीवाः अ. २।३३।२ | {ग्रीवाः (कल्कराणि १४- वीर्य१५)१२।२।४।१० | ग्रीवा शा. ५।४ |
| २९ | अधरंकण्ठः वा. सं. २५।२ | × × | कण्ठ' नि. १६।४६ |
| ३० | {मन्यः (अष्टौ) अ. २।१२।७ मन्याः अ. ६।२५।१ | × × | मन्ये शा. ६।२८ |
| ३१ | उष्णिहाः अ. २।३३।२ | × × | × × |
| ३२ | {कृकाटम् अ. ९।१२।१ ककाटिका अ १०।२।८ | | कृकाटिके शा. ६।२८ |
| ३३ | शुष्ककण्ठः वा. स. २५।२ | | × × |

## मध्यशरीराऽवयवाः

| संख्याक्रमः | वैदिक | शतपथ | सुश्रुत |
|---|---|---|---|
| ३४ | स्कन्धौ अ. १०।२।४ | × × | स्कन्धौ शा. ६।२७ |
| ३५ | अंसौ अ. १०।२।५ | असौ ३।८।३।२७ | असो ( म ) शा. ६।२७ |
| ३६ | कफोडौ अ. १०।२।४ | × × | असफलके ( म ) शा. ६।२७ |
| ३७ | {बाहू अ. २।३३।२, हस्तौ अ. ६।८१।१ | {दोषी ३।८।३।१७, बाहू १२।३।१।७ | बाहू शा ६।२५ |
| ३८ | कक्षे अ. ६।१२७।२ | निकक्षौ १२।९।१।६ | कक्षे शा. ५।२५ |
| ३९ | अरत्नी वा. स. २०।८ | अरत्नी ४।२।१।१९ | अरत्नी शा. ८।८ |
| ४० | × × | {अङ्गुष्ठौ१०।१।१।८,- प्रथिष्ठौ १२।२।४।६ | अङ्गुष्ठौ सू. ३५।१२ |
| ४१ | अङ्गुल्यः अ. २।३३।६ | अङ्गुल्य' ३।८।४।१ | अङ्गुल्यः सू. ३५।१२ |
| ४२ | × × | विराट् ( अन्नादितमा ) १२।२।४।५ | प्रदेशिनी सू. ३५।१२ |
| ४३ | × × | वर्षिष्ठा १२।२।४।४ | मध्यमा सू. ३५।१२ |

| संख्याक्रमः | वैदिक | शतपथ | सुश्रुत |
|---|---|---|---|
| ४४ | × × | वर्षीयसी १२।२।४।३ | अनामिका सू. ३५।१२ |
| ४५ | × × | ह्रसिष्ठा १२।२।४।२ | कनिष्ठिका सू. ३५।१२ |
| ४६ | नखानि अ. २।३३।६ | नखानि १२।१।४।३ | नखाः शा. ३।३३ |
| | ( कोष्ठगता बाह्याऽवयवाः ) | | |
| ४७ | कुसिन्धम् अ. १०।२।३<br>कबन्धम् अ १०।२।३ | × ×<br>× × | मध्यशरीरम् शा. ३।३२ |
| ४८ | वक्ष. ऋ. १।९२।४<br>उरः अ. १०।२।४ | वक्षः ३।८।३।१७<br>उर ( जत्रव ८+८ अवयव्युरः १=१७ ) १२।२।४।११ | वक्षः शा. ५।३७<br>उरः सू. ३५।१२ |
| ४९ | जत्रवः वा. स २५।८, अ. ११।३।१० | जत्रवः १२।२।४।११ ( सुश्रुताद्भिन्नार्थकाः ) | जत्रुणी शा. ६।७ |
| ५० | पक्षतिः वा. स. २५।४,<br>पर्शवः अ. ११।३।१२ | पर्शव १२।२।४।१३ | पर्शुकाः चि. ३।२९ |
| ५१ | पार्श्वौ अ. ४।१४।७,<br>क्रोडः अ. ९।१२।५ | पार्श्वौ ( पर्शवः १३+१३ अवयवी १=२७ ) १२।२।४।१३ | पार्श्वौ शा. ५।४ |
| ५२ | स्तनौ अ. ९।१।७ | स्तनौ १४।९।४।२८ | स्तनौ शा. ५।४ |
| ५३ | वर्जह्ये अ. ११।१०।१४ | × × | चूचुकौ शा. ६।२६ |
| ५४ | उदरम् अ २।३३।४,<br>जठरम् अ. २०।३३।१ | उदरम् (कुन्तापानि २० अवयव्युदरम् १=२१ ) १२।२।४।१२ | उदरम् शा. ५।४ |
| ५५ | कुक्षी ( उदरपार्श्वौ ) अ. २०।४।२ | × × | कुक्षी शा. ३।७ |
| ५६ | नाभि अ. २।३३।४ | नाभिः १२।९।१।३ | नाभिः शा. ६।२६ |
| ५७ | जघनम् अ. १४।१।३६ | जघनम् ३।५।३।६ | जघनम् शा. ३।८ |
| ५८ | पृष्ठम् वा. स. ९।२१ | पृष्ठम् ५।२।१।४ | पृष्ठम् शा. ५।४ |
| ५९ | अनूकम् अ ४।१४।८<br>अनूक्यम् अ. २।३३।२ | अनूकम् ( करूकराणि३२ अवयवी १=३३ ) १२।२।४।१४ | पृष्ठवंश शा. ६।२७ |
| ६० | करूकराणि अ ११।११।८ | करूकराणि १२।२।४।१४ | पृष्ठाऽस्थीनि शा. ५।१९ |
| ६१ | पृष्टयः अ. ९।१२।६ | × × | × × |
| ६२ | श्रोणी अ. १०।२।३ | श्रोणी ३।८।३।१९ | श्रोणी शा. ५।४ |
| ६३ | भासदम् अ. २।३३।५ | × × | स्फिचौ शा. ५।४ |

"क्षुत्कुक्षिरिरा वनिष्ठुः पर्वताः प्लाशयः ॥ अथर्व. ९।१२।१२" इत्यत्र प्लाशेः पर्वतसादृश्य प्रदर्शितम्, "प्लाशिभिरुपलान्" वा. सं. २५।८ इत्यत्रापि ग्रावसादृश्यं प्रतिपादितम्। "कुम्भोवनिष्ठु र्जनिता शचीभि-र्यस्मिन्नग्रे योन्या गर्भो अन्तः। प्लाशि र्व्यक्तः शतधार उत्से दुहे न कुम्भी स्वधा पितृभ्यः॥ वा. स. १९।८७" यः कुम्भी=कुम्भसादृश्याद्गर्भाशयः कुम्भः जरायुर्वा कुम्भः, सोऽस्ति निवासस्थानत्वेन यस्य सः कुम्भी=कर्माऽ-धिकृतो जीवः पितृभ्यः स्वधां न दुहे न दोग्धि न ददाति धातूनामनेकार्थत्वात्। तस्य कुम्भः= सुराकुम्भः यः पूर्वमासेवितः स वनिष्ठु र्जनितः वनिष्ठुरूपेण परिणतः। अग्रे पूर्वं शचीभिः स्वसञ्चितकर्मभिर्योन्यामन्तः शतधारे उत्से=निर्झरे रसवाहिनीभिः सहस्रशः जरायोः सम्श्रियमाणत्वादुत्सेनोपमा, तस्मिश्च(जरायौ)जनिता स्थितो भवति। पश्चात्(योनिवहिर्गमनाऽनन्तर)प्लाशिः=फुफ्फुसः व्यक्तः स्वकार्यकरणशीलो जनिता अयमत्राऽभिसन्धिः, योऽज्ञः पितृप्रभृतिदेवाना तर्पणमकृत्वा केवलं शिश्नोदरव्यापारपरायणः सन् सुरानिर्माणग्रहणादिव्यापारतत्परो भवति तादृशःसन्नेव म्रियते चेत् स स्वकर्मभिः पूर्वं मातृयोन्या जरायौ शेते। तत्र च कुम्भिनामनरके पतित इव विविधवेदना अनुभवन् नवममासाद्युत्तर गर्भान्निःसृत्य व्यक्तफुफ्फुसव्यापारश्चेज्जीवति अन्यथा तु मृतएवा ऽऽस्ते। पुनरपि ता एव वेदना अनुभवितुमुद्युक्तो भवति। जीवितोऽपि फुफ्फुसव्यापाराऽधीनैकजीवनः सन् कासश्वासादिविविधवेदना अनुभवन्नाजन्मपर्यन्तमुच्छ्वसिति, अतोऽज्ञानिन इद वेदनाचक्र पुनःपुनरावर्तते। ज्ञानिनस्तु स्वकर्तव्याऽनुष्ठानात्समस्तकर्मबन्धनानि शीर्यन्ते निर्बन्धनश्च सन्नमृतत्वमश्नुते इति। अत्र स्पष्टमेव "प्लाशि-र्व्यक्तः" इत्यनेन फुफ्फुसीयव्यापार. समाख्यात स्तदधीन प्राणिना जीवनश्चोक्तम्। अतो निस्सन्देह प्लाशि-शब्देन फुफ्फुस एव ग्रहीतव्य'। उक्तमन्त्रे 'प्लाशिः शिश्नोऽभवदिति' महीधरेण व्याख्यातम्, "इन्द्रस्य क्रोडोऽदित्यै पाजस्य वा. स. २५।८" अस्य भाष्ये तु 'प्रकर्षेणाऽश्नन्ति भुञ्जतेऽन्नानीति प्लाशयः शिश्नमूलनाड्यः तन्नाडीद्वारैवाऽन्नस्य देहे सञ्चारात्' इत्यत्र महीधरेणव्याख्यातम्। एव "आन्त्रेभ्यस्ते गुदाभ्यो० ऋक्. १०।१६३।३" अस्मिन् मन्त्रे **प्लाशिभ्यः**=क्लोमप्लीहादिसञ्ज्ञेभ्यश्च मासेभ्य इति ऋग्वेदभाष्ये सायणः। तथाऽस्मिन्नेव मन्त्रे अथर्ववेदभाष्ये **प्लाशेः**=बहुच्छिद्रात् मलपात्रादिति सायणो व्याख्यत्। एतयोः (सायण-महीधरयोः) स्ववाक्येनैव परस्परव्याघातादेतावुपेक्षितव्यौ। किञ्च स्ववाक्येऽश्रद्दधानः सायणः 'प्लाशिः शतातृण्णा तत् यत्सा वहुधा वितृण्णा भवति तस्मात् प्लाशि र्वहुधा विकृत्त' ' इति (१२।९।१।३) शतपथीयोदाहरण-मुदाजहार। अतः सायणस्याऽस्मिन्नंशे न सन्देहो दूरीभूतस्तद्वचनमत्राऽश्रद्धेयम्॥

(स. ६४) **अनूवृजौ**="पार्श्वे आस्तामनुमत्या भगस्यास्तामनूवृजौ। अष्ठीवन्तावब्रवीन्मित्रो ममैतौ केवलाविति॥ अथर्व० ९।४।१२ अनुक्षण श्वासोच्छ्वासाभ्या वृजाते रक्तस्थं मल वर्जयतः अनूवृजौ, इगुप-धज्ञा० पा० ३।१।१३५ इति कः अन्येपामपि दृश्यत इति दीर्घः। अनूवृजाविति द्विवचनप्रयोगात् पार्श्वे आस्तामिति च लिङ्गात्फुफ्फुसावेव ग्रहीतव्यौ।

## अथ हृदयविवरणम् (६५)

अहो समयपतनस्य पराकाष्ठा, यया आवालवृद्धमामूर्खसहृदयञ्च प्रसिद्धान्यपि शारीरवस्तूनि शङ्कामुत्पा-दयन्ति। हृदयम् (सु. शा. ३।१८) हृत् (सु. शा. १०।१४) चेतनास्थानम् (सु. शा. ४।३१) रक्ताशयः (सू. २२।९) हृदय (च. शा. ७।१३) हृत् (च. सू. १७।७४) आत्मायतन (च. नि. ८।४) सर्वाश्रयः (च. वि. २।२५) चेतनाऽधिष्ठानम् (च. शा. ७।११) महत् (च. सू. ३०।३) अर्थः (च. सू. ३०।३) हार्दम् (अ. १८।४।५८) हृदयम् (अ. २।३३।२) इत्यादयः शब्दाः हृदयवाचकाः

संस्कृतभाषायां दृश्यन्ते। अथर्ववेदीयहार्दिम्शब्दस्याऽपभ्रंशतया हार्ट (Heart) इति शब्द आग्लभाषायां संवृत्तः। एतस्य स्थानमपि सर्वत्र निश्चितमेवाऽस्ति यथा—“अक्षीभ्या ते नासिकाभ्यां कर्णाभ्या छुबुकादधि। यक्ष्म शीर्षण्य मस्तिष्काज्जिह्वाया वि वृहामि ते॥ ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनूक्यात्। यक्ष्मं दोषण्यमंसाभ्या वाहुभ्या वि वृहामि ते॥ अ. २।३३।१-२” इत्यत्र क्रमेण अक्ष्यादयोऽवयवा निर्दिष्टाः, तेष्वपि शीर्षमस्तिष्कहृदयानि स्वतन्त्रतया निर्दिष्टानि सन्ति तेषु स्वस्वस्थाने स्वतन्त्रताऽपि निर्दिष्टा। पाश्चात्यविज्ञानलवाऽग्निदुर्विदग्धहृदया योग्यगुरुमुखादनधीतशास्त्ररहस्यतया मृगतृष्णिकार्णवे निमग्नमस्तिष्काश्च मस्तिष्कमेव हृदयं मन्वाना. स्वेतरानपि भ्रमगह्वरे निपातयितुं प्रयतमाना दृश्यन्ते, तानालोच्य विषीदति नितरा चेतः। “अङ्गादङ्गात्सम्भवसि हृदयादधिजायसे। स त्वमङ्गकपायोऽसि दिग्धविद्धामिव मादये माममू मयीति। वृ. उ. ६।४।९” इत्यादिमन्त्रैर्हृदये स्नेहस्याऽविक्यमुक्तमत एव चिरोत्सृष्टमित्रपुत्रकलत्रादिकमालोच्य सहसा लोकप्रसिद्धहृदयेनाऽऽश्लेषयितु प्रयतन्ते जना। सम्पन्ने चाऽऽश्लेषे कियत्क्षणमानन्दसमुद्रे निमग्नाः सन्तः स्वस्वरूपमेव विस्मरन्ति। आनन्दाऽनुभवाऽनन्तर लब्धसञ्ज्ञाः मूर्धाद्यङ्गसयोग विधाय चुम्बनादिक्रियासु प्रवर्तन्ते, इति देशजातिवालवृद्धमूर्खधीमत्वादिभेदमनपेक्ष्यैकप्रकारमेव सर्वत्र प्रवर्तमानाः जना दृश्यन्ते। न पुनः प्रथमत. प्रेमोत्कटताया मूर्धाद्याश्लेषे प्रवर्तमानाः दृश्यन्ते, अत एव वेदे “हृदयादधिजायसे” इत्यनेन प्रेम्णः स्थानं हृदयमविकततया निर्धारितम्। अग्निं हृदयेनाशनिं हृदयाग्रेण पशुपतिं कृत्स्नहृदयेन भवं यक्ना शर्वं मतस्नाभ्यामीशानं मन्युना महादेवमन्तःपर्शव्येनोग्रं देवं वनिष्ठुना वसिष्ठहनु' शिङ्गीनि कोश्याभ्याम्॥ वा. स. ३९। ८” अस्मिन्मन्त्रे हृदयमुकुलेन अग्ने' तत्समीपभागेनाऽग्नेः कृत्स्नहृदयेन पशुपतेः तत्समीपवर्तिना यक्ना भवस्य तर्पणमुक्तम्। अनेन सन्दर्भेण यकृत्समीपवर्ति हृदय निर्धारित' न पुनर्मस्तिष्के हृदयत्वं स्थापितम्। किञ्च—“इन्द्रः सुत्रामा हृदयेन सत्य पुरोडाशेन सविता जजान। यकृत् क्लोमानं वरुणो भिषज्यन् मतस्ने वायव्यैर्न मिनाति पित्तम्॥ वा. सं. १९।८५” अस्मिन्मन्त्रे हृदयसत्ययकृत्क्लोममतस्नापित्तानि निर्दिष्टानि तत्र सत्यशब्देन शिरो निर्दिष्टम्। “समुद्रे ते हृदयमप्स्वन्तः स त्वा विशन्त्वोषधीरुतापः। सुमित्रिया न आप ओषधयः सन्तु दुर्मित्रियास्तस्मै सन्तु योऽस्मान् द्वेष्टि यञ्च वयं द्विष्मः॥ वा. स. २०।१९” समुद्रे=सर्वनदीनां पतनस्थाने अप्सु=तदीयधृतेषु द्रवेषु अन्तर्मध्ये आप उत साधारणजलानीव अव्ययानामनेकार्थत्वादुपमाया उतशब्दो बोध्यः। ओषधयः मया प्रकल्पिताः औषधिरूपा आपः ओषधीः=शरीरपोषणसमर्था' रक्तादिधातवस्तद्रूपा भूत्वा इत्यर्थः। ते=तव हृदयं हृत्स्थानं संविशन्तु अव्याहततया पाक प्राप्य हृदयपर्यन्त गच्छन्तु। ताश्च सुमित्रियाः शोभनफलदात्र्यः सन्तु। उत्तरार्धञ्चाऽस्य स्पष्टम्॥ अत्र मन्त्रे समुद्रेण सह हृदयस्य साधर्म्यमुक्तम्, यथा समुद्रे आपो निपतन्ति तथा हृदयेऽपि रसादिद्रवाः संविशन्ति निस्सरन्तिच। इत्यनेन स्पष्टतया हृदयाऽऽकारः तत्स्थान तदीयकार्यञ्च निर्णीतमस्ति। इदं सादृश्य हृदय एव सम्भवति न पुनर्मस्तिष्के। “अदो यत् ते हृदि श्रित मनस्क पतयिष्णुकम्। ततस्त ईर्ष्यां मुञ्चामि निरूष्माण दृतेरिव॥ अ. ६।१८।३॥ हे ईर्ष्याग्रस्तपुरुष ते तव हृदि हृदये श्रित अवस्थित अदः प्रसिद्ध यन्मनः पतयिष्णु अस्थिष्णु इतस्ततः पतनशीलम्। कम् इति पदद्वय पादपूरणार्थम्। तत स्तस्माद् मनसः ते तव ईर्ष्याम स्त्रीविषय कोप निःशेषेण मुञ्चामि अपगमयामि। तत्र दृष्टान्तः ऊष्माणम् इति। यथा दृतेः चर्ममय्या भस्त्रिकाया. सकाशात् तन्मध्यवर्तिनम् ऊष्माणम् श्वासवद् अन्तःपूरित वायुं तन्मुखान्निःसारयति कर्मकारस्तद्वदित्यर्थः (सा० भा०)॥ अस्मिन् मन्त्रे हृदयस्य भस्त्रिकया सादृश्य दत्तम्, तच्च हृदय एव सम्भवति न कथञ्चिदपि मस्तिष्के। तथा च—“शोणितकफप्रसादज हृदय, यदाश्रया हि धमन्यः प्राण-

वहाः, तस्याऽधो वामतः प्लीहा फुफ्फुसश्च, दक्षिणतो यकृत् क्लोम च, तद्विशेषेण चेतनास्थानमतस्तस्मिंस्तम-साऽऽवृते सर्वप्राणिनः स्वपन्ति ॥ सु. शा. ४।३१ ” अत्र स्पष्टतया फुफ्फुसादिमध्ये हृदय वर्णितम् । ईदृशे स्पष्टतया प्रतिपादिते को मूर्खोऽपि मस्तिष्कस्य हृदयत्वं साधयितुं प्रयतेत । “ शृङ्गाटकान्यधिपतिः शङ्खौ कण्ठ-शिरो गुदम् । हृदयं वस्तिनाभी च घ्नन्ति सद्योहतानि तु ॥ सु. शा. ६।१० ” अत्र मनसा शृङ्गाटकाऽ-धिपतिशिरोभ्यः पृथक् हृदयपरिगणितेन मस्तिष्काद्धृदयस्य पृथग्भाव व्याहन्तुं को नाम मूर्खोऽपि मनसा प्रयतेत । “ प्रसन्नाभ्यां कफासृग्भ्या हृदय पङ्कजाऽऽकृति । शुषिर स्यादधोवक्त्र यकृत्क्रोडान्तरास्थितम् ॥ (टी०) “ स्थानान्यामाग्निपक्वाना मूत्रस्य रुधिरस्य च । हृदुण्डुकः फुफ्फुसश्च कोष्ठ इत्यभिधीयते ॥ सु. चि. २।१२ ” “ पञ्चदश कोष्ठाऽङ्गानि, तद्यथा—नाभिश्च, हृदयञ्च, क्लोम च, यकृच, प्लीहा च, वृक्कौ च, वस्तिश्च, पुरीषाधारश्च, आमाशयश्च, पक्वाशयश्च, उत्तरगुदञ्च, अधरगुदञ्च, क्षुद्रान्त्रञ्च, स्थूलान्त्रञ्च, वपावहननञ्चेति ॥ च. शा. ७।१३ ” इत्यत्र कोष्ठाऽङ्गत्वेन वर्णनात्को नाम साहसिको हृदयस्य मस्तिष्के स्थानं प्रकल्पयितुं प्रभवेत् । “ स्तनयो र्मध्यमधिष्ठायोरस्यामाशयद्वारं सत्त्वरजस्तमसामधिष्ठान हृदय नाम ॥ सु. शा. ६।२६ ” “ हृदय चेतनास्थानमुक्तं सुश्रुत देहिनाम् । तमोऽभिभूते तस्मिंस्तु निद्रा विशति देहिनाम् ॥ ४।३४ ॥ ” आभ्या सूत्राभ्या हृदयस्य स्तनयोर्मध्येऽधिष्ठान चेतनास्थानत्वञ्चोक्तम् । एतेन हृदयस्य कस्मिन् स्थाने स्थितिः कतरच्च तद्वस्त्विति सन्देहस्याऽनवसरोऽस्ति, परन्तु शरीरे कस्मिन् स्थाने चेतनाऽस्ति केन च सेति सन्देहोऽव-शिष्ट एव । तत्र जीवतः शरीरिणो न तदङ्गमव्याधिमदस्ति यच्चेतनारहितं स्यादतश्चेतनायाः सर्वत्र विद्यमानतयाऽ-स्मिन् स्थाने चेतनाऽस्त्यत्र च नाऽस्तीति केनाऽपि विदुषा वक्तुं न पार्येत, परन्तु सा केनाऽस्तीति विचारे औपनिषदिकाऽधिकरणमेवाऽवतारयामः—“ यो ह वै ज्येष्ठ च श्रेष्ठ च वेद ज्येष्ठश्च ह वै श्रेष्ठश्च भवति प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च ॥ १ ॥ यो ह वै वसिष्ठ वेद वसिष्ठो ह स्वानां भवति वाग्वाव वसिष्ठः ॥ २ ॥ यो ह वै प्रतिष्ठा वेद प्रति तिष्ठत्यस्मिँश्च लोकेऽमुष्मिँश्च चक्षुर्वाव प्रतिष्ठा ॥ ३ ॥ यो ह वै सम्पदं वेद स हास्मै कामाः पद्यन्ते देवाश्च मानुषाश्च श्रोत्रं वाव सम्पत् ॥ ४ ॥ यो ह वा आयतनं वेदायतनं ह स्वाना भवति मनो ह वा आयत-नम् ॥ ५ ॥ अथ ह प्राणा अह श्रेयसि व्यूदिरेऽह श्रेयानस्म्यहं श्रेयानस्मीति ॥ ६ ॥ ते ह प्राणाः प्रजापतिं पितरमेत्योचुर्भगवन् को नः श्रेष्ठ इति तान् होवाच यस्मिन् व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्येत स वः श्रेष्ठ इति ॥७॥ सा ह वागुच्चक्राम सा सवत्सर प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथा कला अवदन्तः प्राणन्तः प्राणेन पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह वाक्॥८॥ चक्षुर्होच्चक्राम तत्संवत्सर प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितुमिति यथान्धा अपश्यन्तः प्राणन्तः प्राणेन वदन्तो वाचा शृण्वन्तः श्रोत्रेण ध्यायन्तो मनसैवमिति प्रविवेश ह चक्षुः ॥ ९ ॥ श्रोत्र होच्चक्राम तत्सवत्सर प्रोष्य पर्येत्योवाच कथम-शकतर्ते मज्जीवितुमिति यथा वधिरा अशृण्वन्तः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा ध्यायन्तो मन-सैवमिति प्रविवेश ह श्रोत्रम् ॥ १० ॥ मनो होच्चक्राम तत्सवत्सरं प्रोष्य पर्येत्योवाच कथमशकतर्ते मज्जीवितु-मिति यथा वाला अमनसः प्राणन्तः प्राणेन वदन्तो वाचा पश्यन्तश्चक्षुषा शृण्वन्तः श्रोत्रेणैवमिति प्रविवेश ह मनः ॥ ११ ॥ अथ ह प्राण उच्चिक्रमिषन्त्स यथा सुहयः पड्वीशशङ्कून् सखिदेदेवमितरान् प्राणान्समखिदत्त हाभि समेत्योचु र्भगवन्नेधि त्वं नः श्रेष्ठोऽसि मोत्क्रमीरिति ॥ १२ ॥ अथ हैन वागुवाच यदह वसिष्ठोऽस्मि त्व तद्वसिष्ठोऽसीत्यथ हैनं चक्षुरुवाच यदह प्रतिष्ठास्मि त्व तत्प्रतिष्ठासीति ॥ १३ ॥ अथ हैन श्रोत्रमुवाच यदहं सम्पदस्मि त्व तत्सम्पदसीत्यथ हैनं मन उवाच यदहमायतनमस्मि त्व तदायतनमसीति ॥ १४ ॥ न वै वाचो न चक्षूंषि न श्रोत्राणि न मनांसीत्याचक्षते प्राणा इत्येवाचक्षते प्राणो ह्येवैतानि सर्वाणि भवन्ति ॥

छान्दोग्य० ५।१ ॥" अयमेव विषयो बृहदारण्यकेऽपि ( बृ. ६।१ ) यथाऽवस्थितो निहितोऽस्ति। अनेनाऽविकरणेन प्राणाऽधीना चेतनाऽस्तीति स्पष्टीभूतम्। प्राणाश्च नोच्छ्वासनिःश्वासरूपाः, समाहिते ( ब्रह्मरन्ध्राऽवरुद्धप्राणे ) योगिनि उच्छ्वासनिःश्वासयोरभावेऽपि निष्प्राणोऽयमिति वदितुमशक्यत्वात्। स यदा ब्रह्मरन्ध्र त्यक्त्वा पूर्ववद्धृदयस्थान समाविशति तदा पूर्ववदिन्द्रियाणां प्रसृते व्यापारे निःश्वासोच्छ्वासादयः प्रवर्तमाना दृश्यन्ते पुनरपि यदा हृत्स्थान त्यक्त्वा समाहितो भवति तदा निःश्वासादयः सर्वेऽपि भवन्ति स्तब्धाः। अतोऽन्वयव्यतिरेकाभ्यामेतन्निर्णीयते यत्प्राणन तन्न दृश्यमानशरीरीयाऽवयवाऽधीनम्, किन्तु लिङ्गशरीराऽधिष्ठितम्। लिङ्गशरीरञ्च जीवाऽधिष्ठितमिति सर्वशास्त्रसम्मतम्। यदा कदा द्वित्रहोरादिमृतशवशरीरस्याऽपि दैववशात्पुनरपि यथावज्जीवितत्व दृश्यते लोके। अतश्चेतनत्व नोच्छ्वासनिःश्वासादिरूपम् किन्तु तत् ( निःश्वासादिरूप ) सामान्यतया ( योगिनो मुक्त्वा ) हृदयाऽवच्छेदेन स्थूलशरीरे लिङ्गशरीरस्थितिद्योतकम्। अत एव "जीवापेत वाव किलेद म्रियते न जीवो म्रियत इति स य एषोऽणिमैतदात्म्यमिद सर्वं तत्सत्य स आत्मा तत्त्वमसि श्वेतकेतो इति भूय एव मा भगवान् विज्ञापयत्विति तथा सौम्येति होवाच ॥ छा. ६।११।३॥" इत्यत्र स्पष्टतयाऽय विषयो निर्णीतः। लिङ्गशरीरसत्त्वे च विषयसाक्षात्करणान्येकादशेन्द्रियाणि सन्ति तेषु सर्वेषु मनसोऽधिष्ठातृत्वात्तदधीनानीतराणीति व्यवस्थाऽस्ति यथा—"अथ हैन सौर्यायणी गार्ग्यः पप्रच्छ। भगवन्नेतस्मिन् पुरुषे कानि स्वपन्ति कान्यस्मिन् जाग्रति कतर एष देवः स्वप्नान् पश्यति कस्यैतत्सुख भवति कस्मिन्नु सर्वे सम्प्रतिष्ठिता भवन्तीति ॥ १ ॥ तस्मै स होवाच ॥ यथा गार्ग्यमरीचयोऽर्कस्याऽस्त गच्छतः सर्वा एतस्मिंस्तेजोमण्डल एकीभवन्ति। ताः पुनः पुनरुदयतः प्रचरन्त्येव ह वै तत्सर्वं परे देवे मनस्येकीभवति। तेन तर्ह्येष पुरुषो न शृणोति न पश्यति न जिघ्रति न रसयते न स्पृशते नाभिवदते नादत्ते नानन्दयते न विसृजते नेयायते स्वपितीत्याचक्षते ॥ २ ॥ प्राणाग्नय एवैतस्मिन् पुरे जाग्रति गार्हपत्यो ह वा एषोऽपानो व्यानोऽन्वाहार्यपचनो यद्गार्हपत्यात्प्रणीयते प्रणयनादाहवनीयः प्राण. यदुच्छ्वासनिःश्वासावेतावाहुती सम नयतीति स समानः मनो ह वाव यजमान इष्टफलमेवोदानः स एन यजमानमहरहर्ब्रह्म गमयति ॥ ४ ॥ अत्रैष देवः स्वप्ने महिमानमनुभवति। यद् दृष्ट दृष्टमनुपश्यति श्रुत श्रुतमेवार्थमनुशृणोति देशदिगन्तरैश्च प्रत्यनुभूत पुनः पुनः प्रत्यनुभवति दृष्ट चाऽदृष्ट च श्रुत चाऽश्रुतं चाऽनुभूत चाऽननुभूत च सच्चाऽसच्च सर्वं पश्यति सर्वः पश्यति ॥ ५ ॥ स यदा तेजसाऽभिभूतो भवत्यत्रैष देवः स्वप्नान्न पश्यत्यथ तदैतस्मिञ्छरीरे एतत्सुखं भवति ॥ ६ ॥ स यथा सौम्य वयासि वासो वृक्ष सम्प्रतिष्ठन्ते। एव ह वै तत्सर्वं पर आत्मनि सम्प्रतिष्ठते ॥७॥ पृथिवी च पृथिवीमात्रा चापश्चापोमात्रा च तेजश्चतेजोमात्रा च वायुश्च वायुमात्राचाकाशश्चाकाशमात्रा च चक्षुश्च द्रष्टव्य च श्रोत्र च श्रोतव्य च घ्राण च घ्रातव्य च रसश्च रसयितव्यं च त्वक् च स्पर्शयितव्यं च वाक् च वक्तव्यं च हस्तौ चादातव्य चोपस्थश्चानन्दयितव्य च पायुश्च विसर्जयितव्य च पादौ च गन्तव्य च मनश्च मन्तव्यं च बुद्धिश्च बोद्धव्य चाहङ्कारश्चाऽहङ्कर्तव्य च चित्त च चेतयितव्यं च तेजश्च विद्योतयितव्य च प्राणश्च विधारयितव्य च ॥ ८ ॥ एष हि द्रष्टा स्प्रष्टा श्रोता घ्राता रसयिता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः। स परेऽक्षरे आत्मनि सम्प्रतिष्ठते ॥ ९ ॥ परमेवाक्षर प्रतिपद्यते स यो ह वै तदच्छायमशरीरमलोहित शुभ्रमक्षरं वेदयते यस्तु सौम्य। स सर्वज्ञः सर्वो भवति तदेष श्लोकः ॥ १० ॥ विज्ञानात्मा सहदेवैश्च सर्वैः प्राणा भूतानि सम्प्रतिष्ठन्ति यत्र। तदक्षर वेदयते यस्तु सौम्य स सर्वज्ञः सर्वमेवाविवेशेति ॥ ११ ॥ प्रश्न० ४ ॥"

तत्तदिन्द्रियाणा लिङ्गाऽधिष्ठानत्वेऽपि तत्तच्छक्तिप्रादुर्भावाय नियतानि स्थानानि कृतानि सन्ति यथा—गन्धसाक्षात्कारे नासिकाऽप्रमित्यादि। एव स्वेतरेन्द्रियसाम्राज्य शासितु करणानि मनसश्चेतनावाहीनि स्रोतांसि सन्ति तद्द्वारा सर्वत्राऽव्याहत स्वशासनमवलम्बमानमास्ते। सञ्ज्ञावाहिस्रोतसाञ्च स्थान प्रधानतया सुषुम्णाकाण्ड,

मस्तिष्कञ्चाऽस्ति, परमेतत्सर्वं लिङ्गस्य स्थूलशरीरे पूर्वनिर्णीतहृत्कमले यदा स्थिति र्भवति तदैव निष्पद्यते। यदा त्वस्य मस्तिष्के गमनमास्ते यथा योगिषु सर्पविशेषदष्टेषु च तदा चेतनाऽभावो भवति। यदा च मस्तिष्कस्यैव चेतनास्थानं स्वीक्रियेत तर्हि समाधिस्थिताना योगिनामपि सूचीव्यधादयोऽनुभूयेरन्, न तथाऽस्ति, अतः शास्त्रनिर्णीतहृदयस्थाने वर्तमाने लिङ्गे समस्तेन्द्रियाणा समस्ताऽवयवानाञ्च भवति यथाऽवस्थितो व्यापारः। एतदनपेक्ष्य पाश्चात्यज्ञानअज्ञातकल्पितमस्तिष्कै र्यदा केवल मस्तिष्कस्य किं वा ज्ञानतन्तूना चेतनाकर्तृत्व स्वीक्रियेत तर्हि मृतशरीरे चेतनाऽभावो दुःसाधः। तथा च—" प्राणाऽपानौ निमेषाद्या जीवन मनसो गतिः। इन्द्रियान्तरसञ्चारः प्रेरण धारणञ्च यत्॥ देशान्तरगतिः स्वप्ने पञ्चत्वग्रहणन्तथा। दृष्टस्य दक्षिणेनाऽक्ष्णा सव्येनाऽधगमस्तथा॥ इच्छा द्वेषः सुख दुःख प्रयत्नश्चेतना धृतिः। बुद्धिः स्मृतिरहङ्कारो लिङ्गानि परमात्मनः॥ यस्मात् समुपलभ्यन्ते लिङ्गान्येतानि जीवतः। न मृतस्यात्मलिङ्गानि तस्मादाहु र्महर्षयः॥ शरीरं हि गते तस्मिञ्छून्यागारमचेतनम्। पञ्चभूताऽवशेषत्वात् पञ्चत्व गतमुच्यते॥ च. शा. १।७०–७४॥" एतत्सर्वमभिप्रेत्य धन्वन्तरिणा मस्तिष्कादीना चेतनास्थानत्वमस्वीकृत्य—" हृदय चेतनास्थानमुक्त सुश्रुत देहिनाम्। तमोऽभिभूते तस्मिस्तु निद्रा विशति देहिनाम्" इति सम्यगुक्तम्। इन्द्रियशक्तिप्रकाशाऽधिष्ठानाना केन्द्रत्वाच्छिरस उत्तमाङ्गत्वमभिहितं तदपि युक्तमेव, यथोक्त—प्राणाः प्राणभृता यत्र श्रिताः सर्वेन्द्रियाणि च। यदुत्तमाङ्गमङ्गाना शिरस्तदभिधीयते॥ च. सू. १७।१२" परन्तु नैतावता शिरसश्चेतनाऽधिष्ठानत्व सिद्ध्यति किन्तु तद्विशेषणं हृदयस्यैव शोभत इत्यलमतिविस्तरेण।

## अथ क्लोमविवरणम् (सं० ६८)

इन्द्रः सुत्रामा हृदयेन सत्य पुरोडाशेन सविता जजान।
यकृत्क्लोमान वरुणो भिषज्यन्मतस्ने वायव्यै र्न मिनाति पित्तम्॥ वा. स. १९।८५

सुष्ठु त्रायते रक्षति सुत्रामा इन्द्रः पुरोडाशदेवता इन्द्रस्य हृदयेन हृदय जजान जनयति। सविता च पुरोडाशेनेन्द्रस्य सत्य जजान। वरुणो भिषज्यन् इन्द्रस्य चिकित्सा कुर्वन् सन् यकृत् कालखण्ड क्लोमान गलनाडिकाञ्च जजान। वायव्यैः सौमिकोर्ध्वपात्रैः मतस्ने पित्तञ्च न मिनाति निर्मिमीते सृजतीत्यर्थ.। सौमिकान्योर्ध्वपात्राणि वायव्यसञ्ज्ञानि इति। (म० भा०) अत्र मन्त्रे यकृत्क्लोममतस्नापित्ताना निर्मापकत्वेन वरुणो निर्दिष्ट। अन्यत्राऽपि द्रवप्रधानानां द्रवाणाञ्च वरुण एवाऽधिपतित्वेन निर्दिश्यते। यथा—" वरुणोऽपामधिपतिः स माऽवतु। अ. ५।२४।४" उपरिनिर्दिष्टा अवयवाः [यकृत्-क्लोम-मतस्ना-पित्तानि (अग्न्याशयः)] सन्ति द्रवप्रधाना द्रववाहकाश्च। अत्राऽपि क्लोम्नो यकृता सह पाठाद्यकृन्निबद्धत्वन्निश्चीयते। " इन्द्रस्य क्रोडोऽदित्यै पाजस्य दिशा जत्रवोऽदित्यै भसज्जीमूतान् हृदयौपशेनान्तरिक्ष पुरीतता नभ उदर्येण चक्रवाकौ मतस्नाभ्या दिव वृक्काभ्या गिरीन् प्लाशिभिरुपलान् प्लीहा वल्मीकान् क्लोमभि र्ग्लौभि र्गुल्मान् हिराभि. स्रवन्ती र्ह्रदान् कुक्षिभ्या समुद्रमुदरेण वैश्वानर भस्मना॥ वा स २५।८" इत्यत्र क्लोमभि र्ग्लौवा (चन्द्रमसा) तर्पणेन क्लोम्नो द्रवाऽऽधारत्व गोलत्व प्रवहद्द्रवत्वञ्च विज्ञापितम्। अस्य मन्त्रस्य भाष्ये तिलक क्लोमेत्यमरवाक्यप्रदर्शनेन शरीरस्थतिलकलक्ष्मवर्णत्वम्महीधरेण विज्ञाप्य क्लोमा उदर्यो जलाधार इति स्वसम्मति प्रख्यापिता। " हृदयस्य दक्षिणे यकृत्क्लोमा च, वामे प्लीहा फुप्फुसश्चेति वैद्या—इति क्षीरस्वामी" इत्यनेन क्षीरस्वामिमतप्रदर्शनेन स्वमत पोषितम्। " क्लोमा गलनाडीति कर्कः" इति वेदभाष्यकर्तुः कर्कस्य सम्मतिः प्रदर्शिता। अयञ्च कर्कः महीधरेण बहुमानपुरःसरं बहुत्र स्थाने उल्लेखितोऽतोऽयं महीधरात्प्राचीनः कण्वशाखीययजुस्संहिताभाष्यकर्ता बभूव पर **गलनाडीति** पाठो-

ऽशुद्धः प्रतिभाति । अस्मिन्नध्याये ( वा. स. २५ ) " वातं प्राणेनाऽपानेन नासिकामित्यारभ्य **जुम्बकाय स्वाहेति** नवममन्त्रपर्यन्तं तत्तद्देवतोद्देशेनाऽश्वाङ्गाना विभागः कृतोऽस्ति । तत्र कस्याऽप्यवयवस्य द्विरुक्ति र्नास्तीति रहस्यम् । अतएवाऽत्र सप्तममन्त्रे ( वा. स. २५।७ ) " शेपेन प्रजा " मित्यागतं पुनरष्टममन्त्रे " अदित्यै भसद् " इत्यत्र भसच्छब्देन पुनरागतमवयवं विमृश्य शतपथे शिश्नस्य त्रयो भागाः कल्पितास्तथाहि—" त्रीणि शिश्नानि । त एव त्रयोऽनुयाजा. स योऽय वर्षिष्ठोऽनुयाजस्तदिदं वर्षिष्ठमिव शिश्न त वा अनवानन्यजेदित्याहुस्तथो हास्यैतदमृध्र भवतीति श० ११।१।६ ॥ ३१ ॥ स वै सकृदवान्यात् । एक ह्येतस्य पर्वाऽय यदपर्वकक स्यात्प्रतृण्ण ( विच्छिन्न ) वैवतिष्ठेल्लम्बेत वा तस्मादेनदुच्चातिष्ठति पद्येत च तस्मात्सकृदवाऽन्यात् ३२" इत्यन्तेन ग्रन्थेन पुनरुक्तिदोषः प्रहृतः । प्रकृतेऽपि गलनाडिकायास्तदानीमधरकण्ठेनाऽपः शुष्ककण्ठेनेति द्वितीयमन्त्रे ( वा. स. २५।२ ) भागद्वये विभक्तत्वेन पुनस्तस्याः ( गलनाडिकायाः ) क्लोमशब्देन ग्रहणस्याऽयोग्यत्वात् । शुष्ककण्ठो ग्रीवापश्चाद्भागः अधरकण्ठश्चाऽऽमाशयोर्ध्वमार्गः ( अन्ननलिका ) श्वासनलिका च भवति । अत. केनाऽप्युपायेनगलनाडिकाया क्लोम्नो व्यवहारः सर्वथाऽसम्भवद्रूप. । अतोऽनुमीयते **गलन्नाडीस्थाने** अथवा गोलनाडीस्थाने लेखकप्रमादेन गल्नाडीत्यवशिष्टम् । अस्यैवाऽपभ्रंशतया **गॉलब्लैडर** ( Gall bladder ) इत्याङ्ग्लभाषाया गत प्रतीयते । तथा पाठे च प्रवहद्द्रवा नाडी अथवा गोलाऽऽकारा नाडीत्यर्थ. प्रतिपद्यते । अर्थद्वयमपि क्लोम्नि प्रत्यक्षमेवाऽस्ति । " समानवायो. प्रध्मानाद्रक्तादेहोष्मपाचितात् । किञ्चिदुच्छूनसञ्ज्ञस्तु जायते क्लोमसञ्ज्ञक' ॥ तत्तुल्यहेतुजे प्लीहयकृनी भिषजाम्मते " इति सर्वाङ्गसुन्दरग्रन्थाट्टोडरानन्दे उद्धरणम् । अत्र ( सर्वाङ्गसुन्दरे ) " समानवायोः प्रध्मानाद्रक्ताद्देहोष्मपाचिता-" दित्यनेन उच्छ्वसितत्वगोलाकारत्वयो र्निष्पन्नत्वेऽपि सन्देहवारणाय " किञ्चिदुच्छूनसञ्ज्ञस्तु जायते क्लोमसञ्ज्ञकः " इति स्पष्टीकृतम् । पुनरपि तत्रैव ( टोडरानन्दे ) " प्राणिना यकृतप्लीहो शोणितात्प्रभवौ मतौ । शोणितात्प्रभव फेनं तस्माज्जातो हि फुप्फुसः ॥ यस्तु शोणितजः किट्टस्तस्मात्क्लोम च जायते । मेद.शोणितसम्भूत कोष्ठे चान्त्र प्रजायते " इति **पाराशरः** । " यस्तु शोणितजः किट्टस्तस्मात्क्लोम च जायते " इति वाक्येन क्लोम्नः कृष्णवर्णत्वमपि स्पष्टतयाऽभिहितम् । तत्तुल्यहेतुजे प्लीहयकृती इत्यनेन समाऽऽगतेऽपि गोलत्वे विशेषतया गोलत्वप्रतिपादनाय किञ्चिदुच्छूनतया विशेषितम्, प्रध्मापितस्य वस्तुनो गोलत्व स्वभावसिद्ध भवति, अनेन ( विशेषणेन ) यदाऽस्मात् ( क्लोम्नःसकाशात् ) वायोरपगमो भवति तदोच्छूनता विनश्यति इति प्रत्यक्षसिद्धम् । नन्वेतद्वैचित्र्यं वस्तावपि दृश्यते कथन्न तस्य क्लोमत्वमिति चेन्न, श्रृङ्गिग्राहिकतान्यायेन तस्य ( वस्तेः ) स्वतन्त्रतया परिगणनात् । " क्लोमाउदर्यौ जलाधार" इति महीधरेण स्पष्टतया क्लोमस्वरूप वर्णितम् ।

" हृदयमेवेन्द्र. । यकृत्सविता । क्लोमा वारुणः " श. ब्रा. १२।९।१।१५ हृदयमेवाऽस्यैन्द्रः पुरोडाशः । यकृत्सावित्र. । क्लोमा वारुणो, मतस्ने एवाऽस्याऽश्वत्थञ्च पात्रमौदुम्बरञ्च । पित्त नैयग्रोधम् आन्त्राणि स्थाल्यः । गुदा उपशयानि श्येनपत्रे प्लीहा । आसन्दी नाभिः । कुम्भो वनिष्ठुः । प्लाशिः शतातृण्णा । तद्यत्सा बहुधा वितृण्णा भवति तस्मात्प्लाशि र्बहुधा विकृत्तो मुखं शत जिह्वा पवित्र चष्य पायुः वस्ति र्वालः । श. ब्रा. १२।९।१।३ अत्र हृदयस्येन्द्राऽभिन्नत्वेन निरूपणाद्यथा देवेषु इन्द्र' प्रधानस्तथा देहे हृदयमस्तीति प्रतिपादितम् । यद्यपि स्वस्वकार्याऽपेक्षया सर्वाण्यप्यङ्गानि प्रधानान्येव सन्ति तथापि तदधीनत्वाद्देहस्य जीवस्य मुख्यस्थानत्वाच्च तथा प्रतिपादितम् । यकृतस्सवितृभिन्नत्वेन वर्णनाद्यथा बाह्ये सर्वे पाकाः सवित्रधीनाः सन्ति तथा शारीराणा धातूना पाको यकृदधीन इति विज्ञापितम् । तद्वैकृत्ये रसादिधातुप्रादुर्भावस्याऽवरुद्धत्वात् ।

क्लोमा वारुण इत्यनेन क्लोम्नः सोमात्मकत्व दर्शितम्। "क्लोमभिर्ग्लौभि (वा. सं. २५।८) रित्यत्र स्पष्टतया चन्द्रसादृश्यदर्शनात् "सूर्याचन्द्रमसौ धाते" त्यादौ सूर्याचन्द्रमसो र्यथा परस्पर सम्बन्धो दृश्यते तथाऽत्रापि प्रतिपादितः। लोके यथा सूर्यस्य (सर्वतेजसामाधारस्य) सर्वपाकाऽसाधारणकारणत्वमस्ति तथाऽत्रापि यक्नस्तथात्वम्। लोके यथा चन्द्रस्य द्रवाऽऽधारत्वं सौम्यत्वमाप्यायकत्वन्तथाऽत्रापि क्लोम्नस्तथात्वम्, तत्स्रुतद्रवस्याऽऽहारे सम्मेलनादेव सम्यक् परिपाकात्। लोके चन्द्रस्य प्रकाशकत्वगुणादौ यथा सूर्यसापेक्षत्व तथाऽत्रापि क्लोम्नो यकृदधीनत्वम्।

"उदकवहे द्वे तयोर्मूल ताल्लु क्लोम च, तत्रविद्धे पिपासा सद्योमरणञ्च। सु. शा. ९।१२" "रक्तमेदःप्रसादाद्वृक्कौ, मासाऽसृक्कफमेदःप्रसादाद्वृषणौ, शोणितकफप्रसादज हृदयम्, यदाश्रयाहि धमन्यः प्राणवहाः, तस्याऽधो वामतः प्लीहा फुप्फुसश्च दक्षिणतो यकृत्क्लोम च सु. शा. ४।३१" "वृक्कयो र्यकृति प्लीह्नि हृदये क्लोम्नि वा तथा। तेपा लिङ्गानि जानीयाद्बाह्यविद्रधिलक्षणैः॥ सु. नि. ९।१८" डल्हणटीका—वृक्कौ मासपिण्डद्वय, एको वामपार्श्वस्थितः द्वितीयो दक्षिणपार्श्वस्थितः। यकृत्=कालखण्ड दक्षिणपार्श्वस्थम्। प्लीहा=उदरमध्ये वामपार्श्वस्थितः। हृदय=कमलमुकुलाकारमधोमुखम्। क्लोम=कालखण्डादधस्तात्स्थितम् दक्षिणपार्श्वस्थम् तिलकं प्रसिद्धम्। इति। "जलवाहिशिरामूल तृष्णाऽऽच्छादनक तिल" मिति टोडरानन्दे शारीरवर्णने हारिश्चन्द्रोद्धरण कृतमस्ति इदमेवोद्धरण भावप्रकाशे गर्भप्रकरणे कृतम्। सम्प्रति मुद्रितपुस्तके "तृष्णाऽऽच्छादनक तिल-" मित्यस्य स्थाने 'तृष्णाऽऽच्छादनकृन्मत-' मित्युपलभ्यते, तत्त्वपभ्रष्टतया सञ्जातमिति प्रतीयते, उद्धरणाऽन्ते क्लोमतिलकमिति स्वयमेव स्पष्टीकृतत्वात्। अन्यथा तिलकमिति कस्माल्लभ्येत—"अधस्तु दक्षिणे भागे हृदयात्क्लोम तिष्ठति। जलवाहिशिरामूल तृष्णाऽऽच्छादनकृन्मत—" मितिहि तत्रोद्धरणमतः स्पष्टं प्रतीयते यत्सम्प्रति मुद्रितपुस्तके पाठोऽपभ्रष्टोऽस्ति। इदमेव (जलवाहिसिरामूल तृष्णाऽऽच्छादनक तिलम् शा. ५।४४) उद्धरणं शार्ङ्गधरेणाऽप्युद्धृतम्, तस्य च टीकाया (दीपिकाया) माहाऽऽढमल्लः=तिलन्तु शोणितकिट्टप्रभव दक्षिणाऽऽश्रित यकृत्समीपे क्लोमसञ्ज्ञक भवति तच्च जलवाहिसिरामूल कथितम्, अतएव तृष्णाऽऽच्छादनक प्रतिपादितम्। तृष्णा=पिपासा तस्याश्छादन करोतीत्यर्थः॥ शा. १।५।४४॥

'क्लोम तिलकमेतत्तु वातरक्तज'मिति भावप्रकाशोक्तन्त्वश्रद्धेयम्, अत्र=वृद्धवाग्भटः—'रक्तादनिलसंशुक्तात्कालीयकसमुद्भवः' इति प्रमाणतयोपन्यस्तमुद्धरणमप्यस्थाने न्यस्तम् यतः क्षुद्ररोगे तिलकालकत्वेन प्रसिद्धस्य रोगस्य तद्वचनप्रतिपादकत्वात्। 'यस्तु शोणितजः किट्टस्तस्मात्क्लोम च जायते, इति पाराशरमहर्षिवाक्यविरोधाच्च। "वपा वसाऽवहनन नाभिः क्लोमा यकृत्प्लिहा" (याज्ञव० यतिधर्मे प्र. ४)—वपा=प्रसिद्धा, वसा=मासस्नेहः, नाभिः प्रसिद्धा, अवहननं=फुपफुसः, प्लीहा=आयुर्वेदप्रसिद्धः तौ च मांसपिण्डाकारौ स्तः सव्यकुक्षिगतौ। यकृत्=कालिका, क्लोमा=मासपिण्डः, इति मिताक्षराटीका॥ "श्वासो यकृति हिक्का च पिपासा क्लोमजेऽधिका॥ सु. नि. ९।२२" नन्वत्र (क्लोमजे विद्रधौ) तृष्णाऽऽधिक्यं प्रतिपादित तत्र कोऽभिप्राय इति चेत्तदुच्यते=इद शरीर तावदन्नपानमूलमस्ति, अन्नपानयोः पाञ्चभौतिकत्वेऽपि जलीयभागोऽधिकोऽस्ति, अतएव बुभुक्षायामन्नाऽप्राप्त्याऽपि कतिपयदिनानि जन्तुर्जीवति परमुत्कटतृष्णाया जाताया जलाऽलाभे तत्क्षणमेव मृत्युर्भवति, अतएव परमकारुणिकेन परमेश्वरेण आमाशयपर्यन्तभागस्य प्रतिक्षण तरलत्वसिद्धये मुखे लालाग्रन्थयो निर्मिताः, आमाशयादधस्तनभागस्य तत्सिद्धये भुक्तस्य विशिष्टरसोत्पादनाय च क्लोमाऽन्याशयो निर्माण कृतमस्ति। अनेनैव क्रियाकौशलेन सप्तधातुपरिणामोऽनायासेन प्रतिक्षण निष्पद्यमान आस्ते। यदा

तु रक्तस्थद्रवस्य न्यूनता जायते, अथवा रसवहस्रोतसा येनकेनाऽपि कारणेनाऽवरोधो भवति तदाऽऽमाशयोर्ध्वाऽधरमार्गौ विशुष्कौ भवतस्तदा पिपासाया अतितरा वेगोऽभ्युदेति । शरीरे यस्ययस्य वस्तुनो न्यूनता भवति तत्तद्ग्रहणेच्छा जायत इति स्वाभाविकी स्थितिः । अतएव शरीरस्य च्छिन्नभिन्नाऽवस्थाया यदा रक्तनिर्गमो भवति तदा सहसा पिपासोद्गमो भवति तदवस्थाजनितमूर्च्छाये पानीयदाने एवाऽधिकतया जनाः प्रयतन्ते । क्लोमस्थाने विद्रधौ सति तदीयद्रववाहकशक्तेरवरोधात्पिपासाया आधिक्य भवति यथा—मद्यस्याग्नेयवायव्यौ गुणावम्बुवहानि तु । स्रोतांसि शोषयेयाता तेन तृष्णा प्रजायते । सु. उ. ४७।५० तथाच—' श्वासो यकृति तृष्णा च पिपासा क्लोमजेऽधिका, इति सु. नि. ९।२२, ' श्वासो यकृति हिक्का च क्लोम्नि पेपीयते पयः ' भा. प्र. विद्रध्यधिकारे, माधवनि० मधुकोशे—क्लोम वृक्कादूर्ध्वं पिपासास्थानमिति व्याख्यातम् । " ऊर्ध्वमग्न्याशयो नाभेर्वामभागे व्यवस्थितः । तस्योपरि तिलं ज्ञेय तदधः पवनाऽऽशयः ॥ शार्ङ्ग० १।५।८ " अत्र तिलमित्यनेन क्लोम कथित तत्पिपासास्थानमित्यभिप्रायः इति दीपिकायामाढमल्लेन व्याख्यातम्=तच्च मधुकोशदर्शनसंस्कारमूलकं प्रतिभाति । ऋषिवाक्येषु कुत्राऽपि पिपासास्थानत्वेन कथन नास्ति अतस्तथात्वकथन मधुकोशकारस्याऽविचारजन्यमेवाऽस्ति । पातुमिच्छेति विग्रहे ' पा पाने ' इति धातोः ' सनि ' पिपासेति रूपम् निष्पद्यते, पिपासा च आत्मनिष्ठो गुणः " प्राणाऽपानौ निमेषाद्या जीवन मनसो गतिः । इन्द्रियान्तरसञ्चारः प्रेरण धारण च यत् ॥ देशान्तरगतिः स्वप्ने पञ्चत्वग्रहणन्तथा । दृष्टस्य दक्षिणेनाऽक्ष्णा सव्येनाऽवगमस्तथा ॥ इच्छा द्वेषः सुखं दुःखं प्रयत्नश्चेतना धृतिः । बुद्धिः स्मृतिरहङ्कारो लिङ्गानि परमात्मनः ॥ यस्मात्समुपलभ्यन्ते लिङ्गान्येतानि जीवतः । न मृतस्याऽऽत्मलिङ्गानि तस्मादाहुर्महर्षय ॥ च. शा. १।६८—७३ " आत्मगुणाना स्थानञ्चौपचारिकं लिङ्गशरीरमेव पर तेषामभिव्यक्तिः स्थूलशरीरमन्तरा न सम्भवत्यतः स्थूलमपि परम्परया तत्स्थानत्वेन कथितु युज्यत एव । वस्तुमात्राऽभिलापे इच्छार्थस्य पर्यवसन्नत्वेऽपि सा विविधविशेषणैर्विच्छिन्ना भवति, तदभिव्यञ्जकानि चेन्द्रियाणि भवन्ति, प्रकृते ( पिपासास्थले ) रसग्रहणेच्छा रसनेन्द्रियमभिज्ञापयति । अतः स्थूलबुद्ध्या पिपासास्थानत्व रसनेन्द्रियस्य कथितु युज्यते, तालुशोषात्तस्याऽपि यथाकथञ्चित्पिपासास्थानत्व कथितुं पार्येत परन्तु क्लोम्नः पिपासास्थानत्व कथितुं न केनाऽपि प्रकारेण शक्यते । अतो मधुकोशकारस्य क्लोम्नः पिपासास्थानत्वकथने सर्वथा भ्रम एव । तृष्णाऽऽच्छादनकमिति विशेषणन्तु उचितमेव, यथा प्रतिक्षण द्रवदानेन आमाशयोर्ध्वभागे मुखस्थलालाग्रन्थीना पिपासाऽऽच्छादकत्व तथा आमाशयाऽऽधरमार्गे क्लोम्नस्तदाऽऽच्छादकत्वमस्त्येवेति दिक् । ये पुनः पाश्चात्यसिद्धान्ते ' पैंक्रियस' ( Pancreas ) शब्दवाच्य क्लोमानं वदन्ति तदपि भ्रममूलकमेव बोद्धव्यम् " ऊर्ध्वमग्न्याशयो नाभे र्वामभागे व्यवस्थितः । तस्योपरि तिलं ज्ञेय" मिति हरिश्चन्द्रेण नाभेरूर्ध्वं वामभागे अग्न्याशयमभिधाय तदुपरि क्लोम्नस्तिलमिति सञ्ज्ञाकरणात् । सुश्रुतेन तु—अत ऊर्ध्वं श्लेष्मस्थानान्यनुव्याख्यास्यामः तत्र आमाशयः पित्ताशयस्य उपरिष्टात्तत्प्रत्यनीकत्वादूर्ध्वगतित्वात्तेजसः चन्द्रइवाऽऽदित्यस्य, स चतुर्विधस्याऽऽहारस्याऽऽधारः । स च तत्र औदकै र्गुणैराहारः प्रक्लिन्नो भिन्नसङ्घातः सुखजरश्च भवति सु. सू. २१।१२ इत्यादिना पैंक्रियसस्य पित्ताशय इति नाम स्थापितम् । उचितश्चैतत् । " इन्द्रः सुत्रामा हृदयेन सत्य पुरोडाशेन सविता जजान । यकृत् क्लोमान वरुणोभिषज्यन्मतस्ने वायव्यै र्न मिनाति पित्तम् ॥ यजु० १९।८५ " इन्द्रो हृदयेन=प्रत्यासत्या स्वेन हृदयेन जजान=अर्थात् तन्त्रैकशेषादिना यज्ञस्य हृदय जजान जनयति । अर्थोपहितः शब्दो देवता शब्दोपहितोऽर्थो वा देवता इति मीमासकसिद्धान्तात्सुत्रामा=देवताविशेषः । पुरोडाशेन सत्य=सत्याऽसत्यग्राहकं यदङ्ग तज्जजान तच्चाऽङ्गं शिरोस्ति—"ब्रह्माऽस्य शीर्ष बृहदस्य पृष्ठं वामदेव्यमुदरमोदनस्य । छन्दांसि

पक्षौ मुखमस्य सत्यं विष्टारी जातस्तपसोऽधियज्ञः । अ. ४।३४।१ " इत्यादौ शीर्ष्णो ब्रह्मत्वेन प्रतिपादनाद्ब्रह्मणश्च सत्यस्वरूपत्वादिन्द्रियस्थानत्वाच्च । सविता यकृज्जजान, वरुणो भिषज्यन् क्लोमानं मतस्ने च जजान, वायव्यै वीयव्यौर्द्धसौमिकपात्रैः पित्त जजान, अत्र कर्तुरदर्शनाद् वायव्यैरिति लिङ्गेन वायुरिति परामृश्यते । स पित्तम्—पित्तमस्मिन्नस्तीति अर्शआद्यचि पित्तमिति नाम, स्फोटे तु पित्ताशय इति समायाति । पित्ताशयं जजान अत्र वायव्यौर्द्धपात्रे. पित्तस्य ( पित्ताशयस्य ) जायमानत्वप्रतिपादनात्सौमिकोर्द्धपात्राणा पैक्रियसस्यैव सादृश्यात्तस्यैव वेदे पित्ताशयत्व प्रतिपादितम् । **शतपथब्राह्मणे** च 'पित्त नैयग्रोधम्' श. ब्रा. १२।९।१।३।इति न्यग्रोधेन सादृश्यदानादामाशयादधस्तात्तिर्यग्भूत्वा समन्तत आमाशयाश्रितत्वमुक्तम् । न्यग्रोधो ह्यन्यवृक्षसमाश्रितत्वेन चेदुत्पद्यते तर्हि पैक्रियसस्य प्रायः सदृशाऽऽकृतिर्भवति । अतएव सुश्रुते तस्यैव पित्ताशयत्वेनाभिधानमुक्तम् । क्लोम्नस्तु ( Gall bladder ) अत्यन्तकोमलत्वाच्छीघ्रक्लान्तिभाक्त्वाच्च क्लोम इत्येव नाम स्थापितम् । " श्वासो यकृति तृष्णा च पिपासा क्लोमजेऽधिका सु. नि. ९।२२ " अत्र यकृत्क्लोमजविद्रध्योः समानमेव लक्षणं प्रदर्शितमाधिक्येन क्लोमजाया पिपासाधिक्यमुक्तम् । यद्यपि यकृो विद्रधौ क्लोम्नो रसक्षरणमवरुध्यते तथैव क्लोमन्यपि भवति रसाऽऽगमनस्य यकृदधीनत्वात्, तथापि यदा यकृति विद्रधिर्भवति तदा क्लोमसम्बद्धाऽग्न्याशयस्य स्वस्थत्वात्तदीयद्रवस्य भुक्तान्ने प्रवेशात्पिपासायास्तादृश्युत्कटता न भवति, क्लोम्नि विद्रधिग्रस्तत्वे तु क्लोमनाड्यामपि शोथाद्युपद्रवसम्भावनायामग्न्याशयोत्थद्रवस्याऽप्यवरोधात्पिपासाऽऽधिक्यमुपतिष्ठत इति स्वाभाविकी स्थितिरितिकृत्वोक्त पिपासा क्लोमजेऽधिका इति।

" क्लोमजाया पिपासामुखशोषगलग्रहाः" चरक सू. १७।१०० इत्यत्र गलग्रहा इति केनाऽभिप्रायेण दत्तमिति न ज्ञायते । कदाचिच्चरकस्य गलनाडिकैव क्लोमत्वेनाऽभिप्रेता भवेत्तथात्वे च गलग्रह उचितएवेति तु न वाच्यम् " पित्ताऽनिलौ प्रवृद्धौ सौम्यान्धातूंश्च शोषयतः । रसवाहिनीश्च धमनी जिह्वामूलगलतालुकक्लोम्नः ॥ सशोष्य नृणा देहे कुरुतस्तृष्णा महाबलावेतौ । च. चि. २२।६ इत्यत्र चरकेणैव गलात्क्लोम्नः पृथङ्निर्दिष्टत्वात् । किञ्च " स्नेहपीतस्य मन्दाग्नेः क्षीणस्याऽतिकृशस्य वा । अत्यम्बुपानान्नष्टेऽग्नौ मारुतः क्लोम्नि सस्थितः ॥ स्रोतस्सु रुद्धमार्गेषु कफश्चोदकमूर्च्छितः । वर्धयेता तदेवाऽम्बु स्वस्थानादुदरायतौ ॥ च० चि० १३।४५–४६ " अनया चरकोक्त्या मूर्खोऽपि गलनाड्याः क्लोमत्व कल्पयितु स्वप्नेऽपि न प्रयतेत, किम्पुनः सहृदया आयुर्वेदपारावारीणाः । " जिह्वाताल्लुगलक्लोमशोषेमूर्ध्नि च दापयेत्" सु० उ० ३९।१८२ इत्यत्र सुश्रुतेनाऽपि गलाद्भिन्न क्लोम प्रतिपादितम् ।

" पञ्चदशकोष्ठाऽङ्गानि—तद्यथा—नाभिश्च, हृदयञ्च, क्लोम च, यकृच्च, प्लीहा च, वृक्कौ च, वस्तिश्च, पुरीषाधारश्च, आमाशयश्च, पक्वाशयश्च, उत्तरगुदञ्च, अधरगुदञ्च, क्षुद्रान्त्रञ्च, स्थूलान्त्रञ्च, वपावहनञ्चेति चरक. शा० ७।१३ " " पञ्चदश कोष्ठाङ्गानि तद्यथा—नाभिश्च, हृदयञ्च, क्लोम च, यकृच्च, प्लीहा च० भेल सं. शा. अ. ७" " मातृजश्चाऽय गर्भो नहि मातुर्विना गर्भोत्पत्तिः स्यान्न च जन्म जरायुजानाम्, यानि खल्वस्य गर्भस्य मातृजानि यानि चाऽस्य मातृतः सम्भवतः सम्भवन्ति तान्यनुव्याख्यास्यामः । तद्यथा—त्वक् च लोहितञ्च मासञ्च मेदश्च नाभिश्च हृदयञ्च क्लोम च यकृच्च प्लीहा च वृक्कौ च वस्तिश्च पुरीषाधान चाऽऽमाशयश्च पक्वाऽऽशयश्चोत्तरगुद चाधरगुदञ्च क्षुद्रान्त्रञ्च स्थूलान्त्रञ्च वपा च वपावहनञ्चेति मातृजानि । च. शा. ३।१३ " " उदकवहाना स्रोतसा तालु मूल क्लोम च. वि. ५।८ " इत्यादिवाक्यपर्यालोचनेन गलनाड्या न केनाऽप्युपायेन क्लोमत्व साधयितु सहृदयः ( विद्वान् ) प्रयतेत, तस्मात्कर्कीयवाक्य ( क्लोमा गलनाडी इति

वाक्यं ) मश्रद्धेयमेव तद्वाक्ये दृढभक्तिश्चेदस्मदुक्तयुक्त्या कर्को दोषादूरीकरणीय इति। ये पुनः प्ल्यूरा प्रभृतीना क्लोमत्वं प्रतिपादयन्ति तेषामुक्तयस्तु खपुष्पायिता एव सन्तीत्यलमतिविस्तरेण।

( स. ७० ) **तनिमा** (यकृत्)="हृदय वै पशुः। तदस्यात्मन एवाऽग्रेऽवद्यति तस्माद्यदि किञ्चिदवदानं हीयेत न तदाद्रियेत सर्वस्य हैवास्य तत्पशोरवत्तं भवति यद्धृदयस्याऽग्रेऽवद्यति तस्मान्मध्यतः सतो हृदयस्यैवाऽग्रेऽवद्यत्यथ यथापूर्वम्। अथ जिह्वायै। सा हीय पूर्वार्धात्प्रतिष्ठत्यथ वक्षसस्तद्धि ततोऽथैकचरस्य दोष्णोऽथ पार्श्वयोरथ तनिम्नोऽथ वृक्कयो.॥ शत० ब्रा० ३।८।३।१६-१७" इत्यत्र पार्श्ववृक्कयोर्मध्ये आगमनाद्धृदयवत्प्रधानाऽङ्गत्वाच्च तनिमेति यकृत एव नाम प्रतिभाति।

( सं. ७२ ) **पाजस्यम्**=पाज इति पशूनामर्द्धचर्वितत्तृणादिपिण्डे वर्तते। उदरपूर्त्यनन्तरं सुखमुपविश्य यमाकृष्य पुनश्चर्वन्ति, लौकिकसंस्कृते रोमन्थपदवाच्यम्। प्राकृते तु पागुर, पगुरी इति नाम्ना आबालवृद्धप्रसिद्धम्। तद्धि बलस्य कारणत्वान्निरुक्ते बलनामसु परिगणितम्। तस्मै हितम् पाजस्य शरीरावयवाद्यदिति (पा. ५।१।६ ) यत्प्रत्यये पाजस्यमामाशयः। "श्येनः क्रोडोऽन्तरिक्ष पाजस्यं बृहस्पतिः ककुद् बृहतीः कीकसाः॥ अथर्व. ९।१२।५॥" शरीराऽवयवेष्वामाशयेऽतितरामवकाशत्वादन्तरिक्षेण साकं सादृश्य दत्तम्। अत एव कृताऽजाऽङ्गविभागविषये "प्रतीच्यां दिशि भसदमस्य धेह्युत्तरस्या दिश्युत्तर धेहि पार्श्वम्। ऊर्ध्वाया दिश्यजस्याऽनूकं धेहि दिशि ध्रुवाया धेहि पाजस्यमन्तरिक्षे मध्यतो मध्यमस्य॥ अथर्व. ४।१४।८" **अस्य**=विशस्तस्याऽजस्य प्रतीच्या दिशि भसदं=कटिप्रदेशं धेहि, उत्तरस्या दिशि उत्तर पार्श्व=पर्शुसमूह धेहि, ऊर्ध्वाया दिश्यजस्याऽनूकं पृष्ठवंश धेहि, ध्रुवायामधस्ताद्दिश्यस्य पाजस्य धेहि। मध्यतोऽन्तरिक्षेऽस्यमध्यमर्थाद्भूमिस्पर्शरहितं यथातथा धेहि स्थापय। अत्राऽङ्गविभागत्वेन पाजस्यमित्यामाशयस्यैव नाम। तत्र चाजीर्णभोजनस्य सत्त्वात्पार्थिवभागस्य साक्षाद्वर्तमानत्वाद्भूम्या निधानमुक्तम्। अपरिपक्वभोजने जलपृथिव्योरेव भागस्याऽधिकत्वात्। जलादपिपृथिवीभागस्य तृणादेरधिकत्वेन वर्तमानत्वात्तस्य भूम्या निधानमुचितमेव।

"उषा वाऽश्वस्य मेध्यस्य शिरः। सूर्यश्चक्षु र्वात. प्राणो व्यात्तमग्नि र्वैश्वानरः संवत्सर आत्माऽश्वस्य मेध्यस्य द्यौष्पृष्टमन्तरिक्षमुदर पृथिवी पाजस्य दिशः पार्श्वे अवान्तरदिश. पर्शव ऋतवोऽङ्गानि मासाश्चार्धमासाश्च पर्वाण्यहोरात्राणि प्रतिष्ठा नक्षत्राण्यस्थीनि नभो मासान्यूवध्य सिकता· सिन्धवो गुदा यकृच्च क्लोमानश्च पर्वता ओषधयश्च वनस्पतयश्च लोमान्युद्यन् पूर्वार्धो निम्लोचन् जघनार्धो यद्विजृम्भते तद्विद्योतते यद्विधूनुते तत्स्तनयति यन्मेहति तद्वर्षति वागेवाऽस्य वागहर्वा अश्व पुरस्तान्महिमान्वजायत तस्य पूर्वे समुद्रे योनी रात्रिरेन पश्चान्महिमान्वजायत तस्यापरे समुद्रे योनिरतौ वाऽश्व महिमानावभितः सम्बभूवतु र्हयो भूत्वा देवानवहद्वाजी गन्धर्वानर्वासुरानश्वो मनुष्यान्त्समुद्र एवाऽस्य बन्धुः समुद्रो योनिः॥ श. ब्रा. १०।६।४" अत्र च पाजस्यस्य पृथिव्याः सादृश्यमुक्तम्। यकृत्क्लोम्नाञ्च पर्वतैः सादृश्यमुक्तमुत्थितिमत्त्वाद्रचनावैचित्र्याच्च। एव यत्रयत्राऽधिकसादृश्य लभ्यते तत्रतत्र तत्तुल्यता प्रदर्श्यते इति सूक्ष्मतया विवेचनीयम्।

यत्तु सायणेन=पाज इति बलनाम। तत्र हित उदरगत ऊवध्यमिति व्याख्यात तदसमीचीनम्, ऊवध्यस्य शरीराऽवयवत्वाऽभावात्। परिपक्वविष्ठादीना निधानस्याऽकथनाच्च। सायणमताऽनुगामिनाऽपि महीधरेण "इन्द्रस्य क्रोडोऽदित्यै पाजस्य" वा. स. २५।८ इति मन्त्रे पाजसे बलाय हितं पाजस्य ऊवध्यमिति सायणकृतार्थाऽवहेलनया बलकरमङ्ग निर्दिष्टम्, पर तत्कतमदिति तेन नाऽबोधि अतः स्पष्टतया न निर्दिष्टम्। "प्रजापतिश्च परमेष्ठी च शृङ्गे इन्द्रः शिरो अग्निर्ललाट यमः कृकाटम्" अथर्व. ९।१२।१ इत्यारम्य "अभ्रं

पीवो मज्जा निधनम्" अ. ९।१२।१८ एतत्पर्यन्तं सर्वाण्यङ्गानि प्रत्यङ्गानि च वृषभस्य वर्णितानि। तत्राऽऽमाशयस्य स्पष्टतया कुत्राऽपि नाम नाऽगतमस्ति किन्तु "अन्तरिक्ष पाजस्यमित्यनेनैव तदुपादानमस्ति। एवं सर्वत्र शारीरविभागे पाजस्यनाम्नैवाऽऽमाशयो गृह्यते परन्तु वहोः कालाच्छारीरविभागस्य नष्टत्वात्सायणसमयेऽपि तस्य साक्षाज्ज्ञानाऽभावात् कुशकाशाऽवलम्बनन्यायेन यत्रतत्र यत्किञ्चित् कथयित्वा भाष्यं समापितमस्ति। न च वाच्यं तत्राऽपि पाजस्यशब्देन ऊवध्यभक्ता वयं ऊवध्यमेव ग्रहीष्याम इति। रक्षासि लोहितमितरजना ऊवध्यम्" अ. ९।१२।१७ इति सप्तदशमन्त्रे स्पष्टतया ऊवध्यस्य कथनादस्य हठस्य निर्मूलत्वादित्यलमतिपल्लवितेन।

(सं. ७३) **हलीक्ष्णम्**—हलस्येव ईक्षणं दर्शन यस्येति विग्रहे हलसादृश्यमग्न्याशये उपान्त्रे चेत्ये तत्स्थानद्वये उपलभ्यते, परन्तु 'आन्त्रेभ्यः' इत्यत्र वहुवचनादुपान्त्रस्य चान्त्रैकदेशत्वादान्त्रशब्देनैव तद्ग्रहणान्नोपान्त्रस्य ग्रहणमुचितम्। तथाहि—"हृदयात्ते परिक्लोम्नो हलीक्ष्णात्पार्श्वाभ्याम्। यक्ष्म मतस्नाभ्या प्लीह्नो यक्नस्ते विवृहामसि॥ आन्त्रेभ्यस्ते गुदाभ्यो० अथर्व० २।३३।३–४" इत्यत्र पूर्वापरसम्बन्धाऽनुसन्धानेन क्लोममतस्नयोर्मध्ये हलीक्ष्णस्याऽवस्थान प्रदर्शितम्। आन्त्राणाञ्च तदनन्तर कथनान्नोपान्त्रस्याऽत्र ग्रहणमुचित किन्त्वग्न्याशयस्यैव नामेति विद्वद्भिर्विभावनीयम्॥

## वहुवचनाऽन्त्रविवरणम् (स. ७४)

"यदान्त्रेषु गवीन्यो र्यद्वस्तावधिसंश्रितम्। एवा ते मूत्र मुच्यता वहिर्बालिति सर्वकम्॥ अ. १।३।६" इत्यत्राऽन्त्रगवीनीवस्तिष्ववरुद्धमूत्रस्य वेगेन वहिर्निस्सरणाय प्रार्थना कृताऽस्ति, सा च गवीनीवस्त्योर्विषये मूत्रस्थानत्वादुचितैवास्ति। परन्त्वान्त्रेषु त्राऽवरोधः कथ सम्भवतीति सशये "सूक्ष्मनिर्माण तु वृक्कस्यातिविचित्रम्। वृक्कपरिधिस्थ हि वहिर्वस्तु मूत्रनिर्मापकैः सूक्ष्मै र्वर्तुलप्रायै र्यन्त्रैकैरेव भूम्ना निर्मितम्। तेषा **मूत्रोत्सिका** इति सञ्ज्ञा, उत्सवद् अस्रज वारिप्रभवत्वात्। नवतिश्च तासामङ्गुलमात्रे प्रदेशे प्रायः। ता ऋजुकाख्याना सूक्ष्मधमनीनामन्तरालेषु तत्सूक्ष्मतमशाखालम्बिताः फलगुच्छवद् अवतिष्ठन्ते। एकैकाश्च उत्सिका प्रविशति एकैका सूक्ष्मा धमनी गुच्छमुखी। ता हि वर्तुलप्राये गुच्छे परिणता प्रावृणोति विचित्रनिर्म्माणः पुटकाकारः कलाविशेषः। पुटकान्तश्च शनैः शनैः क्षरति अतिसूक्ष्मैः कणैः शोणितस्य त्याज्यभाग आप्यो मूत्र नाम। तद् उत्सिकानिर्गतेन सूक्ष्मेण मूत्रवहस्रोतसा वृक्कान्तर्नीयते। उत्सिकाभ्यो निर्गतानि च मूत्रस्रोतासि क्षुद्रान्त्रवत् कुण्डलीभूय केन्द्राऽभिमुख प्रवर्तन्ते। प्रतिस्रोतश्च दृश्याश्चत्वारो भागाः—(१) आद्यकुण्डलिकाभागः (२) पाशभागः (३) अन्त्यकुण्डलिकाभागः (४) ऋजुभागश्चेति। परस्परपार्श्वस्थानि च तानि ऋजुस्रोतासि वृक्कशिखरिकाणा निर्म्माणाय कल्पन्ते। तेषाञ्च मूत्रस्रोतसामान्त्रवत् प्रवर्तमानाद् आन्त्राणीति सञ्ज्ञा प्राचाम् (प्र. शा. भा. २ पृ. २३२)" इत्यन्तेन सन्दर्भेण वृक्कपरिध्यास्तृतमूत्रोत्सिकासु लाक्षणिकमान्त्रत्व व्याख्याय महामहोपाध्याय**गणनाथसेनै** र्यथाकथञ्चित्समाहितम्। तच्चाऽऽपाततस्सुसाधु प्रतिभाति, परन्तु वैदिकशारीरविभागेषु मूत्रोत्सिकाना कुत्राचिदपि अन्त्रशब्देनाऽऽन्त्रशब्देन वा अनागमनाद्गवीनीशब्दस्योपलक्षणत्वेन वृक्कसहितयो र्गवीन्योरत्र ग्रहणमुचितमेतच्च "वि ते भिनद्मि मेहन" इतिमन्त्रव्याख्याने संस्कृतोपोद्घाते चतुर्थपञ्चमपृष्ठयोरस्माभिर्व्याख्यातमस्ति। वैदिकशारीरे यज्ञादौ पशुङ्गाविभागे यत्र स्वसन्निहितासऽवयवस्याऽनुक्ति र्दृश्यते तत्र सर्वत्राऽयमेव पन्थाः समाश्रीयते। अन्त्रवत्सन्निवेशाच्चेन्मूत्रोत्सिकाना ग्रहणमान्त्रशब्देन क्रियेत तर्हि शुक्रवाहिस्रोतसा कथमान्त्रशब्देन ग्रहणनभवति मूत्रोत्सिकाऽपेक्षया तत्राऽधिकसादृश्यात् तस्माद्गवीनीसन्निहितत्वाद्गवीनीशब्देनैव वृक्कद्वयग्रहणस्य सिद्धत्वेन यत्नान्तराऽऽलम्बनस्याऽनावश्यत्वात्। नन्वेव तर्हि

आन्त्राणीत्यनेन किङ्गृहीतव्यमिति संशये यानि तन्नाम्ना आबालवृद्ध लोके वेदेच प्रसिद्धानि तान्येव ग्राह्याणीति ब्रूमः तत्र च अन्त्राण्येवेत्यर्थे स्वार्थे अन्त्राणामिमानि स्थानानीत्यर्थे वा अण् प्रत्ययः। न चैवं तर्हि तत्र मूत्रसम्भरणं कथ युज्यत इति वक्तव्यम् ? आन्त्रविषये मूत्रशब्देन मूत्रसमवायिकारणस्य शरीरपोषणाऽनुपयुक्तक्षारप्रधानद्रवस्याऽभिप्रेतत्वात् । " आहारस्य रसः सारः सारहीनो मलद्रवः । सिराभिस्तज्जल नीत वस्तौ मूत्रत्वमाप्नुयात् ॥ शार्ङ्ग० १।६।७" स्वास्थ्याऽऽपन्नाऽऽमाशयादिसर्वशरीरयन्त्रस्य प्रदीप्ताऽग्नेश्च पुरुषस्य मात्रया काले सात्म्यञ्च भुक्तमामाशयाद्यग्निसाहाय्येन परिपच्यमानं सारशब्दवाच्य रसरूपत्वं भजति । स च रसो यकृत्प्लीहानौ प्राप्य रञ्जितस्सन् हृदयं प्राप्नोति, ततश्च फुफ्फुसं प्राप्य विशुद्धता भजन् हृदय, हृदयात्समस्तशरीर गच्छन्नहरहश्शरीरं धारयति । अस्मिंश्च पोषणाऽनुपयुक्तभागा. प्रतिस्थलाद्वाष्पद्वारेण प्रस्वेदरूपतां प्राप्य बहिर्निःसरन्ति । अवशिष्टश्च क्षारद्रवो रक्तेन सह परिभ्रमन् वृक्कौ प्राप्नोति, तत्स्थाभि र्मूत्रोत्सिकाभी रक्तात्पृथक्कृत्य सूक्ष्मस्रोतोभिर्वृक्कयोरन्तर्नीयमानः गवीनीमार्गाभ्या वस्ति प्राप्तः मूत्रत्वसञ्ज्ञा लभमानो मूत्रपथाद्यथासमय बहिर्निःसार्यते, सेय शैलीस्वस्थशरीराणाम् । यदाऽऽमपक्वाशयनिबद्धरसाऽऽहारिण्यो यकृदादिशैथिल्येन प्रतिरुद्धमार्गाः सन्त्यःस्वाऽऽकृष्टरसमूर्ध्वमनयनसमर्था भवन्ति तदा प्रतिरुद्धः स आमरसः प्रतीपमार्गमागत्याऽऽन्त्रेषु शनैः सञ्चीयते, तस्य दूरीकरणार्थं वेदे वरुणः स्तुतोऽस्ति तथाहि—

अप्सु ते राजन् वरुण गृहो हिरण्ययो मिथः । ततो धृतव्रतो राजा सर्वा धामानि मुञ्चतु अथर्व. ७।८८।१॥

हे राजन् वरुण अप्सूदकेषु मध्ये ते तव यतो मिथः=अनन्यसाधारणः परेषामनभिगम्यो वा हिरण्ययः=हिरणमयः सुवर्णमयो गृहः स्थानमस्ति । ततस्तस्मात्कारणाद्धृतव्रतः=व्रतमिति कर्मनाम नियतकर्मा सत्यकर्मा राजा वरुणः सर्वा=सर्वाणि धामानि स्थानानि अस्मदीयानि दुर्दैवात्सम्भृतजलस्थानानीतियावत् मुञ्चतु त्यजतु । धामानि त्रयाणि भवन्ति स्थानानि नामानि जन्मानीति हि यास्कः (नि. ९।२८)। जलोदरादयोरोगा हि वरुणकर्तृकाः, तस्य हि जलमध्ये निवासस्थानमस्ति । अतः स्वेन गृहीतानि अस्मदीयाऽवयवरूपाणि स्थानानि त्यक्त्वा स्वगृहे निवसत्वित्यर्थः ॥ १ ॥

धाम्नोधाम्नो राजन्यतो वरुण मुञ्च नः ।
यदापो अघ्न्या इति वरुणेति यदूचिम ततो वरुण मुञ्च नः ॥ अ. ७।८८।२॥

हे राजन् वरुण ! यतोऽस्मात् धाम्नो धाम्नः सर्वस्मात् रोगस्थानात् नः=अस्मान् मुञ्च मोचय । किञ्च हे वरुण इति यदूचिम यच्छापवाक्यमवोचाम यच्छापवाक्यवचनेन पापमार्जितं तस्मादपि मुञ्चेति सम्बन्धः । शापो हि प्रशस्तदेवतानामसङ्कीर्तनेन परेषामनर्थशसनम् । यद्वा सत्यसति वा विषये 'आपो वै सर्वा देवता' ( ऐ. ब्रा॰ २।१६ ) इति सर्वदेवात्मिकानामपाम् साक्षित्वेन प्रमाणीकरणम् । हे आपः यूयमस्मिन् सत्ये असत्ये वा विषये साक्षीभूता भवथ । हे आप युष्मभ्य शपामहे इदमित्थ इत्येवं विध प्रशस्तदेवतानामधेयपुरःसरं यद्वाक्य तेन पापमार्ज्यते । सत्येपि हि विषये शपथकरणेन धर्मस्यार्धं वैवस्वतो निकृन्तति किल, असत्ये किमु वक्तव्यम् । अतो देवतानामधेयकीर्तनरूपशपथकरणजनितपापादस्मान् मोचयेत्यर्थः । अत्र ऊचिमेति पदेन वचनमात्र न विवक्षितम् किन्तु शपथरूपमेव । अत एव तैत्तिरीये " यदापो अघ्निया इति वरुणेति शपामहे " ( २–६–६–२ ) इति समाम्नायते ॥ २ ॥

उदुत्तम वरुण पाशमस्मदवाधम वि मध्यम श्रथाय ।
अधा वयमादित्य व्रते तवानागसो अदितये स्याम ॥ अ. ७।८८।३

हे वरुण उत्तमम् ऊर्ध्वकायस्थित पाश अस्मत्=अस्मत्तः सकाशाद् उच्छ्रथय=ऊर्ध्वमुत्कृष्य नाशय। अधमम्=अधः कायस्थित पाश अवश्रथय=अधस्तादवकृष्य नाशय। मध्यम=मध्यदेशस्थित पाशं विश्रथयं विकृष्य नाशय। अथ=अनन्तर हे आदित्य=वरुण तव व्रते कर्मणि कर्मार्थ यागयोग्यतासिध्यर्थं अनागसः विमुक्तसर्वपाशा वयमदितये अखण्डितत्वाय अनभिशस्तये स्याम भवेम ॥ ३ ॥

प्रास्मत् पाशान् वरुण मुञ्च सर्वान् य उत्तमा अधमा वारुणा ये।
दुःष्वप्न्य दुरित नि ष्वास्मदथ गच्छेम सुकृतस्य लोकम् ॥ अ. ७।८८।४

हे वरुण अस्मत्=अस्मत्तः सर्वान् पाशान् प्रमुञ्च। ये वारुणाः वरुणस्य भवतः सम्बन्धिनः उत्तमा अधमाश्च ये पाशाः सन्ति। उद्भूताभिभूतशक्तिभेदात् अधर्मपाशाना द्वैविध्यम्। किञ्च दुःष्वप्न्यम् दुष्टे स्वप्ने भव दुरित पापमरिष्टं अस्मत्=अस्मत्तो निःष्व निस्सुव। निर्गमयेत्यर्थ। अथ पाशदुरितविमोचनाऽनन्तर सुकृतस्य सुष्ठु कृतस्य पुण्यस्य लोक गच्छेम प्राप्नुयाम ॥ ४ ॥

इत्यत्र ऊर्ध्वाऽध सञ्चितदूषितजलीयभागस्य निःसारणाय वरुणस्तुतिकरणात् स्पष्टमेव समायातम्, यत् स्रोतसा प्रतीपगत्या समस्तशरीरे विशेषतश्चोदरे दूषितजलसम्भरण जायते। सहस्रशो रोगिषु तत्प्रत्यक्षदृश्य-श्चास्ति। अथवा विसूचिकामूत्राघातमूत्रकृच्छ्रादौ तत्तत्कारणविशेषैर्मूत्रपर्येऽवरुद्धे वस्त्यादौ स सम्भृतो भवति। तस्याऽप्यतिमात्राऽवरोधे उदावर्तिततया प्रतीपमार्गमागत्य शरीरभागेषु सञ्चीयते। एवमेवं येन केनाऽपि प्रका-रेण मूत्रत्वसञ्ज्ञा प्राप्तः प्राप्तु योग्यो वेति सर्वोऽप्यत्र क्षारद्रवो मूत्रशब्देन विवक्षितः, तस्य सर्वस्यापि मल-द्रवस्य निःसरणाय प्रार्थना कृताऽस्ति, साचाऽमुना प्रकारेण आन्त्रेषु सम्यक् सम्भवन्त्येवाऽऽस्ते, अतएवेदं (अथर्व. १।३) सूक्त मूत्रपुरीषनिरोधप्रशमनाय विनियुक्त सूत्रकारैः। तथाहि—"विद्मा शरस्येति तृतीयसूक्तेन मूत्रपुरीषनिरोधे प्रमेहणसाधनहरीतकीकर्पूरबन्धनम् मूषिकामृत्तिकापूतीकतृणदधिमथितजरत्प्रमन्दद्दारुतक्षणशक-लाना अन्यतमस्य पायन हस्त्यश्वादियानारोहण शरविसर्जन शरेण मूत्रनालविदारण लोहशकलस्य मूत्रद्वारे प्रवेशन इत्येवमादीन्यपि सूत्रोक्तप्रकारेण व्याधितस्य कुर्यात्। "विषितं ते वस्तिविलम्" इति द्वयृचेन मूषिकामृत्तिका-द्युक्तद्रव्येषु निरुद्धमूत्रपुरीष पुरुष आस्थापयेत्। "विद्मा शरस्येति प्रमेहण बध्नाति" इत्यादि "फाण्ट पायय-तीत्युदावर्तिने च" इत्येतदन्त सूत्र द्रष्टव्यम्(कौ० ४।१)" इति। अस्मदुक्तार्थो यदि नाऽभिप्रेतः स्यात्तर्ह्य-स्मिन् सूक्ते नवस्वपि मन्त्रेषु पुरीषरोधस्य नाममात्रस्याऽप्यगमनात् कथन्तन्निरोधनिवृत्त्यर्थं फाण्टादिपायन विहित सङ्गच्छेत। अत आन्त्रशब्देनाऽऽबालवृद्ध प्रसिद्धान्येवाऽन्त्राणि ग्रहीतुमुचितानि न पुनर्वृक्कपरिधिस्थमूत्रोत्सिका-नाम्। तासान्तु ग्रहणमस्मदुक्तरीत्याऽनायासेनैव सिद्धम्। किञ्च—खादितपीतादिवस्तुन उदर्येण वह्निना परिपाका-द्यदा सारतया रसः प्रादुर्भवति तत्र योऽयमेकान्ततः शरीरपोषणाऽनुपयुक्तः क्षारीयभागः सः मृद्घटस्थापितलव-णस्य निःस्राव इव अतिसूक्ष्मैश्छिद्रैः=रक्तसहप्रचारमनपेक्ष्य स्वतन्त्रतया वृक्कयो र्गच्छति इति महर्षीणाम-भिप्रायोऽस्ति। शरीररचनाया अतिसूक्ष्मत्वादतिसूक्ष्माः शारीरपरिणामाः ज्ञातुमशक्यास्ते केवलमनुमेयाः सन्ति, यथा शुक्रशोणितयोर्गर्भाशये प्रवेशसमये योऽय गर्भपोषणक्रमः सः कियत्समयपर्यन्तमतर्क्य एवाऽऽस्ते। द्रवेण शरीरयन्त्रस्योत्पन्नत्वादवयवाना परस्पर सश्लिष्टत्वात्। अतितीक्ष्णपदार्थाना येयं शीघ्रतया व्याप्ति र्भवति सा सर्वथा अतर्क्यैवाऽऽस्ते। तथा च ग्रीष्मघर्मसन्तप्तमनुष्येण पीत जल पानसमका-लमेव समस्तशरीराद्युगपत्प्रस्वेदरूपेण वहिर्निर्गच्छति, सा व्याप्ति र्न रक्ताऽभिसरणक्रममपेक्षते। मूत्राऽवरोधे चाऽ-तिमूत्रलद्रव्यदाने तत्क्षणमेव दृश्यते मूत्रक्षरणम्। यदि रक्ताऽभिसरणमार्गमेवाऽनुसृत्य वृक्कयो र्मूत्रं विभ-ज्यते तर्हीत्थं शीघ्रतयामूत्रक्षरणात्मिका प्रवृत्ति र्न सम्भवत्येव। अतः पक्वाशयात्सूक्ष्ममार्गेणाऽपि क्षारीयद्रवस्य वृक्के-

प्राप्ति र्भवति इति महर्षीणामभिप्रायोऽस्ति। अतएव " पक्वाशयगतास्तत्र नाड्यो मूत्रवहास्तु याः । (सु नि.३।२१) इत्याद्युक्त सङ्गच्छते, परमिद द्वय विशेषसमयेष्वेवाऽनुमानगोचर भवति। न सर्वकाले अनयाऽपि रीत्या ऽन्त्रेषु मूत्राऽवरोधः सम्भवति। नन्वेव तर्हि स्रोतसा कार्यविप्लवो भवेत्, तस्मिंश्च जाते न मूत्रवहेषु मूत्रस्यैव नि.सरणमेव पुरीषादिवहेष्वपि कथं न कार्ये व्यतिकरः स्यादिति तु न शङ्कनीयमेव। समस्तशरीराऽवयवेषु यद्यपि सूक्ष्माणि छिद्राणि सहस्रशः सर्वत्र गमनशालीनि सन्त्येव परन्तु बलीयसा अनुलोमधातुप्रवाहेण दुर्बलस्य प्रतिलोममार्गस्याऽवरोधो भवति। सुरङ्गा इव सर्वेष्ववयवेषु यानि सर्वत्रगमनशीलानि सूक्ष्मच्छिद्राणि सन्ति तानि सूक्ष्मकलयाऽऽवृतानि सन्ति अतस्तेषु न सर्वेषां धातूना निर्गमन भवति किन्त्वीश्वरनिर्मिताऽनुलोममार्गेणैव गच्छन्तो रसादयः तत्तत्स्थानोष्माणं समासाद्य तत्तत्परिणामविशेषानासादयन्तोऽहर्निशमिदं शरीर पालयन्ति। यदा तु कालार्थकर्मणामयोगाऽतियोगमिथ्यायोगै र्वातादयो विगुणतामासादयन्ति तदा धातुमार्गानाध्मापयन्ति, तेन चाऽऽध्मापनेन सूक्ष्मकलायाः स्फारीभावात् तदाऽऽवृतानि सूक्ष्माणि छिद्राण्युद्घाटितानि भवन्ति तदा स्रोतसा कार्यस्य व्यतिकरो भवति। तस्मिन् काले प्रायो मूत्रविशोरतिसङ्गोऽतिप्रवृत्ति र्वा भवति। तदाऽऽन्त्रेषु मूत्रस्य भवत्येव साक्षात्सञ्चयः। यथा-" रूक्षदुर्बलयो र्वातेनोदावृत्त शकृद्यदा। मूत्रस्रोतः प्रपद्येत विट्ससृष्ट तदा नरः। विड्गन्धं मूत्रयेत्कृच्छ्राद्विड्विघात विनिर्दिशेत् ॥ च. सि. ९।४७ " इत्यत्र विड्वहस्रोतसः सूक्ष्मच्छिद्राणामुद्घाटितमुखत्वान्मूत्रस्रोत' प्राप्तत्वेन कृच्छ्रान्मूत्रप्रवर्तनमुक्तम्, मूत्रप्रवर्तने विड्गन्धयुक्तत्वञ्चोक्तम्। शुक्रदुष्टौ " मूत्रपुरीषगन्धि सन्निपातेनेति " ( सु. शा. २।४ ) शुक्रे मूत्रपुरीषगन्धित्वमुक्तम्। इदमप्युक्तरीत्यैव सम्भवति कथमन्यथा शुक्रे पुरीषगन्धः सम्भवेदिति विद्वद्भिराकलनीयम्। अतः " यदाऽऽन्त्रेषु गवीन्यो-( अ. १।३।६ ) " रित्यत्र आन्त्रशब्देन प्रसिद्धान्यान्त्राण्येव ग्रहीतव्यानि प्रधानत्वात् लक्षणावृत्त्या मूत्रोत्सिकानामभीष्ट तर्हि क्रियता तदपि; परन्त्वस्मदुक्तरीत्या तद्ग्रहणस्याऽन्यथैव सिद्धत्वात् पुनस्तद्ग्रहणप्रयत्नस्य पिष्टपेषणता स्यादित्यलमतिविस्तरेण।

( सं. ७३ ) **पुरीतत्**—पुरीवन्नगरीवत् तन्यते इतस्ततो निक्षिप्यते तत्पुरीतत्। नगर्यां हि इतस्ततः क्रमेणाऽक्रमेण वा गृहाणि स्थितानि भवन्ति तद्वदस्य पुरीततोऽपि ईश्वरेण विन्यासः कृतोऽस्ति, प्रवेशनिर्गममार्गौ च कृतौ स्तः। अतः पुर्यासादृश्यात्सम्यगन्वर्थमेव क्षुद्राऽन्त्राणा पुरीतदिति नाम। सम्पदादित्वात्क्विपि " गमादीना क्वौ " वा० ६।४।४० इत्यनुनासिकलोपे तुकि च पुरीतदिति सिध्यति। यदा तु पुरि शरीरे तन्यत इति विगृह्यते तदा ' हलदन्तात्सप्तम्या०' ( पा. ६।३।९ ) इत्यलुकि ' न हि वृतिवृषिव्यधिरुचिसहितनिषु क्वौ ' ( पा. ६।३।११६ ) इति दीर्घे पुरीतत्। यद्वा पुरी शरीर तनोति विस्तारयति इति पुरीतत्। " अष्टाचक्रा नवद्वारा देवाना पूरयोध्ये-"त्यादौ शरीरस्य पुरीत्वाऽभिधानात्, तत्पोषणस्याऽन्त्राऽधीनत्वात्। ग्रहण्यादिरोगे रसादिधातुक्षयाच्छरीरपातस्य प्रत्यक्षदृष्टत्वात्। बहूनामर्थाना सम्भवेऽपि ' पुरीव तन्यते' इत्येवाऽर्थोऽत्र साधु'। सस्कृते सञ्ज्ञाना प्राय आकारबोधकत्वफलत्वादन्यव्युत्पत्तिषु नहि कश्चिदसाधारणोऽर्थ उदेति येनेतराऽवयवव्यावृत्तिः स्यादतो पुरीव तन्यते इत्येव विग्रह साधुः। तथात्वे तु यथा पुरीमध्यवर्तिना गृहाणा दूरतो दर्शने भवति द्वय एकस्योपरि द्वितीयादि सञ्चितमिति तद्वत्क्षुद्राऽन्त्राणा सन्निवेशस्य सत्त्वात्। " चेतो हृदय यकृन्मेधा व्रत पुरीतत् " अथर्व. ९।१२।११ " देवजना गुदा मनुष्या आन्त्राण्यत्रा उदरम् ॥ अ. ९।१२।१६ " अस्मिन् सूक्ते एकादशमन्त्रे पुरीतत्समागत षोडशमन्त्रे चाऽन्त्राणि इति समागतमतः क्षुद्रान्त्राणां पुरीतदिति नाम स्थूलान्त्रस्याऽन्त्राणीति बोध्यम्। बहुवचनन्तु पक्वाशयादिनानाभेदज्ञापनार्थम्। १२ मन्त्रे वनिष्ठोरागमनात्तत्पर्यन्तमेव स्थूलाऽन्त्रमर्यादेति समायातम्। एवमेव " यत् ते क्लोमा यद्धृदयं पुरीतत् सह कण्ठिका। आमिक्षा दुहता दात्रे क्षीर सर्पिरथो मधु ॥ अ. १०।९।१५ ॥ यत् ते यकृद् ये मतस्ने यदान्त्रे

याश्च ते गुदाः । आमिक्षा० ॥ १६ ॥ मस्नो प्लाशिं यौं वनिष्ठुं यौं कुक्षी यत्र चर्म ते ॥ आमिक्षा० ॥ १७ ॥ अस्मिन्नपि सूक्ते ( अ. १०।९।१५-१६-१७ ) उपरिनिर्दिष्टमन्त्रद्वयविशिष्टमन्त्रेषु पुरीतदान्त्रवनिष्ठूनां क्रमेण समागमनाद् ग्रामगृहस्थितिवत् स्थापितक्षुद्रान्त्रेषु पुरीतत, स्थूलान्त्रे आन्त्रम्, उण्डुके च वनिष्ठुरिति सञ्ज्ञाः क्रमेण कृताः सन्ति, अत एषा नाभि, स्थाने, आकारे च स्पष्टता सञ्जाता सा यथा—आमाशयादारभ्य पक्वाशयद्वारपर्यन्तभागस्य पुरीतत इति नाम । पक्वाशयमारभ्य उण्डुकपर्यन्तभागस्य आन्त्रमिति सञ्ज्ञा । ततोऽधस्तात्कुम्भेन्दुकाऽन्यतराऽऽकृतिविशिष्टभागस्य वनिष्ठुरिति सञ्ज्ञा ततोऽस्मादुत्तरगुदमिति, ततोऽस्मादगुदा इति वैदिकीसञ्ज्ञाः ॥

(स ७५) वनिष्ठुः—" कुम्भो वनिष्ठुर्जनिता शचीभिर्यस्मिन्नग्रे योन्यां गर्भो अन्तः । प्लाशिर्व्यक्तः शतधार उत्सो दुहे न कुम्भी स्वधां पितृभ्यः ॥ वा स. १९।८७ " इत्यत्र वनिष्ठो. कुम्भनादृश्यदानादुण्डुक एव ग्रहीतव्यः । समग्रमन्त्रार्थोऽऽकलनया च न साधारणेन घटेन सादृश्यं प्रतिभाति, अपि तु सुरानिर्माणकुम्भेन सादृश्यप्रतिपादनान्मध्ये स्थूलोदरतया ऊर्ध्वाऽधो विद्यमानाऽन्त्रशाखाभ्यां शुण्डायुक्तत्वनादृश्याद्वनिष्ठोरुण्डुकत्वाचं त्वे न कश्चिदपि शङ्काऽवलेशोऽवशिष्यते । अस्यमन्त्रस्यार्थो भगवता कपिलेन स्पष्टतया प्रतिपादितस्तत्र सुरावान्सादृश्याज्जठरार्थो वनिष्ठुत्वमौपचारिकं मत्वा कृपणाश्चर्मविकल्पना दत्त तथाहि—देहान्यदेहविवरे जठराग्निनाऽसृग्विण्मूत्रकूपपतितो भृशतप्तदेहः । इच्छन्नितो विवसितु गणयन् स्वमासान्निर्वास्यते कृपणधीर्भगवान् कदा नु ॥ भा. ३।३१।१७ ॥ अस्मत्कृतभाष्यन्तु प्लाशिटिप्पण्या द्रष्टव्यम् " आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठोरुदरादधि ॥ अ. २।३३।६ " इत्यत्र वनिष्ठो स्थविरान्त्रादिति साधारण्येन सायणस्य स्थविरान्त्रोक्तिस्तु न समीचीना स्थविरान्त्रैकदेशादिति तु वक्तुमुचितम् । सायणस्यैवाऽभिप्रायमभिप्रेत्य "कुम्भो वनिष्ठुर्जनिता शचीभि–" रित्यत्र वनिष्ठुः स्थूलान्त्रमिति महीधरेणोक्त तत्राऽपि गताऽनुगतिकत्वमेव कारणम्, शारीरे महीधरस्याऽज्ञानप्रस्तत्वात् । येन मतस्नाव्याख्याने मतस्ने हृदयोभयपार्श्वस्थे अस्थिनी इत्याद्यनल्पप्रलपितत्वात् । " क्षुत्कुक्षिरिरा वनिष्ठुः पर्वताः प्लाशयः " अथर्व. ९।१२।१२ इत्यत्र वनिष्ठोरिरया ( सुरया ) सादृश्यदानात्सुराया द्रवरूपत्वाद्वनिष्ठोश्च स्थूलान्त्रैकदेशत्वादिराशब्देन सुरानिर्माणपात्र लक्ष्यतेऽतो " कुम्भोवनिष्ठु–" रिति यजुर्मन्त्रेण जात सादृश्यम् । " महादेवस्य यकृच्छर्वस्य वनिष्ठुः पशुपतेः पुरीतत् " वा. स. ३९।९ इत्यत्राऽपि वनिष्ठु शर्वभागत्वेन निर्दिश्य शेष समग्र पुरीतत् पशुपतेर्भागत्वेनाऽऽम्नातम् । इन्दोः प्रतिकृति इन्दुकम्, 'इवे प्रतिकृतौ' (पा. ५।३।९६) इत्यनेन कन् प्रत्यये इन्दुकम्, इति मुञ्जादिनिर्मितजलाद्याहरणसमये शिरसि घटाऽश्र स्थापनार्थे आधार. । इन्दोरियमाकृतिरित्यर्थे तस्येदमित्यणि ऐन्दवीति रूप निष्पद्यते, तस्यैवाऽपभ्रंशतया लोके इंडवी ईढवी इत्यादयस्तत्तत्प्रान्तपरत्वेन शब्दाः प्रचलिता दृश्यन्ते । तदाऽऽकृतित्वस्य उण्डुके विद्यमानत्वादुण्डुकमिति नाम स्थापितमस्ति, इन्दुकशब्दस्याऽयमपभ्रंशः । " यकृत्समन्तात्कोष्ठञ्च तथाऽन्त्राणि समाश्रिता । उण्डुकस्थ विभजते मल मलधरा कला" सु शा. ४।१७ इत्यत्र उण्डुक. पोट्टलक इति लोके, चरके च पुरीषाऽऽधारशब्देनोण्डुक प्रतिपादित इति डल्हणः । अत उण्डुकशब्देन ये समग्र स्थूलान्त्रं व्याख्यान्ति तेषा तद्व्याख्यानममूलकमेव । न च वाच्य पक्वाशयमूलादारभ्य गुदपर्यन्त स्थूलान्त्रसन्निवेशस्येन्दुकाऽऽकृतित्वादुचितमेव तत्समग्रस्य उण्डुकमिति सञ्ज्ञा । " आन्त्रेभ्यस्ते गुदाभ्य वनिष्ठोरुदरादधि " कुम्भो वनिष्ठुर्जनिता शचीभिरित्यादिवेदवाक्यविरोधात् । किञ्च—"पञ्चदश कोष्ठाऽङ्गानि—नाभिश्च, हृदयञ्च, क्लोम च, यकृच्च, प्लीहा च, वृक्कौ च, वस्तिश्च, पुरीषाधान(र)ञ्च (श्च), आमाशयश्च, पक्वाशयश्च, उत्तरगुदञ्च, अधरगुदञ्च, क्षुद्रान्त्रञ्च, स्थूलान्त्रञ्च, वपावहननञ्चेति चरक. शा. ७।१३ इत्यत्र स्थूलान्त्रस्य पुरीषाधान, पक्वाशयः, उत्तरगुद, अधरगुदश्चेति चत्वारो विभागाः प्रदर्शिताः । तत्रोण्डुक-

शब्दस्थाने एव पुरीषाधानं समागतम् । "त्वचः कला धातवो मला दोषा यकृत्प्लीहानौ फुप्फुस उण्डुको हृदय-मामाशयाऽन्त्राणि वृक्कौ० सु. शा. ५।५" इत्यत्राशयेभ्यश्चान्त्रेभ्यश्च पृथगुण्डुकस्य ग्रहणान्न स्थूलान्त्रमात्रे उण्डुकसञ्ज्ञा कर्तुमुचिता किन्तु स्थूलान्त्रस्यैकदेशस्येति दिक् ॥

(स. ७९) **गवीन्यौ–मतस्ने**=अनयो र्विवरणं संस्कृतोपोद्घाते पञ्चमपृष्ठे द्रष्टव्यम् ।

(स. ८६) **सिकतावती**="परिवः सिकतावती धनूर्बृहत्यक्रमीत् । तिष्ठतेलयता सु कम् ॥अ. १।१७।४" अत्र सिकताशब्देन रेतो ग्रहीतव्यम् 'रेतो वै सिकता' शत. ब्रा. ७।३।१।१० 'यद्रेतः सिकता उच्यन्ते किमासा रेतोरूपमिति शुक्ला इति ब्रूयाच्छुक्लं हि रेतोऽथो पृश्नय इति पृश्नीव हि रेतः' शत. ब्रा. ७।३।१।३६ 'तदाहुः यदाऽर्द्रं रेतः शुष्काः सिकता निवपति कथमस्यैता आर्द्रा रेतोरूपं भवन्तीति रसो वै छन्दांस्यार्द्र उ वै रसस्तद्यदेना श्छन्दोभि र्निर्वपत्येव मु हास्यैता आर्द्रा रेतोरूपं भवन्ति' शत० ७।३।१।३७ इत्यादिभिः शतपथे रेतसः सिकताभिः सादृश्यप्रतिपादनात् सिकतावतीशब्देन शुक्रहरणी नाड्येव ग्रहीतव्या । यत्तु "सिकतावती=सिकता रजांसि तद्वती तदाऽऽधारभूता नाडी । यद्वा अश्मर्याख्यो व्याधिविशेषो यस्मादुत्पद्यते सा नाडी सिकतावती" इति सायणस्य व्याख्यानं तत्तु न समीचीनम् शतपथेन विरोधात् । यदि चाऽश्मर्युद्भव-स्थाना नाड्येव भवेत्तर्हि तस्या धनुरित्यनेनैव गतार्थता स्यात्, धनुरित्यस्य वस्तिरर्थः स्वयमेव सायणेन कृत-त्वात् । अतः सिकतावतीशब्देन शुक्रप्रवहा नाड्येव ग्रहीतव्या इति निर्विवादम् ॥

(स. ८७) **लोहितवाससः**=अस्य विवरणं निधिटिप्पण्या द्रष्टव्यम् ।

(स. ९०–९१) **उल्वः–जरायुः**=उल्वजरायुशब्दौ चिकित्साशास्त्रे गर्भनिमज्जनजले तदीयवेष्टने च साधारणतया प्रयुक्तौ दृश्येते । वेदे तु गर्भनिमज्जनजलं उल्वशब्देन तद्वेष्टनञ्च जरायुशब्देन निर्दिश्यते यथा—"आपो वत्सं जनयन्ती र्गर्भमग्रे समैरयन् । तस्योत जायमानस्योल्व आसीद्धिरण्ययः कस्मै देवाय हविषा विधेम ॥ अ. ४।२।८" आपः कर्तृभूताः अग्रे गर्भं शुक्रशोणितरूपेण समैरयन् समस्थापयन् पश्चात्तन्निमज्जनभूताः सन्त्यः वत्सं जनयन्तीः परिपोषयन्त्यः तस्य च गर्भस्य जायमानस्य योनिमार्गाद्बहिर्निःसरतः उल्वरूपेण परिणमन्त्यो भवन्तीति शेषः ॥ अत्र प्रथममुदाहरणरूपो यः आसीत्सः हिरण्ययः हिरण्यगर्भ इत्युच्यते तस्मै कस्मै अनिर्व-चनीयाय देवाय हविषा विधेम इत्यत्र गर्भनिमज्जनोदकं निर्दिष्टम् । "न हि ते अग्ने तन्वः क्रूरमानंशमर्त्यः । कपि र्बभस्ति तेजनं स्वं जरायु गौरिव ॥ अथर्व० ६।४९।१" इत्यत्र गर्भनिमज्जनजलोदकवेष्टनं कथितम् तस्यैव भक्षणसम्भवात् । यथा—"नेव मांसेन पीवसि नेव मज्जस्वाहतम् । अवैतु पृश्नि शेवलं शुने जराय्व-त्तवेऽव जरायु पद्यताम् ॥ अ. १।११।४" हे जरायो ! त्वं मांसेन गर्भिण्युदरगतेन मांसेनेव न पीवसि पुष्टोभ-वसि अर्थात् योदरगतमांसपुष्टि र्भवति तेनेव न पुष्यसे, अर्थान्मांसपुष्टिस्तु सार्वकालिकी भवति त्वन्तु गर्भप-रिपोषणपर्यन्तमेव स्थितिशाल्यसि गर्भबहिर्निःसरणाऽनन्तरं त्वया किञ्चित्कर्तव्यन्नाऽस्तीत्यर्थः । अथ च मज्जसु आहतमिव सम्बद्धमिव त्वन्न भवसि किन्तु पृश्नि शेवलं श्वेतवर्णं जलशैवालमिवाऽसि जलशैवालश्च न जलाऽवयवो भवितुमर्हति किन्तु वैकारिकोऽस्ति तथैव त्वमपि गर्भप्रविष्टाऽर्भकस्य पोषणाय परमेश्वरेण निर्मितोऽसि गर्भस्य बहिर्निःसरणानन्तरं त्वदीयाऽऽसक्तिरयोग्या इति कृत्वा त्वं अवैतु बहिर्निःसरतु । व्यत्ययात्प्रथमपुरुषः । ननु बहिर्निःसरणेन मया किंकर्तव्यमवशिष्ट इत्यपेक्षायामाह 'जराय्वत्तवे शुने पद्यताम्' तद्भक्षणाय कल्पतामित्यर्थः । अनेन जरायुस्वरूपं स्पष्टतया प्रतिपादितम् । इममेवाऽऽशयमभिप्रेत्य शतपथे "यः पाप्मा यः श्लेष्मा यदुल्वं यज्ज-रायु तदस्यैताभि–(७।२।१।५) रित्यत्र गर्भाधानोत्तराऽवस्थाः क्रमेण प्रदर्शिताः । तत्रोल्वशब्देन गर्भोदकं

याश्च ते गुदाः । आमिक्षा० ॥ १६ ॥ यस्ते प्लाशि यो वनिष्ठु यौ कुक्षी यच्च चर्म ते ॥ आमिक्षां० ॥ १७ ॥ अस्मिन्नपि सूक्ते ( अ. १०।९।१५–१६–१७ ) उपरिनिर्दिष्टसङ्ख्याविशिष्टमन्त्रेषु पुरीतदान्त्रवनिष्ठूनां क्रमेण समागमनाद् ग्रामगृहस्थितिवत् संस्थापितक्षुद्रान्त्रेषु पुरीतत्, स्थूलान्त्रे आन्त्रम्, उण्डुके च वनिष्ठुरिति सञ्ज्ञाः क्रमेण कृताः सन्ति, अत एषां नाम्नि, स्थाने, आकारे च स्पष्टता सञ्जाता सा यथा—आमाशयादारभ्य पक्वाशयद्वारपर्यन्तभागस्य पुरीतत् इति नाम । पक्वाशयमारभ्य उण्डुकपर्यन्तभागस्य आन्त्रमिति सञ्ज्ञा । ततोऽधस्तात्कुम्भेन्दुकाऽन्यतराऽऽकृतिविशिष्टभागस्य वनिष्ठुरिति सञ्ज्ञा ततोऽधस्तादुत्तरगुदमिति, सर्वतोऽधस्ताद्गुदा इति वैदिकीसञ्ज्ञाः ॥

(स. ७५) वनिष्ठुः=" कुम्भो वनिष्ठु र्जनिता शचीभि र्यस्मिन्नग्रे योन्या गर्भो अन्तः । प्लाशि र्व्यक्तः शतधार उत्सो दुहे न कुम्भी स्वधां पितृभ्यः ॥ वा स. १९।८७ " इत्यत्र वनिष्ठोः कुम्भसादृश्यदानादुण्डुक एव ग्रहीतव्यः । समग्रमन्त्रार्थाऽऽकलनया च न साधारणेन घटेन सादृश्यं प्रतिभाति, अपि तु सुरानिर्माणकुम्भेन सादृश्यप्रतिपादनान्मध्ये स्थूलोदरतया ऊर्ध्वाऽधो विद्यमानाऽन्त्रभागाभ्यां शुण्डायुक्तत्वसादृश्याद्वनिष्ठोरुण्डुकवाचकत्वे न कश्चिदपि शङ्काऽवलेशोऽवशिष्यते । अस्यमन्त्रस्यार्थो भगवता कपिलेन स्पष्टतया प्रतिपादितस्तत्र मलवाससादृश्याज्जरायौ वनिष्ठुत्वमौपचारिकं मत्वा कूपसादृश्यमविकतया दत्तं तथाहि—देह्यन्यदेहविवरे जठराऽग्निनाऽसृग्विण्मूत्रकूपपतितो भृशतप्तदेहः । इच्छन्नितो विवसितुं गणयन् स्वमासान्निर्वास्यते कृपणधी र्भगवन् कदा नु ॥ भा. ३।३१।१७ ॥ अस्मत्कृतभाष्यन्तु प्लाशिटिप्पण्यां द्रष्टव्यम् " आन्त्रेभ्यस्ते गुदाभ्यो वनिष्ठोरुदरादधि ॥ अ. २।३३।६ " इत्यत्र वनिष्ठोः स्थविरान्त्रादिति साधारण्येन सायणस्य स्थविरान्त्रोक्तिस्तु न समीचीना स्थविरान्त्रैकदेशादिति तु वक्तुमुचितम् । सायणस्यैवाऽभिप्रायमभिप्रेत्य "कुम्भो वनिष्ठु र्जनिता शचीभि–" रित्यत्र वनिष्ठुः स्थूलान्त्रमिति महीधरेणोक्तं तत्राऽपि गताऽनुगतिकत्वमेव कारणम्, शारीरे महीधरस्याऽज्ञानग्रस्तत्वात् । येन मतस्नाव्याख्याने मतस्ने हृदयोभयपार्श्वस्थे अस्थिनी इत्याद्यसम्बद्धप्रलपितत्वात् । " क्षुत्कुक्षिरिरा वनिष्ठुः पर्वताः प्लाशय. " अथर्व ९।१२।१२ इत्यत्र वनिष्ठोरिरया ( सुरया ) सादृश्यदानात्सुराया द्रवरूपत्वाद्वनिष्ठोश्च स्थूलान्त्रैकदेशत्वादिराशब्देन सुरानिर्माणपात्रं लक्ष्यतेऽतो " कुम्भोवनिष्ठु–" रिति यजुर्मन्त्रेण जातं सादृश्यम् । " महादेवस्य यकृच्छर्वस्य वनिष्ठुः पशुपतेः पुरीतत् " वा. स. ३९।९ इत्यत्राऽपि वनिष्ठु शर्वभागत्वेन निर्दिश्य शेषं समग्रं पुरीतत् पशुपतेर्भागत्वेनाऽऽम्नातम् । इन्दो. प्रतिकृतिः इन्दुकम्, 'इवे प्रतिकृतौ' (पा. ५।३।९६) इत्यनेन कन् प्रत्यये इन्दुकम्, इति मुञ्जादिनिर्मितजलाद्याहरणसमये शिरसि घटाऽध स्थापनार्थं आधारः । इन्दोरियमाकृतिरित्यर्थे तस्येदमित्यणि ऐन्दवीति रूपं निष्पद्यते, तस्यैवाऽपभ्रंशतया लोके ईंडवी-ईढवी इत्यादयस्तत्तत्प्रान्तपरत्वेन शब्दाः प्रचलिता दृश्यन्ते । तदाऽऽकृतित्वस्य उण्डुके विद्यमानत्वादुण्डुकमिति नाम स्थापितमस्ति, इन्दुकशब्दस्याऽयमपभ्रंशः । " यकृत्समन्तात्कोष्ठञ्च तथाऽन्त्राणि समाश्रिता । उण्डुकस्थं विभजते मलं मलधरा कला" सु शा. ४।१७ इत्यत्र उण्डुक. पोट्टलक इति लोके, चरके च पुरीषाऽऽधारशब्देनोण्डुक प्रतिपादित इति डल्हणः । अत उण्डुकशब्देन ये समग्रं स्थूलान्त्रं व्याख्यान्ति तेषां तद्व्याख्यानममूलकमेव । न च वाच्यं पक्वाशयमूलादारभ्य गुदपर्यन्तं स्थूलान्त्रसन्निवेशस्येन्दुकाऽऽकृतित्वादुचितमेव तत्समग्रस्य उण्डुकमिति सञ्ज्ञा । " आन्त्रेभ्यस्ते गुदाभ्य वनिष्ठोरुदरादधि " कुम्भो वनिष्ठु र्जनिता शचीभिरित्यादिवेदवाक्यविरोधात् । किञ्च–"पञ्चदश कोष्ठाऽङ्गानि—नाभिश्च, हृदयञ्च, क्लोम च, यकृच्च, प्लीहा च, वृक्कौ च, वस्तिश्च, पुरीषाधान(र)ञ्च (श्च), आमाशयश्च, पक्वाशयश्च, उत्तरगुदञ्च, अधरगुदञ्च, क्षुद्रान्त्रञ्च, स्थूलान्त्रञ्च, वपावहनञ्चेति चरक. शा. ७।१३ इत्यत्र स्थूलान्त्रस्य पुरीषाधान, पक्वाशयः, उत्तरगुद, अधरगुदञ्चेति चत्वारो विभागाः प्रदर्शिताः । तत्रोण्डुक-

शब्दस्थाने एव पुरीषाधानं समागतम् । "त्वचः कला धातवो मला दोषा यकृत्प्लीहानौ फुफ्फुस उण्डुको हृदय-मामाशयाऽन्त्राणि वृक्कौ० सु. शा. ५।५" इत्यत्राशयेभ्यश्चान्त्रेभ्यश्च पृथगुण्डुकस्य ग्रहणान्न स्थूलान्त्रमात्रे उण्डुकसञ्ज्ञा कर्तुमुचिता किन्तु स्थूलान्त्रस्यैकदेशस्येति दिक् ॥

( सं. ७९ ) **गवीन्यौ—मतस्ने**=अनयो विंवरणं संस्कृतोपोद्घाते पञ्चमपृष्ठे द्रष्टव्यम् ।

( स. ८६ ) **सिकतावती**="परिवः सिकतावती धनूर्बृहत्यक्रमीत् । तिष्ठेतेलयता सु कम् ॥अ. १।१७।४" अत्र सिकताशब्देन रेतो ग्रहीतव्यम् 'रेतो वै सिकता' शत. ब्रा. ७।३।१।१० 'यद्रेतः सिकता उच्यन्ते किमासां रेतोरूपमिति शुक्ला इति ब्रूयाच्छुक्लं हि रेतोऽथो पृश्नय इति पृश्नीव हि रेतः' शत. ब्रा. ७।३।१।२६ 'तदाहुः यदाऽर्द्रं रेतः शुष्काः सिकता निवपति कथमस्यैता आर्द्रा रेतोरूप भवन्तीति रसो वै छन्दांस्यार्द्र उ वै रसस्तद्यदेना श्छन्दोभि निर्वपत्येव मु हास्यैता आर्द्रा रेतोरूप भवन्ति' शत० ७।३।१।२७ इत्यादिभिः शतपथे रेतसः सिकताभिः सादृश्यप्रतिपादनात् सिकतावतीशब्देन शुक्रहरणी नाड्येव ग्रहीतव्या । यत्तु "सिकतावती=सिकता रजांसि तद्वती तदाऽऽधारभूता नाडी । यद्वा अश्मर्याख्यो व्याधिविशेषो यस्मादुत्पद्यते सा नाडी सिकतावती" इति सायणस्य व्याख्यान तत्तु न समीचीनम् शतपथेन विरोधात् । यदि चाऽश्मर्युद्भव-स्थाना नाड्येव भवेत्तर्हि तस्या धनुरित्यनेनैव गतार्थता स्यात्, धनुरित्यस्य वस्तिरर्थः स्वयमेव सायणेन कृत-त्वात् । अतः सिकतावतीशब्देन शुक्रप्रवहा नाड्येव ग्रहीतव्या इति निर्विवादम् ॥

( स. ८७ ) **लोहितवाससः**=अस्य विवरण निधिटिप्पण्या द्रष्टव्यम् ।

( स. ९०-९१ ) **उल्वः—जरायुः**=उल्वजरायुशब्दौ चिकित्साशास्त्रे गर्भनिमज्जनजले तदीयवेष्टने च साधारणतया प्रयुक्तौ दृश्येते । वेदे तु गर्भनिमज्जनजल उल्वशब्देन तद्वेष्टनञ्च जरायुशब्देन निर्दिश्यते यथा—"आपो वत्सं जनयन्ती गर्भमग्रे समैरयन् । तस्योत जायमानस्योल्व आसीद्धिरण्ययः कस्मै देवाय हविषा विधेम ॥ अ. ४।२।८" आपः कर्तृभूताः अग्रे गर्भं शुक्रशोणितरूपेण समैरयन् समस्थापयन् पश्चात्तन्निमज्जनभूताः सन्त्यः वत्स जनयन्तीः परिपोषयन्त्यः तस्य च गर्भस्य जायमानस्य योनिमार्गाद्बहिर्निःसरतः उल्वरूपेण परिणमन्त्यो भवन्तीति शेषः ॥ अत्र प्रथममुदाहरणरूपो यः आसीत्सः हिरण्ययः हिरण्यगर्भ इत्युच्यते तस्मै कस्मै अनिर्व-चनीयाय देवाय हविषा विधेम इत्यत्र गर्भनिमज्जनोदक निर्दिष्टम् । "न हि ते अग्ने तन्व क्रूरमानशमर्त्यः । कपि र्बभस्ति तेजन स्व जरायु गौरिव ॥ अथर्व० ६।४९।१" इत्यत्र गर्भनिमज्जनजलोदकवेष्टन कथितम् तस्यैव भक्षणसम्भवात् । यथा—"नेव मासेन पीवसि नेव मज्जस्वाहतम् । अवैतु पृश्नि शेवल शुने जराय्व-त्त्वेऽव जरायु पद्यताम् ॥ अ. १।११।४" हे जरायो ! त्वं मासेन गर्भिण्युदरगतेन मासेनेव न पीवसि पुष्टोभ-वसि अर्थात् योदरगतमासपुष्टि र्भवति तेनेव न पुष्यसे, अर्थान्मासपुष्टिस्तु सार्वकालिकी भवति त्वन्तु गर्भप-रिपोषणपर्यन्तमेव स्थितिशाल्यसि गर्भबहिर्निःसरणाऽनन्तर त्वया किञ्चित्कर्तव्यन्नाऽस्तीत्यर्थः । अथ च मज्जसु आहतमिव सम्बद्धमिव त्वन्न भवसि किन्तु पृश्नि शेवलं श्वेतवर्ण जलशेवालमिवाऽसि जलशेवालश्च न जलाऽवयवो भवितुमर्हति किन्तु वैकारिकोऽस्ति तथैव त्वमपि गर्भप्रविष्टाऽर्भकस्य पोषणाय परमेश्वरेण निर्मितोऽसि गर्भस्य बहिर्निःसरणानन्तर त्वदीयाऽऽसक्तिरयोग्या इति कृत्वा त्व अवैतु बहिर्निःसरतु । व्यत्ययात्प्रथमपुरुषः । ननु बहिर्निःसरणेन मया किंकर्तव्यमवशिष्ट इत्यपेक्षायामाह 'जराय्वत्तवे शुने पद्यताम्' तद्भक्षणाय कल्पतामित्यर्थः । अनेन जरायुस्वरूप स्पष्टतया प्रतिपादितम् । इममेवाऽऽशयमभिप्रेत्य शतपथे "यः पाप्मा यः श्लेष्मा यदुल्व यज्ज-रायु तदस्यैताभि—( ७।२।१।५ ) रित्यत्र गर्भाधानोत्तराऽवस्थाः क्रमेण प्रदर्शिताः । तत्रोल्वशब्देन गर्भोदक

विवक्षितम् जरायुशब्देन च तद्वेष्टनमभिप्रेतम् तथाच—"त्रिवृद्वहिर्भवति, माता पिता पुत्रः, तदेव तन्मिथुनं, उल्व गर्भो जरायु, तदेव मिथुन त्रेधा वहिः सम्बद्ध भवति। एक इव ह्यय लोकः ॥ तै. ब्रा. १।६।३।१" इत्यत्र स्पष्टतया उल्वजरायुशब्दौ भिन्नार्थौ प्रयुक्तौ। एवमेव सर्वत्र वैदिकनये जरायूल्वशब्दौ भिन्नार्थत्वेन प्रयुक्ताविति नाऽत्र कश्चित्संशयाऽवलेश इति दिक्।

(स. ९४) कुल्मलम्—" यत्सुपर्णा विवक्षयो अनमीवा विवक्षवः। तत्र मे गच्छताद्धव शल्य इव कुल्मलं यथा ॥ अ. २।३०।३ ॥ " जिह्वा ज्या भवति कुल्मल वाङ्नाडीका दन्तास्तपसाभिदिग्धाः। तेभि र्ब्रह्मा विध्यति देवपीयून् हृद्बलै र्धनुभि र्देवजूतैः ॥ अ. ५।१८।८ " अत्र कुल्मलमिति शब्दः कुड्मलशब्दस्थाने डलयोरैक्यात्सञ्जातः। कुड्मलश्च विकासोन्मुखपुष्पाऽवस्था। तत्सादृश्याल्लक्षणया वहुस्थानेषु तत्प्रयोक्तु युज्यते, शारीराऽवयवे मदनातपत्रवाचक कुड्मलसादृश्याद्वेदे प्रयुक्तम्। कामशास्त्रेऽस्य मदनातपत्रमिति सञ्ज्ञा। एतत्स्पर्शादिना कामिनी शीघ्रपञ्चशरग्रस्ता भवति। " शल्याद्विप निरवोच प्राञ्जनादुत पर्णधेः। अपाष्ठाच्छृङ्गात कुल्मलान्निरवोचमह विषम् ॥ अथर्व० ४।६।५ " इत्यस्मिन्मन्त्रे कुल्मलादिति मदनातपत्रसम्भूतविषादित्यभिप्रेतम् तच्च " पक्षीजायान्यः पतति स आविशति पूरुषम्। " इत्यत्रोपदशविवरणे विशदतया व्याख्यातमस्ति। कुल्मलात्कुत्सितप्राणिमत्वादिति सायणव्याख्यानन्तु, न समीचीनम्—" यत्सुपर्णाविवक्षव " इति मन्त्राऽऽगतकुल्मलशब्दार्थेन विरोधात् ॥

(स. ९७) जाम्बीलः—कटिकपालाऽस्थिप्रविष्टो जम्बीराऽऽकृतिरूर्वस्थ्यग्रभागः। स च " मशकान् केशैरिन्द्र स्वप्सा० " इत्यादि (वा. स २५।३) मन्त्रे समागतः।

(सं. १०१) उच्छ्लङ्खौ ॥ उच्छ्रितशङ्खाविव उच्छ्लङ्खौ एतदाकृतित्वाज्जङ्घाऽधस्तनभागयोरेवैतन्नाम। ये तु एतयोर्भागयोर्गुल्फाविति नामेति वदन्ति ते वैदिकशारीरज्ञानवहिष्कृता एव, यथा—" तद्ग्रन्थी घुटिके गुल्फौ पुमान् पार्ष्णिस्तयोरधः " इत्यमरादयः। " केन पार्ष्णी आभृते पूरुपस्य केन मास सभृत केन गुल्फौ। केनाङ्गुली. पेशनी. केन खानि केनोच्छ्लङ्खौ मध्यतः कः प्रतिष्ठाम् ॥ अ. १०।२।१ " इतिमन्त्रे उच्छ्लङ्खाभ्या गुल्फयोः पृथक्स्थितिरस्ति, अतो गुल्फावुच्छ्लङ्खाभ्या भिन्नाऽवयवौ। न च वाच्य एकाऽवयवस्यैव द्विरुक्तिरस्तीति, कार्यान्तराऽभावात् तादृग्विन्यासस्य वेदमात्रेऽभावात्। किञ्च—" कस्मान्नु गुल्फावधरावकृण्वन्नष्ठीवन्तावुत्तरौ पूरुपस्य। जङ्घे निर्ऋत्य न्यदधुः क्वस्विज्जानुनोः सन्धी क उ तच्चिकेत ॥ अ. १०।२।२ " इति मन्त्रे पूरुपस्य गुल्फौ तदाख्याऽवयवौ जङ्घाऽधस्तनाऽऽधाराविल्यर्थः। कस्मात्कारणात् अधरौ अकृण्वन्=कृतवान्। अष्ठीवन्तौ जङ्घोर्वोर्नियामके चक्राकृतिनी अस्थिनी उत्तरौ=उपरिवर्तिनौ अकृण्वत् इति परोक्षप्रश्नेन एतज्ज्ञापयति। जङ्घाऽस्नोरधस्ताद् गुल्फाख्यस्य (गुटिकाकारस्य) अस्नो विन्यासः कृतोऽस्ति तदुपरि च अष्ठीवतः (चक्राकारस्याऽस्नः) विन्यासः कृतोऽस्ति। इद वैचित्र्य परमेश्वरादन्येन केनाऽपि शिल्पिसहस्रेण कर्तुमशक्यम्। एतद्विचित्राऽस्थिद्वयस्योपर्यधस्ताद्विन्यासेन पुरुप.स्थानोपवेशनतिर्यक्क्षेपाऽऽकुञ्चनप्रसारणधावनादिक्रियासु कुशलो भवति, अतः सः (परमेश्वरः) सर्वानेव शिल्पिनोऽतिशेते इति परमेश्वरस्य स्तुतिः कृताऽस्ति।

(स. १०४) प्रतिष्ठा=प्रतिष्ठति उत्थितो भवति अनया सा प्रतिष्ठा। अर्थवशात्पादतलं ग्रहीतव्यम्। तद्दते न हि कश्चिदपि जन्तुरुत्थानप्रत्युत्थानादिसमर्थो भवति। प्रकृतमन्त्रे " केन पार्ष्णी आभृते पूरुपस्य केन मासं सभृत केन गुल्फौ। केनाऽङ्गुली. पेशनीः केन खानि केनोच्छ्लङ्खौ मध्यतः कः प्रतिष्ठाम् ॥ अ. १०।२।१ " शरीराऽवयववर्णनात्तदेव भवितुमर्हति तत्राऽप्यङ्गुलीना पृथक्कथनान्मध्यत इति निर्देशाच्च अङ्गुलिमूलश-

लाकाः पञ्च, तासाञ्चाधाराऽस्थीनि कूर्चशब्दवाच्यानि पञ्च मिलित्वा दशाऽस्नामत्र प्रतिष्ठा सञ्ज्ञा। अङ्गुल्यस्थीनि चतुर्दश एकः पार्ष्णिः, जङ्घाऽऽधारास्थिगुल्फः एकम्, द्वे जङ्घाऽस्थिनी, एकमष्ठीवत्, एकं जानुसन्ध्यस्थि (ऊर्वस्थि) इति मिलित्वा प्रतिपाद त्रिंशदस्थीनि। एवं प्रतिहस्तमपि त्रिंशत्, हस्तेऽष्ठीवत्पार्ष्णिगुल्फानामभावात्कूर्चोऽस्नामष्टसङ्ख्यकत्वात्तत्र त्रयोदशाऽस्ना प्रतिष्ठेतिनाम तेन हस्तेऽपि त्रिंशदेवाऽस्थीनि सन्ति। "कति देवाः कतमे त आसन् य उरोग्रीवाश्चिक्युः पूरुषस्य। कति स्तनौ व्यदधुः कः कफोडौ कति स्कन्धान् कति पृष्टीरचिन्वन्॥ अथर्व० १०।२।४" अस्मिन्मन्त्रे कतिशब्दस्य चतुरावर्तनात्तद्वाच्यसङ्ख्याया देवशब्देऽन्वयाच्चतसृणा शाखाना पूर्वाऽपरपर्यालोचनया उपस्थितत्वाद्देवशब्दस्य लक्षणया चाऽस्थिवाच्यत्वे प्रतिहस्त प्रतिपादञ्च त्रिंशत्सङ्ख्यकान्यस्थीनीति निर्धारणीयम्। त्रयस्त्रिंशदिति देवेषु द्विरुक्तानां परित्यागात्त्रिंशत्त्व समायातीति वोध्यम् "द्वादशप्रधयश्चक्रमेक त्रीणि नभ्यानि क उ तच्चिकेत। तत्राहतास्त्रीणि शतानि शङ्कवः षष्टिश्च खीला अविचाचला ये॥ अथर्व० १०।८।४" अस्मिन्मन्त्रे त्रिषष्ट्यधिकत्रिशतान्यस्थीनि खीलाशब्देन शङ्कुशब्देन च दर्शितानि परन्तु तेषा स्पष्टतया विभागो मूलमन्त्रेषु न दृश्यते, दृश्यते तु "यस्य त्रयस्त्रिंशद्देवा निधिं रक्षन्ति सर्वदा। निधिं तमद्य को वेद य देवा अभि रक्षथ॥ अ. १०।७।२३" इति मन्त्रेणाऽनूक्ताऽस्ना त्रयस्त्रिंशत्सङ्ख्या प्रदर्शिता। प्रकृतमन्त्रे च कति शब्दाऽऽवर्तनेन शाखासुत्रयस्त्रिंशदन्तर्वर्तिनी सङ्ख्या प्रदर्शिता, सा च शरीरस्य प्रत्यक्षत्वात्साक्षाद् दृष्ट्वा निश्चेतव्या। अतो लोकवच्छरीराऽस्थ्यादिषु निश्चयः कर्तव्यः॥

## अथमांसविवरणम् (स. ११२)

मासमिति वेदे-आयुर्वेदे-लोके च कस्य वस्तुनो नाम भवितुमर्हतीति प्रश्ने वेदस्थवाक्यानि कानिचिदुद्धरामः, यथा—"मज्जा मजा संधीयता चर्मणा चर्म रोहतु। असृक् ते अस्थि रोहतु मांस मांसेन रोहतु॥ अ. ४।१२।४॥ यदस्य हृतं विहृत यत्पराभृतमात्मनो जग्धं यतमत् पिशाचैः। तदग्ने विद्वान् पुनराभर त्वं शरीरे मासमसुमेरयामः॥ अ. ५।२९।५॥ शेरभक शेरभ पुनर्वो यन्तु यातवः। पुनर्हेतिः किमीदिनः यस्य स्थ तमत्त यो वः प्राहैत् तमत्त स्वा मासान्यत्त॥ अ. २।२४।१॥ श्याममयोऽस्य मासानि लोहितमस्य लोहितम्॥ अ. ११।३।७॥ मासान्यस्य शातय स्नावान्यस्य स वृह॥ अ. १२।११।८॥ नेव मासेन पीवसि नेव मज्जस्वाहतम्। अवैतु पृश्नि शेवल शुने जराय्वत्तवेव जरायु पद्यताम्॥ अ. १।११।४॥ यं ते मन्थं यमोदन यन्मासं निपृणामि ते। ते ते सन्तु स्वधावन्तो मधुमन्तो घृतश्चुतः॥ अ. १८।४।४२" इत्यादीनि वाक्यानि वहूनि सन्ति परन्तु तेषु रसादिसप्तधातुव्यवहारे यन्मासत्वं सर्वजनीनमस्ति तदेव सामान्यतया गृहीतमस्ति। तस्मादेतै र्वाक्यै र्न कस्यचिद्विशेषस्याऽवधारण जायते। अतो लौकिकव्यवहारं दर्शयामः। तत्राऽपि (लौकिकव्यवहारेऽपि) धर्मशास्त्र पुरस्कृत्य यत्किञ्चिद्विचार्यते "मा स भक्षयिताऽमुत्र यस्य मासमिहाद्म्यहम्। एतन्मासस्य मासत्वं प्रवदन्ति विपश्चितः॥ मनु. अ. ५।५५" अस्मच्छब्दस्य द्वितीयैकवचने मामिति निष्पद्यते, तच्छब्दस्य प्रथमैकवचने स इति। सः मामिति यथावस्थितपदद्वयैक्ये मासमिति एकस्मिन्नर्थे रूढमिव लोके प्रचलित दृश्यते। तत्र वैयाकरणैस्तु 'मनेर्दीर्घश्चे'—ति सप्रत्यये मास निष्पादितम्। परन्तु मा-सः, इति पृथगेव पदद्वयमवस्थितमिति मनुना प्रतिपादितम् सः मामिति कर्तृकर्मवाचक पदद्वयम्। तत्क्रिया विनाऽनिष्पन्नम्, सा चाऽत्र क्रिया का भवितुमर्हतीति विचारे मनुना भक्षयतीति क्रियाया अध्याहार कृत्वा निरणायि-मा स भक्षयिताऽमुत्रेत्यादिना। यस्य=प्राणिनोऽह=मासभक्षणकर्ता मास कर्म इह=अस्मिन्समये अद्मि भक्षयामि सः=यस्य पूर्वं मया मासं जग्ध स इत्यर्थः। अमुत्र=परस्मिञ्जन्मनि परस्मिल्लोके वा मा भक्षयिता इत्यर्थद्योतनाय आसृष्टे र्मा स इति व्यस्तं पदद्वयमेव एकस्मिन्नर्थे रूढं कृतमस्ति यो यस्य मास भक्षयति तस्य मासं सोऽवश्यमेव

भक्षयिष्यति, अत्र नाऽस्ति काचिच्छङ्केति भगवता मनुना जीवानां कल्याणाय स्पष्टतया प्रत्यपादि । तत्र च जना भक्षणविषये मांसशब्देनाऽस्थिवर्जसमस्तमप्यवयवजात प्राणिनो गृह्णन्ति । तत्र च मासेन साकमस्थीन्यप्याह्रियन्ते, तत्र सामान्यतः मासाहारिण दृष्ट्वा किमिदमाहरतीति प्रश्ने मासमित्येव जना उत्तरयन्ति इति सामान्या सर्वजनीना प्रतीतिः। यत्र त्वेकान्ततो मासरहितान्यस्थीनि भवन्ति तत्रैव इमान्यस्थीनीति व्यवहरन्ति जनाः। अतः सामान्यतः मासशब्देन मलमूत्रचर्मनखरोमादिवर्जं सर्वमपि शरीर मांसशब्दग्राह्य भवति। कुत्रत्यं मांसमिति विशेषप्रश्ने तु मुखस्थ हृत्स्थ कालखण्डस्थ अन्त्ररूपमित्यादीनि विशेषतयोत्तराणि भवन्ति। सामान्यतया तु सर्वस्यैव शरीरस्य बोधो भवति लोके, अत एव "शरीरबृंहणे नान्यत् खाद्य मासाद्विशिष्यते। च. सू. ७।८६" "शुष्यते क्षीणमासाय कल्पितानि विधानवित्। दद्यान्मासादमासानि बृंहणानि विशेषतः॥ शोषिणे बर्हिण दद्याद्बर्हिः शब्देन चाऽपरान्॥ इत्यादि, च. चि. ८।१४९" "तस्मात्क्रव्यादमासानि शोषी यः सोऽवशीलयेत्। रहस्यमेतद्वैद्यानामुपदिष्ट चिकित्सकैः॥ मद्य क्रव्यादमासञ्चशोषिणाममृतोपमम्॥ भैल० चि. ४" "काकानुलूकान्नकुलान्विडालान्गण्डूपदान् व्यालबिलेशयाखून्। गृध्राश्च दद्याद्विविधैः प्रकारैः ससैन्धवान् सर्षपतैलभृष्टान्॥ सु. उ. ४१।३६" "कृकलान् विविधाश्छागाश्छशकानर्धभक्षितान्। महिषानेकशल्याश्च छेदांश्च कृतनिष्ठितान्॥ वा रा. सु ११।१७" इत्यादि। अत्र सर्वत्र सामान्यतया सर्वस्मिन् शरीरे मासशब्दः समागतः अत एव सूदशास्त्रे वेसवारलक्षणे "मास निरस्थि सुस्विन्न पुनर्दृषदि पेषितम्। पिप्पलीखण्डमरिचगुडसर्पिः समन्वितम्। ऐकध्यं विपचेत्सम्यग् वेसवार इति स्मृतम्॥" इत्यत्र मांसशब्दे निरस्थीति प्रयुक्त विशेषण सार्थक्य भजते, सम्भवव्यभिचारयोरेव विशेषणस्य सार्थक्यात्। साधारणमासशब्देनाऽस्थिधमनीसिरास्नायुप्रभृति सर्वमेव क्रोडीभवति। परन्तु शारीरशास्त्रे न शरीरसमुदायस्य मासत्व कथितु युक्तम्। तथात्वे शारीरविभागस्य दुरुपपादत्वात्। यथा "यथा बिसमृणालानि विवर्धन्ते समन्ततः। भूमौ पङ्कोदकस्थानि तथा मासे सिरादयः॥ सु. शा. ४।९" यथा भूमौ पङ्कोदकस्थानि बिसमृणालानि समन्ततो विवर्धन्ते तथा मासे सिरादयो ज्ञेयाः। अत्र च बिसमृणालशब्देन सिरादीना सादृश्यदानाद् भूमिस्थाने शरीरमुदकस्थाने रक्त, पङ्कस्थाने माससूक्ष्माऽवयवाः समुपतिष्ठन्ते। तेन पङ्के यथा पार्थिवसूक्ष्मकणानारभ्य स्थूलपिण्डपर्यन्त परस्परं सश्लिष्टताऽस्ति तथा मासेऽपि गर्भाऽवस्थातः परिपक्वपार्थिवपरमाणूना परस्परसंश्लेषात् सङ्घीभावो भवति। तत्र ये सङ्घातोत्पादकाः सेल इत्याख्याः (Cells) सूक्ष्माऽवयवास्ते मासशब्दवाच्यतामासादयन्ति, (सङ्घातस्याऽपि तन्मयत्वेन मासशब्दवाच्यत्वमव्याहतमित्यन्यदेतत्) सङ्घातस्तु मासपिण्डमासपेश्यादिशब्दवाच्यता प्राप्नोति तत्र च (गर्भे) परिपक्वाधिकजलीयभागो द्रवरूपः सः रक्तवर्णत्वाद्रक्तपदवाच्यता लभते। पूर्वाऽपेक्षया सूक्ष्मतमपार्थिवभागयुक्तो योऽयमीषद्रक्तो जलीयभागः स लसीकाशब्दवाच्यता रसशब्दवाच्यता वा लभते। स च रसः पाकभेदान्नानाविधः कुत्रचिदधिकपाकमागम्य स्फटिकाऽनुकरणीयता भजति (यथाऽक्ष्णोर्मणिस्तेजोद्रवश्च) कुत्रचित् श्लेष्मातकस्वरसाऽनुकारिता, कुत्रचित्स्नेहाऽनुकारिता भजन्नानारूपाणि बिभर्ति। अत्र ये मासाऽवयवास्तेषा जीवाऽदृष्टवशाज्जायन्ते विन्यासविशेषास्ते कुत्रचित्सच्छिद्राः (यथा धमनीशिरारसायनीस्रोत.प्रभृतयः), कुत्रचिदच्छिद्राः (यथा ज्ञानतन्तवः), कुत्रचित्सूक्ष्मच्छिद्राः (यथा मूत्रोत्सिकाप्रभृतयः), कुत्रचित्स्थूलच्छिद्राः (यथा श्वासपथान्नपथप्रभृतयः) सन्तः पाकाऽऽकारविशेषाद् धमनीसिरास्नायुस्रोतोनाड्यादिवाच्यता लभन्ते तत्र पृथिव्यम्भोभागाः समवायिकारणानि वायव्याग्नेयभागौ स्वरूपपरिवर्तने हतू, आकाशश्चाऽवकाशहेतुरिति पञ्चमहाभूतसमुदायाद् (शुक्रशोणितसयोगरूपात्) द्रवप्रधानाशादेवेद समस्त शरीर निष्पद्यते। समस्तस्यैककारणत्वेऽपि पाकाऽऽकारादिविशेषैस्तत्तद्विशेषा समुदयन्ते। साधारणव्यवहारे (लोके शास्त्रे च) मासशब्देन योऽय समग्रशरीर-

ग्रहणस्य व्यवहारः प्रसृतः स प्रथमतो गर्भे मांसाकारस्य समुदयादेवेति भगवता धन्वन्तरिणा "यथा विसमृणालानी" ति पद्येन दर्शितः। इममेवाऽभिप्रायमाश्रित्य "त्वङ्मांससश्रितो वायुस्त्वग्दाहेनैव शाम्यति। मांसे दग्धे हि शाम्यन्ति सिराम्नाय्वस्थिसन्धिजा.॥" इत्यग्निकर्मविध्यध्याये चतुर्थसूत्रटीकायां डल्हणेन भद्रशौनकीय वाक्यं लिखितम्। तत्र मांसदाहेन यत्सिरास्नाय्वस्थिसन्धिजानां रोगाणां प्रशम उक्तः स शिरादीनां तदभिन्नत्वाऽभिप्रायेणैव, अतो मांसस्य सर्वधातुव्यापकत्वम्। योऽयं मांससङ्घात. स व्यवहारार्थं पेशीशब्देन व्यवहृतः। तासाञ्च सुश्रुते पञ्चशतानि सङ्ख्या निर्दिष्टा यथा—"पञ्च पेशीशतानि भवन्ति॥ सु. शा. ५।३७॥" मांसाऽवयवसङ्घात॰ परस्पर विभक्त॰ 'पेशी' इत्युच्यते इति डल्हण.। अत्र केचिन्मांसाशयाऽऽवरणानां पेशीशब्दवाच्यतामभिदधति ते त्वेकान्ततो बालिशा एव। "स्त्रीणान्तु विंशतिरधिका, दश तासां स्तनयोरेकैकस्मिन् पञ्च पञ्च यौवने तासां परिवृद्धि॰। अपत्यपथे चतस्रः तासां प्रसृतेऽभ्यन्तरतो द्वे मुखाश्रिते बाह्ये च वृत्ते द्वे, गर्भच्छिद्रसश्रितास्तिस्रः। शुक्रार्तवप्रवेशिन्यस्तिस्र एव। सु. शा. ५।३९" इत्यत्र स्पष्टतया मांसपिण्डानामभिधानात् आवरणसङ्ख्यायास्तु इयत्ता कर्तुं न कोऽपि प्रभवेत्। एकस्मिन् मांसपिण्डे तदवयवा॰ (मांसशब्दवाच्याः) सेलाख्याः (Cells) कोटिशः सन्ति, ते च सूक्ष्मदर्शकयन्त्रेण दृष्टाश्चेत् सर्वेऽपि सूक्ष्माऽऽवरणाऽऽवृता. सन्तीति प्रत्यक्षतया दृश्यन्ते पृथक्पृथक् परिस्पन्दयुक्ताश्च। सोऽयं परिस्पन्दो जीवनशक्तिविशिष्टत्वाद् दृश्यते। तत्राऽपि दिव्यचक्षुर्भि र्योगिभि र्ध्यानविषयीकृताश्चेत् तदीयसूक्ष्मपरमाणवः प्रकृतिपर्यन्त सावरणा. सव्यापाराश्च ध्यानविषयीभवन्ति। अस्या एव रचनाया वैचित्र्यात् परश्शतशिल्पिभि र्न हि जीवत्सृष्टिः सर्जयितु शक्या। प्रकृतिमारभ्य यावन्ति कार्याणि भवन्ति तावन्ति प्रायश आवरणविशिष्टानि भवन्ति, अत एव स्थूलकार्येषु "सप्ताऽस्यासन् परिधयस्त्रिः सप्त समिधः कृताः। देवा यद्यज्ञ तन्वाना अबध्नन् पुरुषं पशुम्॥ वा. स. ३१।१५" अस्य=पुरतो दृश्यमानस्य विश्वस्य सप्त परिधयः=परिधय इव परिधयः अर्थात् सप्ताऽऽवरणानि आसन् सन्ति। प्रतिब्रह्माण्ड पञ्चतन्मात्राऽहङ्कारमहता सर्वकार्यजातकारणाना आवरणानि सन्ति। एव सप्ताऽऽवरणै र्विभक्ताः सहस्रशो ब्रह्माण्डा मिलित्वा प्रकृत्याख्येन महाऽऽवरणेन प्रतिवेष्टिता इति। अत्र त्रिरावृत्ताः सप्त समिधः कृताः पञ्च महाभूतानि पञ्च तन्मात्राणि एकादशेन्द्रियाणि इति त्रिःसप्त एकविंशतिः समिधः दीप्तिसाधनानि कृताः निष्पादिताः। देवा यत् यज्ञ विराड्रूपतया विष्णु तन्वाना हृदि विस्तारयन्तः पुरुषं परमेश्वर पशुं=पश्यतीति पशुस्त सर्वद्रष्टार अबध्नन् हृदि स्थापितवन्तः, इति ब्रह्माण्डरचना प्रदर्शिता। तत्र सप्ताऽऽवरणानि अभिहितानि, पुरुषस्य च समस्तविश्वस्य सम्मितत्वेन प्रतिपादनात् ("पुरुषोऽयंलोकसम्मितः" च. शा. ५।३) सप्ताऽऽवरणस्थाने पुरुषे सप्तत्वचो भवन्ति, यथा—"तस्य खल्वेवं प्रवृत्तस्य शुक्रशोणितस्याऽभिपच्यमानस्य क्षीरस्येव सन्तानिकाः सप्तत्वचो भवन्ति। तासां प्रथमाऽवभासिनीनाम, या सर्ववर्णानवभासयति पञ्चविधां च छायां प्रकाशयति, सा व्रीहेरष्टादशभागप्रमाणा, सिध्मपद्मकण्टकाऽधिष्ठाना। द्वितीया लोहितानाम, षोडशभागप्रमाणा, तिलकालकन्यच्छव्यङ्गाऽधिष्ठाना। तृतीया श्वेता नाम द्वादशभागप्रमाणा, चर्मदलाऽजगल्लीमशकाऽधिष्ठाना। चतुर्थी ताम्रानामाऽष्टभागप्रमाणा, विविधकिलासकुष्ठाऽधिष्ठाना। पञ्चमी वेदिनी नाम व्रीहिपञ्चभागप्रमाणा, कुष्ठविसर्पाऽधिष्ठाना। षष्ठी रोहिणी नाम व्रीहिप्रमाणा ग्रन्थ्यपच्यर्बुदश्लीपदगलगण्डाऽधिष्ठाना। सप्तमी मांसधरा नाम व्रीहिद्वयप्रमाणा, भगन्दरविद्रध्यर्शोऽधिष्ठाना॥ सु॰ शा. ४।४" इति। एवमेव प्रायो जङ्गमस्य सर्वेऽवयवाः प्रत्येक सप्ताऽऽवरणविशिष्टा भवन्ति। अतिशयित प्रपाचिते क्षीरे या सन्तानिका निर्वर्तते तस्यामपि सप्ताऽऽवरणपटलानि भवन्ति। सन्तानिकाऽपि मध्यत॰ कर्तयित्वा सूक्ष्मयन्त्रेण दृश्येत चेत् ? तस्यां सहस्रशः सूक्ष्मच्छिद्राणि वाष्पोद्गमनजन्यानि दृश्यन्ते तैश्छिद्रै

जालमिव विरचितं दृश्यते तत्र प्रतिच्छिद्रं प्रतिप्रधि च स्वतन्त्राण्यावरणानि भवन्ति तर्हि ईश्वरेण निर्मितशारीरधात्ववयवेषु सूक्ष्माऽऽवरणानि यथौचिति सप्तसङ्ख्यापर्यन्तानि कथं न भवन्ति इति सूक्ष्मशरीरतत्त्ववादिना 'मतम् । उत्तममुक्तासु सप्त पटलानि प्रत्यक्षदृश्यानि 'तत्राऽधिकाऽऽवरणकृतैवोत्तमताऽस्ति' इति रत्नभेदज्ञाना परीक्षणम् । तत्र यथायथाऽऽवरणहीनता दृश्यते तथातथाऽल्पमूल्यता जायते । अयञ्च नियमः समस्तसृष्टे र्महदादिसप्तकारणाऽपेक्षोऽस्ति । कुत्रचिदधिकान्यप्यावरणानि भवन्ति कुत्रचिच्च न्यूनान्यपि, परन्तु तेनाऽपवादभूतेनौत्सर्गिको नियमो न विहन्यत एव । एवं सत्यावरणानां पेशीत्वस्वीकारे पञ्चशतसङ्ख्यात्वकथनं न केनाऽपि प्रकारेण सङ्गच्छेत । तथा च—" **यथार्थमूष्मणा** युक्तो वायुः स्रोतांसि दारयेत् । अनुप्रविश्य पिशितं पेशी र्विभजते तथा ॥ सु. शा. ४।२८ " वायुः पिशितं मांसं अनु प्रविश्य पेशी र्विभजते, पेशी मांसपिण्डमिति डल्हणः । अत्र मांसाऽवयवाना सङ्घातेन धमनीस्रोत आदयः कथं निर्वर्तन्ते तदाऽऽचार्यो निर्दिशति यथार्थेत्यादिना—वायुः=समग्राऽवयवविभाजकः यथार्थं=यथाप्रयोजनं ऊष्मणा=शारीराऽग्निना युक्तः=संयुक्तः सन् स्रोतांसि धमनीप्रभृतीनि धात्वादिवहमार्गान् दारयेत्=यथायथं कार्यक्षमान् कारयेत्, तत्राऽपि तदेव पिशितं अनु शरीराऽवयवविभाजनाऽनुकूल्यं यथा स्यात्तथा प्रविश्य पेशीः=अनन्ताऽनन्तमूलकारणानि संयोज्य पिण्डरूपेण विभजते । पिशितं पेशी र्विभजते इत्यत्र पिशितमिति समवायिकारणम्, पेशीरिति कार्याणि मृदं घटान् करोतीतिवत् पिशिताद् भिन्ना एव पेश्यो जायन्ते इति प्रतिपादितम् । अनेन वाक्येन न कथञ्चिदपि आवरणानि समायान्ति किन्तु मांसपिण्डा एव लभ्यन्ते ते च शरीरे पञ्च शतानि प्रायशः सन्तीति सम्यक्त्वं प्रतीयते । " पञ्च पेशीशतानि भवन्ति । सु. शा. ५।३७ " अत्राऽपि " मांसाऽवयवसङ्घातः परस्परं विभक्तः पेशी " इत्युच्यते इति डल्हणेनोक्तम् । अन्यच्च " महत्यो मांसरज्जवश्चतस्रः पृष्ठवंशमुभयतः पेशीनिबन्धनार्थं द्वे बाह्ये आभ्यन्तरे च द्वे ॥ सु. शा. ५।१४ " अत्राऽपि मांसपिण्डानामेव बन्धनं सम्भवति न ह्यावरणानाम्, आवरणानां स्वयमेव बन्धनरूपत्वात् । " मृदुचर्ममांसपेशीषु उत्पलनालेषु च कर्णसन्धिबन्धनयोग्या । सु. सू. ९।४ " " मांसगते शोफाऽभिवृद्धिः शल्यमार्गाऽनुपसंरोहः पीडनाऽसहिष्णुता चोपपाकौ च । पेश्यन्तरस्थेप्येतदेव ॥ सु. सू. २६।१० " अत्र प्रथमोद्धरणे कर्णसन्धिबन्धनयोग्याया मांसपेशीषूपदेशान्मांसपिण्डा एव ग्रहीतुमुचिताः । द्वितीयोद्धरणे मांसपेश्योः पृथक्त्वेन कथनं दृश्यते तत्र स्वाऽवधिविभक्तो मांसपिण्डः पेशीशब्दवाच्यः, तदीयैकदेशस्तु मांसशब्देनाऽभिप्रेत इति न दोषः । अस्मिन् वाक्ये 'चोपशोफवर्जमिति, त्वसम्बद्धमेव प्रतीयते । एकदेशस्थिते चोपशोफौ स्यातां तर्हि समस्तदेशे तत्प्रवेशात्कथं चोपशोफयोरभाव इति स्पष्टमेव विरोधः । कदाचिदयं ग्रन्थस्थः पाठो भवेत्तर्हि चोपशोफबहुलमित्येव स्यात् । बहुलस्थाने वर्जमिति लेखकादिप्रमादेन सञ्जात इति प्रतीयते अन्यच्च नष्टशल्यप्रकरणे—" तानि वेगक्षयात् प्रतीघाताद्वा त्वगादिषु व्रणवस्तुष्ववतिष्ठन्ते धमनीस्रोतोऽस्थिविवरपेशीप्रभृतिषु वा शरीरप्रदेशेषु ॥ सु. सू. २६।९ " इत्यत्राऽपि पेशीषु बाणादेरवभङ्गेन स्थितेः कथनान्मांसपिण्डमेव ग्रहीतव्यम्, न तदीयाऽऽवरणं सम्भवतीति । कुत्रचिच्च पेशीशब्दं मुक्त्वा मांसपिण्डशब्द एव व्यवहृतोऽस्ति यथा—" मांसदुष्टौ गुरू स्थूलौ मांसपिण्डवदुद्गतौ । सु. नि. १६।१० " " जिह्वां समन्ताद्भृशवेदना ये मांसाङ्कुराः कण्ठनिरोधिनः स्युः ॥ सु. नि. १६।४८" इत्यत्र मांसाङ्कुरशब्देन मांससङ्घात एव विवक्षितः, सूक्ष्ममांसतन्तुभिः कण्ठनिरोधित्वाऽसम्भवात् । तत्र दोषवशाद् गलाऽश्रितपेश्या एव विभागा उच्छूनाः सन्तोऽङ्कुरत्वेन परिणता बोध्याः । तत्तत्पेश्याः प्रान्तीयभागाः सङ्घीभूय रज्ज्वाकारतां भजन्ति तत्र रक्तस्य स्वल्पसञ्चाराच्छ्वेतवर्णास्सन्तः काठिन्यञ्च भजन्तः पेश्याः पृथग्भूता इव लक्ष्यन्ते ते च सन्ध्यस्थिबन्धन-

कारिणो निष्पद्यन्ते तेचाऽतिस्थौल्य लभमानाः कण्डराशब्दवाच्या भवन्ति, व्यवहारार्थ तयो र्नाम्नि विशेषः कृतोऽस्ति। सुश्रुतेन तु भेदचतुष्टय प्रतिपादितम् यथा—"स्नायूश्चतुर्विधा विद्यात्तास्तु सर्वा निबोध मे। प्रतानवत्यो वृत्ताश्च पृथ्व्यश्च शुषिरास्तथा ॥ प्रतानवत्यः शाखासु सर्वसन्धिषु चाप्यथ। वृत्तास्तु कण्डराः सर्वा विज्ञेयाः कुशलैरिह ॥ आमपक्वाशयान्तेषु वस्तौ च शुषिराः खलु। पार्श्वोरसि तथा पृष्ठे पृथुलाश्च शिरस्यथ ॥ सु. शा. ५।३०–३१–३२" स्नायूना कार्यञ्च तत्रैव प्रतिपादितम् यथा–"नौ र्यथा फलकाऽऽस्तीर्णा बन्धनै र्बहुभि र्युता। भारक्षमा भवेदप्सु नृयुक्ता सुसमाहिता ॥ एवमेव शरीरेऽस्मिन् यावन्तः सन्धयः स्मृताः। स्नायुभि र्बहुभिर्बद्धास्तेन भारसहा नराः ॥ सु. शा. ५।३३-३४" स्नाव्ना मांसविशेषत्वेऽपि व्यवहारार्थे पृथक्सञ्ज्ञा ( स्नायूकण्डरा इति ) कृताऽस्ति यथा–"मांसान्यस्य शातय स्नावान्यस्य सवृह ॥ अथर्व० १२।११।८" "यदा केशानस्थि स्नावमास मज्जानमाभरत्। शरीर कृत्वा पादवत् क लोकमनु प्राविशत् ॥ अ. ११।१०।११" "कुतः केशान् कुतः स्नावः कुतो अस्थीन्याभरत्। अङ्गा पर्वाणि मज्जान को मास कुत आभरत् ॥ अ. ११।१०।१२" इत्यादीनि वेदे च वाक्यानि दृश्यन्ते। एषामाकारश्च शणादिनिर्मितरज्जुरिव कार्यमपि तथैवाऽस्ति यथा–"शणजक्षौमसूत्राभ्या स्नाय्वा वालेन वा पुनः। मूर्वागुडूचीतानैर्वा सीव्येद्वेल्लितकं शनैः ॥ सु. सू. २५।२१" स्नायूना भङ्गे महत्यापत्ति सन्धिशैथिल्यात् यथा–"न ह्यस्थीनि न वा पेश्यो न शिरा न च सन्धयः। व्यापादितास्तथा हन्युर्यथा स्नायु. शरीरिणम् ॥ सु. शा. ५।३५" यत्तु कैश्चिज्ज्ञानतन्तूना स्नायूत्वमभिमत, तदेकान्ततोऽसङ्गतम् "गूढसन्धिसिरास्नायुः संहताङ्गः स्थिरेन्द्रियः। उत्तरोत्तरसुक्षेत्रो यः स दीर्घायुरुच्यते ॥ सु. सू. ३५।५" इत्यत्र यत्स्नायूना गूढत्वमुक्त तन्न ज्ञानतन्तुषु सम्भवति तेषा नित्यमेव गूढत्वात्, विशेषणस्य सम्भवव्यभिचारयोरेव सङ्गतत्वात्। किञ्च–"अङ्गुलीगुल्फजठरहृद्वक्षोगलसंश्रितः। स्नायुप्रतानमनिलो यदा क्षिपति वेगवान् ॥ विष्टब्धाक्षस्तब्धहनु भग्नपार्श्वः कफ वमन्। आभ्यन्तर धनुरिव यदा नमति मानवः ॥ तदास्याभ्यन्तरायामं कुरुते मारुतो बली। बाह्यस्नायुप्रतानस्थो बाह्यायाम करोति च ॥ सु. नि. १।५४–५५" इत्यत्र ज्ञानतन्तुविकृतौ न हि बाह्याऽऽभ्यन्तरायामयोः सम्भवो भवति। यद्यपि ज्ञानतन्तूनामप्युक्तप्रकारेण मासे एवाऽन्तर्भावोऽस्ति परन्तु तत्रोपादानकारणस्यैकत्वेऽपि सहकारिकारणाना वैचित्र्यात् तथात्व सञ्जातम्। एवमन्यत्राऽपि एकस्मात्कार्यादन्यस्मिन् कार्ये महद्वैचित्र्य दृश्यते यथा मृत्पात्राद्रत्नादिपात्रेषु। तत्र यद्यपि मृत्त्व समानमस्ति परन्तु सहकारिकारणस्य तेजसोऽधिकव्यापारादीदृशी विचित्रता सञ्जाता यन्न साधारणजनाः प्रतियन्ति यद्विविधपात्रेषु मृत्त्वमस्त्येवेति तथा ज्ञानतन्तुषु विद्युच्छक्तेरधिकतया वर्तमानत्वेन विशेषव्यवहारे न माससाधारणत्वेन परिगणना भवितुमर्हति। अत एव व्यवहारार्थे शारीरशास्त्रे पार्थक्येन सञ्ज्ञा कृताः सन्तीति पूर्वमवोचाम। ज्ञानतन्तुरचनायाः स्थानमपि पृथक्त्वेन स्थापित यथा–"मूलाच्च द्व्यङ्गुलादूर्ध्वं सुषुम्णामूलरन्ध्रगम्। वादिवेदार्णलसित पङ्कज कनकप्रभम् ॥ तत्र विद्युल्लताकारा तेजोराशिमणीयसीम्। कुलकुण्डलिनीमूर्ध्वं न्यसेत् षट्चक्रभेदिनी—॥" मित्यादिभिः तन्त्रशास्त्रे सुषुम्णाकाण्डे विद्युच्छक्तेरेव प्रधानताऽस्ति, अत एव मासमयत्वेऽपि ज्ञानतन्तूनां समग्रशरीरसञ्चालकत्वमस्ति। भेलेनाऽपि सूत्ररूपेणैतत्सूचितम्—"वेगादानानि विद्युतः। भेल शा. ७॥" वेगाना=चेष्टासञ्ज्ञादिप्रदवेगानां आदानानि=आसमन्तात्प्रवर्तनानि विद्युतः कार्याणीति। यद्यपि पक्षाघातविशेषे ज्ञानतन्त्वाघातोऽपि कारणमस्ति परन्तु तन्न सर्वत्र, अतः स्नायूना ज्ञानतन्तुत्वापादन शारीरशास्त्रस्य व्याकुलीकरणमेवाऽस्ति। ननु पेशीनां प्रान्तीयभागा एव कण्डराः स्नाय्वश्चेति स्वीक्रियते तर्हि तत्र पेशीतः कथ वैलक्षण्य सञ्जातमिति चेदस्य निराकरणं सुश्रुतेनैवाऽकारि यथा—"मेदः स स्नेहमादाय सिरास्नायुत्वमप्यथ। सिराणान्तु मृदुः पाकः

स्नायूनाञ्च ततः खरः॥ आशय्याभ्यासयोगेन करोत्याशयसम्भवम्। सु.शा.४।२९–३०" स वायुः=कर्ता ऊष्मणा स्नेहमादाय मेदो विभजते, अर्थात् उदरे मेदश्चिनोति अथ एवं सिरास्नायुत्वं विभजते अर्थात् सिरात्वं=सिरास्वरूपं स्नायुत्वं=स्नायुस्वरूपञ्च विभजते। ननु समवायिकारणस्यैकत्वेऽपि कथमेतद्वैचित्र्य सञ्जायते उच्यते आह "सिराणान्तु मृदु पाक.०" सिराणामशुद्धरक्तवाहिनीनां धमनीरसायनीनामप्युपलक्षणमेतत्, अत्र मृदुः पाको भवति निरन्तररससम्भृतत्वात्। स्नायूनाञ्च=पेशीप्रान्ताना खरः पाको भवति अल्परसगमनात्। एतच्च वृक्षादावपि दृष्टचरम्। यत्र (मूलादौ) रससञ्चयोऽधिकतरोऽस्ति तत्र कोमलत्वं, यत्र च (शाखादौ) रसाऽल्पत्वं तत्र मूलाद्यपेक्षया भवत्येव खरत्वम्। एतच्च सहकारिकारणवैचित्र्यात्सञ्जायते, अतो मासमयत्वे न काऽपि शङ्काऽस्ति अत्र च "मेदसः स्नेहमादाय शिरा स्नायुत्वमाप्नुयात्" इति पाठो लेखकप्रमादाद्भ्रष्टतामवाप स सुधीभिश्शोधनीयः। तत्कारणञ्च 'मेदः स स्नेहमादाय, इत्यत्र अर्थानवगम एव प्रतिभाति तेन पाठे भ्रष्टता सञ्जाताऽस्ति। स वायुः मासपेशीषु आशय्य आसमन्तात् निवास कृत्वा हृदाद्याशयाना सम्भवमुत्पत्तिं करोति। अतः पाकाऽऽकारयोर्वैचित्र्यात्सर्वस्य (शरीराऽऽवयवसङ्घातस्य) व्यवहारार्थं नामविशेषकल्पनाऽस्तीत्यलमतिविस्तरेण।

(सं. ११९) कीकसाः—"ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनूक्यात्। अथर्व० २।३३।२" "यः कीकसाः प्रशृणाति तलीद्यमवतिष्ठति। अ. ७।८०।३" "श्येनः क्रोडोऽन्तरिक्षं पाजस्यं बृहस्पतिः ककुद् बृहतीः कीकसाः। अ. ९।१२।५" "या हृदयमुपर्षन्त्यनुतन्वन्ति कीकसाः। अ. ९।१३।१४" "शिरो हस्तावथो मुखं जिह्वा ग्रीवाश्च कीकसाः। अ. ११।१०।१५" इत्यादिस्थलेषु सायणेन जत्रुवक्षोगताऽस्थिभ्य इत्यस्थिविशेषेऽस्थिसाधारणे च कीकसाशब्दोऽस्थिपरत्वेन व्याख्यातस्तथाऽपि सोऽर्थोऽश्रद्धेयः। "यः कीकसाः प्रशृणाति" इत्यत्र राजयक्ष्माणि कीकसाना प्रशरणमुक्तं तच्च प्रथमतो न कठिनाऽस्ना किन्तु तरुणाऽस्थ्नामेव कीटैराक्रमणजन्यं भवति। कठिनाऽस्थिविशरणाऽवधि तु जीवनमेव विशीर्यते। यद्यस्थिसाधारणपरः कीकसाशब्दः स्यात्तर्हि "ग्रीवाभ्यस्त उष्णिहाभ्यः कीकसाभ्यो अनूक्यात्। अ. २।३३।२" "अस्थिभ्यस्ते मज्जभ्यः स्नावभ्यो धमनिभ्यः अ. २।३३।६" इत्यत्र कीकसाभ्य—अस्थिभ्य इति द्वयस्योपादान नोपलभ्येत। अतः कीकसाशब्दस्तरुणास्थिपरो बोध्यः यथा—"पर्शवो बृहत्यः। कीकसाः ककुभः। सोन्तरेण त्रिष्टुभश्च ककुभश्च बृहतीरुपदधाति तस्मादिमा उभयत्र पर्शवो बद्धाः कीकसासु च जत्रुषु च॥ शत० ब्रा० ८।६।२।१०" इत्यत्र पृष्ठकशेरुकासम्बद्धतरुणाऽस्थीनि कीकसाशब्देनाऽभिप्रेतानि, वक्षोऽस्थिसंलग्नानि च जत्रुशब्देन स्पष्टतया कथितानि। अतो न कीकसाशब्दोऽस्थिसाधारणपरः, न वा तरुणाऽस्थिसाधारण्येन प्रयुज्यते किन्तु तरुणास्थिविशेषपरत्वेन प्रयुज्यते। "मरुता स्कन्धा विश्वेषा देवाना प्रथमा कीकसा रुद्राणा द्वितीयाऽऽदित्याना तृतीया वायोः पुच्छं० यजु० २५।६" इत्यत्र पुच्छोपरिष्टाद्याऽस्थिपङ्क्तिः सा कीकसा इति महीधरेण व्याख्यातमपि नाऽस्थिसाधारण्य बोधयति, तत्रत्याऽस्था तरुणाऽस्थिमयत्वात् तस्मात्कीकसा अस्थीनीति अस्थिसाधारण्येन सायणस्य व्याख्यानं न समीचीनमिति दिक्।

## अथौजोविवरणम् (सं. १२०)

ओज-इति किं भवितुमर्हतीति विचार्यते। तत्र ऊर्जयति बलयुक्तं प्राणयुक्तं वा करोति "ऊर्ज बलप्राणनयोः। (चु.) उब्जति ऋजूकरोति वा ओजः, असुनि बाहुलकाद्रूपसिद्धिः। "ओज ऊर्जयतेर्वोब्जतेर्वेति" निरुक्तम् (६।८।१) ओजतेर्वोब्जतेर्वेति पाठस्त्वसङ्गत एव, ओजते र्धातोरभावात्। जलनामसु बलनामसु च तत्पाठात्सोमात्मकं बलाधिकरणञ्च भवतीत्यनायासेन सिद्धम्। इममेवाऽभिप्रायमाश्रित्य— "ओजः सोमात्मकं

स्निग्धं शुक्लं शीतं स्थिरं सरम् । विविक्तं मृदु मृत्स्नञ्च प्राणायतनमुत्तमम् ॥ देहस्याऽवयवस्तेन व्याप्तो भवति देहिनाम् । तदभावाच्च शीर्यन्ते शरीराणि शरीरिणाम् ॥ अभिघातात्क्षयात्कोपाच्छोकाद्ध्यानाच्छ्रमात्क्षुधः । ओजः संक्षीयते ह्येभ्यो धातुग्रहणनिःसृतम् । तेजः समीरित तस्माद्विस्रंसयति देहिनः ॥ सु. सू. १५।२५–२६–२७" इत्यनेन पाठेन निरुक्तस्थितपाठस्य व्याख्यानमनुपूर्व्वशः कृतं प्रतिभाति । चरकेण तु निरुक्ते उदकनामसु पाठ दृष्ट्वा शरीरे तेन ( ओजसा ) किं ग्राह्यमिति बहुशो विचार्य प्रायः शरीरे सर्व्वधातुष्वपि जलीयभागस्य विद्यमानत्वात्तदेवभवेदितिनिर्धार्य कुत्रत्य तद्ग्रहीतव्यमिति संदिह्य हृदयस्य रसवहने मुख्यत्वात् तत्रस्थस्य रसस्य रक्तरूपत्वात् तदेवरक्तमोजः शब्दवाच्यमिति निरचायि । पुनरपि समस्तशरीरवर्तिनो रक्तस्य आवापोद्वापाभ्यां हृदि वर्तमानत्वात्समस्तशरीरस्थमेव रक्तमोजः शब्दवाच्य स्यादिति च सन्दिह्य यद्धृदयमात्रपोषकं रक्त तदेवौजःशब्दवाच्यं, तदधीनत्वाद्धृदयकार्यस्य । तच्चेदवरुद्ध्यते तर्हि हृदयमेव निष्क्रियं स्यादिति मत्वा "हृदि तिष्ठति यच्छुद्ध रक्तमीपत्सपीतकम् । ओजः शरीरे सङ्ख्यातं तन्नाशान्ना विनश्यति ॥ च. सू. १७।७४" अत्र हृदयपोषकं यद्रक्तं तन्नाऽतिशुद्धम्, हृदयपोषणेऽधिकतरं सिराया एव व्यापृतत्वात् । अत आह हृदि=हृत्पोषणार्थं यद्रक्त तिष्ठति तदीषच्छुद्ध नाऽतिस्वच्छमित्यर्थः । सपीतकं=धमनीस्थरक्तमिव नाऽत्यरुणम् । सपीतकञ्चेति विशेषणं रक्ते न युज्यते अनुपद्रुतरक्ते पीतिमाऽभावात् । यद्यपि रक्तक्लिन्नवस्त्रादेः साधारणप्रक्षालनाऽनन्तरमवशिष्टचिन्हे यत्किञ्चित्पीतिमा दृश्यते परन्तु सा सर्वस्मिन्नेव रक्तेऽस्ति न केवलं हृत्पोषके एव रक्ते इतिमहाश्छशयः । अस्य च क्षयः "व्यायामोऽनशनं चिन्ता रूक्षाऽल्पप्रमिताऽशनम् । वातातपौ भय शोको रूक्षपान प्रजागरः ॥ कफशोणितशुक्राणां मलाना चातिवर्तनम् । कालो भूतोपघातश्च ज्ञातव्याः क्षयहेतव. ॥ च. सू. १७।७५–७६" एतैरतैः कारणै निर्दिष्टः । यद्यपि निर्दिष्टहेतवः समग्रधातूना क्षयहेतवः सन्ति परन्तु हृदये सर्वतोऽभ्यधिकतर आघातोऽनुभूयते चिन्तास्थानत्वात् । आर्षसिद्धान्ते लिङ्गशरीरविशिष्टजीवस्य मुख्यस्थानत्वेन सुखदुःखादेः प्रतिभान तत्र शीघ्रतर भवति, अत एव वृद्धिहेतुपुत्रजन्मादेः श्रवणेन हृद्व्यापारस्याऽऽधिक्य जायते । एवं तन्नाशादौ तदीयव्यापारस्य क्षीणत्वात् सुखदु खयोस्तत्र प्रत्यक्ष भान भवतीति सर्वजनीनसिद्धान्तः । अतो हृत्पोषकरक्तस्य क्षयेऽन्यस्थानाऽपेक्षयोक्तहेतूनामधिकतया परिणामो दृश्यते । पुनश्च मदात्ययाऽधिकारे "गुरु शीत मृदु श्लक्ष्णं बहलं मधुर स्थिरम् । प्रसन्नं पिच्छिल स्निग्धमोजोदशगुण स्मृतम् ॥ च. चि. २४।३१" इति दशगुणान् ओजसो निर्दिश्य "गुरुत्व लाघवाच्छैत्य चौष्ण्यादम्लस्वभावतः । माधुर्यं मार्दवं तैक्ष्ण्यात्प्रसाद चाशुभावनात् ॥ रौक्ष्यात्स्नेह व्यवायित्वात्स्थिरत्व श्लक्ष्णतामपि । विकासिभावात्पैच्छिल्यं वैशद्यात्सान्द्रता तथा ॥ सौक्ष्म्यान्मद्य निहन्त्येवमोजसः स्वगुणै र्गुणान् ॥ च. चि. २४।३२-३३-३४" इत्यादिना मद्यस्यौजोविपरीतदशगुणैरोजसो दशगुणाना नाश उक्तः । तन्नाशात् "सत्त्व तदाश्रय चाशु सक्षोभ्य जनयेन्मदम् ॥ रसवातादिमार्गाणा सत्त्वबुद्धीन्द्रियात्मनाम् ॥ प्रधानस्यौजसश्चैव हृदयं स्थानमुच्यते ॥ अतिपीतेन मद्येन विहतेनौजसा च तत् । हृदय याति विकृतिं तत्रस्था ये च धातवः ॥ च. चि. २४।३५–३६" हृदयाश्रितरसवातादिमार्गाणा सत्त्वबुद्धीन्द्रियाणाञ्च विहते व्यापारे मदात्ययः समभ्युपैतीत्युक्तम् । तत्रेत्थ विचार्यते—सूत्रस्थाने हृत्पोषकरक्तस्यौजस्त्वं स्वीकृत्य कथमत्र तद्विस्मृत्य गुर्वादिदशलक्षणानि ओजस उक्तानीति । नहि रक्तस्य स्थिरत्वं शीतत्वञ्च सम्भवति किञ्च हृदयपोषकरक्तस्य नाऽतिशुद्धत्वात्तादृशी प्रसन्नताऽपि तत्र नास्तीति कथमाचार्येण पूर्वापरविरोधजनक वाक्यमुद्धृतमिति महान् संशयः समुपतिष्ठते, तत्रेद तत्त्वम्—"**ओजः** सोमात्मक स्निग्ध शुक्ल शीत स्थिर सरम् । विविक्त मृदु मृत्स्न च प्राणायतनमुत्तमम् ॥ देहस्याऽवयवस्तेन व्याप्तोभवति देहिनाम् । तदभावाच्च शीर्यन्ते शरीराणि शरीरिणाम् ॥ सु. सू. १५।२५-२६" इति सुश्रु-

तोक्ता ओजसो गुणा एते सन्तीति सामान्यतो हृदि सन्निधाय लिखितमस्तीति प्रतिभाति परन्तु सुश्रुतीयोपन्यासात् स्वोपन्यासस्य महदन्तरमस्तीति न विचारितम्। नहि सुश्रुतेन रूपोपकरक्तस्यौजस्त्वं स्वीकृतम्। तदीयसन्दर्भस्तु निरुक्तमनुरुद्ध्य सम्यगेवाऽऽस्ते। अत एव तस्य रूपविशेषमनिर्दिश्य देहस्याऽवयवोऽवयवसमुदायस्तेन (ओजसा) देहिना व्याप्तो भवतीत्युक्तम्। एतादृशः सूक्ष्मोऽप्यवयवस्तदीयांशो वा तादृशो नाऽस्ति य ओजसा रहितो भवति इति सुश्रुतीयाऽभिप्रायः। चरकेण तु कोशकारकीटेनेव "हृदि तिष्ठति यच्छुद्ध—" मित्यनेन वचनेन जालगृहं निरमायि। तेन शतशो निग्रहस्थानानि प्रादुर्भवन्ति। ननु सुश्रुतेन निरुक्तवचनात्किं निरधारीति प्रश्ने? उच्यते—निरुक्ते उदकनामसु "अर्णः। क्षोदः। क्षद्म। नभः। अंभः। कबन्धम्। सलिलम्। वाः। वनम्। घृतम्। मधु। पुरीषम्। पिप्पलम्। क्षीरम्। विषम्। रेतः। कशः। जन्म। बृबूकम्। बुसम्। तुग्र्या। बुर्बुरम्। सुक्षेम। धरुणम्। सिरा। अररिन्दानि। ध्वस्मन्वत्। जामि। आयुधानि। क्षप। अहिः। अक्षरम्। स्रोतः। तृप्ति। रसः। उदकम्। पय.। सरः। भेषजम्। सहः। शवः। यहः। ओजः। सुखम्। क्षत्रम्। आवयाः। शुभम्। यादुः। भूतम्। भुवनम्। भविष्यत्। महत्। आपः। व्योम। यशः। महः। सर्णीकम्। स्वृतीकम्। सतीनम्। गहनम्। गभीरम्। गम्भरम्। ईम्। अन्नम्। हविः। सद्म। सदनम्। ऋतम्। योनिः। ऋतस्ययोनिः। सत्यम्। नीरम्। रयिः। सत्। पूर्णम्। सर्वम्। अक्षितम्। बर्हि। नाम। सर्पिः। अपः। पवित्रम्। अमृतम्। इन्दुः। हेम। स्वः। सर्गाः। शम्बरम्। अभ्वम्। वपु। अम्बु। तोयम्। तूयम्। कृपीटम्। शुक्रम्। तेजः। स्वधा। वारि। जलं। जलाषम्। इदमित्येकशतमुदकनामानि॥ नि. १।१२॥" इत्येतेषु ओजः शब्दः पठितः। शारीरवर्णने "कस्मिंश्चिदप्यवयवे शुद्धजलाऽभावाद् द्रवप्रधानानि च सर्वाण्यप्यङ्गानि सन्तीत्यभिप्रेत्योक्तम्—देहिनामवयवस्तेन व्याप्तो भवतीति। निरुक्तनामसु च पुरीष क्षीर-रेतः रस शुक्रादीनामपि शरीरीयवस्तूना यत् परिगणनं कृतमस्ति तज्जलीयभागप्रचुरत्वेनैव। अतो मनुष्यशरीरे इतरभूताऽपेक्षया जलीयभागस्याऽधिकत्वेन वर्तमानत्वात्सर्वत्रैव तद् व्याप्तं भवतीति हृदि विचार्य—"देहस्याऽवयवस्तेन व्याप्तोभवतीत्युक्तम्। नन्वेव चेद्रक्तादीनामप्योजस्त्वप्रसक्तौ शरीरतत्त्वगणनेव दुर्वारा स्यादिति चेन्मैवम्?—"रसाद्रक्तं ततो मांसं मांसान्मेदः प्रजायते। मेदसोऽस्थि ततो मज्जा मज्ज्ञः शुक्रं तु जायते॥ सु. सू. १४।१०॥" इत्यनेन वाक्येन पूर्वाऽध्याये सप्तधातूना नाम्ना परिगणितत्वेन न तेषामोजस्त्वेन ग्रहणमिति सुवचत्वात्। नन्वेवं तर्हि सप्तधात्वतिरिक्तं किमवशिष्टमितिचेत्? उच्यते—बलनामस्वपि निरुक्ते ओजसः पाठोऽस्ति। "ओज ऊर्जयतेर्वोब्जतेर्वा। नि. ६-८-१॥" इत्यत्र ओजःशब्दस्य ऊर्जधातो रुब्जतेर्वा उत्पत्तिः प्रदर्शिता। एतेनैतद्ध्वनितम्—"ऊर्ज बलप्राणनयोः" येन वस्तुना प्राणिनां बलमुद्भवति जीवनञ्च निर्व्यूढं भवति तदेवौजः। उब्जतेरुत्पत्तिकथनाद् यद्वस्तु शरीराऽवयवानामृजूकरणार्थे उपयुज्यते तदोज इत्यनेन समस्तशरीरवर्ती यः स्नेहः स ओज शब्दवाच्यः। यद्यपि मेदोमज्ज्ञोः स्नेहरूपत्वमेवाऽस्ति परन्तु तयोः स्वतन्त्रत्वेनोपदेशान्नौजस्त्वेन परिगणना। तत्र मेदस उदरस्थानमुक्तं मज्ज्ञश्चाऽस्थिरन्ध्राणि, इत्येतद्द्वय स्थानद्वयेऽवरुद्धम्। एतत्सहितसमस्तशरीरचक्रे यद् व्यापकत्वेन स्नेहोऽवतिष्ठते स ओज.शब्दवाच्य इति धन्वन्तरेराशयः। "रागपक्त्योजस्तेजोमेधोष्मकृत्पित्तं पञ्चधा प्रविभक्तमग्निकर्मणा अनुग्रहं करोति॥ सु. सू. १५।५" इत्यत्र ओजसः पित्तनिष्पादनीयताया उक्तत्वेन आग्नेयत्वं स्यादिति तु न शङ्क्यमेव? सर्वेषामपि पदार्थाना पाके पित्तस्यैवाऽविकृतत्वात् न तेन सौम्यत्वं तस्य (ओजसः) व्याहन्येत। न च शङ्क्यं "ततः स्वयम्भूर्भगवानव्यक्तो व्यञ्जयन्निदम्। महाभूतादिवृत्तौजाः प्रादुरासीत्तमोनुदः॥ मनु० १।६" इत्यत्र स्नेहस्य स्नेहजन्यशक्तेर्वा अभावोऽस्तीति, तत्राऽपि "सोऽभिध्याय शरीरात्स्वात्सिसृक्षुर्विविधाः प्रजाः। अप एव

ससर्जादौ तासु बीजमवासृजत् ॥ मनु. १।८ ” इत्यनेनाऽपामेव सर्वकारणत्वस्योक्तत्वेन, सौम्यगुणस्यैव प्रधानताया उक्तत्वात् । सृष्टिप्रपञ्चे च न केवलस्य कस्यचिदपि भूतस्य विद्यमानताऽस्ति संसृष्टभूतैरेव सृष्टे र्निर्मितत्वात् । शक्तिमात्रे च विद्युच्छक्तेः प्रधानत्वेऽपि सौम्यत्वाऽनपायोऽस्ति विद्युतोऽप्यद्भ्य उद्भवत्वात् । चिकित्साशास्त्रे च प्रायशो द्रव्यरूपस्यैवौजसः कथितत्वात् । जलस्य सृष्टिप्रपञ्चे वह्निरुपादानं कारणमस्ति, अतो जलेऽग्नेरभावः केनापि साधयितुमशक्यः । अत एव निरुक्ते जलनामसु तेजश्शब्दोऽपि पठितः, ओजसि च तेजसोऽधिका मात्रास्ति समस्तशारीरधातुसारत्वात् । शरीरे यावन्तो मुख्यत्वेन जलीयपरिणामास्तेष्वितरभूतसमवायत्वेपि तर्पणगुणाऽविक्यात्सौम्यत्वमव्याहतम् । एतदभिप्रायेण तल्लक्षणं कृतमस्ति **ओजः**सोमात्मकमिति ( सु. सू. १५-१५ ) । अत्राऽप्युक्तलक्षणमोजो द्रव्यरूपं, तज्जन्या या शक्तिः सा बलशब्देनोच्यते, ननु “ बललक्षणं चात ऊर्द्ध्वं वक्ष्यामः । तत्र रसादीनां शुक्रान्तानां धातूनां यत्परं तेजस्तत्खलु ओजस्तदेव बलमित्युच्यते स्वशास्त्रसिद्धान्तात् । सु. सू. १५।२३ ” इत्यत्र ओजस एव बलत्वमभिहितं तत्कथमुच्यते तज्जन्या शक्ति र्बलमिति चेन्न ? तस्य वाक्यस्य प्रक्षिप्तत्वात् । “ प्राणिनां पुनर्मूलमाहारो बलवर्णौजसाञ्च ॥ सु. सू. १।२७ ” इत्यत्र स्पष्टतयौजसः पृथग्बलस्य कथितत्वात् । एवंविधानि बहूनि वाक्यानि प्रतिसंस्कर्तृभिः प्रक्षिप्तानि तेनेदं तन्त्रमाकुलीभूतमासीदित्याकलय्य नितरां खिद्यते चेतः । कथं महर्षिःस्वमुखेन पूर्वाऽपरविरुद्धानि वाक्यान्युच्चारयेत् ? अत एव—“ तस्य ( ओजसः ) विस्रंसो व्यापत् क्षय इति लिङ्गानि व्यापन्नस्य भवन्ति ॥ सन्धिविश्लेषो गात्राणां सदनं दोषच्यवनं क्रियासन्निरोधश्च विस्रंसे । स्तब्धगुरुगात्रता वातशोफो वर्णभेदो ग्लानिस्तन्द्रा निद्रा च व्यापन्ने । मूर्च्छा मांसक्षयो मोहः प्रलापो मरणमिति च क्षये ॥ १५।२८-२९ ” इत्यस्याग्रे ‘ भवन्ति चात्र ’ इत्यारभ्य ‘ मरणं च बलक्षये ’ इत्यन्तं त्रयः श्लोकाः ( त्रयो दोषा बलस्योक्ता व्यापद्विस्रंसनक्षयाः । विश्लेषसादौ गात्राणां दोषविस्रंसनं श्रमः ॥ अप्राचुर्यं क्रियाणाञ्च बलविस्रंसलक्षणम् । गुरुत्वं स्तब्धताऽङ्गेषु ग्लानि र्वर्णस्य भेदनम् ॥ तन्द्रानिद्रा वातशोफो बलव्यापदि लक्षणम् । मूर्च्छा मांसक्षयो मोहः प्रलापोऽज्ञानमेव च । पूर्वोक्तानि च चिह्नानि मरणञ्च बलक्षये ॥ ) स्पष्टतया प्रक्षिप्ताः सन्ति । यत्तु गद्योक्तमेवार्थं श्लोकैराह इतिडल्हणेनोक्तं तदप्यविचार्यैव लिखितम् । पूर्वोक्तसन्दर्भस्य त्रिभिः श्लोकैः सम्बन्धो विच्छिद्यते इयञ्च शृङ्खला चरके बहुत्र स्थाने दृश्यते परन्तु तत्र प्रतिसंस्कर्तॄणां नियम एव नास्ति, यस्य मनसि यत्सुष्ठु भातं तदेव लिखितम् । अत एव बहुत्र स्थाने पुनरुक्तयो दृश्यन्ते तमेव क्रममनुसृत्याऽत्रापि ( सुश्रुतेऽपि ) तथा कृतं प्रतीयते । पूर्वसन्दर्भादनन्तरं “ तत्र विस्रंसे व्यापन्ने च क्रियाविशेषैरविरुद्धै र्बलमाप्याययेत् नष्टसञ्ज्ञमितरन्तु वर्जयेत् । सु. सू. १५।३३ ” इत्यस्यैव सन्दर्भस्य संलग्नता प्रतिभाति लेखनशैलीसादृश्यात् । अतोऽग्रेऽपि ‘ तेजोऽप्याग्नेय ’ मित्यारभ्य ‘ लङ्घनानि क्षये विदधीत’ इत्ययमपि सन्दर्भः ( तेजोऽपि आग्नेयं क्रमशः पच्यमानानां धातूनामभिनिर्वृत्तमन्तरस्थं स्नेहजातं वसाख्यं स्त्रीणां विशेषतो भवति । तेन मार्दवसौकुमार्यमृद्वल्परोमतोत्साहदृष्टिस्थितिपक्तिकान्तिदीप्तयो भवन्ति । तत् कषायतिक्तशीतरूक्षविष्टम्भिवेगविघातव्यवायव्यायामव्याधिकर्षणैश्च विक्रियते । तस्यापि पारुष्यवर्णभेदतोदनिष्प्रभत्वानि विस्रंसने भवन्ति, कार्श्यं मन्दाग्निताऽथस्तिर्यक् च विच्युति र्व्यापत्तौ, दृष्टचित्रबलहान्यनिलप्रकोपमरणानि क्षये । तत्राऽपि स्नेहपानाऽभ्यङ्गप्रदेहपरिषेकस्निग्धलङ्घनानि क्षये विदधीत ॥ सु. सू. १५।३४ ॥ ) प्रक्षिप्तोऽस्ति । अत्राभिधेयार्थस्य “ अभिघातात्क्षयात्कोपाच्छोकाद् ध्यानाच्छ्रमात्क्षुधः । ओजः सक्षीयते ह्येभ्यो धातुग्रहणनिःसृतम् । तेजः समीरितं तस्माद्विस्रंसयति देहिनः ॥ सु. सू. १५।२७ इत्यनेनैव सूत्रेण कथितत्वात् । अतः स्पष्टतया प्रतिभाति यदयं सन्दर्भोऽपि निःसंशयं प्रक्षिप्त इति । कथमन्यथा सप्तविंशतितमे सूत्रे तेजसः ओजोविस्रंसने कारणमुक्त्वा

अस्मिन् सन्दर्भे वसाख्यस्नेहस्य तेजस्त्वमापादयेदाचार्यः। तस्मादिदं सन्दर्भद्वयमजागलस्तनायितं निष्कासनीयम्। ततश्च न कुत्राऽपि विरोधः उपस्थास्यत इति। उत्तरसन्दर्भविषये तु डल्हणेनाप्यनार्षत्वे पूर्वनिबन्धकर्तॄणा सम्मतिः प्रकटिताऽस्ति परन्तु सन्दर्भद्वयमप्यनार्षमस्तीति निःसंशयं प्रतिपत्तव्यम्। अवशिष्टेन च ग्रन्थेन द्रव्यरूपस्यौजसः क्षयनिदानचिकित्सितानि सङ्क्षेपेण वर्णितानि समायान्ति। सुश्रुतीयसिद्धान्तज्ञाऽगत्या चरकेणाऽपि पदेपदे स्वीकृतोऽस्ति यथा—" गुरुस्निग्धाम्ललवण भजतामतिमात्रशः। नवमन्नञ्च पानञ्च निद्रामास्यासुखानि च॥ त्यक्तव्यायामचिन्ताना संशोधनमकुर्वताम्। श्लेष्मा पित्तञ्च मेदश्च मांस चातिप्रवर्धते॥ तैरावृतगतिर्वायुरोज आदाय गच्छति। यदा वस्ति तदा कृच्छ्रो मधुमेहः प्रवर्तते॥ च. सू. १७।७७–७८–७९॥" इत्यत्र तैरिति पदेन श्लेष्मादयः परामृश्यन्ते, तत्राऽपि श्लेष्मादिषु योऽय वर्तमानस्नेहस्तमेक स्वक्रोडीकृत्य वस्तौ प्राप्नोतीति 'ओज आदाय' इत्यनेन स्पष्ट कथितं वर्तते स्नेहाऽतिरिक्तौजसोऽत्राऽभावात्। कदाचित् हृदि स्थितं रक्तरूपमेवाऽत्राऽप्योजोऽस्तीति वाच्यं ? तर्हि 'तन्नाशान्ना विनश्यती-, ति तत्रस्थसिद्धान्तेन तत्क्षणमेव मृत्युवशेन मधुमेहिनो भवितव्यम्' न हि तत्कालमेव मेहिनो म्रियमाणा दृश्यन्ते। हृदयपोषकरक्त एव ओजस्त्वस्वीकारे तस्य च वातेन वस्तावभ्यपहारे हृदयव्यापार एव स्थगितः स्यात्। स्थगिते च तस्मिन् मृत्यु दुर्वार एव, हृदयव्यापारस्थगनरूपमेव मृत्युरिति प्रसिद्धा सर्वजनीना प्रतीतिः। हृदयस्थगने योगिन एव जीवन्तो दृश्यन्ते नान्येऽपि देहधारिण इति सर्वशास्त्रसिद्धान्तश्च। अतोऽत्र यस्य वायुना वस्तावपकर्षणं प्रतिपादित स शरीरस्थः स्नेह एव। एवं ओजः" पुन मधुरस्वभाव, तद्यदा रौक्ष्याद्वायुः कषायत्वेनाऽभिससृज्य मूत्राशयेऽभिवहति, तदा मधुमेहिनं करोति॥ च. नि. ४।२३॥" इत्यत्राऽपि मधुरस्वभावस्यौजसः स्वस्यकषायरौक्ष्याभ्यां वातस्य संसर्गमुक्त्वा मूत्राशयेऽभिवहनमुदाहृतं तदपि शरीरस्थस्नेहस्यैव सम्भवति न पुनर्हृदयपोषकरक्तस्य। किञ्च "बिभेति दुर्बलोऽभीक्ष्ण ध्यायति व्यथितेन्द्रियः। दुश्छायो दुर्मना रूक्षः क्षामश्चैवौजसः क्षये॥ च. सू. १७।७३" इत्यत्र दुश्छायत्वदुर्मनस्त्वरूक्षत्वानि यान्युदाहृतानि तान्यपि शरीरस्नेहक्षये एव। अन्यच्च "व्यायामोऽनशनं चिन्ता०। च. सू. १७।७६" इत्यत्राऽपि ये ओजसः क्षयहेतवो निर्दिष्टास्ते स्पष्टतया शरीरस्नेहस्यैव। अन्यच्च "व्यवायाऽनशनाभ्या च शुक्रमोजश्च हीयते। च. चि. ८।२४" इत्यत्राऽपि शुक्रसाहचर्येण सर्वशरीरव्यापिनः स्नेहस्यैव कथनं सम्भवति। "स विमुक्तो ग्रहश्चन्द्रो विरराज विशेषतः। ओजसा वर्धितोऽश्विभ्या शुद्ध सत्त्वमवाप च॥ च. चि. ८।१०" इत्यत्र यदाऽश्विभ्या ओजसा (सर्वशरीरव्यापिना स्नेहेन) वर्धितः पूरितस्तदा चन्द्रो ग्रहः विशेषतो विरराज दीप्तो बभूव। इत्यत्राऽप्योजः पूरणेन या दीप्तिरुक्ता सा स्पष्टतरैव स्नेहजनितेति कस्य सहृदयस्याशय नाऽवगाहेत। किञ्च—" दश प्राणायतनानि तद्यथा—मूर्धा कण्ठो हृदयं नाभि र्गुदो वस्तिरोजः शुक्र शोणितं मासमिति। च. शा. ७।१२" इत्यत्र शोणिताद्धृदयाच्च पार्थक्येनौजसः प्राणायतनत्वमुक्तम्। यदि च हृदयपोषक रक्तमेवोजः स्यात्तर्हि हृदयग्रहणेनैव गतार्थत्वान्नौजः पृथक्तयोपन्यस्येत। न च वाच्य हृदयवर्त्योजो विशिष्ट वस्त्वस्तीति न तद्ग्रहणेनौजसो बोधो भवेदिति तादृशविशिष्टवस्तुनः प्रत्यक्षत्वाऽभावात्। "ओजो दशगुण स्मृतम्॥ च. चि. २४।३०" इत्यत्र चरकेणैव दृश्यमानपदार्थस्य गुणाना निर्दिष्टत्वाच्च न तस्याऽप्रत्यक्षत्व वक्तु कोऽपि सहृदयः प्रभवेत्। अन्यच्च "वातश्लेष्मक्षये पित्तं देहौजः स्रंसयेच्चरत्। ग्लानिमिन्द्रियदौर्बल्यं तृष्णा मूर्च्छां क्रियाक्षयम्॥ च. सू. १७।५९" इत्यत्र पित्तकृत यदौजसः स्रंसन तद् दृश्यमानपदार्थस्यैव सम्भवति तदभावे उत्तरार्धनिर्दिष्टानां विकाराणा सम्भवोऽपि स्नेहक्षये एव। अतो नौजस इन्द्रियाऽगोचरत्वं वक्तु युज्यते। "इह खल्वोजस्तेजः शरीरे नित्ये च भवतः। तयोः स्थानानि द्वादश भवन्ति तद्यथा—शोणितमांसमेदोऽस्थिमज्जशुक्रस्वेदपित्तश्ले-

ष्ममूत्रपुरीषाणीति ॥ भेल० शा. ५ " इत्यत्र भेलेनाऽपि समस्तधातवो मलाश्च ओजसः स्थानत्वेन निर्दिष्टाः । वर्तमानचरकग्रन्थस्य मूलमात्रेयसम्प्रदायः, भेलश्च साक्षादात्रेयस्य शिष्यो योऽग्निवेशसहाध्यायी, तदीयग्रन्थे न कुत्राऽपि हृदयमात्रपोषकस्य रक्तस्याऽन्यवस्तुनो वा ओजस्त्वेन निर्देशः कृतोऽस्ति । अतोऽत्र " हृदि तिष्ठति यच्छुद्ध रक्तमीषत्सपीतकम्–"मिति पद्य येन केनाऽपि प्रतिसंस्कर्त्रा प्रक्षिप्तमिति प्रतिभाति । एकेनाऽनेन पद्येन समस्तं तन्त्रमाकुलीभूतमास्ते । नच वाच्यं " यद्धि तत्स्पर्शविज्ञान धारि तत्तत्र संश्रितम् । तत्परस्यौजसः स्थानं तत्र चैतन्यसङ्ग्रहः ॥ च. सू. ३०।७ " इत्यत्र परस्यौजस इति कथनेन ओजसो द्वैविध्यमस्ति, परं साधारणञ्च तत्र परमोजो हृदयस्थायि, साधारणन्तु समस्तशरीरव्यापि स्नेहरूपमिति तथात्वेप्रमाणाऽभावात् । न चेद वाक्यमेव प्रमाण प्रत्यक्षवस्तुनि वाक्यमात्रस्याऽकार्यकरणात् । नच हृदयस्थितलिङ्गशरीरस्थमोजो वयं परौजःशब्देन ग्रहीष्याम इति वाच्य " पूर्वोत्पन्नमसक्त नियत महदादिसूक्ष्मपर्यन्तम् । संसरति निरुपभोगं भावैरधिवासित लिङ्गम् ॥ सा. का. ४० " इत्यत्र निरुपभोगत्वेन वर्णनात्तत्रत्यगुणानां वर्णनस्य चिकित्सायामनुपयोगात् । " शरीरेन्द्रियसत्त्वात्मसयोगो धारि जीवितम् । नित्यगश्चाऽनुबन्धश्च पर्यायैरायुरुच्यते ॥ तस्याऽऽयुषः पुण्यतमो वेदो वेदविदा मतः । वक्ष्यते यन्मनुष्याणा लोकयोरुभयो र्हितः ॥ च. सू. १।४२-४३ " अस्मिंस्तु शास्त्रे पञ्चमहाभूतशरीरिसमवायः पुरुष इत्युच्यते । तस्मिन् क्रिया, सोऽधिष्ठानम् । सु. सू. १।२१ " इत्यादौ सर्वत्र स्थूलशरीरे एव चिकित्साशास्त्रस्याऽधिकारकथनात् । स्नेहरूपस्य रक्तरूपस्य वा लिङ्गशरीरे कस्यचिदपि कथनस्याऽयोग्यत्वात् । ननु तर्हि परस्यौजस इति वाक्यस्य का गतिरिति चेत्? हृदि तिष्ठति यच्छुद्ध रक्तमित्यस्य पद्यस्य या गति. साऽस्याऽपि विशेषणस्याऽस्त्विति वदामः । मूलतश्छिन्ने तरौ नहि वियति तदाश्रितास्शाखा दृश्यन्ते तद्वत् । मरणासन्नपुरुषाणा शरीरात्स्नेहाऽपगमो भवति तेन रूक्षताऽधिक्यात्त्वचोभागाः विशीर्य गोमयचूर्णाभत्व भजन्ते तेन साक मासादिभ्यो नि:सृत्य स्नेहो भ्रश्यते । अस्यैव प्रपञ्चो गोमयचूर्णीयाऽध्याये वर्णितो यथा–" यस्य गोमयचूर्णाभ चूर्ण मूर्धनि जायते । सस्नेह भ्रश्यते चैव मासान्तं तस्य जीवितम् ॥ च. इ. १२।१ " ननु मूर्धन्येव कथं गोमयचूर्णोत्पत्तिः प्रदर्शिता नाऽन्येष्वङ्गेष्विति चेत् ? सत्यम्, मूर्ध्नि उत्तमाङ्गत्वात्समस्तेन्द्रियाणा प्रकाशस्थानत्वाद्यदा तदीयस्नेहो विभ्रश्यते तदा महदरिष्टम् । अन्यशरीरभागेषु तु सिध्मादिप्रयुक्तमपि गोमयाभचूर्णादेरुत्पत्तौ जातायामपि न तादृशाऽरिष्टशङ्का इत्यभिप्रायेणैव मूर्धस्थगोमयाभचूर्णोत्पत्तौ मासान्त जीवित निर्दिष्टम् । शिरसः स्नेहे क्षीणे न कोऽपि जीवितुं प्रभवेदिति रहस्यम् । आयुर्वेदे जलपृथिव्योः शरीरस्थपरिणामाना श्लेष्मा इति सङ्केतः कृतोऽस्ति, स्नेहश्च श्लेष्मण्येवाऽऽस्ते, अत एव श्लेष्मशब्देनाऽपि यत्र तत्र ओजसो निर्देशः कृतोऽस्ति यथा—" प्राकृतस्तु बल श्लेष्मा विकृतो मल उच्यते । स चैवौजः स्मृतः काये स च पाप्मोपदिश्यते ॥ च. सू. १७।११६ " न च वाच्य शरीरस्थसमस्तजलपृथिवीपरिणामानामोजस्त्व स्यादिति तत्तद्विशेषनामभिस्तेषा तेषान्तत्रतत्राऽवरोधः कृतोऽस्ति, अतो नौजस्त्वेन सर्वे निर्देष्टु शक्याः । किञ्च ओजसोऽर्धाञ्जलिप्रमाणमुद्दिष्ट यथा—" मस्तिष्कस्याऽर्धाञ्जलिः शुक्रस्य तावदेव प्रमाण श्लेष्मणश्चौजसः । च. शा. ७।१७ " इत्यत्र अर्धाञ्जलिप्रमाणः समस्तशरीरव्यापकः स्नेह एव सम्भवति नाऽन्यः परिणाम इति निर्विवादम् । " ओजोवहाः शरीरेऽस्मिन् विधम्यन्ते समन्ततः । च. सू. ३०।८ " इत्यत्र यद्यपि ओजःशब्देन तात्स्थ्यात्ताच्छब्द्यमितिन्यायमङ्गीकृत्य स्नेहस्थानस्य रक्तस्य ग्रहणमस्ति । तथात्वेचोऽर्धाञ्जलिरूपप्रमाणं न केनाऽपि प्रकारेण वक्तु युज्यते, तथाप्यत्रौजः शब्दस्य लक्षणयाऽन्यत्रगमनाद्दोषाऽभावः । एतदस्वीकारे स्ववाक्यान्येव परस्पर विरुद्ध्येरन् । एव " ओजोऽशनाना रजनीचराणामाहारहेतो र्न शरीरमिष्टम् । गर्भं हरेयु र्यदि तेन मातु र्लब्धाऽवकाशा न हरेयुरोजः ॥ च. शा. २।१० " " अष्टमे मासि गर्भश्च मातृतो

गर्भतश्च माता रसवाहिनीभिः सवाहिनीभि र्मुहुर्मुहुरोजः परस्परत आददाते गर्भस्यासम्पूर्णत्वात् । च. शा. ४।२४ " इति स्थानद्वयेऽप्युक्तन्यायेन रक्तमेव लक्षणया ओजस्त्वेनाऽभिप्रेतम् । अथवा पूर्वोक्तस्नेह एव ग्राह्यः । उदकात्क्षीरपृथक्करणशक्ति र्हंसेष्विव रजनीचरेषु ओज पृथक्करणशक्तिः स्वीकर्तव्या, अत एव " अष्टमेऽस्थिरी-भवत्योजस्तत्र जातश्चेन्न जीवेन्निरोजस्त्वान्नैर्ऋतभागत्वाच्च । सु. शा. ३।३० " इति सुश्रुतवाक्यमपि सङ्गच्छे-तेति हृदि निधाय अष्टमे मासि जातेषु वालकेषु यदिदमोजस्तस्य नैर्ऋतभागत्वमर्थान् नैर्ऋतास्त तदीयशरीराद्गृह्णन्ति अतो वालको निरोजा एवाऽवतिष्ठतेऽतो न जीवेत्, जीवनस्यौजोऽधीनत्वात् । न चाऽष्टममासे एव ओजो नैर्ऋतभागो भवति इत्यत्र किं प्रमाणमिति वाच्य ? कुमारतन्त्रे रुद्रेण नैर्ऋतेभ्यो वरो दत्त इति प्रतिपादितम् । स चाऽनु-मानेन नास्तिकैरपि स्वीकर्तव्यः । कथमन्यथा सप्तममासजाताना जीवता सहस्रशो सङ्ख्या दरीदृश्यते, अष्टम-मासजाताना तु न कुत्रापि जीवता वार्तापि श्रूयतेऽतस्तदुपाख्यानमगत्याऽपि स्वीकर्तव्यमेव । " ओजश्च मे सहश्च मे आत्मा च मे तनूश्च मे । यजु. १८।३ " ओजो वलहेतुरष्टमो धातुरिति महीधरः । " होता यक्षदोजो न वीर्यं सहो द्वार इन्द्रमवर्धयन् ॥ यजु. २८।५ " ओज इन्द्रियवलमिति महीधरः । " ओजोस्योजो मे दाः स्वाहा । अ. २।१७।१ " ओजः शरीरस्थितिकारणमष्टमो धातुस्तदुक्तमाचार्य्यैः—ओजो नामाष्टमी दशा । क्षेत्रज्ञस्य तदोजस्तु केवलाश्रय इष्यते । यथा स्नेहः प्रदीपस्य यथाऽभ्रमशनिविषः ॥ इति सायणः । " समहमेषा राष्ट्रं स्यामि समौजो वीर्यं वलम् । वृश्चामि शत्रूणा वाहूननेन हविषाहम् ॥ अ. ३।१९।२ " येन वलेन क्षेत्रज्ञस्य शरीरेऽवस्थिति र्भवति तदोजः शब्दवाच्यम् । तदुक्तमाचार्यैः 'क्षेत्रज्ञस्य तदोजस्तु केवलाश्रय इष्यते' इति सायणः । " अपि वृश्च पुराणवद् व्रततेरिव गुष्पितम् । ओजो दासस्य दम्भय ॥ अ. ७।९५।१ " ओजो वलं प्रजनन-समर्थं वीर्यमिति सायणः । इन्द्रस्यौजो वरुणस्य वाहू अश्विनो रसौ मरुतामिय ककुत् । वृहस्पतिं सवृतमेतमाहु र्ये धीरासः कवयो ये मनीषिणः ॥ अ. ९।४।८ " अत्रापि ओजः स्थिता शक्तिरोजस्त्वेनाऽभिहिता । " स्तेयं दुष्कृत वृजिन सत्यं यज्ञो यशो वृहत् । वल च क्षत्रमोजश्च शरीरमनुप्राविशन् ॥ अ. ११।१०।२०" ओजः शरीरगतो वलहेतुरष्टमो धातुरिति सायणः । ओजश्च तेजश्च सहश्च वलञ्च वाक् चेन्द्रियञ्च श्रीश्च धर्मश्च । अ. १२।६।१ " अत्र मन्त्रे ओजस्तेजो वलञ्चेति त्रयः शब्दा एकस्मिन्नेव मन्त्रे समागताः सन्ति तत्र ओज इति शरीरव्यापकस्नेहः यमाश्रित्य सर्वेऽपि शरीरशक्तयः प्रभवन्ति, ता एव शक्तयो वलमिति नाम्ना निर्दिश्यन्ते । शरीरगतो योऽयं प्रकाशः स तेजश्शब्देनोच्यते । सह इति च दुःखादिसहनशक्तिः साऽपि ओजोजन्यैव भवति । अतएवाऽस्मिन्मन्त्रे क्रामिको निर्देशः, ओज इति कारण, तेजः सहः वलञ्चेति तदीयगुणाः । एतत्समग्रसाम-ग्रीसत्त्वे इन्द्रिय=इन्द्रियसङ्घः स्वकार्यकरणसमर्थो भवति, तत्सत्त्वे श्रीश्च धर्मश्चेति तदीयफलत्वेन निर्दिष्टौ । एव यत्र-यत्र ओज इति पद वेदे दृश्यते तत्र सर्वत्रैव कुत्रचित् स्वस्वरूपे कुत्रचित् तात्स्थ्यात्ताच्छब्द्यमिति लक्षणया तेजसि वले च समागतो दृश्यते । कुत्रचित्तु स्वतन्त्रतयैव आधाराधेयाः प्रतिपाद्यन्ते यथा प्रकृतमन्त्रे ओज इति आधारः, तेज इति तदीयो गुणः, सहश्च वलञ्च इति शक्तिद्वयम् । सूक्ष्मविचारेसहस्याऽपि वले एवाऽन्तर्भावो भवति । यद्यपि ओजोजन्या एव यावन्त्य. शारीर्यः शक्तयः सन्ति तथापि प्रकरणवशाद्यत्र तत्र या या शक्तय आगच्छन्ति तास्तस्मिंस्तस्मिन्नर्थे नियता भवन्ति ता आलोक्य सूक्ष्मविचारमकृत्वा व्यामुह्यन्ते भाष्यकृतटीकाकाराश्च ते । कुत्रचित् शरीरशक्तिः कुत्रचिद्वीर्यं कुत्रचिदिन्द्रियशक्तिः कुत्रचिद्धारणाशक्तिः कुत्रचिदभिभवनशक्तिः कुत्रचित्प्रभावः कुत्र-चित्पराक्रम इत्यादिशब्दैः स्थलेस्थले यथासङ्गति व्याख्यान्ति । नानास्थले नानार्थांश्च दृष्ट्वा महति भ्रमगह्वरे साधारणा जना निविशन्ते । मुहुर्मुहुराकलयमाना अपि विषययाथातथ्य नाऽववुध्यन्ते । टीकाकर्तृवाक्यानि च ओजसोदुरवबोधत्वात्तल्लक्षण निर्दिशत्याचार्य इत्यादि वाक्छलेन भ्रमगहरमुखे महती शिला स्थापयन्ति, तदाऽऽ-

कलय्य नितरां खिद्यते चेतः । अतो याथातथ्य बुद्धा भ्रमोऽपोहनीय इति सहृदयेषु प्रार्थना । साहित्यादौ तु लाक्षणिक ओजः शब्दः प्रयुक्तस्तेनौजस्विनी वाणीत्यादौ तत्क्षणहृदयाऽवगाहिनीत्यादिरर्थः कल्पनीयः । पाश्चात्यपदार्थतत्त्वविद्भिरस्थ्यादिभ्यो यत्फास्फोरस ( Phosphorus ) नामाख्य द्रव्य पृथक्क्रियते तदप्योजः प्रधानमेव । तत्र पदार्थद्वयम् तेजः, तेजोऽधिकरणञ्च । तयोराद्यो गुणो द्वितीयस्तदाधारः, अयञ्च जीवनाऽऽधारत्वाज्जीवनस्नेह इत्युच्यते । तेजसो मुख्याऽधिकरणत्वेन तैजसमिति, गुणगुणिनोरभेदधिया प्रयोगे तेज इत्यपि कथितु युज्यते । जङ्गमशरीरधातुत्वेन व्यवहारात्तदतिरिक्तस्थले ओज इति नाम्ना व्यवहारो नोचितः पित्तकफादिवत् । तत्र हि शारीरीयपरिणामबुद्ध्या यदा प्रयोक्तुमिच्छा भवति तदाऽऽग्नेयपदार्थपरिणामे पित्तमिति, जलपृथिवीपरिणामे कफ इति शब्दः प्रयुज्यते । यदा तु जङ्गमशरीराऽतिरिक्तस्थलीयव्यवहारोऽभिप्रेतस्तदाऽऽग्नेय इति जलीय इति पार्थिव इति च शब्दाः प्रयुज्यन्ते । तथाऽत्राऽपि शारीरधातुत्वकथनबुद्ध्या ओज इति निस्संशय प्रयुज्यते । यदा तु तदतिरिक्तस्थलाऽभिप्रायस्तदा जीवनस्नेह १ तैजसमिति २ तेज ३ इति वा शब्दाः प्रयुज्यन्ते । पाश्चात्यपद्धतौ तु जङ्गमाऽजङ्गमभेदराहित्येन फासफोरस ( Phosphorus ) इति साधारणः शब्दः स्वीकृतः । अस्मिन्नर्थे स्फुरमितिप्रस्फुरमिति वा शब्दौ येन केनाऽपि प्रयुक्तौ तत्तु न सम्यक्, निरुक्तार्थाऽनवगमात् । ओज ऊर्जयतेर्वौब्जते र्वा । नि० ६।८।१॥ अस्याऽभिप्रायः पूर्वमदर्शि । अस्मिन्नर्थे स्फुरधातोरर्थसाधकत्वाऽभावात् । न च वाच्यं स्फूर्तिरपि ओजस्सत्त्वे एव सम्भवति इति, तस्या जीवलिङ्गत्वात् । प्रकृतौजसस्तु मृतशरीराऽस्थिष्वपि विद्यमानत्वात् । मृतशरीरे न हि काचिदपि स्फूर्तिर्दृश्यते, " शरीर हि गते तस्मिञ्छून्याऽऽगारमचेतनम् । पञ्चभूताऽवशेषत्वात्पञ्चत्व गतमुच्यते ॥ च. शा. १।७४ " इतिसिद्धान्तादित्यलमतिविस्तरेण ।

( सं. १२१ ) लोहितम्=पाप्मा=तमः " चक्षुः श्रोत्र यशो अस्मासु धेह्यन्न रेतो लोहितमुदरम् ॥ अ. ११।७।२५" अत्र ब्रह्मचर्यप्रकरणात् " ब्रह्मचर्येण कन्या युवान विन्दते पतिम् ॥ अ.११।७।१९" इति मन्त्रे कन्याया अपि ब्रह्मचर्यकथनात् तत्फलरूपेण एतत्प्रार्थनम् । अस्मासु ब्रह्मचारिषु चक्षु अव्यापन्न चक्षुरिन्द्रिय तथा श्रोत्र श्रवणेन्द्रिय यशः जगद्व्यापि यशः=तथा अन्न=अदनसाधन भोज्यभक्ष्यलेह्यचोष्यादिरूप तथा रेतः=अविकृतं वीर्यं तथा लोहितं अविकृत ( प्रजाजननसमर्थ ) रज तथा उदर उदरवर्ति हृदयादिसमस्तयन्त्रं धेहि स्थापय देहीत्यर्थः । अत्र रेतः सान्निध्याल्लोहितशब्देन रजस एव ग्रहणमुचित न पुना रक्तस्य। सायणेन तु मौनमेवाऽवलम्बितम् । परन्तु " अमूर्या यन्ति योषितो हिराः लोहितवाससः । अ. १।१७।१" इयत्र लोहितवासःशब्देन रजोवाहिन्य उक्ताः। अतोऽनुमीयते लोहितमिति शब्दो रजसि रूढोऽस्ति अत एव " परमसूक्ष्माश्चेतनावन्तः शाश्वता लोहितरेतसः सन्निपातेष्वभिव्यज्यन्ते ॥ सु. शा. १।१६" इत्यादिस्थले लोहितशब्दो व्यवहृतः ।

" योनि वै गार्हपत्या चितिरुल्वमूषाः सर्वा तद्योनिमुल्वेन प्रच्छादयति । शत० ब्रा० ७।१।१।८ " इत्यारभ्य " यद्वेवैता नैर्ऋती र्हरन्ति । प्रजापति विस्रस्त यत्र देवाः समस्कुर्वस्तमुखाया योनौ रेतोभूतमसिञ्चन् योनि र्वा उखा, तस्मा एतां संवत्सरे प्रतिष्ठा समस्कुर्वन्निममेव लोकमय वै लोको गार्हपत्यस्तस्मिन्नेनं प्राजनयंस्तस्य यः पाप्मा यः श्लेष्मा यदुल्व यज्जरायु तदस्यैताभिरपाघ्नंस्तद्यदस्यैताभिः पाप्मानं निर्ऋतिमपाघ्नंस्तस्मादेता नैर्ऋत्यः ॥ शत० ब्रा० ७।२।१।५ " इत्येतत्पर्यन्तं योन्यग्निचित्योः परस्परं सादृश्य निरूपितम् । " अयं ते योनिर्ऋत्वियो यतो जातो अरोचथा " इत्ययं मन्त्रो मध्ये प्रमाणत्वेन चोपन्यस्तः । अग्निचितिप्रकरणे " अष्टाविष्टका उपदधाति अष्टाक्षरा गायत्री गायत्रोऽग्नि र्यावानग्नि र्यावत्यस्य मात्रा तावन्तमेवैनमेतच्चि-

नोति। शत० ब्रा. ७।१।१।३२" इतीष्टकाश्चेतव्यत्वेनोपदिष्टाः। "यद्वैता नैर्ऋती र्हरन्ति० ७।२।१।५" इत्यनेन योनौ पाप्मादयः ( पाप्मश्लेष्मोल्वजरायवः ) चेतव्यत्वेनोपदिष्टाः। तृतीयब्राह्मणसमाप्तिपर्यन्तमसङ्कदेतयो ( योन्यग्निचित्योः ) रेव सादृश्यं प्रतिपादितम्। अत्र रजसः, पाप्मा, नैर्ऋत्यः, तमः, ऋत्वियः, इति नामानि स्थापितानि। अस्मिन्नर्थे "ते तामूचुस्ततो देवास्तुष्टाः प्रीतिसमन्विताः। चतुर्धा विभजात्मानमात्मनैव दुरासदे॥ देवानां भाषितं श्रुत्वा ब्रह्महत्या महात्मनाम्। सन्दधौ स्थानमन्यत्र वरयामास दुर्वसा॥ एकेनांशेन वत्स्यामि पूर्णोदासु नदीषु वै। चतुरो वार्षिकान् मासान् दर्पघ्नी कामचारिणी॥ भूम्यामह सर्वकालमेकेनांशेन सर्वदा। वसिष्यामि न सन्देहः सत्येनैतद्ब्रवीमि वः॥ योऽयमंशस्तृतीयो मे स्त्रीषु यौवनशालिषु। त्रिरात्र दर्पपूर्णासु वसिष्ये दर्पघातिनी॥ हन्तारो ब्राह्मणान्ये तु मृषापूर्वमदूषकान्। तांश्चतुर्थेन भागेन सश्रयिष्ये सुरर्षभाः॥ प्रत्यूचुस्तां ततो देवा यथा वदसि दुर्वसे। तथा भवतु तत्सर्वं साधयस्व यदीप्सितम्॥ ततः प्रीत्यान्विता देवाः सहस्राक्ष ववन्दिरे। विज्वरः पूतपाप्मा च वासवः समपद्यत॥ वा. रा. उ. ८६।११–१८" इत्यत्र शक्रस्य सञ्ज्ञानाशकरत्वेनोक्तत्वात् 'तम' इत्यपि नामाऽन्वर्थमेव। ऋतुरितिसमयवाचकः, स्त्रीणा नियतसमये जायमानत्वादृतुः ऋत्वियः एते अपि नाम्नी अन्वर्थे एव। एतान्येव नामानि एतमेवाऽभिप्रायमभिप्रेत्य चिकित्साशास्त्रेऽभिहितानि दृश्यन्ते। सम्प्रत्युपलभ्यमानवेदभाष्येषु तु सायणमहीधरप्रभृतिभिः साम्प्रदायिकैरन्यथैव वेदमन्त्रा व्याख्याताः, अतस्तद्भाष्येषु न कश्चित्सार उदेतीति सुधीभिर्विभावनीयम्॥

( स. १३२ ) **ग्रैव्याः**—"सप्त च याः सप्ततिश्च संयन्ति ग्रैव्या अभि। इतस्ता सर्वा नश्यन्तु वाका अपचितामिव॥ अ. ६।२५।२ सप्ताऽधिकसप्ततिसङ्ख्याका या गण्डमाला ग्रैव्याः ग्रीवासु भवा नाडीः अभिसयन्ति अभितो व्याप्नुवन्ति" इत्यत्र सप्तसप्ततिप्रमिता धमनीना सङ्ख्या उक्ता सा सूक्ष्माऽभिप्रायेणेति बोध्यम्॥

( स. १३३ ) **स्कन्ध्याः**—"नव च या नवतिश्च सयन्ति स्कन्ध्या अभि। इतस्ताः सर्वा नश्यन्तु धाका अपचितामिव॥ अथर्व. ६।२५।३ नवोत्तरनवतिसङ्ख्याका या गण्डमालाः स्कन्ध्याः। ग्रीवाभ्योऽधःप्रदेशः स्कन्धः। तत्र भवा धमनीः अभिसयन्ति अभितो व्याप्नुवन्ति।" इत्यत्र नवनवतिप्रमिता धमनीना सङ्ख्या उक्ता सा सूक्ष्माऽभिप्रायेणेति बोध्यम्॥

## अथ निधिविवरणम् ( स. १३५ )

वेदे शारीरविभागे यथा देवशब्दोऽस्थिपरस्तथा निधिशब्दो ज्ञानतन्तुपरः, समस्तशरीररक्षणे सञ्चालने विनाशे च ज्ञानतन्तूना प्राधान्यान्निधित्वेन व्यवहारः, यथा—"यस्य त्रयस्त्रिंशद्देवा निधिं रक्षन्ति सर्वदा। निधिं तमद्य को वेद यं देवा अभिरक्षथ॥ अ. १०।७।२३" यस्य=स्कम्भस्य तज्जातस्य वा मनुष्यादेः। त्रयस्त्रिंशत्=एतत्सङ्ख्याकाः देवाः=प्रजापत्यादयः अथवा तदधिष्ठितत्रयस्त्रिंशदनूकाऽस्थीनि निधिं=ज्ञानतन्तुलक्षणं सुषुम्णातन्तुजालमिति यावत् सदा=सर्वदा रक्षन्ति, सुषुम्णाया अनूकाऽस्थिगह्वरे निहितत्वात्, बाह्याघातादिभिः सर्वदा रक्षन्ति। तमनिर्वचनीय सर्वस्मादपि शरीरात् श्रेष्ठतममित्यर्थः। कः=सर्वतोऽभ्यधिकज्ञानवान् योगीत्यर्थः। वेद=जानाति। यद्यपि स्थूलदृष्ट्या चिकित्सकानामपि तज्ज्ञानमस्त्येव परन्तु योगशास्त्रप्रतिपादितवैभवस्य पूर्णयोगिभिरेव वेद्यत्वात् इत्थ परोक्षः प्रश्नः कृतोऽस्ति। नन्वेतादृग्विलक्षणोऽर्थः कस्मान्निर्धारित इति चेच्छृणु। अस्य सूक्तस्य समस्तस्याऽपि शरीरवर्णनपरत्वात् निधिशब्देनाऽन्यवस्तुनोऽभावात् ज्ञानतन्तूनामेव प्रकरणानुरोधेन ग्रहणस्यौचित्यात् तेषामेव ग्रहणं न्याय्यमिति तत्त्वम्। ननु त्रयस्त्रिंशद्देवानां कस्मिन्नङ्गे क्रमेण निवासोऽस्तीत्यपेक्षायामस्मिन्नेव सूक्ते सप्तविंशतितमे मन्त्रे "यस्य त्रयस्त्रिंशद्देवा अङ्गे गात्रा वि भेजिरे। तान्वै त्रयस्त्रिंशद्देवानेके

ब्रह्मविदो विदुः ॥ अथर्व०, १०।७।२७" यस्य=स्कम्भस्य अङ्गे शरीरैकदेशे त्रयस्त्रिंशद्देवा गात्रा=गात्राणि शरीराऽवयवानित्यर्थः, वि=विशेषेण भेजिरे अधिष्ठिताः सन्ति । तान् त्रयस्त्रिंशद्देवान् एके=असाधारणा ब्रह्मविदः ज्ञानिनो विदु र्जानन्ति । अनेन मन्त्रेण त्रयस्त्रिंशदस्थियुक्तैकाङ्गस्य निर्देशात् अनूकातिरिक्ताङ्गे एतत्सङ्ख्याकाऽस्थ्नामेकत्राऽभावात् । पारिशेष्यात् अनूकमेवोपतिष्ठते । "अनूक त्रयस्त्रिंशत्" (१२।२।४।१४) इति शतपथेन स्पष्टतयोक्तत्वात् । अत्र च तेषामस्थ्ना देवत्वेन कथनात्तत्र निहितस्य वस्तुनो निधित्वेन कथनात् सुषुम्णाप्रताना एव तद्वाच्यत्वेनोपतिष्ठन्ते । इदञ्च वेदेषु स्थित रहस्यमजानाना वेदवाक्यानि अन्यथैव नियोजयन्ति । यथा—"गोभिष्ट्वा पात्वृषभो वृषा त्वा पातु वाजिभिः । वायुष्ट्वा ब्रह्मणा पात्विन्द्रस्त्वापात्विन्द्रियैः ॥ अथर्व० १९।२७।१" इत्यारभ्य "दिवो मादित्या रक्षन्तु भूम्या रक्षन्त्वग्नयः । इन्द्राग्नी रक्षता मा पुरस्तादश्विनावभितः शर्म यच्छताम् । तिरश्चीनघ्न्या रक्षतु जातवेदा भूतकृतो मे सर्वतः सन्तु वर्म ॥ १९।२७-१५" इत्यन्तम् शरीराऽधिष्ठातृसविभूतित्रयस्त्रिंशद्देवा एव वर्णिता आत्मरक्षार्थञ्च प्रार्थिताः परन्तु साम्प्रदायिकैः प्राजापत्याख्याया महाशान्तौ सुवर्णरजतलोहमयमणिबन्धने विनियुक्तम् । सूक्ष्मदृष्ट्या तु अनूकव्याख्याने समागतत्रयस्त्रिंशद्देवानां भेदा एवाऽत्र वर्णिताः सन्ति । तथाच—"देवाना निहित निधिं यमिन्द्रोन्वविन्दत् पथिभिर्देवयानैः । आपो हिरण्य जुगुपुस्त्रिवृद्भिस्तास्त्वा रक्षन्तु त्रिवृता त्रिवृद्भिः ॥ अथर्व० १९।२७।९" देवाना=त्रयस्त्रिंशत्प्रजापत्यादिदेवानां अथ च तदधिष्ठितत्रयस्त्रिंशदनूकास्थ्ना मध्ये निहित=सङ्गोप्य स्थापित निधिं=सुषुम्णाप्रतानसमुदाय देवयानैः=प्रजापत्यादिवत् स्थितिविशेषै. पथिभिः=हृदयादिगमार्गैः साधनै रिन्द्रः=इन्द्रियाणामधिष्ठाता जीवात्मेत्यर्थः । अविन्दत् प्राप्नोत् । यथा सुषुम्णाप्रतानाः समस्तशरीरव्यापिनः सन्ति तदपेक्षया जीवात्माऽधिकतमव्यापकः सन्नास्ते । जीवापगमे सुषुम्णाप्रताना निरुपयोगिनो भवन्ति अतो जीवात्मन इन्द्रत्व भवति । कीदृशं निधिं ? हिरण्य=हित रमणीय "हिरण्य कस्मात् ध्रियते आयम्यमानमिति वा । हितरमणं भवतीति वा । हृदयरमण भवतीति वा । हर्य्यते र्वा स्यात्प्रेप्साकर्मणः (२।१०)" इति यास्कवचनात्सुषुम्णाप्रतानलक्षणो निधिः सर्वस्य कृते हितो रमणीयश्च भवति, तं निधिं त्रिवृताः=त्रिविधाः=दिव्यान्तरिक्षभौमभेदेन त्रिविधाः, अथवा शुक्रशोणितरूपतया शरीरसमवायिकारणत्वेनाऽऽगता द्विविधा आपः, जन्मोत्तरं स्वभुक्तपीतादिजनिताश्च रसरूपा एका मिलित्वा त्रिविधाः, अथवा सत्त्वरजस्तमोमयत्वेन त्रिविधाः, अथवा रसायनीशिराधमनीषु स्थितिमत्त्वेन त्रित्व गताः आपः=धातूना जलीयभागाः शरीरधातुषु जलीयांशस्याऽधिकत्वादब्रूपेण कथनाद्रसादयः सर्वेऽपि धातवः य=निधिं जुगुपुः गोपायन्ति, तास्त्रिवृद्भिः सत्त्वरजस्तमोलक्षणैः स्वस्वरूपैः त्वा=त्वामनुसन्धातारमित्यर्थः । रक्षन्तु=गोपायन्तु अयञ्च विषयः "शत चैका च हृदयस्य नाड्यस्तासां मूर्धानमभि निःसृतैका । तयोर्द्ध्वमायन्नमृतत्वमेति विष्वङ्ङन्या उत्क्रमणे भवन्ति ॥ १६ ॥ अङ्गुष्ठमात्रः पुरुषोऽन्तरात्मा सदा जनाना हृदये सन्निविष्टः । त स्वाच्छरीरात्प्रवृहेन्मुञ्जादिवेषीका धैर्येण । तं विद्याच्छुक्रममृत त विद्याच्छुक्रममृतमिति ॥(६।१७)"इति सन्दर्भेण कठवल्ल्यामप्युपागतः, अतोऽस्य शारीरपरत्वे नाऽस्ति सन्देहः । परन्तु सायणेनान्यथैव व्याख्यातस्तथाहि—यं=प्रसिद्ध निहितम् निक्षेपरूपेण सङ्गोप्य स्थापित हिरण्याख्य (देवाना) निधिं इन्द्रो देवः देवयानैः देवमार्गै र्देवा यै र्मार्गै र्गत्वा निधिं निहितवन्तस्तैः पथिभि र्मार्गैः स्वयमपि गत्वा अन्वविन्दत् अन्विष्य लब्धवान् । यद् देवनिधिरूप हिरण्यं त्रिवृतः उक्तप्रकारेण त्रिविधा आपः त्रिवृद्भिः साधनै र्जुगुपुः अरक्षन् तास्त्रिवृत आपस्त्रिवृद्भिः हिरण्यरजतलोहरूपेण त्रिविधैः स्वरूपैस्त्वा त्वा रक्षन्तु पालयन्तु ॥ इति ॥ तथाच—"श्रातं हविरो ष्विन्द्र प्र याहि जगाम सूरो अध्वनो वि मध्यम् । परि त्वाऽऽसते निधिभिः सखायः कुलपा न व्राजपतिं चरन्तम् ॥ अथर्व० ७।७५।२" हे इन्द्र=इन्द्रियाधिष्ठातरात्मन् भवतो हविः उपभोग्य वस्तु श्रातं परिपक्व सुनिष्ठि-

तमित्यर्थः । अनवधिकसुखसाधनं सहस्रदलकमलाख्यं प्रयाहि प्रकर्षेण यमनियमादिसाधनैर्याहि प्राप्नुहि भवतो गन्तव्यस्याऽध्वनो विमध्यं=ईषदूनमध्यभाग प्रजापतिमारभ्य षोडशस्थानमित्यर्थः । योगिनो सुषुम्णारन्ध्र-मार्गात्सहस्रदलकमल गच्छन्ति तत्र गन्तव्योऽध्वा अनूकलक्षणः तस्य विभागास्त्रयस्त्रिंशत् तत्र क्रमेण प्रजापतिः १ इन्द्रः २ अग्नि ३ पृथिवी ४ वायु ५ अन्तरिक्षं ६ आदित्यः ७ द्यौ ८ चन्द्रः ९ नक्षत्राणि १० धाता ११ मित्रः १२ अर्यमा १३ रुद्रः १४ वरुणः १५ सूर्य. १६ भगः १७ विवस्वान् १८ पूषा १९ सविता २० त्वष्टा २१ विष्णुः २२ मन्यु २३ मनुः २४ महीनाः २५ महान् २६ शिवः २७ ऋतुध्वजः २८ उग्ररेता २९ भवः ३० कालः ३१ वामदेवः ३२ धृतव्रतः ३३ इति सञ्ज्ञा देवताः क्रमेण मूलाधारादिविभागानामधिष्ठातारः सन्ति यथाऽनूकविवरणं प्रतिपादितम् । तत्र षोडशतमे विभागे सूर्यः समागतः स चाऽध्वनो मध्यभागसमीप जगाम=सन्निहितोऽस्ति । किञ्च कुलपाः गृहरक्षकाश्चरन्त गच्छन्त व्राजपतिं समस्तसङ्घपति-मिव । नकारोऽत्रोपमायां, भवतस्सखाय सहोत्पन्ना प्रजापत्यादयो देवा निविभिः सुषुम्णाप्रतानैः सह त्वा=त्वा परि=परित आसते उपासत इत्यर्थ । अयमपि मन्त्रो समाध्यतिकर्तव्यतावर्णनपर सन्नपि वैतायने ( वै० ३–४ ) सोमयागे प्रवर्ग्ये घर्मधुग्दोहार्थं विनियुक्तः । कुत्रचित्तु निविस्थाने तन्तुशब्दो व्यवहृतः यथा—"यो यज्ञस्य प्रसाधनस्तन्तु र्देवेष्वाततः । तमाहुतमशीमहि ॥ अ. १३।१।६० " इज्यते अनेन यज्ञः शरीरं तस्य प्रकृष्टं साधन देवेषु प्रजापत्यादिदेवाऽधिष्ठिताऽनूकास्थिषु, आततः प्रसारितो योऽय तन्तुः सुषुम्णाप्रतान-समुदायोऽस्ति त=अनिर्वचनीय आहुत=सर्वतो निक्षिप्त अशीमहि निरन्तर प्राप्नुयामः । अन्यच्च—"ऋचः प्राञ्चस्तन्तवो यजूंषि तिर्यञ्चः । अ १५।३।६ " अस्मिन् शरीरे प्राञ्चः ऊर्ध्वोऽध.क्रमेण निहितास्तन्तवः=सुषुम्णाप्रतानाः ऋचः=ऋक्स्थानीयाः सन्ति, ये च तिर्यञ्चः=तिर्यग्भागेन विन्यस्ताः सन्ति ते यजूंषि यजू-रूपाः सन्ति । इत्यादिषु मन्त्रेषु निधिशब्देन क्वचित्तन्तुशब्देन ज्ञानतन्तवो वर्णिताः सन्ति । "को अस्मिन् रेतो न्यदधात् तन्तुरा तायतामिति । मेधा को अस्मिन्नध्यौहत् को वाण को नृतो दधौ ॥ अ. १०।२।१७ " अस्य सूक्तस्य केवलशारीरपरत्वेन अन्यार्थस्योक्तिरेव न सम्भवति । अतः तन्तुनिविशब्दौ निःसंशय ज्ञानतन्तु-वाचकौ स्तः । सुषुम्णावैभवस्तु—" मूलाच्च द्वयङ्गुलादूर्ध्वं सुषुम्णामूलरन्ध्रगम् । वादिवेदार्णलसितं पङ्कज कन-कप्रभम् ॥ तत्र विद्युल्लताकारा तेजोराशिमणीयसीम् । कुलकुण्डलिनीमूर्ध्वं न्यसेत् षट्चक्रभेदिनीम् ॥ " इत्या-दिना तन्त्रशास्त्रे अस्या बहुरेव वैभवो वर्णितः । शाण्डिल्योपनिषदि तु ज्ञानतन्तूना प्रसृताश्चतुर्दश प्रधानशाखा वर्णिताः । तासा कार्यस्थानानि कार्याणि च वर्णितानि सन्ति यथा—" मध्यस्थकुण्डलिनीमाश्रित्य मुख्या नाड्यश्चतुर्दश भवन्ति। इडा १ पिङ्गला २ सुषुम्णा ३ सरस्वती ४ वारुणी ५ पूषा ६ हस्तिजिह्वा ७ यशस्विनी ८ विश्वोदरी ९ कुहू. १० शङ्खिनी ११ पयस्विनी १२ अलम्बुषा १३ गान्धारीति १४ नाड्यश्चतुर्दश भवन्ति । तत्र सुषुम्णा विश्वधारिणी मोक्षमार्गेति चाचक्षते । गुदस्य पृष्ठभागे वीणादण्डाश्रिता मूर्धपर्यन्त ब्रह्म-रन्ध्रे विज्ञेया व्यक्ता सूक्ष्मा वैष्णवी भवति । सुषुम्णायाः सव्यभागे इडा तिष्ठति । दक्षिणभागे पिङ्गला इडाया चन्द्रश्चरति पिङ्गलाया रविः । तमोरूपश्चन्द्रः । रजोरूपो रविः । विषभागो रविः । अमृतभागश्चन्द्रमाः । तावेव सर्वकाल धत्ते । सुषुम्णा कालभोक्त्री भवति । सुषुम्णा पृष्ठपार्श्वयोः सरस्वतीकुहू भवतः । यशस्विनीकुहूमध्ये वारुणी प्रतिष्ठिता भवति । पूषासरस्वतीमध्ये पयस्विनी भवति । गान्धारीसरस्वतीमध्ये यशस्विनी भवति । कन्दमध्येऽलम्बुषा भवति । सुषुम्णापूर्वभागे मेढ्रान्त कुहू भवति । कुण्डलिन्या अधश्चोर्ध्वं वारुणी सर्वगामिनी भवति । यशस्विनी सौम्या च पादाऽङ्गुष्ठान्तमिष्यते । पिङ्गला चोर्ध्वगा याम्यनासान्त भवति । पिङ्गलायाः पृष्ठतो याम्यनेत्रान्त पूषा भवति। याम्यकर्णान्त यशस्विनी भवति। जिह्वाया ऊर्ध्वान्तं सरस्वती भवति । आसव्यकर्णान्त-

मूर्ध्वगा शङ्खिनी भवति। कृकाटिकापृष्ठभागात्सव्यनेत्रान्तगा गान्धारी भवति। पायुमूलादधोर्द्ध्वगाऽलम्बुषा भवति। एतासु चतुर्दशसु नाडीष्वन्या नाड्यः सम्भवन्ति। तास्वन्यास्तास्वन्या भवन्तीति विज्ञेयाः। यथाऽश्वत्थादिपत्रं शिराभिर्व्याप्तमेवं शरीरं नाडीभिर्व्याप्तम्। प्राणापानसमानोदानव्याना नागकूर्मकृकरदेवदत्तधनञ्जया एते दश वायवः सर्वासु नाडीषु चरन्ति। आस्यनासिकाकण्ठनाभिपादाङ्गुष्ठद्वयकुण्डल्यधश्चोर्द्ध्वभागेषु प्राणः सञ्चरति। श्रोत्राक्षिकटिगुल्फघ्राणगलस्फिग्देशेषु व्यानः सञ्चरति। गुदमेढ्रोरुजानूदरवृषणकटिजङ्घानाभ्यग्न्यगारेष्वपानः सञ्चरति। सर्वसन्धिस्थ उदानः। पादहस्तयोरपि सर्वगात्रेषु सर्वव्यापी समानः भुक्तान्नरसादिकं गात्रेऽग्निना सह व्यापयन्द्विसप्ततिसहस्रेषु नाडीमार्गेषु चरन् समानवायुरग्निना सह साङ्गोपाङ्गकलेवरं व्याप्नोति इति॥ शा० उ० १।४" अयञ्च विषयः "हृदि ह्येष आत्मा। अत्रैतदेकशतं नाडीनां तासां शतं शतमेकैकस्या द्वासप्ततिं द्वासप्ततिः प्रति शाखा नाडीसहस्राणि भवन्त्यासु व्यानश्चरति ॥३।६॥" इत्यादिना प्रश्नोपनिषद्यपि समागतः। यद्यपि निविशब्दः प्रकृतार्थे (सञ्ज्ञावहतन्त्वर्थे) वर्तमानाऽऽयुर्वेदसंहितासु क्वचिदपि दृष्टिगोचरो न भवति तथापि समस्तविद्यानां वेदैकाधारत्वात् तत्रोद्दिष्टार्थ एव विशेषतः प्रामाण्यमर्हतीति मत्वा तथैवाऽस्माभिः स्थापितः। एतद्वाचकः सर्वतः पूर्वं कः शब्द आसीदिति गवेषणाकर्तॄणां चित्तानि इतस्ततोऽहर्निशं भ्राम्यमाणान्यपि यथार्थोऽवलम्बनमनासाद्य कुशकाशाऽवलम्बनन्यायमनुसृत्य केचिद्धमनीशब्दं अन्ये स्नायुशब्दं इतरे नाडीशब्दं तदर्थाऽवबोधकं निश्चाययन्ति। धमनीशब्दे प्रमाणं सुश्रुतीयधमनीव्याकरणाध्यायमेवोपन्यस्यन्ति। परन्तु तत्र दृश्यन्ते शतशो विप्लवा यथा—"मूत्रबस्तिमभिप्रपन्ने मूत्रवहे द्वे, शुक्रप्रादुर्भावाय द्वे, द्वे च विसर्गाय, ते एव रक्तमभिवहतो नारीणामार्तवसञ्ज्ञम्। सु. शा. ९।७" अत्र मूत्रबस्तिमभिप्रपन्ने मूत्रवहे द्वे इति मूत्रवहस्रोतसी कथिते न पुनः सञ्ज्ञावहतन्तवो निर्दिष्टाः। नचाऽत्र मूत्रवहस्रोतोविवद्ध्ज्ञानतन्त्वो रेव निर्देश इति वाच्यं? अश्मरीचिकित्सिते "मूत्रवह-शुक्रवह-मुष्कस्रोतो—मूत्रसेक-सेवनीयोनिगुदबस्तीन् परिहरेत्। तत्रमूत्रवहच्छेदान्मरणं मूत्रपूर्णबस्तेः, शुक्रवहच्छेदान्मरणं क्लैब्यं वा। मूत्रस्रोत उपघाताद् ध्वजभङ्गः। मूत्रप्रसेकक्षणनान्मूत्रप्रक्षरणम्॥ सु. चि. ७।३६" अत्र मूत्रवहशब्देन स्पष्टतया गवीन्योरेवाऽभिधानात्। न चापि तयोरेव विधानमिति हठस्य शरणं गन्तव्यं तत्र ज्ञानतन्तूनां बहुत्वाद् द्वित्वाभावात्। अतो 'मूलं नास्ति कुतः शाखा, इतिवत् परिभाषितधमनीव्याकरणमेव प्रमाणार्हतामप्राप्नुवत् कथमन्यस्थलीयशङ्कां निवारयितुं प्रभवेत्। किञ्च—"तत्र-पाञ्चभौतिकस्य चतुर्विधस्य षड्रसस्य द्विविधवीर्यस्याऽष्टविधवीर्यस्य वाऽनेकगुणस्योपयुक्तस्याऽऽहारस्य सम्यक् परिणतस्य यस्तेजोभूतः सारः परमसूक्ष्मः स रस इत्युच्यते, तस्य च हृदयं स्थानं, स हृदयाच्चतुर्विंशतिधमनीरनुप्रविश्य ऊर्ध्वगा दश दश चाऽधोगामिन्यश्चतस्रश्च तिर्यग्गाः कृत्स्नं शरीरमहरहस्तर्पयति वर्धयति धारयति यापयति च अदृष्टहेतुकेन कर्मणा। सु. सू. १४।३" अत्रस्थेन ग्रन्थेन धमनीविवरणं परस्परं विरुद्ध्यते, अतो विज्ञायते यद्धमनीव्याकरणाध्याय एव कैश्चित्पण्डितम्मन्यैर्महात्मभिः प्रतिसंस्कर्तृभिः पूर्वापरमनालोच्य प्रक्षिप्तोऽस्ति, कथमन्यथा धमनीशब्दं सञ्ज्ञावहतन्तुषु नियन्त्र्य रक्तवाहिनीषु महर्षिर्नियन्त्रयेत। यथा—"असञ्जाताङ्गप्रत्यङ्गप्रविभागमानिषेकात्प्रभृति सर्वशरीराऽवयवाऽनुसारिणीनां रसवहानां (तिर्यग्गतानां) धमनीनामुपस्नेहो जीवयति। सु. शा. ३।३१" इति। तस्माद्धमनीविवरणाऽध्याय एव प्रक्षिप्तः प्रतिभाति। कदाचित् "अधृतिरदृढसौहृदः कृतघ्नः कृशपरुषो धमनीततः प्रलापी। सु शा. ४।६५" इत्यत्र महर्षिणैव शिरास्थाने धमनीशब्दः प्रयुक्तस्तस्य का गतिरिति चेत्? सत्यम्। तत्रापि प्रतिसंस्कर्तृदोष एव कारणमिति वदामः। कथमन्यथा असम्बद्धवन्महर्षि र्भाषेत? "वि ते भिनद्मि मेहनं० अथर्व. १।११।५" इत्येकस्य मन्त्रस्य यथा महर्षिणा सुश्रुतेन भाष्यं कृतमस्ति तदुपोद्घातीय पृ० ५—द्रष्टव्यम्। सुश्रुतः स्वसंहिताया मूलं "इह खल्वा-

युर्वेदमष्टाङ्गमुपाङ्गमथर्ववेदस्य० ( सु. सू. १।५ ) इति प्रतिज्ञाय कथमथर्ववेदाद्विरुद्धं स्वयं प्रतिपादयेत्। अथर्ववेदे च अशुद्धरक्तवाहिनीषु हिराशब्दः विशुद्धरक्तवाहिनीषु धमनीशब्दः प्रयुक्तस्तथाहि—" इमा यास्ते शतं हिराः सहस्रं धमनीरुत । तासां ते सर्वासामहमश्मना विलमप्यधाम् ॥ अथर्व० ७।३६।२ " हे विद्वेषिणि स्त्रि ! ते=त्वदीया याः=इमाः शतं=शतसङ्ख्याकाः हिराः=अशुद्धरक्तहारिण्यः सिराः अथ च सहस्रं=सहस्रसङ्ख्याका धमनीः शुद्धरक्तप्रदानेन पूरण्यः पोषण्यो वा शुद्धरक्तवाहिन्यः गर्भाशयस्य अवष्टम्भिकाः स्थूलाः सूक्ष्माश्च याः शिराश्च धमन्यश्च तासां सर्वासामपि विलं मुखं अश्मना पाषाणेन अहं अप्यधाम् अवरुणध्मि ॥ अत्र शतसहस्रशब्दौ असङ्ख्यतां द्योतयतः । शरीरे सिराणां धमनीनाञ्च व्याप्तत्वात् सङ्ख्यानियमस्य दुर्घटत्वात्। ह्रियते पोषणाऽक्षमत्वेन निरुपयोगितां जातं रक्तं याभिः प्रणालीभिः हृदयं प्रविश्य फुप्फुसौ च प्राप्य विशुद्धीभूतं पुनरपि हृदयं प्राप्यते ता हिरा इत्युच्यन्ते । धम्यते उच्छ्वसितीक्रियते पूर्यते पोष्यते वा शरीरं याभिस्ता धमन्य इति व्युत्पत्त्या साधारणतया यत्किञ्चिद्वहमार्गाद्युपस्थितावपि धमनीशब्दस्य योगरूढत्वेन न सिरादिष्वतिव्याप्तिः । " अर्तिसृधृधम्यम्यश्यवितॄभ्योऽनिः " ( उ. २।१०२ ) इत्यनिप्रत्यये " पिद्गौरादिभ्यश्च " ( पा. ४।१।४१ ) इति ङीपि धमनीति सम्पद्यते । धमनीनां शरीरे रसवमनैककार्यत्वात् शुद्धरक्तवाहिन्य उच्यन्ते । अत्र शरीरतत्त्वस्य वह्वोः कालात् लुप्ततया सायणादिभिः सिराधमनीनाडीनां परस्परं भेदो न वर्णितः किन्तु एकार्था इव एते शब्दा व्यवहृतास्तद्भाष्ये दृश्यन्तेऽनस्तत्र न विश्वसनीयम् । इममेव भेदं वेदे प्रदर्शयितुं विशेषतोऽथर्ववेदे सिरासु हिराशब्दः, शुद्धरक्तवाहिनीषु धमनीशब्दः, स्रोतःसाधारण्ये नाडीशब्दो व्यवहृतोऽस्ति, अतोऽशुद्धरक्तवाहिन्यो हिराः १, पोषणोपयुक्तरक्तवाहिन्यो धमन्यः २, स्रोतःसाधारणवाचका नाड्यो ३ ऽवगन्तव्याः । " शतस्य धमनीनां सहस्रस्य हिराणाम् । अस्थुरिन्मध्यमा इमाः साकमन्ता अरंसत ॥ अ. १।१७।३ " शतस्य=शतसङ्ख्याकानां धमनीनां शुद्धरक्तवाहिनीनां सहस्रस्य=सहस्रसङ्ख्याकानां हिराणां अशुद्धरक्तवाहिनीनां या मध्यमा मध्यमार्गाः अथ च अन्ताः अन्तमार्गाः अन्तप्रान्ताः सूक्ष्माऽतिसूक्ष्मप्रताना इत्यर्थः । इमाः सर्वा अपि साकं=समकालं रोगवशात्पूर्वं स्रवन्त्योऽपि अस्थुः निवृत्तस्रावा भवन्तु । अथ च अरंसत यथापूर्वं स्वकार्यं कुर्वन्त्यः समस्तशरीरे अरंसत=रमन्ताम् अप्रतिहतसञ्चारं कुर्वन्त्वित्यर्थः । अत्र सायणेन मुण्डकाद्युद्धरणं दत्त्वा ज्ञानतन्तून्निर्दिश्याऽन्ते रक्तवाहिनीनाञ्च निर्देशं कुर्वता कृसरा विपाचिता, तत्र शारीराऽज्ञानमेव मूलम् । " अमूर्या यन्ति योषितो हिरा लोहितवाससः । अभ्रातर इव जामयस्तिष्ठन्तु हतवर्चसः ॥ अ. १।१७।१ " प्रसवसमये अतिप्रवाहयुक्तरक्तस्रवन्तीनां सिराणां अथ च अत्यार्तवपीडितायाः स्त्रियाः रजोवाहिनीनां प्रणालीनामवरोधाय प्रार्थनाऽभिप्रायेणाऽयं मन्त्रोऽस्ति तथाहि—योषितः=प्रसूतस्त्रियाः प्रदरादियुक्तायाः वा अमूः=पुरतो दृश्यमानाः या हिराः=अशुद्धरक्तवाहिन्यः प्रणाल्यः यन्ति=अतिरिक्तं वहमानास्तिष्ठन्ति । अथ च या लोहितवाससः=रजोवहनप्रणाल्यः लोहितं रजोलक्षणं या वासयन्ति अथवा लोहितं=रजो वसति यासु ता लोहितवाससः रजोवहप्रणाल्यः ता उभयविधाः प्रणाल्यः मन्त्रप्रभावेण हतं वर्चो वेगः यासां ताः हतवर्चसो=नष्टवेगाः सन्त्यः न विद्यन्ते भ्रातरो यासां अभ्रातरः नष्टबन्धुवर्गाः जामय इव तिष्ठन्तु, जामयो हि वर्तमानभ्रातृवर्गा गर्वयुक्ता भवन्ति तदभावे तु अनाथा इव सन्त्य आसते, तद्वन्नष्टवेगा एताः अवरुद्धा भवन्तु । अत्र मन्त्रे **हिरा** इत्यनेन अशुद्धरक्तवाहिन्यः कथिताः । **लोहितवासस** इत्यनेन रजोवहप्रणाल्य उक्तास्ताभिः स्त्रीणां प्रतिमासं वासांसि लोहितानि भवन्ति अतस्ताः लोहितवासस इत्यनेनोक्ताः । सायणेन तु हिराणामेव विशेषणं कृतं तन्न समीचीनमिति सुहृद्भिरेव विभावनीयम् । " तिष्ठावरे तिष्ठ परे उत त्वं तिष्ठ मध्यमे । कनिष्ठिका च तिष्ठति तिष्ठादिद्धमनिर्मही ॥ अ. १।१७।२ " हे अवरे साधारणे !

हे परे उत्कृष्टप्रमाणे ! हे मध्यमे मध्यप्रमाणयुक्ते ! कनिष्ठिका सूक्ष्माऽतिसूक्ष्माऽङ्कुरविशिष्टे ! हे धमनि ! त्वं तिष्टात्=तिष्ठ शस्त्राद्यभिघातजनितरुधिरस्रावात् निवृत्ता भव । अत्र मन्त्रे शुद्धरक्तवाहिनीनां धमनीशब्देन प्रार्थना कृताऽस्ति । यदि च सिराधमनीशब्दौ एकार्थवाचकौ स्याता तर्हि पूर्वमन्त्रेणैव गतार्थतया पुनस्तत्प्रार्थना निष्फला स्यात् । अतोऽशुद्धरक्तवाहिनीषु शिराशब्दः विशुद्धरक्तवाहिनीषु धमनीशब्दो रूढोऽस्ति । तदितरार्थेषु तु प्रतिसंस्कर्तृभि र्यथेच्छं प्रयुक्त इति दृढमस्माकं निश्चयः । अस्य च धमनि (नी) शब्दस्य यथाऽऽयुर्वेदे दुर्दशाऽस्ति तथा निरुक्तेऽपि निघण्टुसमयात्पूर्वमेव शारीरे व्यापन्नताऽऽसीत् । तद्यथा "मा त्वा सोमस्य गल्दया० (ऋ. ८।१।२०)" इत्यत्र गल्दा शब्दस्य निघण्टुकारात्पूर्वकालिकै र्भाष्यकारै र्धमन्यर्थः कृतः, तन्निषेधाय "माचुक्रुध त्वा सोमस्य गालनेन सदा याचन्नहं गिरा गीत्या स्तुत्या भूर्णिमिव मृग न सवनेषु चुक्रुधं क ईशान न याचिष्यत इति । (नि. अ. ६।२४)" इत्यादिना मन्त्रस्य यथार्थमर्थं प्रदर्श्य गल्दाशब्दस्य च गालनार्थे वाण्याञ्च रूढिं प्रदर्श्योत्तर गल्दा "धमनयो न भवन्ति गलनमासु धीयते" इति । स्वोक्तौ किं प्रमाणमित्यपेक्षाया गल्दाधमनीशब्दयो र्व्यधिकरणत्वेन यत्र स्थितिरास्ते त मन्त्रमवतारयति—"आ त्वा विशन्त्विन्दव आ गल्दा धमनीनाम्" इति । अनेन मन्त्राऽवतरणेन किं सिद्धमित्यपेक्षाया स्वयमुत्तरयति—"नानाविभक्ती त्वेते भवत आगलना धमनीनामित्यत्रार्थः" अत्र आगल्दाशब्दस्य आगलना इत्यर्थः कृतः, अतः आगलनाः । आगाल्यानि सोमादीना भवन्ति, अत एव कैश्चित्पूर्वभाष्यकारैः 'गल्दा धमनयो भवन्ति' इति व्याख्यातं तदनेन सन्दर्भेण निराकृतम् । अस्य मन्त्रस्योत्तरार्धं यद्यपि न ज्ञायते तथापि धमनीना व्यत्ययात्षष्ठी धमनीषु गल्दा=आ आकारोऽत्रोपमाया, तेन खादितपीतलीढादिरसपरिणामा यथा सूक्ष्मच्छिद्रैरागल्य रसकुल्या प्रपद्य शिरासु मिलित्वा फुप्फुसादिगमनेनाऽऽकाशाऽमृतेन पुनरपि शोध्यमानाः धमनीषु शुद्धरक्तवाहिनीषु । प्रपद्यन्ते तथा इन्दवः=सोमा आगल्यमानाः अग्नौ हुताश्च परम्परया त्वा=त्वां इन्द्रमित्यर्थः । आविशन्तु त्वदीयशरीरसात्म्य भजन्तु । अथवा मया हुता इन्दवः=सोमाः धमनीनां आगल्दा अर्थात् त्वदीयशरीरवर्तिनीना रक्तवाहिनीना गाल्यते शरीरभ्रमणशीलो रसो रक्तादिरूप. स्थूलाऽवयवेभ्यः पृथक् क्रियते याभिः सूक्ष्मरक्तसारवाहिनीभिर्गल्दास्ता अभिव्याप्य त्वा=त्वा आविशन्त्वर्थात्त्वदीय शरीर प्राप्नुवन्त्वित्यर्थः, इति प्रार्थना कृता प्रतिभाति । तत्र च मनुष्यशरीरे खादितपीतादिवस्तुसम्भारो जठराग्निना परिपक्वः सन् रसरूपता प्राप्य रक्तादिरूपता च समुपगम्य शरीरधातुषु यथैकता भजति तथा मदीयदत्ताः सोमा आहवनीयाग्नौ विशुद्धा भूत्वा हे इन्द्र ! त्वदीयशरीरसात्म्य भजन्तु इत्यर्थात् धमनीना शुद्धरक्तवहस्रोतोवाचित्वे न काऽपि शङ्काऽवशिष्यते । परन्तु शारीराऽवयवज्ञाने यास्कसमयात्पूर्वमेव विप्लव आसीदिति विज्ञायते । 'गल्दा धमनयो न भवन्ति' (नि. ६।२४) (इत्यत्र बहोः कालाल्लेखकप्रमादान्नकारो लुप्तो जातः । तदनुसन्धानमकृत्वा दुर्गाचार्यप्रभृतिभि र्यथेच्छ विरुद्ध प्रलपितमिति विद्वद्भिराकलनीयम्) इति निरुक्तपर्यालोचनया विस्पष्ट भवति । अतो निरुक्तपश्चाज्जातेषु ग्रन्थेषु किमु वक्तव्यम् । अतो धमनीशब्दो निरुक्तमतादपि न ज्ञानतन्तुवाचकः किन्तु विशुद्धरक्तवाहिस्रोतोवाचक एव । स्नायूना ज्ञानतन्तुवाचकत्वे न किञ्चिद्वाचनिक वचनमुपलभ्यते केवल मर्मस्थानविवरणे क्षिप्रादिव्यधे आक्षेपकादिना मरणेनानुमानमात्र यत्केवलस्नायुकर्तनेन भवतु नाम तत्स्थानीयक्रियाहानिः, परन्त्वाक्षेपकस्तु ज्ञानतन्तुकर्तनाऽभावे न सम्भवत्येव । अतः स्नायुमर्मणि प्रायो ज्ञानतन्तुवेध हृदि निधाय तत्फलानि दर्शितानि इत्यनुमानमात्रमेव शरणम् । तत्र दृढप्रमाणाऽभावात् न ज्ञानतन्तुवाचकत्वम् । **नाडीश**ब्दस्तु वेदे स्रोतःसाधारण्येन प्रयुक्तः यथा—"जिह्वा ज्या भवति कुल्मल वाङ्नाडीका दन्तास्तपसाभिदिग्धाः । तेभि र्ब्रह्मा विध्यति देवपीयून् हृद्बलै र्धनुर्भि र्देवजूतैः ॥ अ. ५।१८।८ ॥ ये ते नाड्यौ देवकृते ययोस्तिष्ठति

वृष्ण्यम्। ते ते भिनद्मि शम्यया मुष्या अधि मुष्कयोः॥ अ. ६।१३८।४॥ यत्राऽमृतञ्च मृत्युश्च पुरुषेधि समाहिते। समुद्रो यस्य नाड्यः पुरुषेधि समाहिताः स्कम्भ त ब्रूहि कतमः स्विदेव सः॥ अ. १०।७।१५॥ यस्य चतस्रः प्रदिशोनाड्यस्तिष्ठन्ति प्रथमाः। यज्ञो यत्र पराक्रान्त. स्कम्भ त ब्रूहि कतम. स्विदेव सः॥ अ. १०।७।१६॥ इति" यद्यपि "इमा यास्ते शत हिराः सहस्रं धमनीरुत। अ. ७।३६।२" इत्यत्र सायणेन हिराणा धमनीनाञ्चाऽपि नाड्य इत्यर्थः कृतोऽस्ति परन्तु तत्र शारीराऽज्ञानमेव कारण मन्तव्यम्। सायणसमये शारीरज्ञानं लुप्तप्रायमासीदतो यत्र तत्र स्थले सायणेन यथेच्छ प्रलपितमस्ति। एव वर्तमानसुश्रुतचरकसहितयोः सच्छिद्राऽच्छिद्रस्रोतसो नाडी शब्दः प्रयुक्तो दृश्यते यथा—"कण्ठहृदयनेत्रक्लोमनाडीषु मण्डलाः (सु. शा. ५।२७)" इत्यत्र स्रोतस्सु। "सञ्ज्ञावहासु नाडीषु पिहितास्वनिलादिभिः। तमोऽभ्युपैति सहसा सुखदुःखव्यपोहकृत्॥ सु. उ. ४६।६॥" इत्यत्र ज्ञानतन्तुषु "एव कालप्रकर्षेण मुक्तो नाडीविबन्धनात्। गर्भाशयस्थो यो गर्भो जननाय प्रपद्यते। सु. नि. ८।८" "मातुस्तु खलु रसवहाया नाड्या गर्भनाभिनाडी प्रतिबद्धा साऽस्य मातुराहाररसवीर्यमभिवहति॥ सु. शा. ३।३१" अत्रोभयत्र शिरादिस्रोतःसमूहार्थे नाडीशब्दः प्रयुक्तः। "पक्के च दुग्धहरिणीः परिहृत्य नाडीः कृष्णञ्च चूचुकयुग विदधीत शस्त्रम्॥ सु. चि. १७।४७" इत्यत्र दुग्धवहस्रोतोऽर्थे नाडीशब्दः प्रयुक्तः। "नाडीव यद्वहति तेन मता तु नाडी। सु. नि. १०।९" इत्यत्र पूयमार्गे यत्किञ्चिद्विशेषमनपेक्ष्य केवल मार्गमात्र लक्ष्यीकृत्य नाडीशब्दः प्रयुक्तः। "यदा तु धमनीः सर्वाः कुपितोऽभ्येति मारुतः। तदाक्षिपत्याशु मुहुर्मुहु र्देह मुहुश्चरः। मुहुर्मुहुस्तदाक्षेपादाक्षेपक इति स्मृतः॥ सु. नि. १।५१" इत्यत्र ज्ञानतन्तुषु धमनीशब्दः प्रयुक्तः। "आवृत्य सकफोवायु र्धमनीः शब्दवाहिनीः। नरान् करोत्यक्रियकान् मूकमिम्मिणगद्गदान्॥ सु. नि. १।८५॥" इत्यत्र वाक्साधनयन्त्रेषु धमनीशब्दः प्रयुक्तः। "अथः प्रकुपितोऽन्यतमो हि दोषः फलकोशवाहिनीरभिप्रपद्य धमनीः फलकोषयो र्वृद्धिं जनयति॥ सु. नि. १२।४" इत्यत्र रसायन्यादिस्रोतः साधारण्येन धमनी शब्दः प्रयुक्तः। "अधृतिरदृढसौहृदः कृतघ्नः कृशपरुषो धमनीततः प्रलापी। सु. शा. ४।६५" अत्र सिराऽर्थे धमनीशब्दः प्रयुक्तः, धमनीतत इत्यनेन नीलाभदृश्यसिराबहुल इत्यर्थात्। "सञ्ज्ञावहेषु स्रोतःसु दोषव्याप्तेषु मानवः। रजस्तमः परीतेषु मूढो भ्रान्तेन चेतसा॥ सु. उ. ६१।८" इत्यत्र ज्ञानतन्तुषु स्रोतःशब्दः प्रयुक्तः। "स्रोतःसु ते स्वरवहेषु गताः प्रतिष्ठा हन्युः स्वर भवति चापि हि षड्विधः सः॥ सु. उ. ५३।३" इत्यत्र स्वरोत्पादकयन्त्रसाधारण्येन स्रोतःशब्दप्रयोगः कृतोऽस्ति। "असृग्वहास्तु रोहिण्य सिरा नात्युष्णशीतलाः। सु. शा. ७।१८" इत्यत्र सिराशब्देन शुद्धरक्तवाहिन्य उक्ताः, रोहिणीति लिङ्गात्। नहि सिराः रोहिण्यो भवन्ति किन्तु नीलाभाः। अस्मिन्नेव पद्ये "शीता गौर्य. स्थिराः कफात्" इत्यनेन रसायनीषु सिराशब्दः प्रयुक्तः। "व्याप्नुवन्त्यभितो देह नाभितः प्रसृताः सिराः। प्रतानाः पद्मिनीकन्दाद्बिसादीना यथा जलम्। सु. शा. ७।२३" अत्र सिराशब्देन ज्ञानतन्तवो निर्दिष्टाः। "असदेशस्थितो वायुः शोषयित्वासबन्धनम्। शिराश्चाकुञ्च्य तत्रस्थो जनयत्यववाहुकम्॥ सु. नि. १।८२" इत्यत्र कण्डरार्थे सिराशब्दः प्रयुक्तः। "धातूना पूरण वर्णं स्पर्शज्ञानमसशयम्। स्वाः सिराः सञ्चरद्रक्त कुर्याच्चान्यान् गुणानपि॥ सु. शा. ७।१४" इत्यत्र धातूना पूरणमित्यनेन सिराधमन्यावुक्ते। स्पर्शज्ञानमित्यनेन ज्ञानतन्तुकार्यं निर्दिष्टम्। तच्च सिरास्वसम्बद्ध किन्तु ज्ञानतन्तुनिर्वाह्यं सिरासु सञ्चरद्रक्त तन्न साधयति। एवं चरकेऽपि "स्रोतासि सिरा धमन्यो रसवाहिन्यो नाड्यः पन्थानो मार्गाः शरीरच्छिद्राणि संवृताऽसंवृतानि स्थानान्याशयाः क्षया निकेताश्चेति शरीरधात्ववकाशानां लक्ष्याऽलक्ष्याणा नामानि॥ च. वि. ५।१४". इति वचनेन स्रोत आदयः शब्दाः एकार्थकाः, ते च वैद्यै र्यथेच्छं

प्रयोक्तव्या इति तदाकलनया चेतसि महान् खेदः सञ्जायते। एतद्वचनं नात्रेयसमादिष्टं प्रतिभाति न वा चरकेणोपनिबद्धं किन्तु प्रतिसंस्कर्तृभिः प्रक्षिप्तमिति निःसंशयं ब्रूमः। स्रोतांसि छिद्राणि मार्गाश्चेति कथमेकार्थवाचका भवेयुरिति आत्रेयमहर्षेः बुद्धयां व्यामोहो जायेत, तथात्वे स्वीकृते च भावाऽभावौ द्वावेव पदार्थाविव्येवं 'कपिलादिभिश्चेन्निर्दिष्टमभविष्यत्तदा पृथिव्यादिद्रव्याणां रूपादिगुणानाञ्च कथं विभेदोऽभविष्यत्? तद्वद्योगिनामपि सूक्ष्मशरीररचनायां ध्यानगम्यत्वात्तदीयपदार्थानां परस्परं विच्छेदमन्तरा व्यवहारस्यैव दुर्वारत्वं स्यात्। अतः स्पष्टं विज्ञायते इदं वचनं प्रतिसंस्कर्तृप्रक्षिप्तम्। इममेव विपर्ययमाश्रित्य "तदनन्तरं ह्यस्य लोमकूपायनैरुपस्नेहः कश्चिन्नाभिनाड्ययनैः, नाभ्यां ह्यस्य नाडी प्रसक्ता, नाड्यां चापरा० (च. शा. ६।२१)" "असम्यक् कल्पने हि नाड्या आयामव्यायामोत्तुण्डितपिण्डालिकाविनामिकाविजृम्भिकाबाधेभ्यो भयम्॥ च. शा. ८।४७" इति शिरादिसमुदाये नाडीशब्दः प्रयुक्तः। "मन्ये संश्रित्य वातोऽन्तर्यदा नाडीः प्रपद्यते। मन्यास्तम्भं तदा कुर्यादन्तरायामसञ्ज्ञितम्॥ च. चि. २८।४२" इत्यत्र ज्ञानतन्तुषु नाडीशब्द उक्तः। "बाह्याः सिराः प्राप्य यदा कफासृक्पित्तानि सन्दूषयतीह वायुः। तैर्बद्धमार्गः स तदा विसर्पन्नुत्सेधलिङ्गं श्वयथुं करोति॥ च. चि. १२।८" इत्यत्र सिराशब्देन अशुद्धरक्तवाहिन्यः शुद्धरक्तवाहिन्यो रसायन्यश्चोक्ताः। "मन्त्रैः धमनीबन्धोऽपामार्जनं कार्यमात्मरक्षा च। च. चि. २३।६१" इत्यत्र शुद्धाऽशुद्धरक्तरसवाहिनीषु धमनीसिरारसायनीषु धमनीशब्दः प्रयुक्तः। यथार्थपारिभाषिकसिरायान्तु "समीक्ष्य कार्येद्बाहौ वामे वा व्यधयेत्सिराम्। च. चि. १३।७७" "क्षारोऽगदः कफस्थानगते स्वेदस्तथा सिराव्यधनम्। दूषीविषेऽथ रक्तस्थिते विज्ञाय कर्म पञ्चविधम्॥ च. चि. २३।६३" इत्यादीन्युदाहरणानि ज्ञेयानि। "अजीर्णकट्वम्लविदाह्यशीतैरामाशये पित्तमुदीर्णवेगम्। रसायनीभिर्विसृतं प्रपीड्य मर्मोर्द्ध्वभागम्य वर्मि करोति॥ च. चि. २०।१०" इत्यत्र रसपरिणामशैलीनिर्देशपुरःसरं यथार्थपारिभाषिकरसायन्यो निर्दिष्टाः। "रसवहानां स्रोतसां हृदयं मूलं दश च धमन्यः। च. वि. ५।१०" इत्यत्र यथार्थपारिभाषिकविशुद्धरक्तवाहिनीषु धमनीशब्दः प्रयुक्तः। "आमाशयगतः पाकमाहारः प्राप्य केवलम्। पक्वः सर्वाशयं पश्चाद्धमनीभिः प्रपद्यते॥ च. वि. २।२५॥" इत्यत्र रसायन्यः सिराः धमन्यश्चेति तिसृणामपि धमनीशब्देन ग्रहणं कृतमस्ति। एवं वने गोपालरहिता गाव इव राजरहिता प्रजा इव धमन्यादयः शब्दा अर्थविशेषं परित्यज्य सर्वतः परिभ्राम्यन्तो दृश्यन्ते, अतो ज्ञानतन्तुवाचकः कः शब्दः स्थापनीय इति वर्तमानाऽऽयुर्वेदग्रन्थेभ्यो निश्चेतुं नितरां दुरत्ययः। अतो नवीनग्रन्थरचनासु सञ्ज्ञावहतन्तुरिति सञ्ज्ञातन्तुरिति वा अगत्या सञ्ज्ञास्रोत इति वा ज्ञानतन्तूनां सञ्ज्ञा करणीयेति सुधीभिराकलनीयम्। तन्त्रशास्त्रे उपनिषत्सु च नाडीशब्देन व्यवहारो बहुधा कृतोऽस्ति यथा—"नाड्योऽनन्ताः समुत्पन्नाः सुषुम्णापञ्चपर्वसु।" शारदातिलके। "मध्यस्थकुण्डलिनीमाश्रित्य मुख्या नाड्यश्चतुर्दश भवन्ति० (शाण्डिल्य उ०) इत्यादि विस्तरः पूर्वमुद्धृतः। परन्तु नैकान्ततया ज्ञानतन्तुष्वेव नाडीशब्दः प्रयुक्त इति साधारणप्रणालीष्वपि प्रयुक्तत्वात्, यथा—"अथ मातुराशितपीतनाडीसूत्रगतेन प्राण आप्याय्यते" (गर्भोपनिषदि) इत्यत्र सिरादिसम्मिलितस्रोतःसमूहे नाडीशब्दप्रयोगात्। अतो नवीनग्रन्थरचनायां वर्तमानसमस्तदेशीयविदुषां सम्मत्या कश्चिदप्येकः शब्दः स्थिरीकर्तव्य इत्यस्माकं सम्मतिः। तत्राऽप्युक्तरीत्या सञ्ज्ञास्रोत इति सञ्ज्ञातन्तुरिति वा सञ्ज्ञाकरणे लाघवात् तयोरेकतरयोर्नियमनं न्याय्यं प्रतिभातीत्यलमतिविस्तरेण॥

(सं. १५०) **वैश्वानरः**—विश्वेभ्यो नरेभ्यो हित इत्यर्थे 'तस्मैहितं—' (पा. ५।१।५) मित्यणि 'तद्धितेष्वचामादेः—' (पा. ७।२।११७) रित्यादेरचो वृद्धौ 'नरेसञ्ज्ञायां-' (पा. ६।३।१२९) मिति पूर्वपदस्य दीर्घे वैश्वानर इति सिद्ध्यति। इयं जाठरानलस्य सञ्ज्ञा। नरशब्दो यद्यपि पुरुषत्वविशिष्टे मनुष्ये

वर्तते तथाऽप्यत्र जीवमात्रस्य ग्रहणम्। अत एव एकादशाऽध्याये "पुरीष्योऽसि विश्वम्भरा अथर्वा त्वा प्रथमो निरमन्थदग्ने। त्वामग्ने पुष्कराढध्यथर्वा निरमन्थत मूर्ध्नो विश्वस्य वाघतः॥ वा. म ११।३२" हे अग्ने! त्वं पुरीष्योऽसि, पुरीपमित्यन्ननाम तेन सञ्जातोऽसि तस्मै पचनादिकार्ये हितोऽसि वा पुरीष्यः "पुरीपमित्यन्न वै पुरीपमन्नमेवास्मिन्नेतद्दधाति तेन वर्धस्व चाऽऽप्यायस्वेति नाऽत्र तिरोहितमिवाऽस्ति वर्षिपीमहि च वयमा च प्यासिपीमहीत्याशिपमेवैतदाशास्ते॥ शत० ब्रा० १४।३।१।२३" तथाच त्व विश्वम्भरा असि विश्व बिभर्तीति विश्वम्भराः, असुन् प्रत्यये साधुत्वम्। अत्र स्थावरजङ्गमोभयाऽऽत्मक जगद्विश्वशब्देनाऽभिप्रेतम्। विशेपतो जङ्गमसृष्टिः, पुरीष्य इति विशेपणात्। अत्र विश्वम्भरशब्देन वैश्वानरः पुनरपि स्पष्टीकृत्य स्तुतः, अतो वैश्वानरशब्दस्थनरशब्देन जीवमात्रग्रहणम् तथाच—"अग्ने वैश्वानर विश्वै र्मा देवैः पाहि स्वाहा। अथर्व. २।१६।४" "विश्वम्भर विश्वेन मा भरसा पाहि स्वाहा॥ अथर्व० २।१६।५" इत्यत्राऽव्यवहिताभ्या मन्त्राभ्या वैश्वानरविश्वम्भरशब्दप्रतिपाद्योऽग्निः स्तुतः। तत्र शब्दवैलक्षण्यमात्रमेवाऽस्ति नत्वर्थवैलक्षण्यमित्यव्यवहितमन्त्रपाठेन ज्ञापितम्। यद्यपि "स एप इह प्रविष्टः आनखाग्रेभ्यो यथा क्षुरः क्षुरधानेऽवहितः स्याद्विश्वम्भरो वा विश्वम्भरकुलाये त न पश्यन्त्यकृत्स्नो हि सः॥ श० १४।४।२।१६" इति शतपथे प्रकरणवशाद्ब्रह्मपरत्वेन विश्वम्भरशब्दार्थं प्रतिपादितमपि बृहदारण्यके इममेव प्रमाणमुपन्यस्य जाठराग्निपरत्वेन विश्वम्भरशब्दो व्याख्यातः। अत्र परस्पर विरोध इति तु न सम्भावनीयम्—"अह वैश्वानरो भूत्वा प्राणिना देहमाश्रितः। प्राणापानसमायुक्तः पचाम्यन्नं चतुर्विधम्॥" (गी. १।१४) इति गीताया भगवद्वचनाद्वैश्वानरस्य सर्वजीवानां जीवनाऽऽधारत्वात्। स (नरशब्दः) प्रधानतया मनुष्ये वहुधा प्रयुक्तोऽपि जीवमात्रवाचको वोध्यः। तथाच—"पुनर्मनः पुनरायुर्म आगन् पुनः प्राणः पुनरात्मा म आगन् पुनश्चक्षुः पुनः श्रोत्र म आगन्। वैश्वानरो अदब्धस्तनूपा अग्नि र्नः पातु दुरितादवद्यात्॥ वा. स. ४।१५" सुपुप्तिकाले मन आदीना स्वस्वव्यापारादुपरतत्वात्पुनः स्वस्वकार्यभारं सवोढु प्रार्थना 'पुनर्मनः पुनरायुर्म आगन्' इत्यादिना, उपरतव्यापाराणा पुनः पूर्ववत्स्वकार्यकरणे दैवाधीनत्वात्। सर्पादिहिंसकसहस्रकारणानामागमनसम्भवात्। सर्वेभ्यो रक्षणपूर्वक स्वापात्पूर्ववन्मेऽविकृता जागृतिः स्यात्, मा स्वापान्तरे विघ्नानि भूवन्निति युक्तैवेश्वरप्रार्थनेति मनसि निधाय शतपथे व्याख्यातम्, तथाहि—"अथ यत्र सुप्त्वा पुनर्नावद्रास्यन्भवति। तद्वाचयति पुनर्मनः पुनरायुर्म आगन्। पुनः प्राणः पुनरात्मा म आगन्। पुनश्चक्षुः पुनः श्रोत्र म आगन्निति सर्वे ह वा एते स्वपतोऽपक्रामन्ति प्राण एव न तैरेवैतत्सुप्त्वा पुनः सङ्गच्छते तस्मादाह पुनर्मनः पुनरायुर्म आगन् पुनः प्राणः पुनरात्मा म आगन्। पुनश्चक्षुः पुनः श्रोत्र म आगन्" श. ब्रा. ३।२।२।२३॥ स्वप्ने मन आदीना व्यापारविसृष्टावपि न काचिद्धानि र्जायते परन्तु वैश्वानरस्य तथाव्यापारविनिवृत्तौ महाननर्थः स्यादिति स्वतन्त्रतया तद्रक्षणस्य प्रार्थना कृताऽस्ति। अदब्धः= अविरतस्वव्यापारोऽतएव तनूः=सूक्ष्माऽतिसूक्ष्मपरमाणुपुञ्जमारभ्य स्थूलाऽतिस्थूलतमाऽवयवपर्यन्त शरीर पातीति तनूपाः=वैश्वानरोऽग्निर्नः=अस्मान् अवद्यात्=अशुभात्पापात्स्वकीयक्षीणताऽतिवृद्ध्यादिदोपात्पातु=रक्षतु इति। तथाच—"वैश्वानरो अदब्धस्तनूपा अग्नि र्नः पातु दुरितादवद्यादिति तद्यदेवाऽत्र स्वप्नेन वा येन वा मिथ्याकर्म तस्मान्नः सर्वस्मादग्नि र्गोपायत्वित्येवैतदाह तस्मादाह वैश्वानरो अदब्धस्तनूपा अग्निर्नः पातु दुरितादवद्यादिति" श. ब्रा. ३।२।२।२३। इममेवाऽऽशयमभिप्रेत्याऽऽयुर्वेदे यथायथ व्याख्यातम्। तथाहि—"जाठरो भगवानग्निरीश्वरोऽन्नस्य पाचकः। सौक्ष्म्याद्रसानाददानो विवेक्तु नैव शक्यते॥ प्राणापानसमानैस्तु सर्वतः पवनैस्त्रिभिः। ध्मायते पाल्यते चाऽपि स्वेस्वे स्थाने व्यवस्थितैः॥ सु. सू. ३५।२७–२८" अयमेव पित्ततेजःशब्दवाच्यः यथा—"अशित खादित पीतं लीढं कोष्ठगत नृणाम्। तज्जीर्यति यथाकालं शोपितं पित्ततेजसा॥ सु. शा.

४।१९" यद्यपि "सर्वहेतुसमाचारादतिवृद्धस्तदाऽनिलः। रक्तमार्गेण सृजति पत्यनीककरं कफम्॥ दुर्गन्धं पिच्छिल पीतं विदग्ध पित्ततेजसा॥ च. चि. ३०।२२२" इत्यत्राऽपि पित्ततेजः समागतम् पर न तज्जाठराग्निवाचक किन्तु मिथ्याऽऽहारविहारादिनाऽतिप्रवृद्धविकृतशरीरोष्मवाचक शरीरहानिकरत्वात्। शरीरपोषणोपयुक्तपित्ततेजस एव जाठराऽग्निवाचकत्वात्। जाठराऽग्निरितिसञ्ज्ञा तु मातुरुदरे समासादितत्वात्, न पुनरुदर्योऽग्नेरेव सञ्ज्ञा, तस्य सर्वशरीरव्यापकत्वात्। यत्रकुत्रचित्स्थाने आधाराधेययोरेकत्वबुद्ध्या पित्तशब्देनाऽपि व्यवहृतोऽस्ति यथा—"अत्र जिज्ञास्यं किं पित्तव्यतिरेकादन्योऽग्निः आहोस्वित् पित्तमेवाऽग्निरिति? अत्रोच्यते—न खलु पित्तव्यतिरेकादन्योऽग्निरुपलभ्यते, आग्नेयत्वात् पित्ते दहनपचनादिषु अभिप्रवर्तमाने अग्निवदुपचारः क्रियतेऽन्तरग्निरिति। क्षीणे ह्यग्निगुणे तत्समानद्रव्योपयोगादतिवृद्धे शीतक्रियोपयोगात् आगमाच्च पश्यामो न खलु पित्तव्यतिरेकादन्योऽग्निरिति सु. सू. २१।९" शारीरोष्मस्वग्नित्वव्यवहार आयुर्वेदेऽभिप्रेतः, स चोष्मा प्रतिप्रदेशं प्रत्यवयवञ्च भिन्न इति सिद्धान्तः—"शुक्रशोणित गर्भाशयस्थमात्मप्रकृतिविकारसम्मूर्च्छित 'गर्भ' इत्युच्यते त चेतनाऽवस्थित वायुर्विभजति, तेज एन पचति, आपः क्लेदयन्ति, पृथिवी सहन्ति, आकाश विवर्धयति, सु. शा. ५।३" अत्र तेजःशब्देन शरीरोष्मण एव ग्रहणम्, आयुर्वेदे पञ्चभूतपरिणामेषु व्यवहारसौकर्याय वातपित्तश्लेष्माण इति सङ्केतः कृतोऽस्ति पञ्चभूतेषु च तन्निष्ठगुणानामेव प्रायः कार्यकरत्वादाग्नेयपदार्थाना पित्तरूपेण परिणामात्तदीयगुणस्य (दहनपचनादिरूपस्य) तत्र सत्त्वात्साधारणतया पित्तशब्देनाऽपि तदीयतेज उच्यते अङ्गारेषु–अग्निवत्।

चरके तु पञ्चीकरणप्रपञ्च हृदि सन्निधाय पञ्चभूताऽग्नयः सप्तधात्वग्नय एकश्च सर्वव्यापकः स देहाग्निरिति नामकः, एतदधीनाः सर्वेऽप्यग्नयः सन्तीति सिद्धान्तः प्रदर्शितः यथा—"आयुर्वर्णो बल स्वास्थ्यमुत्साहोपचयौ प्रभा। ओजस्तेजोऽग्नयः प्राणाश्चोक्ता देहाग्निहेतुकाः॥ शान्तेऽग्नौ म्रियते युक्ते चिरं जीवत्यनामयः। रोगी स्याद्विकृते मूलमग्निस्तस्मान्निरुच्यते॥ यदन्न देहधात्वोजोबलवर्णादिपोषकम्। तत्राऽग्नि र्हेतुराहारान्नह्यपक्काद्रसोद्भवः॥ च. चि. १५।३–४–५॥" "भौमाऽप्याग्नेयवायव्याः पञ्चोष्माणः सनाभसाः। पञ्चाहारगुणान् स्वान्स्वान् पार्थिवादीन् पचन्ति हि॥ यथा स्वस्व च पुष्यन्ते देहे द्रव्यगुणाः पृथक्। पार्थिवाः पार्थिवानेव शेषाः शेषांश्च कृत्स्नशः॥ सप्तभि र्देहधातारो धातवो द्विविधं पुनः। यथास्वमग्निभिः पाक यान्ति किट्टप्रसादतः॥ च० चि. १५।१३-१४-१५॥" प्रतिस्थानञ्च भिन्नभिन्नाऽग्नयः स्वीकृतास्ते च ऊष्मरूपा एव सन्तीति सिद्धान्तितम्। तथाहि—"यथास्वेनोष्मणा पाक शारीरा यान्ति धातवः। स्रोतसा च यथास्वेन धातुः पुष्यति धातुना॥ स्रोतसा सन्निरोधाच्च रक्तादीनाञ्च सङ्क्षयात्। धातूष्मणाञ्चापचयाद्राजयक्ष्मा प्रवर्तते॥ तस्मिन्काले पचत्यग्नि र्यदन्न कोष्ठमाश्रितम्। मलीभवति तत्प्रायः कल्पते किञ्चिदोजसे॥ च. चि. ८।३९-४०-४१" इत्यादिवाक्यैः शरीरोष्माण एवाऽग्नित्वेन प्रतिपादिताः। ऊष्माणश्च पित्तकृता एव सन्तीति (ऊष्मापित्तादृतेनास्तीति सिद्धान्तात्) यत्रकुत्रस्थाने गुणगुणिनोरभेदबुद्ध्या पित्तस्याऽग्नित्वकथन प्रसङ्गवशादागतञ्चेद्भवेत्तर्हि न विप्रतिपत्तव्यम्। अयञ्चाऽग्निसन्तानः परमसूक्ष्मः सन् स्थावरजङ्गमोभयाऽऽत्मकजगदुत्पत्तिस्थितिप्रलयकारकः। तस्मादय वैश्वानरः विश्वम्भर इत्यादिनाम्ना वेदे आयुर्वेदे च प्रतिपादितः। अयमेतत्स्थानेऽस्ति, इयता प्रमाणेन चाऽस्ति इति केनाऽपि निर्धारयितुमशक्यस्तत्कार्यैरेव समूहो भवति, अतएव भगवता धन्वन्तरिणोक्तं—"जाठरो भगवानग्निरीश्वरोऽन्नस्य पाचकः। सौक्ष्म्याद्रसानाददानो विवेक्तु नैव शक्यते॥ सु. सू. ३५।२७" अतः पित्तमेवाऽग्निरित्यत्र नाऽऽचार्यस्य पित्तस्यैवाऽग्नित्वमभिप्रेतम् किन्तु पित्तव्यतिरेकादन्योऽग्नि र्न लभ्यते इति कथनेन पित्तस्य अग्न्याधारत्वं सूचितम्। पित्तस्य च पञ्चीकरणतयोत्पन्नत्वात्स्वेतरभूतचतुष्टयस्याऽपि सम्बन्धाद्द्रव्यरूपत्वादग्नेश्चोष्मरूपत्वेन गुणत्वात्पित्ताऽग्न्योरेकत्वस्य भ्रमाऽवकाश एव नाऽस्तीति सुधीभिर्विभावनीयमित्यलमतिविस्तरेण।

---

# अथ सुश्रुतीयशारीरकोष्ठकम्

( ऊर्ध्वशारीराऽवयवाः )

| संख्याक्रमः | सुश्रुते | चरके | आंग्लाऽनुवादः |
|---|---|---|---|
| १ | मूर्धजाः शा. ३।७ केशाः शा. ३।३३ | केशाः शा. ८।५२ | Hair ( of the head ) ( हेर ऑफ दी हेड ) |
| २ | शिरः शा. ५।३ मस्तकम् शा. ५।४, मूर्धा शा. ७।२० | शिरः सू. १७।१२ मूर्धा शा. ७।१२ | Head ( हेड ) |
| ३ | शिरः कपालानि शा. ५।२६ | शिरः कपालानि शा. ७।७ | Skull Bones ( स्कल बोन्स ) |
| ४ | शिरः सीमन्ताः शा. ६।२८ | | Sutures of the cranium ( सूचर्स ऑफ दी क्रेनियम ) |
| ५ | केशान्तः शा. ६।२८ | केशान्तः चि. ९।८३ | Boundary line between the forehead and the scalp (बाउण्डरी लाइन बिट-वीन दी फोरहेड एण्ड स्काल्प ) |
| ६ | अधिपतिः (म.) शा. ६।२८ | | Torcular Herophile (confluence of Intra cranial sinuses ( टोरक्यूलर हीरोफाइलाइ ) |
| ७ | मस्तिष्कम् सू. ३५।४ | मस्तिष्कम् शा. ७।१७ | Brain ब्रेन |
| ८ | मस्तुलुङ्गाः शा. १०।६२ | मस्तुलुङ्गाः सि. ९।१०५ | Convolutions or gyri of brain ( कानव्हुल्युशन्स ऑर गायरी आफ ब्रेन ) |
| ९ | ललाटम् शा. ५।४ | ललाटम् शा. ८।५२ | Forehead ( फोरहेड ) |
| १० | आवर्तौ ( म. ) शा. ६।२८ | | Depression above the superciliary margins ( डिप्रेशन अबाउ दी सुपरसीलिअरी मार्जिनस् ) |
| ११ | उत्क्षेपौ ( म. ) शा. ६।२८ | | Temporal muscles (टेम्पोरल मसल्स ) |
| १२ | भ्रूमध्यम् शा. ६।२८ | भ्रूमध्यम् सू. १७।२० | Glabella ( ग्लाबेला ) |
| १३ | [1]स्थपनी( म. ) शा. ६।२८ | | Frontal emissary vein ( फ्रंटल एमिसरी व्हेन ) |
| १४ | भ्रुवौ शा. ६।२८ | भ्रुवौ शा. ७।१४ | Eyebrows ( आइब्राउस ) |

1 Frontal emissary vein between the superior sagittal sinus & veins of nose

| संख्याक्रमः | सुश्रुते | चरके | आंग्लाऽनुवादः |
|---|---|---|---|
| १५ | भ्रूपुच्छान्तौ शा. ६।२८ | | Lateral angles of the orbit (लैटरल ऐंगल्स ऑफ दी ऑरविट) |
| १६ | शङ्खौ (म.) शा. ६।२८ | शङ्खौ सू. १७।१९ शङ्खकौ शा. ७।७ | Temporal bone (टेम्पोरल वोन) |
| १७ | नेत्रे उ. १।१३, अक्षिणी उ. १।१७, लोचने उ. १।१४, नयने शा. ४।६८ प्रेक्षणे सू. ३५।४ | नेत्रे सू. ५।१४ अक्षिणी सू. १७।२०, दर्शने इ. ९।२ चक्षुषी शा. ८।५२ | Eyes (आईज्) |
| १८ | अक्षिपक्ष्माणि शा. ३।१४ (ऊर्ध्वाऽधोभागेन प्रत्यक्षि पक्ष्मद्वयम्) | अक्षिपक्ष्माणि इ. ३।८ | Eye-lashes (आई—लैसीज्) |
| १९ | पक्ष्माशयः उ. ३।२९ | | Hair follicles (हेर फौलीकल्स) |
| २० | नेत्रवर्त्मानि उ. १।१५ (ऊर्ध्वाऽधोभेदेन द्विविधानि) अक्षिकोषाः शा.५।२० | अक्षिवर्त्मानि४ शा. ४।१४ | Eyelids (upper and lower) आई लिड्स. (अपर एण्ड लोअर) |
| २१ | वर्त्मपटले उ. १।१७ (तेजोजलमयं वत्मपटल प्रथमम् १, पिशितमयं वर्त्मपटल-द्वितीयम्) | | Conjunctival and muscular layers of the lid (कजटाइवल एण्ड मस्क्यूलर लेअर्स ऑफ दी लिड) |
| २२ | नयनबुद्बुदः उ. १।१० | | Eyeball (आईवाल) |
| २३ | श्वेतभागः उ. १।१५ | | Sclerotic and cornea (स्क्लेरोटिक एण्ड कोर्निया) |
| २४ | कृष्णभागः उ. १।१५ तारका सू. ३५।१२ | | Uveal tract (Iris, ciliary body and choroid) (यूव्हीअल ट्रैक्ट) |
| २५ | दृष्टिः उ. ७।४ | दृष्टिः सू. १४।१० | Pupil (प्यूपिल) or macula lutea (ऑर मेक्युला लुटिया) |
| २६ | पक्ष्ममण्डलम् उ. १।१५ | | Inter palpebral fissure (इटर पालपीब्रल फिशर) |
| २७ | वर्त्ममण्डलम् उ. १।१५ | | |
| २८ | श्वेतमण्डलम् उ. १।१५ | | Sclera (स्क्लेरा) |
| २९ | कृष्णमण्डलम् उ. १।१५ | | Iris (आयरिस) |
| ३० | दृष्टिमण्डलम् उ. १।१५ | | Retina (रैटाइना) |

| संख्याक्रमः | सुश्रुते | चरके | आंग्लाऽनुवादः |
|---|---|---|---|
| ३१ | पक्ष्मवर्त्मसन्धिः उ. १।१६ | | Inter marginal sulcus ( इण्टर मार्जिनल सल्कस ) |
| ३२ | वर्त्मशुक्लसन्धिः उ. १।१६ | | Conjunctival fornix ( कजटाइवल फौरनिक्स ) |
| ३३ | "शुक्लकृष्णसन्धि" उ. १।१६ | | Sulcus circularis cornea ( सल्कस सरक्यूलैरिस कोर्निया ) |
| ३४ | कृष्णदृष्टिसन्धिः उ. १।१६ | | Pupillary margin ( प्यूपिलरी मार्जिन ) |
| ३५ | **कनीनकगतः सन्धिः** उ. १।१ | | Internal canthus ( इण्टरनल कैन्थस ) |
| ३६ | अपाङ्गगः सन्धिः उ. १।१७ | | External canthus ( एक्स्टरनल कैन्थस ) |
| ३७ | अक्षिपटलानि ४ उ. १।१८ | | Coverings of the Eyeball ( कवरिंग्स् ऑफ दी आइबौल ) |
| ३८ | तेजोजलमयम् उ. १।१८ | | conjunctival layer ( कजटाइवल लेअर ) |
| ३९ | पिशितमयम् उ. १।१८ | | Orbital muscles of Eye ( आरबिटल मसल्स ऑफ आय) |
| ४० | मेदोमयम् उ. १।१९ | | Orbital fat ( ऑरबिटल फैट ) |
| ४१ | अस्थ्याश्रितम् उ. १।१९ | | Orbital fascia and periosteum( आरबिटल फेसिया एण्ड पैराआस्टीयम् |
| ४२ | **नेत्रशिराः** उ. १८।५४ | | Blood vessels of the eyeball. ( ब्लड वेसल्स ऑफ दी आइबौल ) |
| ४३ | नेत्रस्रोतांसि उ. १८।५४ | | Lymph channels of the eyeball ( लिम्फ् चेनल्स ऑफ दी आइबौल ) |
| ४४ | अश्रुमार्गाः उ. १।११ | | Lacrymal passages ( लैक्रीमल पैसैजीज् |
| ४५ | नेत्रनाडी ( दर्शनतन्तु ) शा. ५।२७ | नेत्रनाडी सि. २।२२ | Optic nerve ( ऑप्टिक नर्व्ह) |
| ४६ | **अपाङ्गौ** ( म. ) शा. ६।२८ | | Canthii ( कैन्थाई ) |
| ४७ | गण्डौ शा. ५।४ | गण्डौ शा. ७।१४ | Zygoma, malar prominence (जाइगोमा मैलर प्रोमीनन्स) |

" कृच्छ्रमूत्रपुरीषत्वमानाह त्रिकवेदनाम् । सु. नि. १।२४ " " पक्वाऽऽशयस्थोऽन्त्रकूजं शूलाऽऽटोपौ करोति च । कृच्छ्रमूत्रपुरीषत्वमानाहं त्रिकवेदनाम् ॥ चरक. चि. २८।२८ " इत्यादिवचनानि सङ्गच्छन्ते । असफलकद्वयेन ग्रीवाऽस्थ्ना योऽस्य सम्बन्धः स द्वितीय त्रिकम् । " पृष्ठोपरि पृष्ठवंशमुभयतस्त्रिकसम्बद्धे अंसफलके नाम ॥ सु. शा. ६।२७ " इति सुश्रुतवाक्येन निःसंशयीकृतत्वात्, असफलकयोर्ग्रीवानलकाभ्यां सम्बद्धत्वात्। अतएव " आमाशयात्कलायाम्भोनिभश्च त्रिकसन्धिजः । स्रावानेतान् परीक्ष्यादौ ततः कर्माऽऽचरेद्भिषक् " सु. सू. २२।१० इत्यत्र बाहुग्रीवाऽस्थित्रयसङ्घातोऽत्र त्रिकमिति डल्हणः, " चतुर्दशाऽस्थ्नां सङ्घाताः, तेषां त्रयो गुल्फजानुवङ्क्षणेषु, एतेनेतरत्सक्थि बाहू च व्याख्यातौ, त्रिकशिरसोरेकैकः ॥ सु. शा. ५।१६ इत्यत्र त्रिकशिरसोरित्यत्र त्रिकशब्देन त्रिकद्वयमुपतिष्ठते तत्राऽविशेषाद् द्वयोरपि चेद्ग्रहणं क्रियेत तर्हि पञ्चदशत्वापत्तौ चतुर्दशास्थिसङ्घाता इति स्वोक्त्यैव स्वोक्तिर्व्याहन्येत । अतोऽसफलकाऽस्थिसम्बद्धमेव त्रिकमभिप्रेतमिति प्रतिभाति । जघनस्थत्रिकस्य तु वङ्क्षणसङ्घातेनैव गतार्थत्वान्न तस्याऽत्रोपस्थितिरित्याचार्यस्याऽऽशयः प्रतिभाति, अतएव डल्हणेनाऽपि 'यद्यपि श्रोणिकाण्डभागे त्रिकं प्रसिद्धम्, तथाऽप्यत्र बाहुग्रीवाऽस्थित्रयसङ्घातस्त्रिक उच्यते, इति व्याख्यातम् । अतः शारीरे त्रिकशब्दवाच्यं स्थानद्वयं तदपि सन्धिरूपमेवाऽस्ति, न पुनः रूढ्या कस्मिंश्चिदप्यस्थन्यवयवे वा तत्प्रसिद्धिः । लोके तु जघनस्थसन्धेरेव त्रिकशब्देनाऽधिकः प्रचारो दृश्यते । वर्तमानसमयेऽपि पञ्चनदीयदेशे ' तिक ' इति नाम्ना प्रसिद्धिरतस्त्रिकसन्धिरस्माभिर्जघनस्थान एव लिखितोऽस्ति वस्तुतस्तु तत्स्थानद्वयं बोध्यम् ।

१५९ **नितम्बौ**="श्रोणीकाण्डयोरुपर्याशयाच्छादनौ पार्श्वान्तरप्रतिबद्धौ नितम्बौनाम तत्राऽधः कायशोषो दौर्बल्याच्च मरणम् । " सु. शा. ६।२७ श्रोणिकाण्ड्योरुपर्याशयाच्छादनौ आमाशयपिधायकौ पार्श्वान्तरप्रतिबद्धौ पार्श्वमध्ये प्रतिबद्धौ नितम्बौ, अस्थिमर्मणी अर्धाङ्गुले कालान्तरप्राणहरे चेति डल्हण. ।

१६१ **कुकुन्दरे**="पार्श्वयोर्जघनबहिर्भागे पृष्ठवंशमुभयतो (नातिनिम्ने) कुकुन्दरे नाम मर्मणी तत्र स्पर्शाऽज्ञानमधः-काये चेष्टोपघातश्च । सु. शा. ६।२७ पार्श्वयो र्वामदक्षिणसञ्ज्ञकयोः, जघनबहिर्भागे इति कट्याः पश्चाद्भागे, गयी तु 'पार्श्वजघनभागे' इति पठित्वा पार्श्वयो र्जघनभागे अधोभागे नितम्बे निम्ने कुकुन्दरे इति व्याख्याति सन्धिमर्मणी अर्धाङ्गुले ईषन्निम्नाकारे वैकल्यकरे चेति डल्हणः । कुकुन्दरौ स्फिचोरुपरि उन्नतौ भागाविति चक्रपाणिः ।

( स. १६२ ) **कटीकतरुणे**=" पृष्ठवंशमुभयतः प्रतिश्रोणीकाण्डमस्थिनी कटीकतरुणे नाम मर्मणी तत्रशोणितक्षयात्पाण्डुर्विवर्णो हीनरूपश्च म्रियते " सु. शा. ६।२७ प्रतिश्रोणिकाण्डमित्यत्र 'प्रतिश्रोणिकर्णौ' इति केचित् पठन्ति, तत्र श्रोणिकर्णौ लक्ष्यीकृत्य त्रिकसन्निधाने श्रोण्यामुपरि अस्थिमर्मणी, अर्धाङ्गुले कालान्तरप्राणहरे च ।

( स. १६४ ) **अपस्तम्भौ**=" उभयत्रोरसो नाड्यौ वातवहे अपस्तम्भौ नाम तत्र वातपूर्णकोष्ठतया कासश्वासाभ्यां मरणम् । " सु. शा. ६।२६ उरसो द्वयोः पार्श्वयोरित्यर्थः । शिरामर्मणी अर्धाङ्गुलप्रमाणे कालान्तरप्राणहरे चेति डल्हणः ॥

( स. १६५ ) **श्लेष्मभुवौ** ( फुफ्फुसौ )=श्लेष्मभुवाविति कथनेन स्पष्टमेव फुफ्फुसद्वयाऽभिधानम् । ऊर्ध्वगणनयाऽपि तदाऽऽख्यानमेव सम्भवति, अस्य व्याख्याने श्लेष्मभुवौ कण्ठपार्श्वयो र्व्यवस्थितौ इत्येतद्भागश्चक्रपाणेः समीचीनः, कठिनौ भागाविति त्वज्ञानमूलकमेव प्रतिभाति । कण्ठस्तनयो र्मध्ये तादृशभागाऽभावात् )

क्रमेणाङ्गानां कथनात्स्तनयोरुपरि च श्लेष्मभुवोः कथनात्। न च वाच्यं श्वासपथयोः कोमलास्थि( तरुणास्थि ) शृङ्खलाऽभिप्रेता चक्रपाणिनेति तन्मात्रस्य श्लेष्मभूत्वाऽभावात्। पर्शुकाना गणनस्य त्वस्थिगणनायामेव समाविष्टत्वाच्च। हरिश्चन्द्रे–" उदानवायोराधारः फुफ्फुसः प्रोच्यते बुधैः–" रित्यनेन उदानवायोराधारत्वेन तौ परिगणितौ, तत्रैव सप्ताशयगणनाया " श्लेष्माशयः स्यादुरसि तस्मादामाशयस्त्वधः " इत्यनेन श्लेष्माशयत्वेन च तयोरेव परिगणन कृतम्, श्लेष्मज्वरे वर्तमानेऽपि समये तावेव श्लेष्मणा परिपूर्येते इत्यनेन तयोरेव श्लेष्मभूत्वकथन मुचितं प्रतिभाति।

( सं. १६६ ) **अनिलायनानि**=फुफ्फुसाऽध.प्रतिबद्धानि प्राणपवनाऽऽहृताकाशाऽमृतस्य रक्तसंयोजनेन समस्तदेहवात्वादिपोषकाणि ज्ञेयानि, तदुक्त शार्ङ्गधरेण–" नाभिस्थः प्राणपवनः स्पृष्ट्वा हृत्कमलान्तरम्। कण्ठाद्बहिर्विनिर्याति पातुं विष्णुपदाऽमृतम्॥ पीत्वा चाम्बरपीयूष पुनरायाति वेगतः। प्रीणयन् देहमखिल जीवयञ्जठरानलम्॥ शा. १।५।४३–४४॥ इति॥

( सं. १६७ ) **रक्ताशयः**=रक्ताशयशब्देन रसाशयशब्देन च विशेषतो हृदयस्यैव ग्रहणम्, जन्मन आरम्य मरणपर्यन्तमहर्निशं रक्तचक्रस्याऽसाधारणस्थानत्वात्। यत्तु ' स खल्वाप्यो रसो यकृत्प्लीहानौ प्राप्य रागमुपैतीति, व्रणप्रश्नाऽध्याये शोणितस्य स्थान यकृत्प्लीहानावित्युक्त तत्प्रत्यहपीतभुक्ताऽन्नरसस्य रञ्जकत्वाऽभिप्रायेणोक्तमिति बोध्यम्।

( स. १७३ ) **आमाशयः**=आमाशयः, कफाशयः, पित्ताशय', पक्वाशय', वाताशयः, इत्येतेषामाशयानां निर्णयार्थं बहुधा जना विप्रवदन्ते। तत्र पाञ्चभौतिकस्य चतुर्विधस्य षड्रसस्य द्विविधवीर्यस्याऽष्टविधवीर्यस्य वाऽनेकगुणस्योपयुक्तस्याऽऽहारस्य यत्र प्रथमसञ्चयः स आमाशय। यथावस्थितस्याहारस्य तत्र प्रवेशात्स एव कफाशयः "आमाशय' श्लेष्मण आशय" इति सु. सू. २१।६, अन्यच्च "तत्र आमाशयः पित्ताशयस्य उपरिष्टात्, तत्प्रत्यनीकत्वादूर्ध्वगतित्वात्तेजसः, चन्द्र इव आदित्यस्य, स चतुर्विधस्याऽऽहारस्य आधारः, स च तत्रौदकैर्गुणैराहारः प्रक्लिन्नो भिन्नसङ्घातः सुखजरश्च भवति। सु० सू. २१।१२।" इत्यत्र स्पष्टमुक्तत्वात्। गुदश्रोण्योरुपरि नाभेरधस्तात्स्थूलाऽन्त्रप्रथमभागः पक्वाशयः, तत्र परिपक्वादाहारात्सारमलपृथग्भावात्। " सर्वेषामेव सर्वात्मा सर्वलोकनमस्कृतः। स्थित्युत्पत्तिविनाशेषु भूतानामेष कारणम्॥ अव्यक्तो व्यक्तकर्मा च रूक्षः शीतो लघुः खरः। तिर्यग्गो द्विगुणश्चैव रजोबहुल एव च॥ अचिन्त्यवीर्यो दोषाणा नेता रोगसमूहराट्। आशुकारी मुहुश्चारी पक्वाधानगुदालयः॥" सु. नि. १।६–९॥ इति वचनाद्रोगसमूहराट्त्वेन स्थानविशेषो नियन्तुं वातस्य नोचितस्तथाऽप्यपानवायो र्बृहदन्त्रस्य मध्यभाग आशय इत्यभिप्रायेण ' पक्वाधानगुदालयः' इति निर्दिष्टमस्ति। अत्र पक्वाधान एवं निर्णीतः पक्वाशयः। त्रिभागविभक्ता गुदाश्च एषा यन्मध्य तदालयो यस्य स तादृशोऽपानवायुरवगन्तव्य। अत्र 'विनाऽपि प्रत्यय पूर्वोत्तरयोः पदलोपो वा वाच्य इति वार्तिकेन ( वा. ५।२।८३ ) मध्यशब्दस्य लोपो बोध्यः। वाताशयादधउण्डुकस्य परिगणितत्वात्। पक्वामाशययो र्मध्ये यदग्निस्थान तदेव पित्ताशय स एव चाऽन्याशयः " पित्तं नैयग्रोधमिति ( शत० १२।९।१।३ ) शतपथे पित्ताऽऽशयस्य न्यग्रोधपात्रेण सादृश्यदानादामाशयस्य तदीयद्वादशाऽङ्गुलाऽधरमार्गस्यच्च मध्ये योऽयमाग्लभाषाया पैंक्रियास ( Pancreas ) शब्दवाच्योऽवयवस्तस्यैव ग्रहणम्। " पक्वामाशयमध्य पित्तस्य॥ सु. सू. २१।६ " इत्यादिना स्पष्टतयोक्तत्वात्। केचित्तु आमाशयाऽधरमार्गस्याऽन्याशये गणनाऽस्तीति वदन्ति तन्न, एतदारम्य क्षुद्रान्त्रमध्यवर्तिपटलस्य ग्रहणीसञ्ज्ञात्वात्। "षष्ठी पित्तधरा-

नाम या कला परिकीर्तिता। पक्वाऽऽमाशयमध्यस्था ग्रहणी सा प्रकीर्तिता॥ सु. उ. ४०।१६८" इति वाक्येन डयूडीनम् ( Duodenum ) सञ्ज्ञ क्षुद्राऽन्त्रैकदेशेन परिगणितम् तथाच—"षष्ठी पित्तधरानाम या चतुर्विधमन्नपानमुपभुक्तमामाशयात्प्रच्युतं पक्वाशयोपस्थितं धारयति॥ सु. शा. ४।१८–१९" चतुर्विधमुपभुक्तमन्नपानमामाशयात्प्रच्युत पक्वाशयाय गन्तुमुपस्थित धारयति तच्चाऽन्न पित्ततेजसा शोषितं यथाकाल जीर्यति। अनेन सूत्रेण न कश्चित्सन्देहोऽवशिष्टस्तस्मान्न डयूडीनम् सहितस्य पैङ्क्रियसस्य पित्ताशयसञ्ज्ञा, किन्तुकेवलपैङ्क्रियसस्य सेति निश्चितम। ये तु आमाशयाऽधरमार्गमात्रस्य ग्रहणीसञ्ज्ञामभिदधति तदपि न, तथासति "अपक्व धारयत्यन्न पक्व सृजति चाऽप्यधः।" इति वाक्येन विरोधात्। इय क्रिया समस्तक्षुद्रान्तर्वर्तिन्या कलाया अस्ति न पुनस्तावत्या एव इति स्पष्टमेव ज्ञापितमाचार्यैः। क्षुद्रान्त्रेष्वपीय सञ्ज्ञा तात्स्थ्याद्गौणी तदन्तर्वर्तिपटलस्य तु मुख्येति निश्चेतव्यम्। एषा (आमाग्निपक्वाशयानाम्) सोमसूर्याऽनिलैराचार्यैः साम्यमापादयति यथा "विसर्गादानविक्षेपैः सोमसूर्याऽनिला यथा। धारयन्ति जगद्देह कफपित्ताऽनिलास्तथा" इति सु. सू. २१।८ अत्र यद्यपि क्लोम्न एव पित्ताशय इति नामदानमुचितमस्ति यत्कुतो निस्सृत्य तत्र पित्तस्य सम्मिश्रयमाणत्वात्तथापि तस्य क्लोमेति स्वतन्त्रसञ्ज्ञाकरणात्तस्मादुदीरितरसस्याऽग्न्याशयप्रच्युतरसेन साक सङ्गमत्वात्क्लोमरसादग्न्याशयरसेऽग्निगुणाऽधिक्याच्च न तत्पृथग्गणनम्। "इन्द्रः सुत्रामा हृदयेन सत्य पुरोडाशेन सविता जजान। यकृत्क्लोमान वरुणोभिषज्यन्मतस्ने वायव्यै र्न मिनाति पित्तम्॥" यजु. १९।८५ इन्द्रो हृदयेन जजान, किमित्यपेक्षायामन्यवस्तुनोऽदर्शनात्प्रत्यासत्तिन्यायेन हृदयमित्युपतिष्ठते, अर्थात्स्वहृदयेन यज्ञस्य हृदय जजान जनयामास। हृदयेन हृदयमित्युव्वटमहीधरौ। सुष्ठु त्रायत इति सुत्रामा देवताविशेषो न तु इन्द्रस्य विशेषणम् शब्दोपहितार्थस्य वा अर्थोपहितशब्दस्य मीमासाशास्त्रे देवतात्वस्वीकारात्। पुरोडाशेन सत्य सत्यप्रधानं सर्वतोऽभ्यर्हितमङ्ग जजान जनयामास। सत्यमिति सर्वतो यत्प्रधानमङ्ग तदुच्यते तच्च लोकवेदयोः शिर उपतिष्ठते "सहस्रशीर्षा पुरुष" इत्यादौ शिर आरभ्यैवाऽन्याऽङ्गाना वर्णनात् लोकेऽपि उत्तमाङ्गशब्देन तदभिधानात् "प्राणाः प्राणभृता यत्र श्रिताः सर्वेन्द्रियाणि च। यदुत्तमाङ्गमङ्गाना शिरस्तदभिधीयते॥ च. सू. १७।१२॥" एकचक्र वर्तते एकनेमि सहस्राक्षर प्र पुरो निपश्चा। अर्धेन विश्व भुवन जजान यदस्यार्द्धं क्व तद्बभूव॥ अथर्व० १०।८।७ एकचक्रमेकनेमि सहस्राक्षरं यत्=यत्र पुरः=प्रथम वर्तते येन चार्द्धेन विश्वमखिलं भुवन=जगदथ च समस्त शरीर शरीरस्य भुवनसादृश्यात्। अस्य पूर्वोक्तस्याङ्गस्य पश्चाद्=पश्चादर्द्ध क्व तद्बभूवेति समस्तशरीरचक्रसञ्चालकत्वेन शिरसः प्रधानत्वेन सत्यतया परिगणनं कृतम्। योगशास्त्रे समाधौ सहस्रदलकमले गमनात्कालभयाभावादपि तस्य सत्यत्वम्—"पुण्डरीक नवद्वारं त्रिभि र्गुणेभिरावृतम्। तस्मिन् यद्यक्षमात्मन्वत्तद्वै ब्रह्मविदो विदुः॥ अ. १०।८।४३" इत्यादौ ब्रह्मणः स्थानत्वेन सहस्रशो वर्णनादपि शिरसः सत्यत्वमविचाल्यमिति दिक्। सविता यकृज्जजान। वरुणः भिषज्यन् क्लोमान क्लोमसञ्ज्ञकमङ्ग मतस्ने=गवीन्यौ जजान। वायव्यैरिति लिङ्गाद्वायोः कर्तुरध्याहारः कर्तव्यः। अतो वायु भिषज्यन् वायव्यैरूर्ध्वपात्रैः पित्त पाचकरसोत्पादकमग्न्याशयाख्यमङ्ग न मिनाति निर्मिमीते सृजतीत्यर्थः। अत्र नकारः न्युपसर्गार्थे। अथवा पित्ताशयस्याऽपि द्रवाशयत्वात्तत्राऽपि वरुणस्यैव कर्तृत्वेन योगः कार्यः। अस्मिन्मन्त्रे क्लोम्नो भिन्नत्वेनैवाऽग्न्याशयस्य पित्तमितिनाम्ना सृष्टिरुक्ता, तदनुसारेण सुश्रुतेनाऽपि अग्न्याशये पित्ताशयत्वमुक्तम्। रसग्रन्थेषु तु पित्तभावनासु क्लोमस्थरसस्यैव ग्रहण तत्सम्प्रदायविदः कुर्वन्ति तत्राऽपि अग्न्याशयक्लोम्नोरुभयोरपि रसस्य प्रक्षेपः क्रियेत चेत् सुष्ठुफलावाप्ति र्भविष्यतीत्यस्माकमभिप्राय.॥

(स. १७६) **अन्नवहे स्रोतसी**="अन्नवहे द्वे, तयोर्मूलमामाशयोऽन्नवाहिन्यश्च धमन्यः" सु. शा. ९।१२ इदञ्चाऽऽचार्येण जन्मोत्तरकालिकाऽवस्थामभिप्रेत्योक्तम्। तत्रैवामाशयस्य कार्यकर्तृत्वात्। गर्भाऽवस्था-

यान्तु आमाशयस्थाने मातु र्हृदयं बोध्यम् तदधीनत्वाद्गर्भजीवनस्य। अन्नवाहिन्यश्च धमन्य इत्यत्र रसवाहिन्यश्च स्रोतांसीति वक्तुमुचितम्, पर धमनीशब्दस्य व्यवहार स्रोतोमात्रे विक्षिप्ततया दृश्यते तदाशयो न विज्ञायते केन कारणेन सञ्जातम्। धमनीव्याकरणे (सु. शा. ९) दर्शितविभागेऽपि अनुष्ठानाऽभावात्तत्प्रकरणमेव प्रक्षिप्तमिति निधिटिप्पण्यां प्रदर्शितं चरके चाऽन्नवहाना स्रोतसामामाशयो मूल वामञ्च पार्श्वमिति कथनमामाशयोर्ध्वाऽवरमार्गावेव विस्पष्ट विज्ञापयति।

(सं. १८१) **स्थूलान्त्रैकदेशः=अन्त्रम् (उपान्त्रम्)**=" भारहरणबलवद्विग्रहवृक्षप्रपतनादिभि रायासविशेषै र्वायुरतिप्रवृद्ध. प्रकुपितश्च स्थूलान्त्रस्यैकदेश विगुणमादायाऽधोगत्वा वङ्क्षणसन्धिमुपेत्य ग्रन्थिरूपेण स्थित्वाऽप्रतिक्रियमाणे च कालान्तरेण फलकोष प्रविश्य मुष्कशोफमापादयति॥ सु नि. १२।६" इति वृद्धिरोगस्य सुश्रुते विशदतया वर्णनाच्चरकेऽतीव सङ्कोचः कृतोऽस्ति। यत्रयत्र यस्ययस्य रोगस्य सुश्रुते विशदतया वर्णनं तत्रतत्र तस्यतस्य रोगस्य वर्णने सङ्कोच इति स्वाभाविकी परिपाटी। अत्र "व्रध्नोऽनिलाद्यै र्वृषणे स्वलिङ्गै रन्त्रं निरेति प्रविशेन्मुहुश्च च. चि. १२।९१" इत्यनेन यद्यपि अन्त्रमिति सामान्यतयाऽन्त्रोद्देशः कृतोऽस्ति तथापि प्रकरणौचित्यात्स्थूलान्त्रैकदेश (उपान्त्रम्) एवोपतिष्ठते।

(स. १८५) **गुदम्**=" तत्र वातवर्चोनिरसनं स्थूलान्त्रप्रतिबद्ध गुद नाम मर्म, तत्र सद्योमरणम्" (सु. शा. ६।२६) निरसनं प्रेरकं, मांसमर्मेद चतुरङ्गुल सद्योवातिचेति डल्हणः। अत्र यद्यपि सुश्रुतेन प्रमाणं न निर्दिष्टम् तथापि निदानस्थाने तत्प्रमाण द्रष्टव्यम् तथाहि—" स्थूलान्त्रप्रतिबद्धमर्धपञ्चाङ्गुल गुदमाहुः। तस्मिन् वलयस्तिस्रोऽध्यर्धाङ्गुलसम्मिताः प्रवाहणी-विसर्जनी-संवरणी चेति चतुरङ्गुलायताः सर्वास्तिर्यगेकाङ्गुलोच्छ्रिताः॥ शङ्खावर्तनिभाश्चापि उपर्युपरिसंस्थिताः। गजतालुनिभाश्चापि वर्णत. सम्प्रकीर्तिताः॥ रोमान्तेभ्यो यवाध्यर्ध गुदौष्ठः परिकीर्तितः॥ सु. नि. २।६।

(स. १९०) **पुरीषवहानि स्रोतांसि**=उदावर्ताद्यवस्थाविशेषाऽभिप्रायेण पुरीषवहानामिति बहुवचननिर्देशः। तस्यामवस्थाया भवति स्रोतसा कार्यविप्लवः। तत्र मूत्रवहेष्वपि स्रोत.सु पुरीषागमस्य प्रवेशसम्भवात्। अत एवोदावर्तिनो मूत्रे पुरीषगन्धित्व भवति। यथा—"रूक्षदुर्बलयो र्वातेनोदावृत्त शकृद्यदा। मूत्रस्रोतः प्रपद्येत विट्संसृष्ट तदा नरः॥ विड्गन्ध मूत्रयेत्कृच्छ्राद्विड्विघात विनिर्दिशेत्॥ च. सि. ९।४७"। अथवा पक्वाशयवाताशयोण्डुकवलिमार्गाश्चेत्यवान्तरभेदं प्रकल्प्य बहुवचनस्य यथाकथञ्चिद्गतिः समर्थनीया।

(सं. १९९) **पौरुषम्**=पुरुषत्वमस्त्यस्मिन्ननेन वेति व्युत्पत्त्या मेढ्रं ग्राह्यम्। वेदे शिश्नस्य त्रयो भागाः प्रकल्पिताः सन्ति तत्र येन भागेन मेढ्रेजागृति र्भवति स भागो ग्राह्य इति रहस्यम्।

(स. २०९) **गर्भशय्या**="पित्तपक्वाशययोर्मध्ये गर्भशय्या यत्र गर्भस्तिष्ठति। सु. शा. ५।३९" "शङ्खनाभ्याकृति र्योनि स्त्र्यावर्ता सा प्रकीर्तिता। तस्यास्तृतीये त्वावर्ते गर्भशय्या प्रतिष्ठिता॥ यथा रोहितमत्स्यस्य मुख भवति रूपतः। तत्संस्थाना तथारूपा गर्भशय्या विदुर्बुधाः॥ सु. शा. ५।४३-४४"

(सं. २१२) **अपरा**=गृहीतगर्भाणामार्तववहाना स्रोतसा वर्त्मान्यवरुध्यन्ते गर्भेण, तस्माद्गृहीतगर्भाणामार्तवं न दृश्यते, ततस्तदधः प्रतिहतमूर्ध्वमागतमपरञ्चोपचीयमानमपरेत्यभिधीयते॥ सु. शा. ४।२४"

(स. २१९) **विटपे**=" वङ्क्षणवृषणयोरन्तरे विटप नाम तत्र पाण्ड्यमल्पशुक्रता वा भवति। सु. शा. ६।२५" स्नायुमर्मेद एकाङ्गुल वैकल्यकरञ्चेति डल्हणः।

( स. २२१ ) लोहिताक्षे=" उर्व्या ऊर्ध्वमधो वङ्क्षणसन्धेरूरुमूले लोहिताक्षं नाम तत्र लोहितक्षयेण पक्षाघातः ।" सु. शा. ६।२५ शिरामर्मेदं अर्धाङ्गुलं वैकल्यकरञ्चेति डल्हणः ।

( स. २२२ ) उर्व्यौ=" ऊरुमध्ये उर्वी नाम तत्र शोणितक्षयात् सक्थिशोषः ।" सु. शा. ६।२५ उर्वीति शिरामर्मेदं एकाङ्गुलं वैकल्यकरञ्चेति डल्हणः ।

( स. २२३ ) आण्यौ="जानुन ऊर्ध्वमुभयतस्त्र्यङ्गुलमाणी नाम तत्र शोफाभिवृद्धिः स्तब्धसक्थिता च ।" सु. शा. ६।२५ जानुन ऊर्ध्वं त्र्यङ्गुले उभयतः ऊर्ध्वमधश्च । स्नायुमर्मेदं अर्धाङ्गुलं वैकल्यकरञ्चेति डल्हणः ।

( सं. २२४ ) जानुनी=" जङ्घोर्वोः सन्धाने जानु नाम, तत्र खञ्जता ।" सु. शा. ६।२५ सन्धिमर्मेदं त्र्यङ्गुलप्रमाणं वैकल्यकरञ्चेति डल्हणः ।

( स. २२७ ) इन्द्रवस्ती=" पार्ष्णिं प्रति जङ्घामध्ये इन्द्रवस्तिर्नाम तत्र शोणितक्षयेण मरणम् ।" सु. शा. ६।२५ मांसमर्मेदं अर्धाङ्गुलं पार्ष्णिं प्रति त्रयोदशाङ्गुले स्थितं कालान्तरे प्राणहरञ्चेति डल्हणः ।

( स. २२९ ) गुल्फौ=" पादजङ्घयोः सन्धाने गुल्फो नाम तत्र रुजः स्तब्धपादता खञ्जता वा ।" सु. शा. ६।२५ सन्धिमर्मेदं द्व्यङ्गुलप्रमाणं वैकल्यकरञ्चेति डल्हणः ।

( स. २३१ ) कूर्चशिरसी=" गुल्फसन्धेरध उभयतः कूर्चशिरो नाम तत्र रुजाशोफौ ।" सु. शा. ६।२५ स्नायुमर्म एकाङ्गुलं वैकल्यकरञ्चेति डल्हणः ।

( स. २३३ ) कूर्चौ=" क्षिप्रस्योपरिष्टादुभयतः कूर्चो नाम तत्र पादस्य भ्रमणवेपने भवतः ।" सु. शा. ६।२५ उपरिष्टात्, इत्यत्र द्व्यङ्गुलं इति शेषः । उभयत इति ऊर्ध्वमधश्च, तस्य कूर्चः इति नाम 'विद्धि' इति शेषः स्नायुमर्मेदं चतुरङ्गुलं वैकल्यकरञ्चेति डल्हणः ।

( स. २३६ ) तलहृदये=" मध्यमाङ्गुलीमनुपूर्वेण मध्ये पादतलस्य तलहृदयं नाम तत्राऽपि रुजाभिर्मरणम् ।" सु. शा. ६।२५ मध्यमाङ्गुलीमनुलक्ष्यीकृत्य क्रमेण पादतलस्य मध्ये तलहृदयं, मांसमर्मेदं अर्धाङ्गुलं कालान्तरप्राणहरञ्चेति डल्हणः ।

( सं. २३७ ) क्षिप्रे=" पादस्याङ्गुष्ठाऽङ्गुल्योर्मध्ये क्षिप्रं नाम मर्म तत्र विद्धस्य आक्षेपकेण मरणम् ।" सु. शा. ६।२५ स्नायुमर्मेदं अर्धाङ्गुलं कालान्तरप्राणहरञ्चेति डल्हणः ।

## अथ कलाविवरणम् ।

'अथातो गर्भव्याकरणं नाम शारीरं व्याख्यास्यामः, अग्निः सोमो वायुः सत्त्वं रजस्तमः पञ्चेन्द्रियाणि भूतात्मेति प्राणाः । तस्य खल्वेवं प्रवृत्तस्य शुक्रशोणितस्याऽभिपच्यमानस्य क्षीरस्येव सन्तानिकाः सप्तत्वचो भवन्ति, अवभासिनी १ लोहिता २ श्वेता ३ ताम्रा ४ वेदिनी ५ रोहिणी ६ मांसधरा ७ इति बाह्यप्रदेशादारभ्याऽन्तः क्षेत्रपर्यन्तं त्वचामवस्थानं सोपपत्ति प्रदर्श्य समानत्वात् समकालमेवाऽन्तस्त्वचो विवरीतु प्रतिजानीते—'कलाः खल्वपि सप्त सम्भवन्ति, इति । नन्वन्तस्त्वचा स्वीकारे किम्प्रमाणमित्याकाङ्क्षायां हेतुगर्भविशेषणमवतारयति—'धात्वाशयान्तरमर्यादा सु. शा. ४।४ इति । यतः शरीरधातवो ( रक्तमांसादयः ) विभिन्नस्थितित्वेन दृश्यन्ते । सा च ( विभिन्नता ) मर्यादामन्तराऽसम्भवद्रूपाऽस्ति, अतः शारीराणां भावानां मध्ये व्यवच्छेदकेन येन केनाऽप्यवश्यं भवितव्यम् । पूर्वोक्तनामभ्यो व्यवहारसौकर्यार्थं तस्य ( व्यवधायकस्य ) स्वतन्त्रं नाम निर्दिशति—'कलाः' इति । कल्यन्ते=सङ्ख्यायन्ते धातवीयाः सूक्ष्माऽतिसूक्ष्मा अपि भावा याभिरथवा कल्यन्ते व्यवच्छेदहेतुनाऽन्तो निक्षिप्यन्त इति कलाः, 'कलगतौ सङ्ख्याने, इत्यस्मात् 'कलक्षेपे' इत्य-

स्माद्वा रूपसिद्धिः। ता अन्तरा स्थूलाऽवयवानारभ्य सूक्ष्माऽतिसूक्ष्मविभागान् यावदसिद्धेरन्ततः शरीरत्वमेव न सिध्येदिति स्थूलसूक्ष्मविदा सदृशाऽऽपत्तिः प्रसज्येत इति हेतोरवश्यमेवाऽनिच्छयाऽपि व्यवधान स्वीकर्तव्यम्। तच्च स्थूलसूक्ष्मोभयपदार्थव्यवहारे उपयुक्त स्यादिति विचार्य्य तस्य **कलेति** नामाऽऽचार्येण स्थापितमिति रहस्यम्। तासामस्तित्व दृष्टान्तेन दर्शयति—**यथेत्यादि**। "यथा हि सारः काष्ठेषु च्छिद्यमानेषु दृश्यते तथा धातुर्हि मासेषु च्छिद्यमानेषु दृश्यते सु. शा. ४।६" यथा=येन प्रकारेण छिद्यमानेषु काष्ठेषु सारो दृश्यते **तथा**=तेनैव प्रकारेण मासेषु=मासाऽवयवविशेषेषु छिद्यमानेषु धातू रक्तादिरूपो दृश्यतेऽतः साऽवयवसर्वधातूनामावरणमस्तीत्यनुमीयते तदेव कलारूपमस्ति। **ननु** [२] *सर्वत्र कलाना स्वरूपमेकप्रकारमस्त्याहोस्विद्विभिन्नविभिन्नप्रकारकमित्यत* आह—**स्नायुभिश्च**प्रतिच्छन्नान्सन्तताश्चजरायुणा। श्लेष्मणावेष्टिताश्चाऽपिकलाभागास्तुतान्विदुः सु. शा. ४।७। "स्नायूश्चतुर्विधा विद्यात्तास्तु सर्वा निबोध मे। प्रतानवत्यो वृत्ताश्च पृथ्व्यश्च सुषिरास्तथा॥ सु.शा. ५।३०" इत्युक्तप्रकाराभिः स्नायुभि.=स्नायुजालै. प्रतिच्छन्नानास्तृतान्। कुत्रचित् जरायुणा=जरायुसदृशजालेन "**विनापि** प्रत्यय पूर्वोत्तरपदयो र्लोपो वा वक्तव्यः" वा. ३२९९ इति वार्तिकेनोत्तरपदलोपो द्रष्टव्यः। सन्ततान्=व्याप्तान्। कुत्रचित् श्लेष्मणा=श्लेष्मपटलेन अत्राऽप्युत्तरपदलोपः पूर्ववत्। वेष्टितान्निर्मितान्। कलानां भागान्=विशेषान् विदुराचार्या इत्यध्याहार्यम्। शरीर धातूपधातुदोषमलादीनामसङ्ख्यत्वात्तत्तत्कोषाणामावरणानि विचित्राणि २ भवन्ति तेषामाकाराश्चाऽऽधेयपदार्थसदृशा एव प्रकल्प्यास्तेन सहस्रश आकारा अवगन्तव्याः। स्नायु जरायुश्लेष्मणां त्रीणि पटलानि तन्निर्माणोपादानकारणानि निर्दिष्टानि सन्ति। तत्रैकैकेन द्वाभ्या त्रिभिश्च वा यथास्थानौचिति तन्निर्माण भवतीति अपि शब्देन सूच्यते। कारणानुरूप कार्यं भवतीति सिद्धान्तात्सजातीयसूक्ष्माऽवयवसङ्घै र्यथोत्तरं स्थूलकार्याण्यारभ्यन्ते सूक्ष्ममृत्कणै र्घटवत्। तथा शुक्रशोणितसयोगेन पुरुषशरीराऽभिनिर्वृत्तिरस्ति। तयो (शुक्रशोणितयोः) श्च जीवत्परमाणुसङ्घातोऽस्ति सौक्ष्म्येण स एव सङ्घात ईश्वरेच्छाऽनुगृहीतो मातृकुक्षौ पाकमवाप्य विकसिताऽवयवः सन् बहिर्निःसरति। स च स्वस्वमर्यादाया विभक्तजीवत्पाञ्चभौतिकपरमाणुसमूहरूप एवाऽस्ति, अतएव "**खादयश्चे**तनाषष्ठा धातव. पुरुषः स्मृतः॥ चेतना धातुरप्येकः स्मृतः पुरुषसञ्ज्ञकः। इति चरके शा. १।१४' **पञ्च**महाभूतशरीरिसमवायः पुरुष इत्युच्यते, इति सुश्रुते च. सू. १।२१' पुरुषलक्ष्म निष्कृष्ट निदर्शितम्। यद्यप्यत्र धातुशब्देन चेतनासहितखादय उक्ताः परन्त्वत्र व्यवहारसौकर्यार्थमायुर्वेदप्रसिद्धपारिभाषिका रक्तादयोऽथ च प्राकृतानि कफपित्तपुरीषाणि धातुत्वेन व्यवह्रियन्ते। आशयाः=तत्तद्धातुपुञ्जनिवासस्थानानि पारिभाषिकपक्वाद्याशया वा तेषा मध्ये मर्यादास्थापन येन वस्तुना भवति तत्कलोच्यते। सा चाऽत्र तत्तत्कोषपरिवेष्टनरूपैवाऽस्ति, अतः स्थूलवेष्टनस्य पूर्वमवभासिन्यादिमासधरान्तानि सप्त नामानि व्याख्यातानि। *ननु स्थूल मासधरसप्तमत्वगनन्तर यन्मासमस्ति तस्याऽऽवरकन्त्वचः किन्नामेत्यपेक्षाया* साऽपि मासधरैवाऽस्ति पूर्वस्याः सकाशाद्भेदप्रदर्शनार्थमस्याः कला इति नाम स्थापितम्।

इयञ्च कला (मासधरा) अन्यकलाऽपेक्षया स्थूलाऽस्ति, अतोऽस्या मास-सिरा-स्नायु धमनीस्रोतसा (स्रोतश्शब्देनज्ञानतन्तूना ग्रहण वातस्रोतस्त्वात्) प्रताना भवन्ति। ननु मासाऽऽवरणस्यैव मासधरा कलेति नामचेदभिप्रेतं तर्हि मासधराकलास्थाने मासधरा त्वगेवाऽस्तु, इति तु भ्रान्त्याऽपि न शङ्क्यम्, या मासधरा त्वक्त्वेनाऽभिहिता सा व्रीहिद्वयप्रमाणा स्थूलाऽस्ति, इय कला तु परमसूक्ष्माऽस्ति, "कला स्यान्मूलवृद्धौ शिल्पादावशमात्रके। षोडशांगे च चन्द्रस्य कलनाकालमानयो" रिति मेदिनीकोशात्कौशल्यप्रख्यापिका विद्या कलाशब्देनोच्यते यथा चतुः षष्टिः कलाः। इत्यादौ। कर्गानिर्मिता विचित्ररचनाऽपि कलाशब्देनोच्यते। अस्याश्च कलायास्सूक्ष्मरचनामाकलय्येश्वरस्य प्रत्यक्षयन्ति योगिनोऽसदक्षीः कलाः। इय पुन र्नाना विक्षेपसङ्कोचविका-

श्चेतनाषष्ठा धातवः पुरुषः स्मृतः—च. शा. १।१४" वचनात् । अन्तरमवकाशाऽवधिपरिधानान्तर्द्धिभेदता-दर्थ्ये । छिद्राऽऽत्मीयविनावहिरवसरमध्येऽन्तरात्मनि चेत्यभिधानात् । अन्तर—शब्दस्य अवकाशमध्यार्थावत्रोपयोगिनौ । क्लिन्नतासमवायि कारण द्रव्य क्लेदः अत्र धातूना ( रक्तादीना ) आशयानां ( हृदयादीना ) मध्ये कः क्लेदोऽस्तीति विचारे उपस्थिते धात्वतिरिक्तो न कश्चित्क्लेद उपलभ्यते ? न च वाच्य लसीकादिरूपो द्रवोऽस्त्येवेति तस्य रसधात्वतिरिक्तत्वाऽभावात् । न च वाच्य धातूना परमसूक्ष्माऽवयवविषयकोऽयं विचार इति तत्रापि धातुत्वाऽनपायात् । अतः सुश्रुतीयाऽऽशयाऽज्ञानमूलकमेवैतत्सङ्ग्रहकारस्य विडम्बनमास्ते । तन्मूलमाश्रित्य "धात्वाशयान्तरक्लेदो विपक्वः स्व स्वमूष्मणा । श्लेष्मस्नाय्वपराच्छन्नः कलाख्यः काष्ठसारवत्—अष्टाङ्ग हृ. शा. ३।९" "धात्वाशयान्तरे धातो र्यः क्लेदस्त्वधितिष्ठति । देहोष्मणाऽभिपक्वश्च सा कलेत्यभिधीयते ॥ भा. पू. ख. २६८" इत्यादयः सङ्ग्रहकारादर्वाचीना गताऽनुगतिकतामनुसरन्तः परास्ताः । इममेवसन्देहमाकलय्य शार्ङ्गधरेण कलास्वरूपवर्णन विहाय तत्परिगणनमेवाऽलेखि "मांसासृङ्मेदसा तिस्रो यकृत्प्लीह्नोश्चतुर्थिका । पञ्चमी च तथाऽन्त्राणा षष्ठी चाऽग्निधरा मता ॥ रेतोधरा सप्तमी स्यादिति सप्त कलाः स्मृताः ॥ शा. पू. ख. ५।६" कदाचिदहर्निश स्थूलसूक्ष्माऽवयवानविशेषेण परिपोषयन्नविरत चक्रवत्परिभ्राम्यन्नक्षीणस्वरूपो रसः ( क्लेदः ) आस्त एवेति वाच्यम् । न हि तेनाऽपूर्वाः काश्चिदपि कलाः सम्पाद्यन्ते, अपि तु गर्भे युगपत्प्रादुर्भूतानामेवाऽवयवाना स रसः परिपोषक इति दिक् । अत्र ( कलाः खल्वपि सप्त सम्भवन्ति धात्वाऽऽशयान्तरमर्यादा इति सुश्रुतवाक्ये ) धातोरेकस्माद्धातुपरमाणोरपरस्य धातो र्धातुपरमाणो र्मध्ये या मर्यादा सा कला इति एक लक्षणम्, अनेन सूक्ष्मधात्ववयवाना विभिन्नता सिध्यति । एवमेकस्याऽऽशयस्य द्वितीयस्मादाशयादवयवाद्वा याऽन्तरमर्यादा सा कला इति द्वितीयम् लक्षणम्, सचैका वा स्यादुभयो र्विभिन्ना विभिन्ना वा स्यादित्यन्यदेतत्, अनेन ( लक्षणेन ) स्थूलाऽवयवाना परस्परं भेदः अथच स्वाऽवकाशः सिध्यति । या धात्वाशयान्तरमर्यादास्ताः कला इत्येव महर्षेः कलालक्षणमभिप्रेतम् "धात्वन्तरेषु याः सप्त कलाः सम्परिकीर्तिताः । तास्वेकैकामतिक्रम्य वेग प्रकुरुते विषम् ॥ येनाऽन्तरेण तु कला कालकल्प (विषम्) भिनत्ति हि । समीरणेनोह्यमान तत्तु वेगान्तर स्मृतम् ॥ सु. क. ४।४५-४६" इत्यत्र महर्षिणैव स्पष्टीकृतत्वात् । तत्र सप्तसङ्ख्या तु धातुसङ्ख्याभेदेनाऽभिप्रेता । तेन समस्तानामपि कलाना ग्रहण निर्विवादं सिध्यति । एतेनेह धातव आशयाश्चेत्युपलक्षणमिति कैश्चित्कृतकल्पन नाऽवश्यकम् । आमाशयस्थकलायाः पित्तधराया मासधराया वाऽन्तर्भावः । वस्तुतस्तु मासधरादिकथनमुदाहरणार्थं बोध्य न पुनरियत्ताकरणार्थम् ।

ननु मासेऽपि (स्थूलमासे) रक्तपरमाणवस्तिष्ठन्ति तेषामपि येन केनाऽऽवरणेनयुक्ततयाऽवश्य भवितव्यमन्यथा सर्वस्याऽपि तरलत्वप्रसङ्गान्मासत्वादेरप्यनुपपत्तेरितिकृत्वा रक्तपरमाणूनामावरकस्यपि रक्तधरेति नाम । "द्वितीया रक्तधरा नाम मासस्याऽभ्यन्तरतस्तस्या शोणित विशेषतश्च सिरासु यकृत्प्लीह्नोश्च भवति, सु० शा. ४।१० । अस्याः सत्ता दृष्टान्तेन दृढयति—वृक्षाद्यथाऽभिप्रहतात्क्षीरिणः क्षीरमावहेत् । मासादेव क्षतात्क्षिप्र शोणित सम्प्रसिच्यते सु. शा. ४।११ ) एवं मेदोधरा ३ श्लेष्मधरा ४ मलधरा ५ पित्तधरा ६ (ग्रहणी) शुक्रधरा ७ इति सप्तसङ्ख्याका भवन्ति । आसा कलाना विवरण चरके साक्षान्न कृत तथापि "बाह्यास्त्वचो दूषयिताऽभिघातः काष्ठाश्मशस्त्राऽग्न्यशनीविषाद्यैः । आगन्तुहेतुस्त्रिविधो निजश्च सर्वोऽवगात्राऽवयवाऽऽश्रितत्वात् ॥ च. चि. १२।५" इत्यत्र बाह्यास्त्वच इति विशेषणेन कलानामन्तस्त्वच इति नामाऽभिप्रेतमिति बुध्यते । सुश्रुते विस्तृततया वर्णितेषु विषयेषु प्रायश्चरके सङ्क्षेपोऽस्ति "पराऽधिकारे नहि विस्तरोक्ति" रिति चरकीयसिद्धान्तात् । अत एव चरके शरीरे षट् त्वचः उदकधरा १ असृग्धरा २ इत्यादिना

परिगणिता मासधरा तु निष्कासिता। तस्या रक्तधरायामेव समन्वयमिच्छतीति तदीयसन्दर्भेण स्पष्टं ज्ञायते। चिकित्सायां "अग्न्यधिष्ठानमन्नस्य ग्रहणाद्ग्रहणी मता, च. चि. १५।५६" इत्यत्र षष्ठी पित्तधरा कला गृहीताऽस्ति। नामाऽपि अग्न्यधिष्ठानमिति पित्तधरया समानम्, शरीरे पित्ततेजोऽतिरिक्ताऽग्नेरभावात्। ग्रहणी इति त्वक्षरशः समानम् "षष्ठी पित्तधरा नाम या चतुर्विधमन्नपानमुपभुक्तमामाशयात्प्रच्युत पक्वाशयोपस्थितं धारयति सु. शा. ४।१८" उ. ४०।१६८ वचनात्। न च वाच्य चरकीयवचनेन सह न सुश्रुतीयवाक्यमेकाऽऽशयतां भजते, तत्र नाभेरुपरीति वाक्यस्य विद्यमानत्वात्। क्षुद्रान्त्राणि नहि नाभेरुपर्येव वर्तन्ते, अपि तु नाभेः सर्वतः सन्तीति। "परन्तु च्यवमानस्य विदग्धस्याऽम्लभावतः। आशयाच्च्यवमानस्य पित्तमच्छमुदीर्यते॥ पक्वाशयन्तु प्राप्तस्य शोष्यमाणस्य वह्निना। परिपिण्डितपक्वस्य वायुः स्यात्कटुभावतः॥ च. चि. १५ इति तत्रैवोक्तत्वादस्य वाक्यस्येत्थमाशयो वर्णनीयः। आशयात्—आमाशयादर्थादामाशयाऽधराऽन्नवहस्रोतसः सकाशाच्च्युतस्याऽन्नद्रवस्य मध्ये अच्छ पित्त=पित्तप्रधानो द्रवः (क्लोमाऽग्न्याशयाभ्यामागतम्) उदीर्यते—सयुक्त भवति। इदमेव पित्तमग्निशब्देनाऽभिप्रेतम् तात्स्थ्यात्ताच्छब्द्यमितिन्यायात्। अस्य च यदधिष्ठान धारक तदग्न्यधिष्ठान क्षुद्रान्त्रान्तर्वर्ति पटल तदन्नग्रहणाद्ग्रहणी भवति, अन्नग्रहणादिति हेतुना। क्लोमाऽग्न्याशययो रग्न्यधिष्ठानत्वेऽपि न तदन्तर्वर्तिपटलस्य ग्रहणीसञ्ज्ञा। सा च (ग्रहणी) नाभेरुपरिप्रदेशे सम्मिलितस्य अग्नेरग्निद्रवस्य बलेन=उपस्तम्भभूतया शक्त्या बृंहिता=लब्धबला सती अपक्वं=यथोचितपाकाऽनवाप्तमन्नद्रव स्वस्मिन् पाकाऽवधिकाल धारयति=सङ्गृह्णाति। पक्वं=तत्तत्स्थानोचितलब्धपाकम्। अधः—उत्तरप्रदेश प्रति गन्तु सृजति=विसृजति। अस्याः (सङ्ग्रहणविसर्जनशक्त्याः) शक्त्या अनन्यथात्वे अदुष्टत्वमुच्यते, विपरीते दुष्टत्वम्। अत एव "दुर्बलाऽग्निबला दुष्टादाममेव विमुञ्चति, च. चि. १५।५७ इति वाक्य सङ्गच्छते। तात्स्थ्यात्ताच्छब्द्यमिति न्यायेन क्वचित्समस्तक्षुद्रान्त्रेऽपि ग्रहणीशब्द आर्तैः प्रयुज्यमानो दृश्येत चेत्तत्र लाक्षणिकः प्रयोगोऽवगन्तव्यः। ननु ग्रहणीमाश्रित दोष विदग्धाऽऽहारमूर्च्छितम् सविष्टम्भप्रसेकार्तिविदाहाऽरुचिगौरवैः। आमलिङ्गान्वित ज्ञात्वा सुखोष्णेनाऽम्बुनोद्धरेत् च. चि. १५।७३ इत्यत्राऽऽमाशये ग्रहणीशब्दः प्रयुक्तस्तस्य का गतिरिति चेत्तत्र दुष्टाया ग्रहण्यामन्नाऽपरिपाकलक्षणो दोषो भवति तस्य कारणाऽन्वेषणे दुष्टा ग्रहण्येवोपस्थिता भवति, अतः स दोषो ग्रहण्याश्रितो भवत्येव, इत्यभिप्रायेणोक्त ग्रहणीमाश्रित दोषमिति न तु तत्र आमाशयस्य ग्रहणीत्वेन कथनमिति निर्विवादम्।

## अथ स्रोतोविवरणम्।

"यावन्तः पुरुषे मूर्तिमन्तो भावविशेषास्तावन्त एवाऽस्मिन् स्रोतसा प्रकारविशेषाः, सर्वभावा हि पुरुषे नान्तरेण स्रोतास्यभिनिर्वर्तन्ते क्षय वाऽप्यधिगच्छन्ति, स्रोतांसि खलु परिणाममापद्यमानाना धातूनामभिवाहीनि भवन्त्ययनार्थेन॥ च. वि. ५।३॥" इत्यारभ्य पञ्चदशसूत्रपर्यन्त निर्दिष्टलक्षणै र्नानासन्देहनिकर उदेति, यदस्थीनि स्रोतांसि कथ वाहयन्तीत्यादीत्यादि। परन्तु "क्षयात्सन्धारणाद्रौक्ष्याद् व्यायामात्क्षुधितस्य च। प्राणवाहीनि दुष्यन्ति स्रोतास्यन्यैश्च दारुणैः॥ च. वि. ५।१६॥" इत्यारभ्य चतुस्त्रिंशच्छ्लोकपर्यन्त तत्तद्वहानां स्रोतसा प्रकोपस्य निर्दिष्टनिदानेनाऽयमाशयः समुदेति यत् तत्तदङ्गीयाऽवयवपोषणाय रसरक्तवहानि स्रोतांसि व्याप्रियन्ते इति सर्वसम्मतम्। यत्र यत्र स्थाने यानि यानि गच्छन्ति तत्र तेषु तद्वहत्वेन व्यपदेशः क्रियते यथा—अस्थिवहानि मज्जवहानीत्यादि। कुत्रचित्तु शरीरमलं बहिर्निक्षिपन्ति तान्यपि तद्वहानि कथ्यन्ते तेषु तानि वा वहन्तीति व्युत्पत्तिस्वीकारात्, यथा मलमूत्रवहानीत्यादि। शुक्रवहस्रोतःसु तु उपाधिद्वयम्, शुक्रस्रोतःपो-

पणानि स्रोतांसि शुक्रहारीणि चेति । इममेव भेद ज्ञात्वा स्रोत.सु तत्तद्वहत्व निर्धारणीयम् । स्थूलबुद्ध्या तु यथास्थितार्थकरणे हि शरीरऽस्थ्यादिघनपदार्थाना स्रोतःसु वहनत्वाऽयोगात् । "रसाद्रक्त ततो मास—" मित्यादिप्रकारेण न हि तत्तद्धातूनां वहानि स्रोतासि सम्भवन्ति । "सर्वाङ्गनिर्वृत्तिर्युगपदितिधन्वन्तरिः ॥ च. शा. ६।१९ ॥" "सर्वाण्यङ्गप्रत्यङ्गानि युगपत्सम्भवन्तीत्याह धन्वन्तरिर्गर्भस्य सूक्ष्मत्वान्नोपलभ्यन्ते वंशाङ्कुरवच्चूतफलवच्च ॥ सु. शा. ३।३२ ॥" इति सिद्धान्तेन युगपदेव सर्वेषामङ्गाना जायमानत्वात् सतामेवाऽङ्गाना रसभ्रमणचक्रेण पोषणाऽपोषणेन विकाससङ्कोचौ भवत इति शास्त्ररहस्यत्वात् । वर्तमानाऽऽयुर्वेदीयसंहितासु निर्दिष्टवाक्यैस्तु न कश्चित्सिद्धान्तः समभ्युदेति तद्यथा—"नेत्रवर्त्मसिराकोशस्रोतः शृङ्गाटकाऽऽश्रितम् । मुखनासाऽक्षिभिर्दोषमोजसा स्रावयेत्तु तत् ॥ सु. उ. १८।५४ ॥" इत्यत्र स्रोतःशब्देन नेत्रलसीकावाहक स्रोतोऽभिप्रेतम् । यदवरोधेनाऽनन्तवातादयो रोगा' प्रादुर्भवन्ति । "नासास्रोतोगता रोगास्त्रिशदेकश्चकीर्तिताः । स्रोतःपथे यद्विपुल कोशवच्चाऽर्बुद हि तत् ॥ सु. उ. २२।२० ॥" इत्यत्रनासाविवरमेव स्रोतस्त्वेनाऽभिमतम् । "श्रवणनयनवदनघ्राणगुदमेढ्राणि नव स्रोतासि नराणा बहिर्मुखानि । एतान्येव स्त्रीणामपराणि च त्रीणि द्वे स्तनयोरधस्ताद्रक्तवहञ्च ॥ सु. शा. ५।१० ॥" इत्यत्र द्रववहानि शुष्काणि च विवराणि स्रोतस्त्वेनाऽभिमतानि । "अत्युच्चभाषणविषाऽध्ययनाऽतिगीतशीतादिभिः प्रकुपिताः पवनादयस्तु । स्रोत.सु ते स्वरवहेषु गताः प्रतिष्ठा हन्युः स्वर भवति चाऽपि हि षड्विधः सः ॥ सु. उ. ५३।३ ॥" इत्यत्र विवरमात्र स्रोतस्त्वेन निर्दिष्टम् । "तथामर्मशिरास्नायुसन्धितरुणाऽस्थिसेवनी धमनी गलनाभिनखान्त' शेफ.स्रोतःसु अल्पमासेषु च प्रदेशेषु अक्ष्णोश्च न दद्यादन्यत्र वर्त्मरोगात् । सु. सू. ११।२९ ॥" इत्यत्र शेफोविवर निर्दिष्टम् । तस्माद्यथासमयं मूत्रशुक्रादीनि वस्तूनि निर्गच्छन्ति । "द्व्यङ्गुले दक्षिणे पार्श्वे वस्तिद्वारस्य चाऽप्यधः । मूत्रस्रोत.पथाच्छुक्र पुरुषस्य प्रवर्तते ॥ सु. शा. ४।२२ ॥" अत्र शुक्रवह विवर निर्दिष्टम् । "मुष्कस्रोत उपघाताद् ध्वजभङ्ग. । सु. चि. ७।३६" अत्र शुक्रोत्पादकानि विवराणि गृहीतानि । "मर्माण्यष्टावसम्बुध्य स्रोतोजानि शरीरिणाम् । व्यापादयेद्बहून्मर्त्यांश्छस्त्रकर्माऽपटुर्भिषक् ॥ सु. चि. ७।३७ ॥" अत्रविवरमात्राणि विवक्षितानि । "गृहीतगर्भाणामार्तववहाना स्रोतसां वर्त्मान्यवरुध्यन्ते गर्भेण । सु. शा. ४।२४ ॥" अत्र च रजोवहविवराण्यभिप्रेतानि । "सञ्ज्ञावहेषु स्रोत.सु दोषव्याप्तेषु मानवः । रजस्तमः परीतेषु मूढो भ्रान्तेन चेतसा ॥ सु. उ. ६१।८" इत्यत्र ज्ञानतन्तूना स्रोतस्त्वमभिप्रेतम् । प्रसिद्धविवरयुक्तत्वाऽभावेऽपि ज्ञानतन्तूना वातवहत्वेन तथात्वम् । "यदा तु रक्तवाहीनि रससञ्ज्ञावहानि च । पृथक् पृथक् समस्ता वा स्रोतासि कुपिता मला' ॥ मलिनाहारशीलस्य रजोमोहावृतात्मनः । प्रतिहत्याऽवतिष्ठन्ते जायन्ते व्याधयस्तदा ॥ च. सू २४।२५—२६" यदा मलिनाहारशीलस्य नरस्य कुपिता मला' पृथक् पृथक् स्थिताः समस्ता वा एकत्र सङ्घीभूय वा रक्तवहानि रसवहानि सञ्ज्ञावहानि च स्रोतासि प्रतिहत्य अवतिष्ठन्ते तदा रजोमोहाऽऽवृतात्मनः व्याधयो जायन्ते, इत्यर्थाद्रसरक्तसञ्ज्ञावहानां मार्गाणा स्रोतस्त्वेन ग्रहण कृतम् । "कोपयेन्मृद्रसादींश्च रौक्ष्याद्भक्ष्य विरूक्षयेत् । पूरयत्यविपक्वैव स्रोतासि निरुणद्धि च ॥ च. चि. १६।२८ ॥" अत्र स्थूलानि सूक्ष्माणि च शरीरविवराणि सर्वाण्यपि स्रोतस्त्वेनाऽभिप्रेतानि । अतोऽस्मन्निर्दिष्टो मार्ग एवाऽवलम्बनीयः ।

---

# अथ सुश्रुतीयाऽस्थिकोष्ठकम्

| सुश्रुते | आंग्लाऽनुवाद |
|---|---|
| (ग्रीवां प्रत्यूर्द्ध्वं त्रिषष्टिः ६३) | |
| शिरःकपालानि ६ | 1 Occipital (ऑक्सिपिटल)<br>1 Frontal (फ्रोण्टल)<br>1 Sphenoid (स्फिनॉइड)<br>1 Ethmoid (इथमॉइड)<br>2 Parietals (पैराइटल्स) |
| शङ्खाऽस्थिनी २ | 2 Temporals (टेम्पोरल्स) |
| कर्णाऽस्थीनि ६ | 6 Ossicles in the ear (ऑसीकल्स इन दी ईअर |
| गण्डाऽस्थिनी २ | 2 Malars (मेलर्स) |
| नासाऽस्थीनि ९ | 2 Nasals (नेज़ल्स)<br>2 Lacrimals (लैक्रीमल्स)<br>2 Inferior turbinates (इन्फीरिअर टर्बीनेट्स)<br>2 Maxillæ (मैग्जिला)<br>1 Vomar(वोमर) |
| ताल्वस्थीनि २ | 2 Palates (पैलेट्स) |
| हन्वस्थि १ | 1 Mandible (मैण्डीबल) |
| दन्ताः ३२ | 32 Teeth (टीथ) |
| कण्ठनाड्यस्थीनि ३ | 1 Hyoid, 1 Thyroid and cricoid c<br>(हायोइड, १ थाइरॉइड, १ क्रिकॉइड कार्टिलेजीज़ |
| (श्रोणिपार्श्वपृष्ठोरःसु ११७) | |
| पृष्ठाऽस्थीनि ३०<br>(ग्रीवाकशेरुकाः ७, पृष्ठकशेरुकाः १२, कटिकशेरुकाः ११) | 7 Cervical vertebræ (सरवाइकल वरटीब्री)<br>12 Dorsal vertebræ (डॉरसल वरटीब्री)<br>11 Lumbar 5 sacral 5 and coccyx 1 (<br>सेक्रल ५ एण्ड कौक्सिक्स १) |
| असफलकाऽस्थिनी २ | 2 Scapulæ (स्कैप्यूली) |
| पार्श्वाऽस्थीनि ७२ | 24 Pairs of ribs (पैर्स ऑफ रीब्ज)<br>24 Heads (articular facets) of ribs<br>24 Tubercles of the ribs |
| उरोऽस्थीनि ८ | 2 Clavicles (क्लैवीकल्स)<br>6 Sternum (स्टर्नम्) |
| श्रोण्यस्थीनि ५ | 2 Ilia (इलिया) |

| सुश्रुत. | आंग्लाऽनुवादः |
|---|---|
| ( शाखासु १२० ) | |
| बाह्वस्थिनी २ | Pair of humerus ( पैर ऑफ ह्यूमरस ) |
| प्रकोष्ठाऽस्थीनि ४ | 4 { 2 Ulna, 2 Radius ( अलना २, रेडियस २ ) |
| ऊर्वस्थिनी २ | Pair of Femur ( पैर ऑफ फीमर ) |
| जान्वस्थिनी २ | 2 Patella ( पैटेला ) |
| जङ्घाऽस्थीनि ४ | 4 { Pair of tibia ( पैर ऑफ टिबिआ ), Pair of fibula ( पैर ऑफ फिब्यूला ) |
| गुल्फसाश्रिताऽस्थिनी २ | 2 Astragalus, Talus ( ऐस्ट्रैगैलस; टैलस ) |
| पार्ष्ण्यस्थिनी २ | 2 Os calcis ( ऑस कैल्सिस ) |
| हस्तकूर्चास्थीनि १६ | 16 Carpal bones ( कार्पल बोन्स ) |
| पादकूर्चाऽस्थीनि १० | 10 Tarsal bones ( टार्सल बोन्स ) |
| हस्ततलाऽस्थीनि ८ | 8 Metacarpal bones ( मेटाकार्पल बोन्स ) |
| पादतलाऽस्थीनि ८ | 8 Metatarsal bones ( मेटाटार्सल बोन्स ) |
| अङ्गुल्यस्थीनि ६० | 60 Phalanges ( फैलेञ्जीज ) |

सुश्रुताऽस्थिगणनायां "त्रीणि सषष्टीन्यस्थिशतानि वेदवादिनो भाषन्ते, शल्यतन्त्रे तु त्रीण्येव शतानि। तेषा सविंशमस्थिशतं शाखासु, सप्तदशोत्तर शत श्रोणिपार्श्वपृष्ठोरःसु, ग्रीवा प्रत्यूर्ध्वं त्रिषष्टिः, एवमस्थ्नां त्रीणि शतानि पूर्यन्ते॥ सु.शा.५।१५" इति सूत्रे निर्दिष्टा सङ्ख्या सम्यगास्ते। वेदे (अथर्ववेदे) "द्वादश प्रधयश्चक्रमेक त्रीणि नभ्यानि क उ तच्चिकेत। तत्राहतास्त्रीणि शतानि शङ्कवः षष्टिश्च खीला अविचाचला ये॥ अ.१०।५।४" इतिमन्त्रे खीलाशब्देन लघ्वस्थीनि निर्दिष्टानि शङ्कुशब्देन च स्थूलानि, तानि मिलित्वा षष्ट्याधिकत्रिशतान्युद्दिष्टानि। परन्तु विशेषतो विभागाऽदर्शनात् कस्मिन्नङ्गे कियन्ति सन्तीति सुश्रुतेनाऽपि दर्शयितु यत्नो न कृतः। स्वतन्त्रे (शल्यतन्त्रे) शस्त्रक्रियार्हाणि यानि षोडशवर्षादूर्ध्वमपि विभक्तानि दृश्यन्ते तद्गणनं मनसि निधाय त्रिशतसङ्ख्यां निर्दिश्य शाखासु विंशत्यधिकशत, श्रोणिपार्श्वपृष्ठोर:सु सप्तदशोत्तर शत, ग्रीवा प्रत्यूर्ध्वं त्रिषष्टिरितीयत्ता निर्दिष्टा। तत्र "एकैकस्या तु पादाङ्गुल्या त्रीणि त्रीणि तानि पञ्चदश, तलकूर्चगुल्फसश्रितानि दश, पार्ष्ण्यामेक, जङ्घायां द्वे, जानुन्येक, एकमूराविति त्रिंशदेवमेकस्मिन् सक्थ्नि भवन्ति. एतेनेतरत्सक्थिबाहू च व्याख्यातौ॥ सु. शा. ५।१८" अत्राङ्गुष्ठे द्वे एवाऽस्थिनी प्रत्यक्षदृश्ये स्तः कथ सुश्रुते त्रीणि सङ्ख्यातानीति प्रत्यक्षवादिनो विप्रवदन्ते। तत्राऽयमाचार्यस्याऽभिसन्धिः—स्वस्वतलानि मुक्त्वा चतस्रोऽङ्गुलयो यथा विभिन्नस्थितिका क्रियावत्यश्च भान्ति तथा नाऽङ्गुष्ठस्य मर्यादा व्यवच्छिद्यते। तस्य सञ्चलनादिक स्वतलाऽस्थिसयुक्तमेव भवति, अतस्स स्वतलास्थिसयुक्त एव ग्रहीतव्यस्तथा कृते च तत्र त्रीण्यस्थीनि सन्त्येवेति निःसंशयमङ्गुलिषु पञ्चदशाऽस्थीनीति। किञ्च—केचित्पाश्चात्यविद्वांसोऽप्यङ्गुष्ठेषु तलाऽस्थीनि न सन्त्येव किन्तूर्ध्वतनाऽस्थ्येवाऽन्तः प्रविष्टमिति कथयन्ति, अतोऽपि एकैकस्या पादाऽङ्गुल्या त्रीणि त्रीणि तानि पञ्चदशेति सुश्रुतीयगणना सम्यक्त्वं भजति। "तलकूर्चगुल्फसंश्रितानि दश" अत्राऽङ्गुष्ठतलस्याऽङ्गुष्ठेन सह परिगणनादुर्वरितान्यङ्गुलितलाऽस्थीनि चत्वारि ४। "केशादिशोधनः कूर्चः कूर्चा चित्रादिसाधिनी" इत्यादि लोकव्यवहारात् कङ्कतिका (कङ्घीति प्राकृते) प्रभृतयः कूर्चशब्दवाच्यास्तत्समानाऽऽकृतित्वात्कूर्चाऽस्थीनि प्रतिपाद पञ्च ५। यत्तु "षट्कूर्चास्ते हस्तपादग्रीवामेढ्रेषु, हस्तयोर्द्वौ, पादयोर्द्वौ, ग्रीवामेढ्रयोरेकैकः॥ सु. शा ५। १३" इत्यत्र कूर्चशब्दोऽभिहितः सोऽपि चित्रलेखन्या (लोके कूंचीति प्रसिद्धवस्तुना) सादृश्यात् शाखाऽस्थिसङ्घातानामुपरिभागाना नामानि निर्दिष्टानि, तेऽपि भागा=अस्थिसङ्घातान् सश्रिताः, अस्थिसङ्घाताश्च तानाश्रयन्ति सम्बन्धस्य द्विष्ठत्वात्। उभयथाऽपि कूर्चसश्रितानीति सम्यक्त्व भजति। अत्र "हार्नले" प्रभृतिभिः सुश्रुतस्य कूर्चसाश्रिताऽस्थ्नामियत्तया ज्ञान नाऽसीदिति प्रतिभातीत्युक्त तत्त्वविचारकृतम्। यद्याचार्यस्य तज्ज्ञान नाऽभविष्यत् कथं तर्हि "तलकूर्चगुल्फसश्रितानि दशे-" तीयत्ता निरदेक्ष्यत्। अतोऽत्र विषये सुश्रुतस्य नाऽज्ञानमासीत् किन्त्वत्र तदीयसूत्रसङ्कुलनार्थमज्ञाय ते (हार्नलेप्रभृतय) एव भ्रमगह्वरे पतिता इति निर्विवादम्। तदनुयायिनान्तु कथैव दूरेऽपास्ता, अन्यचक्षुषा पश्यन्तो वराका ईदृशेऽर्थजटिले सूत्रे किं ज्ञास्यन्तीति।

जङ्घाऽस्थ्नोऽधोभागो यत्र स्थिरो भवति तदुच्यते गुल्फाश्रितञ्चैकम्। एतत्स्थानीयसन्धिरप्येतन्नाम्ना समागच्छतीत्यन्यदेतत्। एषा (कूर्चगुल्फसश्रिताना) चाऽस्थ्ना मण्याकृतित्वाद्धस्तयोरेतानि मणिनामानि भजन्ते। तेषा बन्धः सङ्घटन यत्राऽस्ति स प्रदेशो मणिबन्धशब्देनोच्यते। तान्त्रिकनये वर्णादिन्यासे प्रसिद्धश्चाऽय सङ्केतः। प्रतिपाद पार्ष्ण्यामेकमस्थि १। जङ्घाया ह्रस्व स्थूलञ्चेति द्वे अस्थिनी २। जानुनि=जङ्घोर्वोः सन्धाने प्रतिपादमेकमस्थि १। प्रत्यूर्वेकमूर्वस्थि नाम १। अथ न्यासः—१५+४+५+१+१+२+१+१=३०+३०=६०॥ प्रतिहस्त मण्यस्थीन्यष्टौ ८। प्रकोष्ठाऽस्थिनी द्वे २। प्रकोष्ठप्रगण्डाऽस्थ्ना सन्धानप्रदेशस्य कूर्परनाममात्रम्, न तु स्वतन्त्रं तत्र किञ्चिदस्थि, अतः प्रगण्डाऽस्थ्येकम् १। अथ न्यासः—१५+४+८+२+१=३०+३०=

६० ॥ अथ सर्वासु शाखासु मिलित्वा सविंशमस्थिशतम् १२० । “एतेनेतरत्सक्थिबाहू च व्याख्यातौ” इति कथनस्याऽयमेवाऽभिप्रायो बोध्यः । पादाऽपेक्षया हस्तयोरेककूर्चाऽस्थ्नोऽधिकत्वात्त्रिंशत्सङ्ख्या पूर्णा भवतीति शाखाऽस्थिविभाजकं सूत्रं सम्यग्वर्तते । वर्तमानपाश्चात्यविच्छेदेऽपीयत्येव सङ्ख्याऽस्ति ॥

मध्यशरीरविभाजके वाक्ये श्रोणिपार्श्वपृष्ठोरासीति चत्वारोऽन्तर्विभागाः प्रकल्पिताः । अत्रोदरस्य गणनन्तु प्रमादादेव सञ्जातमिति प्रतिभाति, उदरगुहाया कस्यचिदप्यस्थ्नोऽभावात् । केचित्तु भगाऽस्थ्याचार्येणोदरे परिगणित भवेदित्यनुमिन्वन्ति परन्तु तन्न समीचीनम्, तस्य त्रिकसंश्रितमेकमित्यनेन श्रोण्यामेवाऽऽगतत्वादित्यनूकटिप्पण्या सविस्तर वर्णितमन्यथा श्रोण्यामस्थिपञ्चकस्याऽभाव एवोपस्थास्यते । “पार्श्वे षट्त्रिंशदेकस्मिन् द्वितीयेऽप्येवम् ॥ सु. शा. ५।१९” इति प्रतिपार्श्वं द्वादशपर्शुकानां सत्त्वाच्चतुर्विंशतिः, तासां योऽय भागो वक्षोऽस्थिसलग्नतरुणाऽस्थिभिः सन्धीयते चिपिटाकारः स स्थालकशब्देन याज्ञवल्क्यादिभिः स्वीकृतः । तदनन्तरं योऽयमुच्छ्वसितो भागस्तस्याऽर्बुदाकृतित्वादुच्यतेऽर्बुदसञ्ज्ञः । एव प्रति पर्शुका त्रयो भागा भवन्ति ते मिलित्वा द्वासप्ततिः । पृष्ठे त्रयस्त्रिंशत् त्रिंशद्वा इत्यस्योपपत्तिः सविस्तराऽनूकटिप्पण्या द्रष्टव्या ।

“अष्टावुरसीति” उरःफलक त्रिभागविभक्तम्, ऊर्ध्वाऽधस्तनयो र्भागयोरेकैकमस्थि, मध्यभागस्त्वस्थिचतुष्टयात्मकः, इति मिलित्वा षट् । अक्षकसञ्ज्ञे द्वे तयो सम्मेलनेऽष्ट सङ्ख्या सम्पद्यते तत्सहितस्यैवोरस्त्वात् । “अंसफलके द्वे” इत्यस्य स्थाने सम्प्रत्युपलभ्यमानसुश्रुतीयपुस्तकेषु “द्वे अक्षकसञ्ज्ञे” इति पाठः समुपलभ्यते परन्तु स लेखकप्रमादादिनाऽपभ्रष्ट इति प्रतिभाति तथात्वे उरसीयाऽष्टाऽस्त्ना गणनैव दुर्घटा स्यात् न च वाच्य शतपथादिवत् तरुणाऽस्थीन्यादाय सा ( सङ्ख्या ) पूर्तिमायास्यतीति ? शतपथे सप्तदशाऽस्थ्ना परिगणितत्वेनाऽष्टत्वस्य वक्तुमशक्यत्वात् । तस्मादंसफलकस्थाने अक्षकस्य प्रमादाल्लेखः सञ्जातोऽस्तीति निःसशयं ब्रूमः । एवं मध्यभागे सप्तदशोत्तरसङ्ख्या सञ्जाता ।

“ग्रीवा प्रत्यूर्ध्वं त्रिषष्टि” इति तृतीयसूत्रस्य विभागो न सम्यक् प्रतिभाति । मूलसूत्रे ग्रीवा प्रत्यूर्ध्वमिति प्रतिज्ञया ग्रीवाशब्देन किं ग्रहीतव्यमिति सशये उरस्यष्टसङ्ख्यायाः कथनादक्षकाऽस्थ्नोस्तत्रैव सम्मिलितत्वादक्षकाऽस्थ्नोरुपर्येव ग्रीवाभागः समायाति । “यस्य त्रयस्त्रिंशद्देवा अङ्गे गात्रा विभेजिर । अ. १०।७।२७” इति सर्वविद्यामूलभूते वेदे कशेरुकाणां पृष्ठे एव गणितत्वान्न तासा ( कशेरुकाणा ) ग्रीवाया गणनमायाति सुश्रुतेनाऽपि तथैव स्वीकृतत्वात् । अतो ग्रीवाशब्देनाऽक्षकाऽस्थ्युपर्यन्नश्वासमार्गावेवोपतिष्ठेते । तत्र च कण्ठनाडीति साधारणो व्यवहारः । विभाजकसूत्रे च “ग्रीवाया नव, कण्ठनाड्या चत्वारी-” ति कृतो विभागो न हृदयङ्गमो भवति । कदाचित्तरुणाऽस्थीन्यादाय तद्गणनापूर्ति र्भविष्यतीति शङ्क्यम् ? नियतत्रयोदशतरुणाऽस्थ्नामभावादक्षकाऽस्थ्नोरधस्ताद्भागस्य गणनञ्च समीचीनमिति स्पष्टमेव । अत एव शतपथेऽपि “ग्रीवाः पञ्चदश” ( शत० १२।२।४।१० ) इत्यत्र ग्रीवाया तरुणास्थिभिरेव पञ्चदशसङ्ख्या पूरिता दृश्यते परन्तु नियततया तरुणाऽस्थ्ना तावतामेव तत्र स्थितावपि सशयोऽस्ति । किञ्चाऽस्थिविभागे साक्षात्काठिनाऽस्थ्ना लाभे तरुणाऽस्थिगणनस्याऽयोग्यत्वम् । वेदेऽपि षष्ट्यधिकत्रिशताऽस्थीनि लघुस्थूलभेद स्वीकृत्य खीलाशङ्कुशब्दाभ्या निर्दिष्टानि तान्यपि काठिनाऽस्थीन्येव प्रतिभान्ति खीलाशङ्कु विशेषणत्वात् । तानि च ( अस्थीनि ) सम्भवद्रूपाण्येव सन्ति यथा—प्रतीच्यन्यवच्छेदे असफलकाऽस्थ्नि प्रत्येकं सप्तविभागाः दर्शिताः सन्ति । तथा षोडशवर्षादारभ्य पञ्चविंशतिवर्षाऽभ्यन्तरे यान्यस्थीनि परस्पर सम्मिलितानि भवन्ति तेषा सयोगवुद्ध्या चेद्वेदेन निर्दिष्टानि तर्हि षष्ट्यधिक त्रिशताऽस्थ्ना परिगणन समायास्यत्येव । परन्तु तादृशवाक्याना दैववशात् लुप्ततया शतपथादि निर्माणसमये कथ वेदीयसङ्ख्याया निर्वाहः कर्तव्य इति

संशय्य येन केन प्रकारेण सा सङ्ख्या परिपूरिता। तत्पश्चात्तैर्ब्राह्मणग्रन्थानेव "मन्त्रब्राह्मणयोर्वेद नामधेय" मित्यादि वाक्यान्यालम्ब्य तेष्वपि ( ब्राह्मणग्रन्थेष्वपि ) वेदत्वं स्वीकृत्य तथैव गणनं कृतम्। परन्तु तन्न सम्यक्, तेषां वेदभाष्यरूपत्वेन मूलत्वकल्पने सर्वथा भ्रम एव। तत्र ( शतपथादौ ) "एतद्ब्रह्म वै तद्विद्वानाह वार्कलिः" (शत० १२।३।२।६) इत्यादौ पदे पदे पूर्वभाष्यकर्तृणा सम्मतिकथनात्तत्र वेदत्वकथनस्य सर्वथाऽयोग्यत्वम्। अतो वेदभाष्यभूतेषु ब्राह्मणेषु वेदत्वकल्पनं न सम्यगिति निर्विवादम्। परन्तु तद्व्यतिरिक्तमूलव्याख्यानामभावादेव जनैर्ब्राह्मणग्रन्था अपि मूले परिगणिताः सन्तीति रहस्यम्। अत एव सुश्रुतेनाऽपि वेदवादिनो भाषन्ते इत्यनेन ब्राह्मणग्रन्था एवाऽभिप्रेता इति प्रतिभाति अत एव मूलसूत्रे ग्रीवां प्रत्यूर्ध्वमित्येव सामान्यतया सूचितम्। तदुत्तर यद्विभाजक सूत्रं तत्र वैदिकैर्हस्तक्षेपः कृतोऽस्तीति प्रतीयते। यतो ग्रीवाया ग्रीवेति कण्ठनाडीति च विभागद्वयं कृतमुपलभ्यते, अतः पञ्चविंशतिवर्षादूर्ध्वं प्राय एतामस्न्ना सङ्घातो भवति। तत्सङ्ख्या प्रधानीकृत्याऽस्माभि र्विभागः कृतोऽस्तीति सुधीभिरवगन्तव्यम्। तदनुकूलश्च पाठः "कण्ठनाड्यां त्रीणि, एकं हनौ, दन्ता द्वात्रिंशत्, नासायां नव, तालुनि द्वे, गण्डयोर्द्वे, शङ्खयो र्द्वे, कर्णयोः षट्, षट् शिरसीति स्थापनीयः। तथैव कोष्ठके विन्यस्यवर्तमान प्रतीच्यनामान्यपि दत्तानि। अत्र काचित्क्षतिश्चेत् सारासारविवेचकै र्विद्वद्भिः सूचनीया, सोचिता चेद् द्वितीयाऽऽवृत्तौ तथैवाऽनुष्ठास्यत इति शरीरतत्त्ववित्सु विज्ञप्तिः।

चरकीयाऽस्थिगणनाविभागस्य महद्वैचित्र्यमस्ति तत्र प्रतिपुस्तक विभिन्नाः पाठा दृश्यन्ते। अग्निवेशसहाध्यायिनो भेलस्याऽपि संहितायां तत्समान एव पाठ उपलभ्यते। याज्ञवल्क्यस्मृतावपि "तस्य षोढा शरीराणि षट् त्वचो धारयन्ति च। षडङ्गानि तथाऽस्थ्नाञ्च सह षष्ट्या शतत्रयम्॥ ८४॥ स्थालैः सह चतुःषष्टिर्दन्ता वै विंशति र्नखाः। पाणिपादशलाकाश्च तेषां स्थानचतुष्टयम्॥ ८५॥ षष्ट्यङ्गुलीनां द्वे पार्ष्ण्यो र्गुल्फेषु च चतुष्टयम्। चत्वार्यरत्निकाऽस्थीनि जङ्घयोस्तावदेव तु॥ ८६॥ द्वे द्वे जानुकपोलोरुफलकांससमुद्भवे। अक्षतालूषकश्रोणीफलके च विनिर्दिशेत्॥ ८७॥ भगाऽस्थ्येकं तथा पृष्ठे चत्वारिंशच्च पञ्च च। ग्रीवा पञ्चदशाऽस्थी स्याज्जत्र्वेकैकं तथा हनुः॥ ८८॥ तन्मूले द्वे ललाटाक्षिगण्डे नासा घनास्थिका। पार्श्वकाः स्थालकैः सार्द्धमर्बुदैश्च द्विसप्ततिः॥ ८९॥ द्वौ शङ्खकौ कपालानि चत्वारि शिरसस्तथा। उरः सप्तदशाऽस्थीनि पुरुषस्याऽस्थिसङ्ग्रहः॥ ९०॥ (प्रायश्चित्ताऽध्याये यतिधर्मप्रकरणे)" इति सप्तभिः श्लोकैश्चरकीयाऽनुक्रम आनुपूर्व्या प्रदर्शितः। तत्र "स्थालैः सह चतुःषष्टि र्दन्ता वै विंशति र्नखाः। पाणिपादशलाकाश्च तेषां ( तासां ) स्थानचतुष्टयम्॥" इति द्वितीयश्लोकस्य चतुर्थचरणे तेषां तासामिति पाठभेदे अपरार्कशूलपाणिविज्ञानेश्वरप्रभृतयष्टीकाकारा विवदन्ते। विज्ञानेश्वरेण तु वर्तमानश्लोके नखाः शलाकाश्चेति शब्दद्वयमागतमस्तीति विचार्य तेषामिति तच्छब्देन किं परामृश्यमिति चिन्तायामविशेषादुभयस्याऽपि बुद्धिस्थत्वेन "पुमान् स्त्रिया" (पा. १।२।६७) इति सूत्रेण पुम् शेषं कृत्वा तेषां नखानां शलाकाऽस्न्नाञ्च स्थानचतुष्टयं द्वौ चरणौ द्वौ करौ चेति नियोजितम्। अपरार्केण तासामिति पाठं मत्वा तच्छब्देन शलाकानां स्थानचतुष्टयमस्तीति नियोज्य स्थानशब्देन तदाऽऽधाराऽस्थिचतुष्टयमस्तीति व्याख्याय चत्वार्यस्थीन्यधिकानि प्रदर्शितानि, परन्तु तथात्वे "अस्थ्नाञ्च सह षष्ट्या शतत्रयम्" इत्याचार्यस्य यत्प्रतिज्ञातं तद्धीयेत चतुर्णामस्थ्नामाधिक्यात्। अपरञ्च—"गुल्फेषु च चतुष्टय—" मित्यत्र गुल्फशब्देन किं गृहीतमिति विचारे पादमूलशलाकानामधिष्ठानानि चेद्ग्रहीतुमभीष्टानि स्युस्तर्हि तेषां प्रतिपादं पञ्चत्वाद् द्वयोः पादयोः दश भवन्ति तत्र अङ्गुल्यस्थिगणनायामङ्गुष्ठेषु अस्थिद्वयस्य सत्वात् त्रित्वपूरणार्थं सुश्रुतवदङ्गुष्ठाऽधिष्ठानमङ्गुष्ठाऽस्थिषु परिगण्येत चेत् पादयोरधिष्ठानशब्दवाच्यानि अष्टावेवाऽस्थीन्यवशिष्यन्ते तत्राऽपि "गुल्फेषु च चतुष्टय—"मिति वाक्यस्य केनाऽपि प्रकारेण नियोजनं न सम्भवति। जङ्घाऽऽधा-

राऽस्थि च गुल्फत्वेनाऽभिप्रेतं स्यात्तर्हि तत्प्रतिपादमेकैकमेव वर्तत इति द्वित्वान्न चतुष्टयकथनं युक्तिसहमिति महती शङ्का प्रत्युपतिष्ठते । कोपकाराश्च जङ्घाऽस्थिद्वयाऽधस्तनभागयोरेव गुल्फत्व मन्यन्ते यथा—" तद्ग्रन्थी घुटिके गुल्फौ पुमान् पार्ष्णिस्तयोरधः " इत्यमरेण तयोरधः पार्ष्णिरित्यनेन स्फुटमेव जङ्घाऽस्थिद्वयाऽधस्तनभागयो यौ ग्रन्थ्याकारौ भागौ तयोरेव गुल्फत्व निरचायि । ते एव भागाश्चेद्गुल्फत्वेनाऽभिप्रेताः स्युस्तर्हि पादद्वये चतुर्णां गुल्फाना भवति सम्भवः परन्तु तेषु स्वतन्त्राऽस्थित्वाऽभावात् जङ्घाऽस्थिभ्यः पृथक् तद्गणनमनुचितम् । एषा भागाना सुश्रुतेन खुल्केति नाम निर्दिष्टम् यथा—" आगुल्फकर्णात्सुमितस्य जन्तोस्तस्याष्टभाग खुल्कादिभज्य । इति । सु. चि. १८।२६ " यद्यप्यनेन वाक्येन स्पष्टतया निर्णयो न जायते परन्तु " कस्मान्नु गुल्फावधरावकृण्वन्नष्ठीवन्तावुत्तरौ पूरुषस्य । जङ्घे निर्ऋत्य न्यदधुः क्व स्विज्जानुनोः सन्धी क उ तच्चिकेत ॥ अ. १०।२।२ " इत्यत्र जङ्घाऽस्न उपर्यष्ठीवत अधस्ताद्गुल्फस्य च भिन्नाऽस्थित्वेन निधानस्योक्तत्वाज्जङ्घाऽस्थ्यधस्तनभागस्य गुल्फत्वकथनस्त्य सर्वथाऽसम्भवः, तस्य तु पूर्वमन्त्रे उच्छ्लङ्खसञ्ज्ञा कृताऽस्ति । अयञ्च गुल्फः पार्ष्ण्यस्थ्युपरि गुटिकाकारेण निहितमस्ति, अत्रोच्छ्लङ्खयो र्भवति विन्यासः, सुश्रुते यन्मर्मत्वेन निर्देशः कृतोऽस्ति स त्वेतत्स्थानीयसन्धेरस्ति तात्स्थ्यात्ताच्छब्द्यात् । " तलकूर्चगुल्फसश्रितानि दश " ( सु. शा. ५।१९ ) इत्यत्र सुश्रुतेऽपि गुल्फत्वेन प्रतिपादमेकमेवाऽस्थि परिगणितम् । यत्तु सम्प्रत्यमरादिवाक्यमाकलय्य उच्छ्लङ्खयोरेव अन्तर्गुल्फो बहिर्गुल्फ इत्यादिना व्याख्यान्ति ते त्वन्धस्येवान्धलग्नस्य विनिपातः पदेपदे इति गताऽनुगतिकतया कथयन्ति तत्र विद्वद्भि र्विश्वासो न करणीयः सुश्रुतेन गुल्फस्य स्वतन्त्रत्वेनाऽस्थितया परिगणितत्वात् । वेदे तु स्पष्टतया पृथगस्थि कथितमित्यनुपदमेवावोचाम । एवमेवाऽस्य ( गुल्फस्य ) कूर्चशिर इति नामदानमप्यविचारकृतम् । " क्षिप्रस्योपरिष्टादुभयतः कूर्चो नाम तत्र पादस्य भ्रमणवेपने भवतः । गुल्फसन्धेरुभयतः कूर्चशिरो नाम तत्र रुजाशोफौ ॥ सु. शा. ६ २५ " इत्यत्र मर्मप्रकरणे कूर्चकूर्चशिरश्च नाऽस्थिपरके, कूर्चोऽस्थिसङ्घातस्य क्षिप्रादुपरिष्टादुभयभागयोः कूर्चा नाम तदुपरिष्टात् कूर्चोऽस्नामुभयपार्श्वयोः कूर्चशिरो नाम, मर्मत्वाऽपेक्षयोभयत्रैकवचनम् । वस्तुतस्तूभयत इति कथनाद् द्वयोरपि भागयोः कूर्चौ कूर्चशिरसी च भवतः, इमे तत्रस्थस्नायुसङ्घातस्य नाम्नी—,' अणिविटपकक्षधरकूर्चकूर्चशिरोबस्तिक्षिप्रासविधुरोत्क्षेपाः" स्नायुमर्माणि । सु. शा. ६।८ " इति सुश्रुतेनैव निर्णीतत्वात् । पादाऽङ्गुलिशलाकानामुपरिष्टाद्यानि कूर्चाऽऽकृतीन्यस्थीनि सन्ति तेषा पार्श्ववर्तिनोरधस्तनभागयोः स्नायुपुञ्जस्य कूर्चो नाम । उभयपार्श्ववर्तित्वेन द्वौ कूर्चौ भवतः वामो दक्षिणश्चेति । एवमेव कूर्चाऽस्थिपुञ्जस्योपरिष्टाद् वामदक्षिणभागयोः स्नायुपुञ्जस्य कूर्चशिरो नाम । उभयपार्श्ववर्तित्वेन द्वे कूर्चशिरसी भवत. वाम दक्षिणञ्च । अतो जङ्घाऽऽधाराऽस्नः कूर्चशिरो नामदानं सर्वथाऽनुचितमिति प्रकृतमनुसरामः । अतो याज्ञवल्क्यस्य " गुल्फेषु च चतुष्टय—" मिति वाक्यस्य सङ्गतिः सर्वथा दुर्घटैव । अन्यच्च वाहस्थो र्नामैव नाऽऽगतमिति महद्वैचित्र्यम्[?] पृष्ठे च पञ्चचत्वारिंशदस्थीनि परिगणितानि तत्राऽपि ( पृष्ठवशे ) ग्रीवा, पृष्ट, कटिश्चेति त्रयो भागा गण्यन्ते तत्र ग्रीवासु सप्त, पृष्ठे द्वादश, कट्या चतुर्दशकशेरुकाः सन्ति तासा त्रयस्त्रिंशत्परिमितत्वेन पञ्चचत्वारिंशदस्थ्नामभावादिदमपि वाक्यमसङ्गतम् । न च वाच्य प्रतिकशेरुकं वहवो भागाः सन्ति यथा—कशेरुपिण्ड, स्थालक, चक्रमूल सन्धिप्रवर्धन, कशेरुवाहुः, कशेरुपत्रकं, पृष्ठकण्टकमित्यादयस्तानादाय सङ्ख्या पूर्येतेति तथात्वे सङ्ख्याया आधिक्यात् पञ्चचत्वारिंशत्त्वकथनस्य दुर्घटत्वात् । यद्यप्यत्र हार्नले प्रभृतिभिः कुशकाशाऽवलम्बनन्यायमाश्रित्य कतिपये उपायाः प्रदर्शिताः परन्तु तत्र पुष्टप्रमाणाऽभावात् ते उपेक्ष्याः । तथाच—" ग्रीवा पञ्चदशास्थी स्यात " इत्यत्र ग्रीवाया पञ्चदशाऽस्थीनि परिगणितानि तन्मूलञ्च " ग्रीवाः पञ्चदशः चतुर्दश वा एतासां करूकराणि वीर्य पञ्चदश तस्मादेताभिरण्वीभिः सतीभिर्गुरु भारं

वहति । शत० १२।२।४।१० " अत्र कण्ठनलिकास्थमांसादिविशिष्टतरुणाऽस्थिवलयानां निर्देशः कृतोऽस्ति । केवलाऽस्थिगणनाया नाऽस्त्यभिप्रायः । एवमेव " उरः सप्तदशः । अथावन्ये जत्रवोऽष्टावन्य उरः सप्तदशं तस्मादुरः सप्तदशः । शत० १२।२।४।११ " अत्राऽपि उरोऽस्थिसंलग्नपर्शुकासन्धानार्थं षोडशतरुणाऽस्थिपिण्डान् समादाय वक्षःफलकाऽस्थि च आत्मशब्देन गृहीत्वा सप्तदशसङ्ख्या पूरिता । सैव सङ्ख्या याज्ञवल्क्येनाऽपि यथावस्थितैव गृहीता । याज्ञवल्क्ये बाहुनलके द्वे मणिबन्धाऽस्थीनि चतुर्दश कूर्चाऽस्थीनि दश मिलित्वा षड्विंशतिरस्थीनि न गणितानि सन्ति, गणितानि तु उरोग्रीवातरुणाऽस्थीनि इति महद्वैचित्र्यं दृश्यते । गणितेष्वप्यस्थिषु " जत्र्वेकैकं तथा हनु–" रित्यत्र जत्रुशब्दस्य स्वरूपपरिचयो न कृतोऽस्ति परन्तु स्वमुखेनैव प्रतिजत्र्वेकैकमिति कथयता सिद्धान्तविलोपः कृतोऽस्ति प्रतिजत्र्वेकैकस्य स्वीकारे एकाऽस्थ्न आधिक्ये " अस्थ्नाञ्च सह षष्ट्या शतत्रय–"मिति मूलसिद्धान्तो व्याकुप्येत । वस्तुतस्तु छन्दोऽनुरोधेन जत्र्वेकैकं तथा हनु–"रिति विन्यासः कृतोऽस्ति, परन्तु जत्रु तथा हनुरित्युभयत्र एकैकमस्थ्यस्तीति नियोगोऽस्ति । तथासति एकमेव जत्रुसञ्ज्ञकमस्थ्यायाति तथात्वे सङ्ख्यापूर्तिरस्ति, तच्चाऽस्थि स्वरयन्त्राऽधस्तने अङ्गुलीयकाकारं तरुणाऽस्थि ( Cricoid ) गृहीतमित्यनुमीयते । गणनाथसेनैस्तु एतस्य नाम कृकाटकमिति स्थापितम् तच्चाऽविचारेण लिखितमिति कृकाटिकाटिप्पण्या सविस्तरं द्रष्टव्यम् । ( जत्रूणाञ्च किं स्वरूपमस्तीति जत्रुटिप्पण्या द्रष्टव्यम् ), विज्ञानेश्वरस्य तु प्रमाद एवाऽस्ति शारीराऽनभिज्ञत्वात् । उपरिनिर्दिष्टपथा शरीरे गणनेर्व्वरितषड्विंशाऽस्थि नियोजनेन षडशीत्यधिकशतत्रयमस्थ्नां समायाति । तथात्वे च "सह षष्ट्या शतत्रय–" मिति प्रतिज्ञा केनाऽपि प्रकारेण सिद्धा न भवति । वैदिक्यस्थिसङ्ख्या तु "तत्राहतास्त्रीणि शतानि शङ्कवः षष्टिश्च खीला अविचाचला ये" ( अ. १०।८।४ ) इति मन्त्रेण लभ्यते । परन्तु शृङ्गिग्राहिकतान्यायेन कुत्रस्थाने कियन्ति कियन्ति सन्तीति साक्षान्न निर्दिष्टानि । अपि तु "यस्य त्रयस्त्रिंशद् देवा अङ्गे समाहिता । स्कम्भं तं ब्रूहि कतमः स्विदेव सः ॥ अ. १०।७।१३" इत्यादिषु मन्त्रेष्वनूकाऽरन्यादिषु त्रयस्त्रिंशत्त्वादि सङ्ख्या या समासादिता सा यत्रतत्र ( अनूकटिप्पण्यादौ ) प्रकटीकृताऽस्ति । शतपथादावपि उक्तमन्त्रबीजबलेन "पुरुषो वै संवत्सर" इत्यादिस्थले "त्रीणि च वै शतानि षष्टिश्च संवत्सरस्य रात्रयस्त्रीणि च शतानि षष्टिश्च पुरुषस्याऽस्थीन्यत्र तत्समम् । ( शत. १२।३।२।३ )" इत्यत्र षष्ट्यधिकशतत्रयेणैव पुरुषस्याऽस्थ्नां सङ्ख्या कृताऽस्ति परन्तु तत्राऽपि कतमे स्थाने तानि सन्तीति सामस्त्येनैकत्र स्थाने नोक्तानि । "स वै द्वादश मासान् दीक्षाभिरेति, द्वादशोपसद्भिर्द्वादशसुत्याभिस्तत षट्त्रिंशदक्षरा वै बृहती बृहत्या वै देवाः स्वर्गे लोके अयतन्त । ( शत. १२।३।३।१३ )" इत्यादिस्थले यथोक्तानि तानि यथाप्रयत्नं यत्रतत्र प्रदर्शितानि । तरुणाऽस्थ्नाञ्च गणनाया सङ्ख्यायाः नियतीकरणमशक्यमेतद्विचार्य सुश्रुतेन "त्रीणि सषष्टीन्यास्थिशतानि वेदवादिनो भाषन्ते शल्यतन्त्रे तु त्रीण्येव शतानि । सु. शा. ५।१८–१९ ॥" इत्यनेन वैदिकमतं प्रदर्श्य साक्षादस्थित्वेनैषामस्थ्नां सर्वजनीना प्रतीतिर्भवति तेषामेव निर्देशः कृतोऽस्ति । यद्यपि सूक्ष्माऽस्थीनि कतिचित्स्वगणनातोऽवशिष्यन्त इव भान्ति परन्तु स दोषः प्रतिसंस्कर्तॄणामस्तीति मत्वाऽस्थिबोधककोष्टादवगम्यदूरीकरणीयः । ननु याज्ञवल्क्याऽऽत्रेयादयो महर्षयः कथममूलं जल्पेयुरिति चेत्तर्हि स दोषः प्रतिसंस्कर्तॄणां शिरसि निक्षेप्यः । तथा कथनस्य नैकान्ततोऽसम्भवः, दीर्घकालादङ्गुल्यग्रगणितस्वरूपास्वार्षसंहितासु तादृशप्रमादस्याऽयत्नलभ्यत्वात् । तथा सुश्रुतेऽपि केवलमूर्द्धभागविभाजकं सूत्रं प्रतिसंस्कर्तृभिर्व्यत्यस्तता नीतमिति कृत्वा यत्किञ्चिद्दोषः प्रतीयते परन्तु स नाऽऽचार्यस्याऽस्ति योऽयं महर्षिरधिपत्यादितिरोहितमर्मणामपि निर्देशः कृतवान् स कथं स्थूलविषये प्रमाद्येदतो यत्किञ्चिदपि स्खलनं तदीयग्रन्थे दृश्यते तत्प्रतिसंस्कर्तृकृतो बोध्यः । एवं चेत्तर्हि पृष्ठाऽस्थ्नां बहुवारङ्ग्युक्ततयैषु बह्वस्थिसङ्घातो भवेदिति व्यामुह्य

ही अपने ग्रन्थका सुफल समझकर हमको संतोष होगा यह हमारी प्रणतिपूर्वक नम्र विज्ञप्ति विद्वज्जनों से ग्रहण की जावै ॥ १६ ॥

अस्मत्कृतौ यमकरोदिह पुस्तकानां
सम्प्रेपणेन कियतामपि योगवृद्ध्यै ।
श्रीयादवः सबहुमानपुरःसरं तम्,
तस्योपकारमिममत्र वयं स्मरामः ॥ १७ ॥

भाषा—हमारे इस पुस्तक के रचना कार्य मे श्री यादवशर्मा वैद्यराज जी ने जो कतिपय पुस्तको को भेज कर उपकार किया है जिससे योगों की वृद्धि हुई है हम उनके इस उपकार का अत्यन्त आदरके साथ यहा पर स्मरण करते हैं ( और उनके आभारी है )

सर्वेपा कल्याणाकाङ्क्षी—
**पण्डितहरिप्रपन्नशर्मा वैद्यः ।**



श्रीगणेशाय नमः ।

# अथ रसयोगसागरः ।

'रसो वै सः' श्रुतिः प्राह,
यस्मात्सूतं जगत्त्रयम् ।
ध्यायन्ति योगिनो नित्यं,
तं नमामि रसेश्वरम् ॥ १ ॥

विघ्नविघाताय चिकीर्षितार्थोत्तमफलावाप्तये च सर्वचराचरजगत्कारणभूतात्मिकदैविकभौतिकानेकनामरूपगुणभृत्सर्वनियन्तृसदसद्विधात्रनेकविधकर्मोपलक्षिताभिधानवक्तृष्यादिस्तुतध्यातसाक्षात्कृतब्रह्मणो नमस्कारात्मक मङ्गलमाचरन्, अनेकैर्विद्वद्भिर्बहुभिर्नामभिः कीर्तितमपि स्वचिकीर्षितग्रन्थस्य रसविषयत्वात् तन्नाम्नैव नमस्कृत ईश्वरो रससिद्धिं जवेन पाठकेभ्यः प्रदास्यति नीरसताञ्चैतस्याङ्कृतावपाकरिष्यतीति रसाभिधेयमेव पर देव नमस्करोति प्रकृतग्रन्थकारः—रस इति । यस्माज्जगत्त्रय सूतम् स रसः ( इति ) श्रुतिः प्राह. इति पूर्वार्द्धस्यान्वयः । रस एव सर्वजगत्कारणम् । रस ओङ्कार वाच्यः परमेश्वर इति यथा—"एषा भूताना पृथिवी रसः, पृथिव्या आपो रसः, अपामोषधयो रसः, ओषधीना पुरुषो रसः, पुरुषस्य वाग्रसः, वाच ऋग्रसः, ऋचः साम रसः, साम्न उद्गीथो रस., स एष रसाना रसतमः परम· परार्ध्योऽष्टमो यदुद्गीथः ।" इति छान्दोग्योपनिषदि ॥ तत्रैव च प्रथममुद्गीथस्य ( रसस्य ) उपास्यतोपदिष्टा "ओमित्येतदक्षरमुद्गीथमुपासीत" इति । एवमनेकेषु स्थानेषु रसशब्देनाध्यात्मवादिनः श्रुतिभिस्तं पर देव स्तुवन्ति । तदश्वरशब्दवाच्य ब्रह्मजगत्कारणम् । तस्मादेव जगदुत्पन्नमिति नास्त्यत्र विदुषाम्विवादः । "यतो वा इमानि भूतानि जायन्ते" तै. उ. इति ॥ "यत· सर्वाणि भूतानि जायन्ते च युगागमे । यस्मिंश्च प्रलय यान्ति पुनरेव युगक्षये" इति महाभारते च । तमेव रस नित्य योगिनो ध्यायन्ति । ( ओ वाच्य परं ब्रह्मैव रसवाच्यमिति च्छान्दोग्योपनिषदो दर्शितमेव प्राक्) योगिनश्च तमेव प्रणववाचकं परमात्मान ध्यायन्ति तथा चोपदिष्टम् "तस्य वाचकः प्रणव·" इति योगदर्शने ॥ ध्यानमात्रगम्यत्व च तस्योपदिष्टम्—यथा "न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा । ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तुत पश्यते निष्कलन्ध्यायमानः" मुण्ड० उप० ३।१।८ ॥ इति ॥ त रसेश्वर रसतमम् ( यद्यपि पृथिव्यादयोऽपि रसशब्देनोपनिषदि व्यवहृताः परमत्र रसेश्वरो यः प्रणववाच्यो रसतम इति पूर्वमुक्तः स नमस्क्रियते ) परमात्मान नमामि । ओङ्कारस्य रसवाच्यत्वं साङ्खयायन गृह्यसूत्रेऽपि द्रष्टव्यम् । यद्वा सरतीति रसः । वर्णव्यत्ययः । तथा च महाभाष्ये "वर्णव्यत्ययापायोपजनविकारा अपि दृश्यन्ते ।" यथा कृतेस्तर्कः । हिंसेः सिंहः । इत्यादि । अतः सरति सर्वत्रेति सर्वत्र गतिमत्वात् सर्वव्यापकता परमात्मनो दर्शिता । यद्वा 'रसः' इत्यन्ननामसु निघण्टौ, निघ. २।७ अतो यस्मादन्नरूपात् रसाज्जीवानामुत्पत्तिस्थिती भवतः । "स एष पुरुषोऽन्नरसमयः" तै. उप. १।१।२ इति "अन्नाद्भवन्ति भूतानि" इति गीतायाञ्च यदुक्तन्तत्सगच्छते । यद्वा—ब्रह्मैव रस इति तैत्तिरीयोपनिषदि यथा—"असद्वा इदमग्र आसीत् । ततो वै सदजायत, तदात्मानं स्वयमकुरुत तस्मात्तत्सुकृतमुच्यत इति । यद्वैतत्सुकृत रसो वै स· रसं ह्येवाय लब्ध्वाऽऽनन्दी भवति ।" तैत्ति० उप० ब्रह्मवल्ली ॥ अत्र सुकृतं ब्रह्मेत्याशय्य तदेव ब्रह्म रस इत्युक्तम् । तदेव च पूर्वमव्यक्तमासीत्तस्मादेव व्यक्तञ्जगदिदमजायतेत्युक्तम् । अतो यस्मात्सूत जगत्त्रयमिति न सङ्गतताऽनपेतम् ॥

यद्वा विश्वनाथः पण्डितः "वाक्य रसात्मकं

१ 'रसो वै स' इतितैत्तिरीयोपनिषदि ब्रह्मवल्या पाठ एवास्ति ।

काव्यम्" साहित्य द० १।१ इति ब्रूते काव्यलक्षणम्। सकलविद्यामूलस्य वेदाख्यस्य काव्यस्य रचयिता परमेश्वरः कविः। "कविर्मनीषी परिभूः स्वयम्भूः" यजु० ४०।८ इति श्रुतिः। कविं पुराणमनुशासितारमिति गीतायाञ्च। तेन कविना निर्मित वेदाख्य काव्यम्। काव्यस्य रसात्मकत्वाद्रसात्मकं रसमय रस एवेत्यर्थः। वेदस्य रसत्वं यथा "ते वा एते रसानाॅ रसा वेदा हि रसाः" छान्दो० ५।५।४ इति। तस्मादेव वेदाख्यात्काव्यात् शब्दब्रह्मणः ( रसशब्दे—इति रसधातुः शब्दार्थेऽपि पाणिनिमते—यो वेदेभ्योऽखिलं जगन्निर्मम इति श्रीसायणाचार्योऽपि ) जगत्त्रयमजायत। योगिनश्च तं नित्य ध्यायन्ति, तं नमामीति भावः। अत्र रसशब्देन ब्रह्मविद्या दर्शिता। साहित्येऽपि रसब्रह्मणोरेककल्पमेव लक्षणम्। यथा साहित्यदर्पणे-- "सत्वोद्रेकादखण्डस्वप्रकाशानन्दचिन्मयः। वेद्यान्तरस्पर्शशून्यो ब्रह्मास्वादसहोदरः॥ लोकोत्तरचमत्कारप्राणः कैश्चित्प्रमातृभिः। स्वाकारवदभिन्नत्वे नायमास्वाद्यते रसः॥" इति साहि० द० ३।२५। तथाचोपनिषत् "प्रजापतिर्लोकानभ्यतपत्तेपा तप्यमानानाॅ रसान् प्रावृहदग्निं पृथिव्या वायुमन्तरिक्षादादित्य दिव. ॥ १ ॥ स एतास्तिस्रो देवता अभ्यतपत्तासा तप्यमानानाॅ रसान् प्रावृहदग्नेर्ऋचो वायोर्यजूषि सामान्यादित्यात् ॥ २ ॥ स एता त्रयीं विद्यामभ्यतपत्तस्यास्तप्यमानाया रसान् प्रावृहद्भूरित्यृग्भ्यो भुवरिति यजुर्भ्यः स्वरिति सामभ्यः। तद्यदि ऋग्भ्यो रिष्येद्भूः स्वाहेति गार्हपत्ये जुहुयादृचामेव तद्रसेनर्चा यज्ञस्य विरिष्टिं सन्दधाति ॥४॥४॥ अथ यदि यजुष्टो रिष्येद्भुवः स्वाहेति दक्षिणाग्नौ जुहुयाद्यजुषामेव तद्रसेन यजुषा वीर्येण यजुषा यज्ञस्य विरिष्टिॅ संदधाति ॥ ५ ॥ अथ यदि सामतो रिष्येत्स्वः स्वाहेत्याहवनीये जुहुयात्साम्नामेव तद्रसेन साम्ना वीर्येण साम्ना यज्ञस्य विरिष्टिॅ सदधाति ॥ ६ ॥ तद्यथा लवणेन सुवर्ण सदध्यात्, सुवर्णेन रजतम्, रजतेन त्रपु, त्रपुणा सीसॅ, सीसेन लोहॅ, लोहेन दारु, दारु चर्मणा ॥ ७ ॥ एवमेषा लोकानामासा देवतानामस्यास्त्रय्या विद्याया वीर्येण यज्ञस्य विरिष्टिॅ सन्दधाति। भेषजकृतो ह, वा एप यज्ञो यत्रैवविद्ब्रह्मा भवति ॥ ८ ॥ इति छान्दोग्य उप० ४।१७।१।

अत्र सर्वं रसक्रमं प्रदर्श्य लवणेन सुवर्णमित्यादिना रसक्रियाज्ञानम् ( Chemistry ) दर्शितमुदाहरणरूपेण। अन्ते सर्व एव च यज्ञो भेषजकृतो दृष्टान्ततो मतः। औषधोपचारेण रोगिणामिव यज्ञाना क्षतानि रसेन सन्धीयन्ते। रस एव यज्ञे प्रायश्चित्तसाधनम्। प्रकृते तु प्रत्यक्षमेव रसोपचारो रसक्रिया च दर्श्येते। सर्वेषामुपनिषद्वाक्याना विस्तरभयान्न विहिता व्याख्या सा तत्र तत्र द्रष्टव्या।

यद्वा तान्त्रिकमते रमित्यग्निबीजम्। समिति सोमबीजम्। अग्नीषोमयोरैक्य रसः। लक्ष्यैकदेशग्रहणे लक्ष्यमात्रग्रहणम्। स एवाग्नीषोमात्मको रसो जगत्कारणम् "अग्नीषोममय जगत्" इति। आधुनिकविज्ञानविदोऽपि बहुचमत्कारवतोऽनेकवस्तुस्थितस्य विद्युदाद्यग्नेराकर्षकविकर्षकात्मकं प्रभावद्वयं मन्यन्ते। आकर्षणविकर्षणजनितमेव हि जगदिति तन्मतम्। * स एवाग्नीषोमयोरैकीभूतो

*Besides these four roots, Empedokles (444 B. C ) postulated some thing called love ( Pixia ) to explain the attraction of different forms of matter, and of something called strife ( Veikos ) to account for their separation. He speaks of these quite distinctly as bodies The way in which they act seems to have been suggested by the experiment with the *Klepsydra* already referred to We start with some thing like the Sphere of *Parmenides* in which the four elements are mingled in a sort of solution by love while strife surrounds the sphere on the outside When the strife begins to enter the sphere the love is driven towards its centre, and the four elements are gradually separated from one another. That is cleary an adoptation of the old idea of the world-breathing.

रसो जगद्धेतुरिति सङ्गमयितव्यम्। योगिनश्च नाना (विज्ञान) कर्मसु दक्षा वैज्ञानिकाः (योगः कर्मसु कौशलम् गीता २।५० ) तमेव रसं ध्यायन्ति

Empedokles also held however that respiration depended on systole and diastole of the heart and therefore we find that as soon as strife penetrated to the lowest (or most central) part of the sphere and love is confined to the very middle of it, the reverse process begins Love expands and strife is driven out of the sphere once more in proportion, as love occupies more & more of it, just as air is expelled from the Klepsydra when the water enters it. In fact love and strife are to the world what blood & air are to the body. The physiological analogy naturally influenced the founder of a medical school who for the first time formulated a theory of the flux and reflux of blood from and to the heart. The conception of the attractive force as love is also as Empedokles says as physiological origin. No one had observed, he tells us, (fr. 17 21-26) that the very same force men know in their own bodies plays a part in the life of the great world too He does not seem to have thought it necessary to give any mechanical explanation of the cosmic systole and diastole. It was just the life of the world.

A world of perishable things such as we know can only exist when both love and strife are in the world There will, therefore, be two births and two passings away of the mortal Things (fr 17-3-5) one when love is increasing and all the elements are coming together into one, the other when strife is re-entering the Sphere and the elements are being separated once more. The elements alone are everlasting The particular things we know are unstable which come into being as the elements "run through one another" in one direction or other. They are mortal or perishable... Their birth is mixture & their death is but the separation of what has been mixed Nothing is imperishable but fire, air, earth, water, with the two forces of love and strife.

*School of Greek Philosophy by J. Burnet.*
Pages. 73-74

चिन्तयन्ति—कथं कस्यापि चमत्कारस्य नूतन आविष्कारो भवेदिति चिन्तयन्तीति भावः। तं नमामि।

अथवा यस्माज्जगत्त्रयं श्रुतिश्च स रसः पारदः, इति तं सूतं प्राह। तत एव सूताभिध एषः। योगिनश्चानेकविधभैषज्यप्रयोगवन्तो वैद्यास्तं ध्यायन्ति चिन्तयन्ति तं रसेश्वरं नमामि तज्ज्ञानाय यते। यद्वा भ्वादेराकृतिगणत्वाद्धातूनामनेकार्थत्वाच्च नमामि नमयामि नम्रीकरोमि प्रयोगेण सर्वरोगनाशाय वशीकरोमीत्यर्थः यद्विस्तृतिभयान्नोल्लिखितं तत्तद्विद्भिरूह्यम्॥ इति ॥ १ ॥

**भावार्थ**—जिस ईश्वर का वर्णन सब वेदों में है जिस से सब जगत् उत्पन्न हुआ है। और जिसका योगीजन सदा ध्यान करते है और जो सब रसो और पदार्थों का नियन्ता है। उस परमात्माको मै नमस्कार करता हूँ ॥ १ ॥

**रसेशसिद्धान्रससिद्धिदायका-**
**न्नत्वा गुरूनागमवेदपारदान्।**
**ग्रन्थान्समाहृत्य रसप्रदीपका-**
**न्निबध्यतेऽयं रसयोगसागरः॥ २॥**

सम्प्रति ग्रन्थस्यास्य रचयिता स्वचिकीर्षितग्रन्थोद्दिष्टराद्धान्ताना प्रमाणार्हता दर्शयन् पूर्वाचार्यकृतराद्धान्तानुसरणं स्वकृतेर्विशदीकुर्वन् तानेव प्रणमति रसेशेति—रसशब्दस्यार्थाः समासतः पूर्वस्मिँश्श्लोके दर्शिताः। रसेशो ब्रह्मवाच्यः परमेश्वरः। तत्र सिद्धा योगिनः प्राप्तयोगसिद्धयः प्राप्तब्रह्माणो वा। रोऽग्निः सः सोमः, ईशः परमेश्वरः एतेषा त्रयाणा ज्ञाने सिद्धाः—भौतिकदैविकाऽऽत्मिकज्ञानवन्तो विद्वासः। यद्वा—"असद्वा एतदग्र आसीत् ततो वै सदजायत। तदात्मानं स्वयमकुरुत। तत्तस्मात्सुकृतमुच्यत इति यद्वै सुकृतं रसो वै सः। इति तैत्ति० उप०। सुकृतमित्यादि सृष्टिप्रकरणमधिकृत्य तस्यैव सुकृतस्य रस इत्यभिधोक्ता। तत्सुकृतमेव रसः तस्य सुकृतस्येशो गृहीतनानाविधरूपः परमेश्वरः। तत्र तदुपासनायां सिद्धा भगवद्भक्ता इत्यर्थः। अथच प्रकृते रसेशः पारदस्तत्र तद्विद्याया सिद्धा व्यालाचार्यप्रभृतयो

रसविद्याचार्याः सप्तविंशतिसख्यकाः,तथाहि–"व्यालाचार्यश्चन्द्रसेनः सुबुद्धिर्नरवाहनः । नागार्जुनो रत्नघोषः सुरानन्दो यशोधनः ॥ १ ॥ इन्द्रधूमश्च माण्डव्यश्चर्पटिः शूरसेनकः । आगमो नागबुद्धिश्च खण्डः कापालिको मतः ॥ २ ॥ कामारिस्तान्त्रिकः शम्भुर्लङ्कोलम्पटशारदौ । बाणासुरो मुनिश्रेष्ठो गोविंदः कपिलो बलिः ॥ ३ ॥ एते सर्वे तु राजेन्द्रा रससिद्धा महाबलाः । चरन्ति सर्वलोकेपु नित्या भोगपरायणाः ॥ ४ ॥ सप्तविंशतिसंख्याका रससिद्धिप्रदायकाः ॥" यद्वा रसः पारदः, रसाः पारदादयो वा तेपा ईशाः ( प्रयोगैः सर्वरोगापाकरणे ये तान् रसान् वशीकुर्वन्ति ते रसविद्याविदः ) तेषु सिद्धाः अतिशयेन तज्ज्ञानपूर्णाः प्रसिद्धा वा सिद्धिमन्तो वा तान् । यद्वा रससिद्धिर्ब्रह्मज्ञानम् । वैदिकादिस्वनुष्ठितकर्मसिद्धिर्वा । सम्यगुपदेशेन रससिद्धिं ये ददति तान् । अन्तरेण गुरूपदेश न सिद्धिः कुत्रापीति वादानर्हम् । "उपदेक्ष्यन्ति ते ज्ञानं योगिनस्तत्त्वदर्शिनः" इति गीता ४।३४ । गुरवो हि ज्ञानमुपादिशान्ति । कथं भूतास्ते गुरवो ये ज्ञानोपदेशे प्रभवस्तत्वदर्शिनश्च । यदि गुरवः स्वयमेव विद्यापारदश्वनो न भवेयुः कथ त उपदेष्टुं शक्नुयुः । अतएव रसेशसिद्धानिति तेपा विशेपणम् । असिद्धाः ( अतत्वदर्शिनः ) उपदेष्टु नैव शक्नुवन्ति । तेपामुपदेशेनान्धपरम्परा प्रचरति । ततश्चाज्ञानजनितान्यथाप्रयोगात्सर्व एव पदार्थाः स्वगुणदानेऽसमर्थकल्पा भवन्ति । तथाचोक्तम् "उपदेश्योपदेष्टृत्वात्तत्सिद्धिरितरथाऽन्धपरम्परा" इति अतएव प्रकृतग्रन्थकारो रसेशसिद्धान् रससिद्धिप्रदायकानिति विशेषणद्वयोपेतान् गुरून्नमस्करोति । पुनस्तानेव गुरून् विशिनष्टि । आगमस्य सर्वासामेव विद्याना तन्मूलभूतस्य वेदस्य च पारदायकान् पारप्रदर्शकानित्यर्थः । रसप्रधानान् देवचिकित्साप्रधानान् तथाच–" आसुरी मानुपी दैवी चिकित्सा त्रिविधा मता । शस्त्रैः कपायैर्लोहाद्यैः क्रमेणान्त्या सुपूजिता ॥ रसादिभिर्या क्रियते चिकित्सा दैवीति वैद्यैः परिकीर्तिता सा । सा मानुपी याऽथ कृता फलाद्यैः सा राक्षसी शस्त्रकृता भवेद्या ॥ इति ॥" तथाच–"शस्त्रच्छेदनयोगतो हि कलिता या दानवी साऽधमा, चूर्णाद्यैः परिकल्पिता निगदिता सा मानवी मध्यमा । दैवी दिव्यरसायनैर्विरचिता सा वै चिकित्सोत्तमा, तस्माद्दैवचिकित्सित प्रकलयेत् कल्पद्रुवत्सिद्धिदम्"॥ रसाना पारदादीना प्रदीपकान् दीप इव वस्तूनि रसान् प्रकाशयितॄन्–इत्यर्थः । ग्रन्थान्समाहृत्य अय रसयोगसागर एतन्नामको ग्रन्थः ( रसः पारदः रसाःपारदादयो वा तस्य तेषां वा योगाः अनेकविधप्रयोगाः । तेपा । सागर इव ) यद्वा रसस्य ब्रह्मणो योगः सायुज्यम् ( यमनियमाद्यष्टाङ्गपूर्णोवायोगः ) तस्य सागरस्तत्पूर्ण इत्यर्थः ॥

ननु शरीरोद्भूतरोगनिराकरणैकफलस्य चिकित्साशास्त्रस्य ब्रह्मज्ञानेन योगशास्त्रेण च सह कः सम्बन्ध इति चेन्न–"नायमात्मा बलहीनेन लभ्यः" "धर्मार्थकाममोक्षाणामारोग्य मूलकारणम्" इति च रोगरहितो वलवाश्च ब्रह्म लभत इति । अध्यात्मविद्यायाश्चैपा विद्या मुख्याङ्गभूता, अतएव ब्रह्मकर्मोपदिशन् भगवान् कृष्णः "ज्ञानं विज्ञानमास्तिक्यम्" इति ज्ञानेन सह विज्ञानस्य ( अस्या जीवितोपायभूताया विद्यायाः ) ब्रह्मकर्मणि गणनामकरोत् तथाच–"यतोऽभ्युदयनिःश्रेयससिद्धिः स धर्मः" वैशेषिक० । अत्रापि निःश्रेयसं दर्शयन् ऋषिरभ्युदयस्य तदङ्गत्वं दर्शयति । अभ्युदयश्च शरीरस्वास्थ्यमन्तरा दुर्लभ एव । अतएव "अविद्यया मृत्यु तीर्त्वा विद्ययाऽमृतमश्नुते,, इति यजुर्वेदे उपनिषदि च अविद्यायाः ( चिकित्सादिविद्यायाः ) उपादेयता दर्शिता ॥ २ ॥

**भावार्थ**—जो उत्तम ब्रह्मज्ञानी और उत्तम रसचिकित्सा, ब्रह्मविद्या और वैद्यविद्या अथवा सर्व विद्याओंके पारदर्शक हैं, ऐसे गुरुओ को नमस्कार करके जिसमे रसचिकित्सा का प्राधान्य है, ऐसे ग्रन्थोंके सिद्धान्तोंका सङ्ग्रह करके यह रसयोगसागर नामक ग्रन्थ मुझसे बनाया जाता है ॥ २ ॥

सोत्कण्ठतायां विदुपत्वसद्भवे,
महाधनित्वेऽप्यतियत्नसद्भवे ।
तथाऽपि सर्वैः सुतरां सुदुर्लभा,
योगा श्श्रमोऽतः सुफलः प्रतीयते ॥३॥

सम्प्रति एतद्ग्रन्थस्थाना योगाना दुर्लभत्वं दर्शयन् तदुपस्थितौ स्वश्रमसाफल्य दर्शयति । सोत्कण्ठतायामिति। सोत्कण्ठतायां सत्या विदुपत्वस्य त्रिद्वत्सङ्घहित्वस्य सद्भवे सत्व उपस्थितौ इति भावः। महाधनित्वेऽपि सति, अतियत्नस्य सद्भवे विद्यमानतायाञ्च। तथापि सर्वैरपूर्णचिकित्साज्ञानैः साधारणजनैरित्यर्थः। सुतरा सुदुर्लभा एतादृशा योगा अस्मिन् ग्रन्थे सन्ति, केवलमुत्कण्ठता न साफल्यप्रदा सा तु सर्वेषु साधनेपु सत्सु साफल्य ददाति। केवल विद्यापि सफलतादानेऽसमर्थैव "यस्तु क्रियावान् पुरुपः सविद्वान्" इति। विद्या तु तत्प्रयोगश्रममन्तरा निष्फलैव। धनमपि ज्ञानप्रयोगावन्तरा कार्यमेतत्कर्तुं नैव प्रभवति। प्रयासेनापि केवलेन न कार्यसिद्धिर्भवति सा तु पात्रमपेक्षते। न कोऽपि शिलामये शैलशिखरे कूप खनन् स्वप्रयासफल लभते। अतः, एभिः सर्वैरपि साधनैः पृथक् पृथक् दुर्लभा योगा अत्र ग्रन्थे वर्तन्ते। अतोऽस्माकमय श्रमः सफल इति वय मन्यामहे। इति।

ब्रह्मविद्यायामपि तथैव राद्धान्तः यथा "नायमात्मा प्रवचनेन लभ्यो न मेधया न वहुना श्रुतेन" इत्यादि।

**भावार्थ**—बड़ी उत्कण्ठाके रहने पर भी चिकित्साके सव योग अच्छीप्रकार नहीं जाने जाते हैं। न केवल विद्याही उपरोक्त कार्य को सिद्ध कर सक्ती है। धन और प्रयास भी केवल कुछ नहीं कर सक्ते हैं। क्योंकि पुस्तक और रसविपय के विद्वान् दुर्लभ है और वे इतना वड़ा परिश्रम इसके लिये नहीं करते। इस ग्रन्थ में हमने सर्व साधारण को जो सर्वथा दुर्लभ है ऐसे २ योग रक्खे है अतः यह हमारा श्रम सुफल प्रतीत होता है॥ ३॥

१ टि० विद्वत्सङ्घहित्वसत्त्वे,आकृतिगणत्वादर्शआद्यच्।

एकाभिधेया वहुवस्तुनिर्मिताः,
पृथक् पृथग्रोगनिवृत्तिहेतवः ।
सन्तीदृशा योगवरास्सुदुर्लभाः,
विमुद्रिताऽमुद्रितपुस्तकस्थिताः ॥४॥

अथ कथम्प्रकारा योगा अस्मिन् ग्रन्थे विद्यन्ते कुतश्च ते लब्धा इति दर्श्यते। वहुभिरनेकै र्वस्तुभि र्निर्मिताः पृथक् पृथक् प्रकारेण विविधरोगनाशकराः, एकाभिधेया एकनामान ईदृशा एवंविधा योगा अत्र ग्रन्थे सन्ति। कुतस्तेषामुपलब्धिरित्याह विमुद्रितेति—केचिन्मुद्रितपुस्तकेषु लभ्यन्ते केचिच्च हस्तलिखितपुस्तकेपु। मुद्रितान्यपि सर्वाण्येव पुस्तकानि—एकत्र कस्यापि साधारणवैद्यस्य वेश्मनि भवेयुरिति नैव सुसाधम्। हस्तलिखितानि तु सर्वत्र नैव लभ्यन्ते। लब्धेषु च पुस्तकेपु महता श्रमेण योगानामन्वेपणमतिकाठिनम्। अस्मिन् ग्रन्थे सर्वमुद्रिताऽमुद्रितग्रन्थस्थिता उपर्युक्तप्रकारा योगा वर्तन्ते॥ ४॥

**भावार्थ**—एक नामवाले और वहुत वस्तुओं (औपधियों) से वने हुए पृथक् पृथक् प्रकार से रोगोंको दूर करनेवाले ऐसे उत्तम योग जो सर्वथा दुर्लभ हैं छपे हुए और हस्तलिखित दुष्प्राप्य ग्रन्थों मे हैं वह प्रायः सभी इस ग्रन्थ मे है॥ ४॥

रोगक्रमः पूर्वतनैस्समादृतो,
भिषग्भिरत्यन्तमहानुभावकैः ।
तथाप्यकारादिसृतिः समादृता,
प्राचुर्यतो लोकमतावलम्बनात् ॥ ५ ॥

पूर्वतनैः पुरातनैरत्यन्तमहानुभावकैः परोपकारैकव्रतैर्भिषग्भिः, धन्वन्तरिप्रभृतिभिर्यो रोगक्रमः केन प्रकारेण को रोगोऽपनीयत इति यः क्रमः समादृतः सम्यग्ज्ञातः। स एवात्रापि समाद्रियत इति शेषः। तथापि तद्राद्धान्तानुसरणेऽपि, अकारादिसृतिः—अकारादिक्रमेण योगाना नामानि, अन्वेषणाय सौकर्यं यथाभवेत्तथा समादृता। प्राचुर्यतोऽधिकतया लोकमतस्य जनमतस्यावलम्बनात्। प्रायेण लोक इदमेव (अकारादिक्रमेण वस्तुनाम्ना स्थापनम्) आद्रि-

यते तदेवावलम्ब्यत इत्यस्माभिरपि तदेव व्यधायीति बोध्यम् ।

**भावार्थ**—अत्यन्त महानुभाव पुराने वैद्योंने रोगक्रमका बहुतआदर किया है तोभी (सुगमताके लिये) बहुत करके वर्तमान लोकपद्धति का अवलम्बन करके उसी प्रकार अकारादि क्रमसे सब रसो के योग दिये हैं ॥ ५ ॥

---

## १ अगदेश्वरः

मरालपादस्वरसेन गन्धः,
सुभावितो वारशतैकमेवम् ।
रसैः कुमार्याश्च ततस्तथैव,
निम्बूरसेनापि तथैव भूयः ॥ ६ ॥
शुद्धेशबीजेन विमर्दनाद्धि,
सुकज्जलाभं विनिधाय घर्मे ।
मनः शिलातारकतालयुक्तं,
पादांशमानाभ्रकसत्त्वयुक्तम्
संमर्द्य तत्काचघटे निधाय,
मृत्कर्पटैर्लिप्तबहिः प्रदेशे ॥ ७ ॥
शुष्कं यदा स्यात्पिहितं निधेयं,
तद्वालुकापूरितताम्रभाण्डे ।
द्वात्रिंशताचप्रहरैर्विपक्वं,
सिद्धं रसञ्चारुणदीधितिञ्च ॥ ८ ॥
तं स्वाङ्गशीतं चणकप्रमाणं
भक्षेत्सदा पूजितविघ्ननाथः ।
निजानुपानादगदङ्करोति
चायूंषि च स्थापयतीति मन्ये ॥९॥

र. क., रसायनाधिकारे । टि० अत्रगन्धकपारदयोः कज्जलीकृत्वा हसपद्यादिरसेन भावना देयेति तत्वम् ।

**भाषा**—आवलासार गन्धक लेकर हंसराज, घीकुआर और निम्बू के रसमे क्रमशः सो सो बार भावना देना, फिर गन्धक के बराबर शुद्ध पारा मिला कर खूब मर्दन करना। जब उसकी कज्जली होजावे तब मैनसिल, चादीके पत्र और हरताल ये सब गन्धक के बराबर और अभ्रकभस्म गन्धक का ¼ मिलाकर घोट देना। फिर उसको आतशी शीशी में रखकर ऊपर से कपड़मिट्टी का लेप करके तथा चाक मिट्टीसे शीशीका मुख बंद करके धूप मे सुखा लेना। फिर रेत से भरी हुई तावे की कड़ाही में उसको गले तक रेते के भीतर गाड़ देना। फिर ३२ पहर आच देकर उस रसको सिद्ध करना। जब वह स्वागशीतल होजावे तब श्रीगणेशजी की पूजा करके एक चने के बराबर इसकी मात्रा को खाना यह अगदेश्वर रस पृथक् पृथक् अपने अपने अनुपानों के साथ सभी रोगों को नष्ट करता है और आयुको स्थिर करता है ऐसा मै मानता हू ॥१॥

## २ अगस्तिसूतराजः ( प्रथमः )

रसोंऽशुमाली जयपाललोह—
शिलाहरिद्राबलयः समांशाः ।
व्योषाग्निभृङ्गार्द्रक निम्बुनीरै—
र्निर्गुण्डिकाऽऽरग्वधमूलवार्भिः ॥ १० ॥
पृथग्विमर्द्योदर नाशनाय,
अगस्तिसूतः सशिवागुडोऽयम् ।
सम्पाचनादिक्रमशुद्धदेहे,
वल्लद्वयो वा क्रमसात्म्यतोवा ॥
कम्पिल्लचूर्णेन समञ्च दत्तो
जलोदरादीञ्जयतीह रोगान् ॥ ११ ॥

र. ल, र. चि., यो. स, उदराधिकारे ।

**भाषा**—पारा, तावा, जमालगोटा, लोहा, मैनसिल, हल्दी और गन्धक इन सबको बराबर लेकर कज्जली बना लेना। फिर त्रिकटु, चित्रक, भागरा, अदरख, निम्बू, संभाद्ध अमलतास और मूली इन के रसों से पृथक् पृथक् भावना देना। यह सिद्ध किया हुआ रस अगस्तिसूतराज है। हरड और गुड़ के साथ खानेसे सब प्रकार के उदररोगों का नाश करता है। सम्पाचनादिक्रम ( पञ्चकर्मों ) से शरीर की शुद्धि करके ३ रत्ती अथवा यथोचित

मात्रा में कमीले के चूर्णके साथ खाने से यह रस जलोदरादि रोगों को जीतना है ॥ २ ॥

### ३ अगस्तिसूतराजो (द्वितीयः)

रसबलिसमभागं शुद्धहिङ्गूलयुक्तं,
द्विगुणकनकबीजं नागफेनेन तुल्यम्।
सकलविहितचूर्णं भावयेद्भृङ्गनीरैः,
ग्रहणिजलधिशोषे सूतराजो ह्यगस्तिः १२
त्रिकटुमधुकयुक्तः सर्ववान्ति च शूलं,
कफपवनविकारान्वह्निमान्द्यं च निद्राम्।
घृतमरिचयुतोऽयं गुञ्जमात्रः प्रवाहीम्, १३
हरति षडतिसाराञ्जीरजातीफलाभ्याम्।

यो. र, वृ यो. त, नि. र., र. सु, र. च, वै. चिं., ग्रहण्यधिकारे।

भाषा—पारा १ भाग, गन्धक १ भाग, शिंगरिफ १ भाग, धतूरे के बीज २ भाग और अफीम २ भाग, इन सबको मिलाकर चूर्ण बनाकर भांगरे के रससे खूब भावना देना। जैसे अगस्त्य ऋषिने समुद्रको सुखा दिया था वैसे ही यह अगस्तिसूतराज रस सङ्ग्रहणी रूपी समुद्र को सुखा देता है। इसकी मात्रा १ रत्ती से लेकर १॥ रत्ती तक त्रिकटु और मुलेठी के ३ मासेचूर्ण के साथ खाने से वमन, शूल, कफ वायुके विकार और जठराग्नि की मन्दता यह सब रोग नष्ट होते हैं। एक रत्ती भर इसको कालीमिर्च और घीके साथ खावें तो प्रवाही (अजीर्ण विशेष) को नष्ट करता है। जीरे और जायफल के ३ मासा चूर्ण के साथ खाने से ६ प्रकार के अतीसारों को नष्ट करता है ॥ ३ ॥

### ४ अगस्त्यरसायनम्।

त्रिफलात्रयं च त्रिवृता विडङ्गं चव्यचित्रकम्।
हेमक्रान्ताम्बु पिशुनं लवङ्गं नागकेसरम्॥१४॥
नागपर्णी समुशली शृङ्गी च विजयाशनम्।
कर्षं कर्षं पृथक् सर्वं चूर्णयित्वा च मिश्रयेत्॥१५॥
बीजीभूतं मृतं व्योम दद्यादत्र पलद्वयम्।
पलद्वयं शुद्धशैलं मण्डूरं शतवार्षिकम् ॥ १६ ॥
शोधितं कज्जलाभं तु तुचूर्णल्यं प्रदापयेत्।
शतावरीरसप्रस्थं गोमूत्रं कुडवद्वयम् ॥ १७ ॥
छागक्षीरं प्रस्थमात्रं शर्कराकुडवत्रयम्।
दत्वा च पाकवद्वैद्यः पाचयेत्तं यथाक्रमम्॥१८॥
घृतं पलद्वयं चात्र दापयेत्पाकसंविधौ।
गुड़पाकं विदित्वा तु स्निग्धे भाण्डे निधापयेत्१९
दोषदेशाग्निसात्म्यानि दृष्ट्वा मात्रां प्रदापयेत्।
नचात्र परिहारोऽस्ति विहाराहारमैथुने ॥२०॥
अनेन ग्रहणीदोषाः सर्वे नश्यन्ति दारुणाः।
शोफं शूलं गुदभ्रंशं प्रमेहं विषमज्वरम् ॥२१॥
जीर्णज्वरं क्षयं श्वासं कासं हिक्कां भगन्दरम्।
हृच्छूलं पार्श्वशूलं च पक्तिशूलमरोचकम् ॥२२॥
दुष्टाम्लपित्तमरुचिं पाण्डुरोगं सकामलम्।
आनाहमुदरार्शांसि जयेदेषः प्रयोगराट् ॥२३॥
रसायनं परं मेध्यं वातातपिकसञ्ज्ञकम्।
अगस्त्यविहितं धन्यं वृद्धानां रतिकारकम्।
स्त्रीणां पुष्टिप्रदं वृद्धागर्भदं प्रदरापहम् ॥ २४ ॥

ना० वि०,

भाषा—त्रिफला, त्रिकटु, त्रिगन्ध (दालचीनी, तेजपात और छोटी इलायची) निशोत, विडङ्ग, चव्य, चित्रक, धतूरे के बीज, विष्णुक्रान्ता, सुगन्धवाला, चोरक, लौंग, नागकेसर, कुलिजन, सफेद मुसली, काकडासींगी, भाग और अशनवृक्ष की छाल इन सबको एक एक तोला लेकर बारीक चूर्ण करके बीज बनाये हुए अभ्रकभस्म ८ तोले उस में मिलादेना। उसमें ८ तोले शुद्ध शिलाजतु मिलाना और १०० वर्ष पुराना शुद्ध किया हुआ काले रंग का मण्डूर सबके बराबर मिलालेना। शतावरीका रस१ सेर, गोमूत्र ½ सेर, बकरीका दूध १सेर और १½ सेर शक्कर डालकर पाकविधि से उसको पकाना। जब वह गुडपाक की तरह सिद्ध होजावे तब उसको चिकने पात्र में रखदेना इसको खाने मे आहार विहार और मैथुन का कोई परहेज नहीं है। इसको खाने से घोर सङ्ग्रहणी के दोष नष्ट हो जाते है। सूजन, शूल गुदभ्रंश, प्रमेह, विषमज्वर, जीर्णज्वर, क्षय, श्वास

हिचकी, भगन्दर, हृदयशूल, पार्श्वशूल, पक्तिशूल अरुचि, अम्लपित्त, पाण्डुरोग, कामला, आनाह, उदर रोग और बवासीर इनको यह रसायन नष्ट करता है। इस परममेध्य वातातपिक नामवाले रसायन को अगस्त्य ऋपिने बताया है। यह बुड्ढे को कामशक्ति देता है, स्त्रियों को पुष्टि देता है। और वृद्धा स्त्रियो का भी गर्भ धारण कराता है और प्रदरको दूर करता है ॥ ४ ॥

## ५ अग्निकरो रसः

हिङ्गुलं कृष्णवृन्ताकरसैः सम्भावयेत्त्रिशः ।
वार्ताकीचित्रकाश्वत्थचिञ्चाकदलिकारसैः ॥२५
मेघनादकसेहुण्डापामार्गकपलाशतः,
क्षाराः क्षारौ सैन्धवश्च मरिचं सर्वतः समम् ॥२६
मरिचार्धं लवङ्गं च भावयेन्निम्बुकद्रवैः ।
अयमग्निकरो नाम रसो वन्हिकरो भवेत् ॥२७॥
र का., ( अजीर्णाधिकारे )

**भापा**—शिंगरिफ को काले वैगन के रस से ३ वार भावना देना फिर वनभाटा चित्रक, पीपल की छाल, इमली और केले की जड़—इन के रसों अथवा क्वाथों से क्रमसे भावना देना । फिर उस मे मेघनाद ( काटेवाली चौलाई ) आक, थूहर, चिरचिटा और ढाक इन के क्षार सज्जी, यवक्षार, सैंधानमक ये सव चीजें हरेक सिंगरिफ के वरावर मिलाना, फिर सबके वरावर कालीमिर्च तथा मिर्चों से आधे लौग मिलाकर निम्बूके रस से खूब भावना देना यह अग्निकर रस जठराग्नि को खूब प्रदीप्त करता है । अनुपान अदरख वा पानका रस प्रभृति यथावश्यकतासे कल्पित करलेना इस रस की मात्रा १ मासे से २ मासेतक ॥ ५ ॥

## ६ अग्निकुण्डरसः

रसस्य निष्कमादाय गन्धकं तत्समं कुरु ।
ताम्रं देहि तदर्धश्च पञ्चाङ्गशाकवारिणि ॥२८॥
गृहीत्वैकदिनं रात्रौ क्षिपेत्तत्रैव यत्नतः ।
क्षीरिणीद्रवमादाय तथा कुरु दिनान्तरे ॥२९॥
दत्वा लघुपुटान् पञ्च जयपालेन मर्दय ।
देहि गुञ्जाद्वयं चास्य सद्यः शूलगदे तथा ॥३०॥
र. स. सि. उदराध्मानाधिकारे ।

**भापा**—पारा ४ मासे, गन्धक ४ मासे ताम्रा २ मासे लेकर मिलाना अच्छी तरह कज्जली वना के चार तह मलमल वा खादी मे वॉध के उसको अमलतास और सागवान के क्वाथ मे डालकर एकदिन और एक रात रहने देना। दूसरे दिन उस मेसे निकाल के खिर्नी के दूध मे डाल के १ अहो रात्र रहने देना फिर उसे सम्पुट मे वान्ध कर के लघु पुट ( जितने मे गल के थक्का वॅध जावे पर पारा गधक उडै नहीं ऐसा ) देके स्वाङ्ग शीतल होने पर निकाल के फिर पूर्ववत् द्रवों मे रख के पुट देवे ऐसे पाच वार पुट देके उस की वरावर अथवा चतुर्थ भाग शुद्ध जमालगोटा मिला के घोट कर २ वा ३ रत्ती की गोली बनाके देना कदुष्ण पानी पिलाना रेच होकर शूल आध्मान उदर रोग मलेरिया तथा जीर्णज्वर तथा विपमात्र दूर होवै—

**विशेप सूचना**—जिनयोगों मे उड़ने वाली चीज पारा, गन्धक हरिताल, मैनसिल, सोमल इत्यादि आए और पुट देना लिखा हो वहा पर आतशी शीशी मे रख के वालुका यन्त्र मे ४ प्रहरकी मध्याग्नि दे के सिद्ध कर लेना तो उडने का भय नहीं रहता है और वस्तु भी अच्छी होती है ऐसे सव जगह समझ लेना ॥ ६ ॥

## ७ अग्निकुमारमोदकः

उशीरं वालकं मुस्तं त्वक्पत्रं नागकेशरम् ।
जीरद्वयं च शृङ्गी च कट्फलं पुष्करं शटी ॥३१॥
विल्वं त्रिकटुकं धान्यं जातीफललवङ्गके ।
कर्पूरं कान्तलोहं च शैलजं वंशलोचना ॥३२॥
एलावीजं जटामांसी रास्ना तगरपादुका ।
समङ्गाऽतिवला चाभ्रं मुरा वङ्गं तथैव च ॥३३॥
एपां चूर्णसमा मेथी चूर्णार्धं विजयारजः ।
शर्करामधुसंयुक्तं मोदकं परिकल्पयेत् ॥ ३४ ॥

एककर्षप्रमाणं तु भक्षयेत्प्रातरुत्थितः।
शीततोयानुपानेन चाजेन पयसाऽथवा ॥३५॥
ग्रहणीं दुस्तरां हन्ति श्वासं कासमतीव च।
आमवातं चाग्निमान्द्यं जीर्णं च विषमज्वरम्॥३६
विबन्धानाहशूलं च यकृत्प्लीहोदराणि च।
हन्त्यष्टादश कुष्ठानि ग्रहणीदोषनाशनः ॥३७॥
उदावर्तं गुल्मरोगोदरामयविनाशनः।
मोदकोऽग्निकुमारोऽयं विख्यातो गदनाशनः ३८

भै० र०, वै. क., ग्रहण्यधिकारे—

भाषा—खस, हाउवेर, नागरमोथा, दालचीनी, तेजपात, नागकेसर, दोनों जीरे, काकडासींगी, कायफल, कमलगट्टे, कचूर, कान्तलोह, शिलाजतु, वंशलोचन, छोटी इलायची के बीज, जटामासी, रास्ना, तगर पादुका, ( तगर गठोला ) लाजवन्ती, अतिवला, अभ्रक भस्म, मुरामासी, और बङ्गभस्म इन सबको बराबर और सब के बराबर मेथी और फिर सब से आधा भागका चूर्ण मिलाकर कूटकर चूर्णकरके शहद और शक्कर में एक एक तोले के लड्डू बनालेना। प्रातःकाल उसमें से १ लड्डू रोज खाना। इसका अनुपान ठंढा पानी अथवा बकरीका दूध है। यह मोदक सग्रहणी, दमा, खासी, आमवात, मन्दाग्नि, जीर्णज्वर, विषमज्वर, विबन्ध, आनाह, शूल, यकृत, प्लीहा, और १८ प्रकार के कुष्ठोंको नष्ट करता है और उदावर्त, गुल्मरोग और उदरामयका नाश करनेवाला यह अग्निकुमार मोदक प्रसिद्ध है ॥ ७ ॥

## ८ अग्निकुमारो रसः ( प्रथमः )

रसं गन्धं विषं व्योषं टङ्कणं लोहभस्मकम्।
अजमोदाहिफेनश्च सर्वतुल्यं मृताभ्रकम्॥३९॥
चित्रकस्य कषायेण मर्दयेद्याममात्रकम्।
मरिचाभां वटीं खादेदजीर्णं ग्रहणीं तथा॥४०॥
नाशयेन्नात्रसंदेहो गुह्यमेतच्चिकित्सितम्।
रसश्चाग्निकुमारोऽयं दीपयत्याशुपावकम् ॥४१॥

र स., र. सु., र. क., वै. क, भै. र. ग्रहण्यधिकारे। पक्वातिसारे, स्तम्भनार्थं, वाजीकरणार्थं, च प्रयोज्योऽय रस.। मात्रा १–३ वल्ल·। वै. र., चि. र., र. च., नि. र., रसायनस., इत्येषु ग्रन्थेष्वभ्रवटिकेति नाम्ना व्यवहरन्ति।

भाषा—पारा, गन्धक, वछनाग, त्रिकटु, सुहागा, लोहभस्म, अजवायन और अफीम इन सबको समभाग लेना और सबके बराबर अभ्रक-भस्म मिलाना। फिर चित्रक का क्वाथ उसमे मिलाकर एक पहर तक उसको खरल में घोटना। फिर कालीमिर्च के बराबर गोली बनाना यह अग्निकुमार रस गुप्त औषधि है। इसको खाने से अजीर्ण और सग्रहणी का नाश होता है। इस में कुछभी सन्देह नहीं है। यह जठराग्नि को बहुत जल्दी प्रदीप्त कर देता है। पक्वातिसार मे दस्तों के रोकने के लिये भी यह अच्छा है। वाजीकरण के लिये इसका अच्छीतरह प्रयोग कर सक्ते हैं।

स्वानुभव–पुरानी सङ्ग्रहणी, श्वास और वातार्श में यह अत्यन्त उपयोगी सिद्ध हुआ है ॥ ८ ॥

## ९ अग्निकुमारो रसः ( द्वितीयः )—

शुद्धसूतं समं गन्धं त्रिकटुः पटुपञ्चकम्।
दशकं तुल्यतुल्यञ्च विजया सर्वसम्मिता ॥४२॥
भावयेच्चित्रभृङ्गोत्थैस्त्रिधा च विजयाद्रवैः।
दीप्ताग्निना तु यामैकं वालुकायन्त्रके पचेत्॥४३
सञ्चूर्ण्य चार्द्रकद्रावैर्भावयित्वा तु भक्षयेत्
मधुना शाणमानन्तु रसो ह्यग्निकुमारकः॥
दीप्ताग्निकारकः सामग्रहणीदोषनाशनः ॥४४॥

र स, र. च, ग्रहण्यधिकारे।

भाषा—शुद्धपारा, गन्धक, त्रिकटु, पाचों लवण इन दस चीजो को बराबर भाग मे लेकर सब के बराबर भाग लेना फिर चित्रक का क्वाथ, भागरे का रस, और भाग का रस इन से पृथक् २ एक एक बार भावना देना फिर एक पहर तक

तीक्ष्ण अग्नि से वालुका यन्त्र मे पकाना । फिर उसका चूर्ण कर के अदरख के रस से भावना देना । यह अग्निकुमार रस जठराग्नि को प्रदीप्त करता है और साम ( कच्ची ) सग्रहणी और सव दोषो का नाश करता है । इसकी मात्रा ४ माशा है ॥ ९ ॥

## १० अग्निकुमारो रसः ( तृतीयः )

**शुद्धसूतं विषं गन्धं द्विक्षारं पटुपञ्चकम् ।**
**दशकं तुल्यतुल्यांशं भर्जिता विजया नवा॥४५॥**
**दशानां तुल्यभागा सा तदर्धं शिग्रुमूलकम् ।**
**तत्सर्वं विजयाद्रावैः शिग्रुचित्रकभृङ्गजैः ॥४६॥**
**द्रवै र्दिनद्वयं मर्द्य रुध्वा भाण्डे पचेल्लघु ।**
**दीप्ताग्निना तु यामैकं शुष्कं यावत्समुद्धरेत् ॥४७**
**सप्तधा चार्द्रकद्रावै र्भावयेच्चित्रजैर्भिषक् ।**
**दीपनोऽग्निकुमारोऽयं निष्कार्धं मधुना लिहेत् ।**
**प्रतिनिष्कं गुडं शुण्ठीमनुपानञ्च दीपनम्॥४९॥**

र. स , र. र., र चि., र , र क, अग्निमान्द्याधिकारे ग्रहण्यामपि योज्य । टि०–र क यो , त्रिक्षारमिति पाठान्तरम् ।

भाषा–शुद्धपारा, बछनाग, गन्धक, सज्जी, जवाखार और पाचो नमक इन दश चीजों को समभाग लेकर सव के वरावर भुनी हुई नईभाग और भागका ½ भाग सहजने की जड का चूर्ण मिलाकर इन सवको भाग, चित्रक, सहजना और भागरा, इनके रस अथवा क्वाथ से दो दिन तक मर्दन करना फिर काचकी शीशी मे बंद करके मन्द अग्निमे पकाना । फिर एक पहर तक तेज अग्नि मे उसे पकाना, फिर सात सात वार अदरख और चित्रक के रस से भावना देना । इस अग्निकुमार रसको ३ माशा शहद के साथ चाटना यह वड़ा दीपन है आधा तोला गुड और सोंठ के साथ खाने से अजीर्णरोग को सर्वथा नष्ट कर देता है ॥ १० ॥

## ११ अग्निकुमारोरसः ( चतुर्थः )

**पारदं च विषं गन्धं टंकणं समभागतः ।**
**मरीचादष्टभागाः स्यु र्द्वौ द्वौ शखवराटयोः॥४९**
**पक्वजम्बीरजैर्गाढं रसैः सप्त विभावयेत् ।**
**गुञ्जाद्वयमितो देयो रसो ह्यग्निकुमारकः॥५०॥**
**समीरणसमुद्भूतमजीर्णं च विसूचिकाम् ।**
**क्षणेन क्षपयत्येष कफरोगनिकृन्तनः ॥ ५१ ॥**

यो. र., वृ यो त., नि. र., र श., र सु., अजीर्णाधिकारे र. रा सु , नि र , शङ्खकपर्दयोरेकैको भाग वत्सनाभस्त्रिभागो नियोजित । वह्निकुमारनामा प्रसिद्ध ।

भाषा–पारा, वछनाग, गन्धक, प्रत्येक १ एक भाग कालीमिर्च आठ भाग, शखभस्म २ भाग, और कौडीभस्म २ भाग इन सवको मिलाकर पके हुए जम्भीरी के रस से सात वार भावना देना । इस अग्निकुमार रस की मात्रा दो रत्ती की है वायुसे हुए अजीर्णको और विसूचिका को यह रस क्षणमात्र मे दूर करता है । तथा कफरोग का नाश करनेवाला है ॥ ११ ॥

## १२ अग्निकुमारो रसः ( पञ्चमः )

**रसेन्द्रगन्धौ सह टङ्कणेन समं विषं योज्यमिह त्रिभागम् ।**
**कपर्दशङ्खाविह नेत्रभागौ मरीचमत्राष्टगुणं प्रदेयम् ॥**
**सुपक्वजम्बीररसेन घस्रं सिद्धो भवेदग्निकुमार एषः ॥५२॥**
**विसूचीशूलवातादिवह्निमान्द्ये द्विगुञ्जकः ।**
**अजीर्णे सङ्ग्रहण्याञ्च प्रयोज्योऽयं निजौषधैः॥**

नि. र , र. मु , यो स , र क., र च., र र., र रा. श , यो र , भै. र , वै. क , र. चिं , चि. सा , र. सु , वै. चि , व. रा., वै. चि , र. सा. स, र क. ल, अग्निमान्द्याजीर्णाधिकारयो., । नि. र , रसायन स., अर्शः शूलाधिकारयो । निजौषधैरिति तत्तद्रोगहरानुपानैः ।

रसराजसुदरे नागवल्यार्द्रकवह्निशिग्रुमूलमातुलुङ्गानामधिकाभिर्भावनाभिर्निष्पादितः प्लीहपाण्ड्वामयवातरोगमूत्ररोगवाताधिककासदुर्नामातिसारसन्निपातेषु नियोजितो दृश्यते ।

भाषा—पारा, गन्धक और सुहागा एक एक भाग, वछनाग ३ भाग, कौड़ीभस्म और शंख भस्म एकएक भाग, कालीमिर्चे ८ भाग इन सब को मिलाकर पके हुए जम्वीर के रससे एकदिनभर भावना देना यह अग्निकुमाररस सिद्ध होगा, इसकी मात्रा २ रत्ती की है । हैजा, शूल और वात आदि में, जठराग्नि की मन्दता में, अजीर्ण और संग्रहणी मे वैद्य तत्तद्रोगोचित अनुपान के साथ इसका प्रयोग करावे ॥ १२ ॥

### १३ अग्निकुमारो रसः ( षष्ठः )

दग्धां कपर्दिकां पिष्ट्वा त्र्यूषणं टङ्कणं विषम् ।
गन्धकं शुद्धसूतं च तुल्यं जम्बीरजैर्द्रवैः ॥ ५४ ॥
मर्दयेद्भक्षयेद्वल्लं मरिचाज्यं लिहेदनु ।
निहन्ति ग्रहणीरोगं पथ्यं तक्रौदनं हितम्॥५५॥

र. सं., ग्रहण्यधिकारे

भाषा—कौड़ी की पिसी हुई भस्म, त्रिकटु, सुहागा, वछनाग, गन्धक और शुद्धपारा, इन सबको समभाग लेकर जम्भीरीके रस मे खूब मर्दन करना। इसकी मात्रा ३ रत्ती की है और अनुपान कालीमिर्चे २९ और घी ३ मासेमे मिलाके चटावे। यह अग्निकुमार रस सङ्ग्रहणी रोग को नष्ट करता है। उक्त रोग मे इस का सेवन करने वाले के लिये तक्र ( मठा ) और चावल का पथ्य देना चाहिये ॥ १३ ॥

### १४ अग्निकुमारो रसः ( सप्तमः )

टङ्कणं रसगन्धौ च समा भागत्रयं विषात् ।
कपर्दः स्वर्जिकाक्षारो मागधी विश्वभेषजम् ५६
पृथक्पृथक् कर्षमात्रं वसुभागमिहोषणम् ।
जम्बीराम्लैर्दिनं घृष्टं भवेदग्निकुमारकः ।
विसूचीशूलवातादिवह्निमान्द्यप्रशान्तये ॥ ५७ ॥

मा प्र., र चिं , र. प्र , वै. र., रसायनस, र. सु , र. म., यो म, र. क्र ल , अग्निमान्द्याधिकारे । नि. र., अर्शोऽधिकारे । निघण्टुरत्नाकररसराजसुन्दरयोर्भागे टङ्कण१, रस १, गन्धकः १, विष ३, कपर्द. ३, स्वर्जिका ३, कणा ३, शुण्ठी ८, मरीचानि ९, इति विशेष । भावनायाश्चार्द्रकेणाधिका प्रदत्ता, फले—आमकफपीडाहरत्वेन च प्रतिपादित ।

भाषा—सुहागा, पारा, गन्धक, कौडीभस्म, सज्जीखार, पीपल और सोठ, इन सब को एक एक तोला लेकर सुहागे से तिगुना वछनाग और अठगुनी कालीमिर्चे लेकर सव को मिलाकर जंभीरी के रस से मर्दन करना यह अग्निकुमार रस हैजा, शूल, वात इत्यादि और अग्निमान्द्य को शान्त करने के लिये उपयोगी है ॥ १४ ॥

### १५ अग्निकुमारो रसः ( अष्टमः )

जैपालगन्धाश्ममहेशजानां ।
फलत्रयस्यापि कटुत्रयस्य ।
मूत्रे गवां षोडशभागमाने
भागान्नवैकत्र दिनत्रयञ्च ॥ ५८ ॥
विमर्द्य तेषां बदरप्रमाणां,
बध्वा वटीमुष्णजलानुपानात् ।
एकात्रयुक्ता सहसा निहन्ति,
सा रेचयित्वा मलजालमादौ ॥ ५९ ॥
गुल्मं यकृत्पाण्डुविबन्धशूलं,
मान्द्यं ज्वरं चाथ जलोदरञ्च ।
अग्नेः कुमारः सहसा निहन्या-
दुद्दीपितो दीप इवान्धकारम् ॥ ६० ॥

र. च., र. स., गुल्माधिकारे ।

भाषा—जमालगोटा, गन्धक, पारा, त्रिफला और त्रिकटु इन सबको बराबर भाग मे अर्थात् सब नो भाग लेकर १६ गुने गोमूत्र मे ३ दिन तक मर्दन करना । फिर जङ्गली बेर के बराबर इसकी गोलिये बनाके गरम जल के साथ खानेसे इस अग्निकुमार रसकी एक ही गोली तत्काल रेचनद्वारा पहिले मल के समूहको निकालती है । फिर गुल्म रोग, यकृत् रोग, पाण्डु, मलावरोध, शूल, मन्दाग्नि, ज्वर और जलोदर, इन रोगोंको यह रस ऐसे नष्ट करता है जैसे कि जलाया हुआ दीपक अन्धकारको नष्ट करता है ॥ १५ ॥

## १६ अग्निकुमारो रसः ( नवमः )

सूतश्चैकं गन्धकञ्च त्रिभागं,
नागं वङ्गं शुल्वतारे च हेम।
अभ्रं लोहं तारमाक्षीकवज्र-
मेकैकं वै शोधयित्वा प्रदेयम् ॥ ६१ ॥
मुण्डीश्वेता काकमाच्यश्वगन्धा-
निर्गुण्ड्यो वै भृङ्गराजेन युक्ताः।
स्वोत्थैरेषां वासरांस्त्रीन् प्रमर्द्य,
खल्वे सम्यग्गोलकं कारयेद्धि ॥६२॥
पश्चाद्धर्मे शोषयेद्गोलकं तं
लेपाः सम्यक् पञ्च मृद्भिः प्रदेयाः।
भाण्डं चार्धं पूरयेद्वालुकाभि-
र्मध्ये गोलं निःक्षिपेन्मुद्रयेच्च ॥ ६३ ॥
अग्निं कुर्याद्यामपट्पट्टमात्रं
शीते सिद्धो जायते वै रसोऽयम्।
कृष्णाक्वाथैर्भावनाः पञ्च देया
आर्द्रेणैवं सूर्यवारान् हि वह्नेः ॥ ६४ ॥
निर्गुण्ड्या वै भावना भानुमात्राः,
पश्चात् कार्या वल्लमात्रा वटी हि।
देया सद्भिः पञ्चमांशा हि कृष्णा
तद्वच्छुण्ठी चूर्णिता तत्प्रमाणा ॥६५॥
कासे श्वासे मूत्रकृच्छ्रे ग्रहण्या-
मर्शः शोफे चाश्मरीमेढ्ररोगे।
मन्दे ह्यग्नौ वातरोगे च शूलेऽ-
पस्मारे वै सन्निपाते वलासे ॥
सेव्यो वल्लश्चार्द्रकेणापि सम्यक्
क्षारं चाम्लं वर्जयेन्नित्यमेव ॥ ६६ ॥

र. प्र. सु, र ( मा. ) रसायने।

भाषा—पारा १ भाग, गन्धक ३ भाग, सीसा १ भाग, वङ्ग १ भाग, तावा १ भाग, चादी १ भाग, सोना १ भाग, अभ्रकभस्म १ भाग, लोहा १ भाग, रूपामाखी १ भाग, और हीरा १ भाग, इन सवको लेकर पृथक् पृथक् विधियों से शुद्ध कर लेना, फिर सवको मिलाकर गोरखमुण्डी, बच, मकोय, असगन्ध, सम्भालु और भागरा, इनके रस अथवा क्वाथसे ३ दिन तक पृथक् पृथक् भावना देना। फिर उसका गोला बनाकर धूप मे सुखाना और ऊपर से ५ कपड़मिट्टी कर देना। फिर एक मिट्टी आदि के वर्तन को आधा वालु से भरकर उस गोले को रकखर फिर वालु से पूरा भर देना और ६८ पहर तक अग्नि पर उसको पकाना। स्वाग शीतल होने पर यह रस सिद्ध हो जाता है। फिर पीपलके क्वाथ से ५, अदरख के रस से ५, चित्रक के क्वाथ से १२, और सभालु के रस से १२ भावना देना। फिर ३ रत्ती की गोलिये बनाना फिर पीपल का चूर्ण और सोंठ का चूर्ण पृथक् पृथक् पाचवा हिस्सा मिलाकर वैद्य निम्न लिखित रोगों मे इस का सेवन करावे। खासी, दमा, मूत्रकृच्छ्र, संग्रहणी, ववासीर, सूजन, पथरी, मूत्रेन्द्रिय के रोग, मन्दाग्नि, वातरोग, शूल, मृगी, सन्निपात और कफरोग इत्यादिको मे यथा रोगानुपान देना, कफरोगो मे अदरख का रस भी इसका अनुपान है। क्षार और खटाई औषधि का सेवन करते तक छोडदेना चाहिए॥ १ ॥

## १७ अग्निकुमारो रसः ( दशमः )।

रसं विषं चाभ्रगन्धौ तालकं हिङ्गुलं विषम्
शुल्वभस्म समं तुल्यं मर्दितं भृङ्गवारिणा ॥६७
काचकूप्यां विनिःक्षिप्य विलिप्या वस्त्रमृत्तिका।
वालुकायन्त्रके पाच्यं दिनैकं मन्दवह्निना ॥६८
स्वाङ्गशीतं समुद्धृत्य दातव्यं चणमात्रकम्।
अनुपानविशेषेण ज्वरं चातुर्थिकं हरेत् ॥६९॥
सन्निपातं निहन्त्याशु सर्वरोगहरं परम्।
महानग्निकुमारोऽयं सर्वव्याधिनिवारणः ॥७०॥

वै. चि, व. रा., र. क यो.

भाषा—पारा, सखिया, अभ्रकभस्म, गन्धक, हरताल, सिंगरिफ, बछनाग और ताम्रभस्म इन सब को वरावर मिलाकर भागरे के रस से भावना देना। फिर कपड़मिट्टी की हुई आतशी शीशी मे भरकर

वालुका यन्त्र मे रखकर मन्द अग्नि से एक दिनभर पकाना। स्वाङ्ग शीतल हो जाने पर शीशी से निकाल कर चने के बराबर इस की मात्रा रोगोचित अनुपान के साथ देना। यह बड़ा अग्निकुमार रस चातुर्थिक ( चौथिया ) ज्वर को नष्ट करता है सन्निपात को शीघ्र शान्त करनेवाला और सभी रोगों का निवारण करनेवाला है ॥ १७ ॥

### १८ अग्निकुमारो रसः ( एकादशः )

द्विपलं शुद्धताम्रं तु शुद्धसूतं पलत्रयम् ।
पिष्टं जम्बीरजैर्द्रावैः कुर्यात्खल्वे भिषग्वरः ७१
गन्धकं चामृतं तत्र प्रत्येकं पलपञ्चकम् ।
कज्जलीकृत्य तत्सर्वं भावयेन्निम्बुकद्रवैः ॥७२॥
चूर्णितं पिठरीमध्ये क्षिपेच्च निम्बुकद्रवैः ।
घर्मे दिनाष्टकं भाव्यं द्रवो देयः पुनः पुनः ७३
भृङ्गद्रावैस्त्र्यहं भाव्यं त्रिवारानार्द्रकद्रवैः ।
त्रिधाऽमृतारसैर्भाव्यं रसो ह्यग्निकुमारकः ॥
अस्य गुञ्जाद्वयं खादेदग्निमान्द्यप्रशान्तये ॥७४॥

र र., अजीर्णाधिकारे ।

भाषा—शुद्धताम्रा (भस्म) ८ तोले, शुद्धपारा १२ तोले, इन दोनों को खरल में डालकर जम्बीर के रस से खूब घोटना फिर गन्धक और बछनाग प्रत्येक २० तोला डालकर निम्बू के रस में घोटकर सब की कज्जली करना। उस कज्जली को पहिले वाले खरल में डालकर आठ दिन तक धूप में नींबू के रस से घोटना और बार २ नींबू का रस देते रहना। फिर ३ दिन तक भागरे के रस स ३ बार अदरखके रस से और ३ बार गिलोय के रस से भावना देकर सुखा लेना। यह अग्निकुमार रस मन्दाग्नि को प्रदीप्त करता है। इसकी मात्रा ३ रत्ती की है।

स्वानुभव—श्वास, खासी, उन्माद, अपस्मार और संग्रहणी वालों के लिये उपयोगी है ॥ १८ ॥

### १९ अग्निकुमारो रसः (द्वादशः)

मरिचोग्राकुष्ठमुस्तैःसर्वैरेव समं विषम् ।
पिष्ट्वा चार्द्ररसेनैव वटिका रक्तिकामिता ॥७५॥
आमज्वरे प्रथमतः शुण्ठ्या च मधुपिष्टया ।
आर्द्रकस्य रसेनापि निर्गुण्ड्याश्च कफज्वरे ॥७६॥
पीनसे च प्रतिश्याय आर्द्रकस्य च वारिणा ।
अग्निमान्द्ये लवङ्गेन शोथे सदशमूलकः ॥७७॥
ग्रहण्यां सहशुण्ठ्या च मुस्तकेनातिसारके ।
सामे च धान्यशुण्ठीभ्यां पक्वे च कुटजं मधु ७८
सन्निपातज्वरारम्भे पिप्पल्यार्द्रकवारिणा ।
कण्टकार्या रसैः कासे श्वासे तैलगुडान्वितः ७९
पीत्वा वटीद्वयं रोगी स्वास्थ्यं समुपगच्छति ।
सर्वेषामेव रोगाणामामदोषप्रशान्तये ॥
अग्निवृद्धिकरो ह्येष विख्यातोऽग्निकुमारकः ८०

व. रा., भै. र, ध, र. सु., ज्वराधिकारे ।

भाषा—कालीमिर्च, वच, कूठ, नागरमोथा, चारों को समभाग लेकर सब के बराबर बछनाग लेना। फिर अदरख के रस मे घोटकर एक २ रत्ती की गोलिया बना लेना। यह अग्निकुमार रस सब रोगों को विशेषतया आमजन्य दोषो को शान्त करता है। और जठराग्नि को प्रदीप्त करने के लिये यह रस प्रसिद्ध है मात्रा इसकी दो गोली है यह रस निम्नलिखित अनुपानों के साथ निम्नलिखित रोगों को नष्ट करता है।

आमज्वर के आरम्भ मे शहद और सोंठ के साथ।

कफज्वर मे अदरख अथवा निर्गुण्डी के रस के साथ।

पीनस और जुकाम मे अदरख के रस के साथ।

मन्दाग्निमे लवङ्ग के साथ।

शोथ मे दशमूल के क्वाथ के साथ।

सङ्ग्रहणी मे सोंठ के साथ।

अमातिसार मे नागरमोथे के साथ।

पक्वातिसार मे कुडा की छाल के क्वाथ और शहद के साथ।

सन्निपातज्वर के आरम्भ मे अदरख के रस और पीपल के साथ।

खासी में भट कटैया के रस के साथ।

और श्वासमे तेल और गुड के साथ देने से यह रस रोगनाशक है।

साधारणतः कोईभी रोग हो उसमे आमत्व दशा मिटाने के लिए यह रस देने से उसकी पक्व दशा हो जाती है ॥ १९ ॥

## २० अग्निकुमारो रसः ( त्रयोदशः )

रसगन्धकरसकामृतकल्कः
सव्योषभृङ्गरसमिलितः ।
अग्निकुमारकनामा जयति
रसो रोगिणामिष्टः ॥ ८१ ॥

रसावतार ( मा० ) रस. स, ज्वराग्निमान्द्ययोर्वल्लमात्रो योज्य आर्द्रकेण नागवल्लीरसेन वा ।

भाषा—पारा, गन्धक, खपरिया और वछनाग इन सबको बराबर लेकर त्रिकटु के क्वाथ और भागरे के रस से क्रम से भावना देना । यह अग्निकुमार रस सब से उत्तम है और रोगियों के वास्ते हितकर है । मात्रा इसकी ३ रत्ती है ॥ २० ॥

## २१ अग्निकुमारो रसः ( चतुर्दशः )

सूतगन्धकनागानां चूर्णं हंसाङ्घ्रिवारिणा ।
दिनमेकं विमर्द्याथ गोलकं तस्य योजयेत् ८२
काचकूप्यां च संवेष्ट्य तां त्रिभिर्मृत्पटैर्दृढम् ।
मुखं संरुध्य संशोष्य स्थापयेत्सिकताह्वये ॥८३
सार्धं दिनं क्रमेणाग्निं ज्वालयेत्तदधस्ततः ।
स्वांगशीतं समुद्धृत्य षडंशेनामृतं क्षिपेत् ॥८४॥
मरिचान्यर्धभागेन समस्तस्याथ मर्दयेत् ।
अयमग्निकुमाराख्यो रसो मात्राऽस्य रक्तिका८५
ताम्बूलीरससंयुक्तो हन्ति रोगानमूनयम् ।
वातरोगान् क्षयं श्वासं कासं पाण्डुं कफोल्बणम् ॥
अग्निमान्द्यं सन्निपातं पथ्यं शाल्यादिकं लघु ।
जलयोगप्रयोगोऽपि शस्तस्तापप्रशान्तये ॥ ८७

र म., रसावतार (मा ) भै सा , र. र. दी , र क, रसायन स , वातरोगाधिकारे ।

भाषा—पारा, गन्धक और सीसा भस्म इन तीनों को बराबर लेकर चूर्ण करलेना फिर हसराज के रस के साथ घोटकर टिकिया बना लेना फिर ३ बार कपड़मिट्टी की हुई आतशी शीशीमें भरकर और शीशीका मुख बन्द करके बालुका यन्त्रमें १½ दिन तक क्रमसे मन्द, मध्य और तीक्ष्ण अग्निसे पकाना । स्वागशीतल होने पर रस को निकाल लेना फिर उसका ⅙ वछनाग और ½ कालीमिर्चे मिलाकर अच्छीतरहसे चूर्ण कर लेना । यह अग्निकुमार रस है इसकी मात्रा १ रत्ती की है पान के रस के साथ देने से यह वातरोग, क्षय, श्वास, खासी, पाण्डुरोग, कफ की अधिकता, मन्दाग्नि और सन्निपात को नष्ट करता है । शाली चावल आदि लघुभोजन इसका सेवन करने वालेके लिये पथ्य है । साथ २ जलयोग ( सिरके ऊपर रोज जलकी धारा देरतक देना ) करते रहें तो यह दाहको ( कदाचित् इसके खाने से दाह माळूम हो तो ) शान्त करेगा ॥ २१ ॥

## २२ अग्निकुमारो रसः ( पञ्चदशः )

विमर्दितौ सूतबली समांशौ
ताम्रस्य पत्रेण विमर्द्य पाच्यौ ।
विमर्दयेद्वह्निवरारसाभ्यां
पुटं च दद्याद्दशधा पुनस्तत् ॥ ८८ ॥
गुडूचिका भृङ्गरसद्रवेण च
निर्गुण्डिकासूरणवृद्धदारुकैः ।
विमर्दयेत्सप्तदिनं पृथक्पृथक्
सिद्धो भवेदग्निकुमारनामकः ॥ ८९ ॥
अर्शोघ्नचूर्णेन गुडान्वितेन
भल्लातपथ्या मधुनापि युक्तः ।
अर्शोविकारञ्जयति द्विवल्लो
मान्द्योदरश्वाससमीरणांश्च ॥ ९० ॥

रसावतारे—अर्शसि ।

भाषा—पारा और गन्धक समानभाग लेकर कज्जली करना फिर नींबू के रस से भावना देकर पारे के बराबर बारीक तथा शोधित ताम्बेके पत्र डालकर घोटना और लवणयन्त्रमें पकाना । यन्त्र से

निकालकर चित्रक और त्रिफला के क्वाथ से पृथक् पृथक् भावना देना और १० वार अग्निमे पुट देना। फिर गिलोय, भागरा, निर्गुण्डी ( संभाळ्ड ) सूरण और विधारा के रस से अलग २ सात दिन तक भावना देना। यह सिद्ध होने पर अग्निकुमार रस बनेगा। इस की मात्रा ६ रत्ती की है। गुड़ और सूरण का चूर्ण प्रत्येक चार आने भर लेके इस के साथ खाने से अथवा भिलावा, हरड़, दोनों को साथ गोमूत्र में घोटना। दो रोज के वाद सुखाके कपड छन करके शीशीमे भर रखना। इसमे से ३ मासा चूर्ण और शहद के साथ खाने से यह अर्श, मन्दाग्नि, उदररोग, श्वास और वातरोगों को नष्ट करता है ॥ २२ ॥

## २३ अग्निकुमारो रसः ( षोडशः )

शुद्धसूतं समं गन्धं शुद्धतालं मनःशिला ।
तुल्यांशं चैत्रकं मूलं मासूरयवजैर्द्रवैः ॥ ९१ ॥
जम्बीरैश्च तथा मर्द्य तद्गोलं शरावसम्पुटे ।
रुद्ध्वा बहिर्माषपिष्टैस्तयोर्लेप्यं च सम्पुटम् ॥९२॥
गोधूमपिष्टिकावाऽथ विलेप्या वस्त्रमृत्तिका ।
विशोष्य पाचयेद्यन्त्रे द्विपद्यामैः सवालुके॥३९
क्रमवृद्धयाग्निना पाच्यं स्वाङ्गशीतं समुद्धरेत् ॥
दशमांशं विषं दत्वा विषांशं मृतताम्रकम् ॥९४
ज्वालामुख्या द्रवैः सर्वं भावयित्वा त्रिसप्तधा ।
त्र्यूषणैश्च सजीरार्द्रद्रवैर्भाव्यंत्रिसप्तधा ॥ ९५ ॥
रसो ह्यग्निकुमारोऽस्य सेव्यं गुञ्जाद्वयं सदा ।
ताम्बूलपत्रसंयुक्तं वातगुल्मोदरार्तिजित् ॥
काकजङ्घाकषायश्च ह्यनुपानं सदा पिबेत् ॥९६॥

व. रा, र र, उदराधिकारे । र. क यो,

भाषा—शुद्धपारा, गन्धक, शुद्ध हरताल और मैनासिल इन को समभाग लेकर मसूर और जव के क्वाथ और जभीरी के रस मे घोटकर गोला बनाना फिर शरावसंपुट के भीतर रखकर उड़द अथवा गेहूँ के आटे से सम्पुट का मुख बदकर उसको कपड-मिट्टी कर सुखालेना। फिर वालुका यन्त्र मे रखकर क्रम से मन्द, मध्य और तीक्ष्ण अग्नि में १२ पहर तक पकाना। स्वागशीतल होने पर निकाल लेना। फिर उस मे दशवा हिस्सा वछनाग और वछनाग का ¼ ताम्रभस्म डालकर २१ बार अगिया घास ( जळजाभुळ म० ) के रस से भावना देना। फिर त्रिकटु और जीरा इनका क्वाथ और अदरखका रस इन से पृथक् २ इक्कीस वार भावना देना यह अग्निकुमार रस है। इसकी मात्रा २ रत्ती की है। पान के साथ खाने से वात-गुल्म और उदरकी पीडा को दूर करता है; ऊपरसे काकजङ्घा (अघेडी गु० ) का क्वाथ पीना चाहिये ॥ २३ ॥

1—वसवराजीये याम धुत्तूरजैर्द्रवैरितिपाठान्तरम्।
२—द्विपद्यामैः सवालुके इत्यस्य स्थाने विंशयामैः सवालुके इति रत्नाकरौषधयोगे पाठः ।

## २४ अग्निकुमारो रसः ( सप्तदशः )

कर्पूरं च लवङ्गं च चव्यकं चित्रकं तथा ।
दाडिमाम्लं विशेषेण शृङ्गवेरं च रेणुकाम् ॥९७॥
एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ।
यवक्षारं तथा स्वर्जी टंकणं लवणानि च ॥९८॥
त्रिकटु त्रिफला लोहं सर्वमेव द्विभागिकम् ।
यवानीनिम्बुनीराभ्यां दिवसत्रयभावितम् ॥९९
तथाऽमृतारसेनैवं मर्दितं चाम्लवेतसैः ।
चणकाकारमात्रेण दीयते रस उत्तमः ॥ १०० ॥

अरोचकं वह्निविशेषमान्द्यं
गुल्मं प्रमेहं विनिहन्त्यवश्यम् ।
चुक्रेण युक्तं खलु पक्तिशूलं
सूर्योदयाद्वृद्धमतीव जातम् ॥ १०१ ॥

कटुत्रयेण दत्तश्चेच्छ्वासकासामयापहः ।
रसो ह्यग्निकुमारोऽयं सर्वरोगप्रणाशनः॥१०२॥

र सु, अरोचकाधिकारे ।

भाषा—कपूर, लौंग, चव्य, चित्रक, अनार दाना, सोंठ, और, निर्गुण्डी ( सभाळू ) के बीज

त्रिदिनं विमर्द्य स्थूलगोलान् कृत्वा खरातपे संशोष्य कूप्यां निरुध्य वालुकायन्त्रे क्रमवृद्धेनाग्निनैकमहोरात्रं विपाच्य शीतलाद्यन्त्रात्समाकृष्य विचूर्ण्य तत्तुल्यं विषं विमिश्रयार्द्रकद्रावैर्विमृद्य पिष्टिं विधाय मृद्धंडिकोदरे विलिप्यान्यस्थालिकाया पलार्धं विष क्षिप्त्वा तदुपरि रसलिप्तस्थालीं न्युब्जा धृत्वा द्वयोर्मुखं दृढं रुद्ध्वा संशोष्य चुल्यामारोप्यैकयामं वह्निं सम्प्रज्वाल्य शीतलीभूताद्यन्त्रात्समाकृष्य करण्डके स्थापयेदिति ।

अत्र ताम्रागो न्यूनो विषभागोऽधिको द्विरावृत्तपाकश्चेति महान् विशेषः। एते प्रकारा मूलभूता हंसपादीरसनिष्पन्नाऽग्निकुमाराणामेभ्य एव क्रियाया पाकापाकयोर्द्रव्यविभागे च विशेष सम्पाद्य निष्पादिता दरीदृश्यन्तेऽन्यग्रन्थे प्रसृता बहवो भेदा इति ।

**भाषा**—पारा और गन्धक एक २ तोला मिलाकर कज्जली बनालेना। फिर हंसराज के रस से भावना देकर पारे का ३/४ बछनाग मिलाना। फिर काच की शीशी मे रखकर बालुकायन्त्र मे १२ पहर तक क्रम से मन्द, मध्य और तेज अग्नि से पकाना। ठंढा होने के बाद उतारकर उसका चूर्ण कर लेना फिर ३ तोला बछनाग और ३/४ तोला कालीमिर्च मिलाकर घोटना। यह अग्निकुमार रस बनैगा, इस की मात्रा १ रत्ती की है। यह जठररोग, प्लीहा, व्रण, अपस्मार, शूल, कृच्छसाध्यसन्निपात, वातरोग, मन्दाग्नि, पाण्डुरोग, क्षय, अतिसार, सङ्ग्रहणी और ज्वर इनको अपने २ अनुपानों के साथ खाने से दूर करता है।

नन्दी के मत से अनुपान की विशेषता है वह इस प्रकार है:—कफज और वातज मन्दाग्नि, क्षय, शूल, दमा, खासी, कफकी अधिकता, ज्वर, पाण्डुरोग, सूजन, और वातरोग इन मे पान के रस के साथ देना चाहिये। प्रत्यष्टीला आदि रोग, जलरोग ( जलोदर ) और कछवी मे पीपल, मिश्री और घी के साथ देना चाहिये। इस रस के खाने से अथवा किसी भी रसके खाने से यदि दाह हो जावे तो ठंढे पानी को सिर पर डालना तथा चन्दन और कपूर को घिसकर सिर पर लगाना। ठंडी हवा करना। मिश्री डाला हुआ ताजा मीठा दही, मीठा और ठंढा नारियल का पानी पिलाना तथा अन्य शीतोपचार गुणकर है अथवा सुहागा, काटेवाली चौलाई की जड़, मिश्री, मुलहठी और चन्दन तुषोदक के साथ देना चाहिये। यदिरस प्रयोग से वमन हो जावे और प्यास बढजावे तो कैथ का गर्भ और मिश्री देनी चाहिये अथवा सब शरीर मे घीकुआर के गूदे को चुपड़ देना। शहद और मिश्री मिला हुआ दूध अथवा गिलोय और दोपहरिया का क्वाथ पिलाना। ये सब उपचार रसों के उपयोग से होनेवाले दाह को शान्त करते है॥ २५॥

## २६ अग्निकुमारो रसः (ऊनविंशः)

रसगन्धकयोः कृत्वा
　कज्जलीं तुल्यभागयोः ।
पादांशममृतं दत्वा
　शुक्तिभस्म कलांशकम् ॥ १०५ ॥
हंसपादीरसैः सम्यङ्
　मर्दयित्वा दिनत्रयम् ।
स्थूलगोलांस्ततः कृत्वा
　परिशोष्य खरातपे ॥ १०६ ॥
निरुध्य वालुकायन्त्रे
　क्रमपुष्टेन वह्निना ।
पचेदेकमहोरात्रं
　ततः शीतं विचूर्ण्य च ॥ १०७ ॥
तुल्यांशममृतं दत्वा
　मर्दयेदार्द्रकद्रवैः ।
विलिप्य स्थालिकामध्ये
　ततोऽन्यस्थालिकोदरे ॥ १०८ ॥
पलार्धममृतं क्षिप्त्वा
　रसस्थालीं च तन्मुखे ।

न्युब्जां दत्वा दृढं रुद्ध्वा
चुल्यामारोप्य यत्नतः ॥ १०९ ॥
यामं प्रज्वालयेदग्निं विचूर्ण्य तदनन्तरम् ।
करण्डके विनिक्षिप्य स्थापयेदतियत्नतः ॥११०
रसो ह्यग्निकुमाराख्यो
दिष्टो मन्थानभैरवैः ॥ १११ ॥
हन्यादत्यग्निमान्द्यं ज्वरहरमखिलं
वातजातं क्षयार्तिं,
शोफाढ्यं पाण्डुरोगं कफजनितगदान्
प्लीहगुल्मौ गुदार्ति ॥
सर्वाङ्गीणं च शूलं जठरभवरुजं
खञ्जतां पङ्गुलत्वम्,
सर्वांश्चासाध्यरोगान् हरिरिव
दुरितं रक्तगुल्मं वधूनाम् ॥११२॥

र. र स, र को., अग्निमान्द्ये। शुक्तिभस्म इत्यत्र रसेन्द्ररत्नकोपे शुल्वभस्म इति पाठ ।

भाषा—पारा और गन्धक बराबर लेकर उनकी कज्जली बनाना। फिर पारे से $\frac{1}{4}$ बछनाग और $\frac{1}{16}$ सीपकी भस्म मिलाकर तीन दिन तक हंसराज के रस मे घोटना। फिर उसकी बडी २ गोलियें बनाकर तेजधूप मे सुखाना। फिर २४ घंटे तक बालुका यन्त्र मे क्रमसे मन्द, मध्य और तेज अग्नि से पकाना। फिर ठढा होनेपर उसका चूर्ण कर-लेना। फिर सबके बराबर बछनाग मिलाकर अदरख के रस मे घोटना फिर उसको एक हंडी के भीतर लेप देना और दूसरी हडी मे २ तोला बछनाग का चूर्ण छिडक कर पहिली हडी को उसके मुख पर उल्टी कर देना। फिर दोनो हंडीयो के मुखों को कपडमिट्टी से वंदकर और सुखाकर चूल्हे पर रखना एक पहर तक उसको अग्नि देना। फिर उसका चूर्ण करके शीशी मे यत्न पूर्वक रखना। यह मन्था-नभैरव महाराजका बताया हुआ अग्निकुमार रस है। अग्नि की अत्यन्तमन्दता, सब प्रकार के ज्वर, वात-रोग, क्षय, शोफयुक्त पाण्डुरोग, कफजरोग, प्लीहा गुल्म, गुदशूल, सर्वाङ्गशूल, उदरशूल, खञ्जत्व ( लगडाना ), पगलापन और स्त्रियों का रक्तगुल्म तथा सब असाध्यरोग इन सब को यह रस ऐसे नष्ट करता है जैसे विष्णुभगवान् पापों को॥ २६ ॥

## २७ अग्निकुमारो रसः ( विंशः )

शुद्धसूतं द्विधा गन्धं गन्धतुल्यं च टंकणम् ।
फलत्रयं यवक्षारं व्योपं पञ्च पटूनि च ॥११३॥
द्वादशैतानि सर्वाणि रसतुल्यानि दापयेत् ।
संमर्द्य सप्तधा सर्वं भावयेदार्द्रकद्रवैः ॥११४॥
संशोष्य चूर्णयित्वा तु भक्षयेदार्द्रकाम्बुना ।
मापद्वयं वयो वीक्ष्य नानाऽजीर्णप्रशान्तये ११५
रसश्चाग्निकुमारोऽयं महेशेन प्रकाशितः ।
महाग्निकारकश्चैष प्रतापे कालभास्करः ॥११६॥
अग्निमान्द्यभवान् रोगान् शोथं पाण्ड्वामयं जयेत्।
दुर्नामग्रहणीसामरोगान् हन्ति न संशयः ॥
यथेष्टाहारचेष्टस्य नास्त्यत्र नियमः क्वचित् ११७

र. च., र. सा, अजीर्णाऽधिकारे ।

टि० रसापेक्षया द्विगुणो गन्धष्टकण च, द्वादशैतानीति फलत्रयादि पट्वन्तानि द्रव्याणि प्रत्येक रसतुल्यानि ।

भाषा—शुद्धपारा, हरड, वहेडा, आवला, जवा-खार, सोठ, कालीमिर्च, पीपल और पाचों नमक ( पृथक् २ ) इनको समभाग लेना तथा गन्धक और सुहागा प्रत्येक पारे से दूना लेना। सब का चूर्ण करके अदरख के रस से ७ बार भावना देना। फिर सुखाकर चूर्ण बनालेना। इस अग्निकुमार रस को अदरख के रस के साथ दो मासेभर अथवा रोगी की अवस्थानुसार देनेसे जठराग्नि बहुत प्रदीप्त होता है। अनेक प्रकार के अजीर्णों को शान्त करने के लिये शिवजी महाराज ने इस रसको प्रकाशित किया है। जैसे प्रलय काल का सूर्य सब प्राणियों का नाश-करता है वैसे ही यह रस सब रोगों का नाश करता है। मन्दाग्नि से उत्पन्न हुए रोग, शोथ, पाण्डुरोग, अर्श, संग्रहणी, त्रिदोषजनित आमदोषविकार इन सबको यह रस नष्ट करता है। इसमे कुछ सन्देह

नहीं । इसके सेवन करने में यथेष्ट आहार करनेवाले के वास्ते पथ्य का कोई विशेष नियम नहीं है ॥७॥

## २८ अग्निकुमारोरसः ( एकविंशः )

व्योपं जातीफले द्वे च लवङ्गं च वराङ्गकम् ।
पत्रं शृङ्गी कणा टङ्कं यवानी जीरकद्वयम् ११८
सैन्धवं च विडं हिङ्गु रसं गन्धं च रौप्यकम् ।
लोहमभ्रं समं सर्वं जम्बीररसमर्दितम् ॥११९॥
अजीर्णशान्तये खादेच्चतुर्गुञ्जां वटीं नरः ।
अत्यग्निकारकश्चायं रसश्चाग्निकुमारकः॥१२०॥
सङ्ग्रहग्रहणीश्चैव वातपित्तकफोद्भवाम् ।
नाशयेदामदोपं च त्रिदोपजनितं च यत् ।
शूलदोपं विसूचीं च भास्करस्तिमिरं यथा १२१

र. स., अजीर्णाविकारे । जातीफले द्वे इति फल कोपथ ।

भापा—त्रिकटु, जायफल, जावित्री, लोग, दालचीनी, तेजपात काकडासींगी, पीपल, सुहागा, अजवाइन, दोनों जीरे, सेंधानमक, विडनमक, हींग, पारा, गन्धक, चांदीभस्म, लोहभस्म और अभ्रकभस्म इन सब को बराबर लेकर जम्भीरी के रस मे खूब घोटना। फिर ४ रत्ती की गोली बनाकर खाना। यह अग्निकुमार रस जठराग्नि को अत्यन्त बढानेवाला है। तथा वात, पित्त और कफ से पैदा हुई सग्रहग्रहणी, शूल, विसूचिका ( हैजा ) इन सब को इस तरह नष्ट करता है जैसे कि सूर्य अन्धकार को ॥ २८ ॥

## २९ अग्निकुमारो रसः ( द्वाविंशः )

पारदं गन्धकं शुद्धं वत्सनाभं विशोधितम्
निरुत्थं ताम्रभस्मापि समं चूर्णं विमर्दयेत् १२२
हंसपादीरसेनाथ काचकूप्यां विनिःक्षिपेत् ।
वालुकायन्त्रविधिना त्रियामान्पाचयेद्भिपक् ॥
रसार्धममृतं क्षिप्त्वा पुनः संचूर्ण्य मर्दयेत् ।
वह्नित्रिकटुसिन्धूत्थयुक्तेनार्द्रकवारिणा ॥ १२४



गुञ्जामात्रो हि दातव्यो मन्दाग्नौ सन्निपातके ।
धनुर्वातेऽप्यजीर्णे च शूले च क्षयकासयोः ॥
अयमग्निकुमाराख्यो रसः
स्यात्प्लीहगुल्मनुत् ॥ १२५ ॥

र म. मा., र. सु., नि र., अजीर्णाविकारे । ( दीपनाग्निकुमार इति नाम )

वै चि, ( रसयोगाग्निकुमार ) कासश्वासादौ र० क० यो० ( दीपनादि. । )

भापा—विशुद्ध गन्धक, पारा, वछनाग और ताम्रभस्म बराबर लेना। सबको मिलाकर हसराजके रससे भावना देकर काच की शीशीमे डालना फिर वालुका यन्त्र की विधिसे ३ पहर तक पकाना। फिर चूर्ण करके पारेका $\frac{1}{2}$ वछनाग मिलाकर, चित्रक, त्रिकटु और समुद्रलवण मिलाए हुए अदरखके रससे भावना देना। यह अग्निकुमार रस १ रत्ती की मात्रा मे देना चाहिए। मन्दाग्नि, सन्निपात, धनुर्वात, अजीर्ण, शूल, क्षय, खासी, प्लीहा और गुल्म इन रोगोको नष्ट करता है ॥ २९ ॥

## ३० अग्निकुमारो रसः ( त्रयोविंशः )

हंसपादीरसैः पिष्टं रसगन्धकयोः पलम् ।
कोलं च विपचूर्णस्य वालुकायन्त्रपाचितम् १२६
शाणं विपस्यार्धपलं मरिचस्य विमिश्रयेत् ।
दीपनोऽग्निकुमारोऽयं ग्रहण्यां च विशेपतः ॥
सवातश्लेष्मजान् रोगान् क्षणादेवापकर्पति ।
सन्निपातज्वरश्वासक्षयकासांश्च नाशयेत् ॥१२८

र. र. स, अजीर्णाऽधिकारे। र. क. यो., ( दीपनादि ) क्षये, अस्य मात्रा वल्लप्रमाणा ।

भापा—पारा २ तोले, गन्धक २ तो०, वछनागका चूर्ण $\frac{1}{2}$ तो० इन सबको मिलाकर कज्जली करके हंसराजके रसमे घोटकर सुखा लेना फिर वालुका यन्त्रमे पकाना। फिर $\frac{3}{4}$ तोला वछनाग और २ तोले काली मिर्च मिलाकर चूर्ण कर लेना इस अग्निकुमार रसकी मात्रा ३ रत्ती की है। यह दीपन है वात और कफसे होनेवाले रोगोको क्षण-

मात्रमे दूर करता है। सन्निपातज्वर, दमा, क्षय और खासी को नष्ट करता है। विशेषकर सग्रहणीमे हितकर है ॥ ३० ॥

### ३१ अग्निकुमारोरसः ( चतुर्विंशः )

भस्मसूतस्यभागैकं मृतशुल्वं तथैव च ।
विषंच तत्समं ग्राह्यं गन्धकं तत्समं कुरु ॥१२९
त्रिकटुत्रिफलायुक्तं सर्वमेकत्र मर्दयेत् ।
निर्गुण्डी चाग्निदमनी वह्निर्व्याघ्रीद्वयं तथा१३०
पातालतिन्दुकी ग्राह्या चेन्द्रवारुणिरेवच ।
एतेषां स्वरसेनैव भावना एकविंशतिः॥१३१॥
रसश्चाग्निकुमारोऽयं प्रत्यक्षश्च महेश्वरः ।
सन्निपाते त्रिदोषेच यमालयगतोऽपि वा १३२
सूच्यग्रेण प्रदातव्यो मृतो जीवति तत्क्षणात् ।
अभिन्यासं सन्निपातं हरते नात्र संशयः॥१३३॥

वै०चि०, र.(मा.)ताम्रस्थाने स्वर्णनियोज्य काचकूप्यां निधाय दिनचतुष्टयाग्निपाकः प्रदिष्ट पूर्वपश्चाद्वा नास्ति भावनानाम इतिमहान्विशेष अत्रपारदोग्निस्थायीनियोक्तव्य व. रा., र श , र. को., र. ( मा ) र का., ज्वराविकारे। र. क. यो., ( सिद्धादि ) र. क. यो, गन्धकत्रिकटुत्रिफलानिष्कासिता भावनाया च पातालतिन्दुकीन्द्रवारुण्यौ निष्कासिते नामच सिद्धाग्निकुमार इति स्थापितम् । वै चि , निर्गुण्डी चाग्निदमनी इत्यत्र निर्गुण्डी धावनीति पाठ , भावनाया तु कर्कोटी काकमाच्यावधिके ।

भाषा—पारे की भस्म, ताम्रभस्म, बछनाग, गन्धक, त्रिकटु और त्रिफला इन सब को समभाग मिलाकर घोट लेना फिर संभालू, अग्निदमनी ( नागदौन ) चित्रक, दोनों भटकटय्या ( बनभाटा) पातालतूमडी ( गुजराती मे ) और इन्द्रायण इन के रस अथवा क्वाथ से उपरोक्त चूर्ण को २१ वार भावना देना ( अर्थात् प्रत्येक की तीन तीन वार ) यह अग्निकुमार रस प्रत्यक्ष ही महेश्वर है । त्रिदोष ( त्र्युल्बण ) सन्निपात मे सूई के अग्रभाग मे लगा कर देने से मरा हुआ भी मनुष्य तत्काल जीवित होजाता है और अभिन्यास सन्निपात को नष्ट करता है इस मे कोई संदेह नहीं ।

टि०—यद्यपि—मूलमे सूचीके अग्र भागसे देना भर लिखा है पर उसका विवरण ( खुलासा ) नहीं किया है इसलिए सूचिकाभरण रस की तरह मत्थे मे तालुके ऊपर हजामत करके थोडे बहुत उस्तरे से पाछ दे कर लोही निकलने पर सूच्यग्र भाग मे जितनी दवा आसके उठाकर लोही पर लगा- अगुली से रगडना, यह रहस्य समझना कदाचित् खानेको देना हो तो अदरख के रस प्रभृति मे मिलाके १ रत्तीभर देसक्ते है ॥ ३१ ॥

### ३२ अग्निकुमारो रसः ( अग्निसुतः ) ( पञ्चविंशः )

भागो दग्धकपर्दकस्य च तथा
शङ्खस्य भागद्वयं,
भागो गन्धकसूतयोर्मिलितयोः
पिष्ट्वा मरीचादपि ।
भागस्य त्रितयं नियोज्य सकलं
निम्बूरसैर्मर्दितं,
नाम्ना वह्निसुतो रसोऽयमचिरा-
न्मान्द्यं जयेद्दारुणम् ॥ १३४ ॥
घृतेन खण्डैः सह भक्षितोऽसौ,
क्षीणान् नरान् हस्तिसमान् करोति ।
समागधीचूर्ण घृतेन लीढ्वा,
मुक्तो भवेत्सङ्ग्रहणीविकारात् ॥१३५॥
शोफज्वरारोचकशूलगुल्मान्,
पाण्डूदरार्शोग्रहणीविकारान् ।
तक्रानुपानो जयति प्रमेहान्,
युक्त्या प्रयुक्तोऽग्निसुतो रसेन्द्रः॥१३६॥

यो. र, र., ( मा० ) नि. र, र. म मा, र. च., र सु, टो, रसायनस , रस ष, वै चिन्तामणौ अग्निसूनुरितिनाम, रससारसग्रहे पिष्ट्वामरीचादपि इत्यस्यस्थाने पिष्टन्तथात्र्यूषणमिति पाठः, तथा–भागस्य त्रितय नियोज्यसकलमितिस्थाने भागस्यत्रितयनिरूप्यकनकमितिपाठो दृश्यते नाम च कनकादि । ग्रहण्यधिकारे ।

भाषा—कौडीभस्म १ भाग, शंखभस्म २ भाग, गन्धक ½ भाग, पारा ½ भाग और कालीमिर्च ३ भाग इन सब को मिलाकर नींबू के रस मे घोटना। यह अग्निकुमार रस है जो जल्दी दारुण मन्दाग्निको नष्ट करता है। घी और खाड के साथ इसको खावैं तो अत्यन्त क्षीण मनुष्यो को भी हाथी के समान बना देता है पीपलके चूर्ण और घी के साथ इस को खावै तो मनुष्य शीघ्रही संग्रहणी से मुक्त हो जाता है। शोष, ज्वर, अरुचि, शूल, गुल्म, पाण्डुरोग, उदरशूल, अर्श, और संग्रहणी इन सब के विकारों को नष्ट करता है। छाछ के साथ खाने से सब प्रमेहों को दूर करता है यह अग्निकुमार रस युक्ति से प्रयुक्त किया हुआ अत्यन्त हितकर है॥ ३२॥

### ३३ अग्निकुमारो रसः ( षड्विंशः )

दशनिष्कं शुद्धसूतं
शुद्धगन्धं च तत्समम्।
सार्धनिष्कं विषं चैव
हंसपाद्या द्रवैर्दिनम्॥ १३७॥
हस्तिशुण्ड्या द्रवैर्वाऽथ
मर्दितं वटकीकृतम्।
काचकूप्यां विनिःक्षिप्य
मृदा संलेहयेद्बहिः॥ १३८॥
शुष्कां तां वालुकायन्त्रे
क्रमवृद्धाग्निना पचेत्।
पञ्चयामान्ते समुद्धृत्य
सार्धनिष्कविषेण च॥ ३९॥
सह सञ्चूर्णयेच्छ्लक्ष्णं
रसो ह्यग्निकुमारकः।
गुञ्जैकः पर्णखण्डेन
दातव्यः सन्निपातजित्॥
कासश्वासौ क्षयं पाण्डुं
मन्दाग्निं च विनाशयेत्॥१४०॥

र. को., र. का, र. क. यो, सन्निपाताधिकारे।

भाषा—शुद्धपारा और गन्धक प्रत्येक ४० मासे और बछनाग ६ मासा लेकर हंसराज अथवा हस्तिशुण्डी के रस मे एक दिनभर घोटना। फिर गोला बनाकर आतशी शीशी मे भरकर शीशी का मुख बंद करके चारो तरफ कपडमिट्टी कर देना। फिर उसको ५ पहर तक वालुका यन्त्र मे पकाना। फिर ६ मासा बछनाग मिलाकर बारीक चूर्ण बनालेना। यह अग्निकुमार रस सन्निपात को जीतने वाला है। इसे १ रत्तीभर पान मे देना चाहिये। खासी, दमा, क्षयरोग, पाण्डुरोग और मन्दाग्नि को नष्ट करता है। गुल्म वाले के लिये स्वानुभूत है॥ ३३॥

### ३४ अग्निकुमारो रसः ( सप्तविंशः )

रसगन्धकणाजाज्यटंकणं दीप्ययुग्मकम्॥१४१॥
जातीपत्रफले देवपुष्पं सामुद्रकं फलम्॥
विषं वचा पारसीका त्रित्रिशाणमिता इति।
पलद्वयमधुघृते पलार्द्धं खण्डतस्ततः॥ १४२॥
सर्वमेकीकृतं चास्य मात्रातः कारयेद्गुटीम्।
अयमग्निकुमारस्तु कथितो ग्रहणीहरः॥
दृष्टोऽयं बहुधा वैद्यैः सद्यः प्रत्ययकारकः१४३

र. का, ग्रहण्याम्।

भाषा—पारा, गन्धक, पीपल, जीरा, सुहागा, अजवाइन, खुरासानी अजवाइन, जावित्री, जायफल, लौंग, समुद्रफल, बछनाग, और खुरासानी वच इन सब को पृथक् २ बारह माशा लेना, घी और शहद चार चार तोला, देशीखाड २ तोला, इन सबको मिलाकर (बारीक चूर्ण करके) मात्रा के अनुसार गोली बनालेना। यह अग्निकुमार रस सङ्ग्रहणी को हरनेवाला कहा गया है। वैद्योने इस को तत्काल विश्वास कराने वाला प्रायः देखा है॥ ३४॥

### ३५ अग्निकुमारो रसः ( अष्टाविंशः )

रसं मृताभ्रकं कान्तं
तीक्ष्णं ताम्रामृतं समम्।

मर्द्यं हंसपदीद्रावैः
काचकूप्यन्तरे क्षिपेत् ॥ १४४ ॥
वस्त्रमृत्स्नां विलिप्याथ
वालुकायन्त्रके पचेत्।
षड्यामान्ते समुद्धृत्य
स र्वेषां सन्निपातजित् ॥ १४५ ॥
इच्छापथ्य प्रदातव्य-
मिक्षुखण्डानि भक्षयेत्।
नारिकेलोदकं दाहे
पिवेच्च शर्करोदकम् ॥
उत्तमाग्निकुमारोऽय
मश्विभ्यां च प्रकल्पितः ॥१४६॥
वै. चिं, सन्निपाते।

भाषा—पारा, अभ्रकभस्म, कान्तलोह (चुम्बक से निकाला हुआ) फौलाद, ताम्रा और बछनाग इन सबको बराबर लेकर हसराज के रस मे घोटना फिर गोला बनाकर आतशी शीशी मे रखना। उस के बाहर से कपड़मिट्टी करना फिर वालुका यन्त्र मे उसको ६ पहर तक पकाकर निकाललेना। यह अग्निकुमार सब प्रकार के सन्निपातों को जीतने वाला है। इसके खाने वाले के लिये पथ्य इच्छानुसार ही देना चाहिये। यदि उष्णता माळूम पडे तो गन्ना चूसना चाहिये। अथवा नारियलका जल या मिश्री का शर्वत पीना चाहिये। इस से दाह शान्त होजायगा। यह रस श्री अश्विनीकुमारों का निर्माण किया हुआ है ॥ ३५ ॥

### ३६ अग्निकुमारो रसः (ऊनत्रिंशः)

ताम्रपिष्टीं दिनान्यष्टौ
गन्धकैः सैन्धवैः समाम्।
निम्बूद्रवेण संयोज्य
खल्वे क्षिप्त्वाऽऽतपे क्षिपेत्॥१४७॥
अभ्रकं तत्समं भाभि-
र्भावयेद्भृङ्गवासकैः।
आर्द्रकैश्चणकक्षारैः
ख्यातश्चाग्निकुमारकः ॥ १४८ ॥
श्वासकासप्रतिश्यायगुल्माध्मानापतन्त्रकम्।
यकृत्प्लीहोदरार्शांसि तत्तद्रोगहरैर्हरेत् ॥१४९॥
र. स. सि, उदराधिकारे।

भाषा—ताम्रपिष्टी, गन्धक, और सेंधानमक बराबर लेकर निम्बू के रस के साथ खरल मे डालकर आठ दिन तक धूप में रखना फिर सब के बराबर अभ्रक भस्म मिलाकर धूप में भागरा, अडूसा, अदरख और चने के क्षार से भावना देना। यह प्रसिद्ध अग्निकुमार रस है यह रस उचित अनुपान के साथ दमा, खासी, जुकाम, गुल्म, आफरा, अपतन्त्रक, यकृत, प्लीहा, उदररोग और बवासीर को नष्ट करता है ॥ ३६ ॥

### ३७ अग्निकुमारो रसः (त्रिंशः)

(प्रज्ञादि-प्राणादि)

रसं विषं चाभ्रगन्धं
मर्दितं पर्पटी द्रवैः।
वज्रमूषे निवेश्याथ
भूधराख्ये पुटे पचेत् ॥ १५० ॥
स्वाङ्गशीतलमुद्धृत्य
खल्वमध्ये विनिःक्षिपेत्।
मत्स्याजशिखिजैः पित्तैः
भावयित्वा पृथक्पृथक् ॥ १५१ ॥
गुञ्जामात्रः प्रदातव्यः
सर्वेषां सन्निपातिनाम्।
विख्यातमिति प्राणाग्नि
कुमारोऽयं महारसः ॥ १५२ ॥
र क. यो., वै. चि. (प्राणादि) सन्निपाते

भाषा—पारा, बछनाग, अभ्रक-भस्म और गन्धक इन सबको बराबर लेकर पित्तपापड़े के रस से भावना देना, फिर वज्रमूषा यन्त्र मे रखकर भूधरपुट में पकाना। स्वाङ्ग शीतल होने पर निकाललेना फिर खरल में रखकर मछली, बकरा और

मोर के पित्तों से पृथक् २ भावना देना । यह सब प्रकार के सन्निपातों को नष्ट करने वाला प्राणाग्निकुमार नामसे विख्यात महारस है । सभी सन्निपात वालों को इसकी १ रत्ती की मात्रा देनी चाहिये ॥२७॥

## ३८ अग्निकुमारो रसः ( एकत्रिंशः )

सूतगन्धविषं ताम्रं समांशं खल्वपेषितम् ।
हंसपादीरसैर्मर्द्यं वज्रमाक्षिकसंयुतम् ॥१५३॥
वालुकायन्त्रके पक्त्वा तदूर्ध्वं चोष्णपक्वकम् ।
कर्षमात्रं विषं तत्र मरीचं सर्वतुल्यकम्॥१५४॥
मर्दयेन्नवनीतेन पञ्चपित्तैर्विभावयेत् ।
गुञ्जामात्रप्रयोगेण सन्निपातनिकृन्तनः॥१५५॥

र. क. यो., सन्निपाते ।

भाषा—पारा, गन्धक, बछनाग और ताम्राभस्म इन सबको बराबर लेकर खरल मे बारीक कज्जली करना, फिर हंसराजके रससे भावना देना । फिर अभ्रकभस्म और सोनामाखी मिलाना और वालुका यन्त्रमें पकाकर १ तोला बछनाग और सबके बराबर कालीमिर्चका चूर्ण मिलाना और मक्खन और पञ्चपित्त ( मच्छी, बकरा, मोर, वराह और भैंसा इनके पित्ते ) से भावना देना । इसकी १ रत्तीकी मात्रा है । यह अग्निकुमार रस सन्निपातको बिलकुल नष्टकर देता है ॥ २८ ॥

## ३९ अग्निकुमारो रसः ( द्वात्रिंशः )

सूतगन्धकनागाभ्र माक्षिकं विषमुष्टिकम् ।
एकं द्वौ त्रींश्चतुः पञ्च विषमुष्टिं च षड्गुणम् १५६
हंसपादी रसै स्तच्च भावयेच्च दिनत्रयम् ।
वालुकायन्त्रगं पक्त्वा देयं गुञ्जाचतुष्टयम् १५७
तुलसीरससंमिश्रं सन्निपातनिकृन्तनम् ।
सर्वज्वरविनाशाय सन्निपातकुलान्तकः॥१५८॥
पथ्यं दध्योदनं देयं रसो ह्यग्निकुमारकः ।
विविच्य बहुधा यत्नात् पूज्यपादेन निर्मितः॥

र. क. यो., सन्निपाताधिकारे १५९॥

भाषा—पारा १ भाग, गन्धक २ भाग, सीसा ३ भाग, अभ्रक ४ भाग, सोनामक्खी ५ भाग और कुचिला ६ भाग, सब को मिलाकर हंसराज के रस से तीन दिन तक भावना देना फिर वालुका यन्त्र मे पकाकर इसकी ४ रत्ती की मात्रा देनी चाहिये । यह अग्निकुमार रस तुलसी के रस के साथ देने से सन्निपात को नष्ट करता है । इस का सेवन करने वाले के लिये दही और चावल का पथ्य हितकर है । बडे यत्न से विचार करके श्रीपूज्यपाद ने इस को बनाया है ॥ ३९ ॥

## ४० अग्निकुमारो रसः ( दिव्यादिः ) ( त्रयस्त्रिंशः )

रसघनतालकगन्धक युक्तं,
वत्सनाभ युतताम्रसुलोहम् ।
शुण्ठीचित्रक मर्दित मेतत्,
द्विदिनं पक्वं वज्रसुमूषे ॥ १६० ॥
दीपनचित्रकमरिचसुयुक्तम्,
नागवल्लिदलभक्षित मेतत् ।
तप्तसुतोयं पाने देयं,
अग्निमान्द्यहरणे च समर्थम् ॥
दीपनपर्पटशुण्ठिसमेतं,
शूलगुल्महरणे च समर्थम्॥१६१॥

र. क. यो.

भाषा—पारा, अभ्रकभस्म, हरितालभस्म, गन्धक बछनाग, ताम्बेकी भस्म और लोहा इन सबको सोंठ और चित्रकके रसके साथ घोटना । फिर दो दिन तक वज्रमूषा यन्त्रमे पकाना, फिर अजवाइन चित्रक और कालीमिर्च मिलाकर चूर्ण कर लेना । इस मे से ३ मासा चूर्ण और इस रसको १ रत्ती पानके रस अथवा गरमपानी के साथ खाना चाहिये । इस प्रकार खानेसे यह रस मदाग्निको दूर करता है । अजवायन, पित्तपापड़ा और सोठके साथ खानेसे शूल और गुल्मको नष्ट करता है । इसका नाम अग्निकुमार रस है ॥ ४० ॥

## ४१ अग्निकुमारो रसः (नवरत्नाद्यः)

### ( चतुस्त्रिंशः )

पारदं पञ्चलवणं
नवरत्नं समं समम्।
मर्दितं तरुणीद्रावैः
खल्वमध्ये दिनद्वयम् ॥ १६२ ॥
काचकूप्यन्तरे क्षिप्त्वा
वालुकायन्त्रके पचेत्।
षड्यामान्ते समुद्धृत्य
सूक्ष्मचूर्णं तु कारयेत् ॥ १६३ ॥
अनुपान विशेषेण
सर्वरोगहरं परम्।
गुञ्जामात्रं प्रदातव्य
मिच्छापथ्यं प्रदापयेत् ॥
रसो ह्यग्निकुमाराख्यो
रत्नाद्योऽयंनिगद्यते ॥ १६४ ॥

व. रा., र. क. यो.

भाषा—पारा, पाचोलवण और नवरत्न, ( माणिक्य, मोती, प्रवाल, तार्क्ष्य, पोखराज, हीरा, नीलम, गोमेद और लहसणिया, ) इन सवको गुलाव जलमे डालकर दो दिन तक खरलमे मर्दन करना। फिर आतशी शीशीमे रखकर वालुका यन्त्रमे पकाना, ६ पहर के वाद उसको निकालकर वारीक चूर्ण कर लेना। विशेष २ अनुपानोंके साथ यह अग्निकुमार रस सभी रोगोको हरनेवाला है। इसकी मात्रा १ रत्ती की देनी चाहिये। इसके सेवन करनेवालेको उसकी इच्छानुसार ही पथ्य देना चाहिये। यह नव रत्नाद्यग्निकुमार रस है ॥ ४१ ॥

## ४२ अग्निकुमारो रसः ( सिद्धाद्यः )

### ( पञ्चत्रिंशः )

सुशुद्धं पारदं गन्धं टंकणं वत्सनाभकम्।
अर्कपत्ररसैर्मर्द्य वज्रमूषान्तरे क्षिपेत् ॥१६५॥
वालुकामध्यगं पश्चात्पुटेद्भूधरयन्त्रके।
स्वाङ्गशीतलमुद्धृत्य गुञ्जामात्रं प्रदापयेत् ॥
सिद्धाख्योऽयमिति ख्यातो रसो ह्यग्निकुमारकः

व. रा, र. क. यो. ॥१६६॥

भाषा—शुद्धपारा, गन्धक, सुहागा और वछनाग सवको वरावर लेकर आकडे के पत्तों के रस से भावना देकर वज्रमूषा मे रखना फिर वालू के भीतर रखकर उसको भूधर यन्त्र मे पकाना। स्वांगशीतल होनेपर चूर्ण करलेना। इस सिद्ध अग्निकुमार रस की एक रत्ती की मात्रा देना। यह प्रायः सभी रोगों मे उचित अनुपान के साथ हितकर है ॥ ४२ ॥

## ४३ अग्निकुमारो रसः (लघु)(षट्त्रिंशः)

पारदं टंकणं गन्धं
तालकं च मनःशिला।
सर्वं हंसपदीद्रावै-
र्दिनमेकं तु मर्दयेत् ॥१६७॥
काचकूप्यां निवेश्याथ
वालुकायन्त्रके पचेत् ॥
षड्यामान्ते समुद्धृत्य
देयं गुञ्जानुमानतः ॥
विख्यातमिति लघ्वग्नि
कुमारोऽयं महारसः ॥ १६८ ॥

व. रा., र. क. यो

भाषा—पारा, सुहागा, गन्धक, हरिताल और मैनसिल सव को वरावर लेकर हंसराज के रस से एकदिन भर भावना देना। फिर शीशी मे रखकर वालुका यन्त्र मे पकाना, ६ पहर के वाद निकालकर एक रत्तीभर इस की मात्रा देना। यह लघ्वग्निकुमार रस विशेष २ अनुपानों से सभी रोगों को नष्ट करता है ॥ ४३ ॥

## ४४ अग्निकुमारो रसः ( सप्तत्रिंशः )

रसस्य भागाश्चत्वारो
वज्राच्चाष्टौ प्रकल्पयेत्।

चत्वारो मरिचाद्गन्धा-
द्विपाच्चापि त्रयो मताः ॥ १६९ ॥
स्फटिकात्सूर्यसंख्याङ्काः
सर्वं चूर्णं प्रकल्पयेत् ।
अपुटोऽग्निकुमारोऽयं
दीयते गुञ्जमात्रकः ॥
आर्द्रकस्वरसैर्दत्तः
सन्निपातज्वरापहः ॥ १७० ॥

व. रा, सन्निपाते

भाषा—पारा ४ भाग, वङ्ग ८ भाग, कालीमिर्च ४ भाग, गन्धक और वछनाग ३ तीन भाग और स्फटिक १२ भाग सबका बारीक चूर्ण कर लेना। यह अपुट ( बिना पुट से बना हुआ ) अग्निकुमार रस है इसकी मात्रा १ रत्तीकी है अदरखके रसके साथ देनेसे यह रस सब सन्निपातों को नष्ट करता है ॥ ४४ ॥

### ४५ अग्निकुमारो रसः ( राजाद्यः ) ( रसभूपतिः ) ( अष्टात्रिंशः )

रसगन्धामृतं तुल्यं
तीक्ष्णमौदुम्बरं समम् ।
हंसपादीद्रवैः खल्वे
मर्दितं दिवसत्रयम् ॥ १७१ ॥
काचकूप्यां निवेश्याथ
विलेप्या वस्त्रमृत्तिका ।
वालुकायन्त्रके पक्त्वा
रसं मृद्वग्निना ततः ॥ १७२ ॥
द्विपड्यामं समुद्धृत्य
चूर्णयेन्माषमात्रकम् ।
आर्द्रकस्यानुपानेन
सर्वरोगान्निहन्ति च ॥
रसो ह्यग्निकुमाराख्यो
योगोऽयं रसभूपतिः ॥ १७३ ॥

व. रा, र. क. यो., वं. चि., सर्वरोगे

भाषा—पारा, गन्धक, वछनाग, त्रिक्षार (यवक्षार, सज्जी और सुहागा ) और तांबा ( भस्म ) सब को बराबर लेकर हंसराज के रस से तीन दिन तक भावना देना फिर शीशी मे रखकर बाहर से कपड़मिट्टी कर देना। फिर उसको मन्द अग्नि से बालुका यन्त्रमे पकाना। १२ प्रहर तक अग्नि के ऊपर रखकर निकाल लेना फिर बारीक चूर्ण करके एक मासे की इसकी मात्रा अदरख के रस के साथ देनी चाहिये। यह अग्निकुमार रस सब योगों का राजा है। और सभी रोगों को नष्ट करता है ॥ ४५ ॥

### ४६ अग्निकुमारो रसः ( नवलोहाद्यः ) ( ऊनचत्वारिंशः )

गन्धकं पारदं तुल्यं
भस्मलोहाष्टकं तथा ।
अर्कमूलकषायेण
मर्दितं दिनपञ्चकम् ॥ १७४ ॥
कूपिकायां निवेश्याथ
विलेप्या वस्त्रमृत्तिका ।
मृद्वग्निना वालुकाभि
र्द्वादशप्रहरं पचेत् ॥ १७५ ॥
स्वाङ्गशीतलमुद्धृत्य
मर्दयेदतियत्नतः ।
गुञ्जामात्रं प्रदातव्यं
सर्वरोगेषु योजयेत् ॥ १७६ ॥
सन्निपातसमुद्भूत
ज्वरेषुविविधेषु च ।
प्रख्यातो नवलोहाख्यो
रसो ह्यग्निकुमारकः ॥ १७७ ॥

व. रा., र. क. यो.

भाषा—गन्धक, पारा और लोहाष्टक भस्म ( सुवर्ण, चांदी, पीतल, ताम्र, नाग, वङ्ग, लोहा, और, कांस्य इन आठों प्रकार के लोहों की भस्म) सब को बराबर लेकर आक की जड़के क्वाथ मे पाच दिन तक भावना देना। फिर शीशी में

रखकर बाहर से कपडमिट्टी कर देना । और वालुका यन्त्र मे १२ पहर तक मन्द अग्नि से पकाना । स्वाङ्गशीतल होने पर बडे यत्न से उसका चूर्ण कर लेना । सभी रोगो मे उस का प्रयोग किया जासक्ता है । सन्निपात से पैदाहुए तथा अन्य अनेक प्रकार के ज्वरो मे इसकी १ रत्ती की मात्रा देनी चाहिये । यह रस नवलोह अग्निकुमार नाम से प्रसिद्ध है ॥ ४६ ॥

### ४७ अग्निकुमारो रसः ( प्रतापाद्यः ) चत्वारिंशः

**पारदं शुल्वभस्माथ विषं मरिचनागरम् ।**
**त्रिक्षारं पञ्च लवणान्विमर्द्यादार्द्रजैर्द्रवैः॥१७८॥**
**काचकूप्यन्तरे क्षिप्त्वा मृदा चालेपयेद्बहिः ।**
**एष मृद्वग्निना पाच्यः वालुकायन्त्रके दिनम् ॥**
**स्वांगशीतलमुद्धृत्य दशमांशं विषं क्षिपेत् ।**
**सूक्ष्मचूर्णीकृतं खल्वे गुञ्जामात्रं प्रदापयेत्१८०**
**सन्निपातं निहन्त्याशु शृङ्गवेरानुपानतः ।**
**प्रतापाग्निकुमारोऽयं सर्वरोगहरः परः ॥१८१**

व. रा., यो र., र. क. यो , सन्निपाते ।

**भाषा**—पारा, ताम्रभस्म, वछनाग, कालीमिर्च, सोंठ, त्रिक्षार (सज्जी, यवक्षार, सुहागा) और पाचो नमक सव को बराबर लेकर अदरख के रस से भावना देना । फिर शीशी मे रखकर उस के वाहर से कपडमिट्टी कर देना और वालुकायन्त्र मे मन्द अग्नि से दिनभर पकाना, स्वाङ्गशीतल होने पर निकाल लेना, इस मे $\frac{1}{10}$ शुद्ध वछनाग मिला के शीशी मे रख लेना। इस अग्निकुमार रस की मात्रा एक रत्ती की है । सोठ के साथ देने से सन्निपात को शीघ्र नष्ट करता है और सभी रोगों को हरने वाला है। प्रतापाग्निकुमार इस का नाम है ॥ ४७ ॥

### ४८ अग्निकुमारो रसः ( दिव्यपूर्वः ) ( एकचत्वारिंशः )

**हरवीर्यं विषं तुल्यं मर्द्यं वह्निकषायके ।**
**मूषायां भूधरे पाच्यं वालुकामध्यगं दिनम् ॥**
**स्वांगशीतलमुद्धृत्य कटुतैलेन भावयेत् ।**
**पादांशममृतं क्षिप्त्वा मर्दितं नीलिकाद्रवैः १८३**
**गुञ्जाद्वयं प्रदातव्यं सन्निपातान्निकृन्तयेत् ।**
**सुदिव्याग्निकुमारोऽयं प्राणिनां प्राणदायकः ॥**

व रा., र क. यो , वै. चि., सन्निपाते.

**भापा**—पारा और वछनाग वरावर लेकर चित्रक के क्वाथ से भावना देना, फिर मूषा मे रखकर मूषा को वालू के वीच मे रखकर भूधरयन्त्र मे एक दिनभर पकाना । स्वाङ्गशीतल होने पर कड़वे तेल से भावना देना फिर उस मे $\frac{1}{4}$ वछनाग मिलाकर नील और काले दाने के रस से उस को खूब मर्दन करना इस की २ रत्ती की मात्रा देनी चाहिये। यह सन्निपात का नाश करता है इस का नाम दिव्य अग्निकुमार रस है । यह प्राणियों को जीवन देने वाला है ॥ ४८ ॥

### ४९ अग्निकुमारो रसः ( महदाद्यः ) (द्विचत्वारिंशः)

**गन्धकेन द्विकर्षेण**
**शुद्धसूतेन तावता ।**
**विधाय कज्जली श्लक्ष्णा-**
**मेकवासरमर्दनात् ॥ १८५ ॥**
**कर्षमात्रं विषं दत्वा**
**मर्दयित्वा दृढं तथा ।**
**हंसपादीरसं दत्वा**
**स्तोकं स्तोकं मुहुर्मुहुः ॥ १८६ ॥**
**कुडवार्धमितं पश्चात्**
**गोलीकृत्य विचक्षणः ।**
**काचकूप्यां विनिःक्षिप्य**
**शुल्वं चास्मिन् प्रदापयेत् ॥१८७॥**
**देवीशास्त्रे पुनः प्रोक्तं**
**चूर्णितं काञ्चनं विषम् ।**
**ऊर्ध्वाधो गोलकानां हि**
**काचकूप्यां विनिःक्षिपेत् ॥ १८८ ॥**

निःक्षिपेत्कज्जलीं मध्ये
यथा श्वासो न जायते ।
ततश्च द्व्यङ्गुलोत्सेधं
मृदा कूपीं विलिप्य च ॥ १८९ ॥
विशोष्य वालुकायन्त्रे
रसस्थानप्रकाशिते ।
अधोमुखीं घटीं क्षिप्त्वा
क्षिपेदुपरि वालुकाम् ॥ १९० ॥
निरुध्य भाण्डवक्त्रं च
चुल्यामारोप्य यत्नतः ।
वह्निं प्रज्वालयेत्सार्ध-
दिनं च क्रमवर्धितम् ॥ १९१ ॥
स्वाङ्गशीतं समाकृष्य
सह ताम्रेण मर्दयेत् ।
पलार्धं मारिचं चूर्णं
कर्षार्धं वत्सनाभकम् ॥ १९२ ॥
विनिःक्षिप्य विमर्द्याथ
क्षिपेद्रम्यकरण्डके ।
नन्दिनाऽथ समादिष्टं
रसतुल्यं मरीचकम् ।
वत्सनाभं च कर्षार्धं
मिश्रयेत्प्रतिचूर्णितम् ॥ १९३ ॥
निर्दिष्टोऽग्निकुमारको रसवरो
देव्या तथा नन्दिना,
सद्यो वैद्ययशःप्रभूतफलदः
सर्वामयध्वंसनः ।
नित्यं पाचनदीपनो रुचिकरः
शीघ्रं गुणोत्कर्षकृत्,
शालीन् भुक्तवतो यथेष्टसुखदः
श्रेष्ठो रसानां प्रभुः ॥ १९४ ॥
मन्दाग्निं कफवातजक्षयगदं
निश्शेषशूलामयं,
श्वासं कासगदं तथा कफमरु-
ज्जूर्तिं च पाण्डुं तथा ।
शोषं वातगदान् महाकफरुजः
कण्ठामयं सर्वशः,
सामां च ग्रहणीं हरेत् खलु रतिं
कुर्याच्च प्राणान्विताम् ॥ १९५ ॥

कणया सितयाऽऽज्येन
दातव्योऽयं महारसः ।
वायुमुख्येषु रोगेषु
वायुसंसर्गकेष्वपि ॥ १९६ ॥

नन्दिनाऽथ पुनः प्रोक्त-
स्तत्तद्रोगहरः परः ।
निहन्ति सकलान् रोगा-
ननुपानविशेषतः ॥ १९७ ॥

रसजनितविदाहे शीततोयाभिषेको,
मलयजघनसारै र्लेपनं मन्दवातः ॥
तरुणदधि च देयं नारिकेलस्य नीरं,
मधुरशिशिरवातःशीतमन्यच्च शस्तम् ॥ १९८

व. रा , र र. स , क्षयादिषु ।

भाषा—२ तोला गन्धक और २ तोला शुद्ध पारा लेकर एक दिनभर मर्दन करके बारीक कज्जली बनाना । फिर उसमें एक तोला बछनाग मिलाकर ८ तोला हसराजके रसको थोड़ा थोड़ा उसमे डालते रहना और घोटते रहना । फिर उसका गोला बनाकर शीशीमे रखना, शीशीके भीतर बछनाग १ तोलेका चूर्ण भी ऊपरसे डाल देना और शीशीके मुखको ( १ तोलाभर ) ताम्बेके बारीक पत्रोंकी गोलीसे बंदकर देना । परन्तु देवीशास्त्रमे कहा है कि हलदिया विषका चूर्ण करके नीचे और ऊपर छिड़क कर बीचमे कज्जलीको रखना फिर शीशीमे रसको रखना और बाहरसे २ अंगुल गाढी कपडमिट्टी करना । जिससे कि किसी प्रकारका छिद्र वाष्पनिकलनेके लिए उसमे न रहे । फिर सुखाकर रसस्थानमे कहे अनुसार वालुका

यन्त्रमे शीशीको उल्टी करके रखना और ऊपरसे वालू भर देना। फिर वालुका यन्त्रकी हाडीको वंद करके बड़े यत्नसे चूल्हेपर रखना। नीचे क्रमसे मन्द, मध्य और तेज अग्नि १½ दिन तक प्रज्वलित करना। स्वाङ्गशीतलहोनेपर तांबेकी गोलीके साथ ही चूर्ण कर लेना। फिर २ तोला कालीमिर्च का चूर्ण और ½ तोला बछनाग मिलाकर खूब घोटकर अच्छी शीशीमे रखना। परन्तु नन्दिकेश्वर महाराजने कहा है कि पारेके बराबर कालीमिर्चे और ½ तोला बछनाग पृथक् पृथक् चूर्णकर मिला देना। यह तत्काल बहुत फल देनेवाला वैद्योंके पूर्ण यशको बढानेवाला और सबरोगोंका नाश करनेवाला अग्निकुमार रस नन्दीमहाराज और देवीने कहा है। नित्य पाचन और दीपन है रुचिको बढाता है जल्दी ही गुणोंको बढानेवाला है। इसके सेवन करनेवाले को शाली चावलोका भात खानेसे यथेष्ट सुख होता है। यह रस सबसे श्रेष्ठ और रसोंका राजा है। मन्दाग्नि और कफ तथा वातसे हुआ २ क्षय, सभीप्रकारके शूल, दमा, खासी कफ और वायुका ज्वर, पाण्डुरोग, शोप वातरोग, कफरोग, कण्ठरोग और साम ग्रहणी को यह रस नष्ट करता है वल और रुचि को बढाता है। यह रस वातप्रधान रोगों मे अथवा वायुके ससर्गवाले रोगोंमे पीपल, मिश्री और घीके साथ देना चाहिये। और नन्दी महाराज ने उपरोक्त सव रोगो को हरनेवाला बताया है। विशेष २ अनुपानों के साथ देने से यह सभी रोगो को नष्ट करता है। यह रस अत्यन्त गरम है इसलिये इस के खाने से दाह हो जावे तो ठढे पानी की धारा सिर पर देनी चाहिये। अथवा चन्दन और कपूर सिर पर पोत देना चाहिये। ठढी हवा के स्थान में रखकर ताजा दही और नारियल का पानी, मधुर और ठढी हवा (पंखेसे) देनी चाहिये। अन्य भी ठंढे उपचार हितकर है॥ ४९॥

### ५० अग्निकुमारो रसः (त्रिचत्वारिंशः)

तुल्यौ गन्धकपारदावमृतकं
शुल्वं च तुल्यांशकं,
खल्वे हंसपदीरसैर्दिनयुगं
संमर्द्य यत्नात्ततः।
कृत्वा काचमये घटे च वटिकाः
संताप्य सूर्यांशुभिः,
तद्रुद्धाननमङ्गुलिप्रतिमितं
चेलैर्मृदा वेष्टयेत्॥ १९९॥
भाण्डे वालुकया त्रिभागभरिते
क्षिप्त्वा क्षिपेद्वालुकां,
भाण्डास्यं तु निरुध्य वासरयुगं
गाढाग्निमुद्दीपयेत्।
उत्तार्य स्वशरीरशीतलमतो
वेदांशतुल्यामृतं,
तुल्यांशैश्च मरीचचूर्णनिकरैः
संयोज्य गुञ्जामितम्॥
देयं नागलतादलेन सहितं
चूर्णं तथा खादयेत्,
श्रीमानग्निकुमारको रसवरो
निःशेषरोगापहः॥ २००॥
श्वासकासगदपाण्डुकामलाः
शूलवातवमिराजयक्ष्मणः।
सन्निपातमतिदारुणज्वरान्
हन्त हन्ति रसभूपतिः स्वयम्॥ २०१॥

वा०, र. क यो०, (रसभूपतिः) व. रा., तुल्यौगन्धकपाररो इत्यस्याग्रे वाहटे मधुगदौ इति पाठ' तत्र मधुशब्देन स्वर्णमाक्षिक, गरेण विषम्, अन्यत्सर्वं समानम्। र क योगेमणिशिलेति पाठ. तत्र मणिशिलाशब्देन मन.शिला योज्या स्फटिक वा–

**भाषा**—गन्धक, पारा, बछनाग और तांबा इन सब को बराबर लेकर दो दिन तक खरल मे हंसराज के रस के साथ घोटना। फिर गोला बनाकर शीशी मे भरदेना। और ऊपर से शीशी का

मुख बंद करके बाहर से कपडमिट्टी कर देना। और धूप मे सुखा देना एक हाडी मे ३ भाग वालु भरकर शीशी रखना फिर ऊपर से हाडी को वालु से भर देना। और २ दिन तक तेज अग्नि से उसे पकाना। स्वाङ्गशीतल होने पर उतार लेना और ¼ बछनाग और सब की बराबर कालीमिर्च का चूर्ण मिलाना। पान के रस के साथ २ रत्ती की मात्रा इस रस की देना। यह अग्निकुमार रस सब से श्रेष्ठ है और सब रोगों का नाश करता है। दमा, खासी पाण्डु, कामला, शूल, वातरोग, छर्दि, राजयक्ष्मा सन्निपात और कष्टसाध्य ज्वरों को यह रसो का राजा नष्ट करता है॥ ५० ॥

## ५१ अग्निकुमारो रसः ( रसभूपतिः )

( चतुश्चत्वारिंशः। )

कर्षद्वयं रसेन्द्रस्य
गन्धकस्य तथैव च।
तथैव ताम्रपर्णानां
विशुद्धानां च निःक्षिपेत् ॥२०२॥
दिनमेकं विमृद्नीया-
द्धंसपादीरसेन च।
तत्कल्कं गोलकीकृत्य
काचकूप्यां निवेशयेत् ॥ २०३ ॥
अमृतं तालकश्चात्र
निःक्षिपेत्कूपिकान्तरे।
कूपिकाया मुखं रुद्ध्वा
विलेप्या वस्त्रमृत्तिका ॥ २०४ ॥
द्व्यङ्गुलोत्सेधमात्रेण
परितोऽति विशोषितम्।
भाण्डमेकं ससिकतं
कृत्वा तत्र च निःक्षिपेत् ॥ २०५॥
कूपिकामुपरिष्टाच्च
वालुकाया द्विभागकौ।
वालुकापूरितं भाण्डं
शरावाच्छादितं दृढम् ॥ २०६ ॥

मृत्स्नया कर्पटैर्युक्तमातपे शोषितं तथा।
चुल्यामारोप्य तद्भाण्डं विपचेन्मृदुनाग्निना२०७
सार्धं दिनं सुसंसिद्धं भाण्डमुद्घाट्य ग्राहयेत्।
पलार्धं मरिचोपेतं कर्षार्धामृतसंयुतम् ॥२०८॥
श्लक्ष्णं संपेष्य ताम्बूलीदले गुञ्जामितं भजेत्।
सन्निपातं धनुर्वातं पक्षाघातं ततःक्रमात् ॥२०९
क्षयं च श्वासकासौ च मन्दाग्निं श्लेष्मकामले।
हस्तपादगतं शोथं प्रयोगादेव संहरेत् ॥२१०॥
शाल्यन्नं मुद्गसंयुक्तं गव्यक्षीरं पलामृतम्।
छागपारावतं पथ्यं तथा लावकतित्तिरी॥२११॥
रसदीप्तिः प्रकर्तव्या शारिवादिरसेन च।
इष्टभुग्भक्षणैर्युक्तं गोक्षीरं खण्डशर्कराः॥२१२॥
कोकिलाक्षस्य निर्यासैर्वातशोणितनाशनः।
तत्तद्रोगानुपानेन तत्तद्रोगनिबर्हणः ॥ २१३॥
रसो ह्यग्निकुमाराख्यो योगोऽयं रसभूपतिः।

र. क. यो., वा.,

भाषा—पारा, गन्धक और शुद्ध ताम्रपत्र सब को दो २ तोला लेकर एक दिन भर हंसराज के रस मे घोटना, फिर उसकी गोलिया बनाकर शीशी मे रखना और शीशी के मुख को बंद करके बाहर चारो तरफसे २ अगुल कपडमिट्टी करना फिर एक हाडी मे ⅔ वालू भरना और शीशी को रख कर वालू से हाडी को भर देना, और मिट्टी के सकोरे मे ढककर ऊपर से कपडमिट्टी करके सुखालेना। उस हाडी को चूल्हे पर रखकर मन्द अग्नि से १½ दिन तक पकाना और ठंढा हो जाने पर निकाल लेना फिर २ तोला कालीमिर्च और ½ तोला बछनाग मिलाकर बारीक चूर्ण कर लेना। इस को पान के रस के साथ २ रत्ती देना, सन्निपात, धनुर्वात, पक्षाघात, क्षय, दमा, खासी, मन्दाग्नि, कफरोग, कामला और हाथ पैरों का सोना, ये सबरोग इस रस के प्रयोगमात्र से नष्ट हो जाते हैं। शालीचावल, मूंग की दाल, गाय का दूध मास रस, बकरा, कबूतर, लवा और तीतर इनका

मास इस रस के खानेवाले को हितकर है। इस रस को अधिक बल देनेवाला बनाने के लिये शारिवादिगण (शारिवा, मुलेठी, चन्दन, लालचन्दन, पद्मकाठ, गंभारी के फल, महुवा के फूल, खश) के रस का उपयोग करना चाहिये। तालमखाने के रस के साथ खाने से यह रस वातरक्तरोग को दूर करता है। जैसा २ रोग हो उस के यथोचित अनुपान के साथ सभी रोगों को यह दूर करता है यह सब रसों का राजा अग्निकुमार रस है॥ ५१॥

## ५२ अग्निकुमारो रसः (पञ्चचत्वारिंशः)

रसगन्धकतालानामेकद्वित्रिपलं क्रमात् ।
हसपादीरसेनाथ सूक्ष्मचूर्णं विमर्दयेत् ॥२१४॥
निधाय वालुकायन्त्रे पिधाय सुदृढं मुखम् ।
अधोमुखगतां कूपी वालुकामध्यगां पचेत् २१५
क्रमाग्नौ त्रिदिनं सिद्धं ततः शीतं समुद्धरेत् ।
विषं कलांशमानेन योजनीयं भिषग्वरैः २१६
वाताद्यग्निकुमारोऽयं रक्तिमानप्रमाणतः ।
सन्निपाते धनुर्वाते गृध्रस्यामपबाहुके ॥
सर्वाङ्गकम्पवाते च विसूच्यामग्निमान्द्यके २१७
र. क. यो.,

भाषा—पारा ४ तोले, गन्धक ८ तोले, हरताल १२ तोले लेकर हसराज के रस मे बारीक घोटना फिर शीशी मे रखकर उसका मुख अच्छी तरह से बंद करके वालुका यन्त्र के बीच मे शीशी को उलटी रखकर ऊपर से वालू भरकर क्रम से मन्द, मध्यम और तेज अग्नि मे तीन दिन तक पकाना। ठंढा हो जाने पर निकाल कर १/१६ बछनाग मिलाकर चूर्ण कर लेना यह वातादिअग्निकुमार रस है। इस की मात्रा १ रत्ती की है। सन्निपात धनुर्वात, गृध्रसी, अपबाहुक, सर्वाङ्गकम्प और विसूचिका मे हितकर है॥ ५२ ॥

## ५३ अग्निकुमारो रसः
## ( षट्चत्वारिंशः )

रसविषगन्धकहरितालं
ताम्रं चार्कविमार्दितमेतत् ।
वज्रमूषधरवालुकपक्वः
अनुभवसिद्धो ह्यग्निकुमारः॥२१८॥
र. क. यो,

भाषा—पारा, बछनाग, गन्धक, हरताल और तांबा इन सब को बराबर लेकर आकडे के रस मे मर्दन करना। फिर वज्रमूषा मे रखकर भूधर यन्त्र मे वालू के बीच मे पकाना। यह अनुभवसिद्ध अग्निकुमाररस है॥ ५३ ॥

## ५४ अग्निकुमारो रसः
## ( सप्तचत्वारिंशः )

सूतं गन्धं विषं शङ्खं कपर्दं टङ्कणोषणे ।
चन्द्रैकाग्निगजत्रिद्विवसुभागैर्मितं क्रमात् २१९
जम्बीरकेण संमर्द्य भवेदग्निकुमारकः ।
वाते मन्दानलेऽजीर्णे ज्वरश्लेष्मविसूचिके२२०
गुञ्जामात्रः प्रदातव्यो विण्मूत्रशिरसो ग्रहे ।
कासे श्वासे क्षये शूले सर्वरोगेषु योजयेत् २२१
र. स. क., अग्निमान्द्यादौ ।

भाषा—पारा १ भाग, गन्धक १ भाग, विष ( बछनाग ) ३ भाग, शखभस्म ८ भाग, कौडी की भस्म ३ भाग, सुहागा भूना हुआ २ भाग, और कालीमिर्च ८ भाग, इन सब को जम्बीरी नीबू के रस मे एक या दो दिन तक घोटना। यह अग्निकुमार नामक रस है। इस की १ रत्ती की मात्रा है। मन्दाग्नि, वातरोग, अजीर्ण, ज्वर, कफ-रोग, हैजा, मूत्र की रुकावट, मत्थे का गुम अथवा शून्य रहना, खासी, दमा, धातुक्षीणता और शूल इत्यादि सब रोगों को नष्ट करता है॥ ५४ ॥

## ५५ अग्निकुमारो रसः
## ( अष्टचत्वारिंशः )

रसस्य पलमेकन्तु गन्धकस्य पलत्रयम् ।
चतुःपलं माक्षिकञ्च पलमेकमयस्तथा॥२२२॥
मृतशुल्बं पलञ्चैकं मृतं कृष्णाभ्रकं पलम् ।
पलमेकं तथा वङ्गं मृतं नागं पलन्तथा॥२२३॥

एतं सम्भृत्य सम्भारमेकीकृत्य विमर्दयेत् ।
नष्टपिष्टिं ततः कृत्वा गोलकं कारयेद्बुधः२२४
ऊर्ध्वाधः सैन्धवं कृत्वा देया कर्पटमृत्तिका ।
पुटेत्तद्भूधरे यन्त्रे यावद्यामांस्त्रयोदश ॥२२५॥
स्वाङ्गशीतलमुत्तार्य चूर्णं कुर्याद्विचक्षणः ।
सैन्धवञ्च पृथक्कृत्वा तस्य चूर्णं प्रकल्पयेत्२२६
तल्लवणञ्च प्रदातव्यमजीर्णकृमिशूलिषु ।
औषधं भावयेत्पश्चात् मागधीभावनात्रयम्२२७
पश्चार्द्रकरसेनापि सप्तकन्यारसेन च ।
ज्वालामुख्या तथा सप्त पञ्च चित्रकभावनाः ॥
भूम्यामलयाश्च क्वाथेन भावनास्त्वेकविंशतिः ।
मरिचं पञ्चभागेन वल्लमेकं प्रदापयेत्॥२२९॥
हन्त्यर्शांसि च मन्दाग्नि कोष्ठवातं तथोदरम् ।
क्षयं मेहमपस्मारमुन्मादं विषमज्वरम्॥२३०॥
नित्यं ज्वरं सदाहञ्च सन्निपातं सुदारुणम् ।
अश्मरीं मूत्रकृच्छ्रञ्च ग्रहणीञ्च भगन्दरम् २३१
कामलां पाण्डुरोगञ्च शूलगुल्मकृमीन् ध्रुवम् ।
विशेषात्सर्वरोगांश्च हन्ति चाग्निकुमारकः२३२

अनुपानविधिः ।

तक्रं पेयं केवलं सप्तरात्रं
नो वा युक्त्या शर्कराम्रक्षणाभ्याम् ।
किंवाऽखण्डो वर्द्धमानप्रमाणः
पेयः शीतेनाम्बुना मासमेकम्॥२३३॥
र. ( मा. )

भाषा—पारा ४ तोले, गन्धक १२ तोले, सोनामक्खी १६ तोले, लोहभस्म, तांबेकीभस्म, कृष्णाभ्रकभस्म, वङ्गभस्म और सीसाभस्म यह सब चार चार तोले, सबको मिलाकर बहुत वारीक चूर्ण करके ( घीकुंआर, पान अथवा अदरखके रससे) गोला बनालेना । फिर नीचे और ऊपर सैंधानमक रखकर शराव सम्पुटमे उस गोलेको रखकर बाहरसे कपड़मिट्टी करके १३ पहर तक भूधर यन्त्रमे पकाना । स्वाङ्गशीतल होनेपर उसमेसे नमकको अलग निकालकर चूर्ण कर लेना । यह अजीर्ण, कृमिरोग और शूलको शान्त करनेवाला है । भीतर के गोलेको अलग निकालकर पीपलके क्वाथ से ३ अदरखके रससे ५, घीकुंआर और ज्वालामुखीके रससे पृथक् पृथक् ७, चित्रकके क्वाथ अथवा रससे ५, और भुंईआंवलेके रससे २१ भावना देना । इसकी ३ रत्तीकी मात्रा पचगुने कालीमिर्चके चूर्णके साथ देना । यह रस ववासीर, मन्दाग्नि, कोष्ठवात, उदररोग, क्षय, प्रमेह, मिरगी, उन्माद, विषमज्वर, दाहसहित नित्यज्वर, घोर सन्निपात, पथरी, मूत्रकृच्छ्र, संग्रहणी, भगन्दर, कामला, पाण्डुरोग, शूल, गुल्मरोग और कृमिरोगको अवश्यही नष्ट करता है । प्रायः यह अग्निकुमार रस सभी रोगोंको नष्ट करता है । इसके अनुपान की यह विधी है कि इसको सात दिनतक केवल छाछके साथ अथवा शक्कर और मक्खनके साथ अथवा शक्करके साथ, अथवा वर्धमान पिप्पलीके साथ अथवा १ महीने तक ठढे पानीके साथ देना ॥ ५५ ॥

## ५६ अग्निकुमारो रसः

(महदाद्यः) ( ऊनपञ्चाशः )

सूतं गन्धं विषं ताम्रं
प्रत्येकं द्विपलं तथा ।
सौवर्णं राजतं भस्म
प्रवालं मौक्तिकं तथा ॥ २३४ ॥
गोमेदकं च नीलं च
राजावर्तं च माक्षिकम् ।
वैक्रान्तं टङ्कणश्चाभ्रं
वङ्गं कान्तं च सीसकम् ॥ २३५ ॥
शिलां च हरितालं च
स्वर्णोष्ट्रं खर्परं तथा ।
पृथक् पलार्धकश्चैव
हंसपादीरसैर्दिनम् ॥ २३६ ॥
निर्गुण्डीवह्निवासाजैः
प्रत्येकैर्मर्दितं दिनम् ।

मत्स्य,माहिषवाराह
मयूर, च्छागसम्भवैः ॥ २३७ ॥
पित्तैश्च भावयेदेवं
प्रत्येकं तु पृथक्पृथक्।
काचकूप्यां विनिःक्षिप्य
वालुकायन्त्रगं पचेत् ॥ २३८ ॥
यामद्वादशपर्यन्तं
स्वाङ्गशीतलमुद्धरेत्।
पुनः पित्तैः पृथग् भाव्यं
खल्वमध्ये विनिःक्षिपेत् ॥ २३९ ॥
मर्दयेच्चूर्णयेत्सूक्ष्मं
गुञ्जामात्रंप्रदापयेत्।
सन्निपातं धनुर्वातं
पक्षाघातं सुदारुणम् ॥ २४० ॥
कामलापाण्डुरोगौ च
गुल्मशूलनिवारणः।
महानग्निकुमारोऽयं
रसोऽयं लोकपूजितः ॥ २४१ ॥

वा०,

टि० उष्ट्रमिति—कस्यापि धातोरेतन्नाम्नाऽप्रसिद्धत्वान्न ज्ञायते उष्ट्रशब्देन किङ्ग्राह्य तथापि, एकदा मिश्रदेशे बहवो वार्तिका एकस्मिन्देवीमन्दिरे विलक्षणतत्वमुद्भावयितु समवेतास्तत्र उष्ट्रविट प्रज्वालयामासुस्ततो घ्राणादिप्रबाधकस्तीक्ष्णो धूमस्समुदतिष्ठत्। किमिदमित्याश्चर्यनिमग्नास्त धूममूर्द्धं निपात्य त रसराजस्याऽसाधारणसहकारक मेनिरे तत्रापि इदं तत्वं देव्यैव मुखात्कथितमिति मत्वा "उमाननीय" मिति नाम स्थापितवन्तः। तदेव नाम क्रमेणापभ्रष्टताम्प्राप्य पाश्चात्यदेशे "एमोनियम्," इति नाम्ना व्यवह्रियते—यथोष्ट्रविशस्तस्य समुत्पत्तिस्तयाभारते नरविशः सकाशात्तस्य प्रचुरतया उत्पत्तिस्समजनि अतस्तस्य भारते नरसार इतिनाम प्रसिद्ध वर्तते। अत्र तद्ग्रहणे न कापि क्षतिरिति मे प्रतिभाति। यद्यपि अथर्ववेदे सुवर्णस्य नाम समागतं परन्तु तस्यात्र प्रत्यक्षविहितत्वादकिञ्चित्करन्तत्।

भाषा—पारा, गन्धक, बछनाग और तांबे की भस्म ये सब प्रत्येक ८ तोले और सोना, चांदी, प्रवाल, मोती, गोमेद, नीलम, लाजवर्द, सोनामक्खी, तुरमुली ( वैक्रान्त ) सुहागा, अभ्रक, वङ्ग, कान्तलोह, सीसा, मैनसिल, हरताल, कास्य, उष्ट्र, (नोसादर) और खर्पर इन सब की भस्में प्रत्येक दो तोले लेकर हंसराज, निर्गुण्डी, चित्रक, अडूसा इनके स्वरस या क्वाथ तथा आक के दूध और मच्छी भैंसा, वराह, मोर और बकरा इन के पित्तों से पृथक् २ एक एक दिन भावना देना फिर उस को शीशी में रखकर वालुकायन्त्रमे १२ पहर तक पकाना। जब स्वाङ्गशीतल होजावे तब निकालकर दुबारा उपरोक्त ५ पित्तों से भावना देकर सुखाकर खरल मे पीसकर बारीक चूर्ण बना लेना इस को १ रत्ती की मात्रा मे देना। यह रस सन्निपात, धनुर्वात, घोर पक्षाघात, कामला, पाण्डुरोग, गुल्म और शूल इनका नाश करता है। यह महान् अग्नि कुमार रस ससार मे आदर पाया हुआ है ॥५६॥

## ५७ अग्निकुमारो रसः ( सिद्धाद्यः )
### ( पञ्चाशः )

सोमब्रह्म, भुजङ्गशुल्वदरदं,
वङ्गं, रसं लोहजं,
आरं शून्यसुगन्धकौ
स्वर्णशिलाताप्यद्वयं मुण्डकम्।
सर्वं भस्म निरुत्थिशुद्धिसहितं
खल्वे च संस्थापयेत्,
अर्कक्षीरविमर्दितं दिनमिदं
निम्बद्रवैः सत्वरम् ॥ २४२ ॥
मुण्डीबर्बरलिङ्गिरेणुसरलै-
स्तत्काचकूप्यां न्यसेत्,
संवेष्ट्यं शुभमृत्स्नया
करपटैः सम्पक्वभाण्डोदरे।

विन्यस्यामलभस्मना सुपिहितं
वस्त्रत्रयं पाचयेत् ,
नीत्वा शीतलताङ्गतं रसवरं
ताप्यात्समांशं विपम् ॥ २४३ ॥
मृद्वीयाच्छिखिकासराजझपजैः
कौलैश्च पित्तैस्तथा,
कृत्वा गोलमिदं सुकूपिनिहितं
स्थाप्यञ्च मृद्भाण्डके ।
क्षिप्त्वा तत्पटुयन्त्रके त्रिदिवसं
मध्याग्निना पाचयेत् ,
भारङ्गीसुरदारुतित्तिरिफलै-
र्भृङ्ग्या च निर्गुण्डिका- ॥२४४॥
शुण्ठीचित्रकटुत्रयै रविपयः
पित्तैः पुनर्भावितं,
प्रत्येकैर्मुनिभावितश्च विधिना
संशोपितं मर्दितम् ।
दाप्योऽयं विषमे त्रिदोपसहिते
सिद्धाग्निसूनुर्ज्वरे ,
सर्वातङ्कहरोरसोऽयममिता-
श्चर्यप्रदः सर्वदा ॥ २४५ ॥
गुञ्जैकः सितयार्द्रकेण सहितः
सर्वान्गदान्नाशयेत् ,
बीजैः पुष्करसम्भवैर्धनपते-
रक्षान्वितो रामठैः ।
गुल्मप्लीहजलोदरग्रहणिकाः
पाण्डुं तथा कामलाम् ,
मागध्या मधुशर्करादिसहितः
श्वासं च कासं क्षयम् ॥ २४६ ॥
तापस्यानुभवो भवेद्यदि तदा
शीतोपचारः शुभः,
कर्पूरागुरुकेसरं मलयजं
शीताम्बुपानादिकम् ।
पुष्पं केतकमालतीशतदला-
दद्याच्च शाल्योदनं,
द्राक्षेक्षुद्रवशर्करा हिततमा-
स्ताम्बूलसंचर्वणम् ॥ २४७ ॥
रम्भाकोमलपत्रवेष्टिततनोः
प्रौढाङ्गनालिङ्गनं,
स्नानं दानमथोचितं कुरु सदा
भूदेवसंतर्पणम् ।
ब्रह्मेशाच्युतपूजनं च विधिव-
त्सौख्यप्रदं सर्वदा,
वैद्याधीशनमस्कृतैर्विरचितोऽ-
यंपूज्यपादै रसः ॥ २४८ ॥

वाहटे ।

टि०—अत्र ब्रह्मेति नाम्ना यद्यपि कस्यापि लोहस्य नास्ति व्यवहारे प्रसिद्धिस्तथापि "तदण्डमभवद्धैमम्" मनु० "हिरण्यगर्भः समवर्तताग्रे०," यजु० इत्यादिप्रमाणैः प्रकरणबलात्सुवर्णमित्यर्थो व्यधाय्यस्माभिः । रेणुरिति गन्धद्रव्यविशेपः परं तस्य दुर्लभत्वाद्रेणुकेति निर्गुण्डी निहितास्माभिः प्रायो गुणसाम्यात् ।

भापा—चांदी, सोना, सीसा, तावा, शिंगरिफ, वङ्ग, पारा, लोह, पीतल, गन्धक, कासा, मैनसिल, दोनो माक्षिक, ( सोनामक्खी और रूपामक्खी ) और विड्लोह इन सवकी निरुत्थभस्मै ( यद्यपि पारा और गन्धककी भी भस्म होती है परन्तु उसका वनाना कठिन है । इस लिये यदि पारे और गन्धक की भस्म न होसके तो इन दोनोंको शुद्ध कर लेना ) वरावर लेकर एक एक दिन आकका दूध नीमका रस, गोरखमुण्डी, शिवलिङ्गी,सभाळु, और देवदारु इनके रस अथवा क्वाथसे जल्दी जल्दी घोटना । फिर उसका गोला बनाकर शीशीमे रखकर वाहरसे कपडमिट्टी कर देना । फिर उसको एक पक्के मटकेमे रखकर ऊपर नीचे साफ राख रखकर मटकेके मुहको अच्छी तरह वंद करके ३ दिन तक उसको पकाना फिर स्वाङ्गशीतल होनेपर सोनामाखीके वरावर बछनाग मिलाकर मोर, भैसा

बकरा, मच्छी, और वराह इनके पित्तोंसे भावना देना फिर उसका गोला बनाकर शीशीमें रखकर पहिलेके माफिक मटकेमे रखकर लवणयन्त्रमे ३ दिन तक मध्याग्निसे पकाना, फिर ठंडा होनेपर भारङ्गी, देवदारु, जमालगोटा, भागरा, सभाळु, अदरख, चित्रक और त्रिकटु, इनके रस अथवा क्वाथ, आकका दूध और उपरोक्त पांचों पित्त, इनप्रत्येकसे सात ७ वार भावना देना और सुखाकर, वारीक घोट लेना यह सिद्धाग्निकुमार रस विषमज्वर और सन्निपातमें देना चाहिये । यह सभी रोगोंको नष्ट करता है और वहुतही आश्चर्यकारक है । एक रत्तीभर इसको अदरख और मिश्रीके साथ खानेसे सभी रोग नष्ट होते हैं । पुष्करवीज, करंजके वीज और हींगके साथ, खानेसे गुल्म, प्लीहा, जलोदर, सङ्ग्रहणी पाण्डुरोग और कामलाको नष्ट करता है । पीपल, शहद और शक्करके साथ खानेसे दमा, खासी और क्षयको नष्ट करता है। इसको खानेसे यदि गरमी मालूम पडे तो शीत उपचार करने चाहियें और कपूर, अगर, केसर और चंदनका लेप, ठंढा जल और शर्वत इत्यादि पीना। केवड़ा मालती और गुलाब आदिके फूल सूघना, शालिचावलोंका भात खाना, दाख ( अगूर ) गन्ना और मिश्री हितकर है और पान चबाना चाहिये । केलेके कोमलपत्तेशरीरमे लपेटकर युवती स्त्रियोंसे आलिङ्गन करना, स्नान, दान और ब्राह्मणोंको भोजन कराना, ब्रह्मा, शिव और विष्णु भगवान्‌की पूजा करना इत्यादि काम इसके खानेवालेके लिये हितकर हैं । यह वैद्योंसे नमस्कृत पूज्यपाद महाराजने बनाया है ॥ ५७ ॥

### ५८ अग्निकुमारलोहम् ।

तुत्थरामठटङ्कानि
 सैन्धवं धान्यजीरकम् ।
यवानी मरिचं शुण्ठी
 लवङ्गैले विडङ्गकम् ॥ २४९ ॥
प्रत्येकं तोलकं चूर्णं
 लोहचूर्णं तु तत्समम् ।
रसस्य गन्धकस्यापि
 पलकं कज्जलीकृतम् ॥ २५० ॥
घृतेन मधुना खादे-
 ल्लोहमग्निकुमारकम् ।
यकृत्प्लीहोदरं गुल्मं
 नाशयेच्च हलीमकम् ॥ २५१ ॥
बलवर्णाग्निजननं
 कान्तिपुष्टिविवर्धनम् ।
श्रीमद्गहननाथेन
 निर्मितं विश्वसम्पदे ॥२५२॥

र सा., र. चि., र. सु., ध , र. र , र. च , प्लीहाधिकारे

भाषा—तूतिया की भस्म, हींग, सुहागा (भूना हुआ) सेंधानमक, धनिया, जीरा, अजवाइन, काली मिर्च, सोंठ, लौंग, छोटी इलायची और विडङ्ग, सबको प्रत्येक १ एक तोला और सबके बराबर लोहभस्म और पारा तथा गधक ४ चार तोले लेकर पहिले पारे और गन्धक की कज्जली बनाना फिर अन्य औषधियों को बारीक पीसकर मिलादेना और घी तथा शहद के साथ इस अग्निकुमार लोह को खाना । यह यकृत्, प्लीहा, उदररोग, गुल्म और हलीमक का नाश करता है, बल और वर्ण को उत्पन्न करके जठराग्नि को प्रदीप्त करता है । कान्ति और पुष्टिको बढाता है श्रीमान् गहननाथ महाराज ने ससार के कल्याण के लिये इस को बनाया है ॥ ५८ ॥

### ५९ अग्निगर्भो रसः ( प्रथमः )

सूतं ताम्रमयोऽभ्रकं च कुटिलं
 वङ्गं विषं ताप्यकं,
कङ्कुष्ठं द्रवदं शिलाजतु शिला
 कम्पिल्लकं गन्धकम् ।
सर्वं तुल्यविभागिकं तपनतु-
 ल्यांशं दृढं मर्दितं,

कन्यावह्निवराम्लवेतसशटी-
ब्राह्म्यम्लिकाद्भिः पृथक् ॥ २५३ ॥
वारान् सप्तमितानरुष्करभव-
क्वाथेन षड्विंशतिम्,
गोजीभिश्च रसोन्मितांस्त्रिकटुक-
क्वाथेन वारान् दश ।
अर्शोघ्नस्वरसेन विंशतियुताँ-
स्तालीरसेन त्रिधा,
सर्वैरेव विभाव्य च प्रतिरसं
सिद्धोऽग्निगर्भो रसः ॥ २५४ ॥
माषैकः सुरसारसेन चपला-
क्षौद्रान्वितो वाऽभया,
क्षौद्राभ्यां च सुवर्चिकादहनयु-
ग्वा त्र्यूषणैर्वाहितः ।
वा कन्दाग्नियवानिकागुडकणा-
तालीवरीभिः शिवा-
क्षौद्राभ्यां च घृतोषणैरपि जये-
दर्शांसि सर्वाण्यपि ॥ २५५ ॥
वह्नेर्मान्द्यं प्रमेहश्रवणनयनरुक्
शूलगुल्मोदरान्ध्य,-
श्वासोदावर्तहिध्माकसनक्रिमिगणान्
पीनसाध्मानतूनीः ।
प्रत्यष्ठीलां प्रतूनीं हरति च तथा
शोथपाण्ड्वामयादीन्,
वर्ज्यं वृन्ताकतैले स्त्रियमपि च दिवा
स्वापमश्वेन यानम् ॥ २५६ ॥

रसावतारे—अर्शोऽधिकारे ।

भाषा—पारे की भस्म, अथवा शुद्ध किया हुआ पारा, ताम्र, लोह, अभ्रक, सीसा, वङ्ग, ( इनकी भस्में ) वछनाग, सोनामाखी, ( शुद्ध ) मुर्दासंग, ( शुद्ध ) सुहागा ( भुनाहुआ ), शिलाजीत, मैनसिल ( शुद्ध ), कमीला, और गन्धक ( शुद्ध ) सब को बराबर और सब के बराबर श्वेत आक की जड़ की छाल लेकर घीकुआर, चित्रक, त्रिफला, अमलवेत, कचूर, ब्राह्मी और इमली के रस ( जिस का रस न मिले उस के क्वाथ) से अलग अलग २ सात वार भावना देना । फिर भिलावे के क्वाथ से २६, गोभी के रस से ६, त्रिकटु के क्वाथ से १०, जिमीकंद के क्वाथ से २० और खजूर की ताडी से ३ भावनाएं देना। यह सिद्ध अग्निगर्भ रस है। इस की मात्रा १ मासा है । इस का अनुपान तुलसी का रस, पीपल और शहद, हरड और शहद; कालानमक और चित्रक, त्रिकटु, जिमीकंद, चित्रक, अजवाइन, गुड़, पीपल, ताडी और शतावरी का चूर्ण, अथवा आवले का चूर्ण और शहद, अथवा घी और त्रिकटु है । यह सभी प्रकार के अर्श, मन्दाग्नि, प्रमेह, कान और आंख की पीडा, शूल, गुल्म, उदररोग, अंधेरी, दमा, उदावर्त, हिचकी, कृमिरोग, पीनस, पेट का फूलना, तूनी, प्रत्यष्ठीला, प्रतूनी, शोथ और पाडुरोग को नष्ट करता है इस के सेवन करनेवाले को, वैगनका शाक, तेल, स्त्री, दिन मे सोना और घोडे की सवारी विलकुल छोड देनी चाहिये ॥ ५९ ॥

### ६० अग्निगर्भो रसः ( द्वितीयः )

रसगन्धौ समौ ताभ्यां द्विगुणं हरितालकम् ।
गुञ्जारसेन त्रिदिनं मर्दयेत्खल्वमध्यतः॥२५७
तत्समं ताम्रपात्रं च तेन कल्केन लेपयेत् ।
अधोमुखं तु तत्पात्रं यामयुग्मं पचेच्छनैः २५८
वालुकापूर्णयन्त्रे तु ताम्रेण सह मर्दयेत् ।
गुञ्जाद्वयमितो हन्याज्ज्वरांश्च विषमानपि २५९
अग्निगर्भो रसो ह्येष ससितो विषमापहः ।
स्वीयानुपानैरपि वा तुलसीरससंयुतः ॥२६०॥

रसावतारे, ज्वराधिकारे—

भाषा—पारा और गन्धक बराबर और इन दोनों से दूनी हरिताल लेकर गुञ्जा का रस मिले तो रस नहीं तो क्वाथ से खरल मे घोटना फिर उसके बराबर वजन की तांबे की कटोरी लेकर

उपरोक्त कल्क भीतर से पोत देना। उस कटोरी पर एक ढक्कन दे कर २–३ कपड मिट्टी देकर सुखाके उल्टी रखके २ पहर वालुका यन्त्र मे मन्द अग्निसे पकाना। फिर उस तांबे की कटोरी सहित उस को पीस लेना इस की मात्रा २ रत्ती भर है यह अग्निगर्भ रस विषमज्वरो को भी नष्ट करता है इस का अनुपान मिश्री, तुलसी का रस अथवा जो कुछ अवस्थाके अनुसार समझा जावे ॥६०॥

## ६१ अग्निगर्भा वटी.

शुद्धं रसं पलं ग्राह्यं गन्धकं द्विपलं भवेत्।
लोहं टङ्कं वचां कुष्ठं रामठं त्रिकटुं निशाम् २६१
रसार्धभागमानेन सर्वमेकत्र भावयेत्।
मानोल्वघंटाकर्णानां त्रिफलानां रसेन च २६२
गुञ्जाषट्कप्रमाणेन वटिका परिनिर्मिता।
अग्निगर्भेयमुदिता प्लीहगुल्मोदरापहा॥२६३॥
शूलघ्नी याकृतं हन्यादष्ठीलां कामलामपि।
हलीमकं च पाण्डुत्वं कृमिकुष्ठविनाशिनी २६४
चन्द्रनाथेन गदिता रसमङ्गलभूषिता।
आनाहकासशमनी व्रणविस्फोटनाशिनी २६५
सङ्ग्रहग्रहणीं हन्याच्छ्लेष्मदोषोद्भवामपि।
लवङ्गयोगः कर्तव्यो महाग्निदायिनी मता २६६

र र, र. च, उदराधिकारे

भाषा—शुद्धपारा ४ तोले, गन्धक ८ तोले, लोह, सुहागा, वच, कूठ, हींग, त्रिकटु और हल्दी ये सब पारे से आधे प्रमाण में लेकर सब का चूर्ण कर लेना। फिर मानकद ( मराठी कासाळू ), जिमीकद, और व्याघ्रनखी ( हिंदी–वघनहा, मराठी–वाघाण्टी ) और त्रिफला के रस अथवा क्वाथ से अलग अलग भावनाए देना। फिर ६ छः रत्ती की गोलिएं बना लेना। यह अग्निगर्भावटी, प्लीहा, गुल्म, उदररोग, शूल, यकृत्, अष्ठीला, कामला, हलीमक, पाण्डु, कृमी और कुष्ठ को नष्ट करती है। यह श्रीचन्द्रनाथ जी महाराज ने ( रसमङ्गल ग्रन्थ मे ) कही है। यह आनाह, खासी, व्रण, फोड़ा और कफदोष से जनित सग्रहणी को नष्ट करती है। इस के साथ ३ मासा लवगका चूर्ण देना चाहिये। यह जठराग्नि को बहुत प्रदीप्त करती है ॥ ६१ ॥

## ६२ अग्निजननीवटी

रसगन्धकनागरटंकणकं
गरलं मरिचं समभागयुतम्।
लकुचस्वरसैश्चणकप्रमिता
गुटिका जनयत्यचिरादनलम्॥२६७॥

र सु., वै. क., र० र० स०, भै. र., अग्निमान्द्याधिकारे। भैषज्यरत्नावल्या टकणादिवटीति नाम योजितमस्ति।

भाषा—पारा, गन्धक, सोठ, सुहागा, वछनाग और कालीमिर्चे, सब को बराबर लेकर वड़हल के रस मे घोट कर चने के बराबर गोलियें बनालेना। ये गोलियें, जल्दी जठराग्नि को प्रदीप्त करती है ॥ ६२ ॥

## ६३ अग्नितुण्डीवटी

शुद्धसूतं विषं गन्धमजमोदां फलत्रिकम्।
स्वर्जिक्षारं यवक्षारं वह्निसैन्धवजीरकम्॥२६८॥
सौवर्चलं विडङ्गानि सामुद्रं त्र्यूपणं तथा।
विषमुष्टिं सर्वसमां जम्बीराम्लेन मर्दयेत्।
मरिचाभां वटीं खादेद्वह्निमान्द्यप्रशान्तये २६९

ना वि., नू क, र सि, र. क. ल, र सा., र. म., भै र, र क., र. क यो, वै चिन्तामणौ (कालाग्निरुद्रेति नाम वाताधिकारे) र सु, शा., र. प्र सु, वै. र, र र., भै. सा., चि. र., टो., र च., र प्र, वसवराजीये ( अग्निमान्द्यवटी ) सा वटी वल्लयुगला सेविता जयति ध्रुवम्। वह्निमान्द्यमजीर्णं च विसूची ग्रहणीगदम्॥ शूल कोष्ठगत वातरोगानन्याश्च नाशयेत्। शूल सर्वाङ्गज वापि शूल च परिणामजम्॥ आमवात विशेषेण हन्ति तत्त्व शिवोदितम्। पथ्या शुण्ठी गुड धानु पलार्धं भक्षयेत्सदा॥ इत्यधिकः पाठो रसेंद्रकल्पद्रुमे।

रसावतार मा., रसायनस., अग्निमान्द्याधिकारे। अग्नितुण्ड्याः सम्प्रदायानुसारेणाग्निमान्द्यार्शोविकारक-

मिषु प्रायो वैद्यवराः प्रयोगं कुर्वन्ति, तत्रार्शः कृमिविकारयोर्विषमुष्टिशब्देन महानिंबबीजानि ग्राह्याणि, अग्निमान्द्ये कुचिलेति प्रसिद्ध द्रव्यमिति रहस्यम् ।

भाषा—शुद्धपारा, बछनाग, गन्धक, अजमोद त्रिफला, सज्जी, यवक्षार, चित्रक, सेंधानमक, जीरा कालानमक, विडङ्ग, समुद्रलवण और त्रिकटु सबको बराबर और सबके बराबर कुचिला लेकर जम्बीर के रस मे घोटना फिर कालीमिर्च के बराबर गोलियें बना लेना। इस गोली को खाने से मन्दाग्निरोग दूर होता है । कुचिलेका विशेषशोधन किया जाय तो इसकी ३ रत्ती तक की गोली बनाके दे सक्ते हैं पर जब केवल कुचिले के छिल के मात्र ही निकालना शुद्धि अभीष्ट हो तो मरिच जितनी ही गोली बस है इसी लिए रसेन्द्रकल्पद्रुममें ६ रत्तीकी मात्रा लिखी है पर जब वकायन के बीज डाल के बनानी हो तो २ रत्ती की गोली बस है ॥ ६३ ॥

## ६४ अग्निदीपनीवटी

गन्धकं मरिचं शुण्ठी सैन्धवं यवजं नवम् ।
निम्बूरसेन वटिका चणमात्राऽग्निदीपनी ॥२७०

नि. र., र. सु., अर्शसि ।

भाषा—गन्धक, कालीमिर्च, सोंठ, सेंधानमक और नया यवक्षार सब को बराबर लेकर नींबू के रस मे घोटकर चने के बराबर गोलिएं बना लेना। यह गोली जठराग्नि को प्रदीप्त करती है ॥ ६४ ॥

## ६५ अग्निप्रदो रसः

कर्षौ द्वौ रसगन्धयोस्तु समयोः
संमर्द्य नागस्य च,
कर्षैकेण विषेण कज्जलनिभं
काचस्य कूप्यां क्षिपेत् ।
लिप्त्वा कर्पटमृत्स्नया सुविधिना
संपाच्य यामाष्टकं,
ज्ञात्वा शीतलमत्र जातविधिना
मर्द्य द्विकर्षोषणैः ॥
भक्षेद्रक्तिकमिक्षुशर्करयुतं
नाम्ना रसोऽग्निप्रदो,
मन्दाग्निक्षयसन्निपातमरुतां
नाशाय चायं वरः ॥ २७१ ॥

र. प्र. सु., अग्निमान्द्ये ।

भाषा—पारा, गन्धक, सीसा और बछनाग, प्रत्येक एक तोला लेकर सब को घोटकर कज्जली कर के शीशी में डालकर बाहर से कपडमिट्टी कर के ८ पहर तक वालुका यन्त्र मे पकाना । स्वाग शीतल होने पर २ तोले त्रिकटु मिलाकर बारीक पीस लेना। एक रत्ती भर ईखके रस अथवा शक्कर के साथ खाने से यह अग्निप्रद रस मन्दाग्नि, क्षय, सन्निपात, और वातरोगों का नाश करने के लिये उत्तम है ॥ ६५ ॥

## ६६ अग्निप्रभावटी

सैन्धवं नरसारं च यवक्षारं तथा विडम् ।
मर्दयेद्रससिन्दूरं पटोलमूलजे रसैः ॥ २७२ ॥
माषमानां वटीं कृत्वा छायाशुष्कां समाचरेत् ।
प्रातः प्रातः पाययेत्तां कोकिलाक्षाम्भसा समम्
॥ २७३ ॥
यकृद्रोगं महाघोरं प्लीहानमतिदारुणम् ।
वाताष्ठीलां वह्निमान्द्यं गुल्मं चैषा व्यपोहति

आ. वि., यकृद्रोगाधिकारे । ॥ २७४ ॥

भाषा—सेंधानमक, नोसादर, यवक्षार, विडनमक, और रससिन्दूर, सबको बराबर लेकर पटोलकी जड़के रससे भावना देकर उड़दके बराबर गोलियें बनाकर छायामे सुखा लेना । रोज सुबहको तालमखानेके पञ्चाङ्गके क्वाथ के साथ इस गोलीको देना। यह गोली घोर यकृत् रोग, दारुणप्लीहा, वाताष्ठीला, मन्दाग्नि और गुल्मरोगोंको नष्ट करती है ६६

## ६७ अग्निमुख चूर्णम् ( बृहत् )

द्वौ क्षारौ चित्रकं पाठा करंजं लवणानि च ।
सूक्ष्मैला पत्रकं भार्गी क्रिमिघ्नं हिङ्गुपौष्करम् ॥
२७५ ॥
शुण्ठी दार्वी त्रिवृन्मुस्तं वचा चेन्द्रयवास्तथा ।

वृक्षाम्लं जीरकं धात्री श्रेयसी चोपकुञ्चिका ॥
अम्लवेतसमम्लीका यवानी देवदारु च ।
अभयातिविषा श्यामा हपुषारग्वधं समम् ॥२७७
तिलमुष्ककशिग्रूणां कोकिलाक्षपलाशयोः ।
क्षाराणि लोहकिट्टं च तप्तं गोमूत्रसेचितम् २७८
सूक्ष्मचूर्णानि कृत्वा तु समभागानि कारयेत्
मातुलुङ्ग रसेनैतद्भावयेद्दिवसत्रयम् ॥ २७९ ॥
दिनत्रयं तु शुक्तेन तथार्द्रकरसेन च ।
अत्यग्निकारकं चूर्णं प्रदीप्ताग्निसमप्रभम् ॥२८०
उपयुक्तं विधानेन नाशयत्यचिराद्गदान् ।
अजीर्णमथ गुल्मांश्च प्लीहानं गुदजानि च२८१
अष्ठीलामन्त्रवृद्धिं च वातरक्तं तथोदरम् ॥
भ्रणुदत्युल्बणान् दोषान् नष्टमग्निं प्रदीपयेत्२८२

यो. म., वृ. मा , र. र. क , नि. र , भा. प्र., ना वि ,

भाषा—सज्जीक्षार, यवक्षार, चित्रक, पाठा, करज, पाचों नमक, छोटी इलायची, तमालपत्र भारङ्गी, वायविडग, हींग, पोहकरमूल, सोंठ, दारुहल्दी, निसोत, नागरमोथा, वच, इन्द्रजव, कोकम, जीरा, आवला, गजपीपल, कलोंजी, अमलवेत, अमली, अजवायन, देवदार, हरड, अतीस, काली निसोत, हाऊबेर, अमलतास, और तिल, मोखा, सहजन, तालमखाना और पलाश इनके क्षार, गोमूत्रमें तपाकर बुझाया हुआ मण्डूर, सबको बराबर लेकर बारीक चूर्ण करलेना फिर तीन २ दिनतक विजोरेका रस, सिरका, और अदरख के रस की भावनाएँ देना । यह वृहदग्निमुख चूर्ण अग्नि को अत्यन्त बढानेवाला तथा साक्षात् जलती हुई अग्नि के समान दीप्तिमान् है विधिपूर्वक उपयोग मे लाया हुआ रोगों को शीघ्र नष्ट करता है। अजीर्ण, सम्पूर्णगुल्म, प्लीहा, बवासीर, उदर के रोग, अन्त्रवृद्धि, अष्ठीला, वातरक्त तथा अन्य बढेहुए दोषों को नष्ट करता है और अग्नि को प्रदीप्त करता है ॥ ६७ ॥

## ६८ अग्निमुखताम्रम् ।

गन्धकेनाक्षमात्रेण सूततुल्येन निर्मिता ।
कज्जली या तया लेप्यं ताम्रपत्रं तु तत्समम्२८३
अर्जुनत्वग्रसैः सार्धं पक्वोदुम्बरपल्लवैः ।
आच्छाद्य पञ्चलवणै श्चूर्णैश्चापि च मृन्मये २८४
अन्धमूषागतं ध्मातं तत्सिद्धं भक्षयेन्नरः ।
निहन्ति रक्तिकावृद्ध्या माषमात्रप्रयोगतः२८५
अम्लपित्तं क्षयं शूलं जरत्पित्तं सुदारुणम् ।
सप्तरात्रप्रयोगेण शरीरं निर्मलं भवेत् ॥२८६॥

र. र., र. च., अम्लपित्ताधिकारे । अग्निमुखताम्रे सूतगन्धककज्जलीं विधायार्जुन क्वाथेन पिष्टिमापाद्य पक्वोदुम्बरपल्लवैस्ताम्रमावेष्टय मृत्पात्रे पञ्चलवणचूर्णमध्ये आच्छादितं कृत्वा तदुपरि गौध ( चूर्ण ) सम्पुट विधाय दृढ निरुध्यान्धमूषतां सम्पाद्य ध्मापयित्वा भस्म सम्पादयेत् ।

भाषा—१ तोला पारा और १ तोला गन्धककी कज्जली वनाकर, अर्जुनवृक्षकी छालके रस अथवा क्वाथमे घोटकर, २ तोले ताम्रके पत्रपर लेपकर पके हुए गूलरके पत्ते लपेटकर कच्चे सूतसे लपेटके मिट्टीके वर्त्तनमे पाचो नमक और चूनेके वीचमे क्रमसे रखकर अन्धमूषामे रख कर भाथीसे धोंकना जब सिद्ध हो जाय तब निकालकर १ रत्ती की मात्रासे प्रारम्भ करना और रोजाना एक १ रत्ती वढाकर १ मासा तक पहुंचाना चाहिये। यह रस अम्लपित्त, क्षय, शूल, और दारुण पक्तिशूलको नष्ट करता है । सात रात्रि तक इसका प्रयोग करने से शरीर निर्मल हो जाता है ॥ ६८ ॥

## ६९ अग्निमुखमण्डूरम् ।

पलद्वादशमण्डूरं गोमूत्रेऽष्टगुणे पचेत् ।
पञ्चकोलं देवदारु मुस्तं व्योषं पलत्रयं ॥२८७॥
विडं च पलमात्रं तु पाकान्ते चूर्णितं क्षिपेत् ।
पाययेच्छाणमात्रं तु तक्रेण सह बुद्धिमान् ॥
असाध्यं श्वयथुं हन्ति पाण्डुरोगं चिरोद्भवम् ।
मण्डूरोऽग्निमुखो नाम सर्पिः क्षौद्रेण सेव्यताम्
॥ २८९ ॥

भै. र., ध., शोथाधिकारे । पलमात्रमिति प्रत्येकमित्यध्याहार्यम् ।

तद्बीजपूरस्य रसेन मर्दितं
गोलं हि कृत्वा वसनेन वेष्टयेत्॥६४५॥
मृदा सुलिप्तं परिशोषितं च
शरावयोः सम्पुटयेच्च वह्नौ।
चूर्णीकृतं वल्लमितं च भुक्तं
स्याद्रोगराजस्य निकृन्तनं हि६४६

र. प्र. सु., राजयक्ष्मणि.

भाषा—मोती, मूगा, पारा, और गन्धक इन सब को बराबर लेकर बिजोरे के रस मे घोटकर गोला बना लेना उस गोले को बारीक कपड़मिट्टी करके सुखा लेना फिर दो शरावो के बीच मे रखकर अग्नि मे पका लेना। ठढा होनेपर उसका बारीक चूर्ण कर लेना इस को ३ रत्तीभर खानेसे राजयक्ष्मा नष्ट होता है॥ १६३ ॥

## १६४ अमरसुन्दरः

सूतभस्म दरदं विशोधितं
तालसत्वमिति चैकभागिकम्।
गन्धकं च सममत्र मर्दितं
भृङ्गराजरसकेन यत्नतः॥६४७॥
काकमाचिजरसैश्च मर्दितं
कुक्कुटाख्य पुटपञ्चकेन हि।
पाचितं हि सितया समं सदा
सेवितं सकलरोगघातकम्॥६४८॥

र. प्र. सु., र. म मा., अतिसारज्वरादौ।

भाषा—पारे की भस्म, शिंगरफ, शुद्ध हरताल की भस्म और गन्धक इन सब को बराबर लेकर भागरे के रस से और काकमाची के रस से भावना देना और कुक्कुट पुट मे पकाना ऐसे ५ वखत करना फिर इस को मिश्री के साथ खानेसे सभी रोग नष्ट होते है॥ १६४ ॥

## १६५ अमरसुन्दरीगुटी ( प्रथमा )

अकसतरुविमानाः सूतकं तत्त्रिनिघ्नं,
मृतपरिमिथहेम षोडशांशं प्रयुक्तम्।
युगपदरविकल्पास्तोयघृष्टं विपक्वं,
गुलितममरनाम्ना सुन्दरी स्याद्वटीयम्॥६४९
मासमेकं तु वक्त्रस्था गुटिका दिव्यरूपदा।
सर्वसिद्धिप्रदा प्रोक्ता जरामृत्युविनाशिनी६५०
सङ्ग्रामे विजयी वीरो जायते नात्र संशयः।
गुटिकेयं समाख्याता नाम्ना ह्यमरसुन्दरी ६५१

रसेन्द्रम.,

टि० अत्र नामैकदेशग्रहणे नाममात्रग्रहणमिति न्यायमङ्गीकृत्य अ. क. स. त रु. वि. मा. ना. इत्येतदक्षरैः अभ्रक, कान्त, सूत, तार्क्ष्य ( वा ताम्र, ) रजत, विद्रुम, माणिक्य, नागाः क्रमेणग्रहीतव्याः तत्र अ. र. वि कल्पाः इत्येतैः सदृशा अर्थात् अभ्रक, कान्त, सूत, तार्क्ष्य ( ताम्र ) रजत, विद्रुम, नागा युगपद्ग्राह्या अर्थात् एकैकभागा ग्रहीतव्याः। माणिक्य सूतकं च त्रिघ्न त्रिगुणं कर्तव्यम्। अर्थादेतयोस्त्रयस्त्रयोभागा ग्रहीतव्याः इति रहस्यम्। "मृतपरिमथहेमषोडशाशप्रयुक्तम्." इति परि सर्वतः मथ्नाति साधकान् इतिकर्तव्यतादिङ्मूढान् करोतीति परिमथ पारदस्येव यशदस्य अग्निस्थायिताकरणे वादिनां दुष्करत्वेन तस्य परिमथमिति नाम। परिमथश्च हेम चेति समाहारद्वन्द्वे मृतश्च तत्परिमथहेम चेति कर्मधारयाद्यथाकथाञ्चित्सिद्धिः। आयुर्वेदे औषधसमाहारद्वन्द्वस्य विकल्पस्वीकारमन्तरा गत्यन्तराभावात्। मृते यशदसुवर्णे षोडशांशे योज्ये। अत्र गुटिकायाः प्रमाणविशेषस्याविद्यमानत्वेऽपि उत्तरगुटिकाया गुञ्जाभिः कृतवन्वेतिविशेषप्रमाणरूपस्य विद्यमानत्वेनात्रापि तदेवानुसर्तव्यमथवा यावता प्रमाणेन मुखे स्थापन सुखावह स्यात्तया कर्तव्यमिति निष्कर्षः।

भाषा—अभ्रक १ भाग, कान्तलोह १ भाग, पारा ३ भाग, तावा ( अथवा सोनामाखी ) १ भाग, चादी १ भाग, प्रवाल ( मूगा ) १ भाग, माणिक्य ३ भाग, जस्त $\frac{1}{16}$ भाग, और सोना $\frac{1}{16}$ भाग, सब की भस्मै लेकर पानी मे घोटकर अन्धमूषा मे पकाकर १ गोली बना लेना इस गोली

का नाम अमर सुन्दरी गुटी है। इस दिव्यगोली को एक महीने तक मुख मे रखने से ( इस को रोज मुख मे रखना भोजन और स्नान आदि आवश्यक कार्य और सोते वक्त इस को मुख मे से निकाल लेना शेष समय मे रख लेना ) मनुष्य का रूप दिव्य होजाता है यह गोली सब सिद्धि देती है बुढापे को और मृत्यु को नष्ट करती है इसके खाने से मनुष्य बड़ा वीर और लडाई मे विजय पाने वाला होता है। इस मे कुछ भी सन्देह नहीं। यह अमर सुन्दरी गुटी ससार के हित के लिये सिद्ध लोगोंसे प्रकट की गई है ॥ १६५ ॥

### १६६ अमरसुन्दरीगुटी ( द्वितीया )

अकसतरुविमानाः सुरविंशद्विघ्नविंशैः स्यात् ।
गुञ्जाभिः कृतबन्धा गुटिका ह्यमरसुन्दरी नाम्ना
वक्त्रस्था बहुकालं विजयति विश्वं न संदेहः ।
आस्यस्थैकं मासं वलीपलितनाशनं कुरुते ॥

रसेन्द्रम,

भाषा—अभ्रक भस्म ३२ रत्ती, कान्तलोहभस्म २० रत्ती, पारा ४० रत्ती, तावा भस्म ( अथवा सुवर्ण माक्षिक ) २० रत्ती, चादीभस्म २० रत्ती, मूगाभस्म ४० रत्ती, माणिक्य भस्म २० रत्ती और सीसाभस्म ३ रत्ती लेकर पानी मे घोटकर एक गोली बनाकर अन्धमूषा मे पका लेना। इस गोली को देरतक मुख मे रखने से मनुष्य विश्व विजयी हो जाता है। और १ महीने तक मुख मे रखने से बली पलित रहित हो जाता है॥ १६६ ॥

### १६७ अमरसुन्दरीगुटी ( तृतीया )

कान्ताभ्रसत्त्वहेमतारं चार्कः समांशतः सर्वे ।
बद्धं सूतं समांशं ध्मातं गोलं कृतं खोटम् ॥
बाह्ये रसेन लिप्तं वदनगतं शस्त्रवारकं रोगान् ।
हन्ति हि शरीरसंस्थान्-
नाम्नाऽमरसुन्दरी गुटिका ॥ ६५५ ॥

र. ह., रसायने।

भाषा—कान्तलोह, अभ्रक, सोना, चादी, तावा और बंधा हुआ पारा सबका गोला बनाकर फूंक कर खोट बना लेना बाहर से पारा लपेट देना। इस अमर सुन्दरी गोली को मुख मे रखने से शस्त्रोंका निवारण होता है और यह सभी रोगो को नष्ट करती है ॥ १६७ ॥

### १६८ अमरेन्द्ररसः

शुद्धौ गन्धकटङ्कणौ रससमौ भागद्विकं दन्तिकम्
भृङ्गोत्थैश्च विमर्दितं रसवरं यामांश्च वेदोन्मितान्
ताम्बूलीरसमर्दितं नवदिनं मुद्गप्रमाणान्वितं,
भक्ष्यं तीक्ष्णतरज्वरप्लुपहरं पैत्तादिदाहापहम्
नानाशूलहरं च गुल्महरणं दध्यन्नभुक्तं क्रमात्,
प्रख्यातस्तरुणज्वरौघदलनः श्रीपूज्यपादोदितः

र. क यो.,

अथ पाठः त्रिनिष्क शुद्धजैपालमिति रामबाणाख्यरसादभिन्न एव प्रतिभाति। अत्र केवलो विषाभावः सोऽपि लेखकप्रमादाद् व्यपगतो जातइत्यपि सम्भवति ॥

भाषा—शुद्ध गन्धक और शुद्ध सुहागा प्रत्येक १ भाग, और गोदन्ती २ भाग इनको मिलाकर ४ पहर तक भागरे के रस मे घोटना फिर नो दिन तक पान के रस मे घोटना और मूग के बराबर इस की मात्रा खिलाना यह रस भयानक ज्वर और पित्तादि से उत्पन्न दाह, अनेक प्रकार के शूल और गुल्मरोगको नष्ट करता है। इस के सेवन करनेवाले को धीरे २ दही और भातका आहार बढाना चाहिये। यह श्री पूज्यपाद का बताया हुआ जवानों के प्रचण्ड ज्वरों को नष्ट करने वाला ( अमरेन्द्र ) रस है ॥ १६८ ॥

टि०—यह रस "त्रिनिष्क शुद्ध जैपाल" इत्यादि से कहा गया रामबाण रस ही है ऐसा ज्ञात होता है केवल वछनाग का भाग लिखने वाले की भूल से रह गया हो ऐसा सम्भव है।

## १६९ अमरेश्वरो रसः

पारदाद् द्विगुणं गन्धं मर्दयेन्मसृणावधि।
सूरणस्य प्रदातव्या रसेन मुनिभावनाः ६५७
शङ्खसेहुण्डधुत्तूरवराटलघुशङ्खकान्।
अग्निद्वयहरिणशृङ्गवज्रीसैन्धवसम्भवान् ६५८
क्षारान् गन्धमितान् दत्वा
द्रव्याणीमानि मिश्रयेत्।
वज्रक्षारं त्रिकटुकं सूरणं वंशरोचना ॥६५९॥
भल्लातं चित्रकं चेति प्रत्येकं गन्धतुल्यकम्।
एकविंशतिसंख्याभिर्भावयेदमरेश्वरम् ६६०
द्विगुञ्जं घृतसंयुक्तं खादेदर्शो निवृत्तये।
मण्डलान्नाशयेत्सत्यं सिद्धयोग उदाहृतः ६६१

र. को., अर्शोऽधिकारे।

भाषा—पारा और उस से दूना गन्धक लेकर कज्जली बनालेना और जमीकद के रस से ७ भावना देना। फिर शख, थूहर, धतूरा, कौडी, छोटे शख, चित्रक भिलावा हरिण का सींग, अंगुलिया थूहर और सेधानमक इनके क्षारों को प्रत्येक गन्धक के बराबर मिलाकर घोटना। फिर थूहर का क्षार, त्रिकटु, जमीकंद, बशलोचन, भिलावा और चित्रक प्रत्येक को गन्धक के बराबर डालना और सूरण के रस की २१ भावना देना। इसकी २ रत्ती की मात्रा घी के साथ खानी चाहिये। इससे अर्शरोग १ मण्डल (२१ दिन) मे नष्ट होता है। यह सिद्धयोग है॥ १६९॥

## १७० अमृतकलानिधिः

मुक्तगन्धसहितं रसं शुभं
बीजपूरकरसेन मर्दयेत्।
गोलकं च कुरु वेष्टयेत्ततो
मृत्स्नया लवणमिश्रया दृढम् ॥६६२॥
शोषयेच्च पुटयेच्च यत्नतो
जायते ऽमृतकलानिधीरसः।
राजयक्ष्मविनिवृत्तये रसं
योजयेच्च गदितानुपानतः ॥ ६६३ ॥
पूर्णचन्द्रवदिमं नियोजये-
दन्यरोगविनिवृत्तये रसम्।
सर्वरोगविनिवृत्तये च तं
रोगयोगसहितं नियोजयेत् ॥ ६६४ ॥

र. दी., र च, राजयक्ष्मणि।

भाषा—मोती, गन्धक और पारा इन तीनों को बराबर लेकर बिजोरे के रस से भावना देना फिर नमक मिली हुई मिट्टी से कपडमिट्टी करके सुखा कर अग्नि मे उस को पुट देना यह अमृतकलानिधिरस बनेगा। यथोचित अनुपान के साथ राजयक्ष्मा को नष्ट करने के लिये इस का उपयोग करना। अन्य रोगों मे भी पूर्ण चन्द्र की तरह इस का उपयोग कर सक्ते है। जिस रोग मे जिस योग के साथ इस का उपयोग लाभकारी हो सक्ता है। वहा उसी के साथ इस का उपयोग करना॥ १७०॥

## १७१ अमृतकल्पवटी.

शुद्धौ पारदगन्धौ च समानौ कज्जलीकृतौ।
तयोरर्द्धं विषं शुद्धं तत्समं टङ्कणं भवेत्॥६६५॥
भृङ्गराजद्रवैर्भाव्यं त्रिदिनं यत्नतः पुनः।
मुद्गप्रमाणा वटिका कर्तव्या भिषजांवरैः६६६
वटीद्वयं हरेच्छूलमग्निमान्द्यं सुदारुणम्।
अजीर्णं जरयत्याशु धातुपुष्टिं करोति च ६६७
नानाव्याधिहरा चेयं वटी गुरुवचो यथा।
अनुपानविशेषेण सम्यग्गुणकरी भवेत् ६६८

र स., र. च, अग्निमान्द्ये।

भाषा—शुद्धपारा और शुद्धगन्धक इनको बराबर लेकर कज्जली बनालेना फिर पारे के बराबर शुद्ध बछनाग और उतना ही सुहागा मिलाकर तीन दिनतक भागरे के रससे भावना देना फिर उसकी मूगके बराबर गोलिये बना लेना। इसकी दो गोलिये शूल, मन्दाग्नि और भयानक अजीर्ण को हरती है और धातुओं को पुष्ट करती है। यह गोली विशेष २ अनुपान के साथ सभी रोगो को

नष्टकर के गुण करती है गुरुके वचन की तरह यह गोली यथार्थ गुणकारी है ॥ १७१ ॥

## १७२ अमृतगर्भः

प्रत्येकं दशगद्याणाः शुद्धगन्धकसूतयोः ।
विंशत्या चार्कदुग्धस्य द्वयं पिष्ट्वा दिनत्रयम् ॥
त्र्यहं सेहुण्डदुग्धेन शरावस्थं च तं पुटेत् ।
भूधराख्ये च यन्त्रे वै क्रमाद्देयं पुटाष्टकम् ६७०
ततः खल्वे तु सम्पिष्य सूक्ष्मं चूर्णं विधीयते ।
श्रीखण्डेन च पथ्यानां देयाः सप्तैव भावनाः
मरिचानां जलेनाथ दद्याच सप्तभावनाः ।
भावनाभावितं चूर्णं तोलयेत्तत्समानकम् ६७२
वत्सनाभविषं दत्वा श्रीखण्डेन च भावयेत् ।
आकाशवल्याश्र रसैर्भावनास्तावतीस्ततः ६७३
खल्वे पिष्ट्वा ततः सूक्ष्मं काचकूप्यां क्षिपेत्सुधीः।
नाम्ना ह्यमृतगर्भोऽयं कीर्तितो रसवित्तमैः ६७४
द्विगुञ्जामात्रकश्चाऽयं गद्याणैका च शर्करा ।
सर्वरोगेषु दातव्यः समं शीतेन वारिणा ॥ ६७५
वातशूले तथा पार्श्वशूलेऽथ परिणामजे ।
वातज्वरे च मन्दाग्नौ ह्यजीर्णे श्लेष्मजामये
पीनसे चामवातेषु वातश्लेष्मादिके गदे ६७६

रस चि , र क., शूले ।

भाषा—शुद्धगन्धक ५ तोले और उतनाही शुद्धपारा लेकर १० तोले आक के दूध से ३ दिन तक भावना देना और तीन दिन तक थूहर के दूध से भावना देना फिर २ सरावों के बीच मे रखकर भूधरयन्त्र से अग्नि मे पुट देना ऐसे ८ पुटें देकर खरल मे उसका वारीक चूर्ण वना लेना चन्दन और हरड़ तथा लालचन्दन के क्वाथ की सात ७ भावनाए देना ( अथवा दोनों को मिलाकर सात भावना देना ) फिर कालीमिर्च के क्वाथ से ७ भावना देना फिर चूर्ण के वरावर वछनाग मिलाकर सात वार चन्दन के क्वाथ से और ७ वार आकाशवेल के रस से भावना देना और वारीक पीसकर शीशी मे भर देना । श्रेष्ठ रसविद्या के विद्वानोंने इस रस का नाम अमृतगर्भरस वताया है इस की २ रत्ती मात्रा ३ माशे शक्कर के साथ दी जाती है ऊपर से थोडासा ठढा पानी पीना चाहिये । यह रस सभी रोगों मे दिया जाता है । वातशूल, पार्श्वशूल, परिणामशूल, वातज्वर, मन्दाग्नि, अजीर्ण, कफ के रोग, पीनस, आमवात और वात तथा कफ से होनेवाले रोगो में यह अत्यन्त हितकर है ॥ १७२ ॥

## १७३ अमृतपालो रसः

रसगन्धामृतानां तु गोलं कृत्वाऽम्बुयोगतः ।
तले भाण्डस्य संस्थाप्य तथोर्ध्वं ताम्रपत्रिकाम्
अधोमुखीं निरुध्याथ दिनं दीपाग्निना दहेत् ।
ताम्रपात्रोदरस्थं तं मृद्गीयादतियत्नतः ६७८
सैन्धवार्द्रकनीरेण मुखं जिह्वां विलिप्य च ।
अम्भसावल्लमात्रन्तु दत्वा प्रावृणुयान्नरम् ॥
स्वेदोद्गमः स्याद्यामोर्ध्वं ततो ज्वरविमुक्तये ।
एवं तु त्रिदिनं कृत्वा ज्वरान्मुक्तो भवेन्नरः ।
पथ्यं तक्रोदनं देयं जीर्णे च तरुणे तथा ६८०

टो , ज्वराधिकारे ।

भाषा—पारा, गन्धक और वछनाग इन को वरावर लेकर पानी मे घोटकर गोला वना लेना फिर हाडी के वीचमे रखके ऊपर तावे की लोटी रखकर सन्धि वन्ध कर के हडी के मुह पर ढकन देकर कपडमिट्टी करके सुखा लेना फिर १ दिन दीपाग्निसे पकाना ठढा होने पर तावे के पत्र और उस के भीतर के रस को वारीक पीस लेना । सेधानमक और अदरख का रस मिलाकर पहिले जिह्वा और मुखको अच्छी तरह चुपड लेना । फिर इस रसकी ३ रत्ती की मात्रा रोगी को देकर गरम कपडे एकदम ओढा देना । एक पहर के वाद खूव पसीना आवेगा इसी प्रकार ३ दिन तक करने से ज्वर बिलकुल ही नष्ट हो जावेगा । इस

प्रयोग मे छाछ और चावल का भात पथ्य है चाहे ज्वर और रोगी जीर्ण ( वृद्ध ) हो अथवा युवावस्था मे हो ॥ १७३ ॥

### १७४ अमृतप्राशः

यथोत्तमं स्वर्णरजः समानं,
ब्राह्मीवचाकुष्ठशिवारजश्च ।
आयुः प्रहर्षंबलमङ्गपुष्टिं,
क्षौद्राज्यलीढं कुरुते शिशूनाम्॥६८१॥
लो. प., ( लो स, )

भाषा—उत्तम स्वर्णका चूरा, ब्राह्मी, बच, कूठ और हरड इनका चूर्ण, घी और शहद के साथ चटाने से बालकों की आयु, प्रसन्नता, बल और अगपुष्टि बढती है ॥ १७४ ॥

### १७५ अमृतभल्लातकः

भल्लातकानां पवनोद्धतानां
तरुच्युतानां च यदाऽऽढकं स्यात् ।
घृष्टेष्टिकाचूर्णकणैर्जलैश्च
प्रक्षाल्य संशोष्य च मारुतेन ॥ ६८२ ॥
शुष्काणि तानि द्विदलीकृतानि
विपाचयेदप्सु चतर्गुणासु ।
तत्पादशेषं पुनरेवशीतं
क्षीरेणतुल्येन विपाचयेत्तत् ॥ ६८३ ॥
घृतांशयुक्तेन घनं यथा स्या-
त्तदर्धया शर्करयाभिकीर्णम्
सत्र्यूषणं त्रैफलचन्द्रमास्य
स्त्रिवृच्च वांशी खदिरामृतं च ॥ ६८४ ॥
सचन्दनाऽऽकल्लकणाकवावं
सदेवपुष्पं मुशलीद्वयञ्च ।
कङ्कोलमोचाद्वयदीप्यपुग्मं
नतं समातङ्गकणा विदारी ॥ ६८५ ॥
जातीफलं मुस्तकजातिपत्र्यौ
कुबेरजीरागुरुसाब्धिशोपम् ।
मेदाद्वयं लोहरसेन्द्रवङ्ग
मभ्रं तथा कुङ्कुमकञ्च कर्षम् ॥ ६८६ ॥
तत्सप्तरात्रादतिजातवीर्यं
सुधारसादप्यधिकं वदन्ति ।
प्रातः प्रबुद्धः कृतदेवकार्यो
मात्रां भजेत्सात्म्यशरीरयोग्याम् ॥६८७॥
न चानुपाने परिहार्यमस्ति
न चातपेनाऽध्वनिमैथुने च ।
यथेष्टचेष्टो विचरेत्प्रयोगा-
न्नरोभवेत्काञ्चनराशिगौरः ॥ ६८८ ॥
अनेन विद्वान् नरसिंहवीर्यो
दृढेन्द्रियो वीतगदः सुबुद्धिः ।
दन्ता विशीर्णाः पुनरेव दिव्याः
केशाश्च शुभ्राः पुनरेव कृष्णाः ॥ ६८९ ॥
नीलाञ्जनालिप्रतिमा भवन्ति
त्वचोविशीर्णाः पुनरेव भव्याः ।
विशीर्णकर्णाङ्गुलिनासिकोऽपि
कृम्यर्दितो भिन्नगलोऽपि कुष्ठी ॥६९०॥
शुष्कः पुनः स्याद्धतमूलशाख-
स्तरुर्यथा भाति नवाम्बुसिक्तः ।
बृहस्पतेरप्यधिको हि बुद्ध्या
ग्रन्थं विशालं च नवं करोति ॥ ६९१ ॥
गृह्णाति सद्यो न च विस्मृतिं च
करोति कल्पायुरनल्पवीर्यम् ।
कुर्वन्निमं कल्पमनल्पबुद्धि-
र्जीवेन्नरो वर्षशतं सुखी स्यात् ॥ ६९२ ॥
पा व, यो. र, बृ यो. त, रसायनाधिकारे ।

भाषा—जोर की हवा लगने से वृक्ष से झडे हुए भिलावों को बटोर कर ४ शेर लेना । ईंटके छोटे २ टुकडे और पानी के साथ उनको खूब मलकर वृन्त निकालकर धोकर सुखा लेना । फिर उन को फाडकर दोदल अलग करके चौगुने जल मे पकाकर चतुर्थांश शेष रहने पर छान लेना । फिर ठंढा होने पर आठ सेर दूध और २ सेर घी मिलाकर अग्नि पर चढाना और कडछे से चलाते रहना जब वह गाढा ( खोवा ) होकर अच्छी तरह भुन-

जावै तव २ सेर शक्कर डाल देना फिर उसमे त्रिकटु त्रिफला, कपूर, जटामासी, निशोत, वंशलोचन, खैरसार, चदन, अकरकरा, पीपल, कवावचीनी, लौंग, दोनों प्रकार की मुसली, ककोल, मोचरस, दोनों अजवाइन ( देशी और खुरासानी ) गजपीपल, विदारीकंद, जायफल, नागरमोथा, जावित्री, नन्दीवृक्षकी छाल, जीरा, अगुरु, समुद्रशोष, मेदा, महामेदा, लोह, पारा और वङ्ग इनकी भस्म और केसर इन सबको १ एक तोले मिलालेना और सातदिनतक उसको रहने देना यह अमृत से अधिक गुणकारी वन जावेगा ऐसा आचार्य लोग कहते हैं। सवेरे उठकर नित्यकर्म करके इस रस की पचसकने योग्य मात्रा लेना। इसके लिये अनुपान पथ्य धूप मे चलना और मैथुन करना इत्यादि का कोई परहेज नहीं है। इसको खाकर मनुष्य जैसी इच्छा हो वैसा काम करे इसका गुण कम न होगा। और मनुष्य का शरीर स्वर्ण पर्वत के समान चमकने लगेगा। इस के सेवन करने से मनुष्य विद्वान्, सिंह के सदृश वलवान् मजवूत इन्द्रियोंवाला और बुद्धिमान् होता है हिलते हुए दांत दृढ होते हैं, पके हुए वाल फिर से काजल और भौंरे के सदृश हो जाते हैं। लटकी हुई खाल वली रहित हो जाती है। जिस के कान, अंगुली और नाक गलगये हैं और जिस के शरीर मे कीटे पड गये हों ऐसा कोढी भी इस से फिर अच्छा हो जाता है। इस के सेवन से सूखा हुआ भी मनुष्य सूखे वृक्ष की जड मे पानी डालने से वह हरा भरा होजाता है वैसे ही तरुणता को प्राप्त होजाता है। और वृहस्पति के वरावर बुद्धिवाला होकर बडे २ ग्रन्थों को जल्दी पढ लेता है इच्छा होने पर स्वतन्त्र नवीन ग्रन्थको वना सक्ता है। पढे हुए ग्रन्थों को फिर कभी नहीं भूलता और वलवान् होकर शतायु हो जाता है। इस रसायन का कल्प करके मनुष्य सुखसे १०० वर्ष जीता है॥१७५॥

## १७६ अमृतभस्मसूतः ।

लोहस्य पात्रे त्रिदिनं रसेन्द्रं
गन्धेन तुल्यं त्रिफलाजलेन ।
विमृद्य ताम्रस्य पुटे निविष्टं
मृदा च संलिप्य पुटेत पश्चात् ॥ ६९३ ॥
फलत्रयं भृङ्गकृशानु शुण्ठी
वचासिता वाकुचिकाशताह्वा ।
भल्लातगन्धाश्ममयूरतुत्थ
विषाणि चैतानि समानि कुर्यात् ॥६९४॥
पूर्वोक्तसूतं तु कलाप्रमाणं
प्रक्षिप्य संसेवय वत्सरार्धम् ।
कान्तोत्थपात्रे त्रिफलाजलेन
कुष्ठं लयं यात्यपि रोगसङ्घः ॥ ६९५ ॥
पञ्चाङ्गनिम्बेन मधुत्रयेण
सेवेत यद्वा गदितं रसेन्द्रम् ।
षण्मासयोगेन लयं प्रयाति
कुष्ठं प्रभूतं गतनासिकादि ॥ ६९६ ॥
तदाततं वाकुचिकाफलैश्च
श्वित्राख्यरोगस्य निवर्हणाय ।
भल्लाततैलं हरितालभस्म
युक्तं निषेवेत सुयुक्तितोऽपि ॥६९७॥
र. दी.,

भाषा—पारा और गन्धक वरावर लेकर त्रिफला के साथ तीन दिन तक लोहे के खरल मे घोटकर तांवे की डिब्बी मे रखकर वाहर से कपडमिट्टी करके उसको पुट देदेना। फिर त्रिफला, भागरा, चित्रक, सोंठ, वच ( दोनों प्रकार की देशी और खुरासानी ) वाकुची, शतावरी, भिलावा, गन्धक, नीलाथोथा और वछनाग सव को वरावर लेकर पीसकर उपरोक्त पुट दिया हुआ पारा $\frac{1}{16}$ मिलाकर इस को कान्तलोह के वर्तन मे त्रिफला का क्वाथ करके उस के साथ खानेसे ६ महीने मे कुष्ठ नष्ट होता है। नीम का पञ्चाङ्ग ( पुष्प, पत्र, फल, बीज और छाल ) शहद, घी और शक्कर के साथ ६

महीने तक इस का प्रयोग करने से कोढी के नासिका इत्यादि गिरे हुए अङ्ग अच्छे हो जाते है। वाकुची के फल अथवा भिलावे का तेल और हरतालभस्म के साथ इस के प्रयोगसे श्वित्र कुष्ठ नष्ट होता है ॥ १७६ ॥

## १७७ अमृतमञ्जरी ।

हिङ्गुलं च विषं चैव कणामरिचटङ्कणम् ।
जातीकोषं समं सर्वं जम्बीररसमर्दितम् ६९८
रक्तिमानां वटीं कुर्यादार्द्रकद्रवसंयुताम् ।
वटीद्वयं त्रयं खादेत्सन्निपातं सुदारुणम् ६९९
अग्निमान्द्यमजीर्णं च सामवातं सुदारुणम् ।
उष्णतोयानुपानेन सर्वान् व्याधीन्नियच्छति ॥
कासं पञ्चविधं श्वासं सर्वाङ्गग्रहमेव च ।
जीर्णज्वरं क्षयं चैव हन्यादमृतमञ्जरी॥७०१॥

र स, र सु., र. च. कासे ।

भाषा—सिंगरिफ, बछनाग, पीपल, कालीमिर्च सुहागा और जायफल इन सब को बराबर लेकर जम्बीर के रस से बारीक घोटना फिर अदरखका रस मिलाकर एक २ रत्ती की गोलिये बना लेना इस की मात्रा २ अथवा ३ गोलिये है। भयानक सन्निपात, मन्दाग्नि, अजीर्ण और आमवात मे गरम जलके साथ इसको खाने से उपरोक्त सभी रोग नष्ट हो जाते है। यह अमृतमञ्जरी गोली ५ प्रकार की खासी, दमा, अगों की जकड, जीर्णज्वर और क्षय को भी नष्ट करती है ॥ १७७ ॥

## १७८ अमृतमण्डूरो रसः

मण्डूरस्य पलान्यष्टौ शतावर्या रसं तथा ।
क्षीराज्यं दधि प्रत्येकं पिष्ट्वा पलचतुष्टयम् ॥
यावत्पक्वं, तदुत्तार्य निष्कैकं भोजयेत्सदा ।
प्रातः सायं सदा खादेत् पक्तिशूलप्रशान्तये ॥
वातजं पित्तजं मिश्रममृताख्यो हि मृत्युजित् ।

र. र, परिणामशूले ।

भाषा—मण्डूर ३२ तोले, शतावरी का रस ३२ तोले दूध, घी और दही ( गायका ) हरएक १६ तोले लेकर सब मे मण्डूर को बारीक घोटकर कड़ाही मे पकाना । जब पकजाय तब सवेरे और शाम ४ चार माशे खिलाने से परिणामशूल वातज, पित्तज और सन्निपातज शूल भी नष्ट हो जाते है और मनुष्य उपरोक्त रोगो से होनेवाली मौत से भी बच जाता है। इस का नाम अमृतमण्डूर है ॥ १७८ ॥

## १७९ अमृतरसः

कर्षद्वयं गन्धकस्य तदर्धं पारदस्य च ।
त्रिकटु त्रिफला मुस्ता विडङ्गं चित्रकं तथा ॥
एषां सञ्चूर्णितानाञ्च प्रत्येकं तु पलं क्षिपेत् ।
एकनिष्कप्रमाणं तु लिह्यात्तन्मधुसर्पिषा ७०५
शीतोदकं चानु पिबेद्गव्यमाजं पयोऽथवा ।
अम्लपित्तं चाग्निमान्द्यं परिणामभवं तथा ॥
कामलां पाण्डुरोगं च हन्यादमृतको रसः ॥

रसचिं, अम्लपित्ते ।

भाषा—गन्धक २ तोला, पारा १ तोला और त्रिकटु, त्रिफला नागरमोथा, विडङ्ग और चित्रक इन को प्रत्येक ४ चार तोले डालकर खूब घोटना इसकी ४ मासे की मात्रा घी और शहद के साथ लेनी चाहिये । ऊपर से ठढा पानी, गाय अथवा बकरीका दूध पीना चाहिये । यह अम्लपित्त मन्दाग्नि, परिणामशूल, कामला और पाण्डुरोग को हरता है इसका नाम अमृत रस है ॥ १७९ ॥

## १८० अमृतरसायनम् ।

गोमूत्रशुद्धं विषमूलमुत्तमं
धात्रीहतं कान्तमयोऽभ्रमाक्षिकम् ।
तारं च वङ्गं रसभस्म हेमजं
प्रत्येकशः कर्षयुगप्रमाणकम् ॥ ७०७ ॥
विश्वं नतं चन्दनयुग्मखादिरौ
वलाश्वगन्धा मुशली शतावरी ।
प्रत्येकशो राममिताक्षमानकं
धात्रीशिलाधन्वनतालमूलिकाः ॥ ७०८ ॥

शतावरीशाल्मलिका गुडूचिका-
श्यामाविदारीकिरिवृद्धदारुकाः ।
रसैरमीषां क्रमशो विभाव्य त-
द्विधाय माषोन्मितिकां वटीं भिषक्॥७०९॥
सद्वैद्यैरमृतरसायनं रसोऽयं
सम्प्रोक्तो विविधरुजां विनाशहेतुः ।
वर्णौजःप्रदमचिराद्रसायनं च
सेवित्वा ह्यमितबलं जना लभन्ते॥७१०॥
शुक्रं वर्धयति क्षयं क्षपयति
क्षीणाङ्ग पुष्टिप्रदः,
दुःसाध्यां ग्रहणीं तथाऽप्यतिसृतिं
दूरीकरोत्याशितः ।
क्लीबानां पुरुषत्वदो विषयिणां
संस्तम्भको रेतसः,
भुक्त्वैनं मधुशर्कराघृतयुतं
वृद्धो युवत्वं व्रजेत् ॥ ७११ ॥
स्वीयानुपानैरथवा तत्तद्रोगहरो ह्ययम् ।
देशकालग्रहीतॄणां नास्त्यत्र नियमःकचित्७१२

नू क,

भाषा—अच्छी तरह गोमूत्र मे शुद्ध किया हुआ विषमूल ( वछनाग ), आवले के रस से मारा हुआ कान्तलोह, लोहभस्म, अभ्रकभस्म, सोनामाखी चादीभस्म, वंगभस्म, पारद और सोने की भस्म ये सव प्रत्येक १ तोला, सोंठ, तगरगंठोला, दोनों चंदन, खैरसार, खरेटी, असगन्ध, मुसली और शतावरी ये सव प्रत्येक ३ तीन तोले लेकर, आवला, मैनासिल, धामन, तालमूली, शतावरी, सेमर कामुसला, गिलोय, प्रियङ्गु, विदारीकंद, वाराहीकद, विधारा, इन के रस अथवा क्वाथ से क्रम से ( प्रत्येक से ) भावना देना और उड़द के बराबर गोलिये बना लेना । अच्छे वैद्योंने इस रस का नाम अमृतरसायन रक्खा है। यह रस अनेक प्रकार के रोगो का नाश करता है। वर्ण और ओज को देता है जल्दी से बुढापे का नाश करता है । इस को सेवन करने वाला मनुष्य अपार बलसे युक्त होता है। यह रस वीर्य को बढाता है, क्षयरोग का नाश करता है, क्षीण अंगोंको पुष्ट करता है दुःसाध्य संग्रहणी और अतिसार को दूर करता है, नपुसक भी इस के सेवन से पुरुषत्व का उपभोग करता है । विषयी लोगों के लिये यह बडा स्तम्भन करने वाला है । घी, शक्कर और शहदके साथ इसको खाने से बूढा भी जवान हो जाता है और उचित अनुपान के साथ इस का सेवन किया जाय तो यह सभी रोगों को नष्ट करता है । देश काल और किसी प्रकार की रोगों की अवस्था इसके लिये अपेक्षित नहीं है ॥ १८० ॥

## १८१ अमृतरसायनम्
## ( विषरसायनम् )

गोमूत्रशुद्धामृतकर्षमाहरे-
त्तथैव तारार्कभवं शिवाहतम् ।
रक्तोत्पलाभं शिववीर्यमद्भुतं
घृतादिसंशोधितहिङ्गुलं क्षिपेत् ७१३
प्रत्येकतः कर्षयुगं सुचूर्णकं
व्योषाच्चतुर्जातकचित्रमूलकात् ।
निष्पिष्य निष्पिष्य विभावयेदथो
वरीविदारीक्षुरचित्रमूलजैः ॥७१४॥
कृत्वाऽस्यगुञ्जाद्वयमानयुक्ताः
वटीरनेकामयनाशिनीस्ताः ।
तत्सेवनाद्वर्णबलायुरोजो
रेतांसि वृद्धिं नियतं लभन्ते॥७१५॥
संदीप्यते ऽग्निर्ग्रहणी विसूची
तथातिसारश्च विनाशमेति ।
भुक्त्वा वटीं तां ललनासु सक्तो
वृषायतेस्तम्भितवीर्यसारः ॥७१६॥

नू क.,

भाषा—गोमूत्र मे शुद्ध किया हुआ वछनाग १ तोला, पारा और गन्धक से मारी हुई चादी और वैसा ही तावा एक १ तोला, रससिन्दूर २ तोले, घृतादि से शोधा हुआ शिंगरिफ २ तोले, (भिलावा, मालकागनी और निमौली प्रत्येक ८ तोले लेकर

इन का कल्क करके कडाही मे नीचे और ऊपर रखकर बीच मे शिंगरिफ २ तोले को रख देना और ऊपर से घी और शहद प्रत्येक ६४ तोले डालकर नीचे से मंदी आंच देना। जब आग ऊपर आकर घी और शहद सब जलजाय तब बीच का शिंगरिफ निकाल लेना इस प्रकार यह शोधा जाता है) सबको मिलाकर चूर्ण कर लेना फिर त्रिकटु, चातुर्जात, चित्रकमूल, शतावरी, विदारीकद, तालमखाना और लाल चित्रक के क्वाथ से अलग अलग भावना देना । और २ दो रत्ती की गोलियें बना लेना। यह गोली अनेक रोगों का नाश करनेवाली है और बल, वर्ण आयु, ओज और वीर्य को बढाती है तथा जठराग्निको प्रदीप्त करती है संग्रहणी, हैजा और अतिसार को नष्ट करती है इस गोली को खाकर पुरुष सांड के सदृश स्त्रियों मे आसक्त होता है । और उसके वीर्य का स्तम्भन भी होता है॥ १८१ ॥

### १८२ अमृतरसेन्द्रोरसः ।

शुद्धपारदमादाय विषेण सह मर्दयेत्
दिनत्रयं प्रयत्नेन पादांशेन रसस्य तु॥७१७॥
जम्बीराम्लसमायुक्तं मातुलुङ्गरसेन वा ।
ततस्तं पातनायन्त्रे चोर्द्ध्वमुत्पातयेद्रसम् ७१८
पुनश्चानेन विधिना मर्दयित्वाऽथ पातयेत् ।
कुर्यादित्थं पातनादि दशवारांस्त्वतः परम् ॥
कलांशं जारयेत्स्वर्णं विषचुल्लिकयोगतः ।
जम्बीराद्यम्लयोगेन मर्दनेनैव जारयेत्॥७२०
ततोऽमृतजले गन्धं सप्तकृत्वो विभावयेत् ।
तं दानवेन्द्रं सूतेन्द्रे जारयेत्क्रमशः शनैः ॥
षड्गुणं च ततः क्षारै रुक्मलोहभवै रसम् ।
मर्दयेदतियत्नेन तस्य निर्यासतश्च वै॥७२२॥
ततः सोमानले यन्त्रे रसेन्द्रं तं निवेशयेत् ।
अथवा कच्छपे यन्त्रे ततोऽग्निं ज्वालयेत्क्रमात्॥
दिनपञ्चकमाहृत्य स्वाङ्गशीतं ततो नयेत् ।
निर्भिद्य यन्त्रं गृह्णीयाद्भस्मीभूतं रसेश्वरम् ॥

भस्मसूतस्य पादेन सिद्धं ताम्रं विनिःक्षिपेत् ।
सर्वदोषविनिर्मुक्तं वान्तिभ्रान्त्यादिवर्जितम् ॥
दैत्येन्द्रं वत्सनाभेन भावितं सूतसाम्यतः ।
क्षिप्त्वा तत् त्रितयं खल्वे मर्दयेद्विषवारिणा ॥
तत्र शौण्डी च मरिचं शुण्ठी चैव पृथक् पृथक् ।
रससाम्येन संदद्याद्विषं रससमांशतः ॥७२७॥
दद्यात्तु देवकुसुमं रससाम्येन तत्र वै ।
तत्सर्वं मर्दयेद्यत्नाद्दिनत्रयमतन्द्रितः ॥७२८॥
रक्तच्छागस्य पित्तेन चाभावे मेषकस्य वै ।
वनकासरजैः पित्तैः नीलकण्ठभवैस्तथा ७२९
रोहिताप्चरजैः पित्तै रोहितोत्थैश्च हारिणैः ।
इत्येवमाद्यैः संमर्द्य कृष्णसर्पभवैर्विषैः॥७३०॥
भावयित्वा वटीः कुर्यान्मरिचस्य प्रमाणतः ।
छायाशुष्कास्ततः कृत्वा भैरवं पूजयेत्ततः ॥
योगिनीसहितं पश्चाद्वटीं यत्नेन धारयेत् ।
सन्निपाते प्रवृद्धे तां वटिकां तत्र योजयेत् ॥
व्योषार्द्रकरसैर्युक्तां तदेव ह्यनुपाययेत् ।
सिञ्चेच्छिरसि तोयानि सुशीतानि बहून्यपि॥
यावत्सञ्जायते कम्पः सर्वाङ्गीणोऽस्य रोगिणः
ततः पश्चात्प्रदातव्यं पथ्यं दधिसमन्वितम् ॥
इक्षुखण्डादियोगश्च सर्वोऽप्यत्र विधीयते ।
ग्रहण्यां वटिकां खादेदेकैकां च दिनेदिने ॥
त्रिमासाभ्यन्तरे हन्ति ग्रहणीरोगमुद्धतम् ।
सर्वज्वरविकारेषु वटीमेकां प्रयोजयेत्॥७३६॥
मुस्तापर्पटजं क्वाथमनुपानेच पीयते ।
क्षयरोगे च धारोष्णसहितां सम्प्रयोजयेत् ॥
कुष्ठेषु खदिरक्वाथैर्वाकुचीबीजसंयुताम् ।
सर्वार्शसां विकारे तु कुटजारुष्करैर्युताम् ७३८
भगन्दरे गिरिजतुसहितां सम्प्रयोजयेत् ।
प्रमेहेष्वथ सर्वेषु व्योषवासकसंयुताम् ॥७३९॥
पाषाणभेदसंयुक्तामश्मरीषु नियोजयेत् ।
प्लीहगुल्मविकारे तु शङ्खक्षारेण संयुताम् ॥
कणगुग्गुलुलोहैश्च पाण्डुरोगान्निवारयेत् ।
उदरोत्थविकारेषु करभीक्षीरसंयुताम् ॥७४१॥

जयपालरजोभिर्वा संयुक्तां विनियोजयेत्।
मन्दाग्नौ वटिका देया केवलैव सुबुद्धिना ७४२
विसूचिकायां दातव्या वटिका व्योषसंयुता।
एतस्याभ्यासयोगेन वलीपलितजिन्नरः ७४३
वत्सरद्वितयेनैव सर्वरोगाञ्जयेन्नरः।
निम्बूरसेन संयुक्ता रुचकेन समन्विता॥७४४॥
इत्थं नियोजितः सूतः सर्वान् रोगान् विनाशयेत्
त्रिवर्षाभ्यन्तरे हन्ति दौर्गन्ध्यं देहसम्भवम्॥
चतुर्हायणयोगेन न विषेण विपद्यते॥
स्थाणुना जङ्गमेनापि कृत्रिमेणापि वा पुनः।
इत्येषोऽमृतसूतेन्द्रो विषकल्पनिरूपितः।
सम्प्रदायान् मया लोकहितायात्र प्रकाशितः॥
दृष्टप्रभावः सर्वेषां रोगाणां विनिवारणे॥

रसाल,

भाषा—शुद्ध पारे को लेकर उसके बराबर बछनाग मिलाकर पारे के $\frac{}{४}$ जम्बीर के अथवा बिजोरे के रस मे ३ दिनतक घोटना फिर ऊर्ध्व-पातन यन्त्र से पातन करना इसी प्रकार फिर मर्दन करके पातन करना। दसवार ऊर्ध्वपातन करके उस में $\frac{३}{१६}$ सोना डालकर विषमुष्टी के योग से और जम्बीर आदि के योग से केवल घोटकर जारित करना फिर पारे से षड्गुण गन्धक लेकर बछनाग के रस अथवा क्वाथ से ७ वार भावना देना। उस गन्धक को धीरे २ पारे मे जारित करना फिर रुक्मलोह की भस्म और बछनाग के रस अथवा क्वाथ से भावना देना फिर उस पारे को सोमानल यन्त्र मे अथवा कच्छपयन्त्र मे रखना उसके नीचे ५ दिन तक क्रम से मन्द, मध्य, तीक्ष्ण अग्नि जलाना फिर स्वागशीतल होनेपर अलग निकालकर यन्त्र को तोड़कर भस्म हुए पारे को निकाल लेना। फिर वान्ति भ्रान्ति आदि सब दोषों से रहित तांबा पारे की भस्म से $\frac{३}{४}$ उस मे मिलाना और पारे के बराबर बछनाग मिलाना आर सबको खरल मे डालकर बछनाग के क्वाथ से भावना देना। फिर गज पीपल, कालीमिर्च, सोंठ, सब को मिलाकर पारे के बराबर उस मे मिलाना और लोंग भी पारे के बराबर मिलाकर ३ दिन तक घोटना फिर लाल बकरा या मेंढा, जंगली भैंसा नीलकण्ठ रोहू ( मछली विशेष ) हरिण विशेष तथा काले साप के पित्तों से अलग २ एक एक दिन भावना देना और कालीमिर्च के बराबर गोलियें बना लेना और उन को छाया मे सुखाना फिर योगिनियों के सहित भैरव की पूजा करके स्वच्छ वर्तन मे गोलियों को रख देना। सन्निपातज्वर बहुत बढा हुआ हो तब उन गोलियो को त्रिकटु के रस मे मिलाकर देना और ऊपर से उसी का रस पिलाना और रोगी के सिर पर खूब ठंढे पानी की धार तब तक देना जब तक उस का सारा शरीर कापने न लग जाय फिर उस को दहीभात का पथ्य देना इस रस के खाने मे ईख के टुकडे रोगी को देने चाहियें। संग्रहणी मे इस रस की एक एक गोली रोज खानी चाहिये तीन महीने के भीतरही असाध्यप्राय संग्रहणी भी अच्छी हो जाती है, सभी प्रकार के ज्वरों मे इसकी एक एक गोली देनी चाहिये और नागरमोथा तथा पित्तपापडे का क्वाथ अनुपान देना चाहिये। क्षयरोगवालों को धारोष्ण दूधके साथ यह गोली देनी चाहिये। कुष्ठ रोग मे खैर के क्वाथ के साथ तथा बाकुची के बीजों के साथ देनी चाहिये। सब प्रकार की बवासीर मे यह रस कुटज ( कुडा ) और भिलावे के बीज के साथ देना चाहिये। भगन्दर मे शिलारस ( शिलाजीत ) के साथ देना चाहिये। सम्पूर्ण प्रमेहों मे त्रिकटु और अडूसे की जड़ के साथ देना चाहिये। अश्मरी ( पथरी ) रोग मे पाषाणभेद के साथ प्लीहा और गुल्मरोग मे शखक्षार ( शंखभस्म ) के साथ, पाण्डुरोग मे पीपल, गुग्गुलु और लोहभस्म के साथ, पेट के विकारों में ऊंटिनी के दूध अथवा शुद्ध जमालगोटे के चूर्ण के साथ, मन्दाग्नि मे

केवल गोली देना और हैजे मे त्रिकटु के साथ इस को देना । जो मनुष्य नीबू का रस और रुचक ( एक प्रकार का काला नमक ) मिलाकर इस गोली को रोज खाता है वह दो वर्ष मे ही बली पलित से रहित हो जाता है। तीन वर्ष मे उस के देह की दुर्गन्धि दूर हो जाती है । चार वर्ष तक इस गोली को खानेवाले को कभी विष ( स्थावर-जंगम ) नहीं लगता ( सांप इत्यादि काटे तो भी नहीं मरता ) यह अमृत सूतेन्द्र रस विषकल्प मे बताया है हमने सम्प्रदाय से लोकहित के लिये प्रकाशित किया है । सभी रोगों को नष्ट करने मे इस का प्रभाव प्रत्यक्ष देखा गया है ॥ १८२ ॥

### १८३ अमृतलोहः

अमृता त्रिवृता दन्ती श्रावणी खदिरो वृषः ।
चित्रको भृङ्गराजश्च कोकिलाक्षः सपुष्करः ॥
पुनर्नवा बला कासशिग्रुमोरटदारुकाः ।
स्नुह्यरुष्कौ शरो दर्भः कुशः शृङ्खलिका वरी॥
गवाक्षी वरुणः कन्दश्चविका तालमूलिका ।
कणामूलं नागबला कुष्ठं ब्राह्मणयष्टिका ७५०
पलोन्मितानि चैतानि जलद्रोणे विपाचयेत् ।
अष्टभागावशिष्टं तु कषायमुपकल्पयेत्॥७५१॥
त्रिफलायास्तथा प्रस्थं जलाष्टगुणपाचितम् ।
तस्मादष्टावशिष्टस्तु कषायस्तु परिस्रुतः ७५२
शिलया निहतस्यापि पुटितस्य यथाविधि ।
अयसश्चूर्णितं पूतं पलषोडशसम्मितम् ॥७५३॥
पलान्यभ्रस्य चत्वारि तावन्ति गन्धकस्य च ।
द्वे पले च रसस्यापि शोधितस्य विधानतः ॥
गुडस्य च पलान्यष्टौ सिताया वाऽथ पैत्तिके ।
रक्तपित्तेऽथ खण्डस्य मत्स्यण्ड्या वाऽपिकार्षिकैः
गुग्गुलोर्द्विपलं दत्वा प्रस्थार्धं सर्पिषस्तथा ।
एवं पाकविधिज्ञस्तु पचेल्लोहं समाहितः ॥
शीतेऽवतार्य मधुनः क्षिपेदष्टपलं भिषक् ।
माक्षिकस्य विशुद्धस्य द्विपलं रजसः क्षिपेत्॥
शिलाजतु तथा शुद्धं पलार्धं सम्मितं पृथक् ।
अथैषां प्रक्षिपेच्चूर्णं पलमात्रं पृथक् पृथक् ॥
त्रिकटु त्रिफला दन्ती त्रिवृता जीरकद्वयम् ।
गायत्रीसारतालीसौ धान्यकं मधुयष्टिका ॥
पूतं रसाञ्जनं शृङ्गी चित्रकं तान्तवस्रुतम् ।
चातुर्जातककङ्कोलं लवङ्गं जातिकाफलम् ॥
द्राक्षाखर्जूरकं चूर्णं पलार्धसम्मितं पृथक् ।
एषो लोहवरः श्रीमान् सर्वव्याधिप्रणाशनः॥
यत्रयत्र प्रयुञ्जीत तत्तदाशु विनाशयेत् ।
अम्लपित्ते रक्तपित्ते क्षये कुष्ठे ज्वरेऽरुचौ ॥
दुर्नाम्नि चोदरे शूले ग्रहण्यां चामवातके ।
वातरक्ते मूत्रकृच्छ्रे प्रमेहे शर्करागदे ॥७६३॥
अस्योपयोगान्मनुजस्तारुण्यमधिगच्छति ।
ब्रह्मचर्येण कुर्वीत प्लुतं माक्षिकसर्पिषा ॥७६४
माषकं रक्तिकावृद्ध्या यावदष्टौ च माषकान् ।
वर्जयेद्द्विदलं सर्वं मांसं चानूपसम्भवम्॥७६५
ककारपूर्वकं सर्वं प्रयत्नेन विवर्जयेत् ।
अमृताख्योऽवलेहोऽयं सर्वत्रैवोपयुज्यते ॥
अनेन जन्तवः स्वस्था भवन्तीति विनिश्चितम्॥

र. र., र. सु., र. का., यो म., रक्तपित्ताधिकारे ।

भाषा—गिलोय, निशोत, दन्ती, गोरखमुण्डी, खैरसार, अडूसा, चित्रक, भांगरा, तालमखाना, पुष्करमूल, पुनर्नवा, बला, कास ( कुशके सदृश घास ) सहजना, मोरट, ( लता करज ) देवदारु, थूहर, भिलांवा, सरकडा, डाभ, कुश, शृंखलिका, ( हडजोड या जोडतोड ) शतावरी, इन्द्रायण, वरुण सूरण, चव्य, कालीमुसली, नागबला, पीपलामूल, कूठ और पलाश इन को प्रत्येक चार चार तोले लेकर १६ सेर पानी मे क्वाथ बनाना। जब अष्टमांश पानी बचजाय तब एक सेर त्रिफला को अठगुने पानी मे उबालकर जब सेर भर पानी रह जाय तब उस को छान कर उपरोक्त क्वाथ मे मिला देना फिर मैनसिल से मारा हुआ और पुट दिया हुआ लोहचूर्ण और शंखभस्म प्रत्येक बत्तीस बत्तीस तोले, अभ्रकभस्म १६ तोले, गन्धक १६ तोले, शुद्ध-

पारा ८ तोले और गुड ३२ तोले अथवा पित्तोद्भव रोगों के लिये बनाना हो तो उतनी ही गुड की जगह मिश्री डालनी चाहिये। यदि रक्तपित्तोद्भव रोगों के लिये बनाना हो तो उतनी ही मिश्री के बदले चाशनी अथवा राव मिलानी चाहिये और आठतोले गुग्गुल और ½ सेर घी मिलाना चाहिये। इस प्रकार सभी चीजों को मिलाकर इस लोह को पाकविधि जाननेवाला वैद्य सावधानी से पकावे। जब ठंढा हो जाय तब ३२ तोले शहद मिला देना फिर शुद्ध सोनामाखी का चूर्ण ८ तोले, शुद्ध शिलाजतु २ तोले और त्रिकटु त्रिफला, दन्ती, निशोथ दोनों जीरे, खैरसार, तालीसपत्र, धनिया, मुलेठी, शंख का चूना, रसोत, काकडासींगी, चित्रक, शिलाजीत, चातुर्जात, कंकोल, लौंग, जायफल, दाख और पिण्डखजूर इन को प्रत्येक ४ चार तोले और चूना ( पान मे लगाने का ) २ तोले मिलाना। यह श्रेष्ठ लोहासव रोगों को नाश करने वाला है जिस रोग मे इसका प्रयोग करो उसी का जल्दी नाश करता है। रक्तपित्त, अम्लीपत्त, क्षय, कोढ, ज्वर, अरुचि, दुर्नाम ( अर्श ) उदरशूल, संग्रहणी, आमवात, वातरक्त, मूत्रकृच्छ्र, प्रमेह, और शर्करारोग ( पथरी की विशीर्णावस्था ) इन मे इस का प्रयोग होता है। इसके उपयोगसे बुड्ढा मनुष्य भी जवान हो जाता है इस रस को घी और शहद मे मिलाकर खाना और १ मासे से १ एक रत्ती बढाना जबतक कि मात्रा आठ मासे की न हो जाय। ब्रह्मचर्य के साथ इस का सेवन करना चाहिये। इसके सेवन करने मे सभी दाल और अनूप देशमें होने वाले मृग और पक्षियों का मास तथा जिस पदार्थ मे "क" अक्षर पहिले आता है वह सब छोड देने चाहियें यह अमृतलोहावलेह है। इस का सभी जगहों मे उपयोग किया जा सकता है इस से मनुष्य निरोग हो जाते हैं इस मे कुछ सदेह नहीं है ॥ १८३ ॥

## १८४ अमृतवटी ( प्रथमा )

कुष्ठगन्धविषव्योपत्रिफलापारदैः समैः।
भृङ्गाम्बुमार्दिता मुद्गमानाऽमृतवटीशुभा ॥
अजीर्णश्लेष्मवातघ्नी दीपनी रुचिवर्धनी ७६७

र. स., र. चि., र. सु., र. चं., रसायन सं., र. का., ध, यो म., वा, अजीर्णाधिकारे।

भाषा—कूठ, गन्धक, बछनाग, त्रिकटु, त्रिफला, और पारा इन सब को बराबर लेकर भागरे के रस मे घोटकर मूग के बराबर गोलियें बना लेना यह अमृतवटी है। अजीर्ण, कफ, और वातरोग को हरती है दीपन और रुचिकर है ॥ १८४ ॥

## १८५ अमृतवटी ( द्वितीया )

अमृतवराटकमरिचैस्त्रिपञ्चनवभागकैः क्रमशः
वटिका मुद्गसमाना वातश्लेष्मत्रिदोषमानहरी॥

र. सु., र. सि, र. का., भै. र., नि. र., ज्वराधिकारे, यो. र.. नि. र. अनयो· अमृतकलानिधि इति नाम। टो. त्रिपुरभैरव नाम

भाषा—बछनाग ३ भाग, कौडीभस्म ५ भाग कालीमिर्च ९ भाग इन सब को घोटकर मूंग के बराबर गोलियें बनाना यह वात कफ और त्रिदोष को हरती है ॥ १८५ ॥

## १८६ अमृतसुन्दरो रसः

मनःशिला माक्षिकतालगन्धं
सूतं तथा खर्परमेव तुल्यम्।
सम्मर्दितं चार्द्ररसेन सम्यग्
वासारसैर्वै सुरसारसेन ॥ ७६९ ॥
आपूरितं ताम्रजपात्रमध्ये
तत्सम्पुटे वै त्रिदिनं प्रपाचयेत्।
तं स्वाङ्गशीतं हि समुद्धरेद्वै
वल्लोन्मितं तं परिभक्षयेच्च
वातोद्भवान् हन्ति समस्तरोगान्
तथा समस्तान्कफजान् विकारान् ७७०

र. प्र. सु.,

भापा—मैनसिल, सोनामाखी, हरताल, गन्धक, पारा और खपरिया सब को बराबर लेकर अदरख, अडूसा और तुलसी के रस मे घोटकर तांबे के मूपायन्त्र मे भरकर तीन दिनतक पुट देकर पकाना । ठढा होनेपर निकाल लेना इसकी मात्रा ३ रत्ती की है । यह रस वात और कफ से होने वाले सभी रोगों को नष्ट करता है ॥ १८६ ॥

### १८७ अमृतसञ्जीवनरसायनम् ।

अमृतोशीरकं निम्बं मत्स्याक्षी चाटरूपकम् ।
गोक्षुरं मुद्गपर्णी च शाल्मली च शतावरी ॥
पृथक् प्रस्थमितं छित्वा जले वसुगुणे पचेत् ।
अष्टभागावशेपे तु गुडप्रस्थं ततः क्षिपेत् ॥
वासाशतावरीधात्रीमीनाक्षीसर्पिभिः पचेत् ।
शीतले च घृते योज्यं वालयुग्मं निशायुगम् ॥
मुस्ताद्वयं शटी भार्गी श्रीखण्डद्वितयं तथा ।
त्रिजातकं त्रिकटुकं त्रिफला केसरत्रयम् ७७४
तवक्षीरी चोरकं च मुशली चाश्वगन्धिका ।
पाषाणभेदि धान्याकाटरूपं दाडिमीभवम् ॥
खर्जूरयष्टिमधुकं द्राक्षानीलोत्पलं तथा ।
कर्पूरं च शिलाधातुं सुगन्धं च पृथक् पिचुम् ॥
सर्वं सञ्चूर्ण्य यत्नेन सितां मधु च मिश्रयेत् ।
ब्राह्मणं स्वगुरून्देवानर्चयित्वा यथा क्रमम् ॥
खादितं कर्षमात्रं तु लघ्वन्नं पथ्यमाचरेत् ।
नाशयेद् बहुमूत्रं च बद्धमूत्रं प्रवाहिकाम् ॥
स्रावं सशर्कराघातं प्रमेहं सर्वदोपजम् ।
अश्मरीं मूत्रकृच्छ्रं च चिरकालोत्थितां तृपाम्॥
प्रदरं करपादाङ्गमहादाहं त्रिदोपजम् ।
रक्तपित्तं चाम्लपित्तं योनिरोगमसृग्दरम्७८०
लिङ्गदोषं शुक्रदोपं पण्ढत्वं पलितं सदा ।
रक्तोद्गारं महापैत्यं पित्तवर्णं भ्रमं तथा ७८१
कासं श्वासं पीनसं च वैवर्ण्यं क्षीणतां पराम् ।
सर्वाङ्गवातं पङ्गुत्वं धनुर्वातं च शुष्कताम् ॥
क्षयप्रदरमुन्मादमपस्मारं वलक्षयम् ।
वन्ध्यरोगं रक्तगुल्मं पक्षाघातापबाहुकम् ॥
सदालापं कोपनत्वं बुद्धिभ्रंशं व्रणादिकम् ।
सर्वज्वरहरं ह्येतत्सर्वातीसारनाशनम् ॥
इदं ब्रह्ममुखोद्भूतं सेवितश्चामृतोपमम् ॥ ७८४
वा.,

भापा—गिलोय, खस, नीमकी छाल, मछेछी, अडूसा, गोखरू, वनमूग, सेमल का मुसला और शतावरी इन सब को प्रत्येक एक एक सेर लेकर जवकुट कर के आठगुने पानी मे पकाना जब $\frac{1}{8}$ पानी रह जाय तब छान लेना। फिर सेरभर गुड और अडूसा, शतावरी, आवला और मछेछी का कल्क सोलह १६ तोले डालकर और ४ सेर घी डालकर मन्द अग्निसे पकाना जब घृतावशेप रह जाय तब छान कर दोनों खस, दोनों हल्दी, नागरमोथा, जगली मोथा, कचूर, भारङ्गी, दोनों चन्दन, त्रिजातक, त्रिकटु, त्रिफला, त्रिकेसर ( केसर, नागकेसर और कमलकी केसर ) वशलोचन, चोरक, मुसली, असगन्ध, पाषाणभेद, धनिया, अडूसा, अनारदाना, खजूर, मुलेठी, दाख, नीलोफर, कपूर शिलाजतु और गन्धक इन सब को प्रत्येक १ तोला लेकर चूर्ण करके उपरोक्त घी मे मिला देना। फिर ब्राह्मण गुरू और देवताओं को नमस्कार कर के १ तोला रोज खाना पथ्य मे हलका अन्न खाना। यह अमृत सञ्जीवन रसायन वहुमूत्र, बद्धमूत्र, प्रवाहिका, मूत्रस्राव, मूत्राघात, प्रमेह ( सभी प्रकार का ) पथरी, मूत्रकृच्छ्र, बहुत देर की उत्पन्न तृषा, प्रदर, हाथपैरों मे त्रिदोषज दाह, रक्तपित्त, अम्लपित्त, योनिरोग, रक्तप्रदर, लिङ्गदोष, वीर्यनाश, नपुंसकता, पलित, रक्तवमन, सभी पित्तविकार, भ्रमरोग, खांसी, दमा, पीनस और विवर्णता, इनका नाश करता है और सर्वाङ्गवात, पङ्गुता धनुर्वात, शोष, क्षय, प्रदर, उन्माद, मिरगी, वलक्षय, वाझपना, रक्तगुल्म, पक्षाघात, अपवाहुक, आलाप, क्रोध, बुद्धिभ्रंश, व्रण, ज्वर और अतिसार को यह नष्ट करता है। यह अमृत के समान रसायन ब्रह्मासे कहा गया है ॥ १८७ ॥

## १८८ अमृतसञ्जीवनी

सूतं गन्धकपर्ददारदमिदं वह्न्यम्बुगोलीकृतम्,
सूतांशं कनकस्य पात्रममलं सम्पाचयेत्ताम्रवत्।
सिद्धं वल्लमितं घृतोपणयुतं दुग्धौदनं भोजनं,
शुष्के रोगिणि पूर्ववद्गुणकरा पीयूपसञ्जीवनी॥

र. श, ताम्रवत्संपाचयेदित्यनेन भूधरयन्त्रे पाक सूचित ।

भाषा—पारा, गन्धक, कौड़ी और बछनाग, इन को बरावर लेकर चित्रक के रस मे घोटकर गोला वना लेना फिर पारे से ¹ सोने के वर्क मिलाकर भूधर यन्त्र मे पकाना । सिद्ध होने पर ३ रत्ती की मात्रा इस की खाना इस का अनुपान घी और कालीमिर्च है । यह अमृत सञ्जीवनी रस सूखे हुए रोगी को वलवान् वनाता है ॥ १८८ ॥

## १८९ अमृतस्रवी रसः

अभ्रभस्म रसभस्म गन्धकं
　लोहभस्म मुशली विवृद्धितः ।
शाल्मलीजरसतो गुडूचिका-
　क्वाथतश्च परिमर्दयेद्दिनम् ॥७८६
भावयेच्च त्रिफलार्द्रकन्यका-
　वह्निशिग्रुजरसैश्च सप्तधा ।
जायते इह रसोऽमृतस्रवी
　शुष्कपाण्डुविनिवृत्तिदायकः ७८७
वल्लयुग्मपरिमाणतस्त्विमं
　लेहयेतघृतमाक्षिकान्वितम् ।
शोफपाण्डुविनिवृत्तिदो भवे-
　त्सेवितस्तु यवचिञ्चिकाद्रवैः ७८८
नागराज्यजयपालकैस्तु वा
　वज्रिदुग्धपरिपक्वसर्पिपा ।
तक्रभक्तमिहभोजयेदिति
　स्निग्धमन्नमतिनूतनं त्यजेत्॥७८९

र. दी., र. क., र चं., रसेन्द्रकल्पद्रुमे त्वस्य अमृतप्रभ इति नाम।

भाषा—अभ्रक भस्म १ भाग, पारे की भस्म २ भाग, लोहभस्म ३ भाग, और मुशली ४ भाग इन को सेमल के रस और गिलोय के क्वाथ मे एक दिन घोटना । फिर त्रिफला, अदरख, घीकुंआर, चित्रक और सहजने के क्वाथ से पृथक् २ एक एक भावना देना । यह अमृतस्रवी रस, शुष्कपाण्डु को नष्ट करता है । इसको ६ रत्तीभर घी और शहद के साथ चाटना चाहिये । इमली के रस के साथ खाने से यह शोफ और पाण्डुरोग को नष्ट करता है । अथवा इस को सोंठ घी और शुद्ध जमालगोटे के साथ खाना चाहिये । अथवा थूहर के दूध मे पके हुए घी के साथ खाना चाहिये । इस के सेवन करने मे छाछ और भात खाना चाहिये । नवीन अन्न और चिकने पदार्थ छोड़देने चाहिये ॥ १८९ ॥

## १९० अमृत हरीतकी

शतावरी भृङ्गराजपुनर्नवकुरण्टकाः ।
प्रतिसप्तपलं चूर्णं जले क्वाथ्यं चतुर्गुणे॥७९०
पादशेपं कपायं तं वस्त्रपूतं समाहरेत् ।
हरीतकीफलं तस्मिन् पष्ठ्याधिकशतत्रयम् ॥
पाचयेच्छोपयेत्पश्चा त्रिंशद्दुग्धपलैः पचेत् ।
भित्वा विवर्जयेद्बीजं तद्गर्भे च क्षिपेदिदम् ॥
पट्पलौ रसगन्धौ द्वौ सुपात्रे च क्षणं पचेत् ।
उत्तार्य चालयेत्तावद्यावत्कठिनतां व्रजेत् ॥
चूर्णयित्वाऽमृतासत्त्वपलान् सप्त विमिश्रयेत्
मधुनावटिकाः कार्याः पष्ठ्याधिकशतत्रयम् ।
एकैकामभयागर्भे कृत्वा सूत्रेणवेष्टयेत् ॥
मधुभाण्डेक्षिपेत्पश्चादेकैकां भक्षयेद्दिनम् ।
शुष्कपाण्डुहरासम्यगमृताख्याहरीतकी ७९५

र. सु , वै चि., रक्तपित्ताधिकारे ।

**टि०** वहु प्रयोगेपु शुष्कपाण्डाविति प्रयुक्तं दृश्यते परं पाण्डु भेदेषु तस्य कुत्राप्युपलब्ध्यभावा द्यत्र पाण्डौ रक्तादिधातूना क्षयनिमित्तः शोषः सम्पद्यते साऽवस्था विवक्षिता प्रतीयते ।

भाषा—शतावरी, भागरा, पुनर्नवा, पीयावासा इनको प्रत्येक २८ तोले लेकर सबका चौगुनेपानीमे क्वाथ बनाना जबपानी चतुर्थांश रह जाय तब छानकर उसमे ३६० हरडे ( बडी ) डालकर पकाना जब हरडें पकजाय तब उनको निकालकर सुखालेना फिर १२० तोले दूधमे डालकर पकाना। पकजानेपर उनमेसे बीजों को निकालकर बारह तोले पारद और गन्धक की अच्छी तरह कज्जलीकरके लोहेके बरतनमे उसे गलाना गलजानेपर उतारके चलाते रहना गाढा हो जानेपर चलाते २ फिर कजली बनाके उसमे गिलोयकासत्व २८ तोले खूब बारीक पीसकर शहद के साथ ३६० गोलियाँ बनाकर एक २ हरड के भीतर डालदेना फिर उनको डोरेसे बांधदेना और कलई किये हुए या चादीके अथवा मिट्टीके वर्तनमे जमाकर भरदेना फिर ७ या १४ दिन बीतने के बाद एक २ रोज खाना । इसके सेवन से पाण्डु जनित क्षय दूर होता है ॥ १९० ॥

## १९१ अमृतरसायनम्

आयसं द्विगुणं चूर्णं त्रिफला त्रिगुणा रसात् ।
द्विरष्टगुणिते वारिण्यष्टशिष्टन्तुकारयेत् ७९६
तेन पादावशेषेण समेनाज्येन यत्नतः ।
रसेन बहुपुत्रायाः द्विगुणक्षीरसंयुतम् ॥ ७९७
लौहपात्रे मृन्मये वा पचेत्तत्सुसमाहितः ।
दिव्यौषधहतं लोहं प्रहतं सम्पुटादिभिः ७९८
पचेत्पाकविधिज्ञस्तु वह्निना मृदुना शनैः ।
अभ्रकं निहतं कृष्णं सूतकञ्च विमूर्छितम्७९९
अयसश्चार्धभागं च द्याद्यौ पाके प्रयोजयेत् ।
रसेन त्रिफला दन्ती विडङ्गं जीरकद्वयम् ८००
पलाशबीजं हपुषा चित्रकं वृद्धदारुकम् ।
लतापलाशमूलं च बृहत्पत्रं गुडत्वचम् ॥८०१
व्योषं समं ग्रन्थिकं च गुडूची तालमूलकम्।
शिग्रुमन्थौ तथा यासस्तथाच क्षीरकञ्चुकी८०२
कापालिका कलिङ्गाख्यं गन्धा निम्बयवानिकम्।
चूर्णीकृत्यक्षिपेद्यत्नाल्लोहाभ्रकसमंभिषक्।८०३॥
वातश्लेष्मप्रधानस्य संस्कृतं नागरेण च ।
निहन्ति वातसंदिग्धं कफजुष्टं तथैव च॥८०४॥
सद्योवह्निकरं ह्येतद्बलपुष्टिकरं तथा ।
रसायनमिदं दिव्यममृताख्यं परं शुभम्।८०५॥

व. से., र. का , रसायनाधिकारे

टि० द्रवद्रव्ये तु द्वैगुण्यम्–चरके

भाषा—लोहचूर्ण ३ भाग, त्रिफला ३ भाग, अभ्रक १ भाग, और पारे की भस्म १ भाग सबको लेकर १६ गुने पानी मे उपरोक्त चीजों मे से आधी डालकर उबालना जबजल चतुर्थांश रहजाय तब उस मे बराबर का घी मिलाकर और घी के बराबर शतावरी का रस और उस से दूना दूध मिला कर लोहे के अथवा मिट्टी के वर्तन मे उसे होशियारी से पकाना फिर उपरोक्त बचा हुआ आधा लोहचूर्ण, ( जो कि दिव्य औषधियों से और सम्पुट आदि से मारा हुआ है ) और उपरोक्त ही मृताभ्रक, पारदभस्म और त्रिफला, दन्ती, विडङ्ग, दोनों जीरे ( अलग २ ) ढाक के बीज, झाऊ, चीता विधारा, हस्तिकर्णपलाश की जड अर्थात् भूमिकूष्माण्ड ( अभाव मे उसी की जड ) कसाढ, तज, त्रिकटु, पिपलामूल, गिलोय, तालमूली, सहजने के बीज, अरणी, जवासा, नागदोन, सोनापाठा की गिरी, इन्द्रजव, प्रियङ्गु, नीम और अजवाईन इन सब का अलग अलग चूर्ण कर के अभ्रक और लोहे के बराबर मिला लेना । यदि यह रस किसी वात और कफ प्रधान रोगवालेको देना है तो इस मे सोठ त्रिफला के बराबर डाल देना वात मिश्रित और कफयुक्त सभी रोगोंको यह रस नष्ट करता है । अग्नि और बलके अनुसार उचित मात्रामे खाने से यह रस तत्काल ही जठराग्नि, बल और पुष्टि को बढाता है. यह परम कल्याणकारी अमृत नाम का रसायन है ॥ १९१॥

## १९२ अमृताङ्करसः

रसो गन्धस्त्रिकटुकं ग्रन्थिकं चव्यचित्रकम् ।
अमृतं लवणं तुल्यं भृङ्गस्य रसमर्दितम् ॥८०६॥
रक्तिकाद्वयमात्रेण पञ्चकासनिवारणः ।
अमृताङ्करसो नाम्ना विंशतिश्लेष्मरोगजित्८०७

वै चि, व रा, कासाविकारे।

भाषा—पारा, गन्धक, त्रिकटु, पिपलामूल, चव्य, चित्रक, वछनाग और नमक इन सब को बराबर लेकर भागरे के रस से भावना देना इसकी केवल २ रत्ती की मात्रा पाचो प्रकार की खासी को नष्ट करती है। यह अमृताङ्क रस २० प्रकार के कफ रोगों को नष्ट करता है ॥ १९२ ॥

## १९३ अमृताङ्कुरलोहः

हुताशमुखसंशुद्धं पलमेकं रसस्य वै ।
पलं लौहस्य ताम्रस्य पलं भल्लातकस्य च।८०८॥
गन्धकस्य पलं चैकमभ्रकस्य च गुग्गुलोः ।
हरीतकीविभीतक्यो श्चूर्णं कर्षद्वयं द्वयोः ८०९।
अष्टमाषाधिकान्यत्र धात्र्याः पाणितलानि षट् ।
घृतं चाष्टगुणं लौहाद् द्वाविंशत्त्रिफलाजलम् ॥
एकीकृत्य पचेत्पात्रे लौहे च विधिपूर्वकम् ।
पाकमेतस्य जानीयात् कुशलो लौहपाकवत्८११
भक्षयेत्प्रातरुत्थाय गुरुदेवद्विजार्चकः ।
रक्तिकादिक्रमेणैव घृतभ्रामरमर्दितम् ॥८१२॥
लौहे लौहस्य दण्डेन कुर्यादेतद्रसायनम् ।
अनुपानं च कुर्वीत नारिकेलोदकं पयः॥८१३॥
सर्वकुष्ठहरं श्रेष्ठं वलीपलितनाशनम् ।
पाण्डुमेहामवातघ्नं वातरक्तरुजापहम् ॥८१४॥
क्रिमिशोथाश्मरीशूलदुर्नामवातरोगनुत् ।
क्षयं हन्ति महाश्वासमत्यर्थं शुक्रवर्धनम् ॥
अग्निसन्दीपनं हृद्यं कान्त्यायुर्वलवृद्धिकृत्८१५॥
विवर्ज्य शाकाम्लमपि स्त्रियं च
सेव्यो रसो जाङ्गललावकादेः ।
शाल्योदनं षष्ठिकमाज्यमुद्गं
क्षौद्रं सिता क्षीरमिह क्रियायाम् ॥८१६॥



सात्म्यं च गुर्वादि सुबृंहणं च
शिलाजतु क्षौद्रयुतं पयश्च ।
सर्पिर्युतान् भक्षयतो विहङ्गान्
प्रपूर्यते दुर्वलदेहधातुः ॥
कलाविहीनस्तु सिते तु पक्षे
त्रिपञ्चरात्रेण यथा शशाङ्कः ॥ ८१७ ॥

पाक लक्षण यथा—

वस्त्रे निष्पीडितं सूक्ष्मे स्थूलतन्तौ घने दृढे ।
समुद्रं जायते व्यक्तं न निःसरति सन्धिभिः ॥
नच शब्दायते वह्नौ तदा सिद्धिं विनिर्दिशेत्८१८

रसायन स, भै. र., र. चिं, र. र., र. स., र. क-ध, र. का, यो. म, र. सु., कुष्टे। हुताशमुखसशुद्ध, मित्यनेन चित्रमूलकादि सशुद्ध रस योजयेदिति सूचितम्।

भाषा—चित्रकमूल प्रभृति से शुद्ध किया हुआ पारा, लोहचूर्ण, ताम्रभस्म, भिलावा, गन्धक, गूगल और अभ्रक भस्म प्रत्येक चार चार तोले, हरड और बहेडा एक एक तोले, आवला ६ तोले और ८ माशे और लोहे से अष्टगुणा घी, त्रिफला का क्वाथ १२८ तोले इन सब को इकट्ठा करके लोहे की कड़ाही मे पकाना । इसका पाक लोहपाक की तरह जानना चाहिये । लोहे की ही कडछी से चलाते रहना । प्रातःकाल गुरु देवता और ब्राह्मण की पूजा करके एक रत्ती घी और शहद में मिलाकर खाना एक रत्ती से मात्रा बढाते जाना। नारियल का पानी और दूध यथोचित समझकर इसके ऊपर अनुपान करना। यह रस सभी प्रकार के कोढ, वली और पलित को नष्ट करता है, पाण्डुरोग, प्रमेह, आमवात, वातरक्त, कृमि, शोथ, पथरी, शूल, दुर्नाम, वातरोग, क्षय और दमा को हरता है। वीर्यको बढाता है जठराग्नि को प्रदीप्त करता है हृद्य है। कान्ति, आयु और वल को बढाता है। शाक खटाई और स्त्री को छोड़कर जागल देशमे पैदा होनेवाले लवा आदि पक्षियों के मास का रस इसके सेवन करनेवाले को लेना चाहिये । शाली चावल, साठी, मूग, घी, शहद, मिश्री, दूध तथा

जो शरीर को असात्म्य ( अहित ) न हों ऐसे भारी अन्न, सभी बृहण पदार्थ, शिलाजीत, शहद डाला हुआ दूध तथा घी और पक्षियों का मास खाने से मनुष्य ऐसा पुष्ट होता है जैसे क्षीण चन्द्रमा शुक्ल पक्ष की पन्द्रह तिथियों में पुष्ट होता है । और मनुष्य के शरीर की सभी दुर्बल धातुएं बढ जाती हैं। इसका पाक ठीक बना है कि नहीं इस को इस प्रकार समझना कि एक मोटे कपडे मे पाक को डालकर बद कर के खूब निचोडना भीतर से वह गोला जैसा बन जावे वस्त्र मे से निकले नहीं और अग्नि के ऊपर रखने से कुछ शब्द न करे तो ठीक पका हुआ समझना ॥ १९३ ॥

### १९४ अमृताङ्कुरवटी

अमृतं पारदं गन्धं लोहमभ्रं शिलाजतु ।
गुञ्जामात्रां वटीं कुर्यान्मर्दयित्वाऽमृताम्भसा ॥
एषाऽमृताङ्कुरवटी पीता धात्र्यम्भसा सह ।
क्षुद्ररोगानशेषांस्तु गदान् पित्तास्रकोपजान् ॥
ज्वरं जीर्णं प्रमेहं च कार्श्यमग्निक्षयं तथा ।
नाशयेज्जनयेत्पुष्टिं कान्तिं मेधां शुभां मतिम् ॥

भै. र, आ. वि., क्षुद्ररोगाधिकारे ।

भाषा—बछनाग, पारा, गन्धक, लोहभस्म, अभ्रकभस्म, और शिलाजतु इन सब को बराबर लेकर गिलोय के क्वाथ मे घोट कर एक २ रत्ती की गोलियें बना लेना । यह अमृताकुर वटी है इस को आवले के रस अथवा क्वाथ के साथ घोलकर पीने से सभी क्षुद्र रोग, रक्त और पित्त से होनेवाले रोग, जीर्णज्वर, प्रमेह, कृशता और मन्दाग्नि को नष्ट करके शरीर को पुष्ट करती है कान्ति को बढाकर बुद्धि को निर्मल करती और बढाती है ॥ १९४ ॥

### १९५ अमृतादि मण्डूरम्

अमृता निम्बभूनिम्बौ बृहती विश्वभेषजम् ।
रजन्यौ मधुकं मूर्वा मञ्जिष्ठा मदभञ्जिनी ८२२
तोयाधिवासिनी तोयपिप्पली तोयधिप्रियम् ।
एतानि समभागानि मण्डूरं द्विगुणं ततः ८२३॥
किट्टादष्टगुणे मूत्रे पक्त्वेमानि यथाविधि ।
उदुम्बरप्रमाणेन प्रयुञ्ज्यान् मधुना सह ८२४॥
मस्तिष्करोगानखिलान् वातपित्तकफैः कृतान् ।
विनिहन्यान्न सन्देहो मण्डूरममृतादिकम् ८२५

भै र., मस्तिष्करोगाधिकारे ।

टि० मदभञ्जिनी शतमूली । तोयाधिवासिनी पाटला । तोयधिप्रिय लवङ्गम् ।

भाषा—गिलोय, नीम, चिरायता, बनभांटा, सोंठ, हल्दी, दारुहल्दी, मुलेठी, मूर्वा, मजीठ, शतावरी, पाढर, जलपीपल और लौंग इन सबको बराबर और मण्डूर सब से दूना लेकर सब को मण्डूर से अठगुने गोमूत्र मे पकाकर अवलेह के माफिक बनाना । इसकी १ तोले की मात्रा को शहद के साथ खाने से वात पित्त और कफ से उत्पन्न हुए २ सभी प्रकार के मस्तिष्क रोगोंको यह अमृतादि मण्डूर नष्ट करता है । इसमें कुछ भी सन्देह नहीं ॥ १९५ ॥

### १९६ अमृतार्णवरसः ( प्रथमः )

सुवर्णं रजतं ताम्रमभ्रकञ्च सुमारितम् ।
प्रत्येकं कर्षमात्रञ्च द्विगुणं शुद्धमौक्तिकम्८२६
निःक्षिप्य मर्दयेत्खल्वे शुष्कमर्दनयोगतः ।
यामं तुपोदकेनैव त्रिफलोत्थेन वासरम् ।८२७॥
मर्दयित्वाऽमृतासत्त्वसंयुक्तं लेहयेदिदम् ।
मधुना माषमात्रञ्च मद्यपानहतौजसः ॥८२८॥
शीघ्रं विकाशमायाति वीर्यौजः परिपुष्यति ।
अमृतार्णवको ह्येषो रसः शीघ्रफलप्रदः ।८२९॥

ना० वि०, र म मा.,

भाषा—सोना, चादी, तावा और अभ्रक ( सबकी भस्मै ) एक एक तोले और शोधे हुए मोती २ तोले लेकर सूखे ही घोटना फिर एक पहर तक तुपोदक अथवा त्रिफला के क्वाथमें घोटना। फिर गिलोय का सत्त्व मिलाकर एक मासा इसको शहद के साथ चटाना । शराब पीने से क्षीण हुआ

मनुष्य इससे पुष्ट होता है और जल्दी विकास को प्राप्त होता है यह अमृतार्णव रस जल्दी फल देने-वाला है ॥ १९६ ॥

### १९७ अमृतार्णवरसः ( द्वितीयः )

**सूतभस्म चतुर्भागं लोहभस्म तथाष्टकम् ।**
**अभ्रभस्म च षड्भागं गन्धकस्य च पञ्चमम्८३०**
**भावयेत्त्रिफलाक्वाथैस्तत्सर्वं भृङ्गजै द्रवैः ।**
**शिग्रुवह्निकटुक्वाथै र्भावयेत्सप्तधा पृथक्॥८३१॥**
**सर्वतुल्या कणा योज्या गुडै र्मिश्रा पुरातनैः ।**
**निष्कमात्रं सदा खादेज्जरामृत्युनिवारणम् ८३२**
**शतायुः स्याच्चतुर्मासै रसोऽयममृतार्णवः ।**
**कुरण्टकस्य पत्राणि गुडेन भक्षयेदनु ॥८३३॥**

र. स, र चि., र. क, र. सु, र. च, रसायन. स., यो. म., रसायनाधिकारे ।

भाषा—पारे की भस्म ४ भाग, लोहभस्म ८ भाग, अभ्रक भस्म ६ भाग, और गन्धक ५ भाग इन सबको मिलाकर त्रिफला, भागरा, सहजना, चीता और कालीमिर्च इन ७ चीजों के क्वाथ से एक २ भावना अलग २ देना । सब के बराबर पीपल और उतना ही पुराना गुड मिलाना । ४ माशे की मात्रा रोज खाने से बुढापा और मृत्यु को यह जीतता है । ४ महीने तक विधिपूर्वक खाने से मनुष्य १०० वर्ष तक जीता है । इस के ऊपर कटसरैया ( पीयावासा ) के पत्ते और गुड खाना चाहिये ॥ १९७ ॥

### १९८ अमृतार्णवरसः (तृतीयः)

**रसभस्मत्रयोभागा भागैकं हेमभस्मकम् ।**
**सर्वांशममृतासत्त्वं सितामध्वाज्यमिश्रितम्८३४**
**दिनैकं मर्दयेत्खल्वे माषैकं भक्षयेत्सदा ।**
**कृशानां कुरुते पुष्टिं रसोऽयममृतार्णवः ॥**
**अश्वगन्धापलार्धं च गवां क्षीरैः पिबेदनु ८३५॥**

र. र. स., रसचि., र. र. दी., र. क, रसायन स., कार्श्याधिकारे ।

भाषा—पारे की भस्म ३ भाग और सुवर्ण भस्म १ भाग और दोनों के बराबर गिलोयका सत्त्व इनको मिश्री, शहद और घी मिलाकर एक दिनभर बारीक घोटना इसकी मात्रा एक माशे की है यह अमृतार्णवरस दुबले पतले शरीरवालों को पुष्ट करता है । इसके ऊपर २ तोले असगन्ध-का चूर्ण खाकर ऊपर से गाय का दूध पीना चाहिये ॥ १९८ ॥

### १९९ अमृतार्णव रसः ( चतुर्थः )

**कृत्वा कण्टकवेध्यानि पलस्वर्णदलान्यथ ।**
**अष्टांशरसलिप्तानि निःक्षिपेदुपले त्र्यहम् ८३६**
**हिङ्गुहिङ्गुलगन्धाश्मताप्यनीलाञ्जनै स्तथा ।**
**कृतं चूर्णमधश्चोर्द्ध्वं पत्राणां विनिधाय च ८३७॥**
**शतवारं पुटेत्सम्यङ्क्रित्थं भस्म जायते ।**
**तद्भस्म द्विगुणं सूतं तस्माद् द्विगुणहिङ्गुलः८३८**
**तस्माच्च द्विगुणं ताप्यं सर्वमेकत्र मर्दयेत् ।**
**रसेन मातुलुङ्गस्य निरन्तरदिनद्वयम् ॥ ८३९ ॥**
**तुषैः पुटत्रयं दद्याद्गोकरीषैः पुटत्रयम् ।**
**पुटानि दश विंशत्या छगणानां प्रकल्पयेत् ८४०**
**त्रिंशद्भिश्छगणैर्दद्यात्पुटानामथ विंशतिम् ।**
**तस्मिन्वैक्रान्तजं भस्म क्षिपेत्तत्पादमात्रया ॥**
**सर्वमेकत्र सञ्चूर्ण्य भृङ्गराजनिजद्रवैः ।**
**भावयेत्सप्तवाराणि सिध्यत्येवमयं रसः ॥**
**श्रीमता नन्दिना प्रोक्तो रसोऽयममृतार्णवः ॥**
**गुञ्जाबीजमितः सिताघृतकणा-**
**संयोजितः सेवितः,**
**कुर्याद्वृष्यमनेकशो वरवधूसन्तोषसम्पोषणः ।**
**यक्ष्मव्याधिविधूननो गरहरः पर्याप्तदीप्तानलो,**
**मूलव्याधिनिवारणः किमपरं**
**सर्वामयध्वंसनः ॥ ८४३ ॥**
**रम्भापक्वफलं घृतं दधिपयः क्षैरेयकं मण्डका-**
**वालं तालफलं सिता च पललं सन्तानिकामोदका**
**खर्जूरं वरपानकं च वटकाः पुण्ड्रेक्षवः सारसं.,**
**गुर्वन्नं पनसं तथा शिखरिणी**
**पथ्यं रसेऽस्मिन्मतम् ॥ ८४४ ॥**

र. र. स, वाजीकरणाधिकारे ।

भाषा—४ तोले सोने के बहुत बारीक पत्र बना लेना । उनके दोनों तरफ आधा तोला पारा लपेटकर एक मोटे कण्डेमे खोदकर रख देना ढाककर चौथेदिन कण्डेमेसे निकालकर हींग, सिंगरिफ, गंधक, सोनामाखी और नीलाञ्जन इन का द्विगुण चूर्ण पत्रोंके ऊपर और नीचे रख के १५ कंडोकी आंच देना ऐसे वारंवार करते हुए १०० वार जंगली कडोमे उसका पुट देना । इसप्रकार सोनेकी निरुत्थ भस्म हो जावेगी । इसप्रकार की हुई सोने की भस्म १ भाग, पारा २ भाग, सिंगरिफ ४ भाग, और सोनामाखी ८ भाग इन सब को दो दिन तक विजेरे नीबू के रस मे खूब बारीक घोटना इसप्रकार उसका गोला वनाकर तुषों (धान से निकले हुए चावलों के वाहर के छिलके) से ३ वार, गाय के गोवर की करपी से ३ वार साधारण पुट देना । २० कडों से दस वार, और तीस कंडों से २० वार पुट देना । फिर उस सब से चतुर्थांश वैक्रान्त भस्म मिलाकर चूर्ण करके भागरे के रस की ७ भावना देना । यह श्रीमान् नन्दी महाराज का कहा हुआ अमृतार्णव रस है । इसकी एक रत्तीकी मात्रा मिश्री, घी और पीपल के साथ खाने से वडा वृष्य है । अनेक मदान्ध युवतियो को सन्तोष कराता है राजयक्ष्मा ( क्षय ) को नष्ट करता है विषनाशक है जठराग्नि को खूब प्रदीप्त करता है । मूलव्याधि को हरता है और क्या कहना है वस सभी रोगों को हरता है । पके केले, घी, दही, दूध, खोवा, माड, कोमल ताडफल, मिश्री, मास, मलाई, लड्डू, खजूर, अच्छे २ फलों के रस वड़ेपोडे, गन्ने, गुलाव का पानी, गेंहू इत्यादि भारी अन्न कटहल और शिखरन् यह सब इस रस के साथ पथ्य है ॥ १९९ ॥

## २०० अमृतार्णव रसः ( पञ्चमः )

हिङ्गुलोत्थो रसो लौहं टंकणं गन्धकं शटी ।
धान्यकं वालकं मुस्तं पाठाऽजाजी घुणप्रिया ॥
प्रत्येकं तुल्यमादद्या च्छागीदुग्धेन पेषयेत् ।
माषका वटिका कार्या रसोऽयममृतार्णवः ८४६
वटिकां भक्षयेत्प्रात र्गहनानन्दभाषिताम् ।
धान्यजीरकचूर्णेन विजयाशणवीजतः ॥८४७॥
मधुना च्छागदुग्धेन मण्डेन शीतवारिणा ।
कदलीमोचकरसैः कञ्चटद्रवकेण च ॥ ८४८ ॥
अतिसारं जयेदुग्रमेकजं द्वन्द्वजं तथा ।
दोषत्रयसमुद्भूतमुपसर्गसमन्वितम् ॥ ८४९ ॥
शूलघ्नो वह्निजननो ग्रहण्यर्शोविकारनुत् ।
अम्लपित्तप्रशमनः कासघ्नो गुल्मनाशनः ८५०

र. स , र. क , भै र., र सु., ध., र च , अतिमाराधिकारे ।

टि० धान्यजीरक यूषेण विजयाशालवीजत, इति पाठान्तरम् रसेन्द्र कल्पद्रुमे ।

भाषा—सिंगरिफ से निकाला हुआ पारा, लोहभस्म, सुहागा, गन्धक, कचूर, धनिया, सुगन्ववाला, जीरा और अतीस इन सब को बराबर लेकर बकरी के दूध के साथ बारीक पीसना और एक २ माशे की गोलिये बना लेना यह अमृतार्णव रस है इस गोली को श्री गहनानन्द महाराजने वनायी है इस को धनिया और जीरे के चूर्ण के साथ अथवा भाग और शण के वीजों के चूर्ण के साथ अथवा शहद और बकरी के दूध के साथ अथवा चावलों के मांड के साथ अथवा ठढे पानीके साथ अथवा केला और मोचरसके साथ अथवा कंचट ( प्र. मरसा ) के रस के साथ खाने से एकज, द्वन्द्वज और त्रिदोपज सभी अतिसार नष्ट हो जाते है । चाहे कितनेही उपद्रव अतिसारके हो सभी शान्त हो जाते है । यह रस शूल को, सग्रहणी और बवासीर के विकारों को, अम्लपित्त, खासी और गुल्म को नष्ट करता है और जठराग्नि को बढाता है ॥ २०० ॥

## २०१ अमृतार्णव रसः ( षष्ठः )

पारदं गन्धकं शुद्धं मृतलोहं च टङ्कणम् ।
रास्ना विडङ्गं त्रिफला देवदारु च चित्रकम् ८५१

अमृता पद्मकं क्षौद्रं विषं चैव विमर्दयेत् ।
द्विगुञ्जं वातकासार्तः सेवयेदमृतार्णवम् ।८५२॥

र. क, र. स., चि. रत्न, र. सु, भै. र, र. र, र च, र. का., नि. र., ध., वै. र, वै क., टो, र. को, वै. चि, र. क. ल, कासाधिकारे । चित्रकमित्यत्र कटुत्रयमिति पाठान्तरम् । र. को, र र., इत्यादौ ।

टि० अत्र क्षौद्रमध्ये छन्दोऽनुरोधेन निवेशितमस्ति न तु प्रमाणबोधनार्थं न वा सहमेलनार्थं किन्त्वनुपानत्वेन विवक्षितम् ।

भापा—शुद्ध पारा, शुद्ध गन्धक, लोहभस्म, सुहागा, रास्ना, विडंग, त्रिफला, देवदार, चीता, गिलोय, पद्मकाठ और वछनाग, इन सब को बराबर लेकर बारीक पीस लेना । इस अमृतार्णव रस को वातव्याधि और खासी से दुःखित रोगी २ रत्तीभर रोज सेवन करे । निरोग हो जावेगा ।

टि० यहापर पर जो शहद का नाम आया है वह केवल छदकी पूर्ति के लिये है रस मे मिलाने के लिये नहीं । अनुपान शहद का होना चाहिये ॥ २०१॥

## २०२ अमृतार्णव रसः ( सप्तमः )

अमृतं च रसं गन्धं लौहमभ्रं समांशकम् ।
भावयेद्वह्निनीरेण सप्तकृत्वः पृथक् पृथक्८५३॥
रक्तिकाद्वितयं खादेद्यथा दोषानुपानतः ।
आमाशयिकरोगेषु ज्वरेषु विषमेषु च ॥८५४॥

भै. र. आमाशयरोगे ।

भापा—वछनाग, पारा, गन्धक, लोहभस्म और अभ्रकभस्म सब को बराबर लेकर चित्रक के क्वाथ से अलग २ सातवार भावना देना । उचित अनुपान के साथ २ रत्ती की मात्रा खाने से आमाशय के रोग तथा विषमज्वर नष्ट हो जाते हैं ॥२०२॥

## २०३ अमृतार्णवलौहः

त्रिकटु त्रिफला लौहं समभागं विचूर्णितम् ।
सर्वेषामपि चूर्णानामर्धभागं शिलाजतु ॥८५५॥
गुडूचीस्वरसैर्देया भावना रविरश्मिभिः ।
वारत्रयं ततः शुष्कं घृतेन सहमर्दयेत् ॥८५६॥
माषमात्रं तु मधुना मर्दितं भक्षयेन्नरः ।
हन्त्यष्टादश कुष्ठानि वातरक्तं सुदुस्तरम् ॥
जयेदर्शांसि सर्वाणि प्रमेहमुदराणि च ॥८५७॥

र र, कुष्ठाधिकारे ।

भापा—त्रिकटु, त्रिफला और लोहभस्म सब को बराबर लेकर चूर्ण कर लेना और उसमे सब से आधा शिलाजीत मिलाकर धूप मे गिलोय के रस से ३ बार भावना देना । फिर उस को घी मे घोटना इस की १ माशे की मात्रा शहद मे मिला कर खाने से अठारह प्रकार के कुष्ठ, कठिन से कठिन वातरक्त, बवासीर, सभी प्रकार के प्रमेह और उदररोग नष्ट होते है ॥ २०३ ॥

## २०४ अमृतेन्द्र रसः

पूर्वोक्तेन प्रकारेण रसेन्द्रं सम्प्रसाधयेत् ।
भस्मीकुर्यात्प्रकारेण तेनैवाथ रसेश्वरम् ।८५८॥
पलमात्रं प्रगृह्णीया त्रिफलायाः पलत्रयम् ।
गन्धकस्य पलं शुल्वं प्रागुक्तविधिना मृतम्८५९
मृताभ्रकस्य च पलं मृतलोहपलं ततः ।
पलमात्रं तत्र दद्यादमृतस्योत्तमस्य वै ॥ ८६० ॥
एकीकृत्याऽथ तत्सर्वं मर्दयेदमृतोदकैः ।
कृष्णधत्तूरकरसैस्त्रिजगद्विजयारसैः ॥ ८६१ ॥
व्योषनीरैर्महाराष्ट्रीसलिलैर्मार्कवद्रवैः ।
भृङ्गवेररसैर्ब्राह्मीरसैस्तिलदलारसैः ॥८६२॥
तर्कारीसलिलैः कृष्णतुलसीसलिलैस्ततः ।
पुनर्धुत्तूरकद्रावैर्भृङ्गीनीरैर्विषोदकैः ॥८६३॥
दिनैकैकं प्रमृद्नीयात् प्रत्येकं रसतः पृथक् ।
वटिकाः कारयेच्छ्लक्ष्णा मुद्गमानास्ततः परम् ॥
छायायां शोषयेद्यत्नात् ततः सम्पूजयेद्धरिम् ।
ब्रह्मशंकरमुख्यांश्च देवान्विप्रान् स्वशक्तितः८६५
पूजयित्वा रसवरं करण्डे स्थापयेद्बुधः ।
सन्निपाते महाघोरे ज्वरे चैवातिदारुणे॥८६६॥

अग्निमान्द्ये प्रयोक्तव्यश्चित्रकार्द्रकनीरयुक् ।
प्रागुक्तैरनुपानैश्च सर्वरोगेषु योजयेत् ॥ ८६७ ॥
अयं रसेश्वरः श्रीमान् विश्वरोगनिवर्तकः ।
वलीपलितजित्पुंसाममृतेन्द्र इति स्मृतः ॥८६८॥

रसाल.,

भाषा—पहिले कही हुई विधि से पारे को सिद्ध करना और उसी विधि से भस्म करना फिर त्रिफला ४ तोले, शुद्ध गन्धक १२ तोले, पहिले कही हुई विधि से मारा हुआ तावा ४ तोले, अभ्रकभस्म ४ तोले, लोहभस्म ४ तोले और वछनाग ४ तोले सब को मिलाकार गुडूची, कालाधतूरा, भाग, त्रिकटु, महाराष्ट्री ( मराठी ) भागरा, अदरख, ब्राह्मी, हुलहुल, जैत, काली-तुलसी, धतूरा ( दूसरी वार ) भागरा (दूसरी वार ) और वछनाग इन के रससे क्रम से अलग २ एक एक दिन भावना देना फिर मूग के वरावर गोलियें बनाकर छाया मे सुखा लेना । विष्णु, ब्रह्मा और शिवजी इत्यादि देवता और ब्राह्मणों की पूजा यथा शक्ति करके इन गोलियो को बोतल मे रख देना । घोर सन्निपात भयानक ज्वर और मन्दाग्नि मे यह रस चित्रक और अदरख के रसके साथ देना और पहिले कहे हुए अनुपानों के साथ सभी रोगों मे ( अमृतेन्द्र रस मे कहे हुए भावना द्रव्यो के साथ ) यह रस देना चाहिये । यह उत्तम रस सब रोगों को नष्ट करता है । मनुष्यो के बली और पलित को दूर करता है इस रस का नाम अमृतेन्द्र रस है ॥ २०४ ॥

## २०५ अमृतेशरसः

मृतसूताभ्रकं कान्तं विषं ताप्यं शिलाजतु ।
तुल्यांशं मधुसर्पिर्भ्यां लिहेद्गुञ्जात्रयं सदा ८६९
षण्मासेन जरां हन्ति दीर्घमायुः करोति च ।
अश्वगन्धामूलचूर्णं सप्तभागघृतैः समम् ।८७०॥
भागाष्टकं गुडं तस्मिन् क्षिपेद्भागेन पिप्पलीम् ।
मृद्वग्निना च तत्सर्वं पिण्डितं भक्षयेत्पलम् ॥
क्रामकं ह्यमृतेशस्य रसराजस्य सिद्धये ॥८७१॥

र. स., र. क., रसायनाधिकारे ।

टि० रसेन्द्रकल्पद्रुमे विषताप्ययो स्थाने गन्धकताम्रे पठिते क्रामणश्च न पठितमिति विशेषः ।

भाषा—पारे की भस्म, अभ्रकभस्म, कान्त लोहभस्म, वछनाग, सोनामाखी और शिलाजतु सब को वरावर लेकर पीसलेना । इस की १ रत्ती की मात्रा घी और शहद के साथ खाने से ६ महिने मे बुड्ढा भी जवान हो जाता है और आयु बढ जाती है । असगन्ध की जड का चूर्ण १ भाग घी ७ भाग, गुड ८ भाग और पीपल १ भाग, इन सब को मिलाकर मन्द २ अग्नि से पकाकर लड्डू बनाकर ऊपरसे खाना । यह उपरोक्त अमृतेश रस का क्रामक है । ( जिस को साथ खाने से रस सभी शरीर मे फैलकर शीघ्र गुण करता है ) जल्दी सिद्धि देता है ॥ २०५ ॥

## २०६ अमृतेश्वररसः ( प्रथमः )

रसं गन्धं वत्सनाभं वासा त्रिकटुकं वचा ।
जीरकं चित्रकं शुण्ठी त्रिफला च समंसमम् ८७२
वासात्रिकटुकद्रावैः स्त्रियामं मर्दयेद्भिषक् ।
पाचयेद्वालुकायन्त्रे त्रिदिनं मन्दवह्निना ।८७३॥
स्वाङ्गशीतलमुद्धृत्य द्विगुञ्जं भक्षयेत्सदा ।
शर्करामधुसंयुक्तं स्वेदपैत्तविकारनुत् ॥ ८७४ ॥

व. रा., वै. चि.,

भाषा—पारा, गन्धक, वछनाग, अड़ूसा, त्रिकटु, वच, जीरा, चित्रक, सोंठ और त्रिफला इन सवको वरावर लेकर अड़ूसा और त्रिकटु के क्वाथसे तीन पहर तक भावना देना । फिर तीन दिनतक मन्द अग्नि से वालुकायन्त्र मे पकाना । स्वाङ्ग शीतल होनेपर निकाल लेना । इसकी मात्रा दो रत्ती की है । और अनुपान शक्कर और शहद है । यह रस स्वेद ( पसीना ) और पित्त के विकारों को नष्ट करता है ॥ २०६ ॥

२०७ अमृतेश्वरो रसः ( द्वितीयः )

रसभस्मामृतासत्त्वं लौहं मधुघृतान्वितम् ।
अमृतेश्वरनामाऽयं पङ्गुञ्जो राजयक्ष्मनुत्॥८७५

र. चि., भै. सा, चि. रत्न, वै. र., र. र., नि. र., चि. क्र., वृ. यो. त, रसावतारमा., र क. ल., रससङ्ग्रह सि, यो. म., रसायनस., र को, र. का, राजयक्ष्मणि ।

भापा—पारे की भस्म, गिलोयका सत्व और लोहभस्म, इन को बरावर लेकर शहद और घी के साथ ६ रत्ती खाने से राजयक्ष्मा नष्ट हो जाता है । इस का नाम अमृतेश्वर रस है ॥ २०७ ॥

२०८ अमृतेश्वरो रसः ( तृतीयः )

टङ्कणषोडशभागा भागा द्वादश भवंतिमरिचानां
माक्षिकवत्सकनाभाऽऽकल्लकरभागद्वयं चैव ॥
श्लेष्माजीर्णविकारांस्तथा सन्निपातमपिशूलम् ।
जयति विविधरोगहरो रसोऽमृतेश्वरो जयति ॥

र. ( मा. )

भापा—सुहागा १६ भाग काली मिर्च १२ भाग और सोनामाखी, वछनाग और अकरकरा ये सब प्रत्येक २ भाग मिलाकर चूर्ण कर लेना । यह रस कफ, अजीर्ण, सन्निपात, शूल और अनेक रोगों को नष्ट करता है । इसका नाम अमृतेश्वर है ॥ २०८ ॥

२०९ अमोघास्त्ररसः ( प्रथमः )

ताम्रगन्धविषं चैव गौरीपाषाणकं समम् ।
नाभिसूताच्त्रयो भागा निर्गुण्डीतुलसीद्रवैः ॥
तिलप्रमाणान् वटकांश्छायाशुष्कांश्च कारयेत् ।
त्रयोदश सन्निपाताञ्ज्वरानष्टौ विनाशयेत्८७९
विषमं शीतदोषञ्च क्षणमात्रेण नाशयेत् ।
सर्वरोगहरं चैव ममोघास्त्रं च नामतः॥८८०॥

र. क. यो.,

भापा—तावा, गन्धक, वछनाग और गौरीपाषाण ( सोमल ) इन सबको बरावर लेना । कस्तूरी और पारा दोनों तावे से तीन गुना लेना फिर सब को सभाल्ह और तुलसी के रस मे वारीक घोटकर तिलो के वरावर गोलियें बनाकर छाया मे सुखा लेना यह रस १३ प्रकार के सन्निपातों को ८ प्रकार के ज्वरो को और विषम शीतदोष को क्षणमात्र मे नष्ट कर देता है और साधारणतया सभी रोगों को नष्ट करता हैं इस का नाम अमोघास्त्र रस है ॥ २०९ ॥

२१० अमोघास्त्ररसः ( द्वितीयः )

ताम्रगन्धविषं चैव तालकं माक्षिकं शिला ।
पृथ्वी पाठा टङ्कणं च गौरीपाषाणकं समम् ८८१
नाभिसूतकयोर्भागौ निर्गुण्डीतुलसीद्रवैः ।
तिलप्रमाणवटकान् छायायां शोषयेत्तथा ८८२
त्रयोदशसन्निपातान्नाशयेद्विषमांस्तथा ।
अनुपानविशेषेण अमोघास्त्ररसो महान्८८३॥

र. क यो,

भापा—तावा, गन्धक, वछनाग, हरताल, सोनामाखी, मैनसिल, हिंगुपत्री ( डीकामाली ) पाठा, सुहागा और गौरीपाषाण इन सबको बरावर लेना । पारा और गन्धक को तावे से दूना लेकर संभाल्ह और तुलसी के रस मे खूब घोटकर तिल के वरावर की गोलियें बनाकर छाया में सुखाना यह रस १३ प्रकार के सन्निपात और विषमज्वरों का नाश करता है । और अनुपान विशेष से सभी रोगों को नष्ट करता है । इस का नाम अमोघास्त्र रस है ॥ २१० ॥

२११ अम्लपित्तान्तकमोदकः

नागरस्य कणायाश्च पलान्यष्टौ प्रदापयेत् ।
सुपूगस्य पलान्यष्टौ सर्वमेकत्र कारयेत्॥८८४॥
घृतं क्षीरं ततः पश्चात् प्रस्थं प्रस्थं प्रदापयेत् ।
लवङ्गं केशरं कुष्ठं यवानी कारवी वचा॥८८५॥
चन्दनं मधुकं रास्ना देवदारु फलत्रिकम् ।
पत्रमेलां वराङ्गं च सैन्धवं हपुषां शटीम् ८८६
मदनं कट्फलं मांसीं गगनं वङ्गरौप्यकम् ।
तालीशं पत्रकं मूर्वां समङ्गां वंशलोचनाम् ८८७

ग्रन्थिकं शतपुष्पां च शतमूलीं कुरण्टकम् ।
जातीफलं जातिकोषं कङ्कोलमम्बुदं कणाम् ॥
कर्पूरश्च विडङ्गश्च ह्यजमोदाबलामृताः ।
मर्कटीक्षुरबीजे च चन्दनं देवताडकम् ॥८८९॥
लौहं कांस्यं प्रदातव्यं कर्षमात्रं पृथक्पृथक् ।
सर्वं सुचूर्णितं दद्यात्कर्षार्धं स्वर्णभस्मकम् ८९०
सर्वं धातुविधानेन मारितं ग्राहयेत्सुधीः ।
अम्लपित्तान्तको ह्येष मोदको मुनिभाषितः ॥
वान्तिं मूर्छां च दाहं च कासं श्वासं भ्रमं तथा ।
वातजं पित्तजं चैव कफजं सान्निपातिकम् ८९२
सर्वरोगं निहन्त्याशु प्रमेहं सूतिकागदम् ।
शूलञ्च वह्निमान्द्यं च मूत्रकृच्छ्रं गलग्रहम् ८९३

भै र.

भाषा—सोंठ और पीपल प्रत्येक १६ तोले और अच्छी सुपारी ३२ तोले, घी और दूध प्रत्येक १ सेर, लोंग, केसर, कूठ, अजवाइन, कलोजी, वच, चन्दन, मुलेठी, रास्ना, देवदारु, त्रिफला, तेजपात, छोटी इलायची, दालचीनी, सेंधा नमक, झाऊ, कचूर, मैनफल, कायफल, जटामासी, अभ्रक, वग, चादी ( भस्मे ) तालीस, पद्मकाठ, मूर्वा, लजवन्ती, वशलोचन, पीपलामूल, सोफ, शतावरी, पीयावासा, जायफल, जावित्री, शीतलचीनी, नागरमोथा, पीपल, कपूर, विडङ्ग, अजमोद, वला, गिलोय, किवाच के बीज, तालमखाना, लालचदन, वदाल; लोह और कासा ( भस्मे ) ये सव एक १ तोला और सुवर्ण भस्म आधा तोला, इन सव की भस्म धातुभस्म की विधि से वनाना फिर सबका वारीक चूर्ण करके मिला देना। यह अम्लपित्तान्तक मोदक ऋषियों का कहा हुआ वमन, मूर्छा, दाह, खासी, दमा, भ्रम वातज, पित्तज, कफज और सन्निपातज सभी रोगों को यह रस हरता है और प्रमेह, सूतिका रोग, शूल, मन्दाग्नि मूत्रकृच्छ्र और गलग्रह को भी नष्ट करता है ॥ २११ ॥

## २१२ अम्लपित्तान्तक रसः

मृतसूताभ्रलोहानां तुल्यां पथ्यां विमर्दयेत् ।
माषमात्रं लिहेत् क्षौद्रैरम्लपित्तप्रशान्तये ८९४

र र. कौ., र. चि, र स, र म, भै र, र. सु, ध., यो. म., र. सि., र का., र. क. ल, व. रा, र र. दी., र. च, अम्लपित्ताधिकारे। व. रा., रसभस्मक नाम ।

भाषा—पारे की भस्म, अभ्रकभस्म और लोहभस्म इन सव को वरावर लेकर १ माशा शहद के साथ खाने से अम्लपित्त मिट जाता है ॥२१२॥

## २१३ अयस्कृतिः

तीक्ष्णलोहपत्राणि तनूनि लवणवर्गप्रदिग्धानि गोमयाग्निप्रतप्तानि त्रिफलासालसारादिकषायेण निर्वापयेत् षोडश वारान् । ततः खदिराङ्गारतप्तानि उपशान्ततापानि सूक्ष्मचूर्णानि कारयेद्गाढतान्तवपरिस्रावितानि । ततो यथाबलं मात्रां सर्पिर्मधुभ्यां संसृज्योपयुञ्जीत । जीर्णे यथाव्याध्यनम्लमलवणमाहारं कुर्वीत । एवं तुलामुपयुज्य कुष्ठमेहमेदःश्वयथुपाण्डुरोगोन्मादापस्मारानपहृत्य वर्षशतं जीवति, तुलायां तुलायां वर्षशतगुणोत्कर्षः, एतेन सर्वलौहेषु अयस्कृतयो व्याख्याताः ॥ ८९५ ॥

सु० चि० अ० १०

टि० सालसारादिर्यथा—सालसाराजकर्णखदिर कदरकालस्कन्ध क्रमुकभूर्ज मेषशृङ्गीतिनिश चन्दन कुचन्दन शिंशपा शिरीषासन धवार्जुन तालशाक नक्तमाल पूतीकाश्वकर्णागुरूणि कालीयक चेति सुश्रु० सूत्र० अ० ॥ ३८ ॥

भाषा—फोलाद के वारीक पत्र वनाकर लवणवर्ग से उन पर लेप करके जगलीकडों मे १६ सोलह वार खूव तपाकर त्रिफला और सालसारादि गण के क्वाथ मे उनको वुझाना फिर इसी प्रकार १६ वार खैर के कोयलों में तपाना और वुझाना ठढे होने पर उनका वहुत वारीक चूर्ण कर लेना और मोटे गाढे कपडे से उस चूर्ण को छानलेना । फिर वलके अनुसार इस की मात्रा घी और शहद के

साथ खाना इस के पच जाने पर खटाई और नमक को छोडकर व्याधि शमन करनेवाला आहार करना इस प्रकार इस को ४०० तोले खानेवाला कोढ, प्रमेह मेद का बढना, सूजन, पाण्डुरोग, उन्माद और अपस्मार इनसे मुक्त होकर १०० वर्ष जीता है। जितनी बार इसको ४०० तोले उपरोक्त विधि से खावेगा उतने सो वर्ष मनुष्य जीवेगा इसी प्रकार सभी धातुओं की अयस्कृति बताई हैं ॥ २१२ ॥

टि०—सालसारादिगण—सारढोल ( म० ) वृक्ष काहीर, मलेवारीसाग, खैर, सफेदखैर, तेंद, सुपारी, भोजपत्रकाहीर, मेंढासींगी, हलदियाझाड, सफेदचंदन, लालचदन, सीसम, सिरस, आसन, धव, अर्जुन ( कहुवा ) ताड, साग, करज, पूती ( घुड ) करंज, सखुआ, उत्तम अगर, साधारण अगर, इन औषधियों का गण सालसारादि कहाता है ॥ २१३ ॥

## २१४ अयस्कृतिः

त्रिवृच्छ्यामाग्निमन्थ सप्तलाकेवुक शङ्खिनी तिल्वक त्रिफलापलाशशिंशपानां स्वरसमादाय पालाश्यां द्रोण्यामभ्यासिच्य खदिराङ्गारतप्तमयः पिण्डं त्रिःसप्तकृत्वो निर्वाप्य तमादाय पुनरासिच्य स्थाल्यां गोमयाग्निना विपचेत् । सिध्यति चास्मिन् पिप्पल्यादिचूर्णभागं, द्वौमधुनस्तावद्घृतस्येति दद्यात् । ततश्चतुर्थभागवशिष्टमवतार्य परिस्राव्य भूयोऽग्नितप्तानि अयः पत्राणि प्रक्षिपेत्। ततः प्रशान्तमायसे पात्रे स्वनुगुप्तं निदध्यात्। ततो यथायोगं शुक्तिं प्रकुञ्चं चोपयुञ्जीत। जीर्णे यथाव्याध्याहारमुपसेवेत। एषौषधायस्कृतिरसाध्यं कुष्ठं प्रमेहं वा साधयति स्थूलमपकर्षति शोफमुपहन्ति सन्नमग्निमुद्धरति विशेषेण चोपदिश्यते राजयक्ष्मिणां वर्षशतायुश्चानया पुरुषो भवति । सालसारादिक्वाथमासिच्य पालाश्यां द्रोण्यामयोघनं तप्तं निर्वाप्य कृतसंस्कारे कलशेऽभ्यासिच्य पिप्पल्यादिचूर्णभागं क्षौद्रं गुडमिति स्वनुगुप्तं निदध्यात् । एतां महौषधायस्कृतिं मासमर्धमासं वा स्थितां यथाबलमुपयुञ्जीत । एवं न्यग्रोधादावारेवतादिषु च विदध्यात् ॥ ८९६ ॥

सु० चि० अ० १०।

टि० १ न्यग्रोधादि र्यथा—न्यग्रोधोदुम्बराश्वत्थ प्लक्ष मधूक कपीतन ककुभाम्र कोशाम्र चोरकपत्र जम्बूद्वय प्रियाल मधुक रोहिणी वञ्जुल कदम्ब वदरी तिन्दुकी सल्लकी रोध्र सावररोध्र भल्लातक पलाशा नन्दीवृक्षश्चेति ।

२ आरेवतादिर्यथा—आरेवत आरग्वधः॥ आरग्वध मदन गोपघोण्टा कंटकी कुटज पाठा पाटला मूर्वेन्द्रयव सप्तपर्ण निम्ब कुरण्टक दासी कुरण्टक गुडूची चित्रक शार्ङ्गेष्टा करञ्जद्वय पटोल किरात तिक्तकानि सुषवी चेति ।

३ पिप्पल्यादिर्यथा—पिप्पली पिप्पलीमूल चव्य चित्रक शृङ्गवेर मरिच हस्तिपिप्पली हरेणुकैलाज मोदेन्द्रयव पाठा जीरक सर्षप महानिम्बफल हिङ्गु भार्ङ्गी मधुरसातिविषा वचा विडङ्गानि कटुरोहिणी चेति ।

भाषा—निसोत, विधारा, अरणी, अंगुलिया थूहर, या सीकाकाई, केउआ घास, कालादाना, देशीलोध, त्रिफला, ढाक और शीशम इन के स्वरसको ढाक की लकडीसे बनी हुई द्रोणीमे भरना फिर खैर के कोयलों मे एक लोहके गोले को खूब गरम करके उस द्रोणीमे २१ वार बुझाना फिर एक लोहे की कड़ाही मे गोले को रखकर ऊपर से उपरोक्त औषधियो का क्वाथ भरकर जंगली कंडों की आंच से पकाना पकते

हुए उस मे एक भाग ( लोहे के गोले के बरावर ) पिप्पल्यादि चूर्ण और दो २ भाग शहद और घी डालना जब चतुर्थांश बाकी रह जाय तब उतार कर छान लेना फिर ऊपर से निकाले हुए लोहे के पत्र बनाकर खेर के कोयलों मे तपाकर डालना ( यह क्रिया २१ वार करना ) फिर ठढा होने पर लोहे के पात्र मे सावधानी से रख देना। अग्निके बल के अनुसार दो या चार तोले खाना। पच- जानेपर रोगी को रोगोचित हितकारी आहार देना यह औषधियों की अयस्कृति असाध्य प्रमेह और कुष्ट को शान्त करती है। स्थूलता को कम करती है। सूजन को नष्ट करती है। मन्द पड़ी हुई जठराग्नि को प्रदीप्त करती है। विशेष करके राज- यक्ष्मावालों को इसका खाना बताया गया है। इस को विधि पूर्वक खाने से मनुष्य १०० वर्ष की आयुवाला होता है। इसी प्रकार ढाक की लकडी की द्रोणी मे सालसारादि क्वाथ भरकर लोहे के गोले को २१ बार बुझाकर उपरोक्त प्रकार से शुद्ध किये हुए वर्तन मे रखकर बरावर पिप्पल्यादि चूर्ण और शहद तथा गुड़ मिलाकर सावधानी से रख लेना इस महौषधायस्कृति को एक अथवा आधे मास रखकर बलानुसार उपयोग मे लाना। इसी प्रकार न्यग्रोधादि और आरेवतादि क्वाथ मे बना सक्ते है॥ २१४॥

टि० वट, गूलर, पीपर, पाकर, महुआ, अंबाडा, कहुआ या सारढोल, आम, जगलीआम, चोरक पत्र ( संदिग्ध ) जामुन, कठ जामुन, चिरोंजी का झाड़ ( पियार ), मुलहठी, रोहण ( कितने ही लोग रोहिणी से कुटकी लेते हैं परन्तु न्यग्रो- धादि गणमे बडे २ झाड लिये गये है इस लिये यहा कुटकी का ग्रहण नहीं हो सकता क्योकि कुटकी घास है रोहिण नाम का झाड प्रायः सभी देशों के जंगलों मे होता है सभी जंगली लोग इससे परिचित है, पर वैद्य महाशय क्यो डूब गये इसका पता नहीं) बेत, कदंब, बेरी, तेंद, सलई, लोध्र, पठानी लोध, भिलांवा, ढाक, नान्दुक ( मराठी मे ) यह न्यग्रोधादिगण है।

२—अमिलतास, मैनफल का झाड़, हेंस, कटाई, कुरैया, पाढ, पाढर, मरोड फली का झाड, ( कितने ही लोग मोरवेल को मूर्वा कहते हैं बगाल में रामत्राण को मुरव्वा कहते हैं। इस का नाम मालूम होता है कि वाड़ ( आवृति ) बनानेके काम मे आने की वजहसे इसका भी नाम मुरव्वा कहने लगे हैं क्योंकि उर्दूमें वाड को मुरव्वह कहते है यही गलती है ) कुरैया, छतिवन्, नीम, कटसरैया, नीले फूलका कटसरैया, चित्रक, काक- जवा, करंज, घुडकरज, परवल, चिरायता, करेला या मगरैल, यह आरेवतादि गण है।

३—पीपल, पिपलामूल, चव्य ( यह अप्रसिद्ध हो गई है पीपर की सूखीलता इस के एवज मे दी जाती है ) चित्रक, अदरख, मिर्च, गजपीपल (संदिग्ध है इस की जगह मोटी पीपल डालते हैं)हरेणुक ( अप्रसिद्ध है निर्गुंडी के बीजों से काम चलाते हैं ) इलायची, अजमोद, इन्द्रजव, पाढ, जीरा, सरसों, बकायन, हींग, भारङ्गी ( यह समुद्र किनारे के पहाडों का क्षुप है और मराठी मे भारगमूळ इस नाम से प्रसिद्ध है ) मूर्वा, अतीस, वच, विडंग, और कुटकी यह पिप्पल्यादि गण है।

## २१५ अयोभस्मयोगः

मारितस्यायस श्चूर्णं मुस्ताचूर्णेन संयुतम्।
खदिरस्य कषायेण पिबेद्धतुं हलीमकम्॥८९७॥
नि. र.,

भाषा—लोहभस्म में नागर मोथे का चूर्ण मिलाकर खैर के क्वाथ के साथ पीने से हलीमक रोग मिटजाता है॥ २१५॥

## २१६ अयोमोदकः

अयस्तिलत्र्यूपणतुल्यभागैः
सर्वैः समं माक्षिकधातुचूर्णम्।

तै मोदकः क्षौद्रयुतो हि भुक्तः
पाण्ड्वामये दूरगतेऽपि शस्तः ॥ ८९८ ॥

नि० र., यो. म०, वै चि०, चि. र.,

भाषा—लोहभस्म, तिल और त्रिकटु सब को बराबर लेकर तथा सब के बराबर सोनामाखी के चूर्ण को मिलाकर शहद के साथ लड्डू बनाकर खाने से असाध्यप्रायभी पाण्डुरोग अच्छा हो जाता है ॥ २१६ ॥

## २१७ अयोरजःप्रभृति चूर्णम्

अयोरजोव्योपविडङ्गचूर्णं
लिह्याद्धरिद्रात्रिफलान्वितं वा ।
सशर्करा कामलिनां त्रिभण्डी
हिता गवाक्षी सगुडा च शुण्ठी ॥८९९॥

वैं चि, नि. र, चि. र, सु.,

सोंठ, मरिच, पीपल, विडङ्ग, इनके चूर्ण के साथ अथवा हल्दी, त्रिफला चूर्ण के साथ समभाग लोह भस्म मिलाके मधुके साथ चटाना, यहांपर दो योग हैं यह मूलपाठ सुश्रुतका है । इसका रहस्य नहीं समझनेसे लोगोंने बहुत तरह के पाठ बनादिये हैं, आगे सुश्रुतमे "**सशर्करा कामलिनां त्रिभण्डी हितागवाक्षी सगुडाच शुण्ठी**" यह स्वतन्त्र पाठ आया है उसको लोगोंने अनुपान मे रखलिया है इस पद्य मे भी कामलिना सशर्करा त्रिभण्डी, सगुडागवाक्षी, सगुडाशुण्ठी च हिता इस तरह तीन योग हैं ॥ २१७ ॥

## २१८ अर्कमूर्ती रसः (प्रथमः)

लौहाष्टकं मारितमर्कभागं
सूतं द्विभागं द्विगुणं च गन्धम् ।
विमर्दयेद्वह्निरसेन तापे
दिनत्रयं चात्र विषं कलांशम् ॥ ९०० ॥
निक्षिप्य पित्तैः परिभावितोऽयं
रसोऽर्कमूर्तिं र्भवति त्रिदोषे ।
ताम्रस्य पात्रे तु दिनैकमात्रं
निम्बूरसेनापि च पित्तवर्गैः ॥ ९०१ ॥
क्षुद्रार्द्रकोत्थेन रसेन सूत-
स्त्रिदोषदावानल एष सिद्धः ।
गुञ्जाद्वयं त्र्यूषणयुक्तमस्य
ददीत चित्रार्द्ररसेन वाऽपि ॥
नासापुटे चापि नियोजनीया
गुञ्जाऽस्य शुण्ठी मरिचेन युक्ता ॥९०२॥

भै र, र सु, ज्वराधिकारे ।

भाषा—लोहाष्टक ( आठों धातुओं की ) भस्म १२ भाग पारद भस्म २ भाग, और गन्धक ४ भाग लेकर ३ दिन तक धूप मे चीते के रस से भावना देना । फिर सोलहवा हिस्सा वछनाग मिलाकर पाच पित्तों की ( मछली, भैसा, सूअर, मोर और बकरा इनके पित्ते ) भावना देना यह सन्निपात मे हितकर अष्टमूर्ती रस है । यदि बारीक ताम्रपत्र मे उपर्युक्त रस को रखकर नींबू के रस और पित्तों से क्रम से अलग २ भावना देवें और (इसी अर्कमूर्ती रसमे आये हुए पारद को अर्थात् उपरोक्त रस को ) भटकटैया और अदरख के रस से भावित करने से सिद्ध त्रिदोष दावानल रस बन जावेगा । इसकी २ रत्ती की मात्रा त्रिकटु के चूर्ण के साथ अथवा चीते के क्वाथ और अदरख के रस के साथ देनी चाहिये । यह दोनो रस सन्निपात मे हितकर है ॥ सोंठ और काली मिर्च के चूर्ण के साथ एक रत्तीभर इस रस का नस्य लेना भी सन्निपात मे हितकर है ॥ २१८ ॥

## २१९ अर्कमूर्ती रसः (द्वितीयः)

गन्धेन त्रिगुणेन सूतकवरः सम्मर्दितो वासरं,
कन्यावह्निवराम्बुना रससमे ताम्रोदरे लेपितः ।
मृद्भाण्डोदरके निवेश्य रसयुक् ताम्रोद्भवं पात्रकं,
भूत्याऽऽपूर्य पचेत वासरमितं शीतं समुत्तारयेत् ॥
ताम्रोदरे सूतवरं विलग्नं
चाकृष्य पूर्णं च दिनं विमर्द्य ।
दुग्धेन सूर्यस्य च सूर्यमान-
शरावके कुम्भमिते पुटेत ॥ ९०४ ॥

ततो वरावह्निजलेन भाव्यः
स्यादर्कमूर्तिः शिशुरोगहन्ता।
गुञ्जा वराचूर्णमधुप्लुतास्य
मासत्रयात्स्पर्शसमीरहन्त्री ॥ ९०५ ॥
तीक्ष्णं दधिक्षीरफलाम्लमाष-
वृन्ताककान्तागमनं च तक्रम्।
स्पर्शानिलं हन्ति मनोनुवृत्तिं
विवर्जये रिकदर्थिताङ्गः ॥ ९०६ ॥

रसावतारे, सुप्तिवाते।

भाषा—पारा १ भाग, गन्धक ३ भाग लेकर कज्जली बना लेना। फिर घीकुंआर, चित्रक, और त्रिफला के रस अथवा क्वाथ से एक दिनभर भावना देना। फिर तावे के कटोरे के भीतर उसका लेप करके मिट्टीके वर्तन मे उपरोक्त पारेवाले तावे के पात्र को ऊंधा रखकर ऊपर से सफेद भस्म भर देना। ( किसी हलके तावे के कटोरे इत्यादि मे उपरोक्त पारे की लुगदी को भीतर से चुपड़ कर हाडी इत्यादि के बीच मे उसको उल्टा कर के मुलतानी मिट्टी से चारों तरफ से बंद कर देना और ऊपर से भस्म भर देना )। फिर एक दिन भर उसको अग्नि मे पकाना जव स्वागशीतल हो जाय तव उस पारे को जो तांवे के वर्तन मे ऊपर लगा हुआ है और जो तावा भस्म हो गया है। दोनों को खुर्च निकाल लेना उसे एक दिनभर आकके दूध मे घोटकर वारह अङ्गुल चौडे शराव मे रखकर कुम्भ पुट मे पकाना। फिर त्रिफला आर चित्रक के क्वाथो से अलग २ भावना देना। यह बालकों के सभी रोगों को नष्ट करनेवाला अर्कमूर्ती रस है। एक रत्तीभर इसको त्रिफला के चूर्ण और घी के साथ खाने से ३ महीने मे स्पर्शवायु ( कुष्ठ ) को यह रस हरता है। तीक्ष्णवस्तु, दही, दूध, फल, खटाई, उड़द, वैगन, स्त्रीसंगम और मठा इनको छोड़ देना चाहिये, जिसका शरीर कुष्ठसे वहुत विगड़ गया है वह इस रस के सेवन करने मे खाने पीने इत्यादि से अपने मनको रोक रक्खे नहीं तो कुछ गुण नहीं होगा ॥२१९॥

## २२० अर्कमूर्ती रसः ( तृतीयः )

ताम्रपत्रमथसूतलेपितं
गन्धकेन परिलेपितं पचेत्।
भाण्डमध्यनिहितं निरोधितं
यामयुग्ममथजायते रसः ॥ ९०७ ॥
वत्सनाभसमगन्धसंयुतं
चित्रकार्द्रकरसेन भावितः।
अर्कमूर्तिरिति गीयते रसः
शोफपाण्डुकफवातनाशनः ॥
रक्तिकैकपरिमाणतस्त्विमं
सेवयेच्च लघुपथ्यमाचरेत् ॥ ९०८ ॥

र दी, र. क, शोथाधिकारे

भाषा—तावे के पत्र के दोनों तरफ वरावर पारा और गन्धक लपेटकर हाडी मे रखकर ऊपर से हाडीका मुख वद करके दो पहर तक तेज अग्नि मे उसको पकाना फिर स्वांगशीतल होनेपर तावे के पत्र के वरावर वछनाग और उतना ही गन्धक मिलाकर चित्रक के क्वाथ और अदरख के रस से भावना देने से यह अर्कमूर्ती रस वनेगा। यह रस सूजन, पाण्डुरोग, कफ और वातरोगों को नष्ट करता है इसकी मात्रा १ रत्ती की है। इस के सेवन करने वाले को लघुपथ्य खाना चाहिये ॥ २२० ॥

## २२१ अर्कलोकेश्वरो रसः

शुद्धसूतं पलं चार्कक्षीरै मर्द्यं पुनः पुनः।
द्विपलं शुद्धगन्धस्य महाकम्बुपलाष्टकम् ॥९०९॥
उभे वह्निरसै भाव्ये शोष्ये पेष्ये दिनत्रयम्।
मेलयेत्पूर्वसूतेन तदर्धं टङ्कणं क्षिपेत् ॥९१०॥
अर्कक्षीरैः पुनः सर्वं यामैकं मर्दयेद् दृढम्।
तच्छुष्कं चूर्णलिप्तेऽथ भाण्डे रुद्ध्वा पुटे पचेत् ॥
चतुर्गुञ्जामितं खादेन्मरिचाज्येन संयुतम्।
देयं दध्योदनं पथ्यं विजया सगुडा निशि ९१२

ग्रहणीदोषनाशार्थं नास्त्यनेन समं भुवि ।
ग्रहणीं नाशयेत्सर्वां अर्कलोकेश्वरो रसः ॥९१३

र स क, रसायन सं, र सु,
व. रा., र क ल, र का, अतिसाराधिकारे ।

भाषा—४ तोले शुद्ध पारा लेकर आकके दूध से वार २ भावना देना फिर ८ तोले शुद्ध गन्धक और ३२ तोले शख ( पाचजन्य जाति का वडा शंख ) इन दोनों को चीते के रस से तीन दिन तक कईवार भावना देकर सुखाना और उपरोक्त पारे मे मिला देना फिर उस मे पारे से आधा सुहागा मिलाकर आक के दूध से एक पहर भावना देना । जब वह सूख जाय तब एक हांडी के भीतर चूना पोतकर औषधि को रख कर चूना पुतेहुए ढक्कन से ढककर ( वारीक मिट्टी का लेप ढक्कन के चारों तरफ कर देना ) लघु पुट देना । इस रसकी ४ रत्ती की मात्रा घी और काली मिर्चके साथ देना इसके साथ पथ्य दही और भात है । और रातको भाग का चूर्ण गुड के साथ देना चाहिये । संग्रहणी का नाश करने के लिये इस से वढकर कोई दवा नहीं है । यह अर्कलोकेश्वर रस संग्रहणी को विलकुल नष्ट कर देता है ॥ २२१ ॥

## २२२ अर्कलोहाभ्रकम्

विदारिखर्जूरदुरालभानां
भृङ्गीशिवापिप्पलिगोस्तनीनाम् ।
रजः प्रयत्नेन गृहीतमेतत्
समार्कलोहाभ्रकचूर्णतुल्यम् ॥ ९१४ ॥
निषेवितं साज्यमधुप्रगाढं
षड्रूपमेवाशु निहन्ति यक्ष्म ।
उरःक्षतं तज्जनिताग्निमान्द्यं
पित्तास्रमर्शांसि च रक्तजानि ॥ ९१५ ॥

लो प. ( लो स. )

भाषा—विदारीकन्द, पिण्डखजूर जवासा, अतीस, हरड, पीपल और दाख इन का चूर्ण समभाग लेना और विदारीकन्द के वरावर प्रत्येक तावा, लोह और अभ्रक ( सवकी भस्म ) मिला देना । इस को घी और शहद के साथ खाने से छः लक्षणों वाला भी राजयक्ष्मा नष्ट हो जाता है । और उरःक्षत तथा उससे पैदा हुआ अग्निमान्द्य और रक्तपित्त तथा रक्तार्श दूर होते है ॥ २२२ ॥

## २२३ अर्कहेमाम्बुदम्

उशीरपत्तङ्गकपद्मकेसरात्
सचन्दनैर्वारुकबीजकेसरात् ।
एकीकृतो दारुनिशाब्दकैरवात्
रसोऽतिसान्द्रः सकलं समांशकम् ॥९१६॥
समार्कलोहाम्बुदसम्भवं रजः
समांशमेतेन मधु प्रयोजितम् ।
मुखाक्षिकर्णाद्गुदरोमकूपतः
प्रवृत्तमस्रं हरतेऽतिवेगितम् ॥ ९१७ ॥

लो प, ( लो स. )

भाषा—खस, पतंग, कमलकेसर, चदन, एर्वारुक, एक प्रकार की ककडी–कचरी–उसके न मिलने पर खीरा के वीज ) नागकेसर दारुहल्दी, नागर मोथा, तृणमणि ( कैरवा ) और सफेद कमल इन सव को वरावर लेकर वहुत वारीक चूर्ण वना लेना । फिर खस के वरावर तावा, लोहा और अभ्रक ( भस्में ) अलग २ मिलाकर शहद के साथ खाने से मुख, आख, कान, गुदा और रोमकूपो से निकला हुआ रक्त वन्द हो जाता है ॥ २२३ ॥

## २२४ अर्कानलेश्वरः

माक्षीककनकौ गन्धं आमयित्वा विचूर्णयेत् ।
रसं गन्धाद् द्विभागं च सिकतायन्त्रगं पचेत्९१८
दिनमेवं च तारं वा जरारोगहरं महत् ।
रसेन पिष्ट्वा स्वर्णं वा ताप्यं पश्चाद्विमिश्रयेत् ९१९
ताप्यस्थाने मृतं तालं तारकर्मणि कस्यचित् ।
रससङ्ख्यान् पुटान् दद्याद्गन्धै र्वा वीर्यवृद्धये ॥

यो. म,

भाषा—पारा १ भाग लेकर उतना ही सुवर्ण ( पत्र ) मिलाना अथवा सुवर्ण के स्थान मे चादी

भी मिला सक्ते है। जब पारे मे सुवर्ण मिलजाय तब पारे के बराबर सोनामाखी और आधे प्रमाण मे गन्धक डालकर अग्निपर पिघलाकर पर्पटी बना लेना। फिर पर्पटी का चूर्ण करके एक दिनभर वालुका यन्त्र मे पकाना यदि औषधि की शक्ति बढानी हो तो गन्धक दे देकर ६ लघुपुट दे देना। किसी २ के मत मे तारकर्म मे स्वर्ण माक्षिक के स्थान मे वेधक हरिताल डालते हैं ॥ २२४ ॥

## २२५ अर्केश्वरोरसः ( प्रथमः )

मृतार्कं सूतवङ्गौ च मृताभ्रं च समाक्षिकम्।
अमृतास्वरसैर्भाव्य मेकविंशतिवारकम् ॥९२१॥
वासाक्षीरविदारीभ्यां चतुर्गुञ्जाप्रमाणतः।
भक्षणाद्विनिहन्त्याशु रक्तपित्तं सुदारुणम् ९२२

र सं., र क, र. सु, ध, र. च, रक्तपित्ताधिकारे।

भाषा—पारे की भस्म, तांबे की भस्म, वङ्ग-भस्म, अभ्रकभस्म, और सोनामाखी सब को बराबर लेकर गिलोय के स्वरस से २१ बार भावना देना फिर अडूसा और क्षीरविदारी के ( क्वाथ अथवा चूर्ण के ) साथ ४ रत्ती इसको खाने से घोर से घोर रक्तपित्त शान्त हो जाता है ॥ २२५ ॥

## २२६ अर्केश्वरो रसः ( द्वितीयः )

पलानीशस्य चत्वारि बलेर्द्वादश तावती।
ताम्रस्य चक्रिका देया रसस्योर्द्ध्वं शरावकम् ॥
दत्वा निरुध्य तद्भाण्डं पूरयेद्भस्मना दृढम्।
अग्निं प्रज्वालयेद्यामत्रयं शीतं विचूर्णयेत्॥९२४॥
पुटेद् द्वादशधा सूर्यदुग्धेनालोडितं पुनः।
वरापावकभृङ्गाणां द्रवैस्त्रिस्त्रिश्च भावयेत्॥९२५॥
अयमर्केश्वरो नाम्ना रक्तमण्डलकुष्ठजित्।
गुञ्जाद्वयं ददीतास्य लवणादि विवर्जयेत्॥९२६॥

र म., र. सु, र. च., र. चि, वृ. यो त, र. को., रसायन स., र. ( मा. ) टी, नि. र, र. स., र. र दी., र दी., वै चि., र. का., र. क. कुष्ठाधिकारे।

टि० रसरत्नसमुच्चये सूताद्गन्धकोद्विगुणो दत्त। ताम्रचक्रिकाप्रमाण नोद्दिष्टम्। भावनाया च भृङ्गमपि न गृहीतमिति विशेष।

भाषा—पारा १६ तोले, गन्धक ४८ तोले लेकर कजली कर लेना। फिर एक हांडीमे इस कजली मे से आधी रखकर ऊपर ६४ तोले शुद्ध तांबे की एक चकरी रखकर बाकी बची हुई कजली को ऊपर से रखदेना। फिर ऊपर से उस सबको शराव से ढककर मुलतानी मिट्टीसे उस को बंद कर लेना और हाडी को ऊपर से भस्म से ठोंस कर भर देना। और ३ पहर तक तेज अग्निमे उस को पकाना जब वह स्वागशीतल हो जाय तब सब का चूर्ण करके ( यदि सब तांबे की भस्म न होय तो कटोरी को खुरच लेना जितना तांबे का भाग कड़ा रहजाय उस को छोड़ देना ) आक के दूध से बारह बार पुट देना फिर त्रिफला, चित्रक और भागरे के रस अथवा क्वाथ से प्रत्येक से तीन तीन बार भावना देना यह अर्केश्वर रस लालचकत्ते वाले कोढ को हरता है इसकी मात्रा २ रत्ती की है क्षार ( नमक ) और खटाई इत्यादि इसके सेवन करने मे छोड़ देना चाहिये ॥ २२६ ॥

टि० रसरत्न समुच्चयमे पारे से गन्धक दूना बताया है तांबे की कटोरी का कोई प्रमाण नहीं बताया भावना मे भी भागरा नहीं बताया और तांबे की कटोरी बनाकर उस के भीतर मे रस रखना कहा है इतनी वहा विशेषता है।

## २२७ अर्केश्वरो रसः ( तृतीयः )

मृतं सूतं मृतं ताम्रं मृतं तीक्ष्णं च टङ्कणम्।
खर्परं त्रिकटुं तालमर्कक्षीरेण मर्दयेत् ॥९२७॥
दिनैकेन भवेत्सिद्धो नाम्ना ह्यर्केश्वरो रसः।
अर्कक्षीरेण वै नस्यं सन्निपातहरं परम् ॥ ९२८ ॥

र सु, सन्निपाताधिकारे। र. का, सूर्येश्वर नामाय रस भक्षणेऽपि योजनीय।

भाषा—पारे की भस्म, तांबे की भस्म, कान्त-लोहभस्म, सुहागा, खपरिया, त्रिकटु और हरताल इन सब को बराबर लेकर आक के दूध से एक

दिनभर भावना देना। इस प्रकार यह अर्केश्वर रस सिद्ध हो जावेगा। आक के दूध मे घोटकर इस का नस्य देने से सन्निपात मिट जाता है। यह रस खाया भी जा सकता है ॥ २२७ ॥

### २२८ अर्केश्वरो रसः (चतुर्थः)

**तालं ताप्यं शिलां शुद्धं सूतं सैन्धवटङ्कणम्।**
**सवह्निकं च भृङ्गस्य चूर्णं तुल्यं विमिश्रयेत्९२९॥**
**अयमर्केश्वरो नाम्ना सुप्तमण्डलकुष्ठजित्।**
**चतुर्गुञ्जं लिहेत्क्षौद्रै रनुपानं च पूर्ववत् ॥९३०॥**

र. सु. कुष्ठाधिकारे।

टि० अनुपानं च पूर्ववदिति—अस्माद्रसात्पूर्ववर्ती कामधेनुरसोऽस्ति तस्यानुपानं यथा—गुग्गुलुं त्रिफला गन्ध सममैरण्डतैलकम्। द्विनिष्कमनुपान स्याद्रक्तमण्डल कुष्ठजित्। इति तदस्यापि बोध्यम्।

**भाषा**—हरिताल, सोनामाखी, मैनसिल, शुद्ध पारा, सेंधानमक, सुहागा, चित्रक और भागरे का चूर्ण सबको बराबर लेकर बारीक चूर्ण करके मिला लेना। यह अर्केश्वर रस सुप्तमण्डलवाले कोढको जीतता है। इसकी ४ रत्तीकी मात्रा शहद मे मिलाकर चाटनी चाहिये, बाकी अनुपान पहिले के अनुसारही है ॥ २२८ ॥

टि०—मूलग्रन्थ मे इस से पहिला कामधेनुरस है उसका अनुपान इस प्रकार है—गूगल, त्रिफला, गन्धक, और एरण्डका तेल सबको मिलाकरके ८ माशे दवाई के साथ लेना।

### २२९ अर्केश्वरो रसः (पञ्चमः)

**नागं पारदगन्धकौ त्रिलवणान् वार्यर्कजं मेलयेत्।**
**एकैकं च पलं पलत्रयमतः पञ्चक्रमान्मर्दयेत्॥**
**सर्वं तद्दिवसत्रयं तदनुतद्दत्वा पुटं भावनाः।**
**कुर्यात्सत्रिफलाग्निवेतसरसैःपञ्चाधिका विंशतिः**
**पञ्चैतत्क्रमशस्ततोगुडभवै**
**र्दत्तोऽस्यवल्लोजलै-**
**र्हन्त्यर्शांस्यखिलानिसूरण घृतै**
**स्तस्यान्नमस्मिन्हितम्।**
**अर्केशेपरिवर्ज्यतामितिमुनिः**
**श्रीवासुदेवोऽवदत्,**
**कूष्माण्डीफलमाषपायसमति-**
**व्यायाममर्कातपम् ॥ ९३२ ॥**

र. र. स, र को, अर्शोऽधिकारे।

**भाषा**—सीसा ४ तोले, पारा ४ तोले, गन्धक ४ तोले त्रिलवण (काला, सेंधा और विड) १२ तो०, आकके पत्तों का रस २० तो० यह लेकर तीन दिन तक खरल मे घोटना और लघुपुट देदेना। फिर हरड, बहेडा, आंवला, चित्रक और वेत इन पाचों मे से प्रत्येक के रस अथवा क्वाथ से पाच पाच भावनाए देना इस प्रकार २५ भावना देने से यह रस सिद्ध होता है इसकी ३ रत्तीकी मात्रा गुड़की चासनी के साथ खाने से बवासीर को नष्ट करती है। जमीकंद के शाक तथा घी के साथ भोजन करना इस मे पथ्य है। यह अर्केश्वर रस श्रीवासुदेव मुनिने बताया है, कूष्माण्ड उडद, खीर इन का भोजन, कसरत, और धूप मे रहना इस रस के सेवन मे छोड देने चाहियें ॥ २२९ ॥

### २३० अर्धनारीनटेश्वरः (प्रथमः)

**शुद्धं सूतं विषं गन्धं समं शुद्धं च टङ्कणम्।**
**मर्दयेत्खल्वमध्ये च यावत्कज्जलसन्निभम् ९३३**
**नागं तालं समं सत्त्वं माक्षिकं च द्रुताभ्रकम्।**
**अर्धभागं विमृद्नीयान्नकुलस्य मुखे क्षिपेत्९३४।**
**शरावसम्पुटस्यान्तरूर्ध्वाधो लवणं क्षिपेत्।**
**दिनैकं दापयेदग्निं स्वाङ्गशीतं तदुद्धरेत्॥९३५॥**
**सम्पूज्य योगिनीवीरान् खल्वे मर्द्य दिनार्धकम्।**
**त्रिवारं गरलैः सारैः सुरदाल्या च सप्तधा ९३६**
**छुच्छुन्दर्याश्च पित्तेन भावनासप्तकं कुरु।**
**सिद्धः स्याच्च रसेन्द्रोऽयं पूजयेत्पार्वतीगणम् ॥**
**गुञ्जाद्वयप्रमाणेन नासिकायां च दीयते।**
**वामभागे ज्वरं हन्ति तत्क्षणाल्लोककौतुकम् ॥**
**योजयेद्दक्षिणे भागे आरोग्यं निश्चितं कुरु।**
**गुह्याद्गुह्यतरं गोप्यं न देयं यस्य कस्यचित् ९३९**

अर्धनारीश्वरो नाम्ना वैद्यजीवनहेतवे।
स्थापयेत्काञ्चने भाण्डे शुद्धस्थानेषु धारयेत्॥

अथमन्त्रः—ओं क्रों ह्रीं हु योगिनी वीर प्रसीद मद्दत्तवलिं गृह्ण स्वाहा। इति पूजावलिमन्त्रः।

रससागर,

**भाषा**—शुद्धपारा, बछनाग, गन्धक, और शुद्ध सुहागा इन सबको बराबर लेकर खरल मे घोटकर कज्जली बनालेना फिर सीसा, हरताल, सोनामाखी का सत्त्व ये सब प्रत्येक पारे के बराबर और अभ्रकद्रुति पारे से आधी मिलाकर फिर घोटना फिर उसको न्योले के मुख मे रखकर शराव सम्पुट मे बंद कर देना। उपरोक्त औषधि को शरावसम्पुट मे रखने के प्रथम ऊपर और नीचे नमक रख देना और एक दिन अग्नि मे पकाना। स्वांगशीतल हो जाने पर निकाल लेना फिर योगिनी और वीरो की पूजा करके आधे दिन तक खरल मे घोटना फिर ३ बार सर्पविष से, ७ बार बंदाल के रस से और ७ बार सर्पविष से, ७ बार बंदाल के रस से और ७ बार छछूंदर के पित्तसे भावना देना इस प्रकार इस रसको सिद्ध हुआ जानना इसका २ रत्तीभर नस्य वाई नाक मे देने से उसी वक्त वाई तरफ के आधे शरीर का ज्वर उतर जाता है और देखनेवालों को वडा आश्चर्य होता है। फिर उसी प्रकार दाहिनी नाक मे नस्य देने से अवश्यही आरोग्य हो जाता है। यह रस परम गोपनीय सर्वसाधारण को नहीं बताना चाहिये इस रस का नाम अर्धनारीनटेश्वर है यह वैद्यों की आजीविका के लिये है। सोने के पात्र मे रखकर शुद्ध स्थान मे रखना चाहिये। ओं क्रो ह्रीं० यह ऊपर मूल मे लिखा हुआ इस के प्रयोग मे पूजा और बलिदान का मन्त्र है॥२३०॥

### २३१ अर्धनारीनटेश्वरो रसः (द्वितीयः)

पारदं गन्धकं वङ्गं तथा तीक्ष्णं च हिङ्गुलम्।
शुल्वभस्म च माक्षीकं नेपालं चोत्तरोत्तरम्॥
वह्निमूलरसेनैव मत्स्यपित्तेन भावयेत्।
काचकूप्यां विनिःक्षिप्य वालुकायन्त्रपाचितम्॥
तदा नेपालवीजानि पक्वेऽस्मिन् निःक्षिपेद्बुधः।
पूर्वोक्तेन रसेनैव मर्दयेच्च दिनत्रयम्॥९४३॥
नित्यं शुभकरं ह्येतद् वल्लमात्रं तु दापयेत्।
आजेन पार्श्वक्षीरेण शृङ्गवेररसेन च॥
यत्पार्श्वात्पीयते क्षीरं तत्पार्श्वज्वरनाशनम् ९४४

र क यो,

**भाषा**—पारा १ भाग, गन्धक २ भाग, वङ्ग ३ भाग, तीक्ष्णलोह ४ भाग, ताम्रभस्म ५ भाग, सोनामाखी ६ भाग और शुद्ध जमालगोटा ७ भाग, इनको लेकर चित्रकमूलके रस से और मछली के पित्त से भावना देना फिर शीशी मे रखकर वालुकायन्त्र मे पकाना। पकजाने पर उसमे जमालगोटे की गिरी मिलानी फिर ३ दिन तक चित्रकमूल के ही रस मे उसको घोटना यह रस सदा कल्याण करने वाला है इसकी ३ रत्ती की मात्रा उपयोग मे लाना। ऊपर से वकरी के एक ही थन से दूध निकालकर पिलाना अथवा सोंठ का रस पिलाना वकरी के जिस थनका दूध पिया जायगा उस तरफका शरीर तत्काल ही ज्वरमुक्त हो जायगा॥ २३१॥

### २३२ अर्धनारीनटेश्वरः (तृतीयः)

निष्कं रसं तथा तारं तदर्धं तुत्थमुच्यते।
तारार्धं मणिपाषाणमेतत्संचूर्ण्य मर्दितम्॥९४५॥
श्वेतदूर्वारसप्रस्थे दोलायन्त्रेण पाचयेत्।
मर्दयित्वा पुन श्चूर्णं कर्णे फूत्कारयेत्सुधीः॥
अर्धनारीश्वरो नाम अर्धाङ्गज्वरनाशनम् ९४६

र क. यो.,

**भाषा**—शुद्धपारा ४ माशे, चादी ४ माशे, नीलाथोथा २ माशे, मणिपाषाण १ माशा इन सबको मिलाकर वारीक चूर्ण करलेना फिर उसको सफेद दूब के रस मे दोलायन्त्र मे पकाना और वारीक चूर्ण करके रखलेना फिर किसी पतली

वासकी नली इत्यादि मे रखकर कान म फूक देना यह अर्धनारीनटेश्वर रस है। जिस कान मे इसको डाला जाता है उसी तरफ के, आधे शरीरका ज्वर नष्ट हो जाता है। उसी प्रकार दूसरे कान मे भी डालकर ज्वर उतार देना ॥ २३२ ॥

## २३३ अर्धनारीनटेश्वरः ( चतुर्थः )

गौरीशिलां हिङ्गुलमभ्रकं च
तारं च ताप्यं च वलिं च सूतम् ।
विषं च नेपालमधूल्कटं च
वल्लीफलं खर्परिमेलतुल्यम् ॥ ९४७ ॥
सर्वं विचूर्णेच्छिखिमत्स्यपित्तैः
सुभावयेदग्निभवेन वारिणा ।
हालाहलं दन्तिजमञ्जतोयै-
र्दिनेनमर्द्यं परिभाव्य शोषयेत् ॥ ९४८ ॥
आजेन दुग्धेन युतं च कृत्वा
यामार्धमात्रेण निहन्ति जूर्तिम् ।
अर्धे शरीरे वपुपश्च मध्ये
महाद्भुतं वैद्यविवादकाले ॥ ९४९ ॥
कथितो मञ्जुनाथेन रहस्यं चित्रकारणम् ।
अर्धनारीश्वरो नाम रसश्चैव रसायनम् ९५०

र. क. यो , व रा., ज्वराधिकारे ।

भाषा—गौरीपाषाण, शिंगरिफ, अभ्रकभस्म, चादीभस्म, स्वर्णमाक्षिकभस्म, गन्धक, पारा, वछनाग, जमालगोटा, उत्तम शहद, वढाल, खपरिया, एलुआ और नीलाथोथा, इन सब को वरावर लेकर मोर और मछली के पित्तों से और चित्रक के रस से अलग २ भावना देना फिर सर्पविष और जमालगोटे के क्वाथ से १ दिनभर भावना देकर सुखालेना फिर इससिद्ध किये हुए रस को वकरी के दूध मे मिलाकर इसका उपयोग करना यह तीन ही पहर के भीतर आधे शरीर से ज्वर को निकाल देता है। इसी प्रकार सम्पूर्ण शरीर मे से ज्वर को निकाल कर वैद्यों के विवाद के समय मे महान् चमत्कार दिखलाता है। लोगों को आश्चर्य मे डालने वाले इस रहस्य को श्रीमञ्जुनाथ जी महाराजने कहा है यह अर्धनारीश्वर नामवाला रस रसायन भी है ॥ २३३ ॥

## २३४ अर्धनारीनटेश्वरः ( पञ्चमः )

रसगन्धालसौम्यानि कुनटी च समं समम् ।
अमावस्या दिने ब्रह्मचर्यान्मर्द्यं शिवाम्बुना ॥
जीवतो नकुलस्यास्ये क्षिप्त्वा सीवेन्मुखं च तत् ।
चक्रीकृत्य च तत्सर्वं बध्वा मृत्कर्पटै र्युतम् ॥
गौरीलवणमध्यस्थमन्धमूषागतं पचेत् ।
पञ्चप्रहरमग्निं तु दद्याद्बिल्वेन्धनेन च ।९५३॥
शीतं गृहीत्वा काकाण्डे कुलायस्थे क्षिपेच्च तत्
कृत्वा च विवरं तत्र तप्तलोहशलाकया ९५४॥
स्थितं पञ्चदशाहं तत्कृष्णाष्टम्यां तदुद्धरेत् ।
अथापरं च नकुलं सर्पदंष्ट्रां च भोजयेत् ॥
स्वकर्णे मरिचं क्षिप्त्वा प्रोक्षयेद्विधिना ततः ॥

अथ मन्त्रोद्धार —

प्रणवः स्थिरमाया च विंदुहंसयुतो मनुः ।
सत्वाद्या साऽजपा भस्मी कुरु द्वन्द्वाग्निजायया॥
मरिचैर्वभ्रुपित्ताक्तै र्मर्दयेच्च तदौषधम् ।
सारं गृहीत्वा तत्सर्वं मयूराण्डे निधापयेत् ९५७
मृत्कर्पटैः पिधायान्तः पट्टपञ्चकसोरकैः ।
स्थितं च डमरूयन्त्रे द्विपञ्चामाग्निना पचेत् ॥
शीतं गृहीत्वा त्रिपट्टविषाभ्यांचशिवाम्बुना ।
दद्याच्चसूर्यग्रहणे पुनस्तच्चन्द्रपर्वणि ॥९५९॥
छुच्छुन्दरीपित्तरसै र्दद्यादपि पुटत्रयम् ।
होलिकाह्नि च शैवाम्बुशुद्धसिन्धुफलद्रवैः ९६०
पुटानि पञ्चपुष्पैस्तु ततः कृष्णाष्टमीदिने ।
शिवाम्बुशुद्धजैपालरसेनच पुटानि षट् ॥९६१॥
गुटी सर्षपतुल्यास्य कार्याजपविधानतः ।
भृङ्गद्रावै र्दक्षिणाक्षिण ग्राह्या वामाक्षिण च द्रवैः
अञ्जयेत्सन्निपातेषु सर्वभूतग्रहेष्वपि ।
उन्मादे चाप्यपस्मारे डाकिनीशाकिनीग्रहे ९६३

**सहदेवीशिवाम्बुभ्यां तथा सर्वज्वरेष्वपि ।**
**रसोऽर्धनारीनाटेशःपरं कौतुककाकः ॥९६४॥**

पुटमत्र भावना नस्याञ्जनयो रस्य प्रयोगः ।

र. का,

भाषा—पारा, गन्धक, हरताल, सौम्य (सुहागा या चादी ) और मैनसिल सब को बराबर लेकर ब्रह्मचारी रहकर अमावस्या के दिन हरड के क्वाथ से घोटना फिर उसको एक जीते नेउले के मुख मे डालकर उसका मुख सीं देना। फिर पूरे नेउले की देह को चक्र के माफिक गोल करके ऊपर से कपड़मिट्टी कर देना फिर अन्धमूषा मे ऊपर तथा नीचे गन्धक और नमक का चूर्ण रखना और बीच मे उस चक्रीकृत नेउले को रखकर ५ पहर तक बेलकी लकड़ी को जलाकर पकाना, ठंढा होनेपर उस रसको निकालकर घोसले मे ही कौए के अण्डे मे गरम की हुई लोहे की सलाई से छेदकर उसके भीतर रखकर १५ दिन तक उसी मे रहने देना। फिर कृष्ण पक्ष की अष्टमी को उसको निकालना।

एक दूसरे नेउले को लेकर उसको सापका फण खिलाना। अपने कान मे कालीमिर्च रखकर "ॐ ह्रीं हसः सोह भस्मी कुरु कुरु स्वाहा" इस मत्रसे उसका प्रोक्षण करके उसकी बलि देना उस नेउले का पित्ता निकालकर उसमे कालीमिर्चों को भिगो कर उपरोक्त रसके साथ बारीक घोटना फिर उसमे से सब रसको निकालकर मोर के अडे मे पाचों लवण और सोरे से कपड़मिट्टी करके रखना। उसको डमरू यन्त्र मे ६ पहर तक पकाना। ठंढा होने पर निकाल लेना। फिर सूर्यग्रहण के दिन तीनो लवण और बछनाग मिलाकर हरड के क्वाथ मे घोटकर ३ बार और चन्द्रग्रहण के दिन छछूंदर के पित्ते से ३ बार पुट देना। फिर होली के दिन हरड के क्वाथ से ५ पुट देना। फिर पुष्य नक्षत्र मे समुद्र फल के रस अथवा क्वाथ से ५ पुट देना और कृष्णपक्ष की अष्टमी के दिन हरड़ और शुद्ध जमालगोटे के क्वाथ से ६ बार पुट देना फिर पूर्वोक्त मंत्र को जपकर इसकी सरसों के बराबर गोलियें बना लेना। भागरे के रस मे घोटकर दाहिनी आख मे और ब्राह्मी के रस मे घोटकर बांई आख मे इसका अञ्जन लगाना। यह अञ्जन सन्निपात मे, भूतग्रह मे, उन्माद, डाकिनीग्रह, और शाकिनी ग्रह मे अत्यन्त हितकर है। दाहिनी आख मे सहदेवी के क्वाथ से और बाई आख मे हरड़ के क्वाथ से घिसकर लगाने से यह रस सभी ज्वरों को शान्त करता है। यह अर्धनारीनटेश्वर रस आश्चर्य मे लोगों को डालता है॥ २३४॥

### २३५ अर्धनारीनटेश्वरः ( षष्ठः )

**त्रिकटुं त्रिफलां सूतं गन्धकं ताम्रभस्मकम् ।**
**लोहभस्म च तिक्तां च भृङ्गाब्दविषतिन्दुकम् ॥**
**एतेषां भागमेकैकं तिन्दुकं द्विगुणं क्षिपेत् ।**
**पेषयेदाजपित्तेन पुत्रिणीपयसा युतम् ॥९६६॥**
**अञ्जयेद्दक्षिणं नेत्रमर्धनारीनटेश्वरं ।**
**ज्वरं च नाशयेच्छीघ्रंलोककौतुककारकम् ॥**

र. का, र को, ज्वराधिकारे

भाषा—त्रिकटु, त्रिफला, पारा, गन्धक, ताबे की भस्म, लोहभस्म, कुटकी, भागरा, मोथा, और बछनाग सबको समभाग लेना और पारेसे द्विगुण कुचिला मिला कर बकरे के पित्त से भावित करना। लड़के वाली स्त्री के दूध मे मिलाकर दाहिनी आख मे अञ्जन करना यह अर्धनारीनटेश्वर रस है तत्काल ज्वर को हटा देता है। लोग देखते ही आश्चर्य करने लगते है२३५॥

### २३६ अर्धनारीनटेश्वरः ( सप्तमः )

**रसस्य भाग एकः स्याच्चत्वारो जयपालजाः ।**
**सप्तवाकुचिवीजोत्थाः पिप्पल्या एकविंशतिः ॥**
**सर्वतुल्यं निम्बवीजचूर्णं सर्वं समीकृतम् ।**
**दोलायन्त्रे निम्बरसे सप्ताहं पाचयेद्भृशम् ॥**
**अन्तर्धूमेन नाम्ना स्यादर्धनारीनटेश्वरः ।**
**अञ्जनात्सन्निपातग्रस्तत्तत्पार्श्वगतो भवेत् ॥**

र. का,

भाषा—पारा १ भा०, जमालगोटा ४ भा० बाकुचीके बीज ७ भा० पिप्पली २१ मा० और सब के बराबर नीम के बीजों का चूर्ण, सब को मिलाकर बारीक चूर्ण करलेना फिर दोलायन्त्रमे नीमके रस के साथ ७ दिनतक अच्छी तरह से भाफको यन्त्र के भीतर ही रोककर स्वेदन करना। यह अर्धनारीनटेश्वर रस है सन्निपात मे जिस तरफ की आख मे अञ्जन लगाया जायगा उसी तरफ का ज्वर नष्ट हो जायगा ॥ २३६ ॥

## २३७ अर्धनारीनटेश्वरोरसः (अष्टमः)

मज्जा निम्बफलानां च राजवृक्षफलस्य च ।
कुनटी च कणा चेति शाणमात्रं पृथक् पृथक् ॥
अतिश्लक्ष्णं वाससा च गुटिका च कृता शुभा ।
कार्या निम्बरसोपेता साक्षान्माषप्रमाणतः ॥
निम्बूकरसयोगेन चक्षुरेकमथाञ्जयेत् ।
सदोषज्वरनाशः स्यादिति धन्वन्तरीरितम् ॥
अर्धनारीश्वरो नाम रसः परमदुर्लभः ।
भैरवेण स्वयं प्रोक्तः पार्वत्याः प्रेमयोगतः९७४

र का.,

भाषा—नीमके फलों की गिरी, अमलतास के बीजों की गिरी, मैनसिल और पीपल इनको प्रत्येक ४ चार माशे लेकर बहुत बारीक पीसकर कपड़े से छान लेना फिर नीमके रस मे घोटकर १ माशे की गोलियें बनालेना। नींबू के रस मे घिसकर एक आखमे अञ्जन करना इससे दोषसहित ज्वर का नाश होता है ऐसा महाराज धन्वन्तरिजी का वचन है। यह अर्धनारीनटेश्वर रस परम दुर्लभ है। भैरवजीने पार्वतीके प्रेमसे इस को प्रकट किया था ॥२३७॥

## २३८ अर्धनारीनटेश्वरो रसः ( नवमः )

पारिभद्रस्य बीजानि गृहधूमं तथा वचा ।
मागधी कुनटी जीरशिलाञ्जनसमन्वितम् ॥
कारवल्ली रसैश्चैव वटीचणकमात्रतः ।
अर्धनारीश्वरोनाम चक्षुषोरञ्जनंज्वरे ॥ ९७६॥

र. का., र. को , ज्वराधिकारे

भाषा—कटकी पलाश के बीज, घर के धुए का जाला, वच, पीपल, मैनसिल, जीरा, और सुरमा इन सब को बराबर लेकर करेले के रस मे बारीक घोटकर चने के बराबर गोलियें बना लेना यह अर्धनारीनटेश्वर रस है। ज्वर मे इस का आखों मे अञ्जन लगानेसे ज्वर नष्ट होता है ॥ २३८ ॥

## २३९ अर्धनारीनटेश्वरो रसः । ( दशमः )

शुद्धसूतं विषं वङ्गं हिङ्गुलं च समांशकम् ।
श्वेतदूर्वारसैः खल्वे मर्दयेद्धटिका त्रयम् ॥९७७॥
श्वेतदूर्वारसप्रस्थे दोलायन्त्रे दिनं पचेत् ।
दोलायन्त्रे रसे शेषे ह्यौषधं मर्दयेत्पुनः॥९७८॥
कर्णरन्ध्रप्रयोगेण पार्श्वज्वरविनाशनम् ।
अर्धनारीश्वरो नाम शम्भुना परिकीर्तितः ९७९

वै चि., ज्वराधिकारे ।

भाषा—शुद्धपारा, बछनाग, बङ्ग और शिंगरिफ इन सब को बराबर लेकर सफेद दूब के रस से खरल मे ३ घडी तक घोटना फिर १ सेर सफेद दूब का रस लेकर दोलायन्त्र से एक दिन स्वेदन करना यदि दोलायन्त्र मे रसशेष रहजाय तो उसी रस मे फिर औषधि को घोट लेना। फिर जिस तरफ के कान मे डालो उस तरफ का ज्वर दूर हो जाता है यह अर्धनारीनटेश्वर रस शिवजी महाराज ने बताया है ॥ २३९ ॥

## २४० अर्धनारीनटेश्वरोरसः ( एकादशः )

रसं गन्धामृतं चैव समं शुद्धं च टङ्कणम् ।
मर्दयेत्खल्वमध्ये तु यावत्स्यात्कज्जलप्रभम् ॥
नकुलास्यमुखे क्षिप्त्वा मृदा संवेष्टयेद्बहिः ।
स्थापयेन्मृन्मये पात्रे ऊर्ध्वाधो लवणं क्षिपेत् ॥
भाण्डवक्त्रं निरुध्याथ चतुर्यामं हठाग्निना ।
स्वाङ्गशीतं समुद्धृत्य खल्वे कृत्वा तु कज्जलीम्॥
गुञ्जामात्रः प्रदातव्यो नस्यकर्मणि योजयेत् ।
वामभागे ज्वरं हन्ति तत्क्षणाल्लोककौतुकम् ॥

कुर्याद्दक्षिणभागेन चारोग्यं निश्चितं भवेत् ।
गोप्याद्गोप्यतमः प्रोक्तो गोपनीयः प्रयत्नतः॥
अर्धनारीश्वरो नाम रसोऽयं कथितो भुवि ॥

र. को, भै. र, र च., र मु., र श, टो., र मु, रसायन स, व. रा, र का., चि र. भ., ज्वराधिकारे।

टि० रसेन्द्ररत्नकोषे नकुलारिमुखस्थाने नकुलस्यमुखे, इतिपाठः । रसमुक्तावल्या नकुलारिमुखे इति अधिकमस्ति वृद्धफणिनो गरलेन भावना चाधिकाऽस्ति ।

भाषा—पारा, गन्धक, वछनाग, और शुद्ध सुहागा इन सब को बराबर लेकर खरल मे जब तक अच्छीतरह उसकी कज्जली न हो जाय तब तक उसको घोटना फिर साप की गर्दन काटकर उसके मुख मे रस को रखकर बाहर से कपड मिट्टी कर लेना फिर एक हाडी मे ऊपर नीचे नमक रखकर बीच मे उसको दवाकर हांडी का मुख अच्छी तरह से बद कर देना और ४ पहर तक कड़ी आग मे उसको पकाना जब स्वागशीतल हो जाय तब खरल मे वारीक घोटकर उसकी कज्जली बना लेना, एक रत्तीभर इसका नस्य बाई नाक मे देना उसी समय वायें शरीर का ज्वर नष्ट हो जाता है। देखने वाले चकित हो जाते हैं उसी प्रकार दाहिनी नाक मे नस्य देने से पूरे आरोग्य को प्राप्त हो जाता है। यह अर्धनारीनटेश्वर रस ससार मे परम गोपनीय है ॥ २४०॥

## २४१ अर्धनारीनटेश्वरः (द्वादशः)

रसगन्धौ समौ शुद्धौ विषं ग्राह्यं च तत्समम् ।
जैपालं तत्समं ग्राह्यं मरिचं च चतुर्गुणम् ९८५
त्रिफलाया रसैर्मर्द्यं भावना पञ्चधा तथा ।
जम्बीराणां द्रवै र्नस्यमेकस्मिन्नासिकापुटे ॥
शरीरार्धगतं घोरं ज्वरं हन्ति न संशयः ।
अर्धनारीश्वरो नाम रसः शम्भुप्रकीर्तितः ॥

र. स., र. च, ज्वराऽधिकारे ।

शुद्धपारा, शुद्धगन्धक, एकेक भाग वछनाग और जमालगोटा दो दो भाग सबको बराबर लेना और काली मिर्च पारे से चौगुनी लेना पहिले एक वार त्रिफला के क्वाथ की भावना देकर जम्बीर के रस की ५ भावनाए देना इस रस का नस्य दिया जाता है जिस नाक मे इस का नस्य दिया जाय उसी समय उस तरफ का ज्वर चला जाता है इसी प्रकार दूसरी तर्फ का ज्वर निकाल देना चाहिये। यह अर्धनारीनटेश्वर रस शिवजी महाराज ने कहा है ॥ २४१ ॥

## २४२ अर्धनारीनटेश्वरः। (त्रयोदशः)

पलैकं भावयेत्तालं कूष्माण्डकफलद्रवैः ।
त्रिःसप्तकृत्वश्चूर्णाद्भि स्तथा कर्कटिकारसैः ॥
चतुःशाणाहिनिर्मोकयुक्तं कूप्यां निरोधयेत् ।
विपचेद्वालुकायन्त्रे द्वादशप्रहरं ततः ॥९८९॥
स्वाङ्गशीतं समुद्धृत्य द्विशाणं तुत्थकं क्षिपेत् ।
अञ्जनात्स ज्वरं हन्ति साज्यो गुञ्जामितो रसः
नाम्नाऽर्धनारीनाटेशः कृपया शङ्करोदितः ।
देवदालीरसै र्भाव्यं वारमष्टोत्तरं शतम् ॥
तद्वन्निम्बुरसैस्तुत्थं स एव स्याद्रसोऽथवा ९९१

र. सु, भै. सा, रसावतार मा, यो म, ज्वराधिकारे।

भाषा—४ तोले हरताल को पेठे के रस से १ वार भावना देना फिर २१ वार चूने के पानी से भावना देना और २१ ही बार ककडी के रस की भावना देना फिर १ तोला साप की केंचुली मिलाकर शीशी मे रखकर अच्छी तरह उस का मुख बंद करके १२ पहर तक बालुका यन्त्र मे पकाना स्वागशीतल हो जानेपर आधा तोला नीलाथोथा मिलाकर घोट लेना। इस को १ रत्तीभर घी मे मिलाकर आखों मे लगाने से ज्वर शान्त हो जाता है यह अर्धनारीनटेश्वर रस शिवजी महाराज ने कृपा करके बताया है। अथवा बन्दाल के रस से १०८ बार और नींबू के रस से १०८ वार नीलेथोथे को भावित करने से भी उपरोक्त रस बनता है ॥ २४२ ॥

## २४३ अर्धनारीनटेश्वरः (चतुर्दशः)

तीक्ष्णं दारवदारदार्कदरदं
लेलीतकं माक्षिकं,
अब्ध्येकर्तुशरद्विसप्तगुणितं
तच्च क्रमान्मर्दितम्
वह्नेर्मूलरसैं स्त्रिधाऽपि शफरी-
पित्तेन सम्प्लावितं,
यन्त्रे शार्करिले दिनार्धमखिलं
तत्काचकूप्यां पचेत् ॥ ९९२ ॥

पाकान्ते तु निकुम्भबीजममलं
तत्राष्टभागं क्षिपेत्
तत्सूक्ष्मीकृतमेकतः खलु रसः
सिद्धोऽर्धनारीश्वरः ।
यत्पार्श्वस्तनजेन चाजपयसा
वल्लैकमात्रोऽशित
स्तत्पार्श्वज्वरमाशुहन्त्युभयतः
सर्वाङ्गगं च ज्वरम् ॥ ९९३ ॥

र. प, ज्वराधिकारे ।

भाषा—लोहभस्म ४ भाग, वछनाग १ भाग, शिंगरिफ से निकाला हुआ पारा ६ भाग तांबे की भस्म ५ भाग, शिंगरिफ २ भाग, गन्धक ७ भाग और सोनामाखी ७ भाग लेकर चित्रक की जड के क्वाथ से ३ वार भावना देना फिर उसको मछली के पित्ते से भिगोकर और शीशी मे रखकर वालुका यन्त्र मे दो पहर तक पकाना, पकजाने पर ८ भाग शुद्ध जमालगोटा डालना फिर सबको मिलाकर वारीक पीस लेना यह अर्धनारीश्वर रस सिद्धरस है इसकी ३ रत्ती की मात्रा बकरी के दूध के साथ देना । जिस तरफ के बकरी के स्तनके दूध के साथ इसको दिया जायगा उस तरफ शरीर ज्वररहित हो जावेगा । इस प्रकार आधा २ करके शरीर के दोनों तरफ का ज्वर नष्ट हो जाता है ॥ २४३ ॥

## २४४ अर्धनारीनटेश्वरः ( पञ्चदशः )

वराटं टङ्कणं शुद्धं पञ्चभागसमन्वितम् ।
नवभागा मरीचस्य विषं भागत्रयं मतम् ॥ ९९४ ॥
स्तन्येन वटिकां कृत्वा नस्यं दद्याद्विचक्षणः ।
शिरो विकारान् विविधान् हन्ति श्लेष्मोत्तरानपि

भै. र, शिरोरोगे

भाषा—कौडीभस्म १ भा०, शुद्ध सुहागा ५ भा०, कालीमिर्च ९ भाग, और वछनाग ३ भाग सब को मिलाकर औरत के दूध मे वारीक घोटकर गोलियें बनालेना इसका नस्य देने से सिर के अनेक प्रकार के विकार और कफ विकार भी नष्ट हो जाते है ॥ २४४ ॥

## २४५ अर्धनारीनटेश्वरः (षोडशः )

सूतकं दरदं चैव सुरभीतालटङ्कणम् ।
अभ्रकं मृतनागं च शिलाजिद्रविसंयुतम् ९९६।
क्रमुनीरेण तन्मर्द्य स्नुहीक्षीरै स्त्रिवारकम् ।
भावयेदर्कदुग्धेन क्वाथे च त्र्यौषणे तथा ९९७
मर्दयेच्च चतुर्यामं यावच्छुद्धो रसो भवेत् ।
कणाशीतोदकैर्योज्यः पुटे घ्राणस्य दक्षिणे ॥
उष्णोदकेन वा योज्यः पुटेऽन्ये रसमिश्रितः ।
ज्वरं च नाशयत्याशु नान्यथा शिवभाषितम् ॥
वैद्यानाञ्च हितार्थाय रसकोषे प्रकाशितम् ९९९

र को., ज्वराधिकारे—

भाषा—पारा, सिंगरिफ, गोदन्ती, हरताल, सुहागा, अभ्रकभस्म, सीसाभस्म, शिलाजीत और ताम्रभस्म सबको बराबर लेकर सुपारि के क्वाथसे १ वार थूहर के दूधसे ३ वार, आक के दूध और त्रिकटु के क्वाथ से एक एकबार भावना देना । प्रत्येक भावना ४ पहर तक देते रहना जिससे कि रस शुद्ध हो जावे । इसका पीपल के चूर्ण और ठढे पानी के साथ दाहिनी नाक मे नस्य देना चाहिये । और बाई नाक मे गरम पानी के साथ इस का नस्य देना चाहिये । जिस तरफ नाक मे इसका नस्य दिया जावेगा उस तरफ का ज्वर तत्काल नष्ट हो

जावेगा इस मे कुछ भी सन्देह नहीं यह शिवजी महाराज का वचन है वैद्यों के हित के लिये इसको रसकोष मे प्रकट किया गया है ॥ २४५ ॥

## २४६ अर्धनारीनटेश्वरो रसः (सप्तदशः)

अञ्जनपित्तलकांस्यसीसकम्
ताम्रयशोदयशोदकारणम् ॥
शीतलतीक्ष्णसमुद्रफेनकं
मागधिकामरिचैलिका इति ॥ १००० ॥
त्रिपादसंस्थं च समानमानकं
मुक्ता सुवर्णं रजतं च तीक्ष्णकम् ॥
तदर्धभागेन चतुर्थ पादजं
सर्वं समाहृत्य सुसूक्ष्मचूर्णितम् ॥१००१॥
मासं पुनःश्वेतवसुद्रवेण तत्
विभाव्यसम्यक्चसुसूक्ष्मतायदा ॥
अक्ष्णोः प्रयुक्तं क्रमशोज्वरार्तिनुत्-
स्यादर्धनारीश्वरसञ्ज्ञकोरसः ॥ १००२॥
नृ क,

टि० स्रोतोऽञ्जनम्, पित्तलम्, कांस्यम्, सीसकम्, ताम्रम्, यशदम्, खर्परम्, कक्कोलम् (शीतलचीनीति लोके) समुद्रफेनम्, मुक्ताम्, सुवर्णम्, रजतम्, तीक्ष्णम् ( अयः ) एतानि द्रव्याणि प्रत्येकशः कर्षप्रमाणानि। पिप्पलीम्, मरिचम्, सूक्ष्मैलाबीजानि, एतान्यर्धकर्षाणि प्रत्येकम् । अत्र मुक्ताना शतपत्ररसे पिष्टिर्विधेया, धातूना पुनारेतिकया सूक्ष्माणि चूर्णानि पटनिःस्मृतानि करणीयानि कक्कोल, समुद्रफेन, मरिचैलाना पटगालितानि चूर्णानि कृत्वा श्वेतपुनर्नवा ( पञ्चनददेशे “ इटसिट ” इतिनाम्ना प्रसिद्धा ) यारसेन लोह पात्रे लोह दण्डेन धातुचूर्णानि सप्तदिवसावधिनिरन्तरं मर्दनीयानि यदा जानीयाच्चाकाचिक्यरहितं निष्पन्न तदा तत्रान्यानि द्रव्याणि मेलयित्वाश्वेतवसुद्रवेण एकविंशतिदिनानि मर्दयित्वा शुष्क विधाय काचकूप्यावि निक्षिप्योपस्थितकाले ज्वरित रेचनं दत्वा एकाक्षिण कारवल्लीरसेन अजादुग्धेन श्वेतवसुद्रवेण, जलेन वा अञ्जयेत् प्रावृणुयेचोष्णवस्त्रैः प्रस्वेदोद्गमेन, तदङ्गज्वराऽपगमे द्वितीयाक्ष्ण्यपि अञ्जयेत् एवं कृते निश्शेषज्वरापगतिर्भवति सावत्रिकेसन्ततज्वरादौन प्रयोज्य, प्रयोज्यंचेत्सप्ताहाद्यवधिकाले एव, अत्र धातूना भस्मानि चेन्निक्षिप्यन्ते तदा चतुर्दशदिवसैरेव सिद्धिः, अनुभूतोऽयं योगः

**भाषा**—कालासुर्मा, पीतल, कासा, सीसा, ताम्र, जिस्त, खपरिया, शीतलचीनी, समुद्रफेन, मोतीपिष्टि, सुवर्ण, चांदी, लोह, इन सबका रेता बारीक वस्त्र से छाना हुआ प्रत्येक एकेक तोला, पीपलछोटी, मरीच धोई हुई, इलायची के बीजये प्रत्येक आधे तोले लेकर सूक्ष्म चूर्ण करलेना फिर धातुओं के रेतेको इटसिट (पञ्जाबमे इसी नामसे प्रसिद्ध है। वर्षात् मे अधिक होती है और समय मे नहरों के किनारे प्रायः सभी ऋतुमे मिलसक्ती है ) के रससे १४ रोज खरल करे। जब देख लें की चमक बिल्कुल निकलगई तब काष्ठौषधि आर मुक्ता मिलाके १४ रोज खरल करके काचकी शीशी मे धर रक्खे मुद्दतीज्वरको छोडके और ज्वरों मे पेट सफा करके एक आख मे करेले के रस बकरीका दूध, इटसिट के रस पानी प्रभृति के साथ अथवा वैसेही सूखा अञ्जन करके गरम कपडे ओढाय देना पसीनाहो के ज्वर उतर जायगा, कदाचित् फिरसे ज्वर आजाय तो समझना की यह मलकी खराबी है । उसे सफा करके फिर अञ्जन करना । यह एकान्ततः उतर जाय तबतो ठीक है । नहीं तो समझनाकी मुद्दतीहैवा अभिचारादि बलवत्कारण है । उसकी दाल्भ्यापामार्जन प्रभृतिसे शान्ति कराना यह रस बहुतही अनुभूत है इसका प्रयोग शङ्का रहित होकर करैं ॥ २४६ ॥

## २४७ अर्धाङ्गवातारि रसः

सूतकस्य पलान् पञ्च पलैकं ताम्रचूर्णकम्
जम्बीराणां द्रवैः पिष्टं सूततुल्यं तु गन्धकम् ॥
नागवल्लीद्रवैः पिष्ट्वा ताम्रपिष्टिं प्रकल्पयेत् ।
रुद्ध्वा लघुपुटे पच्याद्भूधरे यामपञ्चकम् १००४

आदाय चूर्णयेत्तुल्यैः त्र्यूषणैः सममिश्रितैः ।
अर्धाङ्गैकाङ्गवातार्तो भक्षयेच्च द्विगुञ्जकम् ॥१००५॥

र. र., र च, वातरोगाधिकारे ।

भाषा—पारा २० तोले और शुद्ध ताम्रचूर्ण ४ तोले लेकर जम्बीर के रस मे घोटलेना और उसमे २० तोले गन्धक पान के रस मे घोटकर मिला देना। सम्पुटमे बन्दकर भूधर यन्त्र मे पाच पहरतक हलकी आचमे पकाना फिर रस के बराबर त्रिकटु का चूर्ण मिलाकर बारीक पीस लेना। यह रस अर्धाङ्गवात और एकाङ्गवात मे हितकर है इसकी मात्रा २ रतीकी है ॥ २४७ ॥

## २४८ अर्शोदावानलो रसः

सन्ताप्यसन्ताप्य खरे धनञ्जये
लोहस्य किट्टं त्रिफलाजले क्षिपेत् ।
तन्मर्दितं गेहकुमारिकाजलै
र्भस्मत्वमाप्नोति पुटैस्त्रिसप्तधा ॥१००६॥
गन्धेशयोः कज्जलिकां च कृत्वा
तत्तुल्यमानं वरलोहभस्म ।
सत्र्यूषणं भृङ्गवराग्नियुक्तं
मोचामृताद्भि र्भवतीह सिद्धः ॥ १००७ ॥
अर्शोवनाग्नि र्भवतीह सिद्धो
निष्कास्य कन्देन सरामठेन ।
अर्शांसि सर्वाणि जयेदवश्यं
भल्लाततैलेन मधुप्लुतेन ॥ १००८ ॥

र., रसायन सं, अर्शोऽधिकारे ।

भाषा—मण्डूर को तेज अग्निमे तपा तपाकर त्रिफला के क्वाथ मे कईवार बुझाना फिर घी कुआर के रस मे भावना देते हुए २१ वार पुट देना फिर गन्धक और पारे की कजली और उतनी ही लोहभस्म, त्रिकटु, भागरा, त्रिफला, चीता और मोचरस मिलाकर गिलोय के क्वाथ की भावना देने से यह रस सिद्ध हो जाता है। चार मासेभर इसको जमीकद के चूर्ण और हींग के साथ खाने से अथवा भिलावे के तेल और शहद के साथ खाने से सभी प्रकार के बवासीर नष्ट हो जाते हैं ॥ २४८ ॥

## २४९ अर्शोऽरि रसः ।

रसगगनपतङ्गा लोहगन्धौ च सर्वं,
क्रमविधिपरिवृद्धं लोहपात्रे दिनैकम् ।
धवलकुसुमवल्याः पाचयित्वा पयोभि
र्विषजलसहितं तन्मर्दयेद्याममात्रम् ॥१००९॥
सितवसुवसुपथ्यात्र्यूषणाक्षामलानां,
दिवसयुगलमेतद्भावयेच्चातियत्नात् ।
स लयति सकलं पुंसोऽर्शसांव्याधिमुग्रं,
दिवसयुगलमध्ये सेवितो वल्लमात्रः ॥१०१०॥

यो च, र को, अर्शोधिकारे ।

टि० धवल कुसुमवल्ल्या इति उत्तमाऽरण्यादि नाम्ना या प्रसिद्धा यस्याश्च नाम लोके चमार दूधीत्यादि ।

भाषा—पारा १ भाग, अभ्रकभस्म २ भा० ताम्रभस्म ३ भा० लोहभस्म ४ भा०, और गन्धक ५ भाग सब को लेकर एकदिन चमार दूधी के रस मे लोहे की कडाही मे पकाना। ठंढा हो जाने पर एक पहर बछनाग के स्वरस अथवा क्वाथ से भावना देना। फिर सफेदपुनर्नवा, पुनर्नवा, त्रिकटु, त्रिफला, इन के रस अथवा क्वाथ से भावना देना। २ रत्ती इसको सेवन करने से दोदिन मे बवासीर के सभी उपद्रव नष्ट होते है ॥ २४९ ॥

## २५० अर्शोहररसः ( गुदव्याधिहरः )
### ( प्रथमः )

गन्धकं तारताम्रं च कृत्वा चैकत्र पिष्टिकाम् ।
तत्समं चाभ्रकं तीक्ष्णं गन्धकात्पञ्चमांशकम् ॥
विषं च षोडशांशेन द्वौ भागौ सूतकस्य च ।
एकीकृत्य प्रयत्नेन जम्बीरद्रवमर्दितम् ॥१०१२॥
भाजने मृन्मये स्थाप्यं वराक्वाथेन भावयेत् ।
दशमूलशतावर्योः क्वाथे पाच्यः क्रमेण हि ॥
अथोत्तार्य प्रयत्नेन वटिकां कारयेद्बुधः ।
गुञ्जात्रयप्रमाणेन हन्ति शूलार्शसीक्षणात् ॥

र. र. स., र. को., अर्शोऽधिकारे।

भाषा—त्रिकटु, त्रिफला, पारा, वछनाग, गन्धक और सुहागा इन सबको बराबर लेकर बारीक चूर्ण कर लेना। यह आनन्दभैरव रस खासी, दमा, ज्वर, बवासीर गुल्म और शूलको जल्दी नष्ट करता है। इसकी मात्रा १ रत्ती की है ॥२९९॥

## ३०० आनन्दभैरवो रसः ( दशमः )

पृथग्वेदगुणं पृथ्वीशुण्ठीमरिचटङ्कणम्।
चतुर्थांशो वत्सनागः वाते ह्यानन्दभैरवः ॥
भावना नागवल्याश्च तथा चार्द्रकभावना।
निम्बुकस्यापि दातव्या वारत्रयमनुक्रमात् ॥
सन्निपाते तथा वाते श्लेष्मरोगे महाज्वरे।
ग्रहणे मस्तकस्यापि पीडायामुदरस्य च ॥
दातव्योऽन्येषु रोगेषु रसो ह्यानन्दभैरवः।
गौर्यग्रे च समाख्यातः शम्भुनापुण्यहेतवे१२०१

रस. स.,

भाषा—बडी इलायची के बीज ४ भाग, सोंठ ४ भाग, काली मिर्च ४ भाग और सुहागा ४ भाग, वछनाग इलायची से ¼ लेकर क्रम से पान, अदरख और नींबू इनके रसकी तीन तीन भावना देना। सन्निपात, वात और श्लेष्म रोग, घोर ज्वर, मस्तकग्रह और उदरपीडा तथा अन्यान्य रोगों मे इस आनन्दभैरव रसको देना चाहिये। इस रस को शिवजी महाराजने पार्वती जी को बताया है। इसकी मात्रा ३ रत्ती की है ॥३००॥

## ३०१ आनन्दभैरवो रसः (एकादशः)

टङ्कणं हिङ्गुलं गन्धं हरवीर्यं च तालकम्।
तीक्ष्णं वङ्गं ताम्रनागं मर्दितं त्रिफलाद्रवैः ॥
पर्पटस्य कषायेण दोलायन्त्रे दिनं पचेत्।
फणिपित्तेन सम्भाव्य गुञ्जामात्रं प्रदापयेत् ॥
तत्क्षणं नाशयेच्चैव शीताङ्गं सन्निपातकम्।
तक्रपानं भवेत्पथ्यं रसो ह्यानन्दभैरवः१२०४

वै. चि,

भाषा—सुहागा, शिंगरिफ, गन्धक, पारा और हरताल, फौलाद, बङ्ग, ताबा और सीसा ( इन चारो की भस्में )सब को बराबर लेकर त्रिफला के क्वाथ से भावना देकर पित्तपापड़े के क्वाथ से दोलायन्त्र मे १ दिन पकाना फिर उस को साप के पित्ते से भावना देना। यह आनन्दभैरव रस तत्कालही शीताङ्ग सन्निपात को नष्ट करता है। इसकी मात्रा १ रत्तीभर है इसके पथ्य मे छाछ देना ॥ ३०१॥

## ३०२ आनन्दभैरवो रसः (द्वादशः)

हिङ्गुलं च वि ं त्र्योषं गन्धकं टङ्कणं समम्।
धूमसारं वचा यष्टी चित्रकं पत्रकं तथा ॥
सैन्धवं विजयाबीजं धौस्तूरं बीजमेव च।
एतानि समभागानि रसो ह्यानन्दभैरवः १२०६
वाते पित्ते तथा श्लेष्मे गुल्मे चैव विशेषतः।
अतिसारे सन्निपाते वटी गुञ्जाप्रमाणिका ॥
आनन्दभैरवः ख्यातो रसो मन्दाग्निनाशनः।
अनुपानविशेषेण तत्तद्रोगविनाशनः ॥१२०८

र. क. यो.,

भाषा—शिंगरिफ, वछनाग, त्रिकटु, गन्धक, सुहागा, धूमसार(घरका धूंआ) वच, मुलहठी, चित्रक, तेजपात, सेंधानमक, भाग और धतूरे के बीज सब को बराबर लेकर बारीक चूर्ण कर लेना। यह आनन्दभैरव रस है। वात पित्त और कफ रोगो मे, विशेषतया गुल्मरोग मे तथा अतिसार और सन्निपात मे एक रत्तीभर की इसकी गोली बहुत हितकर है। यह आनन्दभैरव रस मन्दाग्नि को नष्ट करता है। उचित अनुपान के साथ लेने से यह सभी रोगो को दूर करता है ॥३०२॥

## ३०३ आनन्दभैरवी वटिका ( प्रथमा )

विषं त्रिकटुकं गन्धं टङ्कणं मृतशुल्वकम्।
धुस्तूरस्य च बीजानि हिङ्गुलं नवमं स्मृतम् ॥
एतानि समभागानि दिनैकं विजयाद्रवैः।
मर्दयेच्चणकाभां तु वटीं चानन्दभैरवीम् १२१०
भक्षयेच्च पिबेच्चानु रविमूलकषायकम्।
सव्योषं हन्तिनो चित्रं सन्निपातं सुदारुणम् ॥

शीताङ्गे सन्निपाते वा सामान्ये वा त्रिदोषजे।
धान्याकं पिप्पली शुण्ठी कटुकी कण्टकारिका॥
पिप्पलीसंयुतं क्वाथं चतुर्गुञ्जा च पर्पटी।
सन्निपातज्वरं हन्ति वटिकाऽऽनन्दभैरवी॥
मूलं च कटुरोहिण्याः समं त्रिल्वं सजीरकम्।
दध्ना पिष्टं पिबेच्चानुवटीं चानन्दभैरवीम्॥
सन्निपातातिसारघ्नीं पथ्यं शाकविवर्जितम्।
आनन्दभैरवीं पीत्वा क्वाथं वरुणसम्भवम्॥
पाययेदश्मरीं हन्ति सप्तरात्रान्न संशयः।
वाकुचीसम्भवैस्तैलै वटीं चानन्दभैरवीम्॥
लेहयेन्निष्कमात्रां तु गलत्कुष्ठञ्च नाशयेत्।
दधिमस्तुसिताक्षौद्रै वटीं चानन्दभैरवीम्॥
भक्षयेन्मूत्रकृच्छ्रार्तो यवक्षारं सितान्वितम्।
गोदुग्धं क्वथितश्चानुशीतलं मधुना पिबेत्॥
गुञ्जामूलं पिबेत्क्षीरैरनुपानं प्रशस्यते।
अनेन चानुपानेन वटिकाऽऽनन्दभैरवी॥
देयारुद्रजटाक्षौद्रैः सर्वमेहप्रशान्तये॥१२१९॥

रसायन स, सूतप्रदीपिका, बृ. यो त., र. को.. र. स., बा., र. शं., भै. र, र. क., र. सु, नि र., र, च., र. क. ल, यो. म., रस स., र. क. यो ( मृत-सञ्जीवन ) भा प्र,

टि० अत्र रुद्रजटायाः परिचयो वहुदिना दूरादपास्तः परं प्रायःवल्मीकोपरिसञ्जातश्वेतवर्णैक दण्डाकारा दण्डिकासलग्नपत्रत्वेन वेण्याकृतित्वान्मगधे जाङ्गलायामीश्वरजटेति नाम्ना प्रख्यापयति, सैवौषधी ग्राह्येत्यस्माकं मतिः। आधुनिकवार्तिकास्तु रुद्रजटाशब्देनाऽऽकाशवल्लरी मसहायामपरपर्यायामामनन्ति।

भाषा—बछनाग, त्रिकटु, गन्धक, सुहागा, ताम्रभस्म, धतूरे के बीज और शिंगरफ इन ९ चीजो को बराबर लेकर १ दिन भाग के रस मे घोटकर चने के बराबर गोलियें बना लेना। इस गोलीका नाम आनन्दभैरवी बटी है। इस गोलीको खाकर अर्कमूल और त्रिकटु का क्वाथ पीनेसे अवश्य घोर सन्निपात नष्ट होता है। शीताङ्ग अथवा सामान्य सन्निपात मे धनिया, पीपल, सोठ, कुटकी और कंटकारीका क्वाथ अथवा पीपल का क्वाथ उस मे ४ रत्ती पित्तपापडा डालकर इस अनुपान के साथ खाने से उपरोक्त रोग दूर होते है। कुटकी की जड़ और उस के बराबर वेलकी गिरी और जीरा पीसकर दही मिलाकर इस के साथ खाने से सन्निपातातिसार नष्ट होता है। इस के पथ्य मे शाक न खाना। वरना ( वरुण ) के क्वाथ के साथ इसको खाने से ७ दिन मे पथरी वाले को आराम हो जाता है इस मे कुछ सदेह नहीं। इन गोलियों को ४ माशाभर वाकुची के तेल के साथ चटाने से गलितकुष्ठ दूर हो जाता है। दही का तोड़, मिश्री और शहद के साथ इनको खानेसे और ऊपर से जवाखार और मिश्री खानेसे मूत्रकृच्छ्र नष्ट हो जाता है। सभी प्रमेहो मे गरम करके ठढा किया हुआ गाय का दूध और शहद अथवा दूध मे उवाली हुई गुञ्जा की जड का क्वाथ अथवा रुद्रजटा ( अभावमे आकाश वेल ) और शहद के साथ इसको देने से रोग का नाश होता है॥२०३॥

### ३०४ आनन्दभैरवीवटिका ( द्वितीया )

शुद्धसूतं समं गन्धं मृतताम्रं सटङ्कणम्।
जम्बीरफलमध्यस्थं दोलायन्त्रे पचेद्दिनम्॥
मर्दयेद्भावयेद् द्रावैः शिग्रुवासार्द्रनिम्बजैः।
सर्पाक्षी विजया ब्राह्मी मीनाक्षी हंसपादिका॥
हस्तिशुण्डी रुद्रजटा धूर्तवातारिवायसाः।
दिनैकं मर्दयेदेभि र्लोहसम्पुटगं पचेत्॥१२२२॥
दिनैकं वालुकायन्त्रे समुद्धृत्य विचूर्णयेत्।
तालकं दीप्यकं व्योषं विषजीरकचित्रकान्॥
सर्वान् समरसां श्वेतां स्त्रिगुञ्जं भक्षयेत्सदा।
सन्निपातज्वरं हन्ति वटी चानन्दभैरवी १२२४

रसायन स, यो म, मुद्गयूषमनुपानत्वेन योजितम्।

भाषा—शुद्धपारा, गन्धक, ताम्रभस्म और सुहागा, इन सब को बराबर लेकर चूर्ण करके जम्बीर के फल के वीचमे रखकर १ दिनभर दोलायन्त्रमे पकाना। फिर सहजना, अडूसा, अदरख

नीम, ओंधाफूली, भांग, ब्राह्मी, मछेछी, हसराज, हाथीशुण्डी, आकाशवेल, धतूरे और एरण्ड के पत्ते और काकमाची ( मकोय ) इन के क्वाथ अथवा रस से भावनाएं देकर २ दिन खूब घोट लेना । फिर लोहे की मूषा मे बंद करके वालुका-यन्त्र मे पकाना और निकाल कर वारीक चूर्ण कर लेना । फिर हरताल अजवाइन, त्रिकुटु, वछनाग, जीरा और चित्रक इन सव को वरावर मिलाकर चूर्ण कर लेना यह आनन्दभैरवी गोली सन्निपात को नष्ट करती है । इसका प्रमाण ३ रत्तीभर है ॥२०४॥

## २०५ आनन्दभैरवी वटिका ( तृतीया )

सौभाग्यं वै हिङ्गुलोत्थं विषञ्च
मारीचं वै हेमबीजेन युक्तम् ।
कृत्वा चूर्णं सर्वमेतत्समांशं
जम्बीरैस्तन्मर्दितं यामयुग्मम् ॥
गुञ्जामात्रा निर्मिता या वटी सा
भुक्ता हन्यात्सन्निपातातिसारम् ॥१२२५॥

र. प्र सु ,

भाषा—सुहागा, शिंगरिफसे निकाला हुआ पारा, वछनाग, कालीमिर्च और धतूरे के वीज सवको वरावर लेकर चूर्ण करके जम्बीर के रस मे दोपहर तक घोटकर एक रत्ती भर की गोलियें वना लेना । इस गोली को खाने से सन्निपातातिसार नष्ट होता है। इस का नाम आनन्दभैरवी वटी है ॥ ३०५ ॥

## २०६ आनन्दो रसः

शुद्धं रसं समविषं प्रहरं विमर्द्य
तद्गोलकं कनकचारुफले निवेश्य ।
दोलागतं पच दिनं विषमुष्टितोये
प्रक्षाल्य तत्पुनरपीह तया द्विवारम् १२२६
तं सूतकं गिरिशदृग्द्विगुणं सुगन्धं
युक्त्याऽवचार्य कुरु भस्मसमं च तस्य ।
वैक्रान्तभस्मजयपाललवांशकार्धं
सर्वैर्विषं द्विगुणितं मृदितं च खल्वे॥१२२७॥
घस्रत्रयं कनकभृङ्गरसेन गाढ-
मालेप्यभाजनतले विषधूमभाजि ।
भृङ्गद्रवेण शिथिलं लघुकाचकूपी-
मापूर्य रुद्धवदनां सिकताख्ययन्त्रे ॥१२२८
तां वासरार्धमवदीप्य सुशीतलां च
भित्त्वाऽवचूर्ण्य गदभाजिषु शालिमात्रम् ।
आनन्दसूतमखिलामयकुम्भिसिंहं
गद्याणकार्द्धसितया सह देहि पथ्यम्१२२९
रोगानुरूपमनुपानमपि प्रकाशं
क्षोणीभुजां प्रचुरपूजनमाप्नुहि त्वम् ।
कीर्त्या दिशो दश सुपूरय चन्द्रकान्त्या
वैद्येश्वरेति विरुदं भज वैद्यराज ॥ १२३०

यो. म , र ल., र-शं , र. च., र म मा., ज्वराधिकारे । वृ. यो. त., वाजीकरणे ।

भाषा—शुद्धपारा और वछनाग वरावर लेकर एक पहर तक ( धतूरे के रस मे ) घोटकर उसका गोला वनाकर धतूरे के फल के भीतर रखकर जहर कुचिले के स्वरस अथवा क्वाथ से दोलायन्त्र मे दिनभर पकाकर और धोकर इसी प्रकार फिर दोवा-रह इसका सस्कार करना । उस पारे मे छै गुने शुद्धगन्धक का जारण करके उसकी भस्म कर लेना। फिर उस मे पारे के वरावर वैक्रान्तभस्म और उसके $\frac{1}{32}$ शुद्ध जमालगोटा और सव से दूना वछनाग मिलाकर खरल मे तीन दिन तक धतूरे और भागरे के रस से घोटना । फिर उस को कपड़मिट्टी की हुई आतशी शीशी मे भर देना और शीशी का मुख वंद करके २ पहर तक वालुका-यन्त्रमे तेज अग्नि से पकाना परन्तु जिस पात्र मे ( मटके आदि मे ) सिकता यन्त्र वनाना हो उसके भीतर के तले को वछनाग की धूप देकर भागरे की पत्तियो को पीसकर लुगदी वनाकर गाढा पोता देना फिर वालू भरना । जव वह स्वाङ्गशीतल होजावे तव उसका चूर्ण करके, ३ माशे शक्कर के साथ $\frac{1}{2}$ रत्ती भर इस रस को देना । इस मे पथ्य

और इस का अनुपान, रोग और रोगी की अवस्था-नुसार देना। जो वैद्य इस आनन्दसूत रस का प्रयोग करता है वह राजाओं मे पूज्यता और शरत् काल की चादनी के सदृश कीर्ति को पाता है और वह वैद्येश्वर हो जाता है। यह रस सभी रोगों को ऐसा नाश करता है जैसे कि हाथी का सिंह नाश करता है॥ ३०६॥

### ३०७ आनन्दो रसः

जातीफलं सैन्धवहिङ्गुलञ्च
 वराटशुण्ठ्यौ विपहेमवीजम्।
सपिप्पलीकं वटिकां च कुर्या
 द्गुञ्जाप्रमाणां जठरामयघ्नीम्॥ १२३१॥
निहन्ति वातं कफशूलमात्र-
 मामातिसारं ग्रहणीविकारम्।
निहन्ति शूलं सितया समेतो
 रसोऽयमानन्द इति प्रदिष्टः॥ १२३२॥

र. क. यो., व. रा., वै.चि., चि.सा., नि. र., र. सु., रसायनसं., अतिसारे। र क यो, मुस्तकमधिकतया प्रक्षिप्तम्, जम्बीरधत्तूरविजयानाञ्च भावना दत्वा ग्रहणीकपाट इति नाम स्थापितम्।

भाषा—जायफल, सेंधानमक, शिंगरिफ, कौड़ी भस्म, सोंठ, बछनाग, धतूरे के वीज और पीपल इन सबको बराबर लेकर (नीबू अथवा अदरख के रस मे घोटकर) १ रत्ती की गोलिये बना लेना यह गोली पेटके रोगों को दूर करती है। तथा वात-रोग, कफरोग, सब प्रकार के शूल, आमातिसार और सङ्ग्रहणीके विकारो को नष्ट करती है। शूल मे इसको मिश्रीके साथ देना चाहिये। इसका नाम आनन्द रस है॥ ३०७॥

### ३०८ आनन्दोरसः (प्रमदानन्दः)

कणा जातिजं हिङ्गुलं टङ्कणं च
 वराटं विषं हेमबीजं सविश्वम्।
भृशं मर्दयेन्निम्बुनीरेण यामं
 तथा धूर्ततोयेन भृङ्गीरसेन॥१२३३॥
अदभ्रे च मेहे विकारे ग्रहण्याः
 कफे वातशूले सृतौ खण्डमेहे।
प्रशस्तः सितासेवितःशुक्रकारी
 रसः सर्वदानन्द नामा प्रसिद्धः १२३४
चपला नवयौवनभिन्नमद-
 प्रमदाशतदर्पहरः सहसा।
कथितो मुनिना भृगुणा शतशो
 ऽनुमितो रसिकै रसराज परः॥१२३५॥

रसायन स., वै चि, रसायने

भाषा—पीपल, जायफल, शिंगरिफ, सुहागा, कौडीभस्म, वछनाग, धतूरे के वीज और सोंठ इन सबको बराबर लेकर नीबू, धतूरा और भागरे के रसमे अलग २ खूब घोटलेना। यह प्रसिद्ध आनन्द रस घोर प्रमेह के विकारों मे, कफ रोग मे, वातशूल मे, अतिसार मे, मधुमेह मे, हितकारी है। इसका अनुपान मिश्री है। यह रस शुक्र को उत्पन्न करता है। अत्यन्त चपल नवीन यौवनवाली सो स्त्रियोंके दर्प को नष्ट करने की शक्ति मनुष्यको तत्काल देता है मुनिवर भृगु महाराज ने इसको बनाया है और रसिक लोगों-ने शतशः इस का मान किया है॥३०८॥

### ३०९ आनन्दवटिका

अग्निमन्थो वज्रवल्ली सूरणं वनसूरणम्।
चित्रकश्च द्रवैरेषां शुद्धसूतं दिनावधि॥१२३६॥
मर्दयेत् तप्तखल्वे तु तं रसं पलमात्रकम्।
पलंपलं तालवङ्गौ तत्सर्व चाम्लवेतसैः १२३७
मर्दयेद्दिनमेकं तु कृत्वा तं गोलकं पुनः।
चतुष्पलां नागमूषां कृत्वा तस्यां तु तत्क्षिपेत्॥
चतुष्पले शुद्धताम्रसम्पुटे तां निरोधयेत्।
मृन्मूषायां तु तां रुद्ध्वा आरण्योत्पलकैः पुटेत्॥
शतद्वयप्रमाणैस्तु स्वाङ्गशीतं समुद्धरेत्।
सर्व दिव्यौषधद्रावै र्मर्दयेद्दिवसत्रयम्॥१२४०॥
चतुर्निष्कमिताकार्या वटिका शोषयेत्ततः।
एकैकां वज्रमूषायां रुद्ध्वातीव्राग्निना धमेत्॥

आनन्दगुटिका ह्येषा वक्त्रस्था मृत्युनाशिनी ।
वत्सरान्नात्र संदेहो यावज्जीवं निरामयः१२४२
तैलं वातारिबीजोत्थं गोक्षीरे निष्कमात्रकम् ।
क्रामणार्थं पिबेन्नित्यं शीघ्रसिद्धिकरं परम् ॥

र. स, रसायने । दिव्यौषध्योरसेन्द्रचूडामणिरसप्रकाशसुधाकरादावुक्ता स्सोमवल्ल्यादय स्तासामलाभ नियोजनीयाः ।

भाषा—अरणी, तिधारी हड़जोड़, सूरण, जङ्गली सूरण और चित्रक इन के रसों से १ दिन पारे को भावना देना । ऐसे ४ तोले पारे को तप्तखल्व मे घोटना, फिर हरताल और वङ्ग प्रत्येक ४ तोले मिलाकर १ दिन अम्लवेत के रस मे घोटना । फिर ४ तोले सीसे की मूषा बनाकर उसमे औषधी को रखना । मूषा को ४ तोले तांबे के सम्पुट मे रखकर बंद कर देना फिर २०० जङ्गली कंडों की पुट देना, जब स्वांगशीतल होजावे तब निकाल कर दिव्यौषधियों ( सोमवल्ली इत्यादि यदि कुछ न मिले तो गिलोय ) के रस मे ३ दिन घोटकर ९ मासे की गोलिये बना लेना । फिर एक एक गोलीको वज्रमूषा मे बंद करके तेज आग मे पकाना । यह आनन्द गुटिका मुख मे रखने से मृत्यु से बचाती है । एक वर्षतक इसका सेवन करने से आयुभर मनुष्य को रोग नहीं होते । साथ मे एरण्डका तेल ६ मासे लेकर गाय के दूध के साथ पीना चाहिये इस के पीने से इस रस का क्रामण हो जावेगा अर्थात् शरीरकी सब जगह उस का प्रभाव शीघ्र फैल जावेगा । और शीघ्र सिद्धि होगी ॥ ३०९ ॥

## ३१० आनन्दोदयो रसः

पारदं गन्धकं लोहमभ्रकं विषमेव च ।
समांशं मरिचं चाष्टौ टङ्कणञ्च चतुर्गुणम् ॥
भृङ्गराजरसैः सप्त भावना श्चाम्लदाडिमैः ।
गुञ्जाद्वयं पर्णखण्डे हन्ति सायं तु भक्षितः ॥
वातश्लेष्मोद्भवान् रोगान् मन्दाग्निग्रहणीज्वरान् ।
अरुचिं पाण्डुताञ्चैव जयेदचिरसेवनात् १२४६

र म., भै र., वै. क., र. च., पाण्डुधिकारे । यो. म , र. सा. स , ( लघ्वानन्द )र. का., ( आनन्दभैरवः ) रसायनस ( आनन्दरसः ) कुत्रचिदम्लदाडिमस्थाने अम्लवेतसभावना दृश्यते ।

भाषा—पारा, गन्धक, लोहभस्म, अभ्रक भस्म और बछनाग सब को बराबर और कालीमिर्च पारे से अठगुनी और सुहागा कालीमिर्चका ½ लेकर भांगरा और खट्टे अनार के रस से सात ७ भावनाएं देना । इस रस को २ रत्तीभर पान के साथ सायकाल खाने से वात और कफ से होने वाले रोग, मन्दाग्नि, सग्रहणी, ज्वर, अरुचि और पाण्डुरोग जल्दी नष्ट हो जाते हैं ॥३१०॥

## ३११ आमकुठाररसः

जातीफलं त्रिकटुकं टङ्कणं रसगन्धकम् ।
निर्यासं वत्सनाभं च मुस्ता कुटजचित्रकम् ॥
वरा चातिविषा सर्जनिर्यासं जीररामठम् ।
सर्वं संमर्द्य विजयास्वरसेन दिनत्रयम् ॥१२४८॥
वल्लप्रमाणां वटिकां शुण्ठीद्रावानुपानतः ।
आमशूलमतीसारं ग्रहणीञ्च चिरन्तनाम् ॥
हन्यादामकुठाराख्यो रसस्त्रैलोक्यपूजितः ॥

व. रा,

भाषा—जायफल, त्रिकटु, सुहागा, पारा, गन्धक, मोचरस, बछनाग, नागरमोथा, कुरैया, चित्रक त्रिफला, अतीस, शालवृक्ष की राल, जीरा, और हींग सब को बराबर लेकर ३ दिन तक भाग के रस मे घोटना फिर ३ रत्ती की गोलियें बना लेना यह गोली अदरख के रस के साथ लेने से आमशूल, अतिसार और पुरानी सग्रहणी को नष्ट करती है । इसका नाम आमकुठार रस है तीन लोक मे इस की प्रशसा की गई है ॥ ३११ ॥

## ३१२ आमलक्यादि लोहः

आमलकी कणा लोहं तुल्यया सितया सह ।
रक्तपित्तहरो लौहो योगराडिति विश्रुतः ॥

वृष्योऽग्निदीपनोबल्यो महाम्लपित्तनाशनः ।
पित्तोत्थान् वातपित्तोत्थान्
निहन्ति विविधान् गदान् ॥ १२५१ ॥

र. सि, रसायनस, र र., र. चि., र स, र. सु., ध., रक्तपित्ताधिकारे ।

भाषा—आवला, पीपल और लोहभस्म ये सब बराबर और सब के बराबर मिश्री मिलाकर चूर्ण करलेना । यह आम-ल्क्यादि लोह रक्तपित्तको नष्ट करनेवाला योगराज है । यह वृष्य, अग्निदीपन, बल्य, और अम्लपित्तका नाश करनेवाला है । पित्त तथा वातपित्त से हुए अनेक रोगो को नष्ट करता है॥३१२॥

### ३१३ आमवातगजकेसरी (प्रथमः)

जारितं पुटितं लोहं चूर्णं पञ्चपलं ततः ।
पलानि गुग्गुलोः पञ्च लौहार्धं मृतमभ्रकम् ॥
शुद्धं सूतं चाभ्रतुल्यं गन्धकञ्च तथा मतम् ।
त्रिगुणामयसश्चूर्णादभ्रान्तास्त्रिफलां नयेत् ॥
दत्त्वा द्विरष्टपानीय मष्टभागावशेषयेत् ।
तेन चाष्टावशेषेण पचेल्लोहाभ्रगुग्गुलुम्१२५४
घृतं तुल्यं शतावर्या रसं दत्वा तथा शुभम् ।
प्रस्थं प्रस्थं च दुग्धस्य शनैर्मृद्वग्निना भिषक् ॥
लौहमय्या पचेद्दर्व्या पात्रे चायसि मृन्मये ।
ततःपाकविधिज्ञस्तु पाकसिद्धे विनिःक्षिपेत् ॥
रसकज्जलिकां कृत्वा दत्त्वा चापि विमर्दयेत् ।
विडङ्गंनागरं धान्यं गुडूचीसत्वजीरकान् ॥
पञ्चकोलं त्रिवृद्दन्ती त्रिफलैला च मुस्तकम् ।
सुचूर्णितञ्च प्रत्येकं चूर्णमर्धपलं तथा॥१२५८॥
उत्तार्य स्थापयेद्भाण्डे सिद्धे चापि सुरञ्जिते ।
घृतेन मधुना पश्चान्मर्दयित्वाऽनुपानतः ॥
भक्षयेच्छुद्धदेहस्तु शुभेऽहनि विपृच्छय च ।
आमवातमहाव्याधिविनाशाय महौषधम् ॥
सन्धिवातं कर्णशूलं कुक्षिशूलं सुदारुणम् ॥
जङ्घापादाङ्गुलीशूलं गृध्रसीमग्निमन्दताम् ॥
गुल्मं शोथं कामलाञ्च पाण्डुरोगं सुदुःसहम् ।
आमवातगजेन्द्रस्य केसरी मुनिनिर्मितः ॥

र. र. क, भै. र, ध., आमवाताधिकारे ।

भाषा—भस्म किया हुआ तथा आमवातनाशक दवाओंसे बहुत बखत पुट दिया हुआ लोहचूर्ण और गूगल प्रत्येक २० तोले, अभ्रकभस्म, शुद्ध पारा और गन्धक प्रत्येक १० तोले, इनको लेकर अलग २ रख लेना । फिर ८० तोले त्रिफला को ३२ गुने पानी मे उबालना जब पानी $\frac{1}{8}$ रह जावे तब उस को छानकर उस पानी मे उपरोक्त लोह, अभ्रक और गुग्गुलु डालकर धीरे २ पकाना । पकते हुए उस मे लोहादि औषध के बराबर घी और १ सेर ( १२८ तोला ) शतावरीका रस और दूध १ सेर ( १२८ तोला ) उस मे डालना और लोहेकी कड़छी से हिलाते हुए मन्दअग्नि से पकाना । पाक की विधि को जाननेवाला वैद्य जब जाने कि पाक सिद्ध हो गया है तब उपरोक्त पारा और गन्धक की कज्जली बनाकर उस मे डाल देवे और उस को खूब घोटे फिर उस मे विडङ्ग, सोठ, धनिया, गिलोयका सत्त्व, जीरा, पचकोल, निसोत, दन्ती, त्रिफला, छोटी इलायची और नागरमोथा सब को २ दो तोले लेकर बारीक चूर्ण करके डाल देना । फिर उतार कर उस को वर्तन मे रखकर केसर इत्यादि से रुचिकारक रगवाला बनाकर देह की शुद्धिकरके घी और शहद मिलाकर शुभदिन मे पूज्य लोगों से पूछकर असाध्यप्रायआमवात के नाश के लिये इस औषधि को खावे । इस के सेवन करने से सन्धिवात, कर्णशूल, कुक्षिशूल, गृध्रसी, मन्दाग्नि, गुल्म, सूजन, कामला और दारुण पाण्डुरोग ये भी नष्ट हो जाते है । यह आमवातगजेंद्रकेसरी रस ऋषियोंका बनाया हुआ है ॥ ३१३ ॥

### ३१४ आमवातगजकेसरी रसः(द्वितीयः)

अयसश्च पुरं तुल्यं पुरार्धं मृतताम्रकम् ।
तत्तुल्यं पारदं गन्धं त्रिफलायाः पचेज्जले ॥
द्विरष्टगुणपानीयसिद्धेऽष्टांशाऽवशेषिते ।
अयसो द्विगुणं सर्पिस्तुल्यं लोहेन चाभ्रकम् ॥

घृतं तुल्यं शतावर्याः क्षीरञ्च प्रस्थसम्मितम् ॥
लोहपात्रे लोहदर्व्या ततः सिद्धे विनिःक्षिपेत्॥
विडङ्गं नागरं धान्यं गुडूचीं सद्विजीरकाम् ।
पञ्चकोलं त्रिवृद्दन्ती त्रिफलैला च मुस्तकम् ॥
प्रत्येकमर्धपलिकं ततः स्निग्धे सुरक्षितम् ।
घृतेन मधुना मिश्रं सर्वव्याधिविनाशनम्१२६७
आमवातमहाव्याधिविनाशाय महौषधम् ।
सन्धिवातं कटीशूलं कुक्षिशूलं सुदारुणम् ॥
जङ्घापादाङ्गुलीशूलं गृध्रसीमग्निमन्दताम् ।
गुल्मं शोथं कामलाञ्च पाण्डुरोगं च नाशयेत्॥

र. क., आमवाते ।

भाषा—लोहभस्म और गुग्गुलु बराबर और ताम्रभस्म, शुद्ध पारा और गन्धक प्रत्येक गुग्गुलु से ½ लेकर बारीक घोटकर अलग रखना। सब के बराबर त्रिफला लेकर उसको ३२ गुने पानी मे उबाले जब पानी ⅛ रह जावे तब उसको छानकर उस पानी मे उपरोक्त लोहभस्मादि डालना—लोहभस्मके बराबर अभ्रकभस्म और लोह भस्म से दूना घी और डालना। शतावरी का रस १ सेर (१२८ तोले) और दूध १ सेर (१२८) तोले डालकर लोहे के वर्तन मे लोहे की ही कड़छी से धीरे २ हिलाते हुए मन्द अग्नि से उसे पकाना। जब सिद्ध हो जावे तब उस मे विडङ्ग, सोंठ, धनिया, गिलोय, दोनोंजीरे, पञ्चकोल, निशोत, दन्ती, त्रिफला, छोटी इलायची और नागरमोथा इन सब को प्रत्येक २ तोले लेकर बारीक चूर्ण करके डालकर किसी चिकने वर्तनमे रख-देना। इस का अनुपान घी और शहद है। यह रस आमवात व्याधि के नाश के लिये महौषध है और सन्धिवात कटिशूल, दारुणकुक्षिशूल, जाघ, पैर और अगुलियों की पीडा, गृध्रसी, मन्दाग्नि, गुल्म शोथ कामला और पाण्डुरोग को नष्ट करता है॥ ३१४ ॥

## ३१५ आमवातगजसिंहमोदकः

शुण्ठीचूर्णस्य प्रस्थैकं यवान्याश्च पलाष्टकम् ।
जीरकस्य पले द्वे च धान्याकस्य पलद्वयम् ॥
पलैकं शतपुष्पाया लवङ्गस्य पलं तथा ।
टङ्कणस्य पलं भृष्टं मरिचस्य पलत्रयम् १२७१
त्रिवृतात्रिफलाक्षारपिप्पलीनां पलं तथा ।
शठ्येलातेजपत्राणां चविकानां पलं तथा१२७२
अभ्रं लौहं तथा वङ्गं प्रत्येकं च पलंपलम् ।
एतेभ्यः सर्वचूर्णेभ्यः खण्डं दद्याद्गुणत्रयम् ॥
घृतेन मधुना मिश्रं कर्षमात्रं तु मोदकम् ।
एकैकं भक्षयेत्प्रातः घृतं चानु पिबेत्पयः ॥
शूलघ्नो रक्तपित्तघ्नश्चाम्लपित्तविनाशनः ।
आमवातकुलध्वंसी केसरी विधिनिर्मितः१२७५

र स, ध., र. र. स., आमवाताधिकारे ।

भाषा—सोठका चूर्ण १ सेर, अजवाइनका चूर्ण ३२ तोले, जीरेका चूर्ण ८ तोले, धनियेका चूर्ण ८ तोले, सोंफका चूर्ण ४ तोले, लोंग ४ तोले, भूना हुआ सुहागा ४ तोले, कालीमिर्च १२ तोले, निशोथ ४ तोले, त्रिफला ४ तोले, यवक्षार ४ तोले, पीपल ४ तोले, कचूर ४ तोले, छोटी इलायची ४ तोले, तेजपात ४ तोले, चव्य ४ तोले, अभ्रकभस्म ४ तोले, लोहभस्म ४ तोले, और वङ्गभस्म ४ तोले, सब से तिगुनी खाडकी चासनी बनाकर उस मे सबका वारीक चूर्ण करके डाल देना। फिर घी और शहद मिलाकर १ तोले भर के लड्डू बना लेना। एक लड्डू सवेरे खाकर ऊपर से जठराग्नि के अनुसार घी और दूध पीना। विधिपूर्वक बनाया हुआ यह मोदक शूल, रक्तपित्त अम्लपित्त, और आमवात को नष्ट करता है॥३१५॥

## ३१६ आमवातघ्नगुटिका.

रसं गन्धकं टङ्कणं तुल्यभागं
कपर्दस्य शङ्खस्य वाऽन्तर्निधाय ।
सुमन्दं विपक्वं रसे जम्भलीनां
द्विगुञ्जप्रमाणं प्रदेयं प्रभाते ॥१२७६॥

पुनस्तण्डुलानां जलेनास्तसूर्ये
हरत्याशु रक्तामवातं प्रचण्डम्।
यथा पावकः शीतवेगं प्रचण्डं
निहन्यात्तथा रोगमुग्रं रसेशः॥ १२७७॥
एरण्डमूलत्रिफला गोमूत्रं चित्रकं विषम्।
गुञ्जैका घृतसम्पन्ना सर्वान् वातान् विनाशयेत्॥ १२७८॥
र सि.,

भाषा—पारा, गन्धक, सुहागा बराबर लेकर कौड़ी अथवा छोटे शङ्ख के भीतर भरकर बाहर से कपड़मिट्टी करके पुटपाक कर लेना। जम्बीर के रस के साथ प्रातःकाल और चावलो के धोवन से सायकाल इसकी २ रत्ती की मात्रा लेने से बढे हुए रक्तवात व आमवात को ऐसा नष्ट करता है जैसे शीतके वेग को प्रचण्ड अग्नि। यदि इसके देनेसे काम न होता हुआ माल्रुम होवे तो रातको सोते समय एरण्डमूलादि चूर्ण देना। एरण्ड की जड़ त्रिफला, गोमूत्र, (अर्थात् गोमूत्रक्षार) चित्रक और बछनाग के चूर्ण के साथ घी मिलाकर १ रत्ती सेवन करने से सभी वातजरोग नष्ट हो जाते हैं॥ ३१६॥

### ३१७ आमवातप्रमाथिनी वटिका

सोरकं रविमूलञ्च गन्धकं लोहमभ्रकम्।
पिष्ट्वाऽऽरग्वधतोयेन कुर्यान्मापमितां वटीम्॥
त्रिवृत्क्वाथेन सा सेव्या कफामयनिषूदनी।
आमवातप्रशमनी वटिकाऽऽमप्रमाथिनी१२८०
आ वि, आमवाते।

भाषा—सोरा, आकड़ेकी जड़, गन्धक, लोहभस्म और अभ्रकभस्म सब को अमलतास के क्वाथ मे घोटकर १ माशे की गोलियें बना लेना। निसोत के साथ इस को लेने से कफजरोग नष्ट होते है। इस से आमवात और आमजरोग सभी शान्त होते हैं॥ ३१७॥

### ३१८ आमवातविध्वंसनो रसः

प्रक्षिप्य गन्धं रसपादभागं
कलाप्रमाणं च विषं समस्तात्।
कृशानुतोयेन च भावयित्वा
वल्लं ददीतास्य मरुत्प्रशान्त्यै॥१२८१॥
अपस्मारे तथोन्मादे सर्वाङ्गव्यथनेऽपि च।
एकाङ्गवाते सामे वा दं ग्रन्थे हिमे तथा॥
देयोऽयं वल्लमात्रस्तु सर्ववातनिवृत्तये १२८२॥
वै चि., र दी, रसायन स, यो. र, नि. र, आमवाते।

भाषा—पारा और उस से $\frac{1}{4}$ गन्धक और दोनोंसे $\frac{1}{16}$ बछनाग लेकर चित्रक के क्वाथ से भावना देकर ३ रत्तीभर इसकी मात्रा वातरोगोंकी शाति के लिये देनी चाहिये। इस से मिरगी, उन्माद, सर्वाङ्गपीडा, एकाङ्गवात, आमवात, दातीलगना, और शरीरका ठढा पडजाना ये रोग भी नष्ट होते है। इस से सभी वातजरोगोका नाश होता है॥३१८॥

### ३१९ आवाताद्रिवज्ररसः

रसगन्धक लौहाभ्रफणिफेनं समंसमम्।
सप्तधा यावशूकस्य मर्दयेद्विजयाम्भसा १२८३
ततो मापार्धमानां च विदध्याद्वटिकां भिषक्
यथा दोषानुपानेन प्रदद्यादामवातिने १२८४
आमवातं महाघोरं प्रमेहानपि विंशतिम्।
आमवाताद्रिवज्राख्यो रसो हन्ति न संशयः॥
आ वि, आमवाते।

भाषा—पारा, गन्धक, लोहभस्म, अभ्रकभस्म और अफीम सबको बराबर लेकर यवक्षार मे थोड़ा जल डालकर उस से ७ बार और भाग के रस से ७ बार भावना देकर $\frac{1}{2}$ माशेकी गोलिये बना लेना। इस गोली को दोषानुसार अनुपान के साथ आमवातवाले को देना चाहिये। यह आमवाताद्रिवज्र रस २० प्रकार के प्रमेहोंका भी नाश करता है॥ ३१९॥

### ३२० आमवातारि रसः

रसगन्धौ विशुद्धौ द्वौ नागरं कटुकीं तथा।
फलत्रिकारग्वधकं त्रिगुणाञ्च हरीतकीम्॥
सर्वमेकत्र सम्मर्द्य तुर्यांशं दन्तिबीजकम्।
मापमात्रं प्रदातव्यमामवातार्दिताय वै॥
नागरैरण्डतोयेन सद्यः प्रत्ययकारकः १२८७
ना वि, र. म. मा., आमवाते।

भाषा—शुद्ध पारा, शुद्ध गन्धक, सोंठ, कुटकी, त्रिफला और अमलतास ये सब बराबर लेकर और हरड़ पारे से तिगुनी और शुद्ध जमाल गोटे के बीज पारे से $\frac{3}{4}$ डालकर सब को बारीक घोटना ( अदरख के रस से )। सोंठ और एरण्ड के तेल के साथ १ माशा भर यह रस आमवात के रोगी पर तत्काल गुण दिखानेवाला है ॥ ३२० ॥

## ३२१ आमवातारि वटिका

रसगन्धकलौहार्कतुत्थटङ्कणसैन्धवान् ।
समभागान् विचूर्ण्याथ चूर्णाद्द्विगुणगुग्गुलुः ॥
गुग्गुलोः पादिकं देयं त्रिफलाचूर्णमुत्तमम् ।
तत्समं चित्रकस्याथ घृतेन वटिकां कुरु १२८९
खादेन्माषद्वयं चेदं त्रिफलाजलयोगतः ।
आमवातारिवटिका पाचिका भेदिका ततः ॥
आमवातं निहन्त्याशु गुल्मशूलोदराणि च ।
यकृत्प्लीहानमष्ठीलां कामलां पाण्डुमुग्रकम् ॥
हलीमकाम्लपित्ते च श्वयथुं श्लीपदार्वुदौ।
ग्रन्थिशूलं शिरःशूलं गृध्रसीं वातरोगहा ॥
गलगण्डं गण्डमालां कृमिकुष्ठविनाशिनी ।
आध्मानविद्रधिहरी चोदरव्याधिनाशिनी ॥
आमवाते ह्यतीवोग्रे दुग्धंमुद्रांश्च वर्जयेत् १२९३

र. सि., चि. र. भ , र. क., र. का., र. चि., भै र., र. सं., र सु , व , र. च., रसायन स., नि. र , यो. म., वै. चि , आमवाते।

भाषा—पारा, गन्धक, लोहभस्म, ताम्रभस्म, नीलाथोथा, सुहागा और सेंधानमक, इन सब को बराबर लेकर चूर्ण करलेना, चूर्ण से दूना गूगल और गूगल का $\frac{1}{4}$ त्रिफला चूर्ण और उतनाही चित्रकका चूर्ण मिलाकर घोटकर घी मिलाकर २ माशेकी गोलियें बना लेना। इन गोलियों को त्रिफला के क्वाथ के साथ खाना। यह आमवातारि वटिका पाचिका और भेदिका है । आमवात, गुल्मशूल, उदर रोग, यकृत्, प्लीहा, अष्ठीला, कामला, और पाण्डुरोग, हलीमक, अम्लपित्त, सूजन, श्लीपद, अर्बुद, ग्रंथिशूल, शिरःशूल, गृध्रसी, सभी वातरोग गलगंड, गडमाला, कृमि, कोढ, अफारा, विद्रधि, और उदर की व्याधियोंको नष्ट करती है। अत्यन्त दुःसाध्य आमवात मे दूध और मूंगको छोड़ देना चाहिये ॥ ३२१ ॥

## ३२२ आमवातारि वटिका

रसगन्धौ वरावह्नी गुग्गुलुः क्रमवर्धिताः ।
एतदेरण्ड तैलेन मर्दयेदतिचिक्कणम् ॥ १२९४॥
कर्षोऽस्यैरण्डतैलेन हन्त्युष्णजलपायिनः ।
आमवातमतीवोग्रं दुग्धं मुद्रादि वर्जयेत् १२९५

यो. म ( आमवातान्तक ) र. स , भै र, भै सा, र. क , वै क , र सु., र. का , ध , आमवाते ।

भाषा—पारा १ भाग, गन्धक २ भाग, त्रिफला ३ भाग, चित्रक ४ भाग और गूगल ५ भाग सबको लेकर एरण्ड के तेल मे खूब बारीक घोट लेना। एक तोलाभर इस को एरण्ड के तेल के साथ खाकर ऊपर से गरम पानी पीने से घोर आमवात नष्ट होता है। पथ्य मे दूध और मूंग इत्यादि छोड़ देने चाहिये ॥ ३२२ ॥

## ३२३ आमवातेश्वरो रसः

शुद्धगन्धः पलार्धश्च मृतताम्रश्चतत्समम् ।
ताम्रार्द्धःपारदः शुद्धः रसतुल्यं मृतायसम् ॥
सर्वं पञ्चाङ्गुलेनैव भावयेच्च पुनः पुनः ।
सञ्चूर्ण्य पञ्चकोलोत्थैः क्वाथैः सर्वं विभावयेत्
रौद्रे विंशतिवारांश्च गुडूचीनां रसैर्दश ।
भृष्टटङ्कणचूर्णेन तुल्येन सह मेलयेत् ॥१२९८॥
टङ्कणार्धं विडं देयं मरिचं विडतुल्यकम् ।
तत्तुल्यं तिन्तिडीक्षारं सूततुल्याच दन्तिका ॥
त्रिकटु त्रिफलाचैव लवङ्गश्चार्द्धभागिकम् ।
आमवातेश्वरो नाम विष्णुना परिकीर्तितः ॥
महाग्निकारको ह्येष आमवातान्तकोमतः ।
स्थूलानां कर्षणः श्रेष्ठः कृशानां स्थौल्यकारकः॥
अनुपानविशेषेण सर्वरोगविनाशनः ।
अनेन सदृशोनास्ति वह्निदीप्तिकरो महान् ॥
गुल्मार्शोग्रहणीदोषशोथपाण्डुरुजापहः १३०२

र स. भै,. र., र. सु , र च., ध., आमवाते ।

भाषा—शुद्धगन्धक और तांबे की भस्म प्रत्येक २ तोले, शुद्धपारा और लोहभस्म प्रत्येक १ तोला लेकर सबको एरण्ड के रस से कईवार भावना देना। फिर चूर्ण करके पञ्चकोलके कषाय से भावना देना फिर धतूरे के रस से २०, और गिलोय के रस से १०, भावना देकर बराबर प्रमाण मे भुने हुए सुहागेका चूर्ण और सुहागे के चूर्ण से ½ विडनमक और उतना ही कालीमिर्चका चूर्ण और उस के बराबर इमलीका क्षार, पारे के बराबर दन्तीमूल, त्रिकटु, त्रिफला और लौंग पारे के ½ भाग मिलाकर बारीक पीस लेना। यह आमवातेश्वररस भगवान् विष्णु ने कहा है, यह जठराग्नि को अत्यन्त प्रदीप्त करता है और आमवातका तो काल ही है। यह रस स्थूल शरीरवालोंकी अनावश्यक स्थूलता को कम करता है और दुबले शरीर वालों के शरीर को उचित रूप मे बढाता है। उचित अनुपानों के साथ सभी रोगों को नष्ट करता है। इस रस के समान अग्नि को अत्यन्त प्रदीप्त करनेवाली कोई दूसरी औषधी नहीं है, यह रस गुल्म, बवासीर, ग्रहणी के विकार, सूजन, और पाण्डुरोगों को नष्ट करता है॥ ३२३॥

## ३२४ आरोग्यरागी रसः

रसो गन्धः कणामूलं वह्नचंशं जयपालकम्।
व्योपंच बाणलवणं विषं चन्द्रलवं क्षिपेत्॥
ताम्बूलरागतो मर्द्य दिनं ताम्बूलपत्रयुक्।
दत्तो नवज्वरं हन्ति तापे शीतक्रियोचिता॥
सर्वज्वरे सन्निपाते ददीतामुं द्विगुञ्जकम्।
आरोग्यरागी नामायं रसः परमदुर्लभः१३०५

वै र, चि. रत्न, टो., रसायन स., नि. र, ज्वरे

टि० अत्र ताम्बूलरागेण खदिरसाराश्मभस्म पूगफलानि ताम्बूलभक्षणप्रमाणानि खल्वे यत्किञ्चिज्जलं निःक्षिप्य घर्षणीयानि तस्मादुत्थीयते यो रागस्तेन मर्दनीयमित्यभिसन्धिः।

भाषा—पारा, गन्धक और पिपलामूल, ये बराबर और शुद्ध जमालगोटा पारे का ⅓ त्रिकटु और पाचों नमक प्रत्येक पारे के बराबर और बछनाग पारे का $\frac{1}{16}$ डालकर पान के रंग मे (पान के बीडे लगाकर थोड़ा पानी डालकर कूट कर लालरंग निकाल लेना) घोटकर पान के साथ दो रत्ती ज्वर मे देना। गरमी मालूम पड़ने पर शीत उपचार करनें चाहियें। इस रसको नवीन ज्वर और सन्निपात मे देना चाहिये। इसका नाम आरोग्य रागी रस है यह परम दुर्लभ है॥ ३२४॥

## ३२५ आरोग्यवर्धनी गुटिका—

रसगन्धकलोहाभ्रशुल्वभस्म समांशकम्।
त्रिफला द्विगुणा प्रोक्ता त्रिगुणं च शिलाजतु॥
चतुर्गुणं पुरं शुद्धं चित्रमूलञ्च तत्समम्।
तिक्ता सर्वसमा ज्ञेया सर्वं सञ्चूर्ण्य यत्नतः॥
निम्बवृक्षदलाम्भोभि मर्दयेद्द्विदिनावधि।
ततश्च वटिका कार्या क्षुद्रकोलफलोपमा १३०८
मण्डलं सेविता सैषा हन्ति कुष्ठान्यशेषतः।
वातपित्तकफोद्भूताञ्ज्वरान्नाना विकारजान्॥
देया पञ्चदिने जाते ज्वरे रोगे वटी शुभा।
पाचनी दीपनी पथ्या हृद्या मेदोविनाशिनी॥
मलशुद्धिकरी नित्यं दुर्धर्प क्षुत्प्रवर्तिनी।
बहुनाऽत्र किमुक्तेन सर्वरोगेषु शस्यते॥
आरोग्यवर्धनी नाम्ना गुटिकेयं प्रकीर्तिता।
सर्वरोगप्रशमनी श्रीनागार्जुनचोदिता॥१३१२

र. र स, र क, र. च, कुष्ठाधिकारे।

टि० रसगन्धकलोहाभ्रकशुल्वानि प्रत्येकं समभागानि ग्राह्याणि, त्रिफलान्यतमाद् द्विगुणा ग्राह्या एवमेवोत्तरोत्तरं शिलाजतुपुराचित्रकमूलेषु भागकल्पना। अनेन राशिना तुल्यातिक्ता नियोज्येतिशास्त्रसम्प्रदायेन रसः १ गन्धकः १ लोह १ अभ्रक १ शुल्वं १ त्रिफला २ शिलाजतु ३ पुरं ४ चित्रकमूल ४ तिक्ता १८ मिलित्वा ३६ योगोनिष्पद्यते। इदानीन्तना वैद्यम्मन्या वैद्यबन्धवस्तु पारदादि पञ्चकाद् द्विगुणा त्रिफला मत्वो-

त्तरोत्तरमेतेन रागिना भागान् प्रकल्प्य पारदादीना सप्ततिभागान् तावत एव च तिक्तायाः सयोज्य १४० भागानां योगं प्रकल्पयन्ति । इयमेव द्वितीया श्रेणिः—शिलाजतुलोहशुल्वाभ्रभस्मानि निष्कास्य शिलाजतु-तुल्यं सोरकं क्षिप्त्वा तृतीया श्रेणिं प्रकल्पयन्ति इत्यमेव चन्द्रप्रभायामपि विडम्बनाङ्कुर्वन्ति, सर्व-श्चेदमज्ञानविलसितम् । मूलोक्तगुणाना यथाश्रुतपाठ एव दर्शनात् ।

भाषा—पारा, गन्धक, लोहभस्म, अभ्रकभस्म और तावेकी भस्म यह सव प्रत्येक १ भाग, त्रिफला २ भाग, शिलाजतु ३ भाग, गूगल और चित्रकमूल प्रत्येक ४ भाग और कुटकी सव के वरावर लेकर सवका चूर्ण करके २ तीन दिन तक नीम के पत्तों के रस मे घोटना, फिर जङ्गली वेर के वरावर गोलियें वना लेना । ४९ दिन तक इसका सेवन करने से यह गोली सभी प्रकार के कोढों को जड़ से नष्ट करती है। वात पित्त और कफ से पैदा हुए सभी प्रकार के ज्वरों को यह नष्ट करती है। पाचन और दीपन है । मनोहर है मेद को कम करने वाली है । मलशुद्धि करती है और भूख वहुत लगाती है। इसकी अधिक क्या प्रशंसा करें यह सभी रोगो मे हितकर है । इसका नाम आरोग्य-वर्धनी गुटिका है । श्रीनागार्जुन महाराजने इसको वनाई है ॥ ३२५ ॥

## ३२६ आरोग्यसागरो रसः

विल्वाभ्यां रसगन्धाभ्यां
कृत्वाश्लक्ष्णाश्च कज्जलीम् ।
तस्या मध्ये द्विपलिकं तार्प्यं तालं पलोन्मितम्
पलमात्रां मनोह्वां च पलमभ्रकभस्मकम् ।
सुखस्पर्शस्य कर्पश्च निःक्षिप्य परिमृद्य च ॥
मूषामध्ये विनिःक्षिप्य पिधायास्या मुखं ततः ।
पत्रेण शुद्धताम्रस्य निर्मलेन त्रिकर्षिणा १३१५
मूषां मृद्भिः सवस्त्राभिः परिलिप्य यथा दृढम्
परिशोष्य गिरिण्डैश्च पुटेद्गजपुटेन च॥१३१६॥
स्वाङ्गशीतं समुद्धृत्य खोटीभूतं विचूर्णयेत् ।
गन्धतालशिलाचूर्णैः सहितं खोटचूर्णकम् ॥
पुटेत् क्रोडपुटे चैव दशवारं ततः परम् ।
क्षिपेद्विंशतिभागेन वैक्रान्तं भस्मतां गतम् ॥
विमर्द्य मसृणं कृत्वा क्षिपेद्रौप्यकरण्डके ।
आरोग्यसागरो नाम रसोऽतिगुणवत्तरः ॥
हन्यात्पाण्डुमरोचकं गुदगदं वातश्च पित्तं कफं
गुल्माध्मानकशोफरोगमथ च
श्वासंशिरोर्त्तिं वमिम् ।
अत्यर्थानलमन्दतां गुरुमुदावर्तं च सर्वान् ज्वरान्
गुञ्जायुग्ममितो जयेद्वहुगदान्
सूतो मरीचाज्यवान् ॥ १३२० ॥

र. र स, र को, र सु, र. च, पाण्डौ ।

टि० अत्र सुखस्पर्शशब्देन केचित्स्फटिकं गृह्ण-न्ति केचित्तु चिकित्साशास्त्ररहस्यानभिज्ञास्त्वर्जीक्षारं क्षेपणीयमिति लिखन्ति परन्तु योगगुणानुसारेणा स्माभिर्मुक्तागृहीता तत्रसहृदयाना हृदयमेव प्रमाणम्—अत्र मर्दनवस्तुनोऽभावाच्चन्दनकल्केन तत्साधनीय-मिति रहस्यम् एतच्च सुखस्पर्शशब्देन सूचितम् ।

भाषा—पारा और गन्धक प्रत्येक ४ तोले लेकर कज्जली वना लेना । फिर उसमे सोनामाखी-भस्म ८ तोले, हरताल भस्म ४ तोले, मैनसिल ४ तोले, अभ्रकभस्म ४ तोले, और मोती १ तोला मिलाकर और चन्दनके कल्कसे घोटकर मूषा मे डालना । मूषाका मुख ३ तोले शुद्ध तावे के पत्रसे अच्छी तरह वन्द कर देना और वाहर से कपड़मि-ट्टी करके सुखाकर जगली कण्डो से गजपुट मे पका लेना । स्वागशीतल होनेपर झामे के सदृश वने हुए उसको निकाल लेना और चूर्ण कर लेना । फिर दश वार गन्धक, हरताल और मैनसिल का चूर्ण मिलाकर गजपुट मे फूक देना । फिर उसका १/२० वैक्रान्तभस्म मिलाकर वहुत वारीक पीसकर चादी की डव्वी मे रख देना । यह आरोग्यसागर रस अत्यन्त गुण देनेवाला है । यह रस पाण्डु, अरोचक,

बवासीर आदि गुदा के रोग, वात, पित्त, कफ, गुल्म, आध्मान, सूजन, दमा, शिरदर्द, उल्टी, मन्दाग्नि घोर उदावर्त और सभी ज्वरो को नष्ट करता है । इसकी मात्रा २ रत्ती है । अनुपान घी और कालीमिर्च है ॥ ३२६ ॥

### ३२७ आर्द्रकावलेहः

चूर्णितं चार्द्रकं प्रस्थं गुडप्रस्थेन पाचयेत् ।
सर्पिषः कुडवं दत्वा चूर्णं तत्रेदमावपेत् ॥
चातुर्जातं पलं व्योषं त्रिपलं समभागिकम् ॥
लवङ्गञ्च तथा भार्गी वृषं भूनिम्बपौष्करम् ॥
देवदार्वश्वगन्धा च जातीपत्रफलागुरु ।
गायत्रीसारमृद्वीके द्विगुणायोरजः क्षिपेत् ॥
कासं श्वासं क्षयं शोषं षण्ढतां दशरूपिणीम् ।
श्लेष्मप्रकोपमामञ्च मन्दाग्निमुदरग्रहम् १३२४
हृद्रोगरक्तशोषञ्च हन्ति वर्णाग्निवृद्धिकृत् ।
बलपुष्टिप्रदो वृष्यो ह्यार्द्रिको लेह उच्यते ॥

पा व.,

**भाषा**—एक सेर ( ६४ तोला ) अदरख को कूटकर सेरभर गुड़ मिलाकर मन्द अग्नि मे पकाना । पकते समय उसमे पावभर घी डाल देना । फिर चातुर्जात ४ तोले, त्रिकटु १२ तोले, और लौग, भारङ्गी, अडूसा, चिरायता, पुष्करमूल, देवदारु, असगन्ध, जावित्री, जायफल, अगर, खैरसार, और मुनक्का प्रत्येक ४ तोले और ८ तोले लोहभस्म डाल देना यह आर्द्रकावलेह खासी, दमा, क्षय, शोष, दश प्रकार का नपुंसकत्व, कफ का प्रकोप, आमदोष, मन्दाग्नि, पेट का जकड़जाना, हृद्रोग और रक्त का सूखना इन सबको नष्ट करता है । बल और वर्णका करने वाला है। वृष्य है । बल और पुष्टि को देता है।

### ३२८ इच्छानिधिरसः

तालसत्त्वं मृतं सूतं गगनद्रावकं समम् ।
त्रिभिस्तुल्यं नागसत्त्वं कालिकाद्रावभावितम् ॥
आवर्तन्या च वारुण्या प्रत्येकं सप्तधा पुटेत् ।
वज्रमूषान्तरे रुन्ध्यात् पूजयेद्गणदेवताम् ॥
भूधरे च पचेदेवमेकविंशतिवारकम् ।
स्वाङ्गशीतं ततो नीत्वा सहस्रवेधयेद् ध्रुवम् ॥
राजिकार्धार्धमानेन जरामृत्युविनाशनम् ।
सर्वैः सर्वरसैः सेव्यं देहसिद्धि र्भवेद्ध्रुवम् ॥
इच्छानिधिश्च नाम्नाऽसौ मृत्युदारिद्रयनाशनः

र. स.,

**भाषा**—हरतालका सत्व, पारेकी भस्म और अभ्रकद्रुति ये सब बराबर और सब के बराबर सीसे का सत्व लेकर सब को मगरैल अथवा नील के रस से भावना देना । फिर सनाय के क्वाथ और इन्द्रायण के रस से अलग अलग सात पुट देना । फिर वज्रमूषा मे बद कर देना और इष्ट देवता की पूजा करके भूधरयन्त्र मे पका लेना । इस प्रकार २१ वार सभी सस्कार करके इसको पकाना और स्वाङ्गशीतल होजाने पर इसको निकाल लेना यह रस सहस्रवेधी है । ¾ राईभर इसका सेवन करने से बुढापे और मृत्यु से यह बचाता है । सभी अवस्थावाले बिना किसी परहेज़ के इसका सेवन कर सक्ते है। इस से देहसिद्धी होती है। इस रस का नाम इच्छानिधि रस है। यह मृत्यु और दरिद्रताका नाश करता है ॥ ३२८ ॥

### ३२९ इच्छाभेदीरसः

रसगन्धमरीचानि पिप्पली विश्वकं समम्
जयपालत्रयोभागा इच्छाभेदी स उच्यते१३३०

र. श.,

**भाषा**—शुद्ध पारा, शुद्ध गन्धक, मरिच, पीपल, सोंठ, समभाग, अर्थात् एकेक भाग और शुद्ध जमालगोटा तीन भाग इन को खरल करके रख लेना । इसकी मात्रा १ रत्ती से तीन रत्ती तक शक्कर वा ठंढेपानी से देना । जब तक गरम पानी न पीया जाय तब तक झाड़े होते है। मलावरोध से जायमान समस्त रोग दूर होते है ॥ ३२९ ॥

### ३३० इच्छाभेदीरसः

शम्भोर्बीजं च सिन्धुं सबलिमरिचं
भृङ्गवेरञ्च तुल्यम्
क्षिप्त्वानैकुम्भबीजं शिखिसमतुलितं
मर्दयेदेकयामम् ॥
इच्छाभेदीरसः स्यात्प्रबलमलहरो
रेचनो रोगहर्ता ।
गुञ्जामात्रं प्रदद्याच्छिरसिजलयुतो
नोष्णकांक्षी कदाचित् ॥ १३३१ ॥

र श.,

भाषा—पारा, गन्धक, सेंधानमक, मरिच, सोंठ, इन सबको बराबर लेके शुद्ध जमालगोटा २ भाग सबको १ प्रहर मर्दन करने से इच्छाभेदी रस तैय्यार होगा। इस को १ रत्ती ठंढे पानी से देनेसे प्रबल मलको दूर करके रोग को दूर करता है। अधिक गरमी माल्रम होनेपर शिरपर ठढा पानी डालै—गरम उपचार हरगिज न करै॥ ३३० ॥

### ३३१ इच्छाभेदीरसः

तुल्यं टङ्कणपारदं समरिचं तुल्यांशकं गन्धकं,
विश्वाच द्विगुणा ततो नवगुणं जैपालचूर्णं क्षिपेत्
गुञ्जैकप्रमितो रसो हिमजलैः संसेवितो रेचयेत्,
यावन्नोष्णजलं पिबेदपि वरं पथ्यञ्च दध्योदनम्॥

र स, र. चि, र सु, र, च., ध., विरेकाऽधिकारे।

टि० इम गुटिकारूपे परिणमयितुमिच्छाया केवलेन जलेन दन्तीक्वाथेन वा विमृद्य गुञ्जैकप्रमितावटी कार्येति तत्वम्।

भाषा—सुहागा, पारा और कालीमिर्च बराबर और सब के बराबर गन्धक, और टकण से दूनी सोंठ, और सोंठ से ९ गुना शुद्ध जमालगोटा मिलाकर सब का बारीक चूर्ण कर लेना। यदि गोली बनानी हो तो केवल पानी अथवा दन्ती के क्वाथ से मर्दन करके बना लेना। यह इच्छाभेदी रस ठढे पानी के साथ १ रत्तीभर लेना चाहिये। इस से जल्दी रेचन होता है। जब तक गरम पानी न पिया जावे तब तक रेचन बद नहीं होता। दही और भात पथ्य लेना चाहिये ॥ ३३१ ॥

### ३३२ इच्छाभेदीरसः

शुण्ठीमरिचसंयुक्तं रसगन्धकटङ्कणम् ।
जैपालस्त्रिगुणः प्रोक्तः सर्वमेकत्र पेषयेत् ॥
इच्छाभेदी द्विगुञ्जः स्यात्सितया सह पाययेत्।
यावन्तश्चुलुकाः पीतास्तावद्वारं विरेचयेत् ॥
तक्रौदनञ्च दातव्यमिच्छाभेदी यथेच्छया ॥

र को., वै चि., रसायन स., र. का, भै. र., र स., वै. क., बृ यो. त., यो. र, र. चि, नि. र, र. सि, यो. म., रससार स., र. त, र दी., र म., र. सु, र. श., नि. र, ध., उदरे।

टि० रसायनसग्रहे नेपालबीजं सर्वसमानं नियोजितमिति विशेषः।

भाषा—सोठ, कालीमिर्च, पारा, गन्धक और सुहागा सब बराबर और शुद्ध जमालगोटा सोठ से तिगुना डालकर सबका बारीक चूर्ण कर लेना। यह इच्छाभेदी रस मिश्री के साथ २ रत्ती भर देकर ऊपर से ठढा पानी पिला देना। जितने चुल्लू पानी इसके साथ पिया जावेगा उतनी बार जुलाब होगा। इसका सेवन करके छाछ और भात पथ्य मे देना चाहिये ॥ ३३२ ॥

### ३३३ इच्छाभेदीरसः

दरदं टङ्कणं शुण्ठी पिप्पली चेति कार्षिकाः।
हेमाह्वा पलमात्रा स्याद्दन्तीबीजं च तत्समम् ॥
विशोष्यैकत्र सर्वाणि गोदुग्धेनैव पाययेत् ।
त्रिगुञ्जं रेचनं दद्याद्विष्टम्भाध्मानरोगिषु ॥

र क ल, र का, शा, र. प्र सु., भै सा, र, ( मा, ) रसायन स, विष्टम्भे, ज्वराधिकारेच।

टि० अत्र विशोष्यैकत्रेति लिङ्गात् जलेन साक विमृद्य त्रिगुञ्जा परिमिता वटिकाः कृत्वा छायाया विशोष्य गोदुग्धेन पाययेदिति बोद्धव्यम्।

भाषा—शिंगरिफ, सुहागा, सोंठ और पीपल ये सब प्रत्येक १ तोला रेवनचीनीका सीरा अथवा सत्यानाशी का घन ४ तोले और शुद्ध जमालगोटा ४ तोले सब को पानी के साथ घोटकर ३ रत्ती की गोलिये बना लेना। १ गोली गाय के दूध के

साथ देनी चाहिये। यह इच्छाभेदी रस विष्टम्भ और आध्मान रोगों मे देना चाहिये ॥ ३३३ ॥

## ३३४ इच्छाभेदीरसः

सूतं गन्धश्च मरिचं टङ्कणं नागराभये।
जैपालबीजसंयुक्तं क्रमोत्तरगुणं भवेत् १३३७॥
सर्वतुल्यो गुडो देय इच्छाभेदी स्वयं रसः।
द्वित्रिगुञ्जा परिमिता वटी कार्याविचक्षणैः॥

भै र, र चि, टो, रसायन स., विरेकाधिकारे।

भाषा—पारा १ भाग, गन्धक २ भाग, कालीमिर्च ३ भाग, सुहागा ४ भाग, सोंठ ५ भाग और हर्रेकी छाल ६ भा०, और शुद्ध जमालगोटा ७ भाग, और सब के बराबर गुड लेना। पहिले सब का बारीक चूर्ण करना। फिर गुड़ मिला देना। और दो या तीन रत्तीकी गोलियें बना लेना। यह इच्छाभेदी रस रेचन करता है ॥ ३३४ ॥

## ३३५ इच्छाभेदीरसः

नेपालकं पारदटङ्कणाक्षं
क्षारो यवानी मरिचानिपथ्या।
एरण्डबीजानि च गन्धकश्च
इच्छाविभेदी रसचक्रवर्ती॥१३३९॥

र क. यो, रससार स, यो चि., र का, उदरे। रसावतार मा, रससारसग्रहे यवान्या स्थाने हरिद्रा दृश्यते।

भाषा—शुद्ध जमालगोटा, पारा, सुहागा, बहेडा, यवक्षार, अजवाइन, कालीमिर्च, हरड़, एरण्ड के बीज और गन्धक सब का बारीक चूर्ण कर लेना। यह इच्छाभेदी रस रसों का चक्रवर्ती है इसके खानेसे मलसञ्चयजन्य तमाम रोग नष्ट होते है ॥ ३३५ ॥

## ३३६ इच्छाभेदीरसः

सूतशुण्ठ्यग्निकोलानां समानामर्धगन्धकः।
त्रिवृता तत्समा तुल्या जैपालाः स्नेहवर्जिताः॥
भावयित्वाऽम्बुना वह्नेश्चणकप्रमिता वटीः।
सितया सह दातव्यःक्रूरकोष्ठोऽपि रिच्यते॥

र. सा.,

भाषा—पारा, सोंठ, चित्रक, और बेर (गुठली निकालकर) यह सब बराबर और सबका आधा गन्धक और सबके बराबर निशोत और निशोत के बराबर शुद्ध जमालगोटे सब को लेकर चित्रक के रस अथवा क्वाथ से भावना देकर चने के बराबर गोलियें बना लेना। इस इच्छाभेदी रस को मिश्री के साथ देना। इस से क्रूर कोष्ट वाले को भी जल्दी रेचन हो जाता है ॥ ३३६ ॥

## ३३७ इच्छाभेदीरसः

समांशसूताभ्रकटङ्कगन्धाः
जैपालताम्रे रसपङ्क्तिभागे।
भृङ्गार्द्रनिर्गुण्डिरसैर्विभाव्यो
दिनत्रयं सिद्धिमुपैति सूतः॥१३४२॥
गुञ्जात्रयं शर्करया नियुक्तं
नवज्वरान् हन्ति मुहूर्तयुग्मात्।
संरेचयेच्च द्रवजातमादौ
शीतोपचारो दधिभक्तकश्च॥ १३४३॥

रसाऽवतारे।

भाषा—पारा, अभ्रकभस्म, सुहागा और गन्धक ये सब बराबर, शुद्ध जमालगोटा और तांबे की भस्म प्रत्येक पारेसे छठाभाग, इन सबको इकट्टे करके भांगरा, अदरख और सभालू के रसों से ३ दिन भावना देकर इस रस को सिद्ध कर लेना। यह इच्छाभेदी रस ४ घड़ी के भीतर नवज्वर को नष्ट करता है। इस की मात्रा ३ रत्ती और अनुपान शक्कर है। यह पहिले द्रवभाग को बाहर निकालता है। इस के सेवन करने वाले के लिये शीत उपचार हितकर हैं। पथ्य मे दही और भात देना ॥ ३३७ ॥

## ३३८ इच्छाभेदीरसः

शुद्धसूतस्य माषैकं गन्धकान् माषकत्रयम्।
विभीतकस्य माषैकं धात्र्याश्चैव तु माषकम्॥
माषद्वयञ्च पिप्पल्याः शुण्ठीनां माषकत्रयम्।
जैपालबीजमज्जाश्च गुडस्य विंशतिं तथा१३४५

अम्ललोणीरसैः पिष्ट्वा वटिकां कारयेद्बुधः ।
कलायपरिमाणान्तु भक्षयेद्रेचनार्थकम् ॥
अम्ललोणीरसैः सार्धं तोयमुष्णं पिबेदनु ।
तावद्विरिच्यते वेगान्यावच्छीतं न सेवते १३४७
भै. र., रेचने ।

भाषा—शुद्ध पारा १ माशा, गन्धक ३ माशे, बहेड़ा १ माशा, आवला १ माशा, पीपल २ माशे, सोंठ ३ माशे, शुद्ध जमालगोटे २० माशे, और गुड़ २० माशे, इन सबको मिलाकर अमलोनिया के पत्तों के रस मे घोटकर मटर के बराबर गोलियें बना लेना। इसको अमलोनिया के रस के साथ खाकर ऊपर से गरम पानी पीना। इस से रेचन होंगे। जब तक कोई ठढी वस्तु न खाई जाय तब तक रेचन बंद नहीं होता ॥ ३३८ ॥

### ३३९ इच्छाभेदीरसः (एकादशः)

शुण्ठी पारदटङ्कणं सुविमलं सैहुण्डकं तत्समं
जैपालं त्रिगुणं तदेव निभृतं दन्तीजलै र्घर्षितम्
तच्चात्र त्रिवृताजलै र्विलुलितं सूर्यांशुभिः शोषितं
देयोऽयं गुडसम्मितो मुनिवरै
रिच्छाविभेदी स्मृतः ॥ १३४८ ॥
सन्निपाते तथा वाते महाजीर्णसमुद्भवे ।
आमाजीर्णे तथाध्माने दातव्यं रक्तिकात्रयम् ॥
शर्करादधिभक्तश्च पथ्यं देयं विचक्षणैः १३४९
र का.,

भाषा—सोंठ, पारा, सुहागा, और थूहर का दूध ये सब बराबर, शुद्ध जमालगोटा सोंठ से तिगुना, इन सबको बारीक पीसकर शुद्ध जमालगोटे की जड के क्वाथ अथवा स्वरस से भावना देना। फिर उसको निशोत के क्वाथ मे सानकर धूप मे सुखा लेना। इस इच्छाभेदी रस को गुड़ के साथ देना चाहिये। यह सन्निपात, वातरोग, घोर अजीर्ण आमाजीर्ण और आफरा इन रोगों मे अत्यन्त हित- कर है। इसकी मात्रा ३ रत्ती की है। इस मे पथ्य शक्कर, दही और भात है ॥ ३३९ ॥

### ३४० इच्छाभेदीरसः (द्वादशः)

रसो बलिष्टङ्कणश्च मरिचानि हिडिम्बिका।
निशाक्षारः शिवैरण्डवीजकोपाः स्मृताः समाः॥
जैपालं सर्वतुल्यं स्यादिच्छाभेदी रसः स्मृतः।
गुञ्जामात्रः प्रदेयोऽयं सुखेन रेचयेन्मलम् ॥
र. का,

भाषा—पारा, गन्धक, सुहागा, कालीमिर्च, रेवनचीनीका सीरा, हल्दी, यवक्षार, हरड़ की मींगी और एरण्ड की मींगी ये सब बराबर और सब के बराबर शुद्ध जमालगोटा लेकर सब का बारीक चूर्ण कर लेना। इस इच्छाभेदी रस की १ रत्ती की मात्रा देनेसे आराम के साथ रेचन होता है ॥३४०॥

### ३४१ इच्छाभेदीरसः ( त्रयोदशः )

अर्द्धं तालाच्च तुत्थाद्द्वावेकं च नवसादरात् ।
गन्धकान्मदनात्कोलौ मर्दयेत् फेनिलद्रवैः॥
ताम्रेण तस्य माषस्तु ज्वरं छर्दिं विनाशयेत् ॥
र. का,

भाषा—हरताल ½ तोला, नीलाथोथा २ तोला, नोसादर १ तोला, गन्धक ½ तोला, मैनफल ½ तोला सबको इकट्ठा करके रीठे के रससे तांबे के मूसल से खरल मे घोटना। इस इच्छाभेदी रसकी १ माशे की मात्रा लेने से ज्वर और उल्टी शान्त होती है ॥ ३४१ ॥

### ३४२ इच्छाभेदी रसः (चतुर्दशः)

पारदष्टङ्कणो वह्निजं गन्धको
नागरं सर्वमेतत्समं कारयेत् ।
स्याच्च जैपालभागद्वयं निम्बुनो
वारिणेच्छाविभेदी रसो मर्दितः ॥
वल्लमानो गुडोन्मिश्रः सुखदायी रसः परः
यावन्तश्चुलुका ग्राह्या स्तावद्रेकान् विरेचयेत् ॥
वै वि, ॥

भाषा—पारा, सुहागा, कालीमिर्च, गन्धक और सोंठ इन सब को बराबर और शुद्ध जमाल- गोटे को पारे से दूना लेकर सब को नीबू के रस मे घोट लेना। यह इच्छाभेदी रस सुखसे रेचन करता

है। इस को ३ रत्ती भर गुड़ मे मिलाकर खाना चाहिये। ऊपर से जितने चुल्लू पानी पिया जावेगा उतनी ही वार इस से रेचन होगा॥ ३४२॥

३४३ इच्छाभेदी रसः (पञ्चदशः)

सूतगन्धकनेपालं दन्तीवीजानि टङ्कणम्।
एरण्डटुण्डुबीजानि राजवृक्षाभये त्रिवृत्१३५५
पलाशबीजान्येतानि वृद्धभागोत्तराणि च।
स्नुहीक्षीरेण तद्युक्त्या मर्द्य गाढातपे ततः॥
सुधौतमूपणं तत्र दन्तीवीजाच्चतुर्गुणम्।
चुक्रमष्टगुणं तच्च सर्वमेकत्र मर्दयेत्॥ १३५७॥
माषमात्रां वटीं खादेत्प्रातस्तक्रानुपानकम्।
यावद्वारं जलं पीतं तावद्वारं विरिच्यते१३५८
नाम्नेच्छाभेदनं प्रोक्तं वान्तिभ्रान्तिविवर्जितम्
वालवृद्धकृशक्षीणदीनशोकभयार्दिताः १३५९॥
सद्यः श्लेष्माकुलो वातरोगी शीतनिपीडितः।
नैते विरेकयोग्याः स्युरन्येषाञ्च बलाबलम्।
दृष्ट्वा मात्रां प्रयुञ्जीत मृदुक्रूरादिभेदतः १३६०
यो म.,

भाषा—पारा १ भाग, गन्धक २ भाग, तावे की भस्म ३ भाग, शुद्ध जमालगोटा ४ भाग, सुहागा ५ भाग, एरण्ड के बीज ६ भाग, सोनापाढा के बीज ७ भाग, अमलतास ८ भाग, हरड़ ९ भाग, निसोथ १० भाग और ढाक के बीज ११ भाग, इन सब को मिलाकर धूप मे थूहर के दूध मे खूब घोटना। फिर जमालगोटे से चौगुनी धोई हुई कालीमिर्च और आठगुना चूक मिलाकर सब को बारीक घोट लेना और १ माशेकी गोलियें बना लेना। इस का अनुपान छाछ है। इस के ऊपर जितनी वार जल पीया जावेगा उतनी बार रेचन होगा। बालक, वृद्ध, दुर्बल सूखे हुए, दीन, शोकातुर, डरे हुए, तत्काल के कफविकार से घवड़ाए हुए, वातरोगी और शीत से आकुल को कभी रेचन नहीं देना चाहिये। दूसरो का बलाबल और कोष्ठ की मृदुता तथा क्रूरता को देखकर मात्रा का निर्णय करना चाहिये॥ ३४३॥

३४४ इच्छाभेदीरसः (षोडशः)

सूतगन्धकमेकैकं टङ्कणं द्विगुणं मतम्।
त्रिभागं त्रिकटु ज्ञेयं जैपालं चाष्टभागिकम्॥
सर्वं सूक्ष्मं चूर्णयित्वा वल्लमात्रं प्रयोजयेत्।
इच्छाभेदी रसो नाम मलवातादिरेचनम्॥
शूलं पाण्डूदरं शोथं गुल्मं पञ्चविधं तथा।
रेचयेच्छीततोयेन स्तम्भनं तप्तवारिणा १३६३
यो म

भाषा— पारा और गन्धक प्रत्येक १ भाग, सुहागा २ भाग, त्रिकटु ३ भाग, और शुद्ध जमालगोटा ८ भाग, इन सबको खरल मे बारीक पीसकर इस की ३ रत्ती की मात्रा का उपयोग करना चाहिये। इस रस का नाम इच्छाभेदी रस है। मल और वात इत्यादि मे यह अच्छा रेचन है। शूल, पाण्डुरोग, सूजन और पॉच प्रकार के गुल्मों मे यह हितकर है। इस के ऊपर ठंढा पानी पीने से रेचन होता है। और गरम पानी से स्तम्भन होता है॥३४४॥

३४५ इच्छाभेदीरसः (सप्तदशः)

पातितं स्वेदितं सूतं कर्षमेकं समाहरेत्।
शुद्धगन्धकतःकर्षं तयोः कज्जलतां नयेत्॥
शुष्कमर्दनयोगेन लोहपात्रे निवेशयेत्।
कज्जली धारयेद्वह्नौ यावत्सर्वा द्रुता भवेत्॥
पश्चाच्छुण्ठीं पिप्पलीञ्च कट्फलं तित्तिरीफलम्।
एतत्सर्वं सम्प्रचूर्ण्य प्रत्येकं कर्षमानकम्१३६६
प्रक्षिप्य द्रुतिमध्ये तन्मर्दयेद्भूत योगतः।
उत्तारयेत् ततः पश्चान्मर्दयेत्त्रिवृताजलैः १३६७
वटीं गुञ्जाप्रमाणेन विदधीत विचक्षणः।
शोषयित्वा करण्डान्तः प्रक्षिपेद्यत्नतो भिषक्॥
रोगिणे वितरेदेकां वटीमुष्णेनवारिणा।
पश्चात्प्रतापयेत्पृष्ठं वह्निना भिषगुत्तमः १३६९॥
विरेचयेद्रोगिणं तमामान्तिकमयं रसः।
शीतोदकानुपानेन स्तम्भो भवति तत्क्षणात्॥
पथ्यश्च पूर्ववद्द्या ज्जलोदर निवर्तने।
इच्छाभेदी रसो नाम्ना जलोदर निवारणः १३७१

पाचनं स्वेदनं कुर्याद्योगेष्वेतेषु वैद्यराट् ।
अन्यथा नैव कर्तव्यो विरेकः शुभमिच्छता ॥

ना वि. रसाल,

टि० नारायणविलासेऽपि रसालङ्कारादुद्धृतः पाठः, पर तत्र कङ्कुष्ठस्थाने कङ्कोल मिति दृश्यते । शुण्ठ्यादीना माने कोलमिति दृश्यते । एतावान्विनिमयः कस्मात् सञ्जात इति न लक्ष्यते, इच्छाभेदिता तु ह्यत्रानिवार्यैव कङ्कुष्ठेन यदि मृद्दारशृङ्ग मिति नाम्ना प्रथितं वस्तु नियुज्यते, तदोपदंशादीनामपि निवृत्तिर्भवेत्, यदिच कङ्कुष्ठेन रेवनचीनीति प्रसिद्ध द्रव्यं नियुज्यते तर्हि विरेचनतायामाधिक्यमिति विशेषः ।

भाषा०—पातन और स्वेदन किया हुआ पारा १ तोला और शुद्ध गन्धक १ तोला मिलाकर उन को सूखे ही घोटकर कज्जली करके लोहे की कड़ाही मे रखकरनीचे से मन्द अग्नि देकर ऊपर कज्जली को चलाते रहना जब वह अच्छी तरह पिघल जाय तब उस मे सोठ, पीपल रेवनचीनी का सीरा अथवा शुद्ध मुर्दासङ्ग और शुद्ध जमालगोटा प्रत्येक १ तोला डालना । फिर घी डालकर उसको घोटना फिर उसको नीचे उतार कर निसोत के क्वाथ से भावना देना और एक १ रत्ती की गोलियें बनाकर और सुखाकर शीशी मे रख देना । रोगी को १ गोली गरम पानी के साथ देकर आगकी तरफ कराकर उसकी पीठ सिकाना जबतक आम न निकल जावे तबतक इस रस से रेचन होगा । जब आम निकलजावे तब ठंढा पानी पिलाने से रेचन बंद करना चाहिये । इस के ऊपर ठंढा पानी पीने से रेचन बंद हो जाता है। दही और भात इसमे पथ्य है। यह इच्छाभेदी-रस जलोदर को नष्ट कर देता है। इसका प्रयोग करने मे वैद्य को चाहिये कि पहिले रोगी को पाचन देकर फिर स्वेदन कराले। नहीं तो इस रस से रेचन कराना हितकर नहीं होगा ॥३४५॥

### ३४६ इच्छाभेदीरसः (अष्टादशः)

रसो गन्धताम्रे शिलातिन्दुकृष्णे
त्रिवृत्कं द्विकोष्णं समं तुल्यपालः ।
सुधाक्षीरतो मर्दितो वल्लमात्रो
भुजङ्गप्रयातं गदाश्चाशुयान्ति॥१३७३॥
शर्करार्द्रकनीराभ्यां देयं जाते नवज्वरे ।
मुद्गौदनं सतक्रं वा पथ्यं विश्वज्वरापहम् ॥

र. शि., ज्वराधिकारे

भाषा—पारा, गन्धक, ताम्रभस्म, मैनसिल, तेंद, पीपल, निसोत, सोठ और कालीमिर्च ये सब समभाग और इन सब के बराबर शुद्ध जमालगोटा इन सब को थूहर के दूध मे बारीक घोट लेना। इस की ३ रत्ती की मात्रा लेने से सब रोग भाग जाते है। इस को नवीन ज्वर मे शक्कर और अदरख के रस के साथ देना । इसमे मूंग की खिचड़ी अथवा भात और छाछ पथ्य है ॥ ३४६ ॥

### ३४७ इन्दुकलावटी

शिलाजत्वयसी हेम सम्मर्द्यार्जकवारिणा ।
गुञ्जामात्रा वटीः कृत्वा कुर्याच्छायाविशोषिताः
मसूरिकायां विस्फोटे ज्वरे लोहितसंज्ञके ॥
एकैकां दापयेदासां सर्वव्रणगदेषुच ॥१३७६ ॥

भै र., मसूरिकाधिकारे

भाषा—शिलाजतु, लोहभस्म और सुवर्ण भस्म सब को बराबर लेकर अर्जक ( जिसको मराठी मे फागळा कहते हैं यह न मिले तो बबई को काम मे ला सक्ते है ) के रस मे घोट कर १ रत्ती की गोलिये बना कर छाया मे सुखा लेना। इस गोली को मसूरिका, फुड़िया और रक्त मे गये हुए ज्वर मे देना चाहिये । यह गोली व्रण रोगो मे भी दी जाती है ॥ ३४७ ॥

### ३४८ इन्दुवटी

शिलाजत्वभ्रलौहानि समानि हेमपादिकम् ।
काकमाचीवरीधात्रीपद्मानामम्भसा पृथक् ॥
भावयित्वा वटीः कुर्याद्द्विगुञ्जाफलमानतः ।
धात्रीतोयेन सम्मर्द्य प्रातः प्रातः प्रयोजयेत् ॥

कर्णनादादयः सर्वे गदा वातोद्भवाश्च ये ।
प्रमेहा विंशतिश्चापि नश्यन्त्येतन्निषेवणात् ॥
सुधाविश्राणनादिन्दुर्जगतां तापहृद्यथा ।
तथैवेन्दुवटी नाम रोगतापनिषूदनी ॥१३८०॥

भै. र, कर्णरोगाधिकारे ।

भाषा—शिलाजतु, अभ्रकभस्म और लोहभस्म इन सब को बराबर ले और सुवर्ण भस्म वा सोने के वर्क एकका चतुर्थांश मिलाकर, मकोय, शतावरी, आवला, और कमल के रसो से पृथक् २ भावना देकर २ रत्तीकी गोलियें बना लेना । प्रातःकाल एक गोली आवले के रस मे घोलकर खिलाना । इस से कर्णनाद ( विनाकारण कान मे आवाज़ आना ) इत्यादि कर्ण रोग, वातरोग, और २० प्रकार के प्रमेह नष्ट हो जाते है । जैसे ससार को अमृत देकर चन्द्रमा ससार के रोगों को दूर करता है इसी प्रकार यह इन्दुवटी सब रोगों के तापों का नाश करती है ॥ ३४८ ॥

## ३४९ इन्दुशेखरः

शिलाजत्वभ्रसिन्दूरप्रवालायोरजांसि च ।
माक्षिकञ्च तथा तालं समभागानि मर्दयेत् ॥
भृङ्गराजस्य पार्थस्य निर्गुण्ड्या वासकस्य च ।
स्थलपद्मस्य पद्मस्य कुटजस्य च वारिणा ॥
भावयित्वा वटीः कृत्वा कलायपरिमाणतः ।
यथादोषानुपानेन गर्भिणीषु प्रयोजयेत् ॥
गर्भिणीनां ज्वरं घोरं श्वासं कासं शिरोरुजम् ।
रक्तातिसारं ग्रहणीं वान्तिं वह्नेश्च मन्दताम् ॥
आलस्यमपि दौर्बल्यं हन्यादेष न संशयः ॥
कलेरादौ ससर्जेमं भगवानिन्दुशेखरः ॥

भै र, र च, गर्भिणीरोगाधिकारे ।

भाषा—शिलाजीत, अभ्रसिंदूर ( अथवा अभ्रक भस्म और रससिन्दूर ), मूगे का चूर्ण अथवा भस्म, लोहभस्म, सोनामाखी और हरतालभस्म वा रसमाणिक्य इन सब को बराबर लेकर, भागरा, अर्जुन वृक्ष की छाल, संभाळू, अडूसा, स्थलपद्म (अभावमे गोरखमुण्डी) कमल के फूल और कुरैया के रस अथवा क्वाथो से अलग २ भावना देकर जङ्गली बेर के बराबर गोलियें बना लेना । दोषों को देखकर उचित अनुपान के साथ इस का प्रयोग गर्भिणियों के लिये हितकर है । यह रस गर्भिणी स्त्रियो के घोरज्वर, दमा, खासी, शिरदर्द, रक्तातिसार, सङ्ग्रहणी, उल्टी, मन्दाग्नि, आलस्य और दुर्बलता को निस्सन्देह नष्ट करता है । इस रसको कलियुग के आदिमे शिवजी महाराज ने बनाया था ॥ ३४९ ॥

## ३५० इन्द्रब्रह्मवटी

मृतसूताभ्रकं तीक्ष्णं तारं ताप्यं विषं समम् ।
पद्मकेसरसंयुक्तं दिनैकं मर्दयेद्द्रवैः ॥१३८४॥
स्नुग्वह्निविजयैरण्डवचानिष्पावसूरणैः ।
निर्गुण्ड्याश्च द्रवैर्मर्द्यं तद्गोलं पाचयेत्पुनः ॥
कङ्गुणीसर्षपोत्थेन तैलेन गन्धसंयुतम् ।
ततः पक्त्वा समुद्धृत्य चणमात्रा वटी कृता ॥
इन्द्रब्रह्मवटी नाम भक्षयेदार्द्रकद्रवैः ।
दशमूलकषायञ्च कणायुक्तं पिबेदनु ॥
अपस्मारं निहन्त्याशु यथा सूर्योदयस्तमः ॥

र क., र र को, र. क ल, चि र, र. सु., व. रा., वै चि., र. र.; र. स., ध, र. च., र म. मा, अपस्मारे ।

टि०—वै. चि. मृतसूताभ्रकं तीक्ष्णं तारताप्य विषं समम् इत्यस्य स्थाने मृतसूताभ्रकं तीक्ष्णमारं कास्य मृतं समम् इति पाठान्तरम् ।

भाषा—पारेकी भस्म, अभ्रकभस्म, फौलाद भस्म, चादीभस्म, सोनामाखी और बछनाग सब को बराबर लेकर कमलकेसर मिलाकर थूहर के दूध, तथा चित्रक, भाग, एरण्ड के पत्ते, बच, सेम के पत्ते, जमीकंद और संभाळू के रसों से भावना देना फिर पुटपाक मे पकाकर मालकगनी का तेल और गन्धक मिलाकर घोटलेना और दूसरी बार पुटपाक मे पकाना । फिर सरसों का तेल और गन्धक मिलाकर तीसरी बार पकाना । फिर ठढा करके उस की

पात, क्षय, श्वास, कास, मन्दाग्नि, ज्वर, कर्णशूल शिरःशूल, दन्तशूल, पीनस, प्लीहा, हृच्छूल, गठिया, एकाङ्गवात, धनुर्वात, कम्पवात, मूर्च्छा, तमाम विषमज्वर तथा एवं प्रकारके अन्यभी तमाम रोग नष्ट होते हैं। वायुमे घीके साथ, पित्तज्वरमे मधु के साथ, श्लेष्मज्वरमे पीपलके साथ, अत्यन्तपित्तप्रकोपमे चन्दन के साथ, श्लेष्मवातरोग मे तैलके साथ, वातपित्तरोग मे घृतके साथ, श्लेष्मापित्तमे अदरख के साथ, सन्निपातमे निर्गुण्डीके साथ, तमाम शूल और विषमज्वरों मे त्रिफला के साथ, अग्निमान्द्यमेअदरख के साथ, अभिष्यन्द और शिरःशूल मे कत्था और एलिया के साथ, कफवात और मूर्च्छामे पक्षियोके मासके साथ, एकाङ्ग, धनुर्वात और पीनस इनमे दूध के साथ, पाण्डु, क्षय, कास और कामला इनमे मिरच युक्त घीके साथ, नाभिशूल और अग्निमान्द्यमे अजमोद और विडङ्ग के साथ, रूक्षज्वर और अरुचि मे केलेके साथ, आधी कमर के शूलमे एलिया के साथ देना। यह गुदरोग के लिये खास औषध है नागवोधिने इसको वनाया है **कनकसुन्दर** इसका नाम है ॥ १७ ॥

### १८ कनकसुन्दरो रसः ( चतुर्थः )

**रससमकनकाख्यव्योमसत्त्वोत्थपिष्टिं,**
**द्विगुणवलिसमेतां गोलमध्ये विपाच्य।**
**त्रिकटुदहनवेल्लैर्वत्सनाभार्धभागैः**
**रससमविषमुष्टीदारुयुक्तैः समस्तैः ॥ ८८ ॥**
**अजसलिलविपिष्टे गुञ्जया तुल्यगोलः,**
**कुपितकफसमुत्थं हन्ति कुष्ठं गरिष्ठम्।**
**तदपरमथवातश्लेष्मजं त्वग्विकारं,**
**गुदगदमपि सर्वं हन्ति मान्द्यं सुनिन्द्यम् ८९**
**तुष्टेन शम्भुना दिष्टः सोऽयं कनकसुन्दरः।**
**त्वग्विकारविनाशाय कुबेराय महात्मने ॥९०॥**

र. र स, चि क, विसर्पादौ।

टि० रसरत्नसमुच्चये विषमुष्टिरित्यस्य स्थाने नवश्रृङ्गी इति पाठो दृश्यते, तदा नवश्रृङ्गी शब्देन नूतनश्रृङ्गीविष योज्यम्। कैश्चिन्महानुभावैस्तु आवर्तकीफलानि यानि प्राकृते मरोडसींगीति नाम्ना व्यवह्रियन्ते तानि दातु लिखितानि, पर श्रृङ्गी शब्देन तद्ग्रहणे चिकित्साक्रमकल्पवल्या विषमुष्टिशब्दो न प्रयुज्येत गुणसाधर्म्याभावात्। सधर्माण एव प्रतिस्थाने युज्यन्ते इति चिकित्सासम्प्रदायः। अत्र सुहृदा हृदयमेव साक्षिकमिति दिक्।

**भाषा**—शुद्ध पारा, सुवर्ण और अभ्रकसत्व इनको विजोरे वगैरह के रससे मर्दन करके टिकड़ी वना लेना और इस टिकड़ीसे द्विगुण गन्धक लेकरखूव वारीक पीसकर किसी चिकनी कुल्हडीमे आधागन्धक नीचे देकर वीचमे टिकड़ी रखकर ऊपरसे वचे हुए आधे गन्धकको रखदेना, ऊपरसे ढक्कन देकर कुल्हडीपर कपड़मिट्टी करके लघुपुट की आंच दे देना जिसमेकि गन्धक मात्र जलजाय फिर स्वाङ्गशीतल होनेपर निकालकर पीस डालना और इसमे त्रिकटु, चित्रक, विडङ्ग और शुद्ध वछनाग ये प्रत्येक पारेसे आधे २ भाग लेना और शुद्ध कुचिला, दारुहल्दी अथवा देवदारु ( क्योंकि देवदारु और दारुहरिद्रा इन दोनोंके आदि और अन्त के शव्दोको निकालनेसे दारुशव्द अवशिष्ट रहता है और योगके अनुकूल होनेसे दोनोको ग्रहण करना कोई हानिकारक नहीं ) ये प्रत्येक पारेकी वरावर लेकर कपड़छान कर पूर्वपिष्टी मे मिलाकर वकरीके ताजे मूत्र से दो तीन रोज खरल करके १ एक रत्तीकी गोलिया वनाकर योग्यानुपान के साथ देनेसे कुपित कफसे उत्पन्न हुए कुष्ठको और वात श्लेष्मज त्वग्विकार, समस्त ववासीर, दारुणमन्दाग्नि, इन सवको यह नष्ट करता है इसका नाम **कनकसुन्दर** है यह रस महादेवजी ने प्रसन्न होकर त्वग्रोग नाश करनेकेलिये कुवेरको वतलाया था ॥ १८ ॥

### १९ कनकसुन्दरो रसः ( पञ्चमः )
### ( हेमसुन्दरः—कनकप्रभा )

**हिङ्गुलं मरिचं गन्धं टङ्कणं पिप्पलीं विषम्।**
**कनकस्य च वीजानि समांशं विजयाद्रवैः ॥**

मर्दयेद्याममात्रन्तु चणमात्रा वटी कृता ।
भक्षणाद्ग्रहणीं हन्ति रसः कनकसुन्दरः ९२॥
अग्निमान्द्यं ज्वरं तीव्रमतिसारञ्च नाशयेत् ।
दध्यन्नं दापयेत्पथ्यं सदा तक्रौदनं हितम् ९३

र. का., रसायन स., र. स. क , र सं., र. म , वा., यो. चि., यो. र , र क. ल , चि. र. भ , र. का , र. चि., व. रा , र. र., र. श , र. र. दी., र (मा. ), र. सु , र. च., भै. सा. सं., नि. र., ना. वि., टो., र सि., भै. र., र को , वै. चि., र. क., र र. स., र. प्र. सु., यो. म , र. क यो., रस स., अतिसारे । रसकामधेनौ हेमसुन्दर ।

टि० कुत्रचिद्धिङ्गुलस्थाने पारदो नियोजितो दृश्यते यथा निघण्टुरत्नाकरे—कुत्रचिद्विजयास्थाने भृङ्गेण भावना प्रदत्ता यत्र कुत्रास्य कनकप्रभेति नाम यथा टोडरानन्दे ।

भाषा—शुद्ध शिंगरिफ, मिरच, शुद्ध गन्धक, भुना हुआ सुहागा, पीपल, शुद्ध वछनाग और दूधमे शोधेहुए धतूरेके बीज येसब समभाग लेकर कपड़छान करके भागके अङ्गस्वरस अथवा क्वाथसे एकपहरतक मर्दनकरे। और चने प्रमाण गोली बनाकर यथानुपानसे देनेसे संग्रहणी, अग्निमान्द्य, ज्वर और दारुण अतिसार नष्ट होतेहै इसमे दहीभात अथवा छाछभात खाना पथ्य है। कनकसुन्दर इसका नाम है ॥ १९ ॥

## २० कनकसुन्दरो रसः ( षष्ठः )

तिथिवर्णसुवर्णाद्धि शुद्धसूतं चतुर्गुणम् ।
खल्वे क्षिप्त्वा त्र्यहं मर्द्य
पिष्टिंकुर्यात्सुसूक्ष्मिकाम् ॥ ९४ ॥
काञ्जिकेन मृदः स्थाल्यां—
क्षिप्त्वाऽधो ज्वालयेद्दिनम् ।
कनकस्य रसेनैव दोलायन्त्रे दिनत्रयम् ॥९५॥
प्रत्यहं स्वेदयेत्तेन नूतने नूतने रसे ।
शुद्धगन्धकभागांश्च पञ्च तत्र क्षिपेदधः ॥९६॥
चित्रकस्याथ नीरेण दिनैकं मर्दयेत्ततः ।
दिनैकं चार्कदुग्धेन वज्रीक्षीरेण वासरम् ॥९७॥
मधुना दिनमेकञ्च क्रमात्पिष्टिं प्रमर्दयेत् ।
क्षिपेत्पीतकपर्देषु ततस्तद्यत्नतः सुधीः ॥९८॥
तन्मुखान्यश्मचूर्णेन भृत्वा संशोष्य चातपे ।
प्रत्येकं चाश्मचूर्णेन वेष्टयेत्पुरतश्च ताः ॥९९॥
सर्वाश्चातपसंशुष्काः पुनः कुर्यात् सुधादृढाः ॥
मृन्मयं वर्तुलं पक्कमानेतव्यञ्च भाण्डकम् १००
लिम्पेच्चूर्णेन तन्मध्यमर्धाङ्गुलकटाहकम् ।
भर्तव्यं चाश्मचूर्णेन मध्ये क्षिप्त्वा कपर्दिकाः॥
श्रावन्त्वधोमुखं दत्वा वेष्टयेद्वस्त्रमृत्स्नया ।
शुष्केशुष्के पुनः कुर्याद्वस्त्रमृद्वेष्टनं त्रिधा १०२
वेदास्रद्विभुजं गर्तं सर्वं वै छाणकै र्भृतम् ।
ततस्तां पिठरीं गर्ते मुक्त्वाग्निं ज्वालयेत्ततः ॥
स्वाङ्गशीतलतां प्राप्ताः समाकृष्याः कपर्दिकाः
स्फोटयित्वा ततश्चूर्णं खल्वे पिष्ट्वा सुसूक्ष्मकम्॥
यत्नेन प्रक्षिपेच्चूर्णं कुम्भके रसकृन्नरः ।
हेमवर्णकृदङ्गानां जातः कनकसुन्दरः॥१०५॥
वल्लमेकं च मन्दाग्नौ द्वात्रिंशन्मरिचैः समम् ॥
मधुरं भोजनं दद्याच्छाकं भक्षेद्घृतान्वितम्१०६
अतिसारे च मत्स्यण्डीसितासत्त्वसमन्वितम् ।
शाल्मलीजातनिर्यासैरामाऽतीसारनाशनम्१०७
मुस्ताया अपि चात्रैव देया वल्ला नवैवहि ।
मुस्ताहरीतकीभ्याञ्च सङ्ग्रहण्यां प्रयोजयेत् ॥
धातकीशृङ्गवेराभ्यां चत्वारः प्रतिभेषजम् ।
क्षये श्लेष्मणि वल्लैकमेतद्विज्ञो द्वयं तथा ॥
वेदाः पुष्करमूलस्य गन्धसौवर्चलस्य च ।
एवमेकादश प्रात र्ग्राह्या नित्यञ्च रोगिगा ११०
क्षीयते विधिनाऽनेन क्षयराण्मासमध्यतः ।
मासेनैकेन ते रोगाः प्रोक्ता नश्यन्ति च ध्रुवम्
बलवन्तश्च जायन्ते रसेनानेन नीरुजः ।
देहकान्तिः सुवर्णाभा स्यादारोग्यं प्रहर्षणा ॥
ये पश्यन्ति मुखं तेषां पापमुक्ता भवन्ति ते ॥

र क. ली , रसायने ।

भाषा—उत्तम सुवर्ण १ तो०, और शुद्ध पारा ४ तोले, दोनोंको खरल मे डालकर दो रोज,

नीबू वगैरहके रससे खरलकर उसकी पिट्ठी बनाकर मिट्टीकी मजबूत हाडी मे काञ्जी डालकर इसको दोलायन्त्र मे लटकाकर १ दिन स्वेदित करे। वाद दूसरे नवीन वस्त्र मे बाधकर दूसरी हाडीमे धतूरेका अङ्गस्वरस भरकर तीनरोजतक स्वेदन करे, रस सूखनेपर नवीनडालताजाय इतना ध्यान रक्खेकि रस नीचे हाडीमे बैठकर जलने न पावे इस लिये उचित है कि रोज वर्तन बदलता जाय और उसमेरसभी ताज़ाताज़ाडालता जाय तीनरोज़केवाद उस टिकडीको निकालकर कपडेसे पोंछकर साफ करले और सुखादे। फिर उस टिकडी से पचगुना शुद्ध गन्धक लेकर दोनोंको इकट्ठेमर्दनकरके चित्रककेअङ्गस्वरस अथवा काढेसे एकदिनमर्दनकरके आकडेकादूध, थूहरका दूध और मधु इनप्रत्येकसे एकएकरोज़ मर्दनकरे। द्रव सूखनेपर पीली कौड़ियोंको काञ्जीमे धोकर साफ करके उनमे भरदे। और उनका मुह गुड़ चूना अथवा केवल चूनेसे बंदकर धूपमें सुखाकर उन सवपर चूनेका एक स्तर चढाकर धूप मे सुखाकर कच्चे डोरे या रेशमसे लपेट देना। फिर भी एक चूनेका पोता देकर सुखा लेना। फिर एक मिट्टीका मजबूत नया घड़ा लेकर उसपर ६–७ कपड़मिट्टी करकेसुखालेना और भीतरसे चूनेसे पोतकर सुखा लेना। इस घड़े के भीतर $\frac{1}{2}$ अङ्गुल पिसा हुआ चूना विछाकर कटोरीके समानवेदी बना देना, उस वेदीपर उन कौड़ियोको अधोमुख रखकर ऊपरसे चूनेसे ढककर एक शराव ऊंधा मार देना जोकि तमामपर आच्छादित होजाय फिर उसकी सन्धिको गुड़ और चूने से वद करके घड़े के मुहपर ढक्कन देकर सुखा सुखाकर तीन कपडमिट्टी करे फिर चोखूटा दोहाथ गहरा गड्ढा खोदकर तमाम मे जङ्गली छाने भरदे और उस घड़ेको उसपर रखकर अग्निजलावे, जवस्वाङ्गशीतल हो जाय तव घड़ेको धीरज से खोलकर उन कौड़ियोंको निकालकर उन के चूनेको दूरकर सबको खरलमे पीस डाले और इसको यत्नसे शीशीमे धरले यह **कनकसुन्दर** रस तैयार हुआ। इसकी २ रत्तीकी मात्रा ३२ कालीमिर्च के चूर्ण के साथ देवे और मधुरभोजन दे। शाक घी मे वनाकर दे। यह इसका साधारण अनुपान है। अतिसार मे रात्र, मिश्री और गुडूचीसत्वकेसाथदेना। मोचरस ३ माशे नागरमोथेका चूर्ण ३ माशेकेसाथ देनेसे प्रदर रोग और आमातिसार दूर होता है। मुस्तक, हर्रे, धातकी और सोठ इनके एक एक माशे चूर्ण के साथ देनेसे सग्रहणी दूर होती है। हींग ६ रत्ती, पुष्करमूल १२ रत्ती, गन्धक ६ रत्ती, संचल ६ रत्ती और रस ३ रत्ती ये सव मिलाकर एक मात्रा बनाकर खाने से एक महीने के प्रयोगसे राजयक्ष्मा दूर होता है और राजयक्ष्मजनित उपद्रव सब एकमहीनेमे शात होकर रोगी वलवान हो जाता है देहकी कान्ति सुवर्ण के समान हो जाती है और तमाम श्लेष्मरोग नष्ट हो जाते है॥ २०॥

## २१ कनकसुन्दरोरसः ( सप्तमः )

गद्याणद्वितयं सूतं गन्धकस्तत्समः स्मृतः।
तत्समं मरिचं चैव सङ्ग्राह्यश्चतथाभ्रकम्११३॥
भृङ्गीविषश्च गृह्णीयादेवमेतद्विघृष्य च॥
निर्गुण्डिकारसैः साकं मर्दयेदेकतः कृतम्११४।
गोलकं कारयेद्गाढं तत्पश्चादुपरि न्यसेत्।
अन्धमूषागतं कृत्वा वालुका यन्त्रमध्यगम्११५।
तस्योपरि भवेद्भृङ्गारसोनत्रिफलाजलैः।
आपूर्य तन्निरुध्याथ वह्निः स्याद्दिनसप्तकम्११६।
पच्यते च शनैस्तावत्पश्चाच्छीतं समुद्धरेत्।
रक्तिकैकं द्वयं चाथ वल्लं वास्य प्रयच्छति ११७॥
सन्निपाते समायाते सूतमेनं प्रयोजयेत्।
दुःस्थिते चाप्यतीसारे विज्वरे सज्वरेऽपि वा॥
अग्निमान्द्ये तथा दद्यादुदरे च महोदरे।
विद्रधौ रुद्ररूपे च सामे कामं च दीयते॥११९॥

ग्रहण्यादिविकारेषु कामलासु च पाण्डुके ।
अष्ठीलादिगदेष्वेष प्रयुक्तो हन्ति तान्गदान् ॥

रसचिं, र. का., अतिसारे ।

टि०—रसकामधेनौ गन्धकेन समो रविर्गृहीतः मरिचस्थानेसुवर्णगृहीतमितिविशेषः । निर्गुंडिकाद्याऽऽरभ्य तस्योपरिभवेद्द्रवा इत्यन्तः पाठः सन्दर्भशून्य इव प्रतिभाति ।

भाषा—शुद्ध पारा और गन्धक एक १ तोला दोनोंकी बराबर मिरच, अभ्रक और वछनाग देकर इन सबका चूर्ण बनाकर निर्गुण्डीके अङ्गस्वरससे खूब मर्दन करे । फिर इसका गोला बनाकर अन्धमूषामे धरके वालुकायन्त्रमे रखदेना । वालुके ऊपर पहिले भागका रस डालना फिर लशुनका फिर त्रिफलाका, इसतरह तमाम वालुको तरकर देना फिर उसके ऊपर ढक्कन देकर ३–४ कपड़मिट्टी देदेना और सुखाकर आचदेनाशुरू करदेना जब भीतरका द्रव सूखजाय तब कुछ आच वढावे पर तीक्ष्ण न करे, ऐसे ७ रोज तक आच देवे फिर स्वाङ्गशीतल होनेपर निकालकर एकदो अथवा तीन रत्ती योग्यतानुसार और योग्य अनुपान के साथ सन्निपात, ज्वरसहित वा ज्वररहित दारुणातिसार, विद्रधि, राजयक्ष्म, ग्रहणी, कामला, पाण्डु, अष्ठीला इत्यादि रोगोंमे देनेसे उनको नष्ट करता है । कनकसुन्दर इसका नाम है ॥ २१ ॥

## २२ कनकसुन्दरोरसः ( अष्टमः )

कनकं माक्षिकं तालं शिलां रसकगन्धकम् ।
समं च पारदं चैतदर्कक्षीरेण मर्दयेत् ॥ १२१ ॥
पृथक् प्रतिदिनं धीमान् भावयेच्च रसैस्ततः ।
भल्लातकजयागस्त्यचित्रमूलैश्च गोलकम् १२२॥
युक्त्या मृगाङ्कवच्चार्द्रद्रवेण सप्तधा पुटेत् ।
कटुत्रयाम्बुभिश्चैतत्क्षयरोगविनाशकृत्॥ १२३॥

र. क क्षये,

भाषा—सुवर्ण, सोनामाखी, हरिताल, मैनसिल, खपरिया ( या जस्तभस्म ) गन्धक और पारा येसव शुद्धकियेहुए समभागमेलेकर आकके दूधसे मर्दनकरना फिर भिलावा, भाग, अगस्त्य और चित्रककीजड़ इनके स्वरसोंसे एकएकदिन भावनादेकर गोलाबनालेना और मृगाङ्क के समान ही अदरखका रसदेदेकर ७ बार पुटदेना, इस रसको त्रिकटुके क्वाथके साथ देनेसे क्षयरोग नष्ट होता है ॥ २२ ॥

## २३ कनकसुन्दरोरसः ( नवमः )

सूतं कान्तं समं शुद्धमभ्रकं नागभस्मकम् ।
तुत्थं खर्परसंयुक्तं माक्षिकं च समंसमम्॥१२४॥
सर्वैः समं हेमभस्म सर्व खल्वे विमर्दयेत् ।
यन्त्रे विद्याधरे तत्तु पुटमारण्यकोत्पलैः॥१२५॥
स्वाङ्गशीतलमुद्धृत्य गुञ्जामात्रं प्रयोजयेत् ।
कासं श्वासं क्षयं चैव ग्रहणीपाण्डुरोगजित् १२६।
वातव्याधिहरं गुल्मसर्वज्वरनिषूदनम् ।
उदरप्लीहमन्दाग्नौ कामलामेहपीनसे ॥
रक्तपित्तक्षये चैव रसः कनकसुन्दरः ॥१२७॥

र. क, यो. ।

भाषा—शुद्धपारा, कान्तलोह, अभ्रकभस्म, नागभस्म, तुत्थ, खपरिया या जस्तभस्म, और सोनामाखी ये सब समभाग लेना और इनसबके बराबर सुवर्णभस्म मिलाकर खरलमे तुलसीवगैरहके रसकेसाथ घोटना, फिर विद्याधरयन्त्रमे रखकर जङ्गली कण्डोसे पुटदेना । स्वाङ्गशीतल होनेपर एकरत्तीकी मात्रामे यथोचित अनुपानसे देना । यह रस कास, श्वास, क्षय, ग्रहणी, पाण्डु, वातव्याधि, गुल्म, संपूर्णज्वर, उदररोग, प्लीहा, मन्दाग्नि, कामला, प्रमेह, पीनस, रक्तपित्त, और राजयक्ष्मा इनरोगोंको नष्ट करता है । इसका नाम कनकसुन्दररस है ।२३।

## २४ कनकसुन्दरोरसः ( दशमः )

गन्धकाभ्रकलोहानि सूतमाक्षिक मौक्तिकम् ।
नागभस्मप्रवालानि सर्वतुल्यश्च हाटकम् १२८
मर्दयेत्रिदिनं प्राज्ञो हंसपादीरसै भिषक् ।
तत्सर्वं गोलकं कृत्वा काचकूप्यां निवेशयेत् ।

पाचयेल्लावणे यन्त्रे चतुर्यामांश्छनैःशनैः
सेवयेदनुपानेन तत्तद्रोगान्विनाशयेत् ।
पञ्चकासांश्च गुल्मांश्च ग्रहणीं पाण्डुमुत्कटम् ।
यक्ष्माणमस्रपित्तञ्च विशेषाच्छ्वासकासजित् ॥
सर्वरोगान्निहन्त्याशु रसः कनकसुन्दरः १३१

वा., सर्वरोगे ।

भाषा—शुद्धगन्धक, अभ्रकभस्म, लोहभस्म, पारा, माक्षिक, मोती, नागभस्म, विद्रुम, ये सब बराबर लेना और सबकी बराबर सुवर्णभस्म मिलाकर तीनदिनतक हंसराज के रससे मर्दनकरना और सबका गोलाबनाकर सुखाकर आतशीशीशीमे रखकर ४ पहरतक मन्द अग्निसे लवणयन्त्रमे पकाना इसको यथारोगानुपानसे सेवनकरनेसे उनउनरोगोको नष्ट करताहै। पाचप्रकारकी खासी, गुल्म, ग्रहणी बढाहुआ पाण्डु, राजयक्ष्मा और रक्तपित्त इनको दूर करता है विशेपतया श्वास और खासी को जीतता है यह कनकसुन्दर रस सबरोगोंका नाश करनेवाला है ॥ २४ ॥

## २५ कनकसुन्दरोरसः (महान्) (एकादशः)

गन्धाश्ममारितं कान्तं काञ्चनं जारितं रसे ।
चतुर्निष्कमिते चाथ स्वर्णं निष्कमितं मृतम् ॥
निक्षिप्य कान्तपात्रे तु पञ्चाशन्निष्कसम्मितम् ।
जारयेद्गन्धकं शुद्धं गन्धेन वडवाग्निना॥१३३॥
निष्कतुल्यमतश्चूर्णं श्लक्ष्णीकृत्य प्रयत्नतः ।
निःक्षिपेन्मधुसम्पूर्णे घृतसुस्निग्धभाण्डके ॥
अमुनैव प्रपूरेण पथ्यानां षष्टिसंयुतम् ।
त्रिशतं साधयेद्यत्नाच्छास्त्रदृष्टविधानतः१३५॥
त्रिधा विभक्ते तत्रैकं समादाय हरीतकीम् ।
एकपादं दिनाभ्याश्च द्वितीयं दिवसैस्त्रिभिः ॥
तृतीयञ्च ततः पादं चतुर्भिर्दिवसै र्भजेत् ।
एकैकाञ्च ततः पथ्यां भजेदावत्सरं नरः १३७॥
जीवेद्वर्षशतं साग्रं वलीपलितवर्जितः ।
सर्वव्याधिविनिर्मुक्तो नित्यं स्त्रीशतसेवितः१३८
वलवान् वीर्यवांश्चैव पूर्णसर्वेन्द्रियोदयः ।
जायते नात्रसन्देह आज्ञेयं पारमेश्वरी ॥ १३९॥
हन्यादक्षिगदांश्च कुष्ठमखिलं मासान्तमासेवितः
पाण्डुश्चग्रहणीं प्रमेहगुदजान्गुल्मांश्च शूलामयान्
स्थूलत्वञ्च तथामहाग्निसदनं रोगांस्तथैवापरान्
कुर्याद्दीपनपाचनं खलु नृणां भाव्यामयारोधनम्
अयं रसायनो दिव्यो महाकनकसुन्दरः १४०

र. र. स, रसायने ।

भाषा—स्वेदन, मर्दन, मूर्च्छन, उत्थापन, पातन, वोधन, नियमन, सन्दीपन, गगनादिग्रास चारण, गर्भद्रुति और वाह्यद्रुति ये पारे के वारह सस्कार करने के वाद कान्तलोह, और सुवर्ण इनको वीज वनाकर गन्धक के योगसे भस्म करके यथासम्भव पारेमे जारित करना । एतत्संस्कार संस्कृत १ तोला पारा लेकर उसको कान्तलोह के पात्रमे रखकर एक निष्क वीज वनाकर मारा हुआ सुवर्ण डालकर गर्भद्रुति संस्कार करके १२॥ तोले शुद्ध गन्धक जारितकर देना इस गन्धक रूपी बडवाग्निसे वह पारा शुद्ध हो जायगा अर्थात् सुवर्णके प्रमाणको अपनेमे लीन करके वही एक तोला बाकी रह जायगा। इस एक तोले पारेके चारहिस्से करदेना इनमेसे एक हिस्सा पारदको खरल करके जितने मधुमे ३६० वड़ी हरडोका मुरब्बा रह सके उतना मधु, घीके चिकने घड़ेमे भरकर उस मधुमें डाल देना और अच्छीतरह हिला देना जिससे कि तमाम मधुमे पारा मिल जाय । फिर ३६० वडी हरड़ें लेकर बल्य और जीवनीय तथावृष्य (गणसब चरकके चौथे अध्यायमेहै सूत्रस्थानमे वहा देखलेना) गणके काढेमे इसतरह उबाले कि हरडै उच्छ्वसित होकर उनमे सूई अनायास घुस सके वादमे हरड़ोंको काढे मेसे निकालकर कपड़ेसे पोंछकर थोडी देर हवामे फैला देना जिससे कि इनके ऊपरका पानी सूख जाय । फिर उसी पारे मिले हुए मधुमे डालकर सुरक्षित स्थानमे रख देवे । एक

महीनेके बाद यह मुरब्बा तैयार हो जायगा फिर शरीरका संशोधनकर अच्छे तिथि, नक्षत्र और मुहूर्त देखकर सुवर्ण या रजतपात्रमे उस मुरब्बेमेसे एक हरड़ निकालकर बाकी बचे हुए पारेके तीनहिस्सों मेसे एक हिस्सा उस पात्रमे रखकर हरड़की गुठली निकालकर फेंक दे और उस पारदमे अच्छीतरह मिलाकर दो गोलियां बनाले । उसमेसे एक गोलीको १ दिन लेकर ऊपरसे उस मुरब्बेवाली १हरड़ को खाजाय । फिर दूसरेदिन दूसरी गोली एकहरड के साथ खाजाय फिर तीसरे रोज़ १ भाग पारेको लेकर १ हरड़के साथ मिलाकर उसकी तीन गोलियें बनावे और उनको दररोज एक २ हरड़ के साथ खाता हुआ ३ दिनमे समाप्त करे । फिर चौथे भागको एक हरड़मे मिलाकर ४ गोली बनावे और इनकोभी एक एक हरड़के साथ खाता हुआ ४ दिनमे समाप्त करे इस प्रकार ९ दिन समाप्त हुए। फिर दसवें दिनसे सिर्फ़ उस मुरब्बेकी हरड़ थोड़ेसे मधुके साथ मिलाकर खाजाय, यह ध्यान रक्खेकि वह मधु सालभर चलजाय बीचमे खलास नहो इस प्रकार एक वर्षतक इसका प्रयोग करनेके बाद वलीपलित और समस्त व्याधियोंसे निर्मुक्त होता हुआ बल, वीर्य और इन्द्रिय शक्तियोंसे परिपूर्ण होकर १०० वर्षसे अधिक आदमी जीता है । यह शिवजीकी आज्ञा है इसका प्रयोग करनेके बाद रोज़ सोस्त्रीसेवन करनेकी शक्ति आजाती है पर यह ध्यान रखनाकि ऐसे प्रयोग विषयाभिलाषामे अगर किये जायगे तो उनकी परिसमाप्ति निर्विघ्न कभी नहीं होती है इस लिये ऐसे प्रयोग परलोकैषणा के लिये इन्द्रियोंको वशमे रखकर करने चाहियें । कदाचित् इसका सालभर सेवन न करके १ महीने ही भर सेवन करे तो तमाम नेत्ररोग, समस्त कुष्ट, पाण्डु, ग्रहणी, प्रमेह, बवासीर, गुल्म, शूल, स्थौल्य, अत्यन्तअग्निमान्द्य इन सबको यह निःसन्देह दूर करता है और भावी जो रोग हैं उनको आने से रोकता है । यह महारसायन **दिव्यकनकसुन्दर** है ॥ २५ ॥

### २६ कनकसुन्दरोरसः ( द्वादशः )

**शुद्धं च पारदं शुल्वं गन्धकं टङ्कणं कणाम् ।**
**काकजङ्घाकषायेण दिनमेकन्तु मर्दयेत् १४१॥**
**दोलायन्त्रे पचेद्यामं सम्यक् तीव्राग्निना ततः ।**
**आर्द्रकस्यानुपानेन माषमात्रं पिबेदनु ॥**
**सुप्तवातं निहन्त्याशु सर्ववातनिकृन्तनः १४२॥**

वै. चि., व. रा., सुप्तवाते ।

भाषा—शुद्धपारा, ताम्रभस्म, शुद्धगन्धक, भुनाहुआ सुहागा, और पीपल येसब समभाग लेकर बारीकचूर्णकरके काकजङ्घाके काढेमे एकदिन मर्दनकरके गोलाबनाकर कपड़ेमे पोटली बाधलेना पोटलीबनाकर काकजङ्घाके अङ्गस्वरससे पात्रको भरकर १ पहर तीक्ष्णअग्नि देकर पकावे पर यह ध्यानरखना कि जोश खाकर पानीका सम्पर्क न हो केवल वाष्पमात्रलगे बादमे स्वाङ्गशीतल होनेपर निकालकर एकएक माशेकी गोलियें बनाकर रखछोड़े। इसमेसे एकगोली अदरखकेसाथ खानेसे सुप्तवातको दूरकरताहै और तमाम वायुओं को नष्टकरताहै **कनकसुन्दर** इसका नामहै ॥ २६ ॥

### २७ कनकसुन्दरोरसः ( त्रयोदशः )

**पातितः स्वेदितः सूतो ग्रासार्थी च विनिर्मितः।**
**जारयेत्तत्र सूतेन्द्रे द्वात्रिंशांशेन काञ्चनम् १४३॥**
**दैत्येन्द्रं जारयेत्तावद्भस्मीकुर्याच्च पूर्ववत् ।**
**भस्मना तेन सूतस्य मर्दितेनाम्लयोगतः१४४॥**
**विलिम्पेत्स्वर्णपत्राणि पुटित्वा भस्मतां नयेत्।**
**एवं भस्मीकृतं हेम पलमेकं समाहरेत् ॥ १४५ ॥**
**त्रिपलं भस्म सूतस्य तालकं तुत्थकं नटीम् ।**
**गन्धकं रसकञ्चैव तुल्यं पारदमानतः ॥ १४६ ॥**
**शुद्धानि योजयेत्तानि वक्ष्यमाणक्रमेण वै ।**
**एकीकृत्याऽथ तत्सर्वमर्कक्षीरेण मर्दयेत् १४७॥**
**भृङ्गराजरसैः पश्चाज्जयन्तीरसतस्तथा ।**
**आटरूपरसैः पाठानीरैश्चित्रभवै रसैः ॥ १४८॥**

मुनिनीरैश्च हलिनीरसैरेकैकशो दिनम् ।
मर्दयेत्सततं पश्चाद्रसं गोलं प्रकल्पयेत् ॥ १४९ ॥
निःक्षिप्य यन्त्रे सामुद्रे यत्नतो विपचेद्भिषक् ।
चतुःप्रहरमात्रं तं स्वाङ्गशीतं समाहरेत् ॥१५०॥
विचूर्णयेत्ततः खल्वे ह्यार्द्रकाम्भोभिरादृतः ।
सप्तवारांस्त्रिकटुजैःक्वाथःसम्यग्विभावयेत् १५१
एवं सिध्यति सूतेन्द्रो दिष्टः कनकसुन्दरः ।
गुञ्जाद्वयप्रमाणेन त्रिगुञ्जामानतोऽथवा १५२॥
रसं प्रयोजयेद्धीमान् रोगराजक्षयाय वै ।
पिप्पलीमधुसंयुक्तं मरिचैर्वा घृतान्वितैः१५३
प्राशयेद्रोगिणं वैद्यो वयोबलविशेषवित् ।
तित्तिरीफलचूर्णै र्वा शुण्ठ्या गव्यघृताक्तया
ददीत शूलिने प्राज्ञो गुल्मिने च विशेपतः ।
कादिवर्ज्य चरेत्पथ्यं हृद्यं वल्यं च पूर्ववत् ॥
सन्निपाते ददीतैनमार्द्रकद्रवसंयुतम् ।
उपचारश्च पूर्वोक्तो यथा बालमृगाङ्कके ॥१५६॥
माक्षिकं पुटयेत्पूर्वं बीजपूरेण सैन्धवैः ।
सम्मर्द्य कुक्कुटाख्येन पुटयेदेकविंशतिम् १५७
यावत्तत्पुटयेत्ताप्यं बीजपूराम्लसैन्धवैः ।
तच्चूर्णमम्लसंयुक्तं लोहे लिप्तं यदा व्रजेत् १५८
ताम्रतां तावता ताप्यं सुशुद्धं जायते ततः ।
भस्मीकुर्वीत तुत्थं तदष्टांशं टङ्कणं क्षिपेत् १५९
तद्द्वयं मर्दयेद् दध्ना ओतो विष्ठासमन्वितम् ।
दध्ना च पुटयेत्पश्चान्मधुना तदनन्तरम् १६०
सिद्धं तुत्थं भवेदेवं तालकं शोधयेत्ततः ।
पक्वकूष्माण्डनीरेण मर्दयित्वाऽथ सम्पचेत्
दोलायन्त्रे ततस्तैले चूर्णक्षारजलेन वै ।
एवं संशुद्धिमायाति तालं गन्धं विशोधयेत् ॥
अजादुग्धे सप्तवारान् गन्धकं शोधयेद्बुधः ।
रसकं स्वेदयेन्मूत्रे मानुपे सप्तवासरान् १६३
मनःशिलां शोधयेद्वै जयन्तीरसमर्दिताम् ।
जयन्तीरसमध्यस्थां स्वेदयेदेकवासरम् १६४
एवं शुद्धानि सर्वाणि रसे कनकसुन्दरे ।
नियोजयेदन्यथा तु दोपमुत्पादयेद्रसः १६५
कनकसुन्दरनामाऽयं रसेन्द्रः परिकीर्तितः ।
स्वसंवेद्यानुसारेण विविच्य प्रतिपादितः १६६

रसाल ,

भाषा—पातन, स्वेदनादिवासनान्त संस्कार करके पारेको बुभुक्षित बनाकर उसमे ३२वा हिस्सा बीजबनाया हुआ सुवर्ण जारितकरके इसकी भस्म बनालेना । इसभस्मके बराबर विशुद्धसोनेके बारीक कण्टकवेधी पत्र बनालेना । पारेकीभस्मको किसी खटाईसे मर्दनकरके पत्रोंपर चढादेना और सम्पुटमे बन्दकर अग्निदेना इसकी भस्म होजायगी । यह-भस्म कियाहुआ सुवर्ण ४ तोले, पारेकीभस्म ३ तोले, हारिताल, तुत्थक, मैनासिल, गन्धक और खर्पर ये सब शुद्ध किये हुए प्रत्येक पारेकी बराबर मिलाकर सबको इकट्ठे करके आकका दूध, भागरा, जैत, अडूसा, पाठा, चित्रक, अगस्त्य और करिहारी इनप्रत्येक के रसोंसे एक एक दिन मर्दन करके गोला बना लेना इस गोलेको लवणयन्त्रमे रखकर बहुत होशियारीके साथ ४ पहर पकावे। स्वाङ्गशीतल होनेपर निकालकर अदरख के रस और त्रिकटुके क्वाथ से सात २ वार भावना देवै तो यह **कनकसुन्दररस** तैयार होगा। इसकी दो अथवा ३ रत्ती योग्यता देखकर पीपलमधुके साथ अथवा मिरच और घीके साथ देवै तो राजयक्ष्मा दूर हो। अवस्था और बलको विचारता हुआ वैद्य शूल अथवा गुल्ममे जमालगोटे के साथ अथवा घीका मोवण दीहुई सोठके साथ देवै। ककारादि वर्ग इसमे वर्ज्य है । हृद्य और बल्य चीजोंको सेवन करै सन्निपातमे इसे अदरख के रसके साथ दे। इसका तमाम उपचार लघु मृगाङ्ककी तरह समझना अब इसमे जो चीजें आई हुई है उनको जिस २ तरह शुद्ध करके डालना वहविधि लिखी जाती है।

सोनामाखीको षोडशाश सैधव देकर विजोरेके रससे घोटकर कुक्कुटपुटमे आंचदे इसतरह २१ पुट देने चाहियें। पुट देनेके बाद इसके चूर्णको खटाईमे

मिलाकर शुद्धलोहेके पत्रपर लेप करके सूखने दे जब वह पत्र विल्कुल तावे जैसा होजाय तब समझना चाहियेकि सुवर्णमाक्षिक शुद्ध हुआ । तुत्थको अष्टमाश टङ्कण मिलाकर दहीमे घोटकर कुक्कुटपुट दे । फिर उसीतरह अष्टमाश टङ्कण देकर विल्लीकी विष्टामे घोटकर पुट दे । इसके वाद इसीतरह दहीका और मधुका देवे, तुत्थ शुद्ध हो जायगा । हरितालको पकेहुए कूष्माण्डके पानीसेमर्दन करावे, फिर गोला बनाकर दोलायन्त्रमे कूष्माण्डके पानीमे ४ पहर स्वेदन करे तो हरिताल शुद्ध हो जायगा । गन्धकको लेकर सातबार वकरीके दूधमे अधःपातित करे । खर्परको सात दिन तक मनुष्यके मूत्रमे स्वेदन करे । मैनसिलको जैतके रसमे मर्दन करले । और जैतके ही रसमे एकदिनस्वेदितकरले । इस तरहसे शुद्ध किये हुए तमाम धातु इसमे डाले तो रस खरावी नहीं करेगा, नहीं तो यह उपद्रव करता है । यह स्वसंवेद्य के मतानुसारसे कनकसुन्दर रस कहा गया है ॥ २७ ॥

## २८ कनकसुन्दरी वटी

कनकस्य च बीजानि मरिचानि विषं तथा।
नागफेनेन संयुक्तं सर्वमेकत्र कारयेत्॥१६७॥
मर्दयेत्खल्वके सूक्ष्मं वटी मरिचमात्रिका।
खदिरस्य कषायेण श्लेष्मरोगहरा शुभा १६८
ऊर्ध्वश्वासञ्च कासञ्च कफञ्चैव विनाशयेत् ।
सर्वरोगहरा रम्या नाम्ना कनकसुन्दरी १६९॥

र सा स, कफरोगे ।

भाषा—धतूरेके वीज, मिरच, वछनाग और अफीम येसव समभागलेकर खरलमे वारीक घोटकर अदरख वगैरहके रसमे मिरचके वरावर गोली वनालेना । खैरके क्वाथके साथ यह श्लेष्मरोगको दूर करती है । ऊर्ध्वश्वास कास, कफ तथा अन्य सब रोगोंको दूरकरती है। कनकसुन्दरीइसका नाम है ॥ २८ ॥

र. सा. २८

## २९ कनकाम्बुदोरसः

जीवनीयघनवंशसेव्यकं
तुल्यभागमधुना समीकृतम् ।
तुल्यवारिदसुवर्णजं रजः
साज्यमाक्षिकलवेन मर्दितम् ॥ १७० ॥
लीढमाशु कुरुतेऽङ्गबृंहणं
रोगराजमुरसःक्षतञ्जयेत् ।
रक्तपित्तमथपीनसं भ्रमं
वर्णहानिमबलञ्च पावकम् ॥ १७१ ॥

लो. प. ( स. ) राजयक्ष्मणि ।

भाषा—जीवनीयगण, नागरमोथा, वंशलोचन और खस इन सबको समभाग लेकर मधुमे मिलाकर रखछोड़े । फिर इन सबकी वरावर अभ्रक और सुवर्णकी भस्म डालकर घी, मधु और सैंधवके साथ मिलाकर खानेसे अङ्गवृद्धिको करता है । राजयक्ष्म, उरःक्षत, रक्तपित्त, पीनस, भ्रम, वर्णहानि और मन्दाग्नि इनको दूरकरता है । कदाचित् अभ्रक और सुवर्ण भस्मका अभाव मरीजकी शक्ति के अभाव से हो अथवा वैद्यके पास तैयार नहो वहापर धन्वन्तरि भगवान्का नाम लेकर नागरमोथा और शुद्ध किये हुए धतूरेके वीज डाल देना ॥ २९ ॥

## ३० कनकार्कोरसः

दाडिमार्धपलमूषणाभया-
शाणकं मगधजायचोद्भवम् ।
शाणकश्च गुडकं च सर्वत-
स्तुल्यमर्ककनकोद्भवं रजः ॥ १७२ ॥
एतदग्निबलमात्रया रजो
योजितं हरतिकासमुद्धतम् ।
श्वासयक्ष्मजठराग्निमार्दवं
पीनसं स्वरविघातमुल्वणम् ॥ १७३ ॥

लो. प, ( स., ) कासेश्वासेच ।

भाषा—दाडिमकी छाल २ तो०, मिरच, हर्रे पीपल और इन्द्रजव४चार माशे और सबकी वरावर गुड़ लेना । गुड़ सहित सबकी बराबर ताम्रा और सुवर्णकी

भस्म मिलाकर रख छोड़ना। यह **कनकार्क** रस सिद्ध हुआ, इसको अग्निबल देखकर मात्रा कायम करके देनेसे बहुत बढी हुई खासी, श्वास, राजयक्ष्म मन्दाग्नि, पीनस और स्वरभेद इनको नष्ट करता है। कदाचित् सुवर्ण और ताम्र भस्मका अभाव मरीजकी अशक्तिसे हो अथवा वैद्यके पास तैयार न हो, वहापर धन्वन्तरि भगवान्का नाम लेकर आककी जड़की छाल और शुद्ध किये हुए धतूरे के बीज डाल देना ॥ ३० ॥

### ३१ कनकावती वटी

शुद्धसूतं समं गन्धं तालसिन्धूत्थलाङ्गलीः।
फलं तुम्ब्याःपलैकैकं लशुनञ्च चतुष्पलम् ॥
कारवेल्या द्रवैर्मर्द्य दिनैकं वटकीकृतम्।
गुञ्जामात्रां सदा खादेद्वायुजश्चापिनाशयेत् ॥
रक्तवातकफोत्थानि गुदजानि विनाशयेत्।
गुञ्जामात्रां सदा खादेद्वटिकां कनकावतीम् ॥
भल्लातत्रिफलादन्तीवह्निचूर्णं समंसमम्।
सैन्धवं सर्वतुल्यं स्याद्भर्जयेत्खर्परेऽचिरम् ॥
मृद्वग्निना भवेत्सिद्धं कर्षं तक्रं पिबेदनु १७७॥

र र, ध, अर्शोधिकारे।

**भाषा**—शुद्ध पारा और शुद्ध गन्धक १ एक तोला, हरिताल, सेधा, करिहारी और तुम्बीके फल ४ चार तोले, लशुन १६ तोलेलेकर सबको बारीक पीसकर करेलेके स्वरससे मर्दन करके एकएक रत्तीकी गोलिये बनाकर यथानुपानसे खानेसे, वातज, रक्तवातज, कफोत्थ और गुदज समस्त रोग नष्ट होते हैं। **कनकावती** इसका नाम है। गोली खानेके बाद भिलावा, त्रिफला, दन्तीमूल, चित्रक, सब समभाग लेकर इनका चूर्ण बनाले। इस तमाम चूर्णकी बराबर सेंधानमक लेकर नये ठीकरेमे सबचीजें डालकर इनको धीरे २ आचमे सेके, जब लाल हो जाय तब उतारकर रखछोड़े। इसमेसे १ तोला चूर्ण छाछमे मिलाकर गोलीके ऊपर पीना चाहिये ॥ ३१ ॥

### ३२ कन्दर्पजीवनो रसः (कन्दर्पकोकिलः)

कर्पूरजातीफलजातिपत्रिका-
सिन्दूरकाश्मीरजकौपहीरकान्।
एलावराङ्गाश्मजतूनि वङ्गजं
समं समादाय विचूर्ण्य धन्वजैः १७८॥
वरीविदारीक्षुरशाल्मलीरसै,
र्विभाव्य वारान् मुनिसङ्ख्यया पृथक्।
प्राश्यास्य निष्कं रमणीजनौघे
संलक्ष्यते काम इवापरोऽद्भुतम् १७९ ॥
धीधृतिस्मृतिसम्पन्नः शतायुष्को नरो भवेत्।
कामसञ्जननो ह्येप नाम्नाकन्दर्पजीवनः॥१८०॥

नू क,

**भाषा**—कपूर, जायफल, जावित्री, रससिन्दूर केसर, अबरेशम, हीरेकीभस्म, इलायची, तज, शिलाजीत और वङ्गभस्म येसब समभागलेकर सबका बारीकचूर्णकर छोटीधामन, शतावरी, विदारी, तालमखाना, सेमलका मुसला इनके यथा सम्भव अङ्गस्वरस अथवा काथोसे अलग २ सात सात भावना देनेसे **कन्दर्पजीवन** रस तैयार हुआ इसमेसे ४ माशे अथवा बलानुसार मात्रा खाकर दूध पीनेसे प्रौढाङ्गनासमुदायमे साक्षात् कामदेवही माळूम होता है। यह अत्यन्तही आश्चर्यकारक है। बुद्धि, धैर्य, स्मृति इनसे युक्त रहता हुआ सोवर्पकी आयुको भोगता है। गतशुक्रको यह पुनः शरीरमे लाता है इसवास्ते इसका नाम कन्दर्पजीवन है ॥ ३२ ॥

### ३३ कन्दर्पोरसः

रसं गन्धं प्रवालञ्च काञ्चनं गिरिमृत्तिका।
वैक्रान्तं रजतं शङ्खं मौक्तिकं च समंसमम् १८१॥
न्यग्रोधस्य कषायेण भावयित्वा च सप्तधा।
वल्लमानां वटीं कृत्वा त्रिफलाक्वाथवारिणा१८२
सुरप्रियस्यार्जुनस्य क्वाथेनामाम्भसाऽपिवा।
औपसर्गिकमेहस्य शान्त्यर्थं विनियोजयेत्१८३

भै र, आ वि, र. च, प्रमेहाधिकारे।

भाषा—शुद्धपारा, गन्धक, विद्रुम, सुवर्ण, गेरू, वैक्रान्त, रजत, शख और मोती येसव यथासंभव शुद्धकिये हुए या मारेहुए समभाग लेकर, इकट्ठे बारीक खरलकर वटाङ्कुरके क्वाथसे सातभावना देकर तीनतीन रत्तीकी गोलियें वनाकर त्रिफलाके क्वाथ अथवा तुलसीके रससे अथवा अर्जुनके क्वाथसे अथवा वव्बूलके पत्तोंके रस या छालके क्वाथके साथ देनेसे औपसर्गिकप्रमेह ( सुजाक ) का नाशहोताहै ॥३३॥

## ३४ कन्दर्पसुन्दरो रसः

सूतो वज्रमहि मुक्ता तारं हेम सिताभ्रकम् ।
रसैः कर्षांशकानेतान्मर्दयेदिरिमेदजैः ॥१८४॥
प्रवालचूर्णं गंधश्च द्विद्विकर्षं विमिश्रयेत् ।
ततोऽश्वगन्धास्वरसैर्विमर्द्य मृगशृङ्गके ॥१८५॥
क्षिप्त्वा मृदुपुटे पक्त्वा भावयेद्धातकीरसैः ।
काकोली मधुकं मांसी बलात्रयविसेङ्गुदम् १८६
द्राक्षापिप्पलिवन्दाकं वरी पर्णीचतुष्टयम् ।
परूपकं कसेरुश्च मधूकं वानरी तथा ॥ १८७ ॥
भावयित्वा रसैरेषां शोषयित्वा विचूर्णयेत् ।
एला त्वक् पत्रकं वांशी लवङ्गागुरुकेसरम् १८८॥
मुस्तं मृगमदः कृष्णा जलं चन्द्रश्च मिश्रयेत् ।
एतच्चूर्णैः शाणमितै रसं कन्दर्पसुन्दरम् १८९ ॥
खादेच्छाणमितं रात्रौ सिता धात्री विदारिका ।
एतेषां कर्षचूर्णेन सर्पिःकर्षेण संयुतम् ॥ १९० ॥
तस्यानु द्विपलं क्षीरं पिबेत्सुस्थितमानसः ।
रमणी रमयेद्वह्वीः शुक्रहानिर्न जायते ॥१९१॥

शा., चि. र. भ., भै सा. स., र को., र. सु , र. प्र. सु , वाजीकरणे रसप्रकाशसुधाकरे तीक्ष्णवद्भावधिकौ प्रदत्तौ ।

भाषा—पारा, हीरा अथवा अभ्रक ( काला ), नाग,मोती, चादी, सोना और अभ्रक (सफेद) ये सव शुद्ध और भस्म किये हुए एक एक तोला लेकर विट्खदिरके क्वाथसे एक दो दिन मर्दन करके प्रवालपिष्टी और गन्धक ये प्रत्येक दो दो तोला मिलादे फिर असगन्धके स्वरस अथवा क्वाथसे मर्दनकर मृगके सींगमे भरके कपडमिट्टी देकर लघुपुटमे पकावे । स्वाङ्गशीतल होनेपर निकालकर धातकीके ताजे फूलोके रससे अथवा क्वाथसे भावना देकर काकोली, मुलहठी, जटामांसी, वला, नागवला, वृहद्वला अथवा अतिवला, विस ( भसींड ) इङ्गुदी, द्राक्षा, पीपल, वंदाल, शतावरी, माषपर्णी, मुद्गपर्णी, शालपर्णी, पृष्ठपर्णी, फालसा, कसेरू, महुआ और केवाच इन सवके यथासम्भवस्वरस अथवा क्वाथोंसे एकएक भावना देकर और सुखाकर चूर्ण करले । इसमे इलायची, तज, पत्रज, वंशलोचन, लौंग, अगर, केसर, नागरमोथा, कस्तूरी, पीपल, खस और कपूर ये सव प्रत्येक ४ चार माशे लेकर सूक्ष्मचूर्णकर पूर्ववाली दवामे मिलादे, यह कन्दर्पसुन्दर रस तैयार हुआ । इसरसमेसे ४ माशे लेना और मिश्री, आवला, विदारीइनका चूर्ण १ तोलालेकर १ तोला घीके साथ चाटजाय उसके ऊपर आठतोले दूध पीवे । मनको रोकता हुआ स्त्रियोंके साथ रमणकरता हुआ शुक्रहानिको नहीं प्राप्त होता है ॥ ३४ ॥

## ३५ कपर्दपोट्टलीरसः (विश्वेश्वरः)

कपर्दतुल्यं रसगन्धकल्कं
तुल्याश्चमुक्तां द्विगुणश्च शङ्खम्
जयारनालेन दिनैकमानं
सम्मर्द्यचूर्णेन च वेष्टयित्वा ॥१९२॥
सामुद्रपूर्णे वरभाण्डके तं
पुटेत कन्याविजयारसेन ।
लोहस्य पात्रे घटिकाद्वयं तं
कृशानुतोयेन च पाचयित्वा ॥ १९३॥
ददीत तं पोट्टलिकाभिधानं
विश्वेश्वरं सूतवरं ग्रहण्याम् ।
पित्तोद्भवायां मधुपिप्पलीभि
र्वातोद्भवायां सघृतैर्मरीचैः ॥

श्लेष्मोद्भवायां विजयारसेन
कटुत्रयेणाज्ययुतेन दद्यात् ॥ १९४ ॥

र. दी , ग्रहण्यधिकारे ।

भाषा—कौडी और पारे तथा गन्धक की कज्जली समभाग, दोनोंके बराबर मोती और मोतियोसे द्विगुण शङ्खलेकर सबको कूटकपड़छान करके भागकेस्वरस और काञ्जीसे एकएक दिन मर्दन करके गोला बनाकर ऊपरसे चूनेका पोता देदेना फिर लवणयन्त्रमे ४ पहर पकाकर स्वाङ्गशीतल होनेपर निकाललेना। फिर किसी लोहेकी कडाही वगैरहमे घीकुआंर, भाग और चित्रक इनके स्वरसों से दोदो घडी पकाकर और सुखाकर वारीक चूर्ण-करके रखलेना। इस **कपर्दपोट्टली** रसको पित्तजन्य सङ्ग्रहणीमे पीपल और मधुके साथ, वातजसङ्ग्रहणीमे मिरच और घीके साथ, कफजन्य सङ्ग्रहणीमे भांगके रस अथवा घृतमिश्रित त्रिकटुके साथ देनाचाहिये। इसका दूसरा नाम **विश्वेश्वरसूतभी** है ॥ ३५ ॥

## ३६ कपर्दरसः

मृतं वा मूर्च्छितं सूतं कार्पासपुष्पजै र्द्रवैः ।
मर्दयेद्दिनमेकन्तु तेन पूर्या वराटिका ॥१९५॥
निरुध्य चान्धमूषायां भाण्डे रुद्ध्वा पुटे पचेत् ।
उद्धृत्य चूर्णयेच्छ्लक्ष्णं मरिचै र्द्विगुणैः सह १९६
गुञ्जिकैकं घृतै र्लेह्यं रक्तपित्तं नियच्छति ।
कपर्दकरसो नाम्नाऽसाध्यश्च साधयत्यलम्१९७
उदुम्बरफलं पक्वं घृतैः पाच्यं सितायुतम् ।
भक्षयेन्मरिचै र्युक्तमनुस्याद्रक्तपित्तनुत १९८॥

र स., र. र., ध , र सु., योगमहार्णवेकपर्देशइति-नाम। रक्तपित्ते।

भाषा—पारेकीभस्म अथवा रससिन्दूर या कज्जली लेकर कपासके फूलोके रससे एकदिन मर्दन करके इसको कौड़ियोंमे भरदेना उनकौड़ियोंका मुंह गुड़ और चूनेसे वंद करदेना। उनकौड़ियोंको अन्धमूषामे रखकर चूनापुतीहुई छोटीहाडी मे थोड़ाचूना विछाकर ऊपरसे मूषाको रखकर हांडीपर शराव रखकर दोतीन कपड़मिट्टीसे वंदकरके गजपुटकी आंच देदे। स्वाङ्गशीतल होनेपर निकालकर वारीक चूर्णकरके रखछोड़े। यह **कपर्दकरस** तैयार हुआ। इसकी १ रत्तीकी मात्रा दोरत्ती कालीमिर्चकेचूर्णके साथ घीमिलाकर चटानेसे यहरस असाध्यरक्तपित्तको नष्ट करताहै। गूलरका पकाफल घीमे सेककर थोड़ी कालीमिर्च और मिश्री मिलाकर ऊपरसे खानेको देना ॥ ३६ ॥

## ३७ कपिकच्छुपाकः ( प्रथमः )

निस्तुषं वानरीवीजं कृत्वा विंशत्पलानि च ।
त्रिंशत्पलां सितां दत्वा घृतं दत्वा पलाष्टकम् ॥
दुग्धाढकसमायुक्तं मृदुना वह्निना पचेत् ।
यावद्दर्वीप्रलेपः स्यात्तन्मध्ये चूर्णितं क्षिपेत् ॥
जातीफलं त्रिकटुकं त्रिगन्धं देवपुष्पकम् ।
अकल्करं जातिपत्री कोकिलावीजकेसरम् ॥
पुनर्नवा वले द्वे च मुसली साहिफेनकम् ।
पारदं लोहचूर्णश्च त्वभ्रकश्च पलार्धकम् २०२
चन्दनागुरुकस्तूरी कर्पूरं शाणमात्रकम् ।
पलार्धं भक्षयेत्तत्तु क्रमाद्वीर्यबलप्रदम् ॥२०३॥

यो र., चि. र भ ( मदनमोदक ) रसायनस., पा. व , ।

भाषा—२० पल केवांचके वीज लेकर उनको पोटली वनाकर दूधमे दोतीन रोज छोड़दे जिसमेकि वे तमामफूलजाय, अथवा दूधमे उनको वाष्पयन्त्रसे स्वेदित करले वादमे उनका छिलका निकाल डाले। फिर उनको कूटकर कल्क वनाले फिर आठसेर दूधमे १२० तोले मिश्री या शक्कर और घी ३२ तोले इकट्ठा देकर मन्दअग्निसे धीरे २ पकावे, जब वह पाक कडछीसे नलगे तव नीचे उतारकर जायफल, त्रिकटु, तज, पत्रज, इलायची, लौंग, अकलकरा, जावित्री, तालमखाना, केसर, पुनर्नवा, वला, नागवला, मुसली, अफीम, पारा, लोहभस्म और अभ्रकभस्म ये सब दोदो तोले, चन्दन, अगर, कस्तूरी, कपूर ये सव ४–४ माशे इन

सबको मिलाकर २ तोला अथवा प्रकृति और अग्नि-बल विचारकर उचितमात्रा कायमकरके देना ऊपरसे दूध पिलाना इससे वीर्य और बल बढतेहैं यह परम वाजीकर है । इससे पुरानी संग्रहणी अच्छी होती है ॥ ३७ ॥

### ३८ कपिकच्छुपाकः ( द्वितीयः )

प्रस्थं पचेद्वै कपिकच्छुबीज-
मुष्णोदके यामचतुष्टयन्तु ।
सुघर्षयेद्वस्त्रदृढे सुगाढं
यावद्भजेन्निर्मलतां तुषैर्विना ॥ २०४ ॥
छायाविशुष्कं च तदेव चूर्णं
क्षीरेपचेद् द्रोणमितेद्विशेषे ।
गव्यं घृतं प्रस्थयुगञ्च तस्मि-
न्विपाचयेन्मन्दहुताशनेन ॥ २०५ ॥
आकल्लकं नागरदेवपुष्पं
गोक्षूरकं कुङ्कुमहंसपाकम् ।
सारं कुबेरं घनतुर्यजातं
कक्कोलकं नागबलाप्रभूतम् ॥ २०६ ॥
वंशोद्भवं वङ्गमृताभ्रकञ्च
द्राक्षा सिता सर्वसमा प्रदेया ।
पलार्धमानं तु सदैव भक्ष्यं
अम्लं तु तस्योपरि वर्जनीयम् ॥ २०७ ॥
ये क्षीणशुक्राः प्रबलप्रमोहा-
स्तेषामिदं वीर्यविवर्धनञ्च ।
पुष्टिं बलं वृद्धिकरञ्च वृष्यं
निहन्ति सर्वानपि वातरोगान् ॥ २०८ ॥

चि. र. भ.,

भाषा—१ प्रस्थ केंवाचके बीज लेकर पोटली बनाकर ४ पहर गरमपानी अथवा वाष्पयन्त्रमे पकावे । उसको निकालकर टाटवगैरहमे रखकर घर्षणकरे जिसमेंकि उनके तमाम छिलके निकल-जाय । फिर छायाशुष्क करके कूटकर कपड़छान करलेना । इसचूर्णको १६ सेर दूधमे डालकर पकाना, चतुर्थांश शेषरहनेपर उसमे दोसेर गायका घी डालकर धीरे २ घर्षणकरे । आंच बहुत मन्द रक्खे जिससेकि नीचेलगने न पावे । जब मावेका पानी जलकर मावा लाल होजाय तब उसे नीचे उतारकर उसमे अकलकरा, सोंठ, लौंग, गोखरू, केसर, विशेषशुद्धिशुद्ध अथवा भस्म किया हुआ शिंगरिफ, लोह भस्म, लालचन्दन अथवा अजमोद, शुद्धकपूर, तज, पत्रज, इलायची, नागके-सर, शीतलचीनी, बीजवन्द, वंशलोचन, बङ्गभस्म, अभ्रकभस्म और द्राक्ष ये सब दोदो तोले डालकर सब दवाओंकी बराबर मिश्री अथवा शक्कर देकर सबको मिलाकर उसके दोदो तोलेके लड्डू बनाकर धर रक्खे। इसमेसे एकेक लड्डू अथवा अग्निबल देखकर मात्रा स्थिर करके देवे, ऊपरसे दूध पिलावे, इसके खानेके समय खटाई बिल्कुल नहीं खानी चाहिये, इससे जिनका शुक्र क्षीण होगयाहो और प्रमेहोंसे पीडित हों उनके लिये यह परमौषध है, वीर्य, पुष्टि और बलको देता है समस्त वातरोगोंको दूर करताहै ॥ ३८ ॥

### ३९ कपिकच्छुपाकः ( वृहत् ) (तृतीयः)

प्रस्थद्वन्द्वं वानरीबीजमादा-
वम्बुन्युष्णे प्रक्षिपेद्वेदयामान् ।
निष्कास्यैनं पुष्टवस्त्रेऽन्तरस्थं
घर्षेद्यावन्निस्तुषत्वं समेति ॥ २०९ ॥
छायाशुष्कं चूर्णयित्वा तु गव्ये
क्षीरद्रोणे पाचयेत्पादशेषम् ।
ज्ञात्वा सर्पिः प्रक्षिपेत्प्रस्थयुग्मं
मन्दंमन्दं पाचयेद्वह्निनाऽमुम् ॥ २१० ॥
जातीपत्रीं जातिकोषं लवङ्गं
कङ्कोलागुर्वग्निमाकल्लकञ्च ।
इन्दुं शौण्डीं जीरकं च त्रिजात-
मब्धेःशोषं नागरं नागकर्णम् ॥ २११ ॥
भल्लीं किञ्चित्पाणिमानं च सर्वं
ग्राह्यं यत्स्याद्वक्ष्यमाणं पलार्धम् ।

नागं वङ्गं खं विशुद्धं गृहीत्वा
पश्चादेषां भस्म युञ्जीत पाके ॥ २१२ ॥
चीनीकन्दं मौशलं बिल्वमानं
ग्राह्यं शुद्धं तीक्ष्णकं केसरं च ।
आफूकाख्यं चेक्षुरं सूक्ष्मचूर्ण-
मेतेषां सत्संविधाय प्रयुञ्ज्यात्२१३ ॥
प्रस्थद्वन्द्वं चात्र योज्यं सितायाः
पाकं कृत्वा स्थापयेत्स्निग्धभाण्डे ।
कर्पूराद्यै र्धूपिते तस्य मात्रा
देया सद्भिः कालमाज्ञाय सम्यक्२१४॥
द्राक्षांमोचायाः फलं वा सुपक्वं
चारोर्मज्जां सर्पिषा शर्करां च ।
अद्यात् पाकेऽस्मिंस्तिलाश्चाप्यभक्ष्या
ह्यम्ला नित्यं सेवकैरस्य पुंभिः २१५॥
रामात्यागारूढकामाः प्रकामं
कामेयुस्ते कामवत्कान्तिभाजः ।
मेधां पुष्टिं संलभन्ते नरास्ते
पाकस्यास्यास्वादने बद्धतृष्णाः॥२१६॥
कासः श्वासो राजयक्ष्मा च पाण्डु-
र्मेदो हिक्का शोफकाद्याश्च रोगाः ।
वीर्यक्षैण्यं खञ्जता वायुरोगा-
श्चैभि र्नित्यं निर्विमुक्ता भवेयुः॥ २१७॥

पा. व,

भाषा—दोसेर केवाचके बीज लेकर ४ पहर खूब गरमपानीमे छोड़दे अथवा वाष्पयन्त्रमे उबाले फिर इनको टाटवगैरहमोटेवस्त्रमे घर्षणकरे जिससे कि सब छिलके अलग होजाय। फिर छायामे सुखाकर चूर्णकरले इनको १६ सेर दूधमे डालकर पकावे, चतुर्थांश शेष रहनेपर दूसरी कड़ाहीमे दूध डालदे जिसमे कि उस कडाही में जलकर लग न गयाहो। फिर इसमे २ सेर गायका घी डालकर धीरे २ पकावे, जब पानी सूखकर मावा लाल होजाय, तब इसे उतारकर नीचे रखले। इसमे जावित्री, जायफल, लौंग, शीतलचीनी, अगर, चित्रक, अकलकरा, कपूर, गजपीपल, जीरा, तज, पत्रज, इलायची, समुद्रशोष ( विधारेके बीज ) सोंठ, भुईकुम्हड़ा, भिलावेकामगज़, येसब एकेक तोला, नाग, वङ्ग और अभ्रक इनकी विशुद्धभस्म दोदो तोले, चोपचीनी, मुसली, लोहभस्म, केसर, अफीम, तालमखाना ये सब ४ चार तोले, इन सबको कूट छानकर मिलादेना, और दोसेर मिश्री या शक्कर की कड़ी चाशनी बनाकर मिलादेना और चिकने वर्तनमे धरके ( जोकि कपूर वगैरहसे धूपितकियाहो) इसकी मात्रा काल और अग्निबल देखकर स्थिर-करके खिलाना, ऊपरसे दूध पिलाना, इसके खाने वालेके लिये द्राक्ष, केले, चिरोजी, घी और शक्कर ये पथ्य है। तिल और अम्लरस वर्जित हैं इसके सेवन करनेसे जिन्होने स्त्रीससर्गकी इच्छा बिल्कुल छोडदीहै वे एकदम कामग्रस्त होजाते हैं, और कामवत् कान्तिको प्राप्त होते हैं, मेधा और पुष्टिको प्राप्त होकर हमेशों स्त्रियोमे बद्धतृष्ण होतेहैं। कास, श्वास, राजयक्ष्मा, पाण्डु, मेद, हिक्का, शोफ, वीर्यकी क्षीणता, खंजता और वायुके रोगोंसे छूट-कर नीरोग होते है ॥ ३९ ॥

## ४० कफकुञ्जरोरसः

रसगन्धौ समांशौ च स्नुह्यर्कपयसः पलम् ।
पलश्च पञ्चलवणमेकीकृत्यावचूर्णयेत् ॥२१८॥
आलोड्य चार्कदुग्धेन पूरयेच्छङ्खमध्यतः ।
पिप्पलीभकणावारिचूर्णं कृत्वा प्रलेपयेत् २१९
प्रज्वालयेद्यामामात्रं सूक्ष्मचूर्णन्तु कारयेत् ।
कर्पूरनागपत्रैश्च देया मात्रार्धगुञ्जिका ॥२२०॥
श्वासं कासं च हृद्रोगं कफं पञ्चविधं तथा ।
नाशयेत्सर्वरोगांश्च रसोऽयं कफकुञ्जरः २२१॥

यो. र, चि. र. भ., यो चि, र. सु, रसायनस कफरोगे।

भाषा—शुद्धपारा और गन्धक एकएक तोला, थूहर और आकका दूध ४ तोले, पाचोनमक मिलकर ४ तोले, इनसबको खरलकरके सुखालेना फिर

आकके दूधसे सानकर शङ्खके भीतर भरदेना फिर पीपल, गजपीपल, सुगन्धवाला इनका चूर्णकर आकके दूधमे मिलाकर शङ्खपर लेपकरदे, फिर एकदो कपडमिट्टी करके सुखाकर एकपहरकी आंच देना। स्वाङ्गशीतल होनेपर निकालकर वारीकचूर्णकरके धर रक्खे वस यह **कफकुञ्जररस** तैयार हुआ। इसमे से आधी रत्ती लेकर कपूर १ रत्ती मिलाकर पानमे रखकर देवे तो यह श्वास, कास, हृद्रोग और हिचकी इनप्रत्येकपाच ५ प्रकारके रोगोंको दूर करता है और तमामकफके रोगोंको दूर करता है ॥ ४० ॥

### ४१ कफकुठारोरसः ( प्रथमः )

**पारदं गन्धकं व्योषं मृतताम्रं मृतायसम् ।**
**कण्टकारीफलद्रावैं भाव्यं तद्यामयुग्मकम् ॥**
**रोहिण्यास्तु रसेनैव धत्तूरस्वरसेन च ।**
**गुञ्जाद्वयं पर्णखण्डै देयं श्लेष्मज्वरापहम् २२३**

र. सु , र. क. ( कफारि ) कफाधिकारे ।

भाषा—पारा, गन्धक, सोंठ, मिर्च, पीपल, ताम्रभस्म, लोहभस्म, येसव समभागलेकर भटकटैया, कुटकी, धतूरा इनप्रत्येकके रसोंसे दोदो पहर खरलकरे। यह **कफकुठार** रस सिद्ध हुआ । इसको २ रत्ती पानमे देनेसे यह श्लेष्मज्वर और तमाम कफजन्य श्वासकासादि रोगोंको दूर करता है ॥ ४१ ॥

### ४२ कफकुठारोरसः ( द्वितीयः )

**शुद्धं सूतं विषवलि समं शाणमानं ह्ययस्त्रिः ।**
**बीजं रौक्मं पिचुपरिमितं टङ्कणं शाणयुग्मम् ।**
**जातीपुष्पं त्वकरकरभं सुष्टुवङ्गं पलैकम्;**
**देयं गुञ्जात्रिमात्रं गलगतकफध्वंसनोऽयंकुठारः**

र. चं., कफे ।

भाषा—शुद्धपारा, वछनाग और गन्धक ये प्रत्येक ४ चार मासे, लोहभस्म १२ मा., बीजसंस्कारकी हुई सुवर्णभस्म १ तो, भुना हुआ सुहागा २ टंक, जावित्री, अकलकरा, वङ्गभस्म ४ चार तोले, इनसवको इकट्ठे लेकर घोटकर रखछोड़े यह **कफकुठार** रस सिद्ध हुआ इसकी १ रत्ती पानवगैरहके साथ देनेसे गलेमे आया हुआ जो कफ है उसको नष्ट करता है ॥ ४२ ॥

### ४३ कफकुठारोरसः ( तृतीयः )

**पारदश्च मृतशुल्वगन्धकं**
**नागवल्लिजरसेन पेषितम् ।**
**पाचितश्च मृदुवह्निनाघटी-**
**युग्ममेतदखिलं विचूर्णितम् ॥**
**भक्षितश्च गुडमिश्रमार्द्रकैः**
**श्लेष्मदोषविनिवृत्तिदायकम् ॥ २२५॥**

र. प्र. सु , र चं., र म मा , कफाधिकारे

भाषा—शुद्धपारा, ताम्रभस्म और शुद्धगन्धक समभाग लेकर पानके रसमे पीसकर गोलाबनाकर लघुपुटमे दोघड़ी आच देकर स्वाङ्गशीतल होनेपर निकालकर चूर्णकर रखछोडे यह **कफकुठार** रस सिद्धहुआ इसमेसे १ रत्ती गुड़ और अदरखकेसाथ मिलाकर खानेसे तमाम कफके रोग दूरहोतेहै ॥४३॥

### ४४ कफकेतुरसः ( प्रथमः )

**टङ्कणं मागधीं शङ्खं वत्सनाभं समंसमम् ।**
**आर्द्रकस्य रसेनैव भावयेद्दिवसत्रयम् ॥२२६॥**
**गुञ्जामात्रं प्रदातव्यमार्द्रकस्य रसेन वै ।**
**पीनसं श्वासकासश्च गलरोगं गलग्रहम्॥२२७॥**
**दन्तरोगं कर्णरोगं नेत्ररोगं सुदारुणम् ।**
**सन्निपातं निहन्त्याशु कफकेतुरसोत्तमः ॥**

र स , र चि , भै र., र चं , र सु., र त , कफाधिकारे ।

भाषा—भुनाहुआ सुहागा, पीपल, शङ्खभस्म, वछनाग येसव समभाग लेकर खूब वारीक पीसकर अदरखके रसमे ३ दिनतक भावना देनेसे यह **कफकेतु** रस तैयारहोताहै । इसको १ रत्तीभर अदरखके रससे देनेसे पीनस, श्वास, कास, गलरोग, गलग्रह, दन्तरोग, कर्णरोग, भीषण नेत्ररोग, सन्निपात ये रोग बहुत शीघ्र नष्ट होते है ॥ ४४ ॥

### ४५ कफकेतुरसः (द्वितीयः)

दग्धशङ्खं त्रिकटुकं टङ्कणं समभागिकम्।
विषञ्च पञ्चभिस्तुल्यमार्द्रतोयेन मर्दयेत्॥२२९॥
वारत्रयं रक्तिकाभां वटीं कुर्याद्विचक्षणः।
प्रातः सायञ्च वटिकाद्वयमार्द्रकवारिणा २३०॥
कफकेतुः कण्ठरोगं शिरोरोगञ्च नाशयेत्।
पीनसं कफसङ्घातं सन्निपातं सुदारुणम् २३१॥

भै र, र. सु., कफरोगे।

भाषा—शङ्खभस्म, त्रिकटु, सुहागा ये सब समभाग, बछनाग सबकीबराबर लेकर अदरखके रससे ३ भावना देकर एकएक रत्तीकी गोलियें बनालेना, यह **कफकेतु** रस तैयार हुआ। सुबह और शाम एकएक या दोदोगोली अदरखके रससे देनेसे यह रस कण्ठरोग, शिरोरोग, पीनस, कफसघात और दारुणसन्निपातको दूर करता है ॥४५॥

### ४६ कफकेतुरसः (तृतीयः)

व्योपमिज्जलवीजञ्च शङ्खभस्म विपान्वितम्।
मरीचसदृशं खादेत्कफकेतुं महारसम्॥२३२॥

र स., र. सु., कफे।

भाषा—सोंठ, मिरच, पीपल, वेतके बीज, शङ्ख, बछनाग ये सब समभाग लेकर सूखी अथवा अदरखके रस वगैरहमे पीसकर रख छोड़ना, इसकी एक एक मरिच बराबर मात्रा देनेसे तमाम कफरोग दूर होते है ॥ ४६ ॥

### ४७ कफकेतुरसः ( चतुर्थः )

आकल्लकञ्च सविषं समुद्रफलसंयुतम्।
प्रत्येकं समभागश्च द्विगुणं मरिचं ततः॥२३३॥
आर्द्रकस्य रसेनैव मर्दयित्वा प्रयत्नतः।
गुञ्जामात्रां वटीं खादेद्यथारोगानुपानतः॥
श्वासकासप्रतिश्यायमुखा नश्यन्ति सत्वरम्॥

र. सु, कफरोगे।

भाषा—अकलकरा, बछनाग, समुद्रफल ये सब समभाग और मरिच सबसे दूनी लेकर अदरखके रससे एकदिन मर्दन करके गोली बनाले अथवा चूर्णही रक्खे। इसको अदरख प्रभृति यथोचित रोगानुपानसे देनेसे यह, श्वास, कास, प्रतिश्याय प्रभृति रोगोंको नष्ट करता है। **कफकेतु** इसका नाम है ॥ ४७ ॥

### ४८ कफकेतुरसः (पञ्चमः)

रसवलिरवितालान् पौष्करं हिङ्गु सिन्धू-
द्भवकटुकिरजस्तत्सर्वमेकत्र पिष्टम्
घनरवसुरदालीतिक्तकोशातकीभि-,
स्तदनु च नवभेक्याः कृष्णनिर्गुण्डिनीरैः२३५
कफगदकुलकेतुः स्याद्रसो मापमात्रः,
समधुरिति निहन्ति प्रोत्कटं श्लेष्मरोगम्।
अनु भवति कपायो निम्बजः पेय एव,
यवजमशनमात्रं पथ्यमुष्णाम्बु सेव्यम् २३६॥

रसायनस, र. र. दी., र. प्र, र सु, र कामधेनौ कफकुलकेतुरितिनाम-तदनुनवभेक्या इतिस्थाने तदनु वनजधात्र्या इतिपाठ कृतोऽस्ति।

भाषा—शुद्धपारा, गन्धक, रसमाणिक्य या हरिताल, पोहकरमूल, हींग, सेन्धानमक और कुटकी येसब समभाग लेकर मेघनाद (काटेवाली चौलाई), वन्दाल, कड़वी तोरई, पुनर्नवा, कालीनिर्गुण्डी इनके रसोसे एकएक दिन भावना देनेसे यह **कफकेतु** रस तैयार होताहै। कफरोगके समूहके लिये केतूकाकाम करताहै। इसलिये इसको कफकेतु कहतेहै। इसकी १ माशेकी मात्रा मधुकेसाथ देनेसे अत्यन्त बढे हुए कफरोगको जल्दी दूर करदेता है। इसके ऊपर नीमकी छालका काढा पिलाना, जवकी रोटीखिलाना गरम पानी पीनेको देना ॥ ४८ ॥

### ४९ कफकेतुरसः ( षष्ठः )

दिवाकरायोभुजगन्धसूतं
निदिग्धिकाबीजकटुत्रयञ्च।
विभाव्य लुङ्गार्द्रकवारिभिश्च
कफंद्विमापो मधुना निहन्यात्॥२३७॥

र. सा. स., कफरोगे।

भाषा—तावा, लोहा, नाग, गन्धक और पारा येसब यथासम्भव शुद्ध और मारेहुए, भटकटैयाके बीज, त्रिकटु, समभागलेकर बिजोरा और अदरखके रसोंसे एकएक दिन भावना देनेसे समस्त कफरोग दूर होते हैं ॥ ४९ ॥

## ५० कफचिन्तामणि रसः

हिङ्गुलेन्द्रयवं टङ्कं विजयाबीजमेव च ।
मरिचञ्च समं सर्वं सूतभस्म त्रिभागिकम् २३८ ॥
आर्द्रकस्य रसेनैव मर्दयेद्याममात्रकम् ।
चणकाभा वटी कार्या सर्ववातप्रशान्तये ॥
कफरोगं निहन्त्याशु भास्करस्तिमिरं यथा २३९

र. स., र. सु, र. चं., र. चि, कफाधिकारे ।

भाषा—शुद्धशिंगरिफ, इन्द्रजव, भुनाहुआ सुहागा, भागके बीज ( गाजेके बीज ) और मरिच येसब एकएक भाग और पारेकी भस्म ३ भाग लेकर अदरखके रससे १ पहर घोटकर चनेप्रमाण गोली बनाकर यथानुपानसे देनेसे तमाम कफरोग और वायुरोगोंको यह इसतरह नष्ट करताहै, जैसेकि सूर्य अन्धकारको ॥ ५० ॥

## ५१ कफप्रशोषणोरसः

तालकं गन्धकं ताम्रं पारदं च समांशकम् ।
मर्दयेत्पञ्चकोलेन भावितं सप्तवासरम् ॥२४०॥
ततो गजपुटे पाच्यं स्वाङ्गशीतं समुद्धरेत् ।
गुञ्जाद्वयं प्रदातव्यमस्यार्द्रकरसेन वै ॥२४१॥
घोरं कफज्वरं हन्यात्कफं निर्मूलयेद्बलात् ।
कफप्रशोषणो ह्येष रसः ख्यातो रसार्णवे ॥२४२॥

ना वि,

भाषा—रसमाणिक्य या हरिताल, गन्धक, ताम्रभस्म, शुद्धपारद येसब समभाग लेकर पञ्चकोल ( पीपल, पीपलामूल, चव्य, चित्रक, और सोंठ ) के काढेसे सातवार भावनाए देकर गजपुटमे पकाना । स्वाङ्गशीतल होनेकेबाद निकालकर शीशीमे रखछोडे, यह कफप्रशोषण रस सिद्ध हुआ । इसकी दोरत्ती अदरखके साथ देनेसे घोरकफज्वर को यह जडसे उखाड़ देता है यह रसार्णवमे कहागया है ॥ ५१ ॥

## ५२ कफवातारि रसः

मृतसूतं तीक्ष्णकान्तं तारं माक्षिकगन्धकम् ।
तुल्यांशं मर्दयेत्खल्वे शृङ्गवेरार्द्रकोद्भवैः २४३
भृङ्गजैः काकमाच्युत्थैः गिरिकर्णीद्रवै दिनम् ।
मर्दितं भाण्डगं रुद्ध्वा पचेन्मन्दाग्निना दिनम् ॥
व्योषाग्निगन्धकविषं सूरणामयटङ्कणम् ।
समांशं चूर्णितं मिश्रं तुल्यांशं पूर्वपाचितम् ॥
त्रिदिनं मर्दयेद् द्रावै मुण्डीनिर्गुण्डिभृङ्गजैः ।
अष्टगुञ्जामितं खादेत्कफवातनिकृन्तनम् २४६

वै. चि., व रा., वाताधिकारे ।

भाषा—पारेकीभस्म, लोहभस्म, कान्तभस्म, रजतभस्म, सोनामाखी, और गन्धक येसब समभाग लेकर दो रोजतक अदरखके रस अथवा सोंठके काढेसे मर्दन करे । फिर भाग, काकमाची ( मकोय ) इन प्रत्येकके रसोंसे एकएक दिन घोटकर गोला बनाकर शरावसम्पुटमे बद कर लघुपुटकी एक दिन आचदे । स्वाङ्गशीतल होनेपर निकालकर त्रिकटु, चित्रक, गन्धक, वछनाग, सूरण, कुठ और सुहागा येसब समभाग चूर्णितकर प्रथम सम्पुटोद्धृत दवाकी बराबर मिलावे फिर गोरखमुण्डी, निर्गुण्डी, भागरा इन प्रत्येककी एकएक भावना देकर ८ आठ रत्तीकी गोलिया बनाले । यह कफवातारि रस तैयार हुआ इसको यथोचितानुपानसे देनेसे कफ और वायुको दूर करताहै ॥ ५२ ॥

## ५३ कफविध्वंसनोरसः ।

विशुद्धं रसं तालकं ताम्रभस्म,
पृथग्भागमेकं सुगन्धं त्रिभागम् ।
विनिःक्षिप्य खल्वे दिनैकं सुसम्यक्,
पृथङ्मर्दयेत्कारवल्लीरसेन ॥ २४७ ॥
ततोगोलकाँश्छोषयित्वा हि कूप्यां,
निरुध्याननं वस्त्रमृत्स्नां विलिप्य ।
पचेद्वालुकायन्त्रमध्ये त्रियामं,
रसेन्द्रेण तुल्यं मरीचं नियोज्यम् ॥ २४८ ॥

विषं चाष्टमांशं दिनं भृङ्गनीरै-,
दिनं मर्दयेच्छ्लेष्मविध्वंसनोऽयम् ।
कफे श्वासकासे तथा वातरोगे,
सशूले विसूच्यग्निमान्द्ये ज्वरेषु ॥
तथारोगराजे ग्रहण्यादिरोगे,
विशेषानुपानेन देयोद्विगुञ्जः ॥ २४९ ॥

रसायनस , कफाधिकारे ।

भाषा—शुद्धपारा, हरिताल, ताम्रभस्म ये प्रत्येक एकएक भाग, शुद्धगन्धक ३ भाग, इनको करेलेके रसमे एक दिन घोटकर गोला बनाकर धूपमे सुखाकर आतशी शीशीमे भरकर मुह बद कर देवै । और दोतीन कपड़मिट्टी मुहपर लगाकर वालुकायन्त्रमे तीनपहर पकाकर स्वाङ्गशीतल होनेपर निकालले । इसरसकी बराबर कालीमिर्च और अष्टमांश शुद्ध बछनाग डालकर भांगरेके रससे एक दिन मर्दन करके रखछोडै; यह **कफविध्वंसन** रस तैयार हुआ इसकी २ रत्तीकी मात्रा यथा रोगानुपानसे देनेसे कफ, श्वास, कास वातरोग, शूल हैजा, अग्निमान्द्य, ज्वर, रोगराज ( यक्ष्मा ) ग्रहणी प्रभृति रोगोंको यह दूर करताहै ॥ ५३ ॥

### ५४ कफान्तकरसः

अमृतं टङ्कमानंस्यान्निशाटङ्कं द्विसप्तधा ।
टङ्कणं दशटङ्कं स्यात्कणा स्यात्तावदेव तु २५०
रक्तिकाद्वितयं खादेत्पर्णखण्डेन बुद्धिमान् ।
कफान्तकरसो ह्येष कासश्वासनिबर्हणः॥२५१॥

र. का , कासश्वासयो ।

भाषा—शुद्धबछनाग १ टङ्क, हल्दी १४ टङ्क, सुहागा १० टङ्क, पीपल १० टङ्क लेकर सबको बारीक खरलकर रखछोड़े । यह **कफान्तक** रस तैयार हुआ, इसकी २ रत्ती पानमे खानेसे तमाम कफके रोग और विशेषकर श्वासकास ये नष्ट होतेहै ॥ ५४ ॥

### ५५ कफारि रसः

समांशं योजयेत्खल्वे रसं गन्धं शिलां विषम् ।
निर्गुण्डीस्वरसै र्मर्द्य त्रिरात्रंचार्द्रकद्रवैः २५२॥
गुञ्जैकं भक्षयेत्पर्णे निर्गुण्ड्युत्थद्रवैस्तथा ।
नित्यज्वरश्च विषमं नाशयेदविकल्पतः॥२५३॥

र क , कफे ।

भाषा—पारा, गन्धक, मैनसिल, बछनाग येसब समभागलेकर निर्गुण्डी और अदरख इनके रसोंसे तीनतीन दिन मर्दन करके रखछोडे, यह **कफारिरस** तैयार हुआ इसकी १ गुञ्जा पानमे अथवा निर्गुण्डीके रसमे लेनेसे नित्यज्वर और विषमज्वर ये सबरोग निःसदेह दूर होजाते हैं ॥ ५५ ॥

### ५६ कमलाविलासो रसः(आज्ञासिद्ध-रसायनम् )

लोहाभ्रे बलिसूतहाटकपवींस्तुल्यान् कुमारीरसे।
पक्वैरण्डदलै र्निबध्य सुदृढंसद्धान्यराशौ त्र्यहम्,
क्षिप्त्वोद्धृत्य विचूर्णितंमधुवरा
युक्तं यथासात्म्यतः,
कृष्णात्रेयविनिर्मितं गदजरा विध्वंसि सौख्यप्रदं
आज्ञासिद्धमिदं रसायनवरं सर्वप्रमेहप्रणुत्,
कासं पञ्चविधं तथैव तनुगं पाण्डुञ्च हिक्कां व्रणम्।
श्लेष्माणं पवनं हलीमकगदं हन्याच्च मन्दानलं,
कण्डूकुष्ठविसर्पविद्रधिमुखापस्मारकाद्याञ्जयेत्॥
गोप्याद्गोप्यतरः सुखेन सुलभः सर्वत्रसिद्धस्त्वयं
वैद्यानांकमलाविलासकरसोऽत्यन्तं यशस्कारकः

र चं वाजीकरणे ।

टि०—कमलाविलास इति नाम रसचण्डांशुकर्त्रा कल्पितमेव नियोजितम्, मूले आज्ञासिद्धमिद रसायनवरमिति वाक्येन विस्पष्टमेव तन्नाम । एतद्रचयित्रा आज्ञासिद्धरसायनमिति नाम विस्पष्ट स्थापितम् । तल्लोपनं कस्मात्कृतमिति रसचण्डांशुसङ्ग्रहीता एव प्रष्टव्यः । नारायणविलासे च रसप्रदीपादिति प्रतीकमुद्धृत्य ' लोहाभ्रेशवलीश्चभास्वरतले खल्वे कुमार्या द्रवै ' रिति पाठो लिखित अयपाठः अशुद्धोऽस्ति अत्र लोहाभ्रेशवलीश्च भास्वरपवी तुल्यं कुमार्या द्रवै रित्याकारेण भवितुमर्हति, तत्र "तदण्डमभवद्धैमं सहस्रांशुसमप्रभ" मित्यादौ ( मनुस्मृतौ ) हेम्नो भास्वरस्वरूपवर्णनेन अत्र भास्वरं हेम ग्राह्यम्।

पविस्तु वज्रे प्रसिद्ध एव, अन्यत्सर्वं समानम्। प्रतीकोद्धृतरसप्रदीपे अस्य पाठस्य अवस्थानमेव न दृश्यते अतो न ज्ञायते सः कस्तत्समये रसप्रदीप आसीदित्यलमतिप्रपञ्चितेन।

भाषा—लोह, अभ्रक, गन्धक, पारा, सोना, हीरा येसब यथासम्भव शुद्ध और भस्म किये हुए समभागलेकर कुमारीके रसमे एकदोरोज़ मर्दनकर गोलावनाकर पकेहुए एरण्डके पत्तोसे लपेटकर चावलवगैरहकी राशिमे तीनरोज़तक दवाकर निकालले और वारीक चूर्णकर शीशीमे धररक्खे यह **कमलाविलास** रस तैयारहुआ इसकी एकवा दो रत्तीकी मात्रा अग्निवल देखकर निर्धारण करके मधु और त्रिफलाके क्वाथके साथ देनेसे ५ प्रकारके श्वास, कास, हिक्का, पाण्डु, व्रण, श्लेष्म, वायु, हलीमक, मन्दाग्नि, कण्डू, कुष्ट, विसर्प, विद्रधि, और अपस्मार इनको यह नष्टकर मुखको देताहै तमामरोग और बुढापेको दूरकरताहै यह **आज्ञासिद्धरसायन** है और समस्त प्रमेहोंको दूरकरताहै।

टि०—इसका कमलाविलास यहनाम कल्पित कियाहुआहै ग्रन्थीयनाम **आज्ञासिद्धरसायन**है देखो आकारमे **आज्ञासिद्धरसायन** रसको। परन्तु वहाका पाठ भ्रष्टहै सो उसको इसतरह सुधारलेना वहाका पाठ" लेहाभ्रेशवलींश्च भास्वरतले खल्वे कुमार्याद्रवैः" इसतरहका दियाहुआहै उसजगह "लोहाभ्रेशवलींश्च भास्वरपवी तुल्यं कुमार्या द्रवैः" इसतरह करलेना। भास्वरकरके 'तदण्डमभवद्धैम सहस्रांशुसमप्रभम्' इसप्रमाणसे सुवर्णलेना 'पवि' वज्र लेना और सब यथावस्थित रखना। यह भूलकिसतरह हुईहै यह खवरनहीं, यह विगड़ा हुआ पाठ नारायणविलासमे है और नारायणविलासमे प्रतीक रसप्रदीपकी दीहै परन्तु इसवक्तजो रसप्रदीप मिलताहै उसमे इस **आज्ञासिद्धरसायन**का नाम भी नहींहै **रसचंडांशु**मे मूलमे आज्ञासिद्धरसायन यह नाम मौजूद रहनेपरभी इसको छिपाकर कमला विलास यहजो नाम दियाहै सो क्या अपनी कृति सिद्धकरनेके लिये या किसी और अभिप्रायसे दिया है यह वह जाने ॥५६॥

### ५७ कमलासनोरसः

**रसाभ्रगन्धकं लोहं ताम्रभस्म समंसमम्।**
**मर्दितं निम्बुनीरेण त्रिदिनं गुलिकी कृतम्॥**
**काचकूप्यां विनिःक्षिप्य विशोष्य वस्त्रमृत्तिकाम्।**
**वालुकायन्त्रके पाच्यंसाध्यंमध्याद्यदुद्धृतम्२५७**
**चूर्णीकृत्य ततः खल्वे व्रीहिमात्रं प्रदापयेत्।**
**अनुपानविशेषेण सर्वदोषहरं परम्॥२५८॥**

वै. चि. (ल)

भाषा—शुद्धपारा, अभ्रकभस्म, शुद्धगन्धक, लोहभस्म, और ताम्रभस्म सव समभाग लेकर नीवूके रसमे तीनदिन घोटकर वेर वरावर गोलियें वनाकर सुखालेना फिर आतशी शीशीमे सातकपड़मिट्टी देकर सुखाकर उसमे गोलियों को भरकर खड़ियामिट्टी अथवा पक्की ईंटको घिसकर उसकी डाट तैयारकर शशीका मुह बन्दकर दोतीन कपड़मिट्टी करके सुखालेना फिर वालुकायन्त्रमे रखकर ४ पहरकी आचदेना, स्वाङ्गशीतलहोनेपर निकालकर खरलकरके शशीमे भररखना यह **कमलासनरस** तैयार हुआ इसमेसे एक चावलकीमात्रा तत्तद्रोगानुपानके साथ देनेसे समस्त रोगों को दूरकरता है॥ ५७॥

### ५८ कम्पवातहा रसः (पिण्डीरसः)

**पलानि पञ्च सूतस्य पलैकं ताम्रचूर्णकम्।**
**जम्वीराणांद्रवैः पिष्ट्वा गोलकं कारयेत्सुधीः**
**नागवल्लीद्रवैः पिष्ट्वा सूततुल्यं च गन्धकम्।**
**पूर्वगोलं प्रलिप्याथ यामं पाच्यं तु भूधरे २६०**
**आदाय चूर्णयेत्तुल्यैरूपणैः सह मिश्रितम्।**
**अर्धाङ्गकम्पवातार्तो भक्षयेत्तद् द्विगुञ्जकम्२६१**

र सुं, र सं, ध, र. चि., र चं, व. रा, वै. चि, र क, नि र., वातव्याधिकारे। अस्य रसस्य यथार्थनाम पिण्डी रस **कम्पवातहा** इति नामतु रसराजसुन्दर संग्रहीत्रा नियोजितं तत्र जम्वीराणा भावना चाधिका निवेशिता एतत्सर्वमपि स्वकृतत्वप्रख्यापनायेति वोद्धव्यम्, वैद्यचिन्तामणौ, निघण्टुरत्नाकरेच रसेन्द्रचिन्तामणिनाम्ना एक, पाठो लि-

मस्त, ( कड्कारोंदा-मराठी ), जटामासी, शतावर, कुठ, वंशलोचन, द्राक्ष, लौंग, शालपर्णी, काटीकेफल, चित्रक कुन्दुरू, मुरामासी, पुनर्नवा, असगन्ध, पिपलामूल, पद्मकाठ, तालमखाना, शक्कर, तिल, धनिया, मेथी, गेहुँला, वला, अतिवलाकीजड़, चव्य देवदारु, अजवाइन, सौंफ, केवाचकेवीज, बेलकी गिरी, काकोली, क्षीरकाकोली, तालके अंकुर, कसेरू, मेढासींगी, साभरनमक, कपूर, वदाल, ये सब समभाग लेकर चूर्ण बनालेना ।

इसचूर्णसे चतुर्थांश जायफल तथा अभ्रकभस्म, अभ्रकसे आधी लोहभस्म, लोहसे आधी वङ्गभस्म, शोधितभागका चूर्ण सबचीजोंसे आधा । शक्करसबसे दूनी, लेकर । घीऔर मधु मिलाकर आधे या १तोलेकी गोलिये बनाकर रक्खे । यह **कामेश्वरमोदक** सिद्धहुआ । इसमेसे १गोली खाकर ऊपरसे दूधपीनेसे सबरोगोसे रहितहोकर अव्याहत स्त्रीसङ्गकरसक्ताहै । यह श्रीमहादेवजीका कहाहुआहै १९५॥

## १९६ कामेश्वरोमोदकः ( षष्ठः )

त्रिकटुत्रिफलाकुष्ठं त्रिसुगन्धं च चव्यकम् ।
केसरं चित्रकं भृङ्गी यष्टी भार्गी दुरालभा ॥
कट्फलोशीरकं दारु सैन्धवं मदनं फलम् ।
यमानी जीरके द्वे च कारवी गजपिप्पली ॥
जातीफलश्च पत्रश्च लवङ्गागुरु चन्दनम् ।
तालीसं तिलमाषौ च क्षुरकं गोक्षुरं तथा ॥
शतावरी शताह्वा च रम्भा दार्वी पुनर्नवा ।
निकुम्भकुम्भौमार्जारकन्दो नागबला तथा ॥
वासा मांसी मुरा मुस्तं पिप्पलीमूलमेव च ।
मुशलीवानरी ब्राह्मी शाल्मलीमूलमेव च ८६२
गजकणा मेथिका च कर्करा चाब्धिशोषकम् ।
माजूफलं चाश्वगन्धा द्राक्षा कर्पूरकं समम् ॥
शुद्धलोहरजो वङ्गौ क्षेप्यौ बहुगुणौ हि तौ ।
अभ्रकं द्विगुणं शुद्धं सूतगन्धकयो र्दलम् ८६४॥
सर्पिर्मधुभ्यां कुर्वीत मोदकानक्षसम्मितान् ॥
कर्पूरधूली कस्तूरीकुङ्कुमैरवचूर्णितान् ॥
प्रत्यहं भक्षयेदेकं शृतं चानु पिबेत्पयः ८६५॥
कासश्वासवलासनाशनकरं कामावबोधप्रदं,
रामावश्यकरं सुखातिसुखदं यक्ष्मादिरोगापहम्
बल्यं पाण्डुमहातिसारशमनं क्षुद्बोधनं शोधनं,
क्लृप्तो वैद्यवरेण राजपुरतः कामेश्वरो दुर्लभः ॥
र. क., वाजीकरणे ।

भाषा—त्रिकटु, त्रिफला, कुठ, त्रिसुगन्ध ( कस्तूरी, अम्बर, और गोरोचन । अथवा तज, पत्रज इलायची ), चव्य, केसर, चित्रक, काकडासींगी, मुलहठी, भारङ्गी, जवास, कायफल, खस, देवदारु सेंधानमक, मैनफल, अजवाइन, जीरा, स्याहजीरा, मगरैल, गजपीपल, जायफल, पत्रज, लौंग, अगर, चन्दन, तालीस, तिल, उडद, तालमखाना, गोखरू, शतावर, सोंफ, केलेकाकन्द, दारुहल्दी, पुनर्नवा, दन्तीमूल, समुद्रशोष, मार्जारक ( मालाकंदमराठी विलाईकदहिंदी ), नागबला, अडूसा, जटामासी, मुरामासी, नागरमोथा, पिपलामूल, मुशली, केवाचकेबीज, ब्राह्मी, सेमरकामुसला, मेथी, गजपीपल, अकलकरा, समुद्रशोष, माजूफल, असगन्ध, द्राक्ष, कपूर, लोह और वङ्गभस्म, ये प्रत्येक एकएकतोला लेकर बारीक चूर्ण करलेना । सबचूर्णसे दूनी अभ्रकभस्म और चूर्णकी चतुर्थांश पारेगन्धककी कज्जली डालकर घीऔर मधु उचितप्रमाणमें मिलाकर दोदोमाशेकी गोलियें बनाले । कस्तूरी, कपूर, औरकेसर बारीक पीसकर गोलियोंपर छिड़कदे । यह **महाकामेश्वर** मोदकतैयार हुआ । इसमेसे एकएकगोली लेकर दूधपीवेतो कास, श्वास, कफ, पाण्डु, राजयक्ष्मा, दारुणातिसार, येसब दूरहोतेहै । यहरस स्त्रियोंको वशकराताहै । और मन्दाग्निको नष्टकरताहै ॥ १९६ ॥

## १९७ कामेश्वरो मोदकः ( अष्टमः )

पारदं दरदं गन्धमभ्रकं वङ्गताम्रकम् ।
लोहभस्म द्विगद्याणं प्रत्येकं तु समाहरेत् ८६७॥
तोलकानां त्रयं व्योपाद् वत्सनाभं द्वितोलकम् ।

चातुर्जातं चतुस्तोलं द्वितोलं हेमबीजकम्८६८
तोलैकं शुद्धकर्पूरं जातीपत्री फलं तथा।
लवङ्गमब्धिशोषश्च कपिकच्छूः शतावरी८६९॥
आकल्लकं कृष्णजीरं जीरं चैकैकतोलकम्।
मुशली चित्रकश्चेति तोलकद्वयसम्मितान्८७०
कक्कोलबीजं मूर्वा च खुरासानी यवानिका।
अहिफेनं यष्टिमधु ज्योतिष्मती च केसरम्॥
विषमुष्टी चोचटा च पिप्पलीमूलमेव च।
एकैकं तोलकं सर्वं ग्राह्यं शुद्धं सुचूर्णितम्८७२॥
कुलिञ्जनं द्विगद्याणं भर्जिता च यवानिका।
द्वितोलकांस्तुसङ्गृह्य सिता च दशतोलका८७३
त्रैलोक्यविजयापत्रसत्त्वं दशपलं क्षिपेत्।
नागवल्लीदलद्रावैस्त्रेधा भाव्यं विजानता॥
जीर्णं गुडं दशपलं दत्त्वा कार्यं तु मोदकम्।
आमलक्याः प्रमाणेन गद्याणैकेन वासितम्॥
कस्तूर्याः स्तम्भनकरं सिद्धं यामचतुष्टयम्।
बल्यं पुष्टिकरश्चैतत्स्वानुभूतं रसायनम् ८७६॥
दुग्धान्नसेविनो नित्यं तेजोवृद्धिकरं परम्।
स्वाद्वपेक्षा न कर्तव्या महान्तं गुणमिच्छता॥
नित्यताप्यस्ति योगेऽस्मिन् गुणाधिक्यं हि वर्तते
तस्मात्सर्वप्रयत्नेन अशनीयो हि कामुकैः८७८

र. सि, स्तम्भने।

भाषा—पारा, शिंगरफि, गन्धक, अभ्रक, बङ्ग, ताम्र, लोहयेसब यथायोग्य शुद्ध और भस्मकियेहुए एकएकतोला, त्रिकटु ३ तो०, बछनाग २ तो०, चातुर्जात ४ तो०, धतूरबीज २ तो०, शुद्धकपूर, जायफल, जावित्री, लौंग, समुद्रशोष, केवाच, शतावर, अकरकरा, स्याहजीरा, सफेदजीरा येप्रत्येक एक-एक तोला, मुसलीऔर चित्रक २ दोतोले, शीतलचीनी, खुरासानीअजवाइन, अफीम, मुलहठी, मालकगनी, शुद्धकुचिला, उटिंगन, पिपलामूल, कुलिंजन, येसब एकएकतोला, देशीअजवाइन-भुनीहुई २ तो०, शक्कर, भागऔर गिलोयकासत्व दस१०तोले, इनसबको इकट्ठेकर नागरबेलकेपानके रससे, ३भावनादे। पुरानागुड़ ४० तोला डालकर ६–६मासेकी गोलीबनाकर ६माशाकस्तूरीसे वासितकर रखछोड़े। यह **कामेश्वरमोदक** तैयार हुआ। इसकी १गोली खाकर दूधपीनेसे ४पहरका स्तम्भनहोताहै, यह बल और पुष्टिको करता है। यह हजारोंवारका अनुभवकिया हुआहै। दुग्धान्नसेवनकरनेसे नित्यही तेजकी वृद्धि होतीहै। अधिकगुणकीइच्छाकरनेवालेको स्वादकीतरफ नहीं दौडनाचाहिये। इसप्रयोगकेखानेसे कुछदिनबाद हमेशाकेलिये शक्ति कायमहोजातीहै। फिर इसको नखानेसेभी शक्तिमौजूद रहतीहै॥ १९७॥

## १९८ कामेश्वरो रसः ( प्रथमः )

पलं सूतं पलं गन्धं पथ्याचित्रकयोः पलम्।
मुस्तैलापत्रकाणाश्च प्रतिसार्धपलं क्षिपेत्८७९॥
त्र्यूषणं पिप्पलीमूलं विषश्चापि पलं न्यसेत्।
नागकेसरकं कर्षमेरण्डस्य पलं तथा॥८८०॥
पुरातनगुडेनैव तुल्येनैव विमिश्रयेत्।
मर्दयेत्कनकद्रावैर्भावयेच्च घृतान्वितम् ८८१॥
वटिकां बदरास्थ्याभां कारयेद्भक्षयेन्निशि।
पाण्डुरोगहरः सोऽयं रसः कामेश्वरः स्वयम्॥

र. सं, वै चि., र र, र. का, र सु, नि र., र. र स, र को, चि. क, वै क, ना वि, पाण्ड्वधिकारे। ना विलासे पत्रकस्थाने त्रिफला दृश्यते।

टि० रसरत्नसमुच्चये पथ्याचित्रकयो पलमित्यस्य स्थाने वज्रीपथ्यात्रयंत्रयमिति पाठ सच पाण्डुशोफयो र्युक्तोऽपि प्रतीयते, । मृदुकोष्ठाना कृते यदा योग क्रियते तदातु वज्री नैव योजनीया मृदुकोष्ठाना तद्दानस्य निषेधात्। यदा तु क्रूरकोष्ठाना कृते योगो निष्पाद्यते तदा चित्रकवज्यो र्द्वयोरपि योजनाया भद्रतैव निष्पद्यते इति–रहस्यम्।

भाषा—शुद्धपारा, गन्धक, हरडे, और चित्रक चारचारतोले, नागरमोथा, इलायची और पत्रज ६-६ तोले, त्रिकटु, पिपलामूल और शुद्धबछनाग ये ४–४तोले, नागकेसर१तोला, एरण्डमज्जा४तोले इनसबकी बराबर पुरानागुडमिलाकर धतूरेके रससे मर्दनकर सुखाकर घीके संयोगसे बेरकीगुठलीके

बराबर गोलियें बनाकर रखछोडे, यह **कामेश्वर रस** तैयारहुआ । इसकी एकएकगोली रातको खानेसे पाण्डुरोगका नाशहोताहै ॥ १९८ ॥

### १९९ कामेश्वरो रसः ( द्वितीयः )

जातीफलं च सौराष्ट्री कृष्णधत्तूरबीजकम् ।
जातीपुष्पमफेनश्च नागं हिङ्गुलमेव च॥८८३॥
एतानि समभागानि खसक्वाथेन मर्दयेत् ।
गुञ्जामात्रां च वटिकां सितया सह भक्षयेत् ॥
नाम्ना कामेश्वरः प्रोक्तो रमयेत्कामिनीशतम् ।

यो. र, वै र, चि. र. भ, र. च., टो ,वाजीकरणे ।
चिकित्सारत्नाभरणे सौराष्ट्रीस्थाने आकल्कं दृश्यते, नाम च कामेश्वरवटीति । टोडरानन्दे द्वितीयपाठे खसस्थाने भटी दृश्यते, उभयस्यापि भावनाया न कापि क्षति ।

भाषा—जायफल, फिटकड़ी, कालेधतूरेकेबीज, जावित्री, अफीम, नागभस्म, शिंगरिफ, येसब समभागलेकर कपडछानकरके खसके काढेसे एकदिन मर्दनकर एकएक रत्तीकी गोलियें बनाकर एकगोली शक्करकेसाथ खाकर दूधपीनेसे यथेष्ट स्त्रीगमन करसक्ताहै ॥ १९९ ॥

### २०० कामेश्वरो रसः (तृतीयः)

साभ्रं शुल्वं केसरं लोहचूर्णं
जातीपत्रं सर्पफेनं लवङ्गम् ।
एलासूतं क्षीरकङ्कोलनागौ
जातीजातं चन्द्रशोषं कवावा ॥८८५॥
अब्धेः शोषं सत्कुबेराक्षकेश्यौ
क्षौद्रैरेवं मिश्रमाकल्पयुक्तम् ।
क्षीणे वीर्ये रेतसः सागरोऽयं
कुर्वन्त्वेवं कामदेवो रसोऽयम् ॥८८६॥
सायं भक्षेद्यो वटीवल्लयुग्मां
गच्छेन्नारीसङ्गमेतत्प्रसादात् ।
वृद्धो देहे याति तारुण्यभावं
रामावश्यं सर्वकाले रतिः स्यात्८८७॥

र. को , वाजीकरणे ।

भाषा—अभ्रकभस्म, ताम्रभस्म, केसर, लोहभस्म, जावित्री, अफीम, लौंग, इलायची, शुद्धपारा, क्षीरककोल, नागभस्म, जायफल, चंद्रशुर, शीतलचीनी, समुद्रशोष, कञाकेबीज, येसब कूटकापड़छानकर मधुमे ६-६ रत्तीकी गोलिया बनाकर रखछोड़े। यह **कामदेव रस** तैयारहुआ । इसमेसे १ गोली खाकर ऊपर दूध पीनेसे शुक्रस्तम्भित होकर स्त्रियोंमे यथेष्टरमणकरसक्ताहै ॥ २०० ॥

### २०१ कामेश्वरो रसः( चतुर्थः )

लोहार्धं मृतताम्रञ्च पारदं भागसप्तकम् ।
गन्धकं सर्वतुल्यांशं काचकूप्यां विनिःक्षिपेत् ॥
वालुकायन्त्रके पाच्यं यावद्द्वादशयामकम् ।
रसः कामेश्वरो नाम शम्भुना परिकीर्तितः८८९
गुञ्जापरिमितो देयो ह्यनुपानविशेषतः ।
स्त्रीणां शतसहस्रं तु रमयेन्नात्र संशयः ॥८९०॥

र. म मा , वाजीकरणे ।

भाषा—लोहभस्म १ तो०, ताम्रभस्म ½ तो०, पारा७तो० और सबकीबराबर गन्धक लेकर सबको खरलमे मर्दनकर आतशीशीशीमे भरकर वालुकायन्त्रमे १२ पहरकी आचदेना । स्वाङ्गशीतलहोनेपर निकालकर रखछोडना, यह **कामेश्वर रस** तैयारहुआ । इसकी १ रत्तीकीमात्रा अनुपानविशेषसे देनेसे यथेष्ट स्त्रीसङ्ग करसक्ता है ॥ २०१ ॥

### २०२ कामेश्वरीवटी

हयारिरसमादाय पारदं तेन मर्दयेत् ।
कृष्णव्यालोदरे क्षिप्त्वा जलौकाबन्धमाचरेत् ॥
महाभोगपरैः ग्राह्या समासात्कीर्तिता प्रिये ।
कामार्थी साधको यत्र मोक्षयेत्स्त्रीसहस्रकम् ॥
महाकामेश्वरी नाम्ना क्षोभयेद्भुवनत्रयम्८९२॥

र नि., वाजीकरणे ।

भाषा—सफेदकनेरकी जड़कारसलेकर पारेको यहातक मर्दनकरेकि नष्टपिष्टी होजाय । फिर इसकी गोली बनाकर कालेसापके पेटमे भरकर लवणयन्त्रमे ४ पहरपकाकर स्वाङ्गशीतल होनेपर गोलीको निकालकर रखछोड़े। यह **कामेश्वरी** गुटिका तैयार हुई । इसगोलीको मुंहमे रखनेसे अथवा कमरमे बांधनेसे

अथवा दूधमें उबालकर पीनेसे हजारों स्त्रियोंको प्रसन्न करसक्ता है ।। २०२ ।।

### २०३ काम्भायनोरसः

भस्मसूतं समं गन्धं स्वर्जिकाक्षारकाञ्चनी ।।
प्रत्येकञ्च द्विभागं स्यात्सर्वतुल्यै घृतैः सह ८९३
पिष्ट्वा मृद्वग्निना पाच्यंयावत्पिण्डत्वमागतम् ।
निष्कार्धं भक्षणाद्धन्ति कुष्ठं काम्भायनो रसः ।।
देवदाल्याः सुचूर्णन्तु मध्वाज्याभ्यां लिहेदनु।।

र का, कुष्ठाधिकारे ।

भाषा—पारेकी भस्म, शुद्धगन्धक, सज्जीखार, हल्दी, येसब समभागलेकर सबकी बराबरघीडाल-गोलीबंधनेतक मर्दनकरे । इसमेसे २ माशेखाकर बन्दालकाचूर्ण आधातोला या योग्यतानुसार घी और मधुमिलाकर चाटनेसे यह समस्तकुष्ठोका नाश-करताहै । **काम्भायन** इसका नामहै ।। २०३ ।।

### २०४ कारुण्यभैरवोरसः

पारदाभ्रं समं खल्वे भृङ्गनीरेण मर्दितम् ।
बालुकायन्त्रके पाच्यं मूपान्ते याममात्रकम्८९५
स्वाङ्गशीतलमुद्धृत्य वाराहशिखिपित्तकैः ।
भावितं मापमात्रञ्च दातव्यं च प्रलापजित् ८९६
तक्रभक्तं भवेत्पथ्यं नारिकेलजलं पिबेत् ।
सर्वे रोगा विनश्यन्ति रसात्कारुण्यभैरवात्८९७

वै. चि, बा, सन्निपाते ।

भाषा—शुद्धपारा और अभ्रकभस्म समभागले-कर भागरेके रससे मर्दनकर सम्पुटमे बन्दकर दोचार कपड़मिट्टी देकर और सुखाकर बालुकायन्त्रमे एक-पहर पकाकर स्वाङ्गशीतलहोनेपर निकालकर सूवर, मोर अथवा मुर्गाके पित्तोसे भावनादेकर एकएक-माशेकी गोलिया बनाकर रखलेवे, यह **कारुण्यभैरव** रस तैयारहुआ । इसकी १ गोली अदरख-वगैरहके साथदेनेसे प्रलापक सन्निपातको दूर करती-है । छाछऔरभातइसमे पथ्यदेना । अधिक दाहहोतो नारियलका जलपिलाना ।। २०४ ।।

### २०५ कार्श्यहर लौहम्

श्वेतापुनर्नवादन्तीवाजिगन्धात्रिकत्रयैः ।
शतमूलीबलायुक्तै रेभि र्लौहं प्रसाधितम्८९८
हिनस्ति नियतं कार्श्यमपि भृङ्गरसैः सह ।
नास्त्यनेन समं लौहं सर्वरोगान्तकं मतम् ।।
दीपनं बलवर्णाग्ने र्वृष्यदश्चोत्तमोत्तमम्८९९।।

र. मं, र. सु., कार्श्ये ।

भाषा—बच अथवा शिवक्रान्ता, पुनर्नवा, दन्तीमूल, असगन्ध, त्रिकटु, त्रिफला, त्रिजात, शतावर, बला, ये प्रत्येक १० तोले लेकर जवकु-टकर अष्टगुणितजलमे काढाकर चतुर्थांशावशेष रह-नेपर स्वाङ्गशीतल होनेपर धीरेसे नितरे हुए पानीको २–३ बार छान लेना । इसमे अष्टमाश लोहभस्म अथवा मण्डूरभस्म डालकर मन्दाग्नि पर पकावे, जब इसकी गोली बधनेलायक होजायतब उतारकर १--१ माशेकी गोलियें बनाकररखछोड़े । इसमेंसे १--१ गोली २ तोलेभगरेकेरसकेसाथ देनेसे कृशता, मन्दाग्नि, धातुक्षीणता इनसबको यह अवश्य नष्ट करताहै । कृशताकोदूरकरनेवालाइसकीबराबरऔरलौह नहीं है ।

### २०६ कालकचूर्णम् ।

गृहधूमो यवक्षारः पाठा व्योपं रसाञ्जनम् ।
तेजोह्वा त्रिफला लौहं चित्रकश्चेति चूर्णितम् ।।
सक्षौद्रं धारयेदेतद्गलरोगविनाशनम् ।
कालको नाम चूर्णोऽयं दन्तास्यगलरोगनुत् ।।

यो म, भै र, ध., र र क, वृ. मा, कण्ठरोगे ।

भाषा—घरका धूंआ, यवक्षार, पाठा, त्रिकटु, रसौत, तेजबल, ( अभावमे चिरफड़ ) त्रिफला, लोह, चित्रक, येसब समभागलेकर चूर्णकर मधुमे मिलाकर मुहमे रखनेसे दान्त, मुहऔरगलेके रोगोंको नष्ट-करताहै ।। २०६ ।।

### २०७ कालकण्टकोरसः (प्रथमः)

पारदाभ्रं मृतं तुल्यं द्वाभ्यां तुल्यं तु गन्धकम् ।
तत्सर्वं भृङ्गजै द्रवै र्मर्दयेद्दिनसप्तकम् ।।९०२।।

पङ्कारं चाङ्कुलीतैलै र्भावयित्वाऽथ भक्षयेत्।
मापमात्रन्तु वर्षैकं रसोऽयं कालकण्टकः ९०३
पिष्ट्वा करञ्जपत्राणि गवां क्षीरैः पिबेदनु।
जरामृत्युविनिर्मुक्तो जीवेद्ब्रह्मदिनं नरः ९०४

र. ख., रसायन स.।

भाषा—पारदभस्म, अभ्रकभस्म, समभाग और दोनोकी बराबर गन्धक इनको भागरेके रससे सात दिन मर्दनकरके अङ्कोलके तैलमे ६ बार भावनादेकर रखछोड़े। यह कालकण्टक रस तैयारहुआ। इसमेसे १ माशाखाकर ऊपरसे करञ्जकेपत्ते गायकेदूधसे पीसकर पीनेसे बुढापा. मृत्यु. इनसे निर्मुक्तहोकर जितनी ब्रह्माने मनुष्यकेलिये आयु दीहै उतने समयतकजीवे ॥ २०७ ॥

## २०८ कालकण्टकोरसः ( द्वितीयः )

वज्रसूताभ्रहेमार्कतीक्ष्णमुण्डं क्रमोत्तरम्।
मारितं मर्दयेदम्लवर्गेण दिवसत्रयम् ॥९०५॥
त्रिक्षारं पञ्चलवणं मर्दितस्य समं मतम्।
दत्त्वा निर्गुण्डिकाद्रावै मर्दयेद्दिवसत्रयम्९०६॥
शुष्कमेतद्विचूर्ण्याथ विषं चास्याष्टमांशतः।
टङ्कणं विषतुल्यांशं दत्त्वा जम्बीरजद्रवैः९०७॥
भावयेद्दिनमेकन्तु रसोऽयं कालकण्टकः।
दातव्यो वातरोगेषु सन्निपाते विशेषतः९०८॥
द्विगुञ्जमार्द्रकद्रावै र्घृतै र्वा वातरोगिणाम्।
निर्गुण्डीमूलचूर्णन्तु महिषाक्षं च गुग्गुलुम् ९०९
समांशं मर्दयेदाज्ये तद्वटी कर्पसम्मिता।
अनुयोज्या घृतं नित्यं स्निग्धमुष्णं च भोजनम् ॥
मण्डलान्नाशयेत्सर्वान् वातरोगान्न संशयः।
सन्निपाते पिबेच्चानु रविमूलकषायकम् ९११॥

र. चि., र. क, रसायनसं, नि. र, र. का., वै. चि. वातरोगेषु।

भाषा—हीरा १ भाग, पारा २ भाग, अभ्रक ३ भाग, सुवर्ण ४ भाग, तांबा ५ भाग, लोहा ६ भाग, मुण्ड ७ भाग, ये सब विशुद्ध और मारे हुए लेकर अम्लवर्गसे ३ रोज मर्दनकर, सज्जीखार, जवाखार, टङ्कण और पञ्चलवण ये सब पूर्वदवाओके बराबर लेकर निर्गुण्डीके रससे ३रोज मर्दनकर सुखाकर इनसबसे अष्टमाश वछनाग और सुहागा देकर जम्बीरके रससे १ दिन भावनादेनेसे। यह कालकण्टक रस तैयार होगा। इसकी २ रत्तीकी मात्रा अदरखके रस अथवा घीसे वातरोगोंमें और सन्निपातोमे देना। निर्गुण्डीकी जड़, गूगल इनदोनोंको घी डालकर खूब कुटवाना, दोनों एक जीवहोजानेपर एक २ तोलेकी गोली बनाकर घीकेसाथ इस रसके पीछेदेना। स्निग्ध और गरम भोजनखिलाना, सात, चौदह या इक्कीस दिनमे यह तमाम वायुके रोगोंको नष्टकरता है। सन्निपातमे आककी जड़की छालका काढा पिलाना ॥ २०८ ॥

## २०९ कालकण्टकोरसः ( तृतीयः )

शुद्धसूतं मृतं गन्धं चाभ्रकं तीक्ष्णताम्रकम्।
हंसपादीरसै र्मर्द्यं काचकूप्यां निवेशयेत्९१२॥
वालुकायन्त्रके पाच्यं पञ्चयामान्ते समुद्धरेत्।
मासमात्रप्रयोगेण मन्दवातो विनश्यति ९१३॥

वै. चि, व रा, मन्दवाते।

भाषा—शुद्धपारदभस्म, गन्धक, अभ्रकभस्म, लोहभस्म, और ताम्रभस्म येसब समभागलेकर हसराजके रससे दोतीन रोज़ मर्दनकरे। फिर सुखाकर कपडामिट्टीकीहुई आतशीशीशीमे भरकर ६ पहर तक पकावे। स्वाङ्गशीतल होनेपर निकालकर एक माशेकी मात्रा देनेसे मन्दवायु नष्ट होता है। मन्दवातके लक्षण वैद्यचिन्तामणि अथवा वसवराजीयमे देखना ॥ २०९ ॥

## २१० कालकण्टको रसः (चतुर्थः)

शुद्धं मृतं रसं गन्धं मरिचं टङ्कणं कणा।
त्रिफला धूर्तबीजश्च समभागं च खल्वके ९१४
तिन्दुको बृहती फल्गुः सोमवल्ली कपित्थकः।
आर्द्रको भृङ्गराजश्च द्रवै र्भाव्यं दिनत्रयम् ९१५
काचकूप्यां निवेश्याथ वालुकायन्त्रके पचेत्।
यामद्वयं च मन्दाग्नौ स्वाङ्गशीतलमुद्धरेत् ९१६

वराहच्छागपित्ताभ्यां भावयेच्च दिनद्वयम् ।
गुञ्जामात्रं प्रदातव्यं पक्षाघातं विनाशयेत् ॥
त्रिकटुत्रिफलाक्वाथमनुपानं पिबेत्सदा ९१७

व रा, वै चि, पक्षाघाते ।

भाषा—शुद्धपारा, वछनाग, गन्धक, मिरच, सुहागा, पीपल, त्रिफला, धतूरेके वीज ये सब समभाग लेकर। तेद, भटकटैया, कटगूलर, लताकरञ्ज, कैथ, अदरख, भृगराज, इन प्रत्येकके रसोंसे तीन तीन दिन भावना देकर सुखाकर कपड़मिट्टीकी हुई काचकी शीशीमे रख दो पहर मन्द अग्निसे बालुकायन्त्रमे पकाना । स्वाङ्गशीतल होनेपर निकालकर सूअर, बकरा इनदोनोंके पित्तोसे दो२दिनभावनादेकर रखछोड़े । यह कालकण्टक रस तैयार हुआ। इसमेसे एकरत्तीकी मात्रा त्रिकटु और त्रिफलाके क्वाथकेसाथ देनेसे यह पक्षाघातको दूर करताहै । ॥ २१० ॥

## २११ कालकन्धरोरसः ( पित्तहिंसकः-वातमुद्गरः)

विषं मनश्शिलां सूतं गन्धकं टङ्कणं कणाम्
धूर्तबीजं समं खल्वे दिनं हंसपदीरसैः ९१८
मर्दित्वा कज्जलीं कृत्वा शरावेण पुटे पचेत् ।
आरण्यकोत्पलशतैः स्वाङ्गशीतलमुद्धरेत् ९१९
स्नुहीक्षीरैर्विमर्द्याथ मत्स्यपित्तेन भावयेत्
गुञ्जामात्रं प्रदातव्यं सर्वज्वरहरं परम् ॥९२०॥
अनुपानविशेषेण देयं दोषज्वरं हरेत् ।
पथ्यं देयं सुशाल्यन्नं मुद्गसूपेन संयुतम् ९२१
दाहे शीतजलं देयमिक्षुखण्डानि भक्षयेत् ।
हरिणा कथितः पूर्वं रसोयं कालकन्धरः ९२२

वै चि, व. रा, सन्निपाते । टि० अयंपाठस्तृष्णापित्ते वैद्यचिन्तामणिवसवराजीययो पित्तहिंसकनाम्नापठित - तत्रमत्स्यपित्तभावनाया अभाव एतावानेवविशेषोऽतस्तस्याप्यत्रैवान्तर्भावः —

भाषा—शुद्धवछनाग, मैनसिल, पारा, गन्धक, सुहागा, पीपल, धतूरेकेवीज येसव समभागलेकर हसराजकेरससे मर्दनकर कज्जली बनाकर सम्पुटमे बदकर ४—५कपडमिट्टीदेकर १००जङ्गलीकण्डोंकी आचदे । स्वाङ्गशीतलहोनेपर निकालकर थूहरके दूधमे मर्दनकर मछलीके पित्तसे भावनादेकर रखछोड़े । यह कालकन्धर रस तैयारहुआ, इसमेसे १रत्तीकीमात्रा अनुपानविशेषसे देनेसे समस्तज्वरोंको दूरकरतीहै । पथ्यमे शालीचावल, मूगके यूपकेसाथ देने चाहियें । दाहहोतो ठढापानी, ईखवगैरहसे ठढे उपचारकरे ॥ २११ ॥

## २१२ कालकलान्तकवटी

शुद्धं सूतं मृत वङ्गं तालसिन्धूत्थलाङ्गलीः ।
स्फटिका च पलैकैकं रसोनश्च चतुष्पलम् ॥
कारवल्या द्रवै मर्द्यं दिनैकं कारयेद्वटीः ।
गुञ्जातुल्याः सदा खादेद्गुदद्वारे च ताः क्षिपेत् ॥
रक्तवातकफोत्थानामर्शसां नाशनी ध्रुवम् ।
वटी कालकलान्तेयमनुपानश्च कथ्यते ॥९२५॥
भल्लातं त्रिफला दन्ती वह्निचूर्णं समं समम् ॥
सैन्धवं सर्वतुल्यं स्याद्भर्जयेत्खर्परे चिरम् ॥
मृद्वग्निना भवेत्सिद्धं कर्षं तक्रैः पिबेदनु ९२६

नि र, वै. क., अर्श सु ।

भाषा—शुद्धपारा, वङ्गभस्म, हरिताल, सेन्धानमक, करिहारी, फिटकड़ी येसव एकएकपल, लशुन ४पल, सबको इकट्ठेकर करेलेके रससे १दिन मर्दनकर एकएकरत्तीकी गोलिया बनाकर रखछोड़े, यह कालकलान्तक वटी तैयार हुई । इसमेसे एकएकगोलीखाकर भिलावा, त्रिफला, दन्तीमूल, चित्रक येसव समभाग, और सैन्धव सबकी बराबर लेकर नयेखपडेमे इसको मन्दआचसेसेके, जवलालहोजाय तव उतारकर इसमेसे एकतोलालेकर छाछमे डालकर ऊपरसे पीवे और १ गोली गुदाके भीतररक्खे । रक्तवात और कफसे भयेहुए बवासीरोंको यह गोली नष्टकरतीहै ॥ २१२ ॥

## २१३ कालकूटरसः

रुद्रसङ्ख्यविषं चैव त्रिभागः सूत एव च ।
गन्धकः पञ्चभागः स्याच्छिला स्याद्द्विभागिका

ताम्रभस्म चतुर्भागमृतुभागश्च टङ्कणम् ।
तालकं रुद्रसंख्याकं वह्निमूलं तथैव च ९२८॥
त्रिकटो द्वादश ज्ञेयास्त्रिफला दशभागिका ।
हिङ्गुनश्चन्द्रभागः स्याद्वचायाश्च तथैव च ९२९
एवं खल्वे च संस्थाप्यमार्द्रकं वह्निमूलकम् ।
जम्बीरं लशुनञ्चैव शार्ङ्गेष्टार्कस्य मूलकम् ॥
लाङ्गली स्वर्णमूलञ्च सिन्धुनागदलं तथा ।
अङ्कोलशिग्रुमूलानि प्रत्येकं याममात्रकम् ९३१
पञ्चकोलकषायेण पञ्चमूलेन मर्दयेत् ।
गुञ्जामात्रप्रमाणेन वटकान् कारयेत्ततः ९३२
वटीमेकां प्रयुञ्जीत शृङ्गवेराम्भसायुताम् ।
सर्वज्वरहरो योगः सन्निपातकुलान्तकः९३३॥
स्नानं कुर्यात्प्रयत्नेन श्रीखण्डालेपमाचरेत् ।
दध्यन्नं दापयेत्पथ्यं खर्जूरादिफलान्यपि९३४॥
ताम्बूलचर्वणं कुर्यात्क्रमादेवं समाचरेत् ।
कालकूटरसो नाम महेशेन प्रकाशितः ॥९३५॥

वै. ग, रसायनम , वैं चि, ज्वराधिकारे ।

भाषा—शुद्धवछनाग१भाग, शुद्धपारा२भाग, शुद्धगन्धक५भाग, शुद्धमेनसिल६भाग, ताम्रभस्म४ भाग, सुहागा६भाग, हरिताल९भाग, चित्रक९भाग, त्रिकटु १२ भाग, त्रिफला१०भाग, हींग और वचा एकएकभाग इनसबको कूटकपडछानकर खरलमे डालकर,अदरख, चित्रकमूल, जम्भीरी, लशुन,काकजङ्घा,आकडेकीजड़, करिहारी, धतूरेकीजड़, मद्रासीपान,अकोलकीजड़, सहिजनकीजड़, पञ्चकोल और पञ्चमूल इनप्रत्येकके अङ्गस्वरस अथवा काथसे एकएकपहरमर्दनकर एकएकरत्तीकी गोलियें बनाकर रखछोडे । यह कालकूट रस तैयारहुआ । इसकी१ रत्ती अदरखकेसाथ देनेसे सवप्रकारके ज्वर तथा सन्निपात इनकेकुलको नष्टकरतीहै । यहगोली देनेकेवाद मरीजको स्नानकराना । औरशरीरमे चन्दनकालेपकरना । पथ्यमे दही,चावल,खजूरवगैरहदे,ताम्बूल भक्षणकरनेको देवे ॥ २१३ ॥

## २१४ कालनाशनोरसः

ताम्रभस्म रसभस्म गन्धकं
लोहचूर्णजयपालगुग्गुलु ।
मर्दितश्च यवचिञ्चिकाद्रवै
र्भक्षितश्च चणकप्रमाणतः ॥
शोफपाण्डुविनिवृत्तिदं परं
श्वासमान्द्यबहुजं विनाशयेत् ॥९३६॥

र. दी., ।

भाषा—ताम्रभस्म,पारदभस्म,गन्धक,लोहभस्म, जमालगोटा, गूगल, इनसबको समभागलेकर यवचिञ्चिका ( तितली )के रससे भावनादेकर चनेके बरावर गोलिये बनाले, यह कालनाशन रस तैयारहुआ। इसमेसे एकएकगोली तत्तद्रोगहरानुपानकेसाथ देनेसे शोथ,पाण्डु,श्वासऔर अग्निमान्द्य दूरहोतेहैं॥ २१४ ॥

## २१५ कालभैरवोरसः

तालकं गन्धकं ताम्रं हरवीर्यश्च टङ्कणम् ।
त्रिक्षारं सैन्धवं बोलं मरिचं च समंसमम् ॥
सर्वं खल्वे दिनं मर्द्यं दोलायन्त्रे दिनं पचेत् ।
मत्स्यवाराहमहिषकमठानां च पित्तकैः ९३८॥
दिनं सुभावितश्चाथ माषमात्रं प्रयोजयेत् ।
आर्द्रकस्यानुपानेन सन्निपातविनाशकम्९३९॥
दोषज्वरं निहन्त्याशु ह्यनुपानविशेषतः ।
दध्यन्नं दापयेत्पथ्यं तक्रभक्तमथापि वा९४०॥
नारिकेलोदकं दाहे पिबेच्च शर्करोदकम् ।
भक्षयेदिक्षुखण्डानि ह्युपचारैः प्रकल्पयेत् ॥
सर्वे रोगा विनश्यन्ति रसाद्वै कालभैरवात्९४१

वै चि, सन्निपाते ।

भाषा—शुद्धहरिताल, गन्धक, ताम्रभस्म, पारा, सुहागा,सज्जी,यवक्षार,टङ्कण,सेन्धानमक, बोल(एलुआ),मरिच, येसब समभागलेकर सबको एकदिन धतूरेकेरससे खरलकर गोलीवनाकर धतूरेकेरस अथवा अदरखके रस अथवा पानीमे दोलायन्त्रसे ४पहर पकाकर निकाललेना फिर मछली, सूअर,जङ्गलीभैसा और कछुआ इनके पित्तोसे एकएकरोज़ भावना

देकर रखछोडे, यह कालभैरव रस तैयारहुआ। इसकी १मागेकी गोली वनाकर अदरखके साथ देनेसे सन्निपातको दूरकरतीहै। और दूषित ज्वरोंको निवृत्त करतीहै। दही,छाछऔरभात यह पथ्यदेना। दाहहोनेपर नारियलकापानी अथवा शक्करकाशरवत पिलाना और ईख चूसनेको देना। इसकालभैरव-रससे प्रायः सभीरोग दूरहोतेहै। २१५॥

## २१६ कालभैरववीवटी

तालगन्धरसाहीन्द्रटङ्कव्योषं सहिङ्गुलम्।
पिष्ट्वा तु नीरतः कुर्याद्वटिकां मुद्गमानतः॥
सा सेविता निहन्त्याशु वातश्लेष्मभवान्गदान्।
ग्रहणीमग्निमान्द्यार्शः सूचीवातं सशैत्यकम्॥

र क,

भाषा—हरिताल, गन्धक, पारा, नाग, इन्द्र-जव, सुहागा, सोठ, मिर्च, पीपलऔर शिंगरिफ येसव समभागलेकर अदरखवगैरहके रस अथवा केवलपानीसे पीसकर मूगवरावर गोलिये वनाकर रखछोडे, यह कालभैरवीवटी तैयार हुई, इसमेसे एकएक गोली तत्तद्रोगहरानुपानकेसाथ देनेसे वायु और श्लेष्मकेरोग, अग्निमान्द्य, अर्श, हैजा, शीताङ्ग इनको यह दूरकरतीहै॥ २१६॥

## २१७ कालरसः ( महान् ) ( प्रथमः )

मृतसूताभ्रकं तुल्यं मृतलोहं तयोः समम्।
लोहांशं शोधितं गन्धं भावयेद्दिनसप्तकम्॥
तत्सर्वं त्रिफलाक्वाथै भृङ्गशिग्रुत्थचित्रकैः।
द्रवैः पृथक्पृथग्भाव्यं सप्तधासप्तधा क्रमात्॥
सप्तधा कटुकीक्वाथै र्भावितं चूर्णयेत्पुनः।
चूर्णतुल्यं कणाचूर्णं पुरातनगुडैः समम् ९४६॥
सर्वमेकीकृतं खादेन्निष्कैकं वत्सरावधिम्।
महाकालरसो नाम जराकालभयङ्करः॥
तिलकोरण्टपत्राणि गुडेन भक्षयेदनु ॥९४७॥

रसायनस, र, सं.,

भाषा—पारदभस्म, अभ्रकभस्म समभाग, दोनोकीवरावर लोहभस्म औरगन्धक, लेकर त्रिफला, भागरा, सहिजन, चित्रक इनप्रत्येकके क्वाथोंसे सातसातरोज भावना देकर इसचूर्णकी वरावर पीपल और पुरानागुड डालकर चारचारमाशेकी गोलिया वनाकर रखछोडे। यह महाकालरस सिद्धहुआ, इसमेसे चारचारमाशे रोज खानेसे एकवरसभरमे जरा और कालके भयसे रहित होजाताहै। इसके ऊपर तिलऔर कटसरैयाके पत्ते गुड़केसाथ मिलाकर खाने चाहिये॥ ११७॥

## २१८ कालरसः ( महान् ) ( द्वितीयः )

गन्धबद्धं तु सूतेन्द्रं सत्त्वं तालकसम्भवम्।
ताम्रभस्म च तुल्यांशमर्कक्षीरेण मर्दयेत्९४८॥
दिनञ्च वाकुचीतैले गुञ्जामानञ्च भक्षयेत्।
भूतारिवरमूलञ्च राजवृक्षत्वचा समम्॥९४९॥
गुडेन सह कर्षैकं भक्षयेदनुपानकम्।
गलत्कुष्टहरः ख्यातो महाकालो महारसः९५०

र का, र को, र क, ल, कुष्ठाधिकारे।

भाषा—रससिन्दूर,हरितालकासत्व औरताम्रभस्मयेसवसमभागलेकरआकके‌दूधऔरवाकुचीकेतैलसे-एकएकरोजमर्दनकरएकएकरत्तीकीगोलियावना रक्खे, यह महाकालरस तैयारहुआ, इसकीएकएक गोलीखाकरऊपरसेभूतकेशी अथवा करञ्जकीजड़ और अमिलतासकी छाल दोनोंमिलाकर एकतोला गुड़के साथमिलाकर खानेसे गलत्कुष्ट दूरहोताहै २१८

## २१९ कालरसः ( महान् ) ( तृतीयः )

शुद्धसूतं मृतं ताम्रं कुष्ठं गन्धकटङ्कणम्।
पिप्पली च समं मर्द्यं मातुलुङ्गद्रवै र्दिनम्९५१
त्रिफला सर्वतुल्या स्यादेकीकृत्याथ मर्दयेत्।
निष्कैकं लेहयेचानु मध्वाज्यै र्वाकुचीरसम्॥
कुष्ठं वैपादिकं हन्ति महाकालो रसो ह्ययम्॥

र, का, कुष्ठाधिकारे।

भाषा—शुद्धपारा, ताम्रभस्म, कुष्ठ, गन्धक, सुहागा, और पीपल येसब समभागलेकर विजोरेके रससे एकदिन भावना देकर इसचूर्णकी वरावर त्रिफलादेकर इसमेसे ४ माशे मधु, घी और वाकु-

चीकारस इनके साथ खानेसे वैपादिक कुष्ठको यह दूरकरताहै। महाकालेश्वर इसका नामहै ॥ २१९॥

## २२० कालरसः (महान्) (चतुर्थः)

शुद्धसूतं मृतं चाभ्रं मृतं ताम्रं विषं समम् ।
मर्दयेद्वाकुचीतैले यामैकं कृतगोलकम्॥९५३॥
द्विगुणे पाचयेद्गन्धे सतैले लोहपात्रके ।
गन्धतैले विजीर्णे तु तद्गोलांशं मृतायसम् ॥
पञ्चाङ्गनिम्बसंयुक्तं मधुना गोलकीकृतम् ।
निष्कैकं किटिभं हन्ति वज्रपाणि र्महारसः ॥
निशा कणा नागरं च वेल्लचित्रकताप्यकम् ।
क्रमोत्तरगुणं पिष्ट्वा गोमूत्रेण पिबेदनु॥९५६॥

वै. चि, कुष्ठे चि. ना, चि.क्र, व रा, र का, वे.चि, एषु वज्रपाणिरिति नामविपाऽभावश्च रसकामधेनावभ्रस्थाने तालकमस्ति इति विशेष ।

भाषा—शुद्धपारा,अभ्रकभस्म, ताम्रभस्म, और शुद्धवछनाग येसव समभागलेकर बाकुचीके तैलमे मर्दनकर गोलाबनाकर द्विगुणगन्धकके गोलेमे रखकर लोहेकीकडाहीमे तैलभरकर पकावे, जबगन्धक औरतैलजलकर खलास होवे तब इसगोलेको निकालकर इसकी बराबर लोहभस्म और निम्बपञ्चाङ्ग मिलाकर ४चारमागेकी गोलिया बनाकर रखछोडे, यह महाकालरस तैयारहुआ । इसकी १गोली खाकर हल्दी१भाग,पीपल२भाग, सोंठ३भाग,विडङ्ग ४भाग,चित्रक५भाग,सोनामाखी६भाग,लेकर पीसकर १तोलागोमूत्रके साथपिलानेसे किटिभ नामके कुष्टको दूरकरताहै ॥ २२० ॥

## २२१ कालवज्राशनि रसः

पारदं गन्धकं तुत्थं टङ्कणं रजनी समम् ।
देवदाल्या द्रवै र्मर्द्यं दिनं शुष्कन्तु भक्षयेत् ॥
कालवज्राशनि र्नाम रसः सर्वविषापहः ।
नरमूत्रं पिबेच्चानु कालदष्टोऽपि जीवति९५८॥

कामरत्न., चि. सा, रसायनस, यो र र का., विषे । रसकामधेनौ कालवज्रेश्वरेतिनाम ।

भाषा—पारा,गन्धक,तुत्य,टङ्कण औरहल्दी येसब समभाग लेकर बदालके रससे एकदिन मर्दनकर सुखाकर रखछोडे, यह कालवज्राशनि रस तैयारहुआ । इसमेसे २माशे अथवा यथौचिति देखकर नरमूत्रके साथदेनेसे अगर साक्षात् कालनेभी काटाहोतोभी आदमी नहीं मरताहै ॥ २२१ ॥

## २२२ कालवञ्चको रसः

मृतं मृतं मृतं नागं गन्धकं तुल्यटङ्कणम् ।
प्रत्येकमर्धनिष्कं स्यान्मृतशुल्बं द्विनिष्ककम् ॥
शङ्खं निष्कद्वयं चूर्णं नवनिष्का वराटिका ।
पूरयेत्पूर्वचूर्णेन पुटयेल्लोकनाथवत् ॥ ९६० ॥
ततोऽर्ककदलीद्रावै र्मर्द्यं रुद्ध्वा पुटैः पचेत् ।
आदाय चूर्णयेच्छ्लक्ष्णं तुल्यांशमरिचै र्युतम् ॥
चूर्णाच्चतुर्गुणं गन्धमेकीकृत्य विचूर्णयेत् ॥
एकमाषं घृतै र्लेह्यमसाध्यं राजयक्ष्मजित् ॥
त्रिसप्ताहं न संदेहो रसोऽयं कालवञ्चकः ।
असाध्यं साधयेच्चैव राजरोगं न संशयः९६३॥

र को, र सु, र क ल, र का, यो. म., राजयक्ष्मणि ।

भाषा—पारदभस्म, नागभस्म, गन्धक, तुत्थ, सुहागा, येप्रत्येक दोदोमाशे,ताम्रभस्म४माशे,शङ्खचूर्ण ८माशे,कौडी३६माशे,लेना । सबऔषधियोको पीसकर कौडियोमे भरकर सुहागा औरगुडसे उसका मुंह बंदकर लोकनाथकीतरह पकाना स्वाङ्गशीतलहोनेपर निकालकर आककादूध,केलेकारस इनसे एकएकदिन मर्दनकर सम्पुटमे बंदकर लघुपुटमे पकाना इसप्रकार ३ वारपकाना । स्वाङ्गशीतलहोनेपर निकालकर उसकी बराबर मिरचकाचूर्ण और चौगुना शुद्धगन्धक मिलाकर सबको इकट्ठेकर १माशालेकर घीमे मिलाकर, चाटनेसे असाध्यसेअसाध्यभी राजयक्ष्माको २१ दिनमेदूरकरताहै ॥ २२२ ॥

## २२३ कालविध्वंसनो रसः (प्रथमः)

शुद्धं सूतं हेम तारं ताम्रं तुल्यञ्च मर्दयेत् ।
जम्बीरनीरसंयुक्तमातपे मर्दयेद्दिनम् ॥ ९६४॥
सर्वतुल्यं पुनः सूतं क्षिप्त्वा पिष्टिं प्रकल्पयेत् ।
धुत्तूरफलमध्यस्थं दोलायन्त्रे त्र्यहं पचेत्९६५॥
धुत्तूराच्छद्रवै रेव भाण्डे पूर्णे प्रपाचयेत् ।

आदाय वन्धयेद्वस्त्र इष्टिकायन्त्रगं पचेत् ॥
जम्बीरै र्गन्धकं पिष्ट्वा त्वधश्चोर्ध्वञ्च दापयेत् ।
तुल्यं तुल्यं पुन र्देयं रुद्ध्वा लघुपुटे पचेत्॥९६७॥
शतधा गन्धके जीर्णे तदुद्धृत्य विचूर्णयेत् ।
लौहभस्मसमांशञ्च दत्त्वा मर्द्य द्रवै र्दिनम् ९६८
कण्टकार्या बृहत्याश्च तथाग्नीनां द्रवैरपि ।
प्रतिद्रवै र्दिनं मर्द्य पुटेत्पञ्चभिरुत्पलैः॥९६९॥
एवं नवपुटं देयं द्रावेद्रावे त्रिधात्रिधा ।
वह्न्यर्कचिरविल्वानां द्रवै र्द्वित्रिपुटे पचेत् ॥
अन्धमूषागतं पश्चादादाय चूर्णयेत्पुनः ।
दशांशेन विषं योज्यं गुञ्जामात्रं प्रयोजयेत् ॥
कालविध्वंसनो नाम रसः पाण्ड्वामयापहः ॥

र र., र. र. स, र को, र. का, नि र, रसायनसं र र दी, चि र, र. ल, चि क, र ( मा, ) पाण्ड्वधिकारे । रसरत्नसमुच्चये-रुद्ध्वाथकारिपाभिस्थं कपोताख्ये पुटे पचेदिति पाठो दृश्यते ।

भाषा०—शुद्धपारा, सुवर्ण, रजत, ताम्र, इनकी भस्में समभाग लेकर जम्भीरीकेरससे धूपमेंतीनरोज् तक मर्दनकर सबकी बराबर दूसरापारा मिलाकर यहा तक घोटे कि इसकी पिष्टी वनजाय, फिर इसको धतूरेके पकेफलमे रखकर धतूरेकेरसमे ३रोज् तक दोलायन्त्रसे पकावे, धुत्तूरद्रव सूखनेपर दूसरा भरताजाय, तीनदिनवाद इसको चारतह कपड़ेमे बाधकर पोटलीवनावे । और जम्भीरीके रसमे उसके बरावर गन्धक पीसकर ईटमे खड्डा खोदकर आधी आधी गन्धक नीचे ऊपर देकर बीचमें उसपोटलीको रखकर लघुपुटकी आच दे । इसीतरह बरावर २ गन्धकदेकर १०० पुटदेवे वादमे उसका खूब वारीक चूर्णकर बरावरकी उत्तम लौहभस्म मिलाकर भटकटैया, वनभाटा, चित्रक, आक, पूतीकरञ्ज इनप्रत्येकके स्वरससे मर्दनकर अन्धमूषामे वन्दकर पाँच २ जंगलीकंडोकी तीनतीन आचदेवे, फिर उसका चूर्णकर दशवाहिस्सा शुद्धवछनाग मिलाकर एकएकरत्ती तत्तद्रोगहरानुपानके साथ देनेसे समस्तरोग नष्ट होते हैं । विशेषकर पाण्डुरोग के लिये यह अक्सीर उपाय है ॥२२३॥

## २२४ कालविध्वंसनोरसः ( द्वितीयः )

चतुरो हेमगद्याणान् गालयेत्तिथिवर्णजान् ।
पत्राणि कारयेत्तेषां विध्यन्ते कण्टकै र्यथा९७२
जलकोशदलानीव स्वस्थानैकाङ्गुलानि च ।
शुद्धसूतस्य चतुरो गद्याणांस्तानि च क्षिपेत् ॥
खल्वे दिनाष्टकं पिष्ट्वा पिष्टिःकार्याऽति सूक्ष्मिका
प्रत्येकं द्वौ च गद्याणौ शुद्धपारदरूप्ययोः ९७४
दिनैकं चतुरः पिष्ट्वा पिष्टिः कार्या द्वितीयका ।
खल्वे पिष्टिद्वयं क्षिप्त्वा मर्दयेद्दिनसप्तकम् ९७५
पश्चाद्धनकं नित्यं कुट्टनीयमुलूखले ।
तद्रसेनैव कर्तव्या ह्याकण्ठस्थालिका मुहुः ॥
दोलायन्त्रेण तां पिष्टिं स्वेदयेद्दिनसप्तकम् ।
रसमग्नां त्विमां पिष्टिं स्वेदयेत्कानके रसे९७७
स्वेदितानन्तरं पिष्टिं क्षिपेद्यन्त्रे च भूधरे ।
शुद्धगन्धकगद्याणं सपादं प्रक्षिपेन्मुहुः ९७८॥
शरावञ्च मुखे दत्त्वा लिप्त्वा वस्त्रमृदा मुहुः ।
छाणकैस्तुर्यतुर्यैश्च वारम्वारं नवं नवम् ९७९ ॥
पुटं युक्त्यानया देयमेवमेकोत्तरं शतम् ।
गुटीसिन्दूरवर्णा स्यात्खल्वे पिष्ट्वाऽतिसूक्ष्मिकाम्
शिग्रुमूलत्वचः पिष्ट्वा निःसहायां तु सूक्ष्मिकाम्
निम्बुकस्य रसेनैव दातव्याः सप्त भावनाः९८१
क्वाथेन त्रिकटोः पश्चादेकविंशतिभावनाः ।
त्रिफलाम्भसा च सप्तैव सप्त कण्टकशीलिनः ॥
आटरूषकपत्राणां रसेनैवेह सप्त च ॥
आर्द्रकस्य रसेनेत्थमेकविंशतिभावनाः॥९८३॥
निःसहाया रसेनैव भावनाश्च मुहुर्मुहुः ॥
भावनासप्तति र्याता एवं दशभिरौषधैः॥९८४॥
चूर्णं कुम्पे क्षिपेज्जातः कालविध्वंसनो रसः ।
वल्लयुग्मो रसः प्रात र्ग्राह्योऽमृतकलान्वितः९८५
कासे श्वासे च हिक्कायां वातपित्तकफादिषु ।
मन्देऽग्नौ त्रिषु शूलेषु समस्तेषु ज्वरेषु च ९८६ ॥
यक्ष्माख्यसन्निपातेषु द्वन्द्वजेषु विशेषतः ।

अष्टादशप्रमेहेषु कम्पवातामवातयोः ॥९८७॥
बलक्षीणे पित्तवर्गे वर्गयोः श्लेष्मवातयोः ।
रोगेष्वेतेषु दातव्यः समशीतजलेन वा ९८८
मासैकानन्तरं रोगा विलीयन्ते शनै र्ध्रुवम् ।
तैलक्षाराम्लवर्ज्यश्च भोज्यं मधुरभोजनम्९८९
देहकान्तिः सुवर्णाभा न रोगो रससेवनात् ।
ग्रस्यते नैव कालेन कालः स्वेनैव नश्यते९९०॥

र क ली.,

भाषा—२ तोले उत्तम सुवर्णलेकर गलाकर उसके बारीक कण्टकवेधी पत्र बनाकर एकएक अङ्गुलके टुकड़े करले, उनमे बराबरका शुद्धपारा डालकर ८ रोज़तक मर्दनकरे। फिर १ तोला पारा और १ तोला चांदीको आपसमें घोटकर दोनों की पिष्टी बनाकर रखले, इनदोनों पिष्टियोंको खरलमे डालकर सातदिन धतूरेके पञ्चाङ्गके स्वरससे पीसकर उसका गोला बनाले, उसगोलेको धतूरेके फलमे रखकर तीन चार कपडे लपेटकर धतूरेका रस हंडीमे भरकर दोलायन्त्रमे रसमे लटकाके ७ दिनतक स्वेदनकरे। स्वेदनके बाद ६ माशे शुद्धगन्धक अन्धमूषामे रखकर उसगोलीको उसीमें बन्दकर कपड़मिट्टी देकर भूधरयन्त्रमे चार चार कण्डोंकी आचदे, शराब नयानया बदलताजाय, इसतरह १०१ पुट होनेके बाद इसमेसे सिन्दूर रंगकी गोलीनिकलेगी, इसको अत्यन्त बारीकपीसकर नीबूकेरसकी सातभावना देकर त्रिकटुके क्काथसे २१, त्रिफलाके क्काथसे ७ भटकटैयाके रससे ७ अडूसेके पत्तोंके रससे ७, अदरखकेरससे २१ भावनाए देना। इस तरह दश औषधोंसे ७० भावनाए हुई। इसमे ध्यान रखनाचाहिये कि प्रत्यौषधभावनाकी समाप्तिमे दूसरी औषधिके आरम्भमे एकएकभावना अमरबेलकेरसकी देताजाय, यह **कालविध्वंसन** रस तैयार हुआ। इसकी ६ रत्तीकी मात्रा मधुतथाघृतके साथ देनेसे कास, श्वास, हिचकी, वात, पित्त, कफ, मन्दाग्नि, त्रिविधशूल, समस्तज्वर, राजयक्ष्म, सन्निपात, और द्वन्द्वजव्याधिया, १८ प्रकारके प्रमेह, कम्पवात, आमवात, बलक्षीणता, २० प्रकारकेकफरोग, ४० प्रकारके पित्तरोग, ८० प्रकारकेवातरोग इनसबको १ महीनेकेबाद अच्छाकरताहै। तैल, क्षार और अम्लको छोड़कर भोजनकरे, इसकेसेवनकरनेसे शरीर निरोग होकर देहकीकान्ति सुवर्णजैसी होजाती है, उसे काल नहीं खाता इसीलिये इसका नाम कालविध्वसन रस है ॥ २२४ ॥

**२२५ कालविध्वंसनो रसः (तृतीयः)**

पृथगथ रसराजः क्ष्वेडयुक् षोडशांशः,
अजशिखितिमिपित्तै र्भावयेदस्य वल्लः।
जयति सकलवातान् सन्निपातज्वरादीं–,
श्छिरसि सलिलयोगान् कालविध्वंसनाख्यः ॥
व्योपनिम्बम्बुसितया क्षौद्रार्द्रकमथापि वा।
विश्वांशगुडयुक्तो वा रसो हन्त्यखिलाञ्ज्वरान्
पथ्यं निरामे दध्यन्न सामे मण्डोऽथ यूषकः।
रसवीर्यविवृद्ध्यर्थंमृद्वीका वाऽथ दाडिमम्९९२

र शि, सर्वरोगे।

टि०—अत्र गन्धकाभावात् रसराजशब्देन पारदो भस्मरूपो ग्राह्य सिन्दूरादिरूपो वा ग्राह्य इति रहस्यम्।

भाषा—शुद्धपारा १६ भाग, शुद्धवछनाग, १-भाग, इनदोनोको खूबबारीक पीस बकरा, मोर, मछली, इनके पित्तोंसे एकएकरोज़ भावना देकर तीनतीनरत्तीकी गोलिये बनाकर रखछोड़ना, यह **कालविध्वंसन** रस तैयार हुआ। इसकी १गोली त्रिकटु, नीबूकारस, औरशक्करकेसाथ, मधु और अदरखकेरसकेसाथ, तथा सोंठऔरगुड़केसाथ देनेसे यह समस्तरोगोंको दूरकरताहै। निराम व्याधिमे दही भातदेना औरसामव्याधिमे माड अथवा यूषदेना, रस और वीर्यकीवृद्धिकेलिये द्राक्ष और अनारदेनेचाहियें ॥ २२५ ॥

**२२६ कालविध्वंसनो रसः (चतुर्थः)**

पारदं त्रिपलं दत्त्वा गन्धके त्रिपलात्मके

पचेद्यामं च चुल्यां तु चूर्णयित्वा ततः पुनः ॥
गुडूचीसारमाधाय शुल्कं सप्तपलात्मकम् ।
मर्दयित्वा ततः सर्वं मधुना गुटिकीकृतम् ॥
वासापत्रैः समावध्य मधुभाण्डे विनिःक्षिपेत् ।
एकैकां भक्षयेन्नित्यं शुष्कपाण्डुविनाशनम् ॥
कालविध्वंसनो नाम असाध्यं श्वयथुं जयेत् ॥

व. रा, पाण्ड।

भाषा—शुद्धपारा ३ पल, गन्धक३पल इन-दोनोंकी कज्जलीकर १पहर कड़ाहीमे मधुरआंचसे पकावे । गुडूचीकासत्त्व ७पलदेकर खूबबारीक कज्जली बनाकर मधुमे गोळा बनाकर ऊपरसे अडूसेकेपत्र लपेटकर मधुपूर्णभाण्डमे डालदे । इसमेसे एकएकमाशेकी गोली बनाकर रोजखानेसे शुष्कपाण्डु और असाध्यशोथ निवृत्त होते हैं । ॥ २२६ ॥

## २२७ कालविध्वंसिका वटिका

कृष्णाभ्रकस्य सत्त्वं तु कान्तमाक्षिककाञ्चनम् ।
तीक्ष्णं सौवीरचूर्णञ्च तुल्यं रुद्ध्वा धमेद् दृढम् ॥
तत्खोटं सूक्ष्मचूर्णन्तु द्रुतसूतसमं भवेत् ।
सूतार्धं मारितं वज्रं सर्वमम्लेन मर्दयेत् ९९८
दिनैकं तप्तखल्वे तु तं रुद्ध्वा भूधरे पचेत् ।
अहोरात्रात्समुद्धृत्य तत्समं पूर्वसूतकम् ९९९॥
दत्त्वा दिव्यौषधद्रावै र्मर्द्य सर्वं दिनावधिम् ।
पूर्ववद्भूधरे पच्याद्द्रुतं सूतं पुनःसमम् ॥१००॥
दत्त्वा मर्द्यं पुनः पच्यादित्येवं सप्तवारकम् ।
एतद्भस्मसमं गन्धं दत्त्वा चान्धे धमेद्दृढम् ॥
जायते गुटिका दिव्या कालविध्वंसिका परा ॥
यस्य वक्त्रेस्थिता ह्येषा तस्य कालः करोति किम्
( वर्षषट्कप्रयोगेण जीवेत्कल्पसहस्रकम् ।
तद्गात्रस्वेदमात्रेण सर्वलोहानि काञ्चनम् ॥
जायन्ते नात्र संदेहः शिवाम्बुक्रामकं पिबेत् ॥)

र स.,

भाषा—कालेअभ्रककासत्त्व कान्तलोह, सोनामाखी, सुवर्ण, फौलाद, सुरमा इनसबका चूर्ण बराबर लेकर गूलरीरसआंचमें धमनकरै, यह एकतरहका आगमें नगारहोगा । यह डला और द्रुतपारा समभाग, पारेसे आधा हीरा, इन-सबको जम्बीरीनींबुके रसमें, तप्तखल्वमें एकदिन मर्दनकर सम्पुटमें बन्दकर भूधरयन्त्रमें एकअहोरात्री आंचदेना । स्वाङ्गशीतलहोनेपर निकालकर उसकी बराबर फिर द्रुतपारादेकर दिव्यौषधियोंके अर्करस-समें एकदिन मर्दनकर सम्पुटमें धरकर भूधरयन्त्रमें पूर्ववत् पकाकर निकाले । फिर उन्हींकी बराबर पारा डालकर मर्दनकरपकावे, इसतरह सातवारकरै, यह अखीरमे भस्म तयारहोगी । फिर इसकी बराबर गन्धकदेकर अन्धमूषामे बंदकर मूषधमनकरै तो इसत-वकी कालविध्वंसिका१ गोली तैयार होगी । यह गोली जिसके मुहमें रहतीहै उसका कालकुछभी नहींकरसकता । ६ बरस इसका प्रयोग करनेसे ह-जारों वर्षकी आयु होजातीहै । इसके खानेवालेके प्रस्वेदसे लोहोंका सुवर्णबनजाताहै । इसके क्रामणकेलिये शिवाम्बु ( हरडोंकाक्वाथ ) पीवे । २२७

## २२८ कालाग्निभैरवो रसः

शुद्धसूतं द्विधा गन्धं मर्दयेद्द्रोणपुष्पीद्रवैः ।
भावितश्च विशोष्याथ चूर्णयेदतिचिक्कणम् ॥
चूर्णतुल्यं मृतं ताम्रं ताम्रादष्टांशिकं विषम् ।
हिङ्गुलं रसभागश्च द्वौ भागौ कनकस्य च ॥
बाणभागोऽत्र गोदन्तः बाणभागा मनःशिला
टङ्कणं नेत्रभागश्च ऋतुभागश्च खर्परम्१००६॥
ब्रह्मभागश्च जैपालं नेत्रभागं हलाहलम् ।
माक्षिकश्चाग्निभागश्च लौहं वङ्गश्च भागिकम् ॥
सर्वान् खल्वोदरे क्षिप्त्वा क्षीरेणार्कस्य मर्दयेत्
दशमूलकषायेण मर्दयेद्याममात्रकम् ॥१००८॥
पञ्चमूलकषायेण तथैव च विमर्दयेत् ।
चणमात्रां वटी कृत्वा बलं ज्ञात्वा प्रयोजयेत् ॥
सर्वं त्रिदोषजं हन्ति सन्निपातं सुदारुणम् ।
पूर्ववद्दापयेत्पथ्यं जलयोगश्च कारयेत् १०१०॥

पथ्यं शाल्योदनं ज्ञेयं दधिभक्तसमन्वितम् ।
कालाग्निभैरवो नाम रसोऽयं सूरिपूजितः ॥

भै. र, र. सु, ज्वराधिकारे ।

भाषा—शुद्धपारा १ भाग, गन्धक २ भाग, इनदोनोंको दोतीनरोज गोखरूकेरससे मर्दनकर सुखाकर अत्यन्त वारीकचूर्णकरले । फिर उसचूर्णके बराबर ताम्रभस्मदे । और ताम्रभस्मसे अष्टमाश विष, पारेकी बराबर हिङ्गुल, सुवर्णभस्म २ भाग, गोदन्ती हारिताल ५ भाग, मैनसिल ५ भाग, सुहागा २ भाग, खर्पर ( जस्तभस्म ) ६ भाग, शुद्ध जमालगोटा १ भाग, हालाहल ( अभावमे सर्पविष ) २ भाग, सोनामाखी ३ भाग, लोह और वङ्ग एकएकभाग, इनसबको इकट्ठेकर आकका दूध, दशमूलकाकाढा और पञ्चमूलकाकाढा इनसे १ एक-पहर घोटकर चनेकी बराबर गोलिये बनाले । इसमेसे एकएकगोली तत्तद्रोगहरानुपानसे देनेसे दारुण सन्निपातको दूर करती है । पथ्यमे शालीचावलकाभात दहीके साथ देना ॥२२८॥

## २२९ कालाग्निरुद्रोरसः ( प्रथमः )

सूतकान्ताभ्रतीक्ष्णानां भस्म माक्षिकगन्धकम् ।
वन्ध्याकर्कोटकीकन्दे क्षिप्त्वा लिप्त्वा मृदाबहिः
भूधराख्ये पुटे पचयाद्दिनैकं तद्विचूर्णयेत् ।
दशमांशं विषं योज्यं माषमात्रन्तु भक्षयेत् ॥
रसः कालाग्निरुद्रोऽयं दशाहेन विसर्पनुत् ।
पिप्पलीमधुसंयुक्तमनुपानं प्रकल्पयेत् १०१४॥

र. चि, र क, र च, व रा, र म, वै चि, र सं. र. का, भै सा, यो. म, र सु, रसायनस., र. क ल, र प्र, र. र. क, ना वि, र म मा, विसर्पे ।

भाषा—पारा, कान्त, अभ्रक, फोलाद इन प्रत्येककी भस्म, सोनामाखी, गन्धक, ये समभाग-लेकर ककोड़ेकेकन्दमे डालकर दोचारकपड़मिट्टीदे-कर भूधरपुटमे एकरोजपकाकर निकाललेना । और दशवा हिस्सा शुद्धबछनाग मिलाकर चूर्णकर रखलेना, यह कालाग्निरुद्ररस तैयार हुआ इसकी १ माशाकी मात्रा पीपल और मधुकेसाथ देनेसे दसदिनमे विसर्पको यह अच्छा करताहै ॥ २२९ ॥

## २३० कालाग्निरुद्रोरसः ( द्वितीयः )

तुल्यास्तालस्मरहरशिला भास्करोऽपि द्विभागः,
सर्वं यन्त्रे द्विगुणबलिना सैकते पाचयित्वा ।
साक्षादेष त्रिपुरविजयी कुष्ठकालाग्निरुद्रः,
सेवाभाजां हरति सकलं मण्डलेनैव कुष्ठम् १०१५

रसायनस, यो म, र. का., कुष्ठे ।

भाषा—हरिताल, पारा, मैनसिल, ताम्रा ये प्रत्येक २ भाग, इनसबसे दूनीगन्धक डालकर, एकदिन-खूबमर्दनकर आतशीशीशीमे भरकर वालुकायन्त्रमे ४ पहरकी अग्निसे पकावे । शीतलहोनेपर निकाल-कर चूर्णकर रखलेना, यह कालाग्निरुद्ररस तैयार हुआ । इसकी १ रत्तीकीमात्रा कुष्ठहरानुपानकेसाथ देनेसे १ मण्डलमे ( १४--२१ या ४९ दिनमे ) समस्तकुष्ठ दूरहोतेहैं ॥ २३० ॥

## २३१ कालाग्निरुद्रो रसः ( तृतीयः )

क्षारैश्चलवणैः सूतं मर्दयेद्दिवसं ततः ।
स्वेदयेद्राजिकाहिङ्गुविषमूषोदरस्थितम् १०१६।
काञ्जिके दोलिकायन्त्रे पुनस्तं मर्दयेद्रसम् ।
गिरिकर्णी तिलदला निर्गुण्डी काकमाचिका ॥
मण्डूकी कनकं भृङ्गः करवीरश्च चित्रकः ।
पाठा जयन्त्यार्द्रकश्च द्रवै रेषां क्रमात्ततः ॥
रससाम्येन योज्योऽत्र गन्धको मरिचानि च
भावयेत्पञ्चभिः पित्तैः पृथग्घर्मे दिनावधिम् ॥
रसः कालाग्निरुद्रः स्याद्द्विगुञ्जः सन्निपातजित् ।
अनुपानं सिताक्षौद्रं शेषं प्राणेशवच्चरेत् १०२०

र र., रसायनसं, र सु, र का, र र दी, र. को., र क, यो, ज्वराधिकारे ।

भाषा—क्षार और लवणोंके साथ पारेको एक-रोजमर्दनकर राई, हींग, बछनाग, और काञ्जीके गोलेम रखकर काञ्जीसे दोलायन्त्रमे एकरोजस्वेदन-कर निकाललेना । फिर अपराजिता, हुरहुर, सम्हालु, मकोय, ब्राह्मी, धतूरा, भगरा, सफेदकनेर, चित्रक,

पाठा, जैत, अथवा अरणी, और अदरख इनके अङ्ग-स्वरस अथवाकाथोंसे एकएकरोज मर्दनकर रसकी-बराबरगन्धक औरमिरच देकर ५ पित्तोंसे एकएक-रोज अलग २ भावनादेकर रखछोड़े, यह कालाग्निरुद्र रस तैयार हुआ। इसकी २रत्तीकीमात्रा शक्कर और शहदके साथ देनेसे सन्निपातको दूरकरताहै। इसमे पथ्य प्राणेश्वरकी तरहकरे ॥ २३१ ॥

**२३२ कालाग्निरुद्रो रसः ( चतुर्थः )**

**वज्रसूताभ्रस्वर्णार्कतारतीक्ष्णमिदं क्रमात्।**
**भागवृद्ध्या मृतं सर्वं सप्ताहं चित्रकद्रवैः १०२१**
**मर्दयेन्मातुलुङ्गाम्लै जम्बीरैश्च दिनत्रयम्।**
**शिग्रुमूलद्रवैश्चाथ कणाक्काथैस्त्र्यहं त्र्यहम् ॥**
**त्रिदिनं त्रिफलाक्काथैः शुण्ठीमरिचजैस्त्र्यहम्।**
**जातीफललवङ्गैलावचापत्रककेशरैः ॥१०२३॥**
**कोलाञ्जनयुतैः काथै र्भावयेद्दिवसत्रयम्।**
**आर्द्रकस्यद्रवैः सप्त दिवसान् भावयेत्पुनः ॥**
**शोषिते चूर्णयेत्सूक्ष्मं चूर्णपादश्च टङ्कणम्।**
**टङ्कणांशं वत्सनाभं चूर्णं कृत्वा विमिश्रयेत् ॥**
**त्रिकटुत्रिफलावह्निचातुर्जातकसैन्धवैः।**
**सौवर्चलं धूमसारं चूर्णयेत्तत्समंसमम् १०२६**
**कृत्वा योज्यं च भागैकं तत्सर्वं चार्द्रकद्रवैः।**
**शिग्रूत्थै र्मातुलुङ्गाम्लै र्लोलयित्वा वटीकृतम् ॥**
**रसः कालाग्निरुद्रोऽयं त्रिगुञ्जं भक्षयेत्सदा।**
**अग्निदीप्तिकरः ख्यातः सर्ववातकुलान्तकः ॥**
**स्थूलानां कुरुते कार्श्यं कृशानां स्थौल्यकारकः**
**अनुपानविशेषैस्तु तत्तद्रोगेषु योजयेत्१०२९॥**
**लेपसेकावगाहादीन् योजयेत्कार्ययुक्तितः।**
**साध्यासाध्यं जयत्याशु मण्डलान्नात्र संशयः ॥**

र मु, र सु, वा, श्वासाधिकारे।

भाषा—हीरा १ भाग, पारा २ भाग, अभ्रक ३ भाग, सोना ४ भाग, तांबा ५ भाग, चांदी ६ भाग, फोलाद ७ भाग, इस क्रमिक भागवृद्धिसे सबकीभस्मलेकर चित्रककेरससे ७ रोज, बिजोरा और नींबूके रससे ३-३ रोज, सहिजन और पीपलके काथोंसे३-३ रोज, त्रिफला, सोठ, मरिच, जायफल, लौंग, इलायची, वचा, पत्रज, केशर, बेर, अञ्जन-वृक्ष इनसबका इकट्ठा काढाकर उससे तीनरोज, अदरखके रससे ७ रोज क्रमसे भावनादेकर सुखालें। इसचूर्णसे चतुर्थभाग भुनासुहागा, सुहागेसे चतुर्थांश शुद्धवछनाग मिलावे फिर त्रिकटु, त्रिफला, चित्रक, चातुर्जात, सैन्धव, सचल और गृहधूम समभाग लेकर चूर्णकर उपरोक्त औषधका चतुर्थांश मिलावे। इससबको अदरख, सहिजन और विजोरा इनके रसोसे क्रमसे मर्दनकर तीनतीन रत्तीकीगोली बनाकर रखछोड़े। यह कालाग्निरुद्र रस तैयार हुआ। इसको तत्तद्रोगहरानुपानके साथ देनेसे समस्त-वात, अग्निमान्द्य, स्थौल्य, अत्यन्त कार्श्य इनको दूरकरता है। एकमण्डलइसकाप्रयोगकरनाचाहिये, इसमेंलेप, अभिषेक, अवगाह जैसा जहां उचित समझें वैसाकरावें ॥ २३३ ॥

**२३३कालाग्निरुद्रोरसः ( महान् ) ( पञ्चमः )**

**हिङ्गुलं तालकं सूतं शिला टङ्कणगन्धकम्।**
**समांशं योजयेत्सर्वं सर्वेभ्यस्त्रिगुणं विषम्१०३१**
**जम्बीरवारिणा पेष्यं मर्द्यं यामचतुष्टयम्।**
**सर्षपाभा वटीकार्या छायाशुष्का दिनत्रयम् ॥**
**अनुपानविशेषेण सन्निपातान्निहन्ति च।**
**इक्षुखण्डं जलस्नानं दध्यन्नं पथ्यमाचरेत् ॥**
**नरिकेलोदकं पेयं द्राक्षाखर्जूरदाडिमम्।**
**कुङ्कुमागुरुकर्पूरचन्दनेन विलेपनम् ॥१०३४॥**
**रोगिणां हितसंयुक्तमुपचारं भिषग्वरः।**
**महाकालाग्निरुद्रोऽयं महादेवेन भाषितः ॥**

वै चि, सन्निपाते।

भाषा—शिंगरिफ, हरिताल, पारा, मैनसिल, सुहागा, औरगन्धक येसब समभाग, इनसबसे तिगुना वछनागदेकर जम्भीरीकेरसमे ४ पहरमर्दनकर सर्षपके बराबर गोलीबनाकर तीनदिन तकछायामे सुखाकर रखछोड़े, यह महाकालाग्निरुद्र रस तैयार हुआ। इसमेसे १ गोली अथवा औचितीके अनुसार गोलिये

देनेसे समस्तसन्निपातोको दूरकरताहै । ईख, जलस्नान, दध्यन्न, नारियलकाजल, द्राक्षऔरखजूर येसव पथ्यहै । केसर, अगर, कपूर, औरचन्दन इनका लेपकरना ॥ २३३ ॥

## २३४ कालाग्निरुद्रो रसः ( षष्ठः )

त्रिक्षारं पञ्चलवणं शुद्धसूतं समं विषम् ।
सर्वं त्रिफलसारेण दिनानि त्रीणि मर्दयेत् ॥
पाचितं वालुकायन्त्रे दिनैकं वज्रमूषया ।
स्वाङ्गशीतलमुद्धृत्य पञ्चपित्तैश्च भावयेत् ॥
फणिपित्तेऽथवा भाव्यं गुञ्जामात्रं प्रदापयेत् ।
सन्निपातान्हरेद्घोरान् दध्यन्नं पथ्यमाचरेत् ॥
नारिकेलोदकं दाहे त्विक्षुखण्डानि भक्षयेत् ।
कालाग्निरुद्रनामायमीश्वरेण प्रकल्पितः १०३९

वै. चि., सन्निपाते ।

भाषा—सज्जी, यवक्षार, सुहागा, पाचोंनमक औरशुद्धपारा येसव वरावर, और इनसवकी वरावर वछनागलेकर सवकी कज्जलीकर त्रिफलाके काढेसे तीनरोज मर्दनकर वज्रमूषामे वन्दकर एकरोज़ वालुका यन्त्रमे पकाकर स्वाङ्गशीतलहोनेपर पाच पित्तोंसे अथवा केवल फणिके पित्तसे भावनादेकर एकएकरत्तीकी गोलिये वनाकर रखछोड़े, यह कालाग्निरुद्र-रस तैयारहुआ । इसकी १ गोली सन्निपातहरानुपानके साथदेनेसे वहुतशीघ्र उसेदूरकरताहै । दही और भात पथ्यमे देवे । रसके देनेपर यदि दाहहोतो नारियलका जल, ईख वगैरह देवे ॥ २३४ ॥

## २३५ कालाग्निरुद्रो रसः ( सप्तमः )

गन्धकाच्च द्वयं ताम्रं त्रिभागं टङ्कणं कणाम् ।
हिङ्गुलं च चतुर्भागं पञ्चभागामृतं भवेत् ॥
यावत्सर्वं मृतं सूतं हंसपादीरसेन च ।
भृङ्गवल्ली च निर्गुण्डी जयन्ती तिलपर्णिका ॥
अर्कमूलरसैरेकविंशतिः प्रतिभावनाः ।
मयूरमत्स्यवाराहमहिषप्रभवैस्तथा ॥ १०४२ ॥
पित्तैर्विभाव्य मतिमान् गुटिकाः कारयेत्ततः ।
वल्लमात्रप्रयोगेण शृङ्गवेररसैस्तथा ॥

र. सा. ३८

कालाग्निरुद्रको नाम सन्निपातकुलान्तकः ॥

र. क. यो,

भाषा—गन्धक १ भाग, ताम्र २ भाग, सुहागा ३ भाग, पीपल ३ भाग, शिंगरिफ ४ भाग, वछनाग, ५ भाग इनसवकी वरावर पारदभस्म देकर हंसराज, भगरा, चित्रक, संभालु, जैत, हुरहुर, आककी जड़, इनप्रत्येकके यथासम्भवस्वरस अथवा काथसे तीनतीन भावनाएं देवे, पर हरएक औषधकी भावनाके अन्तमे मोर, मछली, सूअर, भैसा इनके पित्तोसे भावना देवे । और तीनतीन रत्तीकी गोलिये वनाकर रखछोड़े यह कालाग्निरुद्र रस तैयार हुआ । इसमेसे एक अथवा औचितीके अनुसार गोली अदरखके साथदेनेसे यह सन्निपातके कुलको नष्टकरताहै ॥ २३५ ॥

## २३६ कालाग्निरुद्रो रसः ( अष्टमः )

कांस्यचूर्णं गन्धतालं तुल्यमम्लेन मर्दयेत् ।
रुद्ध्वा पुटेद् गजपुटे पुनर्गन्धं च तालकम् ॥
दत्त्वा चाम्लैर्विमर्द्याथ रुद्ध्वा लघुपुटे पचेत् ।
त्रिंशांशं गन्धतालञ्च दत्त्वाम्लैरथ मर्दयेत् ॥
रुद्ध्वा लघुपुटं दद्यादेवं विंशपुटैः पचेत् ।
अस्य तुल्यं शुद्धसूतं देवदाल्या द्रवैर्दिनम् ॥
मर्दयेद्भावयेत्पश्चाच्चतुरङ्गुलजैर्द्रवैः ।
भक्षयेन्निष्कमात्रन्तु गलत्कुष्टहरः परः ॥
रसः कालाग्निरुद्रोऽयमनुपानं यथोचितम् ॥

र का, र को, कुष्ठाधिकारे ।

भाषा—कासेकाचूर्ण, गन्धक, हरिताल सवसमभागलेकर किसी अम्लरससे मर्दनकर सम्पुटमे वन्दकर दोचार कपडमिट्टीदेकर सुखाकर लघुपुटकी आचदेना । स्वाङ्गशीतलहोनेकेवाद निकालकर तीसवा हिस्सा गन्धक और हरितालदेकर अम्लसे मर्दनकर पूर्ववत् लघुपुट देना और इसीतरह वीसपुटदेनेके वाद इसकी वरावर शुद्धपारा मिलाकर वंदालकेरस और अमलतासकी छालके काथसे एकएकरोज़ मर्दनकर तीनतीनरत्तीकी गोलियें वनाकर रखछोड़े । इसको कुष्टहरानुपानके साथ देनेसे

गलत्कुष्ठको दूरकरताहै। कालाग्निरुद्ररस इसका नाम है ॥ २३६ ॥

### २३७ कालाग्निरुद्रो रसः (नवमः)

भस्म सूतस्यसङ्गृह्य पलमेकं नियोजयेत् ।
चतुष्पलं ताम्रभस्म गन्धकं च चतुष्पलम् ॥
तालकं पलमेकन्तु पलमेकन्तु टङ्कणम् ।
पलार्द्धं वत्सनाभं तु जम्बीराम्लेन पेषयेत् ॥
चित्रमूलरसेनापि मर्दयित्वा पृथक्पृथक् ।
हंसपादीरसेनापि मर्दयेद्याममात्रकम् १०५०
अयं कालाग्निरुद्रः स्यान्नाम्ना रोगार्तिनाशनः ।
व्रीहिमात्रप्रयोगेण ज्वरान् घोरान्निवर्तयेत् ॥
रसेन्द्रो हन्ति च व्याधीन् रसः सर्वत्र पूजितः ॥

व रा., वा., सन्निपाते ।

भाषा—पारेकीभस्म४तोले, ताम्रभस्म औरगन्धक चारचारपल, हरिताल और सुहागा४—४तोले और बछनाग२तोलेलेकर सबको इकट्ठेकर जम्भीरी, चित्रकमूल तथा हंसराजके रसोमे एकएकपहर मर्दनकर रखछोड़े। यह कालाग्निरुद्ररस तैयार हुआ, इसकी जवभरकीमात्रा यथानुपानके साथदेनेसे घोरज्वरोको तत्काल नष्ट करतीहै ॥ २३७ ॥

### २३८ कालाग्निरुद्रो रसः

ताम्रचूर्णस्य कुडवमेकविंशतिभिः पुटैः ।
रसेन मुण्ड्या भृङ्गस्य छिक्किकायाश्च मर्दयेत् ॥
शरावसम्पुटे धृत्वा सप्तमृद्वस्त्रवेष्टिते ।
शुष्के गर्तस्य पात्रोर्द्ध्वस्थितेऽधःकृतरन्ध्रके ॥
अधःपात्रे सूकरस्य बहुमूत्रेण पूरिते ।
अग्निं धमेत्तत्र यथा मूत्रे ताम्रं द्रुतं पतेत् ॥
गालितस्य च पत्राणि कुर्यात्तनुतराणि च ।
छिकाकल्केन लिप्तानि पुनरग्नौ प्रतापयेत् ॥
मूत्रे शीतीकृतान्येवं त्रिवारं कारयेद्बुधः ।
अथ शूकरविड्लेपात्तप्तशीतानि पूर्ववत् ॥
सप्तधा तेषु पत्रेषु लेपमेनं प्रकल्पयेत् ।
रसहिङ्गुलजं तैलं गन्धजं तालसत्त्वकम् ॥
सोमसत्त्वं निष्कनिष्कमर्कदुग्धेन मर्दयेत् ।
लिप्त्वा तेनार्कपत्राणि दाहयेत्प्रहरत्रयम् ॥
शरावसम्पुटे पश्चादूनपञ्चाशता पुटैः ।
अर्कक्षीरे च पक्त्वा च प्रतिकर्षमथान्वितम् ॥
आकारकरभं कृष्णा हरिद्रा मस्तकी तथा ।
शाणमात्रा वटी कार्या सितामध्वनुपानतः ॥
रसः कालाग्निरुद्रोऽयं सन्निपातहरः परः ।
क्षयपाण्डुश्वासकासहरो वार्धक्यमृत्युजित् ॥

र का, सन्निपाते ।

भाषा—ताम्रकाचूर्ण १६ तोले लेकर इसको गोरखमुण्डी और भृङ्गराजके रसोंसे सातसातभावना देकर सम्पुटमे नीचेके सकोरेमे छेदकर छिद्रमे लोहेकातार रखकर तारपर ताम्रकी टिकियोको रखदेना, और सम्पुटको वदकर सातकपड़मिट्टीदेकर सुखालेना। फिर एकगड्ढाखोदकर उसमे सूवरके मूत्रसे भरीहुई कुल्हड़ी रखकर ऊपरसे उसताम्रवाले सम्पुटको रखकर सन्धिवन्द करके अग्निसे धोंकना जिसमेकि वह ताबागलकर उसकुल्हडीमे पड़जाय। उसगलेहुए ताबेके निकालकर वारीकपत्र बनालेना उनपर नकछिकनीका कल्क लगाकर पूर्ववत् अग्निमे तपावे और मूत्रमे पड़े हुएको निकालकर फिर उसीतरह गलावे, इसप्रकार तीनवार करके फिर नकछिकनीकेस्थानमेसूअरकी विष्टाका पोता देकर तपावे और सूअरकेमूत्रमे ७वारबुझावे। पारा, गन्धकऔरशिंगरफ इनका तैल, हरितालका सत्व, सोमलकासत्व येसब चारचारमाशे लेकर आकड़ेके दूधसे मर्दनकर द्रुतताबेके पत्रोपर लेपकर सम्पुटमे रख तीनपहरकी आचदे, इसतरह ४९आच देवे। फिर अकरकरा, पीपल, हल्दीऔरमस्तगी १एकतोला उसमे मिलाकर चारचारमाशेकी गोलियें बनाकर रखले। यह कालाग्निरुद्ररस तैयार हुआ। इसकी १गोली शक्कर औरमधुमे मिलाकर देनेसे क्षय, पाण्डु, श्वास, कास, सन्निपात बुढापा औरमृत्यु इनका नाशहोताहै ॥ २३८ ॥

### २३९ कालानलो रसः ( प्रथमः )

रसं गन्धं मृताभ्रञ्च टङ्कणं च मनःशिला ।
हिङ्गुलं गरलं दारुविषं ताम्रञ्च तत्समम् ॥
विडालपदमात्रन्तु सर्वं शुद्धं विचूर्णयेत् ।
भावना च प्रदातव्या लाङ्गलीमूलकैस्तथा ॥
घोषामूलं तथा देयं मूलं लोहितचित्रकम् ।
अपुष्पफलभूधात्रीमूलं श्योनाकहेमजम् ॥
छागवाराहमायूरमाहिषोमत्स्य एवच ।
एतेषाञ्च ददेत्पित्तमार्द्रकस्य रसेन च ॥
प्रत्येकं मर्दितं शुष्कं चणमात्रप्रमाणतः ।
अशेषान् सन्निपातान् हि क्षणमात्राद् व्यपोहति
वातश्लेष्मकृतान् रोगान् क्षणेनैव विनाशयेत् ॥

र. सु, भै. र., ज्वराधिकारे ।

भाषा—शुद्धपारा, गन्धक, अभ्रकभस्म, टकण मैनसिल, शिंगरिफ, सर्पविष, देवदारु या दारुहल्दी औरशुद्धबछनाग येसब समभाग और ताम्रभस्म इनसबकीबराबर डालकर कलिहारीकीजड़, कड़वी तरोई, लालचित्रक और पुष्प—फलरहितभुंईआँवलेकीजड, सोनापाठाकीछाल, धतूरेकीजड़ इनके यथासम्भवस्वरस अथवा काढेसे अलग२ एकएकदिनभावनादेकर सुखालेना। फिर बकरा, सूअर, मोर, भैंसा और मछली इनकेपित्तोंसे एकएकदिन भावनादेकर अखीरमे अदरखके रसकी १दिनभावनादेकर चनेप्रमाण गोलियें बनालेना । इसकी एकएकगोली अदरखवगैरहके रसकेसाथ देनेसे सन्निपातोंको क्षणमात्रमे दूरकरतीहै । वातश्लेष्मसे पैदाहुए रोगभी बहुतशीघ्रनष्टहोतेहैं । कालानलइसरसकानामहै २३९

### २४० कालानलोरसः (द्वितीयः)

नागं वङ्गं समं सूतं खल्वे कृत्वा तु कज्जलीम्।
हालाहलं त्रिभागं स्यादेकीकृत्य विचूर्णयेत् ॥
आटरूषकनिर्गुण्डीमहाराष्ट्री पुनर्नवैः ।
धत्तूरविजयामुण्डीजलशोषसमुद्भवैः॥ १०६८
एभि र्द्रवैः पृथग्भाव्यं शोष्यं पेष्यं पुनःपुनः।
मत्स्यमाहिषमायूरवाराहच्छागपित्ततः १०६९
चित्रमूलकषायेण मर्दयेद्दिवसाष्टकम् ।
पित्तैः समस्तै र्व्यस्तैर्वा सप्तधा भावयेत्पृथक् ॥
विषतैलैः शिग्रुतैलैः निम्बतैलैश्च मर्दयेत् ।
विविधे सन्निपाते च देयः कालानलो रसः ॥
माषमात्रप्रमाणेन ह्यार्द्रकस्वरसेन च ।
तदभावेभृङ्गजातैः सन्निपाते महागदे॥१०७२॥
रसतापे क्षिपेन्नीरं यथेष्टं शीतलं भवेत्॥
मुनिना कथितो ह्येष वैद्यजीवनहेतवे १०७३॥
गुह्याद्गुह्यतमं प्रोक्तं गोपनीयं प्रयत्नतः ।
अनुपानविशेषेण रामतूणीरबाणवत् ॥१०७४॥

र क. यो,

भाषा—नागभस्म और वङ्गभस्म समभाग, दोनोंकीबराबर पारालेकर कज्जलीबनाकर सर्पकाविष ३भागडालकर घोटकर सुखादे, फिर अडूस, संभाळु, मराठी, पुनर्नवा, धतूरा, भाग, गोरखमुण्डी,समुद्रशोष, इनसबके यथासम्भवस्वरस अथवा क्वाथोंसे एक १ भावनादे पर हरएकभावना सुखासुखाकरदे । फिर मछली, भैंसा, मोर, सूअरऔरबकरा इनकेपित्तोंसे भावनादेकर चित्रककीजड़के काढेसे आठरोज़मर्दनकर पूर्वकथितपित्तोसे ७ भावनादे, फिर बछनागकातैल, सहिजनकातैल, निम्बतैल, इनप्रत्येकसे एकएकरोज मर्दनकर एकएकमाशेकी गोलीबनाकर रखछोड़े । यह कालानलरस तैयारहुआ । इसकी १गोली अदरखकेरस अथवा भागरेके रससे देनेसे सन्निपातनष्टहो। इसरसके देनेसे यदि दाह उत्पन्नहोजायतो उसकेमस्तकपर जबतकउसको ठढ न लगे तबतक ठढे पानीकीधारादे । यह योग बहुतगुप्तहै वैद्योकी आजीविकाकेलिये प्रगटकियागयाहै । अनुपानविशेषसे यह रामबाणकीतरहकामकरताहै ॥ २४० ॥

### २४१ कालानलोरसः (महान्) (तृतीयः)

वराटशङ्खमण्डूरशुक्तिमौक्तिकशुक्तयः ।
गोक्षुराश्चाजदन्ताश्च शशदन्ताश्च तत्खुरम् ॥
मृगदन्ताः श्वदन्ताश्च पुटयेदिन्धनेन च ।
वैक्रान्तकान्तशुल्बानां भस्मान्येतानि मेलयेत्

खल्वे निःक्षिप्य शार्दूलमृगाजमत्स्यपित्तकैः ।
मत्स्येन्द्रशशसर्पाणां पित्तैश्च बहु मर्दयेत् १०७७
करण्डके विनिःक्षिप्य प्रमाणं सर्षपद्वयम् ।
नारिकेलाम्भसा युक्तं त्रिदोषेषु प्रयोजयेत्
सद्यो ज्ञानतमो हन्ति तदाश्चर्यकरं भवेत् ।
त्रिदोषराक्षसकुलं क्षिप्रमेव क्षयं नयेत् १०७९॥
तथा महाविदाहं च क्षुत्पिपासे च कारयेत् ।
मद्यान्नेक्षुरसाद्यैश्च शर्कराजलशीतलैः १०८०॥
तद्दाहशान्तिं कुर्वीत देहे गन्धान्विलेपयेत् ।
श्वासकासादिहृद्रोगपिपासां वातजां हरेत् ॥
महाकालानलरस इति नाम्ना प्रकाशते१०८१

र. क यो., वा., र. कौ ( ज्ञा ),

**भाषा**—कौडी, शंख, मण्डूर, सीप,मोतीकीसीप, गोखरू, बकरीकेदात, खरगोशकेदात औरखुर, मृगकेदात, कुत्तेकेदात, इनसबको इकट्ठेकर हंडीमे बंदकर जलादे, जितना वज़न इनकी राखकाहो उतने वज़नमे, वैक्रान्त, कान्तऔरताम्र इनकीभस्म मिलावे, फिर सिंह, मृग, बकरा, मछली, वडीमछली ( जिसेअङ्ग्रेजीमेहेलकहतेहै ) खरगोश, साप, इनके- पित्तोंसे यथासम्भव मर्दनकरके दोदोसरसो जितनी गोलियें बनाकर रखछोडे। यह महाकालानलरस तैयारहुआ । इसको नरियलकेजलसे त्रिदोषमे देनेसे इसतरह जागृति लाताहै कि आदमियोको आश्चर्य होजाताहै । होशमे आनेकेसाथ अत्यन्तदाह, क्षुधा औरप्यास माळूमपडतीहै। उससमय दाहकीशान्तिके- लिये मद्य, अन्न, इक्षुरस, शक्करकाशरबत, इनसे उसकीशान्तिकरनी उचितहै। औरदेहमे सुगन्धितप- दार्थोंका लेपकरे, इसकेप्रयोगसे श्वासकास, हृद्रोग, वातकीप्यास ये दूरहोतेहै ॥ २४१ ॥

## २४२ कालानलोरसः ( चतुर्थः )

सूतं वङ्गमपक्कमेव कनकाद्बीजञ्च नागं समम्,
वस्वर्धं करहाटमर्कमपि तत्सङ्ख्य तथैवामृतम्।
वस्वंशं गरलञ्च शुल्बमथवा सम्मर्दयेदेकतो,
निर्गुंडीसलिलेनतत्खलुरसः स्यान्नामकालानलः
पीतोजीरकवारिणायमखिलान्
मुद्गप्रमाणोज्वरान्,
सद्योहन्तिविसूचिकादिनिवहं
प्राणान्गतानानयेत् ॥ १०८२ ॥

र. प ज्वराधिकारे ।

टि० अत्ररसे-वस्वंशं गरलञ्च शुल्बमथवाऽतिपद्ये गरला- भावे शुल्बं नियोजित तत्ताम्रचूर्णमेव नियोक्तव्यम न तु भस्म, गरलाभावे नियोजितत्वेन गरलसाधर्म्यस्य यथास्थि- तताम्रे एव सत्वात् ।

**भाषा**—शुद्धपारा, वङ्गभस्म, कच्चेधतूरेकेबीज, नागभस्म येसबसमभाग, इनसबसेचौथाभाग सुवर्ण अथवा अकरकरा, ताम्रभस्म औरबछनाग इनसबका आठवाहिस्सा सर्पविष अथवा ताम्बालेकर सम्भालूके रससे दोतीनरोज़ मर्दनकर मूंगबराबर गोलिये बनाकर रखछोड़े, यह कालानल रस तैयारहुआ, इसकी १ गोलीजीरेके पानीसे देनेसे समस्तज्वरोंको दूरकरताहै। औरसद्यःप्राणापहारक विसूचिका ( हैज़ा ) विल- म्बिका और अलसक इनको तत्क्षण दूरकर गयेहुए प्राणोंको कालकेहाथसे बचाकर पीछेलौटाताहै । इस- लिये इसकानाम कालानल अन्वर्थहै । इसकेदेनेपर दाहवगैरहहोतो सब शीतोपचार करना ॥ २४२ ॥

## २४३ कालान्तको रसः

कुर्याल्लोहमयीं मूषामुन्नतां द्वादशाङ्गुलाम् ।
मर्दितं स्वर्णवाराहीगृहकन्यारसै रसम् १०८३
लशुनै र्यामामात्रञ्च पिण्डीकृत्य निवेशयेत् ।
कृत्वा पूर्वोक्तमूषायां सूतपादञ्च गन्धकम्१०८४
निर्गुण्डीरससम्पिष्टं तन्मूषायां विनिःक्षिपेत्
आच्छाद्य लोहचक्रेण रुद्रयन्त्रेण जारयेत् ॥
एवमष्टगुणे जीर्णे समुद्धृत्य विचूर्णयेत् ।
पञ्चगुञ्जामितं खादेदनुपानं मृगाङ्कवत् ॥
अथकालान्तको नाम रसोऽयं राजयक्ष्मजित् ॥

नि र, र र, र को, क्षयाधिकारे ।

**भाषा**—बारहअङ्गुलऊंचीलोहेकी मूषा बनाकर उसका पेचदार ढक्कन बनावे। फिर १ पलपारेको धतू- रा, वाराहीकन्द, घीकुँआर, लशुन इनप्रत्येककेरससे

एकएकपहर मर्दनकर गोलाबनाकर उसमूपामे रखकर एकतोला शुद्धगन्धकको सम्भालूकेरसमे पीसकर पारेकीगोलीके ऊपररखकर उसको पेंचदारढक्कन लगाकर बंदकरदे। फिरइसको धोंकनीसे धोंके। जिसमेकि गन्धक जलजाय। इसकेबाद फिर निकालकर घोटे और गन्धकजारणकरे, ऐसेअष्टगुणितगन्धकजारणहोनेपर निकालकररखछोडे। यह कालान्तक रस तैयारहुआ इसकी५रत्तीकीमात्रा मृगाङ्ककी तरह अनुपानभेदसे देनेसे राजयक्ष्माका नाशकर आदमीको तन्दुरुस्त बनाताहै ॥ २४३ ॥

## २४४ कालारिरसः ( प्रथमः )

त्रिशाणं पारदञ्चैव गन्धकं टङ्कपञ्चकम् ।
त्रिशाणं वत्सनाभञ्च पिप्पलीदशशाणिका ॥
लवङ्गं च चतुःशाणं त्रिशाणं कनकाद्वयम् ।
टङ्कणं वह्निशाणञ्च पञ्च जातीफलात्क्षिपेत् ॥
मरिचं पञ्चशाणं स्यादाकल्लञ्च त्रिशाणकम् ।
करीरार्द्रकनिम्बूकै मर्दयेच्च दिनत्रयम् ॥१०८९
कालारिरसनामायं वातव्याधिविनाशनः ।
मर्दने भक्षणे नस्ये द्विगुञ्जं सन्निपातजित् ॥

चि. र भ, यो चि., र. क ल., र को, र र. कौ, वातव्याध्यधिकारे।

भाषा—शुद्धपारा ३ शाण, गन्धक ५ शाण, शुद्धवछनाग३शाण, पीपल१०शाण, लौंग४शाण, धतूरेकेबीज३शाण, सुहागा३शाण, जायफल५शाण, मरिच५शाण, अकरकरा३शाण, लेकर सबको कपडछानकर करीर, अदरख, नीबू इनप्रत्येकके- रससे एकएकरोज़मर्दनकर दोदोरत्तीकीगोलियें बनाकर रखछोड़े। यह कालारिरस तैयारहुआ। इसको यथारोगानुपानकेसाथ खाने, लगानेतथा नस्यदेनेसे यह सन्निपातऔर वातव्याधियोंको नष्टकरताहै २४४

## २४५ कालारिरसः ( द्वितीयः )

शुद्धं सूतं मृतं ताम्रं गन्धकं नागरं विषम् ।
जातीफललवङ्गानि कनकं मरिचैः सह ॥
रसाच्चद्विगुणं ग्राह्यं टङ्कणं अष्टमेव च ।
पिप्पली करहाटश्च सर्वार्धे ग्राहयेत्ततः ॥
कर्षमात्राश्च मूताद्याः क्रमेण मरिचान्तिकाः ।
भावना निम्बुनीरेण नागवल्ल्यार्द्रकैस्तथा ॥
पिष्ट्वा सूक्ष्ममिदं योज्यं नस्ये वै भक्षणेऽपि च ।
वारत्रयं सदा देयो रसः कालारिनामकः ॥
सर्वे वाताः शिरोवाताः प्रमेहप्रभवास्तथा ।
सूतिकानाञ्च ये रोगाः सर्वे नश्यन्ति वेगतः ॥
शिरोग्रहः कर्णनादो मन्यास्तम्भो हनुग्रहः ।
धनुर्वातादयोप्येवं बाह्याः पामादयस्तथा ॥

रसायनस, यो चि, र र कौ, वातव्याध्यधिकारे। र. र कौमुद्या भावनाया नागवल्ल्या स्थाने अहिफेन दृश्यते।

भाषा०—शुद्धपारा, गन्धक, विष, ताम्रभस्म, सोंठ, जायफल, लौंग, धतूरेकेबीज, मिरच येसब समभाग, भुनाहुआसुहागा पारेसे द्विगुण, पीपल और अकरकरा सबसे आधे प्रमाणमे ग्रहणकरे। इनसबको कूटकपडछानकर नीबू, पान, अदरख इनकेरसोंसे एकएक भावनादेकर तीनतीनरत्तीकी गोलियें बनाकर रखछोड़े। यह कालारिरस तैयारहुआ इसको यथानुपानसे खाने तथा नस्यमे दिनमे तीनवक्त देनेसे समस्त शिरोवात, प्रमेहजन्यवात, सूतिकारोग, शिरकाजकड़ना, कर्णनाद, मन्यास्तम्भ, हनुग्रह और धनुर्वातादि तथा बाहरके पामादि येसब नष्टहोतेहैं ॥ २४५ ॥

## २४६ कालारिरसः ( तृतीयः )

शुद्धसूतं समं गन्धं मृतं नागं सतुत्थकम् ।
जीरकं सैन्धवं तुल्यं तिक्तकोपातकीद्रवैः ॥
पिष्टं तल्लेपनाद्धन्ति भक्षणाच्च भगन्दरम् ।
रसः कालारिनामायं गुञ्जैकोमृत्युजिद्भवेत् ॥

यो म., र र, व रा, भगन्दरे।
वसवराजीयेऽस्यकालाग्निरुद्रइतिनाम

भाषा—शुद्धपाराऔरगन्धक, नागभस्म,तुत्थभस्म, जीरा, सेन्धा येसब समभागलेकर कड़वी तरोईके रससे एकदोरोज़ मर्दनकर इसकी एकएकरत्तीकी

गोलिये बनाकर यथानुपानकेसाथखानेतथालगानेसे भगन्दरको नष्टकरतीहै ॥ २४६ ॥

### २४७ कालेश्वरोरसः ( महान् )

मृत लोहं मृतं वङ्गं मृतार्कं मृतमभ्रकम् ।
शुद्धसूतश्च गन्धश्च माक्षिकं हिङ्गुलं विषम् ॥
जातीफलं लवङ्गश्च त्वगेलानागकेसरम् ।
उन्मत्तस्य च बीजानि जयपालश्च शोधितम् ॥
एतानि समभागानि मरिचं हरनेत्रकम् ।
सर्वं द्रव्यं न्यसेत्खल्वे लोहदण्डेन मर्दयेत् ॥
शक्रासनस्य स्वरसैः भावयेदेकविंशतिम् ।
गुञ्जामात्रा प्रदातव्या चार्द्रकस्य रसैर्युता ॥
तदर्धं बालवृद्धेषु पथ्यं देयं यथोचितम् ।
पञ्च कासान् क्षयं श्वासं राजयक्ष्माणमेव च ॥
सन्निपातं कुष्ठरोगमभिन्यासमचेतनाम् ।
महाकालेश्वरो हन्ति कालनाथेन भाषितः ॥

र चं, भै र, वै. क, र सु, र.का, कुष्ठे ।

भाषा—लोहा,वङ्ग,तावा,अभ्रक, इनसवकीभस्मै शुद्धपारा, गन्धक औरवछनाग, सोनामाखी, शिंगरिफ, जायफल,लौंग,तज,इलायची, नागकेसर, धतूरेके बीज, औरजमालगोटा ये शुद्धकियेहुए, सवसमभाग, मरिच२भाग, इनसवको भाग अथवा गाजेकेरससे लोहकेडडेसे २१ रोज मर्दनकर एकएक रत्तीकीगोलियें वनाकर रखछोड़े, यह कालेश्वर तैयारहुआ । इसकी जवानोकेलिये १ गोली औरवच्चे तथा वुड्ढोकेलिये ½ गोली अथवा औचितीके अनुसार अदरखकेरसके साथदेनेसे पाचकास, श्वास, धातुक्षय, राजयक्ष्मा, सन्निपात, कुष्ठ, अभिन्यास, मूर्च्छा येसव दूरहोतेहै यह कालनाथका बनाया हुआहै ॥ २४७ ॥

### २४८ काश्मीरादिगुटिका

काश्मीरजं टङ्कणजातिपत्र्या-
वाकल्लकंहिङ्गुलरक्तबोलम् ।
जातीफलं शौण्डिलदेवपुष्पं
तथाहिफेनं सममेव कुर्यात् ॥११०५॥
सुनागवल्लीरसकेन मर्दितं
चणेन तुल्या वटिका कृता शुभा ।
अद्यान्निशादौ सहदुग्धशर्करां
रामाशतद्रावणके पटीयसीम् ॥११०६॥

स्त्री वि., वाजीकरणे ।

भाषा—केसर, सुहागा, जावित्री, अकरकरा, शिंगरिफ, एलिया, जायफल, बडालौंग, ( नरलौंग ) और अफीम येसवसमभागलेकर पकेहुएपानकेरसमे घोटकर चनेकेवरावरगोलियें बनाकर दूधओरशक्करके साथ इसमेसे १ गोलीरात्रिकेप्रारम्भमें खानेसे विदग्धस्त्रीको प्रसन्नकरसक्ताहै ॥ २४८ ॥

### २४९ काश्यपीपोट्टली ( कपर्दपोट्टली )

भस्मपारदयुतंवलियुग्मंगोजलेनपरिपेष्य वराटीः
पूरयेचखलुपीततमाश्चपिष्टटंकणविमुद्रितवक्त्राः
भाण्डमध्यमवरुध्यविमुद्रय
शुष्कं पचेद्गजसम्पुटमध्ये ।
स्वाङ्गशीतममुमाशुमरीचै
स्तद्विभागतुलितैःपरिपेष्य ॥ ११०८॥
काश्यपेनमुनिनाभणितेयं
निष्कमात्रमशिता च घृतेन ।
अश्वगन्धकरजःपयसानुपानमत्रगदितंबलवृद्ध्यै
पोट्टलीकाश्यपीनाम्ना दुर्बलेबलकारिणी ।
बहिःस्थूलेन्तरेसत्त्वहीनानां साप्रशस्यते१११०

चि क, व रा, कार्श्ये । वसवराजीये कार्श्यपोटक

भाषा—पारेकीभस्म१भाग, गन्धक२भा., गोमूत्रमेपीसकर पीलीकौडियोंमे भरकर सुहागेसे उनकामुंहवंदकरदेना । औरहडीके वीचमेरखकर ६-७ कपडमिट्टीदेकर सुखाकर गजपुटकीआचदे । स्वाङ्गशीतलहोनेपर निकालकर उनसेदूनीकालीमिर्च मिलाकर खूबपीसकर रखछोड़े, यह काश्यपीपोट्टली रस तैयारहुआ इसकी४ माशेकीखुराक घीकेसाथचाटकर असगन्धकाचूर्ण १तोला दूधमेडालकर पिलानेसे दुर्वलऔरवलहीनको वलकीवृद्धिहोतीहै वाहरसेस्थूल और भीतरसेनिःसत्त्व आदमियोंकेलिये यह मेदोवृद्धिको दूरकर वलकोदेतीहै ॥ २४९ ॥

## २५० कासकर्तरीरसः

अमृतं पारदं गन्धं नेपालं च समांशकम् ।
अर्कमूलकषायेण मर्दयेद्याममात्रकम् ॥१११९॥
दोलायन्त्रे द्वियामान्त पाचितं च समुद्धरेत् ।
गुञ्जामात्रं प्रदातव्यं पूर्वकासं नियच्छति १११२

व. रा. कासे ।

भाषा—शुद्धवछनाग, पारा, गन्धकऔरजमालगोटा येसबसमभागलेकर आककीजड़केकाढेसे एकपहरमर्दनकर गोलाबनाकर आककीजड़केकाढेमे स्वेदनकर दोदोरत्तीकीगोलियें बनाकर यथानुपानसे देनेसे प्रारम्भकेकासको यहगोली दूरकरतीहै२५० ॥

## २५१ कासकुठाररसः ( प्रथमः )

हिङ्गुलं मरिचं गन्धो सव्योषं टङ्कणन्तथा ।
द्विगुञ्जश्चार्द्रकद्रावैः सन्निपातं सुदारुणम् ॥
कासं नानाविधं हन्ति शिरोरोगं चदारुणम्॥

र स. र सु., कासे ।

भाषा—शिंगरिफ, मरिच, गन्धक, त्रिकटु, सुहागा इनको घोंटकर २रत्तीकीमात्रा अदरखकेरसके-साथदेनेसे दारुणसन्निपात, नानातरहकीखासी और शिरोरोगको दूरकरताहै ॥ २५१ ॥

## २५२ कासकेसरीरसः

गन्धं त्रिकटुकं चाभ्रं रोहिणी तालकं समम् ।
पञ्चकोलकषायेण मर्दयेद्दिवसत्रयम् ॥१११४॥
मूषायां भूधरे पाच्यं स्वाङ्गशीतं समुद्धरेत्
मधुना चानुपानेन ह्यूर्ध्वकासं विनश्यति १११५

व रा, वै चि ऊर्ध्वकासे ।

टि० वै. चिन्तामणौ मूषाया भूधरे पाच्यमित्यस्याग्रे भावनासु विशेषं दृष्ट्वा नारायणरसइतिनाम स्थापितम्, द्रष्टव्यो वै चिन्तामणीयनारायणोरस ।

भाषा—शुद्धगन्धक, त्रिकटु, अभ्रकभस्म, कुटकी, रसमाणिक्य या शुद्धहरिताल इनसबको समभागलेकर कूटकपड़छानकर पञ्चकोल ( पीपल, पिपलामूल, चव्य, चित्रक, सोंठ )के काढेसे ३रोज़ मर्दनकर अन्धमूषामे रख भूधरयन्त्रमे लघुपुटसे पकावे। स्वाङ्गशीतलहोनेपर निकालकर इसकी २ रत्तीसे ३ रत्तीतक मात्रादेनेसे ऊर्ध्वश्वास, कास, रक्तविकार, त्वग्विकार वगैरह नष्टहोतेहैं ॥ २५२ ॥

## २५३ कासनाशनोरसः

ताम्रभस्मरसगन्धटङ्कणंवृद्धितस्तुजयपालकैःसह
आर्द्रकेण परिमर्द्य वल्लकं रेचनाय
यदि वा नियोजितम् ॥ १११६ ॥
त्र्यूषणेनतरुवल्लिकाभवं
क्वाथमत्र पिब कासनाशनम् ।
आटरूपमथवा गुडान्वितं
त्र्यूषणेन गुडयुक्तमुण्डिकाम् ॥१११७॥
रक्तवान्तिशमने त्वलक्तकं
क्षौद्रकेण परिमिश्रितं पिबेत्
सर्ववान्तिशमनश्च काकिनीमूलचूर्णं
घृतहिङ्गुसंयुतम् ॥ १११८ ॥
शाखिरुण्डमथ गौरजीरकं
भृष्टमाज्यसहितं रुचौ हितम् ।
दुग्धिकापि विजयाऽप्यजाजिका
शाखिरुण्डमतिसारनाशनम् ॥१११९॥
तीव्रतापविनिवृत्तिदायकं
चन्द्रयुक्तरसराजसेवनम् ।
मत्स्यनेत्रघनशब्दपाटलामूलचूर्णमति
शोपनाशनम् ॥ ११२० ॥
वान्तिशोपशमनश्चचोरकं
मालतीफलमिहास्य शोधनम् ।
तापशोपविनिवर्तकःसितासंयुतश्च
यवचिञ्चिकारसैः
कासरोधशमनी मुखेन वा माधवी
मधुयुता धृता निशि ॥ ११२१ ॥

र दी, कासाधिकारे ।

भाषा—ताम्रभस्म १ भा०, शुद्धपारा २ भा०, गन्धक ३ भा०,सुहागा४भा० औरजमालगोटा५भाग लेकर सबकोअदरखकेरसमे एकदिनमर्दनकर तनि-तीनरत्तीकीगोलियेंबनाकर रखछोड़े, इसकी १ गोली-

देनेसे रेचनहोकर खासीऔरश्वासनष्टहोंगे। त्रिकटुकेसाथदेकर आकाशवेलकाकाढापिलानेसे श्वासनष्टहो, अडूसकीपत्तीऔरगुड, अथवात्रिकटु, अथवागुडऔरगोरखमुण्डी इनकेसाथदेनेसे श्वासनष्टहो । महावर ( अलक्तक ) केसाथ मधुमिलाकरदेनेसे रक्तकीवमन वदहोतीहै । श्वेतगुञ्जाकामूल, हींगऔरघी इनकेसाथ देनेसे सवतरहकी वमन वदहोतीहै । माई, भुना सफेदजीरा और घीके साथदेनेसे अरुचिका नाशहोता है । दूधी ( नागार्जुनी ), भाग, जीराऔरमाई, इनकेसाथदेनेसे अतिसारदूरहो, कपूरकेसाथदेनेसे ज्वरकाघोरदाह निवृत्तहो । मछेछी, नागरमोथा, पाटलाकीजड, इनकेसाथदेनेसे अत्यन्तशोपकानाशहो। चोरक खरजवायण केसाथदेनेसे मुखकीशुद्धिहोतीहै, शक्करऔरतितलीकेसाथदेनेसे तापकाशोपनिवृत्तहो, माधवीकेपुष्प औरमधुकेसाथ गोलीवनाकर मुहमेरखनेसे सवप्रकारकी खासीनिवृत्तहोतीहै ॥ २५३ ॥

## २५४ कासश्वासावधूननोरसः

**रसभागो भवेदेको गन्धकस्तु द्विभागिकः ।**
**यवक्षारस्त्रिभागः स्याद्रुचकन्तु चतुर्गुणम् ॥**
**ऊषणं पञ्चभागश्च सर्वमेकत्र कारयेत् ।**
**सुधारसेन संसिक्तो वल्लः शर्करया युतः ॥**
**श्वासं कासं तथा हिक्कां हन्यात्पञ्चविधामपि ।**
**क्षयरोगं निहन्त्याशु तूलराशिमिवानलः ॥**

रसायनस, नि र., र चं., यो र, र सु., वै चि., र,। वै. चि रसावतारयो रसेन्द्र इति नाम ।

**भाषा**—शुद्धपारा १भाग, गन्धक २ भाग, यवक्षार ३ भा., सचल ४ भा., मिरच ५ भा., सवको इकट्ठे कूटछानकर थूहरकेदूधमे घोटकर तीनतीनरत्तीकी गोलियें वनाले । इसकी १गोली शक्करकेसाथदेनेसे श्वास, कास, पाचप्रकारकीहिचकी, क्षयरोग, इनसवको यह इसतरहनष्टकरताहै जैसेकि रुईकेसमूहको अग्निनष्टकरताहै ॥ २५४ ॥

## २५५ कासश्वासहरीगुटिका

**रसभागो भवेदेको गन्धको द्विगुणो मतः ।**
**टङ्कणो रसभागः स्याद्यवक्षारस्त्रिभागिकः ॥**
**सर्वं खल्वे विमर्द्याथ स्नुहीक्षीरेण भावयेत् ।**
**सप्तधा सितया वल्लं द्विवल्लं वा नियोजयेत् ॥**
**हरेत्पञ्चविधं कासं श्वासं चैवातिदारुणम् ॥**

रसायनस., कासे श्वासे च ।

**भाषा**—शुद्धपारा १ भाग, गन्धक२भाग, सुहागा१भा., यवक्षार ३ भाग, सवकोथूहरकेदूधसे मर्दनकर सातभावनादे । इसकी६रत्ती अथवा योग्यतानुसार ३रत्तीकीगोलियें वनाकर देनेसे पाचप्रकारकाश्वास औरकास इनको नष्टकरतीहै ॥ २५५ ॥

## २५६ कासंसंहारभैरवोरसः

**रसगन्धकताम्राभ्रशङ्खटङ्कणलोहकम् ।**
**मरिचं कुष्ठतालीसं जातीफललवङ्गकम् ॥**
**कार्षिकं चूर्णमादाय दण्डेनामर्द्य भावयेत् ।**
**भेकपर्णीकेशराजनिर्गुण्डीकाकमाचिकाः ॥**
**द्रोणपुष्पी शालपर्णी ग्रीष्मसुन्दरकस्तथा ।**
**भार्गी हरीतकी वासा कार्षिकैः पत्रजै रसैः ॥**
**वटिकां कारयेद्वैद्यः पञ्चगुञ्जां प्रमाणतः ।**
**श्रीमद्गहननाथेन कासंसंहारभैरवः ॥ ११२० ॥**
**रसोऽयं निर्मितो यत्नाल्लोकरक्षणहेतवे ।**
**वासाशुण्ठीकण्टकारीक्राथेन पाययेद्बुधः ॥**
**वातजं पैत्तिकं कासं श्लैष्मिकं चिरजं तथा ।**
**कासं नानाविधं हन्ति श्वासमुग्रमरोचकम् ॥**
**वलवर्णकरः श्रीदः पुष्टिदः कान्तिवर्धनः ॥**

र सं, र सु, र. च, व, भै र, र. र, कासे ।

**भाषा**—पारा, गन्धक, ताम्रभस्म, शङ्खभस्म, सुहागा, लोहभस्म, मिर्च, कुठ, तालीसपत्र, जायफल, लौंग येसव एकएकतोले लेकर ब्राह्मी, भगरा, सम्भालू, मकोय, गूमा, शालपर्णी, ग्रीष्मसुन्दर ( हरमल ), भारङ्गी, हरैं, अडूसाइनसवके पत्तोकारस एकएकतोलालेकर उसमे मर्दनकर पाचपाचरत्तीकी गोलियें वनाकर रखछोडे, यह गहननाथका कहाहुआ कास संहारभैरव है । इसकी १गोलीदेकर अडूसा, सोंठऔरभटकटैया इनकाकाढापिलानेसे वातज, पित्तज

औरकफज, बहुतदिनके श्वासकास और अरुचि ये नष्टहोतेहैं, औरबल, वर्ण, लक्ष्मी, पुष्टि तथा कान्तिको देताहै ॥ २५६ ॥

## २५७ कासहरो रसः

तारपिष्टौ शिलां क्षिप्त्वा हरितालश्चतुर्गुणम् ।
वासागोक्षुरसाराभ्यां मर्दितः प्रहरद्वयम्११३३
प्रस्विन्नो वालुकायन्त्रे गुञ्जाद्वितयसम्मितः ।
कासं त्रिकटुनिर्गुण्डीमूलचूर्णयुतो हरेत्११३४

र. चं, कासे ।

भाषा—शुद्धपाराऔरचादीकाचूर्ण इनकोमिलाकर किसीअम्लके योगसे रगड़कर पिष्ठीबनालेना, उसमेपारेकीबराबर मैनसिल और चौगुनी हरितालडालकर अडूसाऔरगोखरू इनके स्वरस अथवा क्वाथोंसे दोपहरघोटकर शरावसम्पुटमे बन्दकर सुखाके वालुकायन्त्रमे स्वेदनकर २ रत्तीकी मात्रा संभालूकीजड़केचूर्ण और त्रिकटुकेसाथदेनेसे पाचप्रकारकी खासीको दूरकरताहै ॥ २५७ ॥

## २५८ कासहरो योगः

शङ्खस्नुक्तुत्थगन्धालमरिचं विषटङ्कणम् ।
लौहे लौहेन मृदितं यामद्वादशकं दृढम् ॥
खण्डेनकासजित्तस्यमरिचेनसमा गुटी ११३५

र. का, कासे ।

भाषा—शङ्खभस्म, थूहरकादूध, तुत्थभस्म, शुद्धगन्धक, हरिताल, मरिच, शुद्धवछनाग और भुनाहुआसुहागा सबसमभागलेकर लोहेकीखरलमे लोहेकेडंडेसे बारहपहर घोटकर मरिचप्रमाणगोलीबनाकर खाडकेसाथ देनेसे तमामकासदूरहों २५८॥

## २५९ कासाङ्कुशो रसः ( प्रथमः )

पाठायवक्षारमधूकसार
रसालमाक्षीकनिशाकृशानवः ।
सव्योषसिंहीफलसिन्धुलाङ्गली–
विषाणि तुल्यानि विचूर्णितानि ११३६
छायासु शुष्काण्यथवाऽऽर्द्रकाग्नि–
रसाचितानि प्रतिनिर्मितानि ।
कोलास्थितुल्या गुटिका विकारं
प्रवासयेत्कासभवं नराणाम् ॥११३७॥

र० ( मा० ), कासविकारे ।

भाषा—पाठा, यवक्षार, महुआकाहीर, पारा, शुद्धहारिताल, सोनामाखी, हल्दी, चित्रक, त्रिकटु, भटकटैयाकेफल, सैन्धव, करिहारीकीजड़ औरबछनाग ये विशुद्ध औरसमभागलेकर चूर्णबनालेना । अथवा अदरखऔर चित्रकके रसोसे घोटकर बेरकीगुठलीके बराबर गोलिये बनाकर छायामे सुखालेना । इसकी १ गोलीदेनेसे यह मनुष्योंके कासरोगकोदेशनिकाला देदेताहै ॥ २५९ ॥

## २६० कासाङ्कुशो रसः ( द्वितीयः )

दरदं मरिचं मुस्तं टङ्कणं च विषं समम् ।
जम्बीराद्भिश्च सम्मर्द्यकुर्यान्मुद्गसमां वटीम् ॥
आर्द्रकस्य रसेनैव कासं श्वासं व्यपोहति ।
कासाङ्कुशरसो ह्येषः सर्वकासनिवारणः ११३९

चि र भ ,वै चि , वैद्यचिन्तामणौकासकेसरीतिनाम ।

भाषा—शिंगरिफ, मरिच, नागरमोथा, सुहागा, शुद्धवछनाग, येसब समभागलेकर जम्भीरीकेरसमे घोटकर मूगकेबराबर गोलियें बनाकर अदरखके रसकेसाथदेनेसे यह कासऔरश्वासको दूरकरताहै । ॥ २६० ॥

## २६१ कासान्तको रसः

सूतो गन्धो विषश्चैव शालपर्णी च धान्यकम्॥
यावन्त्येतानि चूर्णानि तावन्मात्रं मरीचकम् ॥
गुञ्जाचतुष्टयं खादेन्मधुना कासशान्तये११४०

र. स, ध, र. सु कासे ।

भाषा—शुद्धपारा, गन्धक, वछनाग, शालपर्णी औरधनिया येसब समभाग औरइनसबकीबराबर मिरचलेकर सबका खूबबारीकचूर्णकर मधुके साथ देनेसे सबप्रकारके कास नष्टहोतेहैं ॥ २६१ ॥

## २६२ कासारिवटी ( पित्तकासान्तक—त्रिनेत्र )

अभ्रकं हरबीजञ्च तीक्ष्णशुल्वसमन्वितम् ।

कासमर्दवरागस्तिवेतसाम्लै र्विभावयेत् ॥
चतुर्गुञ्जा वटी हन्ति कासं पञ्चविधं तथा

चि. सा, र सु, र. को (कासनाशन), रसायनस, र (कासघ्न), यो म (कासहावटी), रसावतारे भावनाया वेतसाम्लेन भावना न प्रदत्ता, रसेन्द्रम (कासमर्दनीवटी)। कासे।

टि०—रसराजसुन्दरे अस्याश्चतुर्पुस्थानेषु पाठोस्ति तत्र पित्तकासान्तक, कासारि,तिक्तत्रय, त्रिनेत्र, इतिनामानिस्थापितानि। तत्र कासारिवव्या हरवीजस्थितिरस्ति अन्यत्र नास्ति। आधिक्ये कासमर्दवरारसै रित्यस्य स्थाने कासमर्दत्वचोरसैरितिदत्त कासमर्दस्याल्पक्षुपत्वात्सर्वस्यापिग्रहणमुचित न पुन स्तत्त्वगुत्पाटनमिति, त्वच इति तु वरास्थाने भ्रमाद्यत्यास समजनीति प्रतिभाति। पित्तकासान्तके र. स, र चं., ध., वै. चि,। त्रिनेत्रे र क, र. को, र. र, र क. ल., व रा, नि र, । रसरत्नाकरे अगस्त्यस्थाने सालोगृहीतं इतिविशेष। अत्रेद विचारास्पद यत्कासारिवव्या पारदस्थितिरस्त्यत पारदप्रक्षेपेणगुणवृद्धिरेवास्ति न कापि हानिस्तत्स्थिताविति विचार्य सर्वेषामेकस्मिन्नेवरसेऽन्तर्भाव सर्व पद हस्तिपदे निमग्नमिति न्यायमङ्गीकृत्य कासारिवव्यामेव सवेषा समावेश कृतोस्ति। अस्य रसस्य कासारिवटी १, कासनाशन २, कासघ्न ३, कासहावटी ४, कासमर्दनीवटी ५, पित्तकासान्तक ६, तिक्तत्रय ७, त्रिनेत्र ८, इति विचारमकृत्वाष्टसुस्थानेषु अष्टौपाठाविन्यस्ता सन्ति तेच महाभ्रमोत्पादकाएवेति सुधीभिर्विभावनीयमित्यलमतिपल्लवितेन।

भाषा—अभ्रकभस्म, शुद्धपारा, लोहभस्म, ताम्रभस्म, येसब समभागलेकर कसोजी, त्रिफला, अगस्तिऔरअम्लवेत इनके रसमे घोटकर चनेप्रमाणगोलीबनाकर मुहमे रखनेसेपांचप्रकारकी खासीको दूरकरती है ॥ २६२ ॥

## २६३ कासीसबद्धो रसः

पलं रसं हि कासीसै र्युतं पञ्चगुणैः सह।
मर्दयेद्यामपर्यन्तमर्जुनस्य त्वचो रसैः ॥११४२
शरावसम्पुटे रुद्ध्वा पुटेत्क्रोडपुटेन हि।
रसः कासीसबद्धोऽयं मधुना वल्लतुल्यकः ॥
शाणो बाकुचिकायुक्तः सेवितो हन्ति निश्चितम्
त्रिभि र्मासैः किलासं हि दद्रूण्यपि विशेषतः ॥

र. र. स, र क, चि क, कुष्ठे।

भाषा—शुद्धपारा १ भाग, शुद्धहीराकसीस ५ भा. इनदोनोंको अर्जुनकीछालकेरस अथवाकाथसे एकपहर मर्दनकर शरावमे वन्दकर वराहपुटकी आचदे; स्वाङ्गशीतलहोनेपर निकालकर ३ रत्तीकी मात्रामे मधुकेसाथदेकर ऊपरसे ४ माशे बाकुचीके बीजोंका चूर्णदेवे। इसतरह तीनमहीनेलगातार सेवनकरानेसे श्वेतकुष्ट औरदद्रु इनको यह नष्टकरताहै ॥ २६३ ॥

## २६४ कासीसादि रसः

कासीसं कृष्णनागं क्षितिधररुधिरं
नीलमभ्रं सुकान्तं,
हेमाङ्गं भूमिसारं सलिलरिपुदलं
मेहतिष्यारिबीजम्।
गोरेखा चारिमेदः क्षितिरुहसहितं
श्वेतगुञ्जाङ्घ्रिबीजं,
कापित्थास्थिमिश्रं क्षितिफलसहितं
रोहिणी चाक्षमिश्रम् ॥ ११४५ ॥
सर्वं सम्पिष्य तोये करिविजयभुवा
मोदकानक्षमात्रान्,
कुर्यात्तक्रेण देयं क्षपयति निखिलं
मूत्ररोगं त्रिरात्रात्।
सप्ताहात्कल्पनाशं तृषमतिबहुलां
हन्तिपक्षाद्विधत्ते,
मासात्सर्वाङ्गवृद्धिं मुनिभिरभिहितो
मेहिनां गुह्ययोगः ॥ ११४६ ॥

र र स., र. को (क्षयगुटी), र र कौ,।

भाष्यम्—अत्र (कासीसादिरसे)–मुनिभिरभिहिता मेहिना गुह्ययोगा, इत्यनेनकृष्णनाग, क्षितिधररुधिरं, सुकान्त,हेमाङ्ग, भूमिसार, सलिलरिपुदल, मेहतिष्यारिबीज,गोरेखा,क्षितिरुहसहितं, क्षितिफलसहित, करिविजयभुवःइत्यादिभिश्च अस्मिन्नसे यद्यद्द्रव्यजातं निहितं तत्तत्प्रायो लाक्षणिकमस्ति इति स्पष्ट योगघटयित्रा प्रतिज्ञातम्, तेन कासीसं प्रसिद्धम्। कृष्णनागमित्यत्र कृष्णञ्च नागश्चेति समाहारद्वन्द्वे कृष्णशब्देन शिलाजतु, लोहभस्म,पिप्पली,मरिचाऽअहिफेनानि गृह्यन्ते।

नागेन निरूप्य नागभस्म,नागबला च गृह्यते । **क्षिति-धररुधिरमिति**-क्षितिधराः पर्वतास्तेषु रुधिरमिव रुधिरमिति व्युत्पत्त्या रुधिरं शरीरे धमनीस्थं रक्तवर्णं तिष्ठति शिरासु कृष्णतारक्तिमविशिष्टम्,तत्पुनरपि पार्वतपार्थिवभेदेन द्विविधम्—तत्र रक्तवर्णं माणिक्यादि रत्नजातम् । कृष्णतारक्तिमविशिष्ट गोमेदोगैरिकप्रभृति । वानस्पत्य कम्पिल्लकम्—रोहिणीवीजक—शाल्मलीपलाशादिजातोनिर्यासनिकरः । **नीलं**नीली, नीलमणीराजावर्तकश्च । **अभ्र**मभ्रकभस्म तदुत्पादकं पाषाणञ्च, यस्य रसग्रन्थेषु घनपाषाणमिति नाम । गुर्जरे घापाणेति नाम्ना प्रसिद्धम् । वानस्पत्यं-मुस्तकं देवताडश्च । **सुकान्तमिति**. सुष्टुकान्ति र्यस्मिन्यस्यानेनवेति व्युत्पत्त्या कान्तपाषाणभस्म-कान्तलोहभस्म मौक्तिकञ्च गृह्यते । **हेमाङ्गमिति**-हेम्नोऽङ्गमिति व्युत्पत्त्या रजतं ताम्रञ्च । द्वन्द्वमेलापके अन्यधात्वपेक्षया शीघ्रमिलनशीलत्वात्, हेम च तदङ्गञ्चेति व्युत्पत्त्या यत्रान्यस्य कस्यचिदप्युपस्थिति र्नास्ति तत्र स्वस्मिन्नङ्गशब्दव्यवहारो भवति, व्यपदेशिवद्भावात् । किञ्च उत्पाद्यमानरसापेक्षया तस्य रसाङ्गता अव्याहताऽस्त्येवेति, हेमभस्म ग्राह्यम् । हरिद्रा,दारुहरिद्रा,च । **भूमिसारमिति**—भूमि र्जम्बूद्वीपरूपा तत्र सारो जम्बूवृक्षस्तन्नाम्ना एतद्द्वीपस्य प्रख्याप्यमानत्वात्, तस्य सारस्तत्फलमज्जा ‘ सारो वले स्थिरांशे च मज्जि पुंसि जले धने । न्याय्ये क्लीव त्रिषु ’ इति **मेदिनी**वाक्यात् । तदुक्तेष्वर्थेषु सारोऽय च "सर्वतः सारमादद्यात्पुष्पेभ्य इव मक्षिका इति' साराण्यतो वक्ष्यामीति, चरकीयवचनात्सारशब्दस्य यत्किञ्चिद्विशेषमादाय सारस्यार्थनियत्तीकरणं दुर्वारं । तथाप्यत्र प्रकरणस्यार्थनिश्चयीकरणेसर्वतोऽर्प्यहितत्वादत्र ( कासीसादिरसे ) प्रमेहप्रकरणात् यानि प्रमेहघ्नेऽती व शक्तिमन्ति द्रव्याणि, तानि सर्वाण्यपि सारशब्देन ग्राह्याणि—दोषोहिवस्तौसमुपेत्यमूत्रं सन्दूष्य मेहाञ्जनयेद्यथास्वमितिचरकीयसिद्धान्ताद्यदस्तु मूत्रदोषहरणसमर्थं रसादिशुक्रान्तधातूनामविच्छिन्नानुकूलपरिणामपरम्परासम्पादकमोजसः शीघ्रमुत्पादकञ्च तत्तत्सर्वमपि प्रमेहहरणसमर्थं भवतीति निष्कृष्ट सिद्धान्तादत्र प्रायो यद्यत्सारभूत तत्सर्वमप्यत्र नियुज्यते । शरीरे ओजोधातोस्सर्वधातुसाररूपत्वात् । समानेन क्षीणा धातवो वर्धन्ते । तद्विपरीतेनतु क्षीयन्त इति चिकित्साशास्त्रसिद्धान्तात् । भूमिसारशब्देन प्रथमतो हेमादिधातवो गृह्यन्ते । धातुष्वपि रसेश्वरसिद्धान्तेन सर्वेषा धातूनामुत्पत्तिस्थितिलयकारणत्वात्पारदः समुपतिष्ठति । तदनु लोहादयः सर्वेऽपि । अथच भूम्या खनिरूपाया सारो रत्नसमुदायस्तत्रापि हीरकं सारो वैक्रान्तश्च । यद्वा भूम्या सारो गन्धो गन्धवती पृथ्वीति तस्याः स्वरूपस्य गन्धेनैव प्रकाश्यमानत्वात्, भूमिसारेण गन्धवर्गस्य ग्रहणम् वा । तेन यथौचित्या एलाकुङ्कुमकस्तूरिकाऽम्बरादीना ग्रहणं कार्यम्, एलादिगणः सुश्रुते सू० ३८ अ. २४ श्लो., । यद्वा सितोपला,मधु,दुग्धघृतादयो ग्राह्यास्तेषा स्पष्टतया भूमिसारत्वात् । **सलिलरिपुदल**मिति—सलिलमितिजलराशिस्समुद्रस्तस्यरिपु रगस्त्यः पुरा तेन समुद्रशोषणात्—समुद्रशोषः । अथच अगस्त्याख्यो द्रुमस्तस्यो-र्दलानि पत्राणि बीजानि वा । शुष्कावस्थाया प्रायशो बीजाना दलनस्वभावत्वात् ,तन्मज्जग्रहीतृभिर्वा बीजाना निर्विवादं दाल्यमानत्वात् । अथवा सलिल शुक्रार्तवरूप तस्याधिकप्रमाणेन दोषवशात्प्रवर्तमानस्य रिपु अवरोधक शीतवीर्यं बब्बूलिकादि तद्दलं—पत्रमिति वाऽर्थ । **मेहतिष्यारिबीजमि**ति मेहश्च तिष्यश्च तयोरारिभूतं यद्बीजमिति समासे आरिबीजस्य द्वन्द्वान्तपातित्वान्मेहारिबीज तिष्यारिबीजञ्चेति सञ्ज्ञाते मेहस्यायुर्वेदे प्रसिद्धस्य नानादोपजत्वादिभेदेन विंशतिभेदभिन्नस्य तस्यारिभूतानि बीजानि तुवरक, महानिम्बामलकाङ्कोलगोक्षुरकेक्षुरकबलोटिङ्गणकमलबब्बूलादिजातानि ग्राह्याणि । 'तिष्यः कलियुगे ऋक्षे तिष्या धात्री च कीर्त्यत इति **धरणि**कोपात्तिष्याख्यः कलिस्तस्य ‘ कर्कोटकस्य सर्पस्य दमयन्त्या नलस्य च । ऋतुपर्णस्य राजर्षेः कीर्तनं कलिनाश-

नमि'ति श्लोकोक्तानां बोधो भवति । कलेररित्वेन तत्र लक्षणया कर्कोटक शब्देन कर्कोटकी तत्कन्दश्च ग्राह्यम्, तस्या बीजे कन्दे चेत्युभयत्र बीजशक्तिदर्शनात्। सर्पशब्देन गोनसी ग्राह्या, सा महाराष्ट्रे 'घोणसी, नाम्ना प्रसिद्धास्ति। तन्मूलेन केवलेनापिशर्करायुक्तेन असाध्यरूपा अपि प्रदरप्रमेहा नश्यन्ति । **दमयन्ती**शब्देन मल्लिकामूलानि ग्राह्याणि । **नलेन** सेव्यम्—अथच तद्वीजानि । ऋतुष्वविशेषात्सर्वर्तुषु यस्याः पर्णानि सन्तीति व्युत्पत्त्या कालानुसारिवा ग्राह्या, सा महाराष्ट्रे अनन्तमूलशब्देन. मध्यप्रान्ते च ' कपूरी'नाम्ना प्रसिद्धाऽस्ति । तन्मूलान्यपि प्रदर प्रमेहकृच्छ्रोपदंशविषोन्मादभूतबाधाप्रशमने अव्याहत शक्तिमन्ति सन्ति, अथवा करञ्जबीजानि ग्राह्याणि । **गोरेखेति**—गोरोचना अथच श्वेतमहासारिवा, या मगधादौ " गोलाखन " शब्देन, महाराष्ट्रे जाङ्गलभाषायां ' मोठीभूतमल्ली ' शब्देनव्यवह्रियते । **अरिमेद** इति—अरिमेदोविट्खदिरस्तदर्बुद त्वग्वा ग्राह्या। द्वयोरपि मूत्रप्रमेहरक्तदोषहरत्वात् । **क्षितिरुहे**तिक्षित्यामतिशयितमालिङ्गितमिवरोहति-दशमूली तन्मूलानि ग्राह्याणि, सा मध्यप्रान्ते वनतम्बाकूइतिनाम्ना महाराष्ट्रे ' मोरसेंडेति' नाम्ना प्रसिद्धास्ति, तन्मूलानि, बालशोषे लालाप्रमेहे चाद्भुतकार्यकर्तॄणि सन्ति, मूत्रकृच्छ्रे तु महाराष्ट्रे जाङ्गलाः प्रायश उपयुञ्जन्ति । अथवा अर्जुनवृक्षमूलत्वग्ग्राह्या । **श्वेतगुञ्जाङ्घ्रिबीज**मिति—श्वेताया गुञ्जाया मूलानि बीजानिच ग्राह्याणि इति स्पष्टम् । **कापित्थासृग्विमिश्रमिति**—कपित्थस्याय तन्मज्जा ग्राह्य —**असृक्**शब्देन केसरं ग्राह्यम् । **क्षितिफलसहित**मिति क्षितेरन्तःफल भूमिकूष्माण्ड क्षीरविदारी च, उभयोरपि फलाकृतित्वे सति भूमिमध्यवर्तित्वात् । **रोहिणीचान्द्रमिश्र**मिति—अत्र वर्तमानपुस्तके रोहिणीचाक्षमिश्रमितिपाठः समुपलभ्यते स लेखकप्रमादादिदोषादपभ्रष्ट इति बुध्यताम् । चाक्षशब्दग्रहणे रोहिणीशब्दस्य निर्विभक्तिकत्वापत्तेः— ' च इत्यव्ययेन ' व्यवधानात् । तस्माद्रोहिणीचान्द्रमिश्रमिति पाठः साधुः । तत्र **रोहिणी** मासरोहिणी कटुरोहिणी च ग्राह्या, तत्रमांसरोहिणीं मध्यभारते, गुर्जरे, महाराष्ट्रे सर्व एव जाङ्गला जना रोहणनाम्ना प्रख्यापयन्ति । आबालवृद्धेषु च प्रसिद्धतमा, सुश्रुते अ० ३८ सू० न्यग्रोधादिगणे च तस्याः पाठोऽस्ति तस्मिन् गणे सर्वे महाविटपिन एव परिग्रहीतास्सन्ति, रोहिण्यपि महाविटपा जम्बूपत्रसदृशपत्रा गृहास्तरणे अतीवोपयुक्तकाष्ठास्ति क्वचिच्छिन्नासती मासमिवाऽऽरक्ताऽऽस्रावस्राविणी छिन्नमासस्य झटित्यारोहणकर्त्रीत्वादुच्यते मासरोहिणीति । कटुरोहिणीतु कुटकीनाम्ना प्रसिद्धास्ति । सा हिमवदद्रिसम्भूतास्ति । **चान्द्रमिति**—चन्द्रस्येदं चान्द्रमिति व्युत्पत्त्या चन्द्रसादृश्याद्यद्धातुपोषकं शुभ्र वस्तु तत्सर्वमपि गृह्यते तेन स्फटिक नवनीतप्रस्तरम् ( सङ्गजराहत ) मुक्ता, रजतमित्यादीनि ग्राह्याणि । **करिविजयभुवा** इति— करिणो हस्तिनो विजयस्य भूः प्रधानं स्थानं शुण्डा तया हस्तिशुण्डीद्रवेणेत्यर्थः । अथवा हस्तिनो जठराग्निशक्तेः परीक्षायाः स्थानं कपित्थफलम् तद्धि निर्गलित हस्तिनोगुदद्वारायथावस्थितस्वरूपमेव निःसरति । तद्धि द्विधा भङ्क्त्वा दृश्येत चेज्जलेन धौतमिव कपालद्वयं दृश्यतेऽनुमीयते च हस्ति जठरानलप्रभावः । इतिकृत्वा भवति तत्करिविजयभूस्तत्तोयेन वा मोदकान्कुर्यादित्यर्थः सम्पद्यते । अक्षमितानिति—अक्षोऽत्र रुद्राक्षेषु तानि च भवन्ति नानाविधानि विविधप्रमाणवन्ति च तत्कथनात्प्रकृतिदोषदेशकालाग्निवयोबलादीन्निर्णीय तदनुकूलान्मोदकान् कुर्यादित्यर्थः समायाति, 'अक्षोज्ञानातमशकटव्यवहारेषुपाशके । रुद्राक्षेन्द्राक्षयोःसर्पे विभीतकतरावपि । चक्रे कर्षे पुमान् क्लीब तुत्थे सौवर्चलेन्द्रिय' इति मेदिनी—

योगनिष्पादनसौकर्यार्थं द्रव्यकोष्ठक निःक्षिप्यते ऽतो निष्पाद्यन्ता स्वाभीप्सिता योगा. ।

**कासीसम्**—कासीसम्

**कृष्णम्**—शिलाजतु, लोहभस्म, पिप्पली, मरिचम्, अहिफेनं, कृष्णवैक्रान्तम् ।

**नागः**—नागवला, नागभस्म, भूनागाः, भूनागसत्वम्

**क्षितिधररुधिरम्**—माणिक्यं, गोमेदः, गैरिक, कम्पिल्लक, रोहिणीनिर्यासः ( गूद, ) वीजकनिर्यासः ( हीरादक्खिन ), शाल्मलीनिर्यासः ( मोचरस, ) पलाशनिर्यासः ( कमरकस )

**नीलम्**—नीलम, राजावर्तकः ( लाजवर्द ) नीली ( गळी गु० ) नीलोफर फा०, नीलोत्पलम्

**अभ्रम्**—अभ्रकभस्म, घनपाषाणं ( गोदन्तीहरिताल हिं०–घापाण गु. ) मुस्तकं, देवदाली ( वंदाल हिं०–कूकड़वेला गु.–देवडागरी म. )

**सुकान्तम्**—कान्तपाषाणभ., कान्तलोहभ., मौक्तिकम्, पीतवराटिका, वंशरोचना.

**हेमाङ्गम्**—हेमभस्म, सुवर्णमाक्षिकभस्म, रजतभ., ताम्रभ., हरिद्रा., दारुहरिद्रा,

**भूमिसारम्**—जम्बूमज्जा, पारदः, गन्धकः, एला, कुङ्कुमं, कस्तूरिका, अम्बरम्, नवनीतं, घृतं, शर्करा, एलादिवर्गः–सु. सू. ३८–२४ एला, तगरं,–कुष्ठं–मासी–रोहिषं–त्वक्–पत्रकं–नागकेसर–प्रियङ्गुः–रेणुका–व्याघ्रनखं शुक्तिः (नखला), चण्डा ( हिङ्गुपत्री–डीकामाली म.), स्थौणेयकं ( थुनेर ), श्रीवेष्टक (विरोजा हिं. ), चोच ( कलमीतज. ), चोरक ( खरजवायन हिं. ), वालुक ( गेंहुला हिं. ), गुग्गुलुः, राळा, रसः, ( बोल सं० हीराबोल-गु०–रंजनहिं, एलुआहिं. एतद्द्वयम् ) तुरुष्कम् (लोबान हिं.) कुन्दुरुः, अगुरु, स्पृक्का, ( अनन्तमूल ) उशीरं, देवदारु, कुङ्कुमं, नागकेसरम्, इत्येलादिवर्गः ।

**सलिलरिपुदलम्**—समुद्रशोषवीजानि पत्राणि च, अगस्त्यमज्जा, पत्राणि च, वव्वूलिकापत्राणि बीजानि च ।

**मेहारिवीजम्**—तुवरकमहानिम्बामलकाङ्कोलेक्षुरकवलोटिङ्गणकमलवुब्बूलादिजातं बीजम् ।

**तिष्यारिवीजम्**—कर्कोटकीवीजकन्दे, गोनसीमूलम् ( घोणसी म. ) मल्लिकामूलम्, उशीरन्तद्वीजानि-च, कालानुसारिवा, करञ्जवीजम्

**गोरेखा**—गोक्षुरकं, गोरोचना, गोलक्ष्मणा च, ( गोलाखनहिं०, मोठी भूतमल्ली म. )

**अरिमेदः**—विट्खदिरार्बुद त्वचा,

**क्षितिरुहम्**—दशमूली ( वनतमाखू हिं., मोरसेडा म. ), अर्जुनवृक्षमूलत्वग् ।

**कापित्थं**— कपित्थमज्जा

**असृक्**— केसरम्

**क्षितिफलम्**—विदारी, क्षीरविदारी च ( भुंई कोहळा हिं.)

**रोहिणी**—मासरोहिणी (रोहण हिं. म. गु. ) कटुरोहिणी ( कुटकी हिं. )

**चान्द्रम् (चाक्षम्)**—स्फटिक, चन्द्रमृत् ( संगजराहत हिं. सगजीरू गु० ) कतकफल चन्द्रवद्वर्तुलत्वात्, विभीतकम् ।

**करिविजयभूः**—हस्तिशुण्डी–कपित्थफलम् ।

उपरि निर्दिष्टानि द्रव्याणि व्यस्तानि समस्तानि च मूलोक्तकार्यकराणि भवान्ति तद्यथा-कासीसं मापत्रयमितं, हस्तिशुण्डया द्रवेण कर्षैकप्रमितेन कपित्थमज्ञा साकं भक्षयित्वा यथेष्ट तक्रं पिबेत्तस्मिञ्जीर्णे तक्रौदन दुग्धौदनं वा सेवयेत्—इत्येको योगः ॥१॥अनेन मूत्रकृच्छ्राश्मर्यौ प्रशमं यातः। कासीसमुष्णमम्लञ्च तिक्तञ्च तुवर तथा। वातश्लेष्महर केश्यं नेत्रकण्डूविपप्रणुत्। मूत्रकृच्छ्राश्मरीश्वित्रनाशनं परिकीर्तितमिति भावप्रकाशवचनात्केवलस्यापि मूत्रकृच्छ्रादिहरणे अव्याहतशक्तिमत्त्वात् कासीस माषत्रय शिलाजतु शाल्मलीबीजकनिर्यासौ ( मोचरस—हीरादक्खिन ) नीलोत्पल नीलीपत्राणि एतानि प्रतिद्विमाषकाणि गृहीत्वा कपित्थस्वरसे हस्तिशुण्डीस्वरसेन वा मिश्रय्य तक्रेण सह पिबेदिति द्वितीयोयोगः ॥ २ ॥ कासीसशिलाजतुनीलोत्पलमहानिम्ववीजवव्बूलिकापत्राणि प्रतिद्विमाषकाणि गृहीत्वा दुग्धेन जलेन वा पिष्ट्वा पिबेदिति तृतीयो योगः ॥ ३ ॥ कासीसशिलाजतुनागवलाबीजपत्रदशमूलीमूलानि प्रतिद्विमाषकाणि तक्रेण दुग्धेन हस्तिशुण्डिकास्वरसेन कपित्थस्वरसेन वा पिष्ट्वा पिबेदिति चतुर्थः ॥ ४ ॥ कासीसनागवलापञ्चाङ्ग, समुद्रशोषपत्र, दशमूलीमूलैला, श्वेतगुञ्जापत्राणि प्रतिद्विमाषकाणि गृहीत्वा पूर्ववत्पिबेदिति पञ्चमः ॥ ५ ॥ कासीसनीलोत्पलैलार्जुनमूलत्वक्केसरकम्पिल्लकानि प्रतिद्विमाषकाणि० ॥ ६ ॥ कासीस मोचरसबीजकनिर्यासश्रीवेष्टकानि प्रतिद्विमाषकाणि० ॥ ७ ॥ कासीसनागबलोटिङ्गणश्रीवेष्टकपलाशनिर्यास महानिम्बतुवरकबीजानि प्रतिद्विमाषकाणि पूर्ववत्पिबेदित्यष्टमः ॥ ८ ॥ कासीसशिलाजतुनागबलामोचरसनीलीकान्तपाषाणभस्म—मुस्तक—देवदाली—हरिद्रा द्वय—जम्बूमज्ज—समुद्रशोप, तुवरक—महानिम्बबीज, गोनसीमूल, करञ्जबीज—गोक्षुरकारिमेदत्वग्दशमूली ( मोरसेंडा म. ) श्वेतगुञ्जामूल-कपित्थमज्ज, केसरविदारीमासरोहिणीत्वगिति अर्धार्धमापकाणि पूर्ववत् पिष्ट्वा पिबेदिति नवमः० ॥ ९ ॥ **यद्वा** विभक्त्यन्तानि प्रतिपदानि कासीसमिश्रितानि योगः—यथा—सकासीस कृष्णनागम्। १। स. क्षितिधररुधिरम्। २। स. नीलम्। ३। स. अभ्रम्। ४। स. सुकान्तम्। ५। स. हेमाङ्गम्। ६। स. भूमिसारम्। ७। स. सलिलरिपुदलम्। ८। स. मेहतिष्यारिबीजम् ९। स. गोरेखा १०। स. अरिमेदः ११। स. क्षितिरुहम् १२। स. श्वेतगुञ्जाद्विबीजम् १३। स.कपित्था० १४। स. क्षितिफलम् १५। स.अक्षमिश्रारोहिणी १६। स.रोहिणीचान्द्रम् १७। इतिसप्तदशयोगास्तक्रेण दुग्धेन यथाग्निवल सेविताः त्रिरात्रान्मूत्ररोग,सप्तरात्रात्कल्पस्य वमनविरेचनाद्यशोधनस्य नाशं हीनयोगाऽयोगमिथ्यायोगजनितमुपद्रव ( कल्पनाश ) कासीसस्य संशमनप्रधानतया क्षाररूपत्वाच्चायोगजनिताध्मानादीनामतियोगेनातिसारगुदवहिर्निर्गमनादीनामपि भवति यौगपद्येन निवृत्तिः। एतेषु योगेषु तक्रस्य दुग्धस्य च यथोचिति भोजनपानयोरुभयोरपि स्थानेयोगेकृते। सप्ताहाऽभ्यन्तरे एव स्वास्थ्यलाभो भवति—अत्र धातुवर्गोऽपि निर्दिष्टोऽस्ति, तस्य वनस्पतिवर्गस्य च मिलित्वा योगो निष्पादितश्चेत्सोऽलौकिक. प्रयोगो दृष्टप्रभाव. सम्पत्स्यते, स च समस्तप्रमेहान् मधुमेहसहितान् हठान्नाशयिष्यति उत्तमोत्तमो वृष्यो वाजीकरश्च सम्पत्स्यते। अस्य ( द्रव्यगणस्य ) प्रमाणतारतम्येन शतशो योगा भविष्यन्ति तत्सर्वस्य विवरणे ग्रन्थविस्तर स्यादतो दिङ्मात्रप्रदर्शनेनात्रैव विरम्यते। कैश्चिन्महाशयैरसरत्नसमुच्चयस्य गुर्जरभाषाया टीकाकारैः कृष्णनागशब्देन कृष्णसर्पवसा, क्षितिधरशब्देन तद्रुधिरं गृहीतन्तत्तु न सम्यक्—यतः कृष्णसर्प सर्पाशिनोऽपि न भक्षयन्ति, कृष्णसर्पविषेण तृष्णाभिवृद्धिर्भवति अयं प्रयोगस्तु तृष्णाप्रशमनार्थस्तत्र कथं तृष्णावर्धकद्रव्याणा प्रक्षेपो न्याय्य. स्यादिति प्रत्यक्षमेव विरोधः। तथाच सुश्रुतः—तत्र दर्वीकरविषेण त्वङ्नयननखदशनवदनमूत्रपुरीषदशकृष्णत्वं रौक्ष्य—

शिरसोगौरवं सन्धिवेदना कटीपृष्ठग्रीवादौर्बल्य जृम्भणम्, वेपथु.स्वरावसादो घुर्घुरको जडता, शुष्कोद्गारः कासश्वासौहिक्का—वायोरूर्ध्वगमनं—शूलोद्वेष्टनं—तृष्णा-लालास्राव' फेनाऽऽगमनं स्रोतोऽवरोधस्ता-स्ताश्चवातवेदना भवन्ति इति । सु.क.४–४२ । तथाच सविषकीटोत्पत्तौ " सर्पाणा शुक्रविण्मूत्रशव-पूत्यण्डसम्भवा' । वाय्वग्न्यम्बुप्रकृतय' कीटास्तु विविधाः स्मृता. ॥ सर्वदोषप्रकृतिभि र्युक्तास्ते परि-णामत. । कीटत्वेऽपि सुघोरास्स्युः सर्व एव चतुर्विधाः" सु० । इत्यनेन सर्पशवस्य महाननर्थकारित्व प्रतिपा-दितम् । अपिच—सौभाग्यार्थेस्त्रिय'स्वेदं रजोनानाङ्ग-जान्मलान् । शत्रुप्रयुक्ताश्चगरान् प्रयच्छन्त्यन्नमिश्रितान् तैः स्यात्पाण्डु कृशोऽल्पाग्निर्गरश्चास्योपजायते । मर्मप्रधमनाध्मान हस्तयोश्शोथलक्षणम् ॥ जठर ग्रहणी-दोषा यक्ष्मा गुल्मः क्षयो ज्वरः । एव विधस्य चान्यस्य व्याधेर्लिङ्गानि दर्शयेत् ॥ इति कृष्णसर्परुधिरस्य भक्षणेन महाननर्थः स्यात् । यद्यपि चीनदेशीयाः—मध्यभारते "मुसहर" नाम्ना प्रसिद्धजाङ्गला जनाश्च तत्क्षणव्या-पादित निर्विषसर्पशवं खादन्ति पर कृष्णसर्पवर्जम् । कुर्यितं कृष्णसर्पशरीरन्तु चिल्लिकाप्रभृतिपक्षिणोऽपि दूरतः परिहरन्ति एतद्द्वयमस्माभिर्वारम्वारं प्रत्य-क्षीकृतमस्ति अतो नास्त्यस्मिन्विषये वितण्डावकाशः॥ अहिवधादिरससम्पादने भवत्युपयोगः कृष्णसर्पशरी-रस्य, पर तस्याग्नौ भस्मीभावो भवति केवल तेन पारदस्य सस्कारमात्रं भवति अतस्तद्दृष्टान्तदान नालम् । अर्धनारीनटेश्वरादौ यत्रकुत्र स्थाने भावनाया यथाऽवस्थित पित्तमवशिष्यते इति सत्यं, परन्तन्न साधारणावस्थाया प्रयुज्यते । अपितु दोषदूष्यसम्मूर्छनाऽवस्थया जातेनानिर्वचनीयविषेण साऽत्ययव्यापारे क्षुब्धे शरीरे विषस्य विषमौषधमिति न्यायम-ङ्गीकृत्य पञ्चपित्तकृष्णसर्पविशादिघटिता अतितीक्ष्ण-तमाश्च योगाः प्रयुज्यन्ते । परन्तु सर्परुधिरदानस्य तस्यामप्यवस्थायामायुर्वेदमात्रे न कुत्रापि दृष्टचरता-स्ति । किम्पुनः प्रमेहावस्थाया मूत्रकृच्छ्रे च कृष्णस-र्पवसा रुधिरञ्च अग्निकल्प दातुमुचित स्यादित्यलमति-प्रपञ्चितेन प्रकृतमनुसरामः ।

**भाषा**—कसीस, शिलाजीत, नागवला, मोचरस, नील, कान्तपाषाणभस्म, नागरमोथा, वंदाल, हल्दी;दारुहल्दी, जामुनकीमज्जा, समुद्रशोष, तुवरक, वकायनकेवीजोंकीमज्जा, गोनसी, ( घोणसी म० ) कीजड़, करजवीज, गोखरू,विट्खदिरकीछाल ( गु.-अणियारकीछाल ), दशमूली ( जंगलीतमाखू हिं०, मोरसेडा म० ), सफेदगुञ्जाकीजड़, कपित्थकीमज्जा, नागकेसर, विदारीकंद, रोहणकीछाल, येसवआधेआधे माशे लेकर हाथीशुण्डीका रस,अथवा छाछ या दूध इनकेसाथ पीसकर पीवे । और खानेपीनेमे केवल छाछकाही उपयोग करे तो तमाम मूत्रव्याधिये तीनरोज़मे नष्टहों । और सातरोज़मे विगडेहुए वमन विरेचनसे जायमान व्याधिया और अत्यन्त पिपासा नष्टहो । तथा पन्द्रह दिनमे सर्वाङ्गवृद्धिहो । यह प्रमेहियोंकेलिये मुनियोने वहुत गुप्तयोग प्रकाशितकियाहै । रसरत्नसमुच्चयमे इस कासीसादि रसकी टीका गुजरातीभाषान्तर करनेवाले महात्माओंने अडवंड लिखडालीहै जैसेकि कृष्णनागसे कालेसापकी चर्वी और क्षितिधररुधिरशव्दसे कालेसापका लोही इत्यादि० सो गुजराती भाषान्तर देखकर मेहरवानीकरके कोईभी इसयोगको तैयार नकरे। नहीं तो गुणकेवदले दूसरीहीवला गलेमे पड़ेगी । कासीसादिरसका विवरण वहुत लम्बाचौड़ाहै उसको इसके सस्कृत भाष्यमे देखलेना ॥ २६४ ॥

### २६५ किन्नरकण्ठोरसः

**रसं गन्धकमभ्रञ्च माक्षिकं लौहमेव च ।**
**कर्षप्रमाणं सङ्गृह्य वैक्रान्तं रसपादिकम् ११४७**
**वैक्रान्तार्द्धं तथा हेम रौप्यं हेमचतुर्गुणम् ।**
**वासायाश्च तथा भार्ग्या वृहत्योरार्द्रकस्य च ॥**
**स्वरसेन सरस्वत्या भावयित्वा पृथक्पृथक्**
**रक्तिद्वयमिताः कुर्याद्वटीश्छायाविशोषिताः ॥**
**स्वरभेदानशेषांश्च कासांश्श्वासांश्च दारुणान् ।**

निखिलानकफजान् व्याधीन्वातश्लेष्मसमुद्भवान्
हन्यात्किन्नरकण्ठाख्यो रसोऽयं रुद्रनिर्मितः ।
किन्नरस्येव कण्ठस्य स्वरोऽस्य प्राशनाद्भवेत् ॥
आ. वि, र. च, स्वरभेदे ।

भाषा—शुद्धपारा, गन्धक, अभ्रकभस्म, सोनामाखी, लोहभस्म येसब समभाग, वैक्रान्तभस्म रसकाचतुर्थांश, वैक्रान्तसेआधासुवर्ण, सुवर्णसेआधारसुनीरजनभस्म, इनसबको इकट्ठेकर अडूस, भारङ्गी, भटकटैया, वनभाटा, अदरख इनप्रत्येकके अङ्गरस अथवा क्वाथोंसे अलग२एकएकरोजभावनादेकर दो-दोरत्तीकी गोलियें बनाकर छायामेंसुखाकर रखलेवे। यह किन्नरकण्ठ रस तैयारहुआ। इसकी १ गोली तत्तद्रोगहरानुपानकेसाथदेनेसे तमामस्वरभेद, कास, श्वास, समस्तकफजविकार, और वातश्लेष्मसमुद्भुतनाना कण्ठके विकारोंको बहुतशीघ्र दूरकरताहै ॥ २६५ ॥

## २६६ किटिभभग्नोरसः

तत्राशुशुद्धस्य च पारदस्य
भागैकमेव त्रयमेव गन्धात् ।
कटुत्रयं सूतसमं च चित्रं
प्रत्येकमारण्यभवस्य दुग्धैः ॥११५२॥
उदुम्बरस्य प्रहरं विमर्द्य
मधुप्लुतं माषमितञ्च खादेत् ।
चित्रस्य चूर्णैः सह वाकुचीनां
निम्बस्य पञ्चाङ्गसमं सदैवम् ॥
नाशाय नूनं किटिभस्य विद्वान्
पथ्याशनं नित्यमलं प्रकुर्वन् ॥११५३॥
चि. क. कुष्ठे ।

भाषा—शुद्धपारा१भा., गन्धक३भा., त्रिकटु और चित्रक एकएकभाग, इकट्ठेघोटकर कज्जलीकर जङ्गलीगूलरके दूधसे एकदोरोजघोटकर एकमाशेकी-मात्रा मधुमेमिलाकर खिलावेऔर उसकेसाथ चित्रक, वाकुची और निम्बपञ्चाङ्गकाचूर्ण अनुपानके तौरपर देनेसे निश्चयकरके किटिभकुष्टका नाशहोताहै २६६

## २६७ किटिभहरोलेपः

सूतगन्धकयोः कृत्वा कज्जलीं समभागयोः ।
तत्तुल्यं शङ्खजं भस्म तथैवानलवारुणी ॥११५४
रजन्यौ क्षीरिणी चक्रमर्दो सर्षपस्तथा ।
मुनिपुष्पं सौवर्चलं गोमूत्रं काञ्जिकं तथा ।
सर्वमेकत्र संमर्द्य सर्वं तेन प्रलेपयेत् ।
दद्रुकिटिभकुष्ठानि मण्डलानि विचर्चिकाः ॥
सम्मर्दनाच्चिल्यवागाद्विनश्यन्ति न संशयः ॥
र., कु.

भाषा—शुद्धपाराऔरगन्धक समभागलेकर कज्जलीकर इनदोनोंके बराबर शंखभस्म और इन्द्रायनकीजड़, दारुहल्दी, निशोथकीजड़, चकवड़केबीज, सरसों, अगस्त्यकेपत्ते, नौसादर, गोमूत्र, कांजी इनसब इकट्ठेकर एकदोरोज मर्दनकर मलहमसा बनाकर लेपकरनेसे दद्रु किटिभ, मण्डल, विचर्चिका, येसब नष्टहोतेहैं ॥ २६७ ॥

## २६८ किटिभारिरसः

मृतसूतं काकमाची वह्नि शुण्ठी च वानरी ।
वाकुचीबीजकं तुल्यं गवां मूत्रेण पेषयेत् ॥
निष्कैकं पाययेत्तेन किटिभारी रसस्त्वयम् ।
निशा कणा नागरञ्च वेल्लचित्रकनाप्यकम् ।
क्रमोत्तरगुणं पिष्ट्वा गोमूत्रेण पिबेदनु ॥
र. का, नि. र. कुष्ठाधिकारे ।

भाषा—पारदभस्म, मकोय, चित्रक, सोंठ, केवाचकेबीज, वाकुचीकेबीज, येसबसमभागलेकर गोमूत्रमें एकदिनपीसकर चारचारमाशेकी गोलियां बनारक्खे। इनको यथानुपानकेसाथ देवे और हल्दी, पीपल, सोंठ, विडङ्ग, चित्रक, सोनामाखी इनको क्रमवृद्धि सेलेकर गोमूत्रकेसाथ एकतोलाभरपीनेसे किटिभकुष्ठ नष्टहोताहै ॥ २६८ ॥

## २६९ किरातादिमण्डूरम्
## ( अष्टादशाङ्गलोहम् )

किराततिक्तं सुरदारु दार्वी
मुस्ता गुडूची कटुका पटोलम् ।

दुरालभा पर्पटकं सुनिम्बं
कटुत्रिकं वह्निफलत्रिकञ्च ॥ ११५९ ॥
फलं विडङ्गस्य समांशकानि
सर्वैः समं चूर्णमथायसञ्च ।
सर्पिर्मधुभ्यां वटिका विधेया
तत्रानुपानाद्भिषजा प्रयोज्या ॥११६०॥
निहन्ति पाण्डुञ्च हलीमकञ्च
शोथं प्रमेहं ग्रहणीरुजञ्च ।
श्वासञ्च कासञ्च सरक्तपित्त-
मर्शांस्यथोर्वोर्ग्रहमामवातम् ॥
व्रणांश्च गुल्मान् कफविद्रधींश्च
श्वित्रञ्च कुष्ठं सततप्रयोगात् ॥११६१॥

नि र, भा प्र, यो म., वै चि, ग .नि., पाण्डु रोगे ।

टि० गदनिग्रहेऽस्यनवायसमितिनामस्यापितन्तदपिवि-चाराऽभावप्रयुक्तम् ।

**भाषा**—चिरायता, देवदारु, दारुहल्दी, नागरमोथा, गुडूची, कुटकी, परवल, जवास, पित्तपापड़ा नीमकीछाल, त्रिकटु, चित्रक, त्रिफला, विडङ्ग येसब समभाग, सबकीबराबर मण्डूरभस्म अथवालोहभस्म, सबको इकट्ठेघोटकर घीऔरमधुकेसाथ तीनमाशेकी गोलियें बनावें । इसकी एकगोली घीऔरमधु अथवादूधकेसाथ देनेसे पाण्डु, हलीमक, शोथ, प्रमेह, ग्रहणी, श्वास, कास, रक्तपित्त, बवासीर, ऊरुस्तम्भ, आमवात, तमामव्रण, गुल्म, कफविद्रधि, श्वित्र, कुष्ठ, इनसबको यह दूरकरताहै ॥ २६९ ॥

## २७० किलासजेनारसः

रसस्यैकभागं बलेश्च द्विभागौ,
त्रिभागाश्च भानो र्विमर्द्याथ भृङ्गैः ।
द्रवै र्वाकुचीनां रसैः पेषयित्वा,
पुटे पाचितश्चामलक्याः कषायैः ॥
किलासारुणं मण्डलं हन्ति नित्यं,
निपीतो नितान्तं सुतक्राशिनाञ्च ११६२

चि. क, कुष्ठाधिकारे ।

**भाषा**—शुद्धपारा १भाग, गन्धक२भाग, ताम्रभस्म३भाग, सबकोइकट्ठेकर भंगरेकारस औरबाकुचीकारस इनसे एकएकरोज़घोटकर लघुपुटकी आचदेना । स्वाङ्गशीतलहोनेपर निकालकर आवलेकेकाढेकेसाथ २रत्तीदेनेसे किलास, लालऔर मण्डलकुष्ठको यह दूरकरताहै । इसके मरीजको बनतेतक छाछपर रक्खाजायतो अच्छाहै । अथवा छाछभातदेनाचाहिये ॥ २७० ॥

## २७१ कीटारिरसः

शुद्धसूतकलिङ्गानि चाजमोदा मनःशिला ।
पलाशबीजं गन्धश्च देवदाल्या द्रवै र्दिनम् ॥
सम्मर्द्य विधिना नित्यं मुद्गपर्णीरसैः सह ।
सितायुक्तं पिबेच्चानु क्रिमिपातो भवत्यलम् ॥

भै र, र सु, र. क. ल. ( कीटमर्द ), र. को (क्रिमिहर ), र क,

रसकल्पलतायां गन्धकस्याभावो दृश्यते ।

**भाषा**—शुद्धपारा, इन्द्रजव, अजमोद, शुद्धमैनसिल, ढाककेबीज औरगन्धक येसमभागलेकर बन्दालकेरससे एकदोरोज़ घोटकर इसकी गोलियें बनाले । फिर मुद्गपर्णीके रसमे मिश्रीडालकर एकगोलीकेसाथ पिलानेसे सबतरहके क्रमि नष्टहोजाते हैं ॥ २७१ ॥

## २७२ कुटजादिलोहम्

लक्ष्मीफलप्रतिविषाम्बुबलासमङ्गा--
पाठेन्द्रबीजघनशाल्मलिधातकीनाम् ।
चूर्णैः समैः सममयः कुडवं सुसिद्धं
हैयङ्गवीनकुडवे गुडतुल्यमात्रम् ११६५
प्रस्थत्रयप्रमितवत्सकवारिपूरे
पक्त्वा त्रिजातकपलान्वितमेतदेव ।
शीतं युतञ्च मधुना कुडवोन्मितेन
हन्याच्चिरोत्थमचिरादतिसारमुग्रम् ॥

लो प, अतिसारे ।

**भाषा**—बेलगिरी, अतीस, सुगन्धबाला, बला, मजीठ या लजालु, पाठा, इन्द्रजव, नागरमोथा, सेमरकेफूल, धावडीकेफूल येसब एक १ तोलालेकर सबको कूटछानकर लोहभस्म १६ तोले, मक्खन १६ तोले

गुड१६ तोले, कुरैयाकाक्काथ २५६ तोलेमे डालकर घनबनाकर त्रिजातक ( तज, पत्रज, इलायची ) ४तो, मधु १६ तोले मिलाकर रखदे। इसकी ४ माशेकी अथवा बलाबल देखकर मात्रा कायमकर यथानुपानकेसाथ देनेसे बहुतदिनका पुराना अतिसार नष्ट होताहै ॥ २७२ ॥

## २७३ कुबेरपाकः

कुबेरं प्रस्थनीरे च क्षिप्त्वा रात्रौ चतुर्गुणे ।
क्षीरे प्रातः पचेत्सम्यग् घृतेन मृदुवह्निना ॥
शीतं कृत्वा सुनिष्पन्नं मध्ये मधु नियोजयेत् ।
चातुर्जातं त्रिकटुकं जातीपत्रफले तथा ११६८॥
देवपुष्पं विडङ्गं च मिसीं जीरं घनं बलाम्
निशाद्वयं तथा लोहं शुल्बं वङ्गं पलार्धकम्११६९
प्रत्येकं चूर्णितं क्षिप्त्वा भक्षयेच्च पलं बुधः ।
सर्ववातामयान्हन्ति ह्यग्निमान्द्यं बलक्षयम् ॥
प्रमेहं मूत्रकृच्छ्रञ्च ह्यश्मरीगुल्मपाण्डुताः ।
पीनसं ग्रहणीदोषमतीसारमरोचकम्॥११७१॥
धन्यः कौबेरपाकोऽयं भक्षयेन्नितरां बुधः ।
कामवृद्धिकरस्तस्य धातुवृद्धिश्च जायते११७२॥

वै चि., नि र, वाताधिकारे।

भाषा—कजेकेबीजोंकीमज्जा ६४ तोलेलेकर रात्रिकोपानीमे भिगोकर सुबहमे ४ सेरदूधमे डालकरपकावे। जब खोआतैयारहोजाय तब उसमे १६ तोले घीडालकर मृदुआंचसेसेके। जब खोआ लाल होजाय तब चातुर्जात ( तज, पत्रज, इलायचीऔर-नागकेसर ) त्रिकटु, जावित्री, जायफल, लौग, विडङ्ग, सौफ, जीरा, नागरमोथा, बला, हल्दी, दारुहल्दी, लोह, ताम्रऔरवङ्ग इनकीभस्में, येप्रत्येकदोदोतोले, मधु ६४ तोले डालकर रखछोडे। यह कुबेरपाक सिद्धहुआ। इसमेसे चारतोलेअथवा योग्यतानुसार देनेसे समस्तवायुरोग, अग्निमान्द्य, बलक्षीणता, प्रमेह, मूत्रकृच्छ्र, पथरी, गुल्म, पाण्डु, पीनस, ग्रहणीरोग, अतिसार, अरुचि, इनसबको यह नष्टकर कान्तिपुष्टिऔरबलकोबढ़ाताहै॥ २७३ ॥

## २७४ कुब्जविनोदो रसः

रसगन्धौ समौ शुद्धौ चाभया तालकं तथा ।
कटुकी च विषं व्योषं वोलजैपालकौ समौ ॥
भृङ्गराजरसै र्मर्द्य स्नुह्यर्कस्वरसैस्तथा ।
गुञ्जाद्वयं भक्षयेच्च हृच्छूलं पार्श्वशूलकम् ॥
आमवाताढ्यवातादीन् कटिशूलञ्च नाशयेत् ।
अग्निञ्च कुरुते दीप्तं स्थौल्यञ्चाप्यपकर्षति ॥
रसः कुब्जविनोदोऽयं गहनानन्दभाषितः ॥

र सं., र म मा, व, र मु., र. चं, र क., टो, वाताधिकारे।

टि० अस्य रसस्य बहुधा साम्यमश्वकञ्चुकीरसेन मिलति। परन्तु कटुकीबोलयोरधिकतया गत्वाद्भावनायाश्च स्नुह्यर्कस्वरसाभ्यामधिकतया निष्पादितत्वात्स्वनन्त्र एवाय रस इति प्रतिपत्तव्यम्।

भाषा—शुद्धपारा, गन्धक, हर्रे, शुद्धहरिताल, कुटकी, शुद्धबछनाग, त्रिकटु, एलुआ, शुद्धजमालगोटा, येसबसमभागलेकर, भागरेकारस, थूहरऔर-आकके दूधसे क्रमसे एकएकभावनादेकर दोदोरत्तीकीगोलियें बनारक्खे। यह कुब्जविनोद रस सिद्धहुआ। इसकी १गोली यथारोगानुपानकेसाथ देनेसे हृदयशूल, पार्श्वशूल, आमवात, ऊरुस्तम्भ, कटिशूल, मन्दाग्नि, अतिस्थौल्य इनसबको यह दूरकरताहै। गहनानन्दका कहाहुआहै ॥ २७४ ॥

## २७५ कुमारकल्याणरसः

सिन्दूरं मौक्तिकं हेम व्योमायोहेममाक्षिकम् ।
कन्यातोयेन सम्मर्द्य कुर्यान्मुद्गमिता वटी ॥
वटिकां वटिकार्द्धं वा वयोवस्थां विविच्य च ।
क्षीरेण सितया सार्धं बालेषु विनियोजयेत् ॥
कुमाराणां ज्वरं श्वासं वमनं पारिगर्भिकम् ।
ग्रहदोषांश्च निखिलान् स्तन्यस्याग्रहणं तथा ॥
कामलामतिसारञ्च कृशतां वह्निवैकृतम् ।
रसः कुमारकल्याणो नाशयेन्नात्र संशयः११७९

भै र., र चं, बालरोगे।

भाषा—रससिन्दूर, मोती, सुवर्णभस्म, अभ्रकभस्म, लोहभस्म, औरसोनामाखी येसब समभागले-

कर घीकुआरके रससे एकदोरोज मर्दनकर मूंगवरावर गोलियें बनाकर रखछोडे, यह **कुमारकल्याण** रस तैयारहुआ। इसरसको देतेसमय अवस्था, हालतऔर-समयको देखकर एकयाआधीगोली दूधअथवाशक्करके-साथ बालकोको देनेसे ज्वर, श्वास, कास, वमन, पारिगर्भिक (मातुः कुमारोगर्भिण्याः स्तन्यं प्रायः पिवन्नपि । कासाग्निसादवमथुतन्द्राकार्श्यारुचिभ्रमैः । युज्यते कोष्ठवृद्धया च तमाहुः पारिगर्भिक मिति वालरोगनिदाने ॥) ग्रहदोष, दूधका न पीना, कामला, अतिसार, अग्निमान्द्य, औरकृशता येसबरोग नष्टहोतेहैं ॥ २७५ ॥

## २७६ कुमारीपाकः

कुमारीकन्दमादाय पलविंशतिसङ्ख्यया ।
चतुर्गुणे च गोदुग्धे पाचयेन्मन्दवह्निना११८०
यावच्च जीर्यते दुग्धं तावत्पाचनकं कुरु ।
छायाशुष्कञ्च कुर्वीत चूर्णयेद्बुद्धिमान् भिषक् ॥
पिप्पली मरिचं शुण्ठी प्रत्येकञ्च पलत्रयम् ।
जातीफलं जातिपत्री लवङ्गं पलमेव च११८२॥
गोक्षुरं कर्कटीबीजं प्रत्येकञ्च पलंपलम् ।
चातुर्जातपलं चैव चित्रकञ्च पलं तथा११८३॥
सर्वेषां सूक्ष्मचूर्णञ्च कारयेद्बुद्धिमान् भिषक् ।
सितायाः पलविंशत्याः पलानि दश गोघृतात् ।
तत्समं महिषीदुग्धं तत्समं मधुमिश्रयेत् ।
लोहपात्रे विनिःक्षिप्य पाचयेन्मृदुवह्निना ॥
चूर्णं निक्षिप्य यत्नेन दर्व्या सम्यग्विचालयेत् ।
यावद्घृतञ्च दृश्येत तावत्सम्पाचयेद्बुधः ११८६
कर्षमेकं लोहभस्म सुवर्णं तत्समं ततः ।
सिन्दूरं कर्षमेकन्तु दापयेद्भिषगुत्तमः ११८७॥
कोलप्रमाणवटकान् भक्षयेद्बुद्धिमान्नरः ।
जीर्णज्वरं क्षयं कासं श्वासं सन्तापशूलनुत्११८८
अजीर्णमामवातघ्नं पञ्चप्रदरनाशनम् ।
स्त्रीणां वन्ध्यत्वहरणं पुत्रश्चैव प्रसूयते११८९॥
अण्डवृद्धिहरश्चैव स्त्रीणां रमयते शतम् ।
इदं गोप्यमिदं गोप्यमश्विनीदेवनिर्मितम् ॥

नि र.,

भाषा—पकेहुएघीकुआरकीजड़ २५ पललेकर चौगुनेगायकेदूधमे मन्दआंचसेपकावे।जब दूधकाखोआ होजाय तब इसमेसे जडोंकोनिकालकर छायामे सुखाकर चूर्णकरले, फिरपीपल, मिरच, सोंठतीनतीनपल जायफल, जावित्री, लौंग, गोखरू, ककड़ीकामगज, चातुर्जात ( तज, पत्रज, इलायचीऔरनागकेसर ), चित्रक, येप्रत्येकएकपललेकर सबका बारीकचूर्णकरलेवे । फिर शक्कर२०पल, मधु२०पल, गायकाघी १०पल, भैंसकादूध१०पल, लेकरमन्दअग्निपर पकावे, अधपकाहोनेपर सबचूर्णडालकर धीरजसे कड़छुलसे रगड़ताहुआपकावे । जबतक तमामघी उसमे मिल न जाय तबतकपकावे । फिर उतारकर लोहभस्म, सुवर्णभस्म, रससिन्दूरये एकएकतोले डालकर खूबमिलाकर आधेआधेतोलेकी गोलिया बनाकर यथानुपानसे देनेसे जीर्णज्वर, क्षय, कास, श्वास, सन्ताप, शूल, अजीर्ण, आमवात, पाचतरहकेप्रदर, वन्ध्यत्वदोष, एकान्ततःकन्याजनन और अण्डवृद्धि इनसबको यह पाक दूरकरताहै॥२७६ ॥

## २७७ कुमारीवटी

कुमार्यद्भिर्हेम रौप्यं हरितालञ्च माक्षिकम् ।
शतशो भावयित्वाऽथ गुञ्जामात्रां वटीं चरेत् ।
धात्र्यम्भसा वटी सेयं कुमारीयोजिता हरेत् ।
निखिलान्स्नायुजान्रोगान्कुर्यात्तीक्ष्णं धनञ्जयम्

भै. र, स्नायुरोगे ।

भाषा—सुवर्णभस्म, रौप्यभस्म, हरितालभस्म और सोनामाखी येसब समभागलेकर कुमारीकेरसकी १००भावनादेकर एकएकरत्तीकी गोलियें बनाकर आवलेकेरससे कुमारीकन्याकेहाथसे देनेसे समस्तस्नायुरोगोंको दूरकर अग्निको दीप्तकरतीहै ॥ २७७ ॥

## २७८ कुमुदप्रकाशः

भार्गिका चाजमोदश्च सैन्धवं चित्रमूलकम् ।
त्रिफला त्रिकटु मुस्ता कर्चूरं च तथा स्मृतम्॥

भागार्द्धं हेमबीजानां गन्धकं विषसूतकम् ।
विडङ्गं पिप्पलीमूलमेला जातीफलं समम् ।
अश्वगन्धा वचा हिङ्गु त्रिफला च तथा स्मृता ।
पूर्वभागसमं युक्तं शुष्कचूर्णं तु कारयेत् ११९५
वारिणाऽऽमर्द्य गुटिकां कुबेराक्षसमां विदुः ।
एकैकां भक्षयेत्प्राज्ञः सर्वरोगापनुत्तये ११९६॥
तृतीये क्रमवृद्धिः स्याच्चतुर्थे बलवर्धनम्
पञ्चमे चायुषो वृद्धिः षष्ठे सौभाग्यमेव च ॥
जल्पनं तैलपिष्टादि वर्जयेद्विजितेन्द्रियः ।
विकारान् हरते सर्वान् बुद्ध्यारोग्यबलप्रदम् ॥
कुमुदप्रकाशसंज्ञं वै सोमो यतिरभाषत ।
सुगोप्योयं रसः श्रेष्ठो गात्रे ह्यभयदायकः ॥

र ज्ञा,

भाषा—भारङ्गी, अजमोद, सैन्धव, चित्रकमूल, त्रिफला, त्रिकटु, नागरमोथा, कचूर येसब एकएकतोला, धतूरेकेबीज, शुद्धगन्धक, वछनाग और-पारा येसब ½ आधातोला, विडङ्ग, पिपलामूल, इलायची, जायफल, असगन्ध, बच, हींग और त्रिफला येसब एकएकतोलालेकर कूटकपडछानकर पानीसेपीसकर कजेके बीजकीबराबर गोलियें बनाकर एकएकगोली तत्तद्रोगहरानुपानकेसाथ देनेसे तमामरोगोंको यह दूरकरताहै । लगातार तीनमहीनेतक खानेसे गमनशक्तिबढै । चौथेमहीनेमेंबल, पाचवेंमे आयु, छठेमे सौभाग्य बढतेहै । ज्यादा बोलना, तैल, पिट्ठीकीचीजें येसब छोडदेवेतो यह समस्तरोगोंको दूरकर बुद्धि और आरोग्यको बढाता है। कुमुदप्रकाश इसका नामहै । सोम यतीने इसको कहाहै २७८ ॥

## २७९ कुमुदेश्वरोरसः ( प्रथमः )

पारदं शोधितं गन्धमभ्रकं च समंसमम् ।
तदर्धं दरदं दद्यात्तदर्धांश्च मनःशिलाम् ॥
सर्वार्द्धं मृतलोहश्च खल्वमध्ये विनिःक्षिपेत् ।
द्विःसप्तभावना देयाः शतावर्या रसेन च ॥
ततः सिद्धो भवत्येष कुमुदेश्वरसञ्ज्ञकः ।
सितया मरिचेनाथ द्वित्रगुञ्जाप्रमाणतः ॥
भक्षयेत्प्रातरुत्थाय पूजयित्वेष्टदेवताम् ।
यक्ष्माणमुग्रं हन्त्येव वातपित्तकफामयान् ॥
ज्वरादीनखिलान् रोगान् यथादैत्याञ् जनार्दनः
सतताभ्यासयोगेन वलीपलितनाशनः ॥

बृ यो. त., रसायनस., र च., नि. र., वै. द., र.प्र., वै. क., यो. र., र. का., वै. र., वै. चि., चि. र भ., र. कौ., र क. ल., यक्ष्मणि ।

भाषा—शुद्धपारा, गन्धकऔरअभ्रकभस्म येसब एकएकतोला, शिंगरिफ १॥ तोला, मैनसिल १।॥ तो., इनसबसे आधीलोहभस्म डालकर शतावरीके रसकी चौदहभावनादेकर दो या तीनरत्तीकी गोलियें बनाकर रखछोडे। यह कुमुदेश्वर रस तैयार हुआ । प्रातःकालइष्टदेवताका पूजनकर एकएकगोली तत्तद्रोगहरानुपानकेसाथ लेनेसे अत्यन्तभीषणराजयक्ष्माको दूरकर वात, पित्तऔरकफकेरोगों तथा समस्तज्वरोंको इसतरह नष्टकरताहै । जिसतरह जनार्दनभगवान् दैत्योंको नष्टकरतेहैं ॥ २७९ ॥

## २८० कुमुदेश्वरोरसः ( समहेममृगाङ्कः ) ( द्वितीयः )

हेमभस्म रसभस्म तुल्यकं
मौक्तिकं तु रसपादटङ्कणम् ।
गन्धकं कुरुत सर्वतुल्यकं
काञ्जिकेन परिपेष्य गोलकम् १२०५॥
मृत्स्नया च परिवेष्टय शोषितं
भाण्डके सलवणेऽथ पाचयेत् ।
एकरात्रमथ तं पुटेत वा
सिद्धिमेति कुमुदेश्वरो रसः ॥१२०६॥
वल्लमस्य मरिचै घृतप्लुतं
राजयक्ष्मपरिशान्तये पिबेत् ।
पिप्पलीभिरथवा मधुप्लुतै-
राज्यगव्यपयसा युतैस्तुवा ॥१२०७॥
पथ्यमस्य मधुमांसतश्चरे
च्छालिमुद्गघृतदुग्धमस्तुभिः ।
व्यञ्जनैश्च घृतपाचितैरति-

क्षारहिङ्गुरहितैः घृतैरपि ॥१२०८॥
हृद्यमत्र बलदं हितं हिमं
द्वित्रिवारमपि भोजयेद्भिषक् ।
तैलबिल्वमपि कारवेल्लकं
राजिकादि रसमारकं त्यजेत्॥१२०९॥
क्रोधकामपरिवर्जितः शिवं
चिन्तयेद्धिकरुणामृतार्णवम् ।
भग्नगात्रचिररोगिभोजनं
सक्तुकञ्च परिवर्जयेद्भिषक् ।
सत्त्वमस्ति यदि दैवयोगत
स्तर्हि शुद्धवपुषो रसं ददेत् ॥१२१०॥

र. स., र. क., र. प्र. सु., ध , र. चं., र. मु., र. दी., यक्ष्मणि ।

टि० प्रथमसङ्ख्याकमृगाङ्केणायं तुल्य., केवलं तत्र गन्धको मौक्तिकसमो नियोजितोऽस्ति । अत्र तु सपादचतुर्गुणितोऽस्ति, सौभाग्यन्तु तत्राप्यस्ति । कुत्रचिद्ग्रन्थेषु रसपादश्च टङ्कणमिति न्यस्तं दृश्यते । रसपद्धत्या सकलपादटङ्कणमस्ति कुत्रचिद् रसत्रिभागमस्ति नैतावता विशेषेण रसान्तरतां प्राप्तुमर्हति । वस्तुतस्तु अयङ्कुमुदेश्वराख्य· प्रथममृगाङ्केऽन्तर्भावनीय इति दिक् ।

भाषा—सुवर्णभस्म, पारदभस्म समभाग, इनदोनोंकी बराबरमोती, पारेसे चतुर्थांशसुहागा औरसबकी बराबर गन्धकलेकर काञ्जीमे पीसकर गोलाबनाकर उसपर खालीकपड़ा लपेटकर ढोतीनकपड़मिट्टी चढ़ाकर सुखालेना । फिर लवणयन्त्रमे अथवा भूधरयन्त्रमे चारपहर पकाना । स्वाङ्गशीतलहोनेपर निकाललेना । यह **कुमुदेश्वर** रस तैयारहुआ । इसमेसे ३ रत्तीलेकर २९ कालीमिर्च औरघीकेसाथ अथवापीपलऔरमधुकेसाथ । चटानेसे अथवा घी, दूधऔर पीपलकेसाथ पीनेसे यहरस राजयक्ष्मको बहुतशीघ्र निवृत्तकरताहै । इसमेतैल, खटाईऔरतीक्ष्णपदार्थ न खाय । घीमेबनायेहुए व्यञ्जनदेना । परन्तु उनमे अत्यन्तक्षार औरहींग न हों । जो हृद्य और बलको देनेवाली चीजें है वे भूखलगनेपर दिनमेदोतीनदफाखिलाना । अजीर्ण नहोनाचाहिये इसकाध्यानरखना, तैल, बेल, करेला, राई, तथा इसकोमारनेवाले ककाराष्टक को छोड़देना । क्रोध, काम इनसे रहितहोकर परमेश्वरका ध्यानकरे । यदि मांसाहारीहोतो वह जिसपशुका अङ्गभग्नहै या चिररोगीहै उसको औरसत्तू नखाय । इसकाप्रयोग करतेसमय जिसरोगीका मन काबूमेहैऔरदैव अनुकूलहै ( अर्थात्ग्रहबलहै, मारकेशकीदशान्तरदशानहो) तोरोगीकी शुद्धिकरके यहरस देना २८०॥

## २८१ कुमुदेश्वरोरसः ( तृतीयः )

मृतताम्रस्य भागौ द्वौ भागैकं वङ्गभस्मकम् ।
यष्टीमधुरसे भाव्यं शुष्कं माषार्द्धकं शुभम् ॥
सेवयेच्चानुपानेन वक्ष्यमाणेन बुद्धिमान् ।
चन्दनं शारिवां मुस्तं क्षुद्रैलां नागकेसरम्१२१२
सर्वतुल्यां तथा लाजां पचेत् षोडशिकैः जलैः
अर्द्धशेषं हरेत्क्वाथं सिताक्षौद्रयुतन्तु तत् ॥
छर्दिं तृष्णां निहन्त्याशु रसोऽयं कुमुदेश्वरः ॥

र. स , र सु , ध., र चं , र क , तृष्णायां ।

भाषा—ताम्रभस्म २ भाग, वङ्गभस्म १ भाग, इनकोइकट्ठेकर मुलहठीकेरस अथवा क्वाथसे कईरोज घोटकर सुखाकर रखछोड़े । यह **कुमुदेश्वर** रसतैयारहुआ । इसकी ४ रत्ती नीचेकहेहुए अनुपानकेसाथदेना—चन्दन, सारिवा, नागरमोथा, छोटीइलायची, नागकेसर येसब समभाग औरसबकीबराबर धानकी खीलें लेकर सोलहगुने पानीमे पकाकर आधाबाकीरहनेपर मिश्री औरमधु मिलाकर देनेसे उल्टी, अत्यन्तप्यास, इनको यह दूरकरताहै ॥ २८१ ॥

## २८२ कुमुदेश्वरोरसः (चतुर्थः )

तारं वङ्गं हेम लोहं गगनं नागविद्रुमम् ।
वैक्रान्तं पारदं शङ्खं टङ्कणं गन्धकन्तथा१२१४
माक्षिकं रसकञ्चैव मौक्तिकं हिङ्गुलं समम् ।
समस्तं गव्यदुग्धेन चेक्षुवासारसेन च १२१५
मुसलीकेतकीरम्भाशाल्मलीगोक्षुरद्रवैः ।
वल्लमात्रं प्रयुञ्जीत सिताज्यमधुना सह १२१६
प्रमेहश्वासकासघ्नं ज्वरे जीर्णे प्रयोजयेत् ।
बलवीर्यकरं पुंसां तेजोवृद्धिकरं परम्॥१२१७

अकृत्वा मैथुनं रेतः स्फुटित्वा लोचनं हरेत् ।
कुमुदेश्वरनामायं मेहं जयति दुस्तरम्१२१८॥

रसायनसं, र मु., र. र. को., मेहे

भाषा—रजतभस्म, वङ्गभस्म, सुवर्णभस्म, लोहभस्म, अभ्रकभस्म, नागभस्म, प्रवालभस्म, वैक्रान्तभस्म, शुद्धपारा, शङ्खभस्म, भुनासुहागा, शुद्धगन्धक,सोनामाखी,खर्पर या जस्तभस्म, मोती,शिंगरिफ, येसब समभागलेकर गायकादूध, ईखकारस, अडूसा, मुसली,केतकी,केलेकाकंद,सेमलकामुसला,औरगोखरू इनकेरसोंसे एकएकभावनादेकर तीनतीनरत्तीकी गोलियें वनाकर रखछोड़े ।यह कुमुदेश्वर रस तैयार हुआ। इसको मिश्री, मधुऔरघीके साथदेनेसे प्रमेह, श्वास,कास,जीर्णज्वर,वल,वीर्यऔरतेज इनकी हानिको यह दूरकरताहै।इसरसके सेवनकरनेमे स्त्रीसङ्गवर्जित न करे। उसकेवर्जितकरनेसे शुक्रआखोमे आकर खरावी करेगा ॥ २८२ ॥

### २८३ कुलवधूरसः

शुद्धसूतं मृतं ताम्रं मृतं नागं मनःशिलाम् ।
तुत्थकं तुल्यतुल्यांशं दिनमेकं विमर्दयेत्१२१९
द्रवैश्चोत्तरवारुण्याश्चणमात्रा वटी कृता ।
सन्निपातं निहन्त्याशु नस्यमात्रेण दारुणम् ॥
एपा कुलवधू नाम जले घृष्ट्वा प्रयोजयेत्१२२०

र स, रसचि, भै. र, वै क, र च, र क ल, र. सु, र. का (कुलवटीति नाम्ना प्रथिता), र को,।

भाषा—शुद्धपारा, ताम्रभस्म, नागभस्म, मैनसिल,तुत्थभस्म येसब समभागलेकर इन्द्रायणके रससे १ दिनघोटकर चनेप्रमाण गोलीवनाकर छायाशुष्ककरके रखछोड़ना। यह कुलवधू रस तैयारहुआ । जलमेघिसकर इसकानस्यदेनेसे ज्वरको तत्क्षणनष्टकरताहे ॥ २८३ ॥

### २८४ कुष्ठकालानलोरसः

गन्धं रसं टङ्कणताम्रलोहं
भस्मीकृतं मागधिकासमेतम् ।
पञ्चाङ्गनिम्बेन फलत्रिकेण
विभावितं राजतरो द्रवैस्तु ॥
नियोजयेद्वल्लयुगप्रमाणं
कुष्ठेपु सर्वेपु च रोगसङ्घे ॥ १२२१ ॥

र चि., र. सु, र. स. रसायनसं., र क., र. का., यो. म., र. दी, कुष्टे ।

भापा—शुद्धगन्धक औरपारा,सुहागा,ताम्रभस्म, लोहभस्म औरपीपळ इनको समभागलेकर निम्बपञ्चाङ्ग,त्रिफलाऔरअमिलतास इनकेक्वाथसे एकएकरोज़मर्दनकर ६-६रत्तीकीगोलियें वनाकर रखछोड़े ।यह कुष्ठकालानल रस तैयारहुआ । इसको तत्तद्रोगहरानुपानकेसाथ देनेसे समस्तकुष्ठऔर तमामरोगनष्ट होवैं ॥ २८४ ॥

### २८५ कुष्ठकुठारोरसः ( प्रथमः )

सूतभस्मसमं गन्धं मृतायस्ताम्रगुग्गुलुः।
त्रिफला विपमुष्टिश्च चित्रकश्च शिलाजतु १२२२
इत्येवं चूर्णितं कुर्यात्प्रत्येकं निष्कषोडश ।
चतुःपष्टिं करञ्जस्य वीजचूर्णं प्रकल्पयेत्
चतुःपष्टिं मृतं चाभ्रं मध्वाज्याभ्यां विलोडयेत्
स्निग्धभाण्डगतं खादेद्विमापं सर्वकुष्ठजित्१२२४
रसः कुष्ठकुठारोऽयं गलत्कुष्ठनिकृन्तनः ।
पथ्यं तु मधुरं देयं तदभावे गुडौदनम् १२२५
पातालगारुडीमूलं मधुपुष्पी च धान्यकम् ।
सितया भक्षयेत्कर्पमतितापप्रणुत्तये ॥
लिह्यान्नागवलामूलं मध्वाज्यै र्हन्ति तापकम् ॥

र र. स, र र., र सं, रसायनस., र चि, शा., र. क ल., र प्र. सु, चि क, भै सा, वृ. यो. त., र. प्र, र क, र. कौ, र. सु, टो, यो म, र का., र. र. कौ., र (मा.,) कुष्ठे।

टि०—र. चि, र. सं., र. क ल, रसायनस., र र. दी, र. च, र क, र सु, भा प्र, यो. म, र दी, एपुग्रन्थेषु गलत्कुष्ठारिनाम। रसेन्द्ररत्नकोषे गलत्कुष्ठकुठार इति नाम,केपुचित्पुस्तकेपु सूतभस्मसम गन्धमित्यादि पाठं विधाय सर्वसमुदाये ताम्रस्य स्थितिं षोडशनिष्करूपा कृत्वा सर्वान्ते अभ्रक निष्कास्य तत्स्थाने चतु.षष्टिं मृत ताम्र मध्वाज्याभ्या विलोडयेत् इति पाठ लिखितोऽस्ति तत्र तेषा कोऽभिप्रायइति त एव महाशया जानन्ति । यदिच चतु पष्टि निष्कप्रमाणेन ताम्रं दातुमभिलापा चेत्तर्हि षोडश-

मेसे १२ टङ्क, मिश्री १२ टकलेकर नीमकेरससे तीनगोलियें बनावे, इसतरहकी सातगोलियोंकेखानेसे सातरोजमे सबप्रमेहनष्टहोजातेहै । इसकेजीर्णहोनेपर खरगोशके मासकेसाथ भातदे ॥ ४३९ ॥

**४४० गन्धकवटी ( राजवटी ) ( षष्ठी )**

नागरञ्च चतुर्भागं तदर्धं सैन्धवं विषम् ।
गन्धकं भागमेकञ्च सुपथ्या गन्धकं समम् ॥
निम्बूरसस्य सप्ताहं पुटं दद्याद्विशारदः ।
विसूचिकाऽजीर्णशूलं मन्दाग्निं वमनं हरेत् ॥
एतां गन्धवटीं नाम्ना कोलमात्रान्तु भक्षयेत् ॥
यो चि, चि र भ, अग्निमान्द्ये ।

भाषा—सोंठ ४ भाग, सेंधा आधा भाग, विष, गन्धक, हर्रेऔरहींग येसब एकएकभागलेकर सबको कूटकपड़छानकर नीबूकेरसकी धूपमे सातभावनाएं-देकर रखछोडे । इसमेसे बेरकेबराबर एकएकगोली खानेसे हैज़ा, अजीर्ण, शूल, मन्दाग्नि, वमनयेसब-नष्टहों ॥ ४४० ॥

**४४१ गन्धकवटी ( सप्तमी )**

वराऽग्निरम्भाचणकाऽर्कजातं
क्षारञ्च पुष्पं नवसादरस्य ।
सुधाऽम्बुघृष्टं पुटितं वितस्तौ
पुटे समानं पटुपञ्चकञ्च ॥ १८४३ ॥
तदर्धगन्धं च चतुर्गुणाश्च
व्योषाग्निसम्भर्जितजीरवाल्हीः ।
घृष्ट्वाऽऽज्यभृष्टे लशुनेऽम्लनीरे
वटीः करोत्वग्निमयीरजीर्णे ॥१८४४॥
र. सा, अजीर्णे ।

भाषा—त्रिफला, चित्रक, कदलीकन्द, चनाऔर आकइनसबकेक्षार औरउड़ायाहुआनोसादर येसब समभागलेकर थूहरकेदूधसे मर्दनकर एकबालिस्त भरकेपुटमे इसकोपुटदे । स्वाङ्गशीतलहोनेकेबाद निकालकर इसमेबराबरकेपाचोनमक औरआधागन्धक तथा इससेचतुर्गुणत्रिकटु, चित्रक, सिकाहुआजीरा औरहींग देकर थोड़े घीमेमेकलेवे फिरक्रमसे लशुन और नीबूके रसकी एकएकभावना देकर बेरबराबर गोलियें बनाकररखछोडे । इसकी एकएकगोली खानेसे मन्दाग्नि, अजीर्ण, गुल्म, यकृत्, प्लीहाऔरअरुचि येसबनष्टहोतेहै ॥ ४४१ ॥

**४४२ गन्धकवटी ( अष्टमी )**

गन्धकं मरिचं चुक्रं सौवर्चलसमन्वितम् ।
टङ्कप्रमाणा गुटिका बद्धकोष्ठेऽग्निदीपनी १८४५
वै र., अग्निमान्द्ये ।

भाषा—शुद्धगन्धक, मरिच, चूकाकी भाजी अथवाचूक, सचलयेसब समभागलेकर इसकी ३–३ माशेकीगोलियें बनाकरदेनेसे बद्धकोष्ठवालेका अग्निदीप्तहोकर बद्धकोष्ठता मिटजातीहै ॥ ४४२ ॥

**४४३ गन्धकवटी ( नवमी )**

**( विसूचिकाविध्वंसिनी–त्रिकटुरसायनम् )**

लशुनगन्धकजीरकसैन्धवं
त्रिकटुहिङ्गुभिरत्र समीकृतम् ।
विरचिता गुटिका किल जम्भजे
हरति शूलविसूचिवमिक्रिमीन् १८४६॥
निम्बार्द्रकरसे क्षिप्त्वा सिन्धुसौवर्चलं शुभम् ।
अनेन ह्यनुपानेन योजयेद्गुटिकां भिषक् ॥
रसायनसं, र. का, वै चि, विसूचिकायाम् । र. कामधेनौ जीरकस्थाने यवानी गृहीता ॥

भाषा—लशुन, शुद्धगन्धक, जीरा, सेधानमक, त्रिकटु, हींगयेसब समभागलेकर कूटकपड़छानकर जम्भीरीकेरसकी २–४ भावनाएदेकर बेरबराबरगोलिये बनाकररखछोड़े । इसकी १ गोलीदेकर नीबूऔरअदरखकेरसमे सेंधाऔरसंचलनमकडालकर ऊपरसेपिलावेतो यह वटी शूल, हैज़ा, वमन, कृमिइनसबको नष्टकरतीहै ॥ ४४३ ॥

**४४४गन्धकाजीर्णवद्धो रसः (गन्धवद्धः)**

वृत्तञ्च ह्यङ्गुलाकारं दीर्घोच्चं षोडशाङ्गुलम् ।
सम्पुटं मृन्मयं पक्वं कारयेत्सुदृढं शुभम् ॥
पूरयेद्वालुका भाण्डे यावत्स्याद्द्वादशाङ्गुलम् ।
चुल्ह्यामारोप्य तद्भाण्डमधो मन्दाग्निना पचेत्

पलैकं चूर्णितं गन्धं सम्पुटान्ते विनिःक्षिपेत्।
शुद्धसूतं पलं पश्चात्ततो गन्धं पलं क्षिपेत् ॥
आच्छाद्य पाचयेत्तावद्यावन्निर्धूमगन्धकम् ।
काकमाच्या द्रवैः पूर्य सम्पुटश्चाथ पाचयेत् ॥
जीर्णे द्रावे पुनः पूर्य नागवल्ल्या दलद्रवैः ।
तज्जीर्णे धूर्तजद्रावैर्मेघनादद्रवैः पुनः ॥
एवं पुनः पुनर्देयं यावज्जीर्यति गन्धकम् ।
स्वभावशीतलं ज्ञात्वा भित्त्वा सम्पुटमाहरेत् ॥
गन्धकाजीर्णबद्धोऽयं सर्वरोगहरो रसः ॥

यो म, र. शि, र र., सर्वरोगे । रसराजशिरोमण्था रसरत्नाकरे च मेघनादो न दृश्यते ।

भाषा—लम्बा, चौडाऔरगोल १६ अङ्गुलका मिट्टीकामजबूत मूषबनाकर मिट्टीकीकडाहीमेंरखकर १२ अङ्गुलतकवालूसे ढकदे औरउसकड़ाहीको चूल्हेपरचढाकर धीरेधीरे अग्निजलावे । जबसम्पुट-गरमहोनेलगे तबउसयन्त्रमे खूबबारीक पीसकर एक पलगन्धकछोड़दे । औरउसकेभीतर १पलशुद्धपारा डालकर ऊपरसे एकपलगन्धककाचूर्णऔरडालदे । यन्त्रपर खपड़ेवगैरह रखदे । औरयहध्यान रक्खे कि जिससमय गन्धकका धूआ निकलना बन्दहो उसी समयमकोयकेरससेयन्त्रकोभरदे, औरआचदेताजाय उसरसकेसूखनेपर पानकारसभरदे, उसकेसूखनेपर धतूरेकेपत्तोंकारसडाले, उसकेसूखनेपर काटेवालीचौ-लाईकारसडाले, इसतरह गन्धक एकदम न जलजाय तबतककरताजाय । गन्धकजलनेकेबाद स्वाङ्गशीतल-होनेपर निकालकर रखछोड़े । इसमेंसे २—२रत्ती तत्त-द्रोगहरानुपानकेसाथ देनेसे यह रस तमामरोगोंको-नष्टकरताहै ॥ ४४४ ॥

## ४४५ गन्धकादिचूर्णम्

गन्धकं कर्षमात्रञ्च शिवायाः कर्षपञ्चकम् ।
द्विकर्षं माक्षिकञ्चैव गोघृतञ्च पलोन्मितम् ॥
एकीकृत्य ततः सर्वं कर्षैकञ्च पिबेत्पुनः ।
गोमूत्रेणैव संयुक्तं गलरोगं विनाशयेत् ॥

र कौ, गलरोगे ।

भाषा—गन्धक १ तोला, हर्रे ५ तोले, माक्षिक २ तो०, गोघृत १ पल इनसबको इकट्ठेकर रखछोड़े। इसमेंसे एकएकतोला गोमूत्रकेसाथ सुबह शामपीनेसे गलेकेतमामरोगनष्टहो ॥ ४४५ ॥

## ४४६ गन्धकादिपोट्टलीरसः

गन्धकं तालकं ताप्यं शिलाह्वं पिप्पलीकृते।
कषाये भावयेत्स्नुह्याः क्षीरे मूत्रे च सप्तशः ॥
निष्कार्धमस्याःपोट्टल्याः कर्षार्धं साज्यमाक्षिकम्
प्रयोज्यं सयकृत्प्लीह्नि पञ्चकोलकलांशिकम् ॥
वर्षाभूः कारवी शौण्डी सूचीवचफलासनम् ।
तिलाः क्षिप्रतमा बाणा निशाकर्कन्धुसूरिकाः ॥
रक्तागस्त्येन्दुरेखाब्दनीलज्योतिरयो मृतम् ।
वल्कलं बहुवल्लर्याः कृष्णाकाम्बोजिकाफलम् ॥
गवाक्षी रजनी कृष्णा निम्बवेल्लकठिल्लकम् ।
मणिकांशं पृथक् क्षुण्णं तुल्यं भूशर्करायुतम् ॥
त्रिफलाबीजतैलेन भावितं कर्षसम्मितम् ।
प्राह्णे घृतेन मध्याह्ने गुडेन मधुना निशि ॥
पादं पादार्धमात्रं वा पोट्टल्याश्च रजो भवेत् ।
हैयङ्गवीनशाल्यन्नकृष्णागोक्षीरभोजनः ॥
एवं वर्षत्रयं कुर्यात्स्याद्वलीपलितोज्झितः ।
प्रत्यहं मण्डलं खादेत्पथ्यं त्यक्त्वा ततः परम्॥
इष्टाहारविहारीच सहस्रायुर्भवेत्परम् ॥

र. र स, रसायने ।

भाषा—शुद्धगन्धक, हरिताल, सोनामाखी, मैनसिल येसबसमभागलेकर इनको पीपलकाकाढा, थूहरकादूध औरगोमूत्र इनसेसातसातबारघोटकर गोलीबनाले । इसमेंसे २ माशेलेकर ३ माशेघी और ३ माशेमधुकेसाथमिलाकर इसमेसोलहवा हिस्सा पञ्च-कोलकाचूर्णडालकर यकृत्औरप्लीहावालेको चटावेतो इससे यकृत्, प्लीह, गुल्म, मन्दाग्नि, वातशूल जीर्णज्वर, भ्रमयेसबनिवृत्तहो । बहुतदिनसेवनकरनेसे रसायनका काम करतीहै ।

अथवा सफेद पुनर्नवा, कलौंजी, गजपीपल, कुशाकीजड़, वचा, त्रिफला अथवा मैनफल, विजय-

सार, तिल अथवा हुरहुर, अमरबेल, शरपुख, हल्दी, बेरकीमज्जा, ब्राह्मी, रक्तागरुःयकेफूल अथवा छाल, बाकुची, नागरमोथा, कालादाना अथवा अपराजिता, लोहभस्म, तज, गुडूचीकेफल,पीपल, सफेदगुञ्जा, इन्द्रायणकीजड, दारुहल्दी, पीपल, नीमकीछाल, विडङ्ग, लालपुनर्नवा येसबचीजें एकएकतोलालेकर इनकासूक्ष्मचूर्णकर इनकीबराबर भूशर्करा ( दीमककामूलघर अथवा वाराहीकन्द ) औरघीडालकर त्रिफलाकीमज्जाकेतैलसे एकभावनादेकररखछोड़े । इसमेसे १ तोला यहअवलेहलेकर इसमे २ माशेया ४ माशे पोट्टलीकाचूर्णमिलाकर रोज़सवेरे गायकेघीकेसाथखाय, दोपहरको गुडकेसाथ और रातको मधुकेसाथ खावे । इसकेजीर्णहोनेपर मक्खन, सफेदचावल,कालीगायकादूध, इनकाभोजनकरे । इसतरह लगातार ३ वर्षप्रयोगकरनेसे वलीपलितसेरहितहोकर दीर्घायु होताहै । किसीरोगकीनिवृत्तिकेलिये इसकाप्रयोगकियाजायतो एकमण्डलअर्थात् ४९ रोजपथ्ययुक्तसेवन करनेसे रोगसेनिर्मुक्तहो, उसकेबाद यथेष्टाहारविहारकरे, पर रसायनार्थीकोतो तीनबरसतक बराबरयन्त्रणामेरहनाचाहिये ॥ ४४६ ॥

### ४४७ गन्धकानुपानम् ( प्रथमम् )

ज्योतिष्मत्यास्तैलमाज्यं सगन्धं
गुञ्जावृद्ध्या सेवयेन्मासमात्रम् ।
यावच्च स्याद्यस्तु सः प्राप्यमूर्ति
मेधायुक्तो दिव्यदृष्टिर्नियक्ष्मा १८६४॥

र र स, र. र., कौ, र म. मा, मेधावृद्धये ।

भाषा—३माशेगन्धकको मालकागनीकेतैल औरघीकेसाथ मिलाकर चाटनाशुरूकरे । औररोज१-१ रत्तीबढाताजाय ऐसेएकमहीनेतककरनेसे बुद्धिऔरदिव्यदृष्टि प्राप्तहो तथासबरोगनष्टहों ॥ ४४७ ॥

### ४४८ गन्धकानुपानम् ( द्वितीयम् )

सेवेद्गन्धं राजवृक्षान्वितं तल्लेपाच्चूर्णं
याति नाशं विसर्पः ।
यद्वा रक्तं सुष्ठु निःसार्य लेपा-
द्राजीबीजं भर्जितं राज्यमिश्रैः १८६५

र. दी., विसर्पे ।

भाषा—३माशेगन्धकको अमिलतासकेकाढेकेसाथ खिलानेसे औरलेपकरानेमे विसर्पनष्टहोताहै । अथवाविसर्पस्थानसे रक्तनिकालकर बाकुचीकेबीजोंकोसेककरघीमेमिलाकर लेपकरनेसे विसर्पदूरहोताहै ॥ ४४८ ॥

### ४४९ गन्धकानुपानम् ( तृतीयम् )

गन्धकं मरिचं साज्यं पिबेद्वातकफापहम् ।
गन्धकं घृतपानेन श्वासयक्ष्मक्षयापहम् ॥

र र., श्वासकासे ।

भाषा—३माशेगन्धकको मरिचऔरघीकेसाथपीनेसे वातकफकानाशहो । केवलघीकेसाथपीनेसे श्वास, राजयक्ष्मा औरक्षयकानाशहो ॥ ४४९ ॥

### ४५० गन्धर्वरसः

गन्धकाष्टगुणं सूतं शुद्धं मृद्वग्निना क्षणम् ।
पक्त्वाऽवतार्य सञ्चूर्ण्य चूर्णतुल्याभयायुतम् ॥
सप्तगुञ्जमिदं खादेद्वर्धयेच्च दिनेदिने ।
गुञ्जैकैकं क्रमेणैव यावत्स्यादेकविंशतिः ॥
क्षीराज्यशर्करामिश्रशाल्यन्नं पथ्यमाचरेत्
कम्पवातप्रशान्त्यर्थं निर्वाते निवसेत्सदा ॥
गन्धर्वाख्यो रसो नाम त्रिपक्षात्कम्पवातनुत्॥

र सि , कम्पवाते ।

भाषा—शुद्धपारा१भाग, शुद्धगन्धक८भाग इनदोनोंकी कज्जलीकर कड़ाहीमेडालकरगलालेवे, गलनेपरउतारकर उसेखूबघोटे यहातककिउसकीफिरकज्जलीहोजाय फिरइसकज्जलीकी बराबर हरडोंकाचूर्णमिलाकर सातरत्तीमधुवगैरहकेसाथखावे, २१दिनतकएकएकरत्तीबढातजाय, दूध, चावलऔरशक्ररखानेकोलेवेतो कम्पवातनिवृत्तहो । निवातस्थानमे रहनाचाहिये, यदि २१रोजमेबराबरअरोगता नहोतो २१रोजकेबादजिसप्रकारवृद्धिकीहै वैसेहीह्रासकरे । इसप्रकार१॥महीनेतककरनेसे अवश्यही कम्पवायुदूरहो ॥ ४५० ॥

### ४५१ गन्धाभ्रकम्

अथाभ्रकं शोधितगन्धतुल्यं
करीषवह्नौ लघुना पुटेन ।
सिद्धं भजेत् त्र्यूषणहिङ्गुयुक्तं
यथावयोवह्निबलप्रमाणम् ॥ १८७० ॥
जयत्यतीसारमुदाररूपं
हुताशमान्द्यं ग्रहणीविकारम् ।
अर्शांसि मेहानथ पाण्डुरोगं
प्लीहान्त्रवृद्धिं परिणामशूलम् १८७१

लो प, (स०) ( अग्निमान्द्ये )।

भाषा—शुद्धगन्धक औरअभ्रकभस्म समभागलेकर पानवगैरहके रससेघोटकर गोलीबनाकर और सुखाकर शरावसम्पुटमे बन्दकर लघुपुटदेवे । स्वाङ्गशीतलहोनेपर निकालकर इसकीवराबरत्रिकटुऔर-भुनाहीगमिलाकर योग्यतानुसारमात्राकायमकर खानेसे उद्धतअतीसार, अग्निमान्द्य, ग्रहणी, ववासीर, प्रमेह, पाण्डु, प्लीहा, अन्त्रवृद्धि( हार्निया ), परिणामशूल, इनको यह दूरकरताहै ॥ ४५१ ॥

### ४५२ गन्धामृतो रसः ( प्रथमः )

भस्मसूतं द्विधा गन्धं क्षणं कन्याविमर्दितम् ।
रुद्ध्वालघुपुटे पाच्यमुद्धृत्य मधुसर्पिषा १८७२॥
निष्कं खादेज्जरामृत्यू हन्ति गन्धामृतो रसः ।
समूलं भृङ्गराजं तु च्छायाशुष्कं विचूर्णयेत् ॥
तत्समं त्रिफलाचूर्णं सर्वतुल्या सिता भवेत् ।
पलैकं भक्षयेच्चानु तच्च मृत्युजरापहम् १८७४॥

र म, र. सु, र ख, यो म., भै र, रसायनस, र चि, रसायने।

भाषा—पारेकीभस्म १ भाग, शुद्धगन्धक दो भागलेकर घीकुआँरकेरसमे थोडीदेरमर्दनकर गोलीवनाकर सुखाकर सम्पुटमेबन्दकर लघुपुटकीआचदे। स्वाङ्गशीतलहोनेपर इसमेसे ४ मासेमधुऔरघीके साथखानेसे बुढापाऔरमृत्युनष्टहो । इसकेऊपरजड़सहितभगरेकोछायाशुष्ककर इसकीवरावर त्रिफलाको वारीकपीसकर दोनोकीबराबर शक्करमिलाकर ४ तोले खाकरऊपरसेदूधपीवे ॥ ४५२ ॥

### ४५३ गन्धामृतो रसः ( द्वितीयः )

रसं गन्धश्च तैलेन मर्दयेत्पादटङ्कणम् ।
तत्पिण्डं बन्धयेद्वस्त्रे गन्धं जारयेश्च पूर्ववत् ॥
चूर्णलिप्तेष्टिकायन्त्रे यावज्जीर्यति षड्गुणम् ।
योगवाह्यौषधद्रावैः पिष्ट्वा लेप्यश्च स्वेदयेत् ॥
अयं गन्धामृतो नाम रसो हिक्कां विनाशयेत्।
गुञ्जात्रयं लिहेत्क्षौद्रैः कषायश्च पिबेदनु ॥
अमृताग्निकुलत्थैश्च पाययेत्कथितैर्जलैः ॥

र को, यो म, व. रा, र का, हिक्कायाम्।

भाषा—शुद्धपाराऔरगन्धक १–१ तोला, सुहागा ३ मासे, लेकर तैलसेमर्दनकर गोलावनाकर वस्त्रमेबाधकर पकीईंटमे गर्तबनाकर चूनेकालेपदेकर उसमेउसपोट्टलीकोरखऊपरदीवेसे ढककर सन्धिकोबन्दकरदे । ऊपरसे इतनीअग्निदे कि भीतरकाकपड़ाजलजाय, इसतरह बारम्बारकरताहुआ षड्गुणगन्धकजारणकरे। फिरइसको योगवाहीऔषधोकेरसोसेमर्दनकरगोलाबनाकर औरगोलेपरयोगवाहीऔषधोंकालेपकर कपड़ेमेबाधकर योगवाहीऔषधोंहीकेरसमे दोलायन्त्रसे १–२ रोजस्वेदनकरके रखछोड़े यहगन्धामृत नामरस तैयारहुआ। इसमेसे ३ रत्ती मधुमेमिलाकरचाटकर गिलोय, चित्रक, कुलथीइनका काढापिलानेसे असाध्यहिचकी नष्टहोतीहै ॥४५३॥

### ४५४ गन्धाश्मगर्भो रसः ( प्रथमः )

गन्धं रसेनाष्टगुणं विमर्द्य
कृशानुतोयेनविपाचयेत ।
मृद्वग्निना लोहमयेऽथपात्रे
विषेणपश्चादपि सिद्धिमेति ॥१८७८॥
गन्धाश्मगर्भोहि रसोऽस्य सर्व-
स्पर्शप्रणुत्यैभज वल्लयुग्मम् ।
सक्षीरमन्नं सघृतश्च भोज्यं
वर्ज्यश्च सर्वं परिवर्जनीयम् ॥१८७९॥

र. र. स., र. को, र. दी, कम्पस्पर्शवातयो ।

भाषा—गन्धक ८ भाग, शुद्धपारा १ भाग, लेकर दोनोंकीकजलीकर चित्रककाआठगुनारसदेकर बहुतमन्दआंचसेपकावे। रसकेसूखजानेपर इतनाही-बछनागकाक्काथदेकर सुखानेसे यह **गन्धाश्मगर्भ** रसतैयारहोताहै। इसमेसे ६ रत्तीमधुकेसाथदेकर दूध-पिलावेतो कम्पवातऔरस्पर्शवातनष्टहो, इसमे दूध, चावलऔरघीइनकेसिवाय औरकुछनखाय ॥ ४५४ ॥

**४५५ गन्धाश्मगर्भो रसः ( द्वितीयः )**

**गन्धकं चूर्णितं कृत्वा सूक्ष्मवस्त्रोपरि न्यसेत्।**
**भाण्डे गोदुग्धकं दत्त्वा द्राव्यं वा खर्परेण च ॥**
**अग्निं प्रज्वालयेदूर्ध्वं पश्चाच्छीतं समुद्धरेत् ।**
**गन्धकाष्टकभागेन रसं दत्त्वाऽथ पाचयेत् ॥**
**मृद्वग्निना शीतभूमावुत्तार्योत्तार्य यत्नतः ।**
**यावद्गन्धकरूपस्य पूर्वस्य ह्यन्यथा भवेत्१८८२**
**सप्तगुञ्जं ददीतास्य यावत्स्यादेकविंशतिः ॥**
**प्रत्यहं तु हरीतक्या गुञ्जानामेकविंशतिम् ॥**
**सक्षीरं सघृतं चान्नं भोजयीत सशर्करम् ।**
**निर्वाते चावतिष्ठेत कम्पस्पर्शापनुत्तये ॥**
**गन्धाश्मगर्भसंज्ञोऽयं योगिभिः परिकीर्तितः॥**

र र स, र को, र दी, कम्पस्पर्शवातयो ।

भाषा—घडेमेदूधभर उसपर खादीकाकपड़ा बाधकर उसपरबहुतबारीकपिसाहुआ गन्धक बिछा-कर ऊपरढक्कनदेकर सन्धिबन्दकरके ऊपरसे इतनी आचदेकि वहगन्धककपड़ेसेछनकर नीचेदूधमेजा गिरे। फिर ठढाहोनेकेबाद इसगन्धककोनिकालकर कपडेसेसाफकर इसमेआठवाहिस्सा शुद्धपारादेकर कज्जलीबनाकर कडाहीमेरखकरगलावे, गलनेपर कडाहीको उतारकर खूबघोटे औरफिरअग्निपररक्खे जब-तकगन्धककारंग न बदलेतबतकइसीतरह करताजाय जबगन्धककारंग बिल्कुलनमालूमहो तबइसको उता-रकर खूबघोटकर रखछोड़े। इसमेसे ७रत्ती लेकर २१ रत्तीहरीकेचूर्णकेसाथ मधुवगैरहमे मिलाकर चटावे। ऐसे २१ रोजतककरनेसे कम्पवात, और स्पर्शवात येदोनों नष्टहों। इसदवाके प्रयोगकरनेवालेको निर्वात-स्थानमे रखनाचाहिये, दूध, घी, अन्न, शक्कर इनके सिवाय औरकुछन खिलावे ॥ ४५५ ॥

**४५६ गरनाशनोरसः**

**शुद्धसूतं मृतं स्वर्णं संशुद्धं हेममाक्षिकम् ।**
**त्रयाणां गन्धकं तुल्यं मर्द्यात्कन्याद्रवैर्दिनम् ॥**
**तच्छुष्कमसितं क्षौद्रं माषकं लेहयेत्सदा ।**
**वह्निमूलं शृतं क्षीरैरनुस्याद्गरनाशनम् १८८६॥**

रसायनस., र. चं., गरविषे ।

भाषा—शुद्धपारा, सुवर्णभस्म, शुद्धसुवर्ण-माक्षिक एकएकभाग, गन्धकसबकीबराबरलेकर घीकुं-आरकेरससे एकरोजमर्दनकर सूखजानेपर धररक्खे। इसमेसे १ माशादवामधुकेसाथ चाटकर चित्रकका-क्काथपीनेसे बनावटीजहरका नाशहोताहै ॥ ४५६ ॥

**४५७ गरुडध्वजरसः**

**(वातशार्दूल–रसेन्द्रगुटी–वातवज्रः )**

**विषसूताभ्रगन्धश्च व्योषं हिङ्गुलसैन्धवम् ।**
**लवङ्गं पिप्पलीमूलं तुल्यंतुल्यं विमर्दयेत्१८८७**
**दिनं हंसपदीद्रावैः कुक्कुटीपुटपाचितम् ।**
**चूर्णीकृतं ततो देयमनुपानं विशेषतः ॥**
**माषमात्रं ज्वरं हन्ति रसोऽयं गरुडध्वजः ॥**

वै चि, व रा, ज्वरे प्रभापाते च ।

टि०—वैद्यचिन्तामणौ वसवराजीये च अयमेव पाठ प्रभापाते लिखितोऽस्ति, तन्नामच वातशार्दूल इति स्थापि-तम्, वै चिन्तामणावुभय–वसवराजीये केवलो वातशार्दूल इति स्मर्तव्यम्, पाठस्तु एक एवास्ति वातशार्दूले वचास्ति, गरुडध्वजे तु व्योषमस्ति तत्रोभयत्रापि व्योषदाने न क्षतिर-यवाव्योषच वचाञ्चोभयमपि प्रक्षेप्यमित्यस्माकं सम्मतिं, वसवराजीयेकासाधिकारे वातशार्दूलस्य रसेन्द्रगुटीति नाम । अथ पाठो वातवज्रनाम्ना वैद्यचिन्तामणिवसवराजीययोः खञ्जवाते पठितस्तत्र लवङ्गस्थाने विडङ्गं प्रदत्त, चित्रकञ्चा धिकतया प्रक्षिप्तं तदुभयोरपि मूलपाठे प्रक्षेपान्न काप्यनुप पत्तिरतस्तस्याप्यत्रैवान्तर्भाव ।

भाषा—शुद्धबछनाग, पारा, अभ्रकभस्म, शुद्धग-न्धक त्रिकटु, बच, शुद्धशिंगरिफ, सेंधानमक, लौंग, पिपलामूल येसबसमभागलेकर हसपदीकेरससे एक

दिनमर्दनकर गोलाबनाकर सुखालेना औरकुक्कुटपुटमे आचदेना। स्वाङ्गशीतल होनेपर निकालकर खूबबारीक पीसकर रखछोड़ना, इसकोज्वरमे ज्वरघ्नानुपानकेसाथ, प्रभापातमेपित्तघ्नानुपानकेसाथदेना। लेपप्रभृतिभी तमामपित्तशामकक्रियाये करना ॥ ४५७ ॥

### ४५८ गरुडाऽगदोरसः( प्रथमः )

मृतगन्धकशिलानवसारं
हल्लतालवण तैत्तिरामृतम्।
अर्कजत्रिकटु तैत्तिराऽऽम्लिके
मर्दयेत्खरतरं दिनाष्टकम् ॥ १८८९ ॥
अङ्गमर्मनिहितो गरुडोऽयं
हन्ति शूलपवनोल्वणमौढ्यम्।
सन्निपाततनुभङ्गमशेषं
हन्तिजङ्गमविषं व्रणपीडाम् ॥१८९०॥

र. ग. विषे।

भाषा—शुद्धपारा, गन्धक, मैनसिल, नोसादर, अमलोनिया (खाटीभाजी), सेंधानमक, शुद्धजमालगोटा, और बछनाग येसब समभागलेकर कूटकपडछानकर आकका़दुध, त्रिकटु, चित्रक, इमलाइनकोरसोंसे खूबकड़ीधूपमे ८ रोजमर्दनकर दोरत्तीसे ३ रत्तीतक मात्रा विषघ्नऔरसन्निपातघ्न अनुपानकेसाथदेवे तथा नाभि, हृदयऔरमस्तकपरलेपकरे। मूर्च्छावस्थाहोतो नस्यदे। इससे वातप्रधानबुद्धिभ्रंश, घोरसन्निपात, लकवा, अर्धाङ्ग, रक्तका किसीभीमार्गसेनिकलना, व्रण औरजङ्गमविष, येसब नष्टहोतेहै नेत्रमेअञ्जनतथानस्य देना, अत्यन्तमूर्च्छितअवस्थामे मस्थेपरपाछदेकर रक्तनिकलनेपर घिसना ॥ ४५८ ॥

### ४५९ गरुडाऽगदोरसः ( द्वितीयः )

बीजं पलाशजं गुञ्जा निशा दन्तिफलं तथा।
क्षारद्वयञ्चातिविषां कन्दञ्चामरसंज्ञकम्
रसोनं टङ्कणश्चूर्णं तुत्थैकं दरदं विषम्।
भागोत्तरमिदं कृत्वा गोमूत्रेण विभावितम् ॥
योजयेन्निम्बुकद्रावै ज्ञात्वा मलबलाबलम्।
ज्वरान्सर्वान्निहन्त्याशु सन्निपातान्महोत्कटान् ॥
श्लेष्मणः सम्भवान्रोगांस्तथा वै सर्वबातजान्
अमोघवीर्यमेतञ्चागदोऽयं गरुडोमतः १८९४॥

र का., सन्निपाते।

भाषा—पलाशकेबीज १ भाग, सफेदगुञ्जादोभाग, हल्दी ३ भाग, जमालगोटा ४ भाग, सज्जीखार ५ भा०, जवाखार ६ भा०, अतीस ७ भा०, अमरकन्द ८ भा०, लशुन ९ भा०, सुहागा १० भाग, तुत्थ ११ भाग, शिंगारिफ १२ भा०, शुद्धबछनाग १३ भा०, लेकर गोमूत्रसेघोटकर एकएकरत्तीकीगोलियां बनाकररखछोड़े, इनमेसेरोगीऔररोगका बलाबलदेखकर एकयादोगोली नीबूकेरसमेदेनेसे समस्तज्वर, अत्यन्तबढेहुएसन्निपात, श्लेष्मरोग, वातरोग औरजङ्गमविष इनको यह नस्य, लेपऔर पानसेदूरकरताहै ॥ ४५९ ॥

### ४६० गर्भचिन्तामणिरसः (प्रथमः)

रसं तालं तथा लौहं प्रत्येकं कर्षमात्रकम्।
कर्षद्वयं तथा चाभ्रं कर्पूरं वङ्गताम्रकम् १८९५
जातीफलं तथा कोषं गोक्षुरञ्च शतावरी।
बलातिबलयो मूलं प्रत्येकं तोलकं शुभम् १८९६
वारिणा वटिका कार्या द्विगुञ्जाफलमानतः।
सन्निपातं निहन्त्याशु स्त्रीणाञ्चैव विशेषतः ॥
गर्भिण्या ज्वरदाहञ्च प्रदरं सूतिकामयम् १८९७

भै. र, ध, र स., र. सु, र र, व. रा, सूतिकारोगे। रसेन्द्रसारसङ्ग्रहरसराजसुन्दरयोस्तार गृहीतम्। अन्यत्र तालगृहीत तत्र समशीतौष्ण्यात्तारमेवोचित प्रतिभाति।

भाषा—शुद्धपारा, हरितालऔरलोहभस्म येप्रत्येक एकएकतोला, अभ्रकभस्म २ तो०, कपूर, वङ्गभस्म, ताम्रभस्म, जायफल, जावित्री, गोखरू, शतावर, बला और अतिबलाकीजड ये प्रत्येकएकतोलालेकर सबकोकूटकपड़छानकर शतावरकेमूलस्वरस अथवाकेवलपानीसेमर्दनकर दोदोरत्तीकीगोलिया बनाकर रखछोड़े, इसमेसे एकएकगोली उचितावस्थानुपानकेसाथ देनेसे सन्निपातनिवृत्तहो औरखासकर स्त्रियोंकीगर्भिण्यवस्थाके ज्वर, दाह, प्रदरऔरसूतिकारोग येसबनष्ट होतेहै ॥ ४६० ॥

### ४६१ गर्भचिन्तामणिरसः ( द्वितीयः )

जातीफलं टङ्कणञ्च व्योषं दैत्येन्द्ररक्तकम् ।
तच्चूर्णं समभागेन मर्दितं प्रहरद्वयम् १८९८ ॥
जम्बीररसयोगेन वटीं कुर्याद्विचक्षणः ।
गुञ्जाद्वयप्रमाणान्तु वैद्यः कृत्वा प्रयत्नतः ॥
आर्द्रकस्य रसेनैव भक्षयेदुष्णवारिणा ।
निहन्ति सर्वरोगञ्च भास्करस्तिमिरं यथा ॥

र. स, र र, र. सु, व रा., सर्वरोगे।

भाषा—जायफल, भुनासुहागा, त्रिकटु, गन्धक शिंगारिफ,येसबसमभागलेकर कूटकपडछानकर जम्भीरीकेरससे दोपहरमर्दनकर दोदोरत्तीकीगोलिये बनाकर रखछोड़े। इसमेसे १-१ गोलीअदरखकेरसअथवा गरमपानीकेसाथदेनेसे यह ज्वरादिसमस्तउपद्रवोको इसतरहनष्टकरताहै जैसे सूर्यअन्धकारको नष्टकरताहै ॥

### ४६२ गर्भचिन्तामणिरसः (बृहन्) ( तृतीयः )

सूतं गन्धं तथा स्वर्णं लौहं रजतमाक्षिकम् ।
हरितालं वङ्गभस्माप्यभ्रकं समभागिकम् ॥
भावना खलु दातव्या रसैरेषां पृथक् पृथक् ।
ब्राह्मी वचा भृङ्गराजपर्पटं दशमूलकम् ॥
सप्तधा भावयेद्वैद्यो गुञ्जामात्रां वटीं चरेत् ।
गर्भचिन्तामणिरयं पूर्ववत्कथिता गुणाः ॥

र स, र र, व रा, र सु. व, भै र, सूतिकारोगे धन्वन्तरि भैषज्यरत्नावल्यो गर्भपीयूषवल्लीति नाम ।

भाषा—शुद्धपाराऔरगन्धक, सुवर्णभस्म, लोहभस्म, रजतभस्म, सोनामाखी, हरितालभस्म अथवा रसमाणिक्य, वङ्ग०, अभ्रक०, येसबसमभागलेकर ब्राह्मी, वच, भागरा, पित्तपापडा, दशमूल ( वेल, सोनापाठा, गभारी, पाटला, अरणी, शालपर्णी, पृश्निपर्णी, दोनोंकटेरी, गोखरू ) क्रमसेइनके स्वरसअथवाक्वाथोसे सातवारभावनादेकर एकएक रत्तीकीगोलियेंवनाकर रखछोड़े । इसकीएकएकगोली उचितानुपानकेसाथ देनेसे गर्भिणीकेसमस्तरोगदूरहोतेहै ॥ ४६२ ॥

### ४६३ गर्भपालरसः ( प्रथमः )

रसं विमर्द्य त्रिदिनं जयन्ती-
सच्छाल्मलीतुल्यरसेन तस्य ।
पलं वरात्र्यूषणषट्पलानि
प्राग्वद्विमर्द्याथ वटीं विदध्यात् ॥
तां वारिणाघृष्य सगर्भयोपि-
न्नाभिप्रदेशे विहितोऽतिलेपः ।
वान्त्यग्निमान्द्यार्तिशिरोव्यथादी-
नरोचकश्चापि निहन्ति सद्यः ॥१९०५
घृतोपणै र्वल्लमितः प्रयुक्त-
स्तानेवरोगाञ्जयति प्रगाढम् ।
सशर्कराक्षीरयुतो नराणा
मुपद्रवॉल्लङ्घनसंभवांश्च ॥ १९०६ ॥

र ल, र. को., र र कौ., र. श,

भाषा—१पलशुद्धपारदको३रोज़जैतऔरशाल्मलीके वरावररससे मर्दनकर त्रिफला, त्रिकटु३पललेकर वारीकचूर्णकर उसमे मिलाकर पूर्वस्वरसोंसे, खूबमर्दनकर ३-३रत्तीकीगोलियेंवनाकर रखछोड़े, इसमेसे१गोलीपानीकेसाथघिसकर गर्भिणीकीनाभिपरलेपकरनेसे वान्ति, मन्दाग्नि, सिरकीपीड़ाऔरअरुचि येसब तत्क्षणनष्टहोते है। इसीतरह १ गोली घी औरमरिचकेसाथखिलानेसेभी यह उन्हींरोगोकोदूरकरताहै। शक्करऔरदूधकेसाथमनुष्योंकोदेनेसे अतिलङ्घनकृतउपद्रवदूरहोतेहै ॥ ४६३ ॥

### ४६४ गर्भपालरसः ( द्वितीयः )

हिङ्गुलं नागवङ्गौ च त्रिजातञ्च कटुत्रयम् ।
धान्यकं कृष्णजीरञ्च चव्यं द्राक्षा सुरद्रुमः ॥
कर्षमानं पृथक् सर्व कर्षार्धं लोहभस्म च ।
सप्ताहं मर्दयेत्खल्वे विष्णुक्रान्तारसेन च ॥
गुञ्जामात्रा च वटिका द्राक्षाक्वाथेन योजयेत् ।
मासप्रथममारभ्य नवमासान्तमेव च ॥
गर्भिणीरोगनाशार्थं गर्भपालरसः स्मृतः ॥

र. चं., र. म मा, वै. चि. ( ल ), गर्भिणीरोगे, र म. मालाया सर्वेषामर्धं लोह दृश्यते ।

भाषा—शुद्धशिंगरिफ,नागभस्म,वङ्गभस्म त्रिजात (तज, पत्रज, इलायची) त्रिकटु (सोठ, मिर्च, पीपल,) धानिया, स्याहजीरा, चव्य, द्राक्ष, देवदारुये प्रत्येक१तोला,लोहभस्म आधा तोलालेकर सबकोकूट-कपड़छानकर७रोजविष्णुक्रान्ताके रससेमर्दनकरएक-एकरत्तीकी गोलियेंबनाकर रखछोड़ें। इसमेसे १-१ गोलीप्रथममहीनेसेलेकर ९ महनितक द्राक्षकेक्वाथके साथदेनेसे गर्भिणीके समस्तरोग नष्टहोकर खूबपुष्ट-बच्चा पैदाहोताहै ॥ ४६४ ॥

## ४६५ गर्भविनोद रसः

त्रिभागं त्रिकटुं दद्याच्चतुर्भागं च हिङ्गुलम्।
जातीकोषं लवङ्गं च प्रत्येकश्च त्रिकार्षिकम्।
सुवर्णमाक्षिकश्चैव पलार्धं प्रक्षिपेद्बुधः।
जलेन मर्दयित्वाऽथ चणमात्रा वटी कृता॥
निहन्ति गार्भिणीरोगं भास्करस्तिमिरं यथा॥

र. चिं., र. स, र र., व. रा, र च, गर्भिणीरोगे।

भाषा—त्रिकटु ३ तोले, शुद्धशिंगरफि४तोले, जावित्री३तो०, लौंग ३ तो०, सोनामाखी२तोला, इनसबको कूटकपड़छानकर जलकेसाथघोटकर चने-प्रमाणगोलिये बनाकर रखछोड़े। इसमेसे १-१गोली उचितानुपानकेसाथदेनेसे गर्भिणीके रोगोको इस-तरहनष्टकरताहै जैसे सूर्यअन्धकारको ॥ ४६५॥

## ४६६ गर्भविलासरसः(गर्भचिन्तामणिः)

रसगन्धकतुत्थश्च त्र्यहं जम्बीरमर्दितम्।
त्रि र्भावितं त्रिकटुना देयं गुञ्जाद्वयोन्मितम्॥
गर्भिण्याः शूलविष्टम्भज्वराजीर्णेषु केवलम्।
तुत्थस्थाने यदि स्वर्णं चिन्तामणिरसः स्मृतः

भै र., र. को., ना. वि., र. क, र र. व रा, र चं., रसायन स., नि र, र सि, र चि, र शं., टो, र का, र सु, र स., यो म, गर्भिणीरोगे। रसेन्द्रचिन्ता-मणिरसराजसुन्दररसेन्द्रसारसङ्ग्रहेषु सूतिकाविनोद इतिनाम।

भाषा—शुद्धपारा, गन्धकऔरतुत्थ इनकोती-नतीनरोज जभीरीऔरत्रिकटुकेक्वाथसे मर्दनकर दो-दोरत्तीकीगोलिया बनाकररखछोड़े। इसमेसे एकए-कगोली उचितावस्थानुपानकेसाथ देनेसे गर्भिणीके शूल, विष्टम्भ, ज्वर, अजीर्ण, अरुचि, अग्निमान्द्य-प्रभृति समस्तरोग निवृत्तहों। इसरसमे तुत्थके स्था-नमे यदि सुवर्ण देवेतो इसकानाम गर्भचिन्तामणि होताहै ॥ ४६६ ॥

## ४६७ गलगण्डनुद्रसः

पारदं विमलं तार्प्यं त्रिकटुं ताम्रसैन्धवम्।
तुल्यं गव्यजलैः पिष्टं सुखोष्णं लेपयेन्मुहुः॥
त्र्यहं कण्टकशालूकं गलशुण्डीश्च नाशयेत्॥
कृष्णगन्धार्कभक्ताभ्यां लेपोऽस्यगलगण्डनुत्॥

र. म मा.,

भाषा—शुद्धपारा, रूपामाखी, सोनामाखी, त्रिकटु, ताम्रभस्म, सेंधानमक सबसमभागलेकर गोमूत्रमेपीसकर कदुष्णलेपकरनेसे तीनरोज़मे गलक-ण्टक, शालूक, गलशुण्डीइनको यहरस नष्टकरताहै हुरहुरऔरसहिजनकेसाथ लेपकरनेसे गलगण्डको निवृत्तकरताहै ॥ ४६७ ॥

## ४६८ गलत्कुष्ठहरोरसः (ताण्डवः)

माक्षिकं गन्धकं तालं कुष्ठं मृतरसं समम्।
श्वेतापराजिताद्रावै र्मर्दयेद्दिवसत्रयम्।
धात्रीफलरसेनैव सप्तधा भाव्यमातपे।
अन्धमूषागतं रुद्ध्वामूषामूर्ध्वे च च्छिद्रयेत्॥
कुक्कुटाख्ये पुटे पक्त्वागोमूत्रे मर्दयेद्दिनम्।
द्विगुञ्जं तद्द्रवांमूत्रै-र्गलत्कुष्ठहरं लिहेत्॥

र. क ल, र., को, र का, गलत्कुष्ठे।

टि०--रसकामधेनौ त्रुटित पाठं विन्यस्य वाकुचीबीज-कक्षौद्रमित्यनुपाने विशेषो दर्शित पाठस्तुत्रुटित एवास्ति।

भाषा—शुद्धसोनामाखी, गन्धक,हरिताल, कुठ, पारदभस्मयेसब समभागलेकर सफेदअपराजिताके-रससे ३ रोज़मर्दनकर आवलेकेरससे धूपमेसातभावना देकर अन्धमूषामेबन्दकर ऊपरके ढक्कनमे छेदकर कुक्कुटपुटमेआचदे। स्वाङ्गशीतलहोनेपर निकालकर गोमूत्रसेएकरोज़मर्दनकर सुखाकर रखछोड़े इसमेसे २--२रत्तीसुबहशाम गोमूत्रकेसाथ देनेसे यह गलत्कु-ष्ठको निवृत्त करताहै ॥ ४६८ ॥

## ४६९ गान्धारीवटिका

लोहपात्रे द्रुते गन्धे पादांशं पारदं क्षिपेत् ।
किञ्चिचाल्यं तु काष्ठेन मुहूर्तादवतारयेत्१९१९
शतावरीक्षीरकन्दो वज्रवल्लीन्द्रवारुणी ।
पाठा पुनर्नवा चिञ्चा लाङ्गली सुरदालिका ॥
एतासां वस्त्रपूतैश्च द्रवैर्मर्द्य दिनत्रयम् ।
तस्मिन्पात्रे लोहमुष्ट्या छायाशुष्कं वटीकृतम्
लोहसम्पुटगं रुद्ध्वा सन्धिं मृल्लवणे दृढम् ।
त धमेत्खदिराङ्गारै र्यावदारक्तमुद्धरेत् १९२२
उत्खन्योत्खन्यतन्मध्यादुद्धरेत्तद्रसं पुनः ।
काचटङ्कणसंयुक्तं मूषायां चान्धितं पचेत् ॥
गान्धारीगुटिकासिद्धा वर्षं वक्त्रे स्थिता सदा ।
काकतुण्डीवीजतैलं कर्षैकं नस्यमाचरेत् ॥
क्रामकं ह्यनुपानं स्याज्जीवेद्वर्षसहस्रकम्१९२४

र. ख, रसायने ।

भाषा—लोहेकीकडाहीमे शुद्धगन्धकको गलाकर उसमे चतुर्थांशपारादेकर नीमकीहरीलकडीसे-चलावे, जवपाराऔरगन्धक एकजीवहोजावे तवचूल्हे-परसे उतारकर शतावर, बाराही, तिधारांथूहर, इन्द्रायण,पाठा,पुनर्नवा,इमली,करिहारी,वदाल इनकाकपड्छनकियाहुआ अङ्गस्वरसदेकर तीनरोजउसी लोहेकी कडाहीमेलोहेके सोटेसे मर्दनकर गोलावनाकरसुखाकर लोहेकेसम्पुटमेबन्दकर मिट्टीऔरलवणसे सन्धिबन्दकर खैरकेकोयलोसे मूषालालहोनेतकधोंककेनिकालले । स्वाङ्गशीतलहोनेपर सम्पुटमेसे खुरचखुरचकर तमाम रसनिकालकर उसमे चतुर्थांशकाचऔरटङ्कणदेकर अन्धमूषामेरखकर साधारणपुटदेतो इसकीगोली बनजायगी । उसगोलीको १ वर्षतक मुहमे रक्खे औरकाकनासाकेवीजोंके१ तोले तेलका नस्यदे यहइसका क्रामकअनुपानहै इसप्रयोगसे मनुष्य दीर्घायुहोताहै ॥ ४६९॥

## ४७० गुञ्जागर्भरसः ( प्रथमः )

निष्कत्रयं रसस्यास्य गन्धकस्तुर्यभागिकः ।
गन्धकेन जयाचूर्णं निम्बवीजं समानकम् ।
गुञ्जावीजं तदर्धं स्यात्तदर्धं जयपालकम् ।
निम्बुद्रवेण सम्मर्द्य काकमाच्या दिनान्तकम्
धत्तूरकजयन्तीभ्यां गुटिकां कारयेत्सुधीः ।
गुञ्जागर्भरसो नाम्ना दातव्यो घृतसंयुतः ॥
हिङ्गुसैन्धवसंयुक्तं मण्डं पथ्याय दापयेत्१९२७

र. चि, नि र, र मि., चि गा., रसायनस,यो र,

भाषा—शुद्धपारा १ टंक, गन्धक, भाग,-नीमकीमज्जा येप्रत्येक पारेसेचतुर्थांश, गन्धकसेआधे सफेदगुञ्जाकेवीज,औरवीजोंसे आधाशुद्धजमालगोटा-देकर नीवूकारस, काकमाची,धतूराऔर जैत इन-प्रत्येककेस्वरससे १-१ रोजमर्दनकर २-२ रत्तीकी-गोलियांवनाकररखछोडे । इसमेसे एकएकगोली घी-केसाथदेनेसे नवीनज्वर, विषमज्वर,जीर्णज्वर, और वारीकेज्वर, यकृत्प्लीहवृद्धि, मन्दाग्नि, अरुचि येसब नष्टहों ॥ ४७० ॥

## ४७१ गुञ्जागर्भरसः ( द्वितीयः )

निष्कत्रयं शुद्धसूतं निष्काद्वादश गन्धकात् ।
गुञ्जावीजश्च षण्णिष्कं जयन्तीनिम्बवीजकम्
प्रत्येकं निष्कमात्रन्तु निष्कं जैपालवीजकम् ।
जयाजम्बीरधुत्तूरकाकमाचीद्रवै र्दिनम् ॥
भावयित्वा वटीं कुर्याचतुर्गुञ्जाप्रमाणतः ।
गुञ्जाभद्ररसो नाम हिङ्गुसैन्धवसंयुतः १९३०
शमयत्युल्बणं दुःखमूरुस्तम्भं सुदारुणम् ।
शिलाजतु गुग्गुलुं वा पिप्पलीमथ नागरम् ।
ऊरुस्तम्भे पिबेन्मूत्रै र्दशमूलीरसेन च १९३१

र सं, र र., भै र., र. सु, र च., ध, वै चि.,व रा., र. त, ऊरुस्तम्भे ।

टि०—वैद्यचिन्तामणौ प्रक्षेपे जयन्तीस्थाने जया नियोजिता, जैपालवीजमेकमापप्रमित, भावनायाश्च जयास्थाने जाती गृहीता, मात्राया गुञ्जाद्वयप्रमाणं, अनुपाने घृतेनसार्धं "गुञ्जावीजश्च षण्णिष्कं" इत्यस्यस्थाने "गुञ्जावीज विष निष्कं"इति पाठ दृश्यते पथ्येन साक हिङ्गुसैन्धवमवचारितम् नत्वनुपाने इति विशेष ।

भाषा—शुद्धपारा३टक, शुद्धगन्धक१२ टक शुद्धसफेदगुञ्जाकेवीज६टक, जैत, नीमकेवीज, शुद्ध-

जमालगोटायेसव १-१टकलेकर कूटकपड़छानकर भाग, जभीरी, धतूराऔरकाकमाची इनके स्वरससे एकएकरोज मर्दनकर ४-४रत्तीकीगोलिये बनाकर रखछोड़े। यह गुञ्जागर्भरस तैयारहुआ इसकी १-१ गोली हींगऔरसैन्धवकेसाथ देनेसे अत्यन्तभीपणऊरुस्तम्भ दूरहोताहै शिलाजीत अथवागुग्गुल, पीपलअथवा सोंठ इनको ऊरुस्तम्भमे दशमूलके काढेकेसाथ पीनाचाहिये।

### ४७२ गुञ्जागर्भरसः ( तृतीयः )

बीजानि श्वेतगुञ्जाया गवां दुग्धे विपाचयेत् ।
त्वगङ्कुरै विंहीनानि सूक्ष्मचूर्णीकृतानि च ॥
मागधीरससिन्दूररजतानि पृथक् समम् ।
मातुलानों सर्वसमां पिष्ट्वानागदलद्रवैः ॥
गुञ्जाद्वयां वटीं भुक्त्वा दुग्धमुष्णं पिवेदनु ।
रेतसस्तम्भनं श्रेष्ठमतिसाराग्निमान्द्यनुत् ॥

नू. क, वाजीकरणे ।

भाषा--सफेदगुञ्जाकेबीजोको गायकेदूधमे दोपहरःवेदनकर छिलके औरअङ्कुरनिकालकरखूबवारीकचूर्णकरले। उसमेपीपल, रससिन्दूरऔररजतभस्म येप्रत्येक समभागलेकर कूटकपड़छानकर सबकीवराबर भागमिलाकर पानकेरससे घोटकर२-२रत्तीकी गोलिया वनाकरखावे औरऊपरसे गरमदूधपीवेतो इससे उत्तमस्तम्भनहोताहै । अतिसारऔरअग्निमान्द्यको दूरकरताहै ॥ ४७२ ॥

### ४७३ गुटिकाबन्धरसः

चतुर्विंशतिधान्यानां संक्षुण्णं रजतं स्मृतम् ।
शुल्बमष्टादशमितं रुक्मं सार्धचतुष्टयम् ॥
एतद्यन्त्रे समुत्काल्य कूपिकां कारयेद् दृढाम् ।
सूचीमुखप्रमाणेन पूर्वोक्तं सूतकं क्षिपेत् १९३६
ततस्तु मुद्रणं कृत्वा तेन त्रितयकेन तु ।
प्राशयेत्तच्छुभे योगे निर्गच्छेद्गुदमार्गतः१९३७
पुनः प्रक्षाल्य तद्भक्षेत्प्रयत्नेन च धीमता ।
देहं हाटकवत्तस्य षण्मासाज्जायते ध्रुवम् ॥
वीर्यस्तम्भो न शस्त्राणि प्रहृतानि लगन्ति हि।
संवत्सराद्ववेत्सिद्धिः शृणु कौतूहलं परम् ॥
वक्त्रे निःक्षेपमात्रेण सर्वसिद्धिः प्रजायते ।
यंयं प्रार्थयते कामं तं तमाप्नोति निश्चितम् ॥
वङ्गं स्तम्भयते सम्यङ् नात्र कार्या विचारणा।
लभते भाग्ययोगेन नान्यथा यतिरब्रवीत् ॥

र ज्ञा, रसायने ।

भाषा--शुद्धचादी२४माशे, ताम्र१८माशे, सोना ४॥ माशेलेकर सवकोमूपामेगलाकर एक गोली इसतरहकी वनावे जिसमेकि सूईजानेलायक मध्यतकछिद्ररहे। इसछिद्रमे सुईके मुखकेवरावर सूतराक्षस ( देखो सकारादिरसोमे सूतराक्षसकापाठ ) को डालकर मुहकोउपरोक्तमिलीहुईधातुओसे वन्दकरइसकोशुभदिनमे निगलजाय, यहगोली झाड़ेजातेसमय गुदासे निकलेगी। इसको फिरमाजधोकर निगलजाय । इसतरह हमेशः करतारहेतो ६महीनेकेबादउसकाशरीर सुवर्णकेसदशहोकर शुक्रकास्तम्भन होजायगा । इसकेऊपरशस्त्रकाप्रहार खरावनहींपहुचाताहै, १वर्षगुजरनेकेबाद इससे अद्भुतसिद्धिहोतीहै इसकोमुखमेरखकर जिस२पदार्थका चिन्तनकरे वह अकस्मात् प्राप्तहोजाताहै। वङ्गकोगलाकर इसगोलीकोउसमेरखनेसे उसकापानी सूखजाताहै। परयह वटी भाग्ययोगसेमिलतीहै ॥ ४७३ ॥

### ४७४ गुडमण्डूरम्( प्रथमम् )

गुडामलकपथ्यानां चूर्णं प्रत्येकशः पलम् ।
त्रिपलं लौहकिट्टस्य तत्सर्वं मधुसर्पिषा१९४२॥
समालोड्य समश्नीयादक्षमात्रप्रमाणतः ।
आदिमध्यावसानेषु भोजनस्य निहन्ति तत् ॥
अन्नद्रवं जरत्पित्तमम्लपित्तं सुदारुणम् ।
परिणामसमुत्थश्च शूलं संवत्सरोत्थितम् १९४४

भा प्र, नि र, वै चि, चि र भ., र च., च द., वै. र, यो म, रसायन स, ना वि., चि. क्र, र. का, र प्र, र र, वृ मा, वृ यो त, टो., परिणामशूले ।

टि०-कुत्रचिद्विभीतकमधिकं प्रक्षिप्य त्रिफलालोहेति नाम स्थापितम्, कुत्रचिद्गुडामलकपथ्यानामित्यस्य स्थाने गुडामलकशुण्ठीनामिति पाठ, वै. चिन्तामणौ भीममण्डूरेति नाम रसकामधेनौ अक्षादिलोह, रसप्रदीपे गुडादियोग. ।

भाषा—गुड, आंवला, हर्रै इन प्रत्येकका चूर्ण ४-४तोला, मण्डूरभस्म १२तोला, इनसबको इकट्ठे खरलकर मधु और घीमे मिलाकर एकतोलारोज भोजनके आदिमध्यतथाअन्तमे खानेसेयहअन्नद्रव, जरत्पित्त, भयङ्करअम्लपित्त, परिणामशूल और एकवर्षसे उत्पन्नहुआशूल इनको यह नष्टकरताहै।४७४

### ४७५ गुडमण्डूरम् ( द्वितीयम् )

गुडनागरमण्डूरतिलांशान्मानतः समान् ।
पिप्पलीं द्विगुणां कुर्याद्गुटिका पाण्डुरोगनुत् ॥

वै क., र का,

भाषा—गुड, सोंठ, मण्डूरऔरतिलयेप्रत्येकसमभागलेकर सबसेदूनीपीपलमिलाकर ४-४माशेकीगोलियेंबनाले। इनमेसेएकएकगोली पाण्डुरोगमे खानेसे आरामहोताहै ॥ ४७५ ॥

### ४७६ गुडलोहम्

शुभानि लोहपत्राणि जले त्रैफलके क्षिपेत् ।
सन्ताप्य सप्तवाराणि सूक्ष्मचूर्णानि कारयेत् ॥
ततः पलं समादाय लोहचूर्णन्तु साधयेत् ।
त्रिवार्षिकं ततः क्षिप्त्वा गुडस्य कुडवं शुभम् ॥
तीव्रातपे च यत्नेन दिनानि खलु पञ्च च ।
ततः पञ्चदिनादूर्ध्वं शुष्कचूर्णन्तु कारयेत् ॥
चूर्णं टङ्कप्रमाणेन पाचयेत्त्रिफलाम्बुना ।
भक्षयेत्साधितं लोहं रोगानीकप्रभेदनम्१९४९
प्रभाते पाययेदेतद्भोजनं कारयेत्ततः ।
यामद्वये व्यतीते च तृतीयं नैव लङ्घयेत्१९५०
विशेषरोगनाशार्थं यत्प्रोक्तं भेषजं बुधैः ।
पथ्ययोग्यश्च यल्लोहं सर्वरोगविनाशनम् ॥

रससागरे, पाण्डुरोगे।

भाषा—लोहेकेबहुतबारीकपत्रबनाकर अग्निसात्कर त्रिफलाकेकाढेमे बुझावे, इसतरहसातबारकरनेके बाद जितनालोहेकाचूरात्रिफलाके काढेमेपडाहो उसकोनिकालकर त्रिफलाकेकाढेसे ६-७ रोजघोटकरसुखाले। इसमेसे४तोलाचूर्णलेकर उसमेतीनवर्षकापुरानागुड सोलहतोले डालकर कड़ीधूपमे ५रोज़तक घुटावे फिरइसचूर्णकोसुखादे सूखनेपर इसमेसे३-मासेचूर्णलेकर अष्टमांशावशेष त्रिफलाकेकाढेमे डाल करपकावे जबलेहजैसाहोजाय तब इसकोसुबहकेसमयचाटलेवे दोपहरकेबाद उचितभोजनकरावे। इस तरह रोजरोजकरनेसे यथासम्भवसभीरोग खासकर-पाण्डु, यकृत्, प्लीहा, गुल्म, इनको यह नष्टकरता है। इसकेप्रयोगमे सुबहसेतीनप्रहरकेभीतरही भोजनकरनाचाहिये ॥ ४७६ ॥

### ४७७ गुडूचीमोदकः

गुडूचीं खण्डशः कृत्वा कुट्टयित्वा सुपेषयेत् ।
शिलायां जलयोगेन सुसूक्ष्मं कल्कवद् दृढम् ॥
सुवस्त्रे जलयोगेन भावयेत्तच्छनैः शनैः ।
विमलीकृत्य तत्तोयमच्छमच्छं जलं नयेत् ॥
अधःस्थं तु घनीभूतं छायाशुष्कं विधाय च ।
शुभ्रखण्डनिभं चूर्णं गुडूच्याः सत्त्वमुच्यते ॥
उशीरं वालकं पत्रं कुष्ठं धात्री च मौशली ।
एला हरेणुका द्राक्षा कुङ्कुमं नागकेसरम् ॥
पद्मकन्दश्च कर्पूरं चन्दनद्वयमिश्रितम् ।
व्योषं मागधिकामूलं वाजिगन्धां शतावरीम्॥
गोक्षुरं कर्कटीबीजं जातीकक्कोलचव्यकम् ।
रसाभ्रवङ्गं लोहञ्च सम्मिश्रं कारयेद्बुधः ॥
एतानि समभागानि द्विगुणामृतशर्करा ।
मत्स्यण्डयाज्यमधूपेतं भक्षयेत्प्रातरुत्थितः ॥
क्षयञ्च रक्तपित्तञ्च पाददाहमसृग्दरम् ।
मूत्राघातं मूत्रकृच्छ्रं वातकुण्डलिकां तथा ॥
प्रमेहान् दारुणान् सोमरोगञ्चैव तथाविधम् ।
जीर्णज्वरादिकांश्चैव निहन्यात्सत्त्वमोदकः ॥
बल्यो वृष्यतरो मेध्यो राजव्याधिविनाशकः
देवानाममृतं यद्वन्मनुष्याणां तथैव सः ॥
गुडूचीसत्त्वपिण्डोऽयं सप्तर्ष्यादिनिषेवितः ।
संवत्सरं प्रयोगोऽस्य उत्तमः परिकीर्तितः ॥
षण्मासिको मध्यमस्तु शेषा हीनफलाः स्मृताः
पथ्यं गोधूम शाल्यन्नं मुद्गाढकिमसूरकाः ॥

शाकं त्वदोषलं स्वल्पं क्षाराम्लादि त्यजेद्बहु ।
दुग्धं सशर्करं सेव्यं स्वादु स्वल्पञ्च गोदधि ॥
पा व, यो र, नि र., रसायने ।

भाषा—जोकि अत्यन्तमोटीयापतलीनहो ऐसी ताजीगुडूचीलाकर पानीमेधोडाले। औरउसकेछोटेछोटे टुकडेकर उखलमेखूबकूटदे। फिरमिट्टीकीनादमेडालकर सोलहगुनापानीभरदे औरचलादे । एकरोजबाद-इसकोउसपानीमेखूबमथे; औरनवीनखादीकेवस्त्रसे इसतमामपानीकोछानले, यहध्यानरक्खेकि नादमे सफेदआटा न रहगयाहो फिरइसपानीको दोतीनदिन स्थिररखकर बहुतधीरे २ ऊपरकापानीनिकालकर अलगरखदे। औरनीचेसफेदआटेकीतरहजमेहुए पदार्थ-को कासेअथवाचादीकी परातमेनिकालकर सुखाले इसे गुडूचीसत्त्वकहतेहै । फिर खस, सुगन्धवाला, पत्रज, कुठ, आवले,दोनोमुसली, इलायची, रेणुका, द्राक्ष, केसर, नागकेसर, पद्मकन्द, शुद्धकपूर, सफेदऔरलालचन्दन, त्रिकटु, पिपलामूल, असगन्ध, शतावर, गोखरू, केवाचकेबीज, जायफल, शीतलचीनी, चव्य, रससिन्दूर, अभ्रक, वङ्गऔर लोहयेसबसमभाग, औरइनसबसेदूना गिलोयकासत्त्व लेकर सबकीबराबर खाडमिलाकर घीऔरमधुइतना देकि यह अवलेहजैसाहोजाय फिरइसको किसी चिकनेबर्तनमेरखदे । इसमेसे अग्निबलदेखकर आधे तोलेसे एकतोलेतक खाकरऊपरसे दूधपीवेतो क्षय, रक्तपित्त, पाददाह, रक्तप्रदर, मूत्राघात, मूत्रकृच्छ्र, वातकुण्डलिका, दारुणप्रमेह, सोमरोग, जीर्णज्वर, निर्बलता, कृशता, निर्बुद्धिता औरराजरोग इनसबको यह नष्टकरताहै । जैसेदेवताओंको अमृतहै वैसेही यहमनुष्योंकेलियेगुणकारकहै । इसका१वर्षकाप्रयोग उत्तमहोताहै ६ महीनेकामध्यम औरइससे नीचे हीनहुआकरते हैं । गेहूं, चावल, मूग, अरहर, मसूर येइसमे पथ्यहै । औरजो अधिकदोषकारकशाक नहींहैं वेभीअल्पमात्रामेपथ्यहै। क्षारऔरअम्लइनसबको छोड़देवे । शक्करडालाहुआदूध औरमीठादहीखाय । सत्त्वनिकालतेसमयजोऊपरकानिकालाहुआपानीहै इसमे दूसरीगुडूचीकाकल्क डालकर अग्निपरचढाकर काढाकरले ठढाहोनेपर इसमेउसगुडूचीकोखूबमसल डाले औरछानकर फिरउसकागुड़कीतरहघनबनावे जबउसकीगोली बंधनेलगे तबउतारकर ६४ तोले लेकर रससिन्दूर, अभ्रकभस्म, वङ्गभस्म औरलोहभस्म येप्रत्येकदोदोतोलेडालकर खूबमर्दनकर इसकी चनेप्रमाणगोलियें बनाकर छायामेसुखाकर रखछोडे। इसमेसे एकएकगोली वा योग्यतानुसार दूधकेसाथ देनेसे मन्दाग्नि, सग्रहणी, जीर्णज्वर, प्रमेह, सुजाक, भगन्दर, बवासीर, येसबनष्टहों ॥ ॥ ४७७ ॥

## ४७८ गुडूचीलोहम्

गुडूचीसारसंयुक्तं त्रिकत्रययुतं त्वयः ।
वातरक्तं निहन्त्याशु सर्ववातहरं परम् १९६५॥
र स, र चि, र र, र कौ, र का, र. सु, रसायनस, भै र, यो. म, वातरक्ते ।

भाषा—गुडूचीसत्त्व, त्रिकटु ( सोठ, मिर्च, पीपल, ) त्रिफला ( हर्रे, बहेड़ा, आवला, ) त्रिजात ( तज, पत्रज, इलायची, ) येसबसमभागलेकर कूटकपडछानकर सबकीबराबरलोहभस्मडालकर इकट्ठाखरलकर रखछोड़े । इसमेसे १माशा वातरक्त-हरानुपानकेसाथ खानेसे असाध्यभी वातरक्त अच्छा होवै ॥ ४७८ ॥

## ४७९ गुणमहोदधिरसः ( महोदधिः )

सूतकं गन्धकं लौहं विषञ्चापि वराङ्गगम् ।
ताम्रकं वङ्गभस्मापि व्योमकञ्च समांशकम् ॥
पत्रं त्रिकटुकं मुस्तं विडङ्गं नागकेसरम् ।
रेणुकामेलकञ्चैव पिप्पलीमूलमेव च १९६७॥
एषाञ्च द्विगुणं दत्त्वा मर्दयित्वा प्रयत्नतः ।
भावना तत्र दातव्या जलपिप्पलिनिम्बुभिः ॥
मात्रा चणकतुल्या तु वटिकेयं प्रकीर्तिता ।
हन्ति कासं तथा श्वासमर्शांसि च भगन्दरम्॥
हृच्छूलं पार्श्वशूलञ्च कर्णरोगं कपालिकम् ।

हरेत्सङ्ग्रहणीरोगानष्टौ च जठराणि च ॥
प्रमेहान्विंशतिश्चैवाप्यश्मरीश्च चतुर्विधाम् ॥

भै.र.,रसचि.,वै क.,र. स , र.सि , र. चं , र सु., रसायनस., र म , भै सा , र का०, र० ( मा० ), टो, कासे । एतेषुग्रन्थेषु महोदधीतिनाम—तत्रवरान्स्थानेवराटकमस्ति। रेणुकामेलकस्थानेरेणुकाऽऽमलकमितिपाठ । जलपिप्पलिनिम्बुभिरित्यस्यस्थाने जलपिप्पलिकाम्बुनाहति पाठोऽस्ति अत्रोभययोर्गो दिष्टवस्तुभिर्योगोनिष्पादनीय इत्यस्माकं सम्मति ।

भाषा—शुद्धपाराऔरगन्धक, लोहभस्म, शुद्ध वछनाग, तज, ताम्रभस्म, वङ्गभस्म, अभ्रकभस्म येसब एकएकभाग, पत्रज, त्रिकटु, नागरमोथा, विडङ्ग, नागकेसर, रेणुका, एलुआ, पिपलामूलये सब दोदोभागलेकर सबकोकूटकपडछानकर जलपिप्पलीकी १–२भावनादेकर चनेवरावर गोलिया वनाकर रखछोडे । इसकीएकएकगोली यथारोगहरानुपानकेसाथ सुवहशामदेनेसे कास, श्वास, ववासीर, भगन्दर, हृदयशूल, पार्श्वशूल, कर्णरोग, कापालिककुष्ट, संग्रहणी, उदररोग, प्रमेह, अश्मरी, येसव नष्टहोतेहै ॥ ४७९ ॥

### ४८० गुल्मकालानलोरसः (प्रथमः)

पारदं गन्धकं तालं ताम्रकं टङ्कणं समम् ।
तोलद्वयमितं भागं यवक्षारश्च तत्समम् ॥
मुस्तकं पिप्पली शुण्ठी मरिचं गजपिप्पली ।
हरीतकी वचा कुष्ठं तोलैकैकं विचूर्णयेत् ॥
सर्वमेकीकृतं पात्रे भावयेच्च प्रयत्नतः ।
पर्पटं शुण्ठ्यपामार्ग मुस्तकं पापचेलिका ॥
तत्पुनश्चूर्णयेत्पश्चात्सर्वगुल्मनिवारणम् ।
गुञ्जाचतुष्टयं खादेद्धरीतक्यनुपानतः १९७४॥
वातिकं पैत्तिकं गुल्मं श्लैष्मिकं सान्निपातिकम्।
द्वन्द्वजश्च निहन्त्याशु वातगुल्मं विशेषतः ॥
श्रीमद्गहननाथेन निर्मितो विश्वसम्पदे ।
गुल्मकालानलो नाम सर्वगुल्मकुलान्तकः ॥

वै क , व , भै र , र. क., र स., र. चि., र. सु, गुल्मे । कुत्रचित्पुस्तके टङ्कणस्थाने लोहं नियोजितम् ।

भाषा—शुद्धपारा, गन्धकऔरहरिताल, ताम्रभस्म, सुहागा, येप्रत्येक २--२तोला इनसबकी वरावर यवक्षार, नागरमोथा, पीपल, सोंठ, मरिच, गजपीपल, हर्र, वच, कुठ,येप्रत्येक १–१तोला लेकर सबकोकूटकर पित्तपापडा,सोंठ,अपामार्ग,नागरमोथा, पाठा इनप्रत्येकके काथकी १-१ भावना देकर ४--४रत्तीकी गोलियें वनाकररखछोडे । इसमेसे १--१गोली हरीकेकाढेके साथदेनेसे एकज, द्वन्द्वज औरसान्निपातिकगुल्म, विशेषकर वातिकगुल्मको नष्टकरताहै । लोकोंके उपकारकेलिये गहननाथने इसको प्रकटकियाहै ॥ ४८० ॥

### ४८१ गुल्मकालानलोरसः(बृहन्) २

अभ्रं लौहं रसं गन्धं टङ्कणं कटुकां वचाम् ।
द्विक्षारं सैन्धवं कुष्ठं त्र्यूषणं सुरदारु च ॥
पत्रमेलां त्वचं नागं सारंखादिरसम्भवम् ।
गृहीत्वा समभागेन श्लक्ष्णचूर्णं प्रकल्पयेत् ॥
जयन्तीचित्रकोन्मत्तकेशराजदलानि च ।
निष्पीड्य स्वरसं नीत्वा भावयेत्कुशलो भिषक्
चतुर्गुञ्जाप्रमाणेन वटिकाः कारयेत्ततः ।
उत्थाय भक्षयेत्प्रातरनुपानं जलं पयः१९८० ॥
गुल्मं पञ्चविधं हन्ति यकृत्प्लीहोदराणि च ।
कामलां पाण्डुरोगञ्च शोथश्चैव सुदारुणम् ॥
हलीमकं रक्तपित्तं मन्दाग्निमरुचिं तथा ।
ग्रहणीमार्दवं कार्श्यं जीर्णञ्च विषमं ज्वरम् ॥

भै र, गुल्मे ।

भाषा—अभ्रकभस्म, लोहभस्म, शुद्धपारद औरगन्धक, सुहागा, कुटकी, वच, सज्जीखार, जवाखार, सेधानमक, कुठ, त्रिकटु, देवदारु, पत्रज, इलायची, तज, नागभस्म, खैरकासार, येप्रत्येक समभागलेकर कूटकपड़छानकर जैत, चित्रक, धतूरा, भगरा, इनकेस्वरसकी १–१भावनादेकर चारचाररत्तीकीगोलियें वनाकररखछोडे । इसमेसेएकएकगोली सुवहमेजलकेसाथखानेसे पाचप्रकारकेगुल्म, यकृत्, प्लीहा, उदररोग, कामला, पाण्डु, शोथ, हलीमक, रक्तपित्त, मन्दाग्नि, अरुचि, ग्रहणी

कृशता, जीर्णज्वरऔरविषमज्वर इनसबको यह नष्टकरताहै ॥ ४८१ ॥

**४८२ गुल्मकालानलोरसः ( महान् ) ३**

गन्धकं तालकं ताम्रं तथैव तीक्ष्णलोहकम् ।
समांशं मर्दयेद्गाढं कन्यानीरेण यत्नतः ॥
सम्पुटं कारयेत्पश्चात्सन्धिलेपश्च कारयेत् ।
ततो गजपुटं दत्त्वा स्वाङ्गशीतं समुद्धरेत् ॥
द्विगुञ्जं भक्षयेद्गुल्मी शृङ्गवेरानुपानतः ।
सर्वगुल्मं निहन्त्याशु भास्करस्तिमिरं यथा ॥

र स , ध , र चि., र सु., गुल्मे ।

भाषा—शुद्धगन्धक, हरिताल, ताम्रभस्म, फोलादभस्म इनसबकोसमभागलेकर घीकुँआरकेरस-मे खूबमर्दनकर एकगोलाबनाकर सुखाकर शराव-सम्पुटमेबन्दकर गजपुटमे आचदेवे । स्वाङ्गशीतल-होनेपर निकालकर इसकी २--२ रत्तीअदरखकेरसके-साथ नुवहशामदेनेसे समस्तगुल्म नष्टहों ॥ ४८२ ॥

**४८३ गुल्मकुठारोरसः (प्रथमः)**

पारदं टङ्कणं गन्धं त्रिफलां व्योषतालकम् ।
विषं ताम्रञ्च जैपालं भृङ्गस्वरसमर्दितम् १९८६
गुञ्जामात्रा वटी कार्या आर्द्रकस्वरसेन च ।
गुल्मे कुठारकः प्रोक्तः सर्वगुल्मनिवारणः ॥

रसायनस , र कौ , र र. कौ., वै. र., चि र , वै चि. ( ल ), वै. चि ,

भाषा—शुद्धपारा, सुहागा, गन्धक, त्रिफला, त्रिकटु, शुद्धहरिताल, औरबछनाग,ताम्रभस्म, शुद्धज-मालगोटा येसब समभागलेकर भागरेकेरससे एक-रोज़ मर्दनकर एकएकरत्तीकी गोलियेंबनाकररखछोड़े । इसमेसे एकएकगोली अदरखकेरससेदेनेसे समस्त-गुल्मोंको नष्टकरताहै ॥ ४८३ ॥

**४८४ गुल्मकुठारोरसः ( द्वितीयः )**

नागवङ्गाभ्रकं कान्तं समं ताम्रं समांशकम् ।
जम्बीरस्वरसै र्घृष्ट्वा वटी गुञ्जाप्रमाणिका ॥
मधुनाऽऽर्द्रकनीरेण क्षारयुग्मेन सेविता ।
अजीर्णमामं गुल्मञ्च हृत्पार्श्वोदरशूलके ॥
नाम्ना गुल्मकुठारोऽयं सर्वगुल्मान्व्यपोहति ॥

यो र, रसायनस., वै. चि., गुल्मे । वै चिन्तामणौ नागादिवटीति नाम ।

भाषा—नागभस्म, वङ्गभस्म, अभ्रकभस्म, कान्तपाषाण और कान्तलोहभस्म, येसबसमभाग, इन सबकीबराबरताम्रभस्म लेकर सबकोमिलाकर जम्भी-रीकेरससेघोटकर एकएकरत्तीकीगोलियें बनाकर रख-छोड़े । इसमेसे १--१गोली मधुऔर अदरखकेरस, सज्जीखारऔरजवाखारकेसाथसेवनकरनेसे अजीर्ण, आम, गुल्म, हृच्छूल, पार्श्वशूल, उदरशूल, इनसबको यह नष्टकरताहै ॥ ४८४ ॥

**४८५ गुल्मगजकेसरीरसः**

सूतं निपात्य संस्वेद्य जारयेत्स्वर्णदानवौ ।
खल्वे निःक्षिप्य तं सूतं तुर्यांशासुरसंयुतम् ॥
मर्दयेत्पीतवेणीजै श्चन्द्रवल्लीरसैस्तथा ।
दिनानि सप्त यत्नेन दिवानिशमतन्द्रितः ॥
कल्कीभूतं पारदेन्द्रं यन्त्रे सोमानले क्षिपेत् ।
निरुध्य सम्यग्यत्नेन चुल्ल्यामधिनिवेशयेत् ॥
ज्वालयेत्प्रथमं मन्दं दिनमेकं हुताशनम् ।
ततः प्रचण्डमनलं ज्वालयेत् षड्दिनानि वै ॥
भस्मीभवेद्रसेन्द्रोऽयं नात्र कार्या विचारणा ।
तद्रसभागएकः स्याद्गन्धकव्योमभास्कराः ॥
त्रिफलाश्च समास्तद्वदेकैकेन दृढं ततः ।
मर्दयेद्बीजपूरादिरसैरम्लसमुद्भवैः ॥
दिनमेकं जयन्तीजै रक्तमण्डूकवारिणा ।
वृषनीरैश्च तर्कारी वारिभि र्विषमुष्टिजैः ॥
बर्बरीजै र्महाराष्ट्रीवारिभिः श्यामलधूर्तकैः ।
वत्सनाभरसैस्तद्वद्गुडूचीजैश्च जाम्बवैः ॥
नीरैस्तगरमूलस्य पद्मपत्ररसैस्तथा ।
नीलोत्पलस्य नीरेण दिनैकैकं विभावयेत् ॥
ततश्च पुटयेद्दत्त्वा लवणानि च पञ्च वै ।
पुटानि पञ्च संदद्यान्मिलितं सूतमात्रया ॥
पारावतप्रमाणानि पुटान्यत्र प्रदापयेत् ।
विचूर्ण्यार्द्रकजै र्नीरै र्गुटिकाः सम्प्रकल्पयेत् ॥

द्विगुञ्जामानतो दद्याद्वातगुल्मविनाशिनीः ॥
उग्रगन्धा त्रिभागा स्याद्वत्सनाभस्त्रिभागिकः ।
त्रिकटोश्च त्रयो भागा स्त्रिफलायास्त्रयो मताः
भार्ङ्गी मुस्ताकीटशत्रो रनलस्य तथाऽपरः ॥
गुडेन सर्वतुल्येन वटिका रचयेद्बुधः ।
चणकस्य प्रमाणेन योजयेदनुपानके २००३॥
गुल्मेभकेसरी नामा रसेन्द्रोऽयं प्रकीर्तितः ।
वातगुल्मभवं शूलं निहन्त्येष रसेश्वरः ॥
पक्तिजे च तथाशूले योजितव्यो रसेश्वरः ।
उदरोत्थविकारेषु तथार्शांसि निवारयेत् ॥

रसालं, गुल्मशूले ।

भाषा—पारेकेपातनादिबुभुक्षान्त संस्कारकरके उसमेचौंसठवाहिस्सासुवर्ण और ६ गुनागन्धकजारण करके चतुर्थांशअभ्रकसत्त्वकेसाथ खरलमेडालअमरबेल औरबाकुचीके रसोंसे सातसातरोज़ रातदिनलगातारमर्दनकर इसकागोलाबनाकर ६--७ कपड़मिट्टीकीहुई आतशीशीशीमे रखकर मुहबन्दकर बालुकायन्त्रमेरख एकदिनमन्दाग्निदेवे, इसकेबाद ६ रोज़तक प्रचण्ड अग्निदेवे। स्वाङ्गशीतलहोनेपर भस्महुएपारेको निकालले फिर इसभस्ममेसे १ भाग शुद्धगन्धक, अभ्रकभस्म, ताम्रभस्म, और त्रिफला येप्रत्येक १ भागलेकर बारीकपीसकर बिजोरेका रस, जैत, लालब्राह्मी, अडूसा, अरणी, कुचिला, ववई, महाराष्ट्री ( मराठी ), कालाधतूरा, बछनाग, गुडूची, जामुनकीछाल, तगरमूल, पद्मपत्र, नीलोफर, इनसबके स्वरसोमे क्रमसे १- १ रोज़मर्दनकर इसमे बराबरका सैन्धव डालकर घोटकर शरावसम्पुटमेबन्दकर २--३ जंगली कण्डोंकीआचदे ,ऐसे ५ पुट देनेकेबाद अदरखके रससे घोटकर २ २ रत्तीकीगोलियाबनाकर रखछोडे, इसमेसे १--१ गोलीखाकर वच, शुद्धबछनाग त्रिकटु, त्रिफला ३--३ भाग, भारङ्गी, नागरमोथा, विडङ्ग, १--१ भागलेकरकूटकपडछानकर बराबरकागुड मिलाकर चनेप्रमाणगोलियेंबनाकर १--१ गोली ऊपरसे उचितानुपानसे खानेसे वातगुल्मसे होनेवाला-शूल, पक्तिशूल, पार्श्वशूल, उरःक्षत औरबवासीर इनसबको यहरस नष्टकरताहै ॥ ४८५ ॥

### ४८६ गुल्मतमोपहारी क्षारः

क्षारत्रयं स्याल्लवणानि पञ्च
गन्धत्रयं सूतकुशानुमूलम् ।
एतानि सर्वाणि समानि कृत्वा
निम्बूरसेन प्रविभावयेच्च ॥ २००६ ॥
त्रिसप्तकं मूरणकन्दमध्ये
निक्षिप्य संवेष्टय मृदा च कन्दम् ।
तीव्रे ततो गोमयवह्निमध्ये
क्षारोभवेद्गुल्मतमोपहारी ॥२००७॥
मरीचचूर्णेन घृतप्लुतेन
ददीतगद्याणसमं त्रिसप्त ।
अर्शांसि मान्द्यश्च विनाशयेत
पुष्टिंरुचिंदीप्तिमपि प्रकुर्यात् ॥२००८॥

र दी, र मु, गुल्मे । रसमुक्तावल्या गुल्मारिर्नाम ।

भाषा—सज्जीखार, जवाखार, सुहागा, पाचोंनमक, शुद्धगन्धक, हरिताल, मैनसिल, शुद्धपारी, चित्रककीजड, येसबसमभागलेकर नीबूकेरससे २१ भावनाए देकर सूरणकन्दमे रखकर उसीकीडाटसे मुंहबन्दकर ६--७ कपड़मिट्टीदेकर सुखाकर इसको कण्डोकीतीव्रअग्निमेरखदे, जबइसमेसे धूआनिकलनाबन्दहो याधातुओंकागन्धनिकलनेलगे तबनिकाल कर स्वाङ्गशीतलहोनेपर बारीकचूर्णकर रखछोडे। इसमेंसेआधातोलाचूर्ण मरिचकेचूर्णकेसाथ २ तोलेघीमे मिलाकर देनेसे बवासीर, अग्निमान्द्य, कृशता, अरुचि, येसब दूरहोतेहै ॥ ४८६ ॥

### ४८७ गुल्मनाशनो रसः

गन्धकं रसतुल्यश्च द्वौ भागौ सैन्धवस्य च ।
त्रिभागं टङ्कणं प्रोक्तं चतुर्भागश्च तुत्थकम् ॥
पञ्चभागं वराटं स्यात् षड्भागं शङ्खजं तथा ।
वह्निमूलकषायेण चिरविल्वरसेन च ॥२०१०॥
आर्द्रकस्य रसेनापि प्रत्येकेन पुटत्रयम् ।
तत्समं मारिचं चूर्णं शाणार्धं भक्षयेन्नरः ॥

पञ्चगुल्मान् क्षयं श्वासं मन्दाग्निं चाशु नाशयेत्॥
र र. स, र. च., र क, रसचि, चि. क, ( गुल्मशत्रु ) गुल्मे ।

भाषा—शुद्धगन्धकऔरपारा १--१ भाग, सेंधानमक २ भाग, भुनाहुआसुहागा ३ भाग, तुत्थ ४ भाग, कौड़ीभस्म ५ भाग, शङ्खभस्म ६ भाग, इनसबकोइकट्ठेकर चित्रकमूल, करञ्ज, अदरख इनप्रत्येककी ३--३ भावनाएदेकर सुखाकर उसकी बराबर मरिचकाचूर्णमिलाकर दो माशे यथारोगहरानुपानकेसाथलेनेसे यहरस पाचगुल्म, क्षय, श्वास-औरमन्दाग्निको नष्टकरताहै ॥ ४८७ ॥

## ४८८ गुल्मवज्रिणी वटी

रसगन्धकताम्रञ्च कांस्यं टङ्कणतालकम् ।
प्रत्येकं पलिकं ग्राह्यं मर्दयेदतियत्नतः ॥
तद्यथाग्निबलं खादेद्रक्तगुल्मप्रशान्तये ।
निर्मिता नित्यनाथेन वटिका गुल्मवज्रिणी ॥
गुल्मप्लीहोदराष्ठीलायकृदानाहनाशिनी ।
कामलापाण्डुरोगघ्नी ज्वरशूलविनाशिनी ॥
र. श, र च., र सु., र चि, ध., गुल्माधिकारे ।

भाषा—शुद्धपारा, गन्धक, ताम्रभस्म, कांस्यभस्म, भुनाहुआसुहागा, हरितालभस्म अथवारसमाणिक्य येसबसमभागलेकर अदरखवग़ैरहकेरससे १--२ रोज़घोटकर रखछोड़े । इसमेसे २ रत्ती रास्नादिकाथकेसाथ खानेसे रक्तगुल्म नष्टहोताहै यह नित्यनाथकी बनाईहुईवटीहै । इससे रक्तगुल्म, साधारणगुल्म, प्लीहा, उदररोग, अष्ठीला, यकृत, आनाह, कामला, पाण्डु, ज्वरऔरशूल येसब नष्टहोतेहै ॥ ४८८ ॥

## ४८९ गुल्मशार्दूलो रसः

रसं गन्धं शुद्धलोहं गुग्गुलोः पिष्टितं पलम् ।
त्रिवृता पिप्पली शुण्ठी शटी धान्यकजीरकम्॥
प्रत्येकं पलिकं ग्राह्यं पलार्धं कानकं फलम् ॥
सञ्चूर्ण्य वटिका कार्या घृतेन वल्लमानतः ॥
आर्द्रकोष्णाम्बुना भक्षेद्वटीद्वयमतन्द्रितः ।
हन्ति प्लीहयकृद्गुल्मकामलोदरशोथकम् ॥
वातिकंपैत्तिकंगुल्मंश्लैष्मिकंराधिरंतथा
गुल्मशार्दूलको ह्येष गहनानन्दभाषितः२०१८
र सं, ध, र. चं, र. चि, र. सु., गुल्मे ।

भाषा—शुद्धपाराऔरगन्धक, लोहभस्म, घीमे कुटाहुआगुग्गुलु, निसोत, पीपल, सोंठ, कचूर, धनिया, सफेदजीरायेप्रत्येक १-१पल, धतूरेकेबीज आधापल, इनसबकोकूटकपड़छानकर घीमिलाकर ३-३रत्तीकीगोलियें बनाकर रखछोड़े । इसमेसेएक-एकगोली अदरखकेरससेदेनेसे प्लीहा, यकृत, गुल्म, कामला, उदरशोथ, औरसम्पूर्णगुल्म नष्टहोतेहै४८९॥

## ४९० गुल्मशूलविनाशिनीवटी
## ( हरीतक्यादिवटी )

हरीतकी त्रिकटुकं कुचिला हिङ्गु सैन्धवम् ।
गन्धकञ्च समं सर्व वटीं कुर्यात्सुखावहाम् ॥
लघुकोलप्रमाणान्तु शस्यते प्रातरेव हि ।
एकैका वटिका ग्राह्या गुल्मशूलविनाशिनी ॥
ग्रहण्यामतिसारे च साजीर्णे मन्दपावके ।
योजयेदुष्णपयसा सुखमाप्नोति निश्चितम् ॥
सुवर्णञ्च भवेद्देहं सत्वोत्साहयुतं नृणाम् ॥
व, वै चि., र स, अग्निमान्द्ये, । र. ( मा. ) गुल्मशूले ।

भाषा—हर्रे, सोंठ, मिर्च, पीपल, शुद्धकुचिला, भुनाहींग, सेधानमक, शुद्धगन्धकयेसबसमभागलेकर कूटकपड़छानकर नीबूकेरससे घोटकर छोटे बेरबराबरगोलियें बनालेवे इसमेसे प्रातःकाल अथवा भोजनोत्तर१-१गोलीगरमदूधकेसाथ अथवागरमपानीकेसाथ देनेसे गुल्म, शूल, ग्रहणी, अतिसार, मन्दाग्नि, इनसबको यह दूरकर मनुष्यकोउत्साहयुक्त बनाती है ॥ ४९० ॥

## ४९१ गुल्मशूलहररसः ( प्रथमः )

जयाजयन्तीविषतिन्दुवासा-
भृङ्गेन्दुरेखाविषधूर्तपिष्टः ।
शिलालताप्यार्कसुवर्णसूतः
सर्वाङ्गकल्कोऽस्यति गुल्मशूले२०२२॥

गुञ्जाचतुष्टयं चास्य शुण्ठीघृतविमिश्रितम् ।
शश्वदास्वादयेत्सम्यग्द्विदलञ्च विवर्जयेत् ॥

र ( मा. ), गुल्मशूले ।

भाषा—भाग, जैत, शुद्धकुचिला, अडूसा, भंगरा, बावची, शुद्धबछनाग, धतूरेकेबीज, शुद्ध-मैनसिल, हरिताल, सोनामाखी, ताम्रभस्म, सुवर्ण-भस्म, पारदभस्मअथवारससिन्दूर इनसबको पान-वगैरहकेरससे घोटकररखछोड़े । इसकी४रत्तीकीमात्रा ४माशेसोठऔर१तोलाघीमेमिलाकर देनेसे गुल्मऔर शूल नष्टहो, इसमे दालनहींखानी चाहिये ॥४९१॥

## ४९२ गुल्मशूलहररसः ( द्वितीयः )

अनूक्तेन प्रकारेण सूतभस्म प्रकल्पयेत् ।
रसभस्मार्कभस्माथ सौवीरं माक्षिकन्तथा ॥
शिलाजत्विति सर्वञ्च प्रत्येकं समभागिकम् ।
दैत्येन्द्रं द्विगुणं दत्त्वा मर्दयेत्सर्वमेकतः२०२५
जम्बीरवारिणा दद्यात्पुटं पारावताह्वयम् ॥
कौक्कुटं वा स्वाङ्गशीतं रसेन्द्रं सम्प्रचूर्णयेत् ॥
स्थापयेद्भाजने शुद्धे ताम्रजे लोहजेऽथवा ।
गुल्मरोगे प्रयोक्तव्यः शिलाजतुसमन्वितः
गुल्मशूलहरो नाम रसः परमदुर्लभः ।
सर्वेषामेव शूलानामनुपानेन योजयेत्॥२०२८

रसालं., गुल्मशूले ।

भाषा—पारदभस्म, ताम्रभस्म, सफेदसुरमा-भस्म, सोनामाखी, शिलाजीत येसब १-१भाग, गन्धक २भाग, लेकर सबको इकट्ठेखरलकर जम्भी-रीकेरससे घोटकर गोलाबनाकर कुक्कुटपुटदेवे । स्वाङ्गशीतलहोनेपर निकालकर तावे अथवा लोहेके-पात्रमेरक्खे, इसमेसे २रत्तीलेकर ३माशे शिलाजीत-केसाथ देनेसे गुल्मऔरशूलनष्टहोतेहैं ॥ ४९२ ॥

## ४९३ गुल्महरोरसः
## ( गुल्मोदरारण्यकृशानुमेवः )

रसं सुगन्धंजयपालबीजमेलालवङ्गं लवणत्रयञ्च
सर्वेण तुल्यं कटुनिम्बचूर्ण
क्षौद्रेण सम्मृद्य वटीं विदध्यात् ॥
गद्याणमानाञ्च ददीतपित्त-
गुल्मप्रशान्त्यै सितया समेताम् ॥

र. दी, र, गुल्मे ।

टि०—रसालङ्कारे वल्लमिता मात्राऽभिहिता सा मृदौ कोष्ठे कार्यकारिणी न क्रूरे, गुल्मिनश्च भवन्ति प्राय क्रूर-कोष्ठा अतो गद्याणमिता मात्रा श्रेयस्करी हि्ग्वजमोदकानु-पानन्तुयुक्तमेव, तत्रास्य गुल्मोदरारण्यकृशानुमेघ इतिनाम स्थापितम् ।

भाषा—शुद्धपारा, गन्धकऔरजमालगोटा,इला-यची, लौंग, सेधानमक, साभरऔरसंचल येसब समभाग, इनसबकीबराबर नीमकेपत्तेलेकर सबको एकजगहकूटकपड़छानकर मधुमिलाकर ६-६माशे-कीगोलीबनाय शक्करकेसाथदेनेसे पित्तगुल्म शान्त होताहै ॥ ४९३ ॥

## ४९४ गुल्महरोरसः( द्वितीयः )

शिलया निहितं ताम्रं वान्तिक्लेदादिवर्जितम् ।
भार्ङ्गीक्वाथेन चूर्णेन नागरेणापि वा पुनः ॥
रक्तिकाद्वितय खादेत्सर्वगुल्मप्रशान्तये २०३०

ना वि., गुल्मे ।

भाषा—मैनसिलसेमाराहुआताम्र जोकि वान्ति, भ्रान्त्यादिरहितहो उसकी २ रत्तीकीमात्राभारङ्गीके क्वाथअथवासोंठके चूर्णकेसाथदेनेसे समस्तगुल्म नष्ट होवें ॥ ४९४ ॥

## ४९५ गुल्महरोरसः ( तृतीयः )

कांस्यं चूर्णीकृतं सूतं पूर्वयोगविधानतः ।
भक्षितं क्रमयोगेन सर्वगुल्मं व्यपोहति २०३१

रसेन्द्रम.,गुल्मे

भाषा—कासेकेचूर्णमे बराबरकापाराऔरगन्धक मिलाकर जम्भीरीकेरसमे घोटकर सम्पुटमेबन्दकर लघुपुटकी दसपन्द्रहआचदेनेसे यह भस्म होजायगा। इसकी२रत्ती गुल्महरानुपानकेसाथदेनेसे समस्त-गुल्मनष्टहों ॥ ४९५ ॥

## ४९६ गुह्यरोगारिरसः

पारदं टङ्कणं गन्धं पृथक्तुल्यं समाहरेत् ।
सौम्यं वा नलिनीकन्दं वेदभागं विमर्दयेत् ॥

लुङ्गीरसेन तत्सर्वं दिवसत्रितयं बुधः ।
मधुनाभावितं पश्चात्खादेद्वल्लचतुष्टयम् २०३३ ॥
कर्षं सितापलंक्षीरमनुपानं पिबेदनु ।
प्रदरं योनिरोगांश्च रक्तातीसारमुल्बणम् ॥
रक्तमेहं मूत्रकृच्छ्रं त्रिदिनान्नाशयेद् ध्रुवम् ॥

र. का, र. दी, वै. चि, र. च, रसायनसं, गुह्यरोगे।

भाषा—शुद्धपारा, सुहागाऔरगन्धक येसब १-१भाग, सुगन्धार्जक ( फागळी-म० ) अथवा कमलकन्द४भाग, लेकर सबको बिजोरेकेरसमे तीन दिनतकमर्दनकर १२रत्तीमधुकेसाथ खाकर ४तोले दूधमें १तोलाशक्करडालकर पीवे । इससेप्रदर, योनिरोग, भयंकररक्तातिसार, रक्तप्रमेह, मूत्रकृच्छ्र येसब तीनदिनमे नष्ट होते है ॥ ४९६ ॥

### ४९७ गुल्मारिरसः

अमृतवराटकमरिचैस्त्रिपञ्च
नवभागयोजितैः क्रमशः ।
सोरकतोरीसादरसोमजसिन्धूत्थकिट्टयवक्षारैः
प्रतिपञ्चभागयुक्तैः रसैकभागं गवां मूत्रे ।
सम्मर्द्य घस्रमेकं गुल्महरो रस इति प्रोक्तः ॥

र. का, गुल्माधिकारे।

भाषा—शुद्धवछनाग३भा., कौड़ीभस्म ५भा., मरिच९भा., शोरा, फिटकड़ी, नोसादर, कालीजीरी, सैन्धानमक, मण्डूर, यवक्षार येप्रत्येक५-५ भाग, रससिन्दूरअथवाशुद्धपारा १भागलेकर सबको इकट्ठेकर गोमूत्रमेएकदिनघोटकर तीनतीनमाशेकी गोलियें बनाकररखछोड़े । इसमेसे एकएकगोली गोमूत्रवगैरहगुल्महरानुपानकेसाथदेनेसे यह गुल्मरोगको दूरकरताहै ॥ ४९७ ॥

### ४९८ गोधूमपाकः

भर्जयित्वा घृतप्रस्थे वरीस्वरससाधिते ।
तुलां स्वार्धपयःपिण्डां शुद्धगोधूमचूर्णिकाम् ।
द्विप्रस्थखण्डतन्तुल्यां शीतायाश्च क्षिपेद्धिताम् ।
ततो यथायथं वैद्यश्चूर्णानीमानि दापयेत् ॥
जातीफलं जातिपत्रीं व्योषं पुष्पं त्वचं दलम् ।
प्रत्येकं कोलमात्राणि मुञ्जातं मुसलीं वरीम् ॥
पृथग्द्वितोलमानानि त्रिपुटा च त्रितोलका ।
कुङ्कुमं शाणिकं माषं कस्तूर्यम्बरचन्द्रतः ॥
वातादं नालिकेरश्च मुकूलश्च पृथक् पलम् ॥
वङ्गप्रवालहेमाभ्रं पृथग्गद्याणसम्मितम् २०४१॥
सर्वं सम्मेल्य तन्तुल्यां ढालयेद्रौप्यभाजने ।
इत्येषः साधितः पाकः स्वर्णपत्रैरलङ्कृतः ॥
एनं प्राश्य पुरा कृष्णः स्त्रीसहस्राण्यरीरमत् ।

सि. भे. म. मा, वाजीकरणे ।

भाषा—शतावरकेरसमेपकायेहुए १ सेरघीमेगेहूकी सूजी ४०० तोलाको सेके, अच्छीतरहसिकजानेपर उसमे २०० तोले खोआ डालकर सेके, जब खोआभीसिकजाय तब दोसेरखाडकीलड्डूकीचाशनीबनाकर उसमे डालकर नीचे उतारले फिरजायफल, जावित्री, त्रिकटु, नागकेसर, तज, पत्रज ये प्रत्येक ६ माशे, सालम, दोनो मुशली, शतावर ये प्रत्येक २ तोले, इलायची ३ तोला, केशर ३ माशे कस्तूरी, अम्बर, कपूर १--१ माशा, बादाम, नारियल, पिस्तायाचिलगोजा येप्रत्येक ४ तोला, बङ्गभस्म प्रवालभस्म, सुवर्णभस्म औरअभ्रकभस्म येप्रत्येक ६--६माशे, येसब चाशनीमेमिलाकर चादीकेथालमे जमादेवे। औरऊपरसे सोनेकेवर्कलगाकर एकएकतोलेकी चकत्तीकरके रखले। इसमेसे अग्निबलदेखकर एकअथवादोचकत्ती खाकर ऊपरसे दूधपीनेसे सब प्रकारके प्रमेह, शुक्रकाशीघ्रपात, प्रदर, वातरोग, इनसबको यह दूरकरताहै ॥ ४९८ ॥

### ४९९ गोपीजलम्

जैपालाष्टौ द्विको गन्धः शुण्ठीमरिच चित्रकम्
एकः सूतः समो भागो गोपीजलमिति स्मृतः
शूलव्याध्याश्रयान्गुल्मान्कोष्ठादौदशपैत्तिकान्
भगन्दरादिहृद्रोगान्नाशयेदेव भक्षणात् २०४४

र स, र. सु, ध, र. चि., भगन्दरादौ।

भाषा—शुद्धजमालगोटा ८ भाग, शुद्धगन्धक २ भाग, सोंठ, मिरच, चित्रक, पारा येसब १--१

भाग, लेकर सबको पानीमें घोटकर ३—३ रत्तीकी गोलियेंबनालेवे । इसमेंसे १—१ गोलीउचितानुपानकेसाथदेनेसे शूलव्याधिके आश्रितगुल्म भगन्दर हृद्रोग नष्टहोतेहै ॥ ४९९ ॥

### ५०० गोमूत्र मण्डूरम् ( प्रथमम् )

गोमूत्रसिद्धमण्डूरचूर्ण सगुडमश्नतः ।
पाण्डुरोगः क्षयं याति पक्तिशूलश्च दारुणम्
गुडूचीपत्रकल्कं वा पिबेत्तक्रेण कामली ।
गोमूत्रेण पिबेत्कुम्भकामलायां शिलाजतु ॥
पाण्डुरोगप्रशान्त्यर्थं पयसाऽथ पिबेन्नरः२९४६

यो म, वै. चि, पाण्डुरोगे ।

**भाषा**—गोमूत्रमेंभस्मकियाहुआमण्डूर १ माशा, पुरानागुड़ ३ माशेमिलाकर सुबहशामखाकर कामलावाला गुडूचीकेपत्तोंकाकल्क छाछकेसाथऊपरपीवे । कुम्भकामलावालागोमूत्रकेसाथशिलाजतुपीवे । पाण्डुरोगी होय तो इसमण्डूरको दूधकेसाथसेवनकरे५००

### ५०१ गोमूत्रमण्डूरम् (द्वितीयम्)

अयोमलन्तु सन्तप्तं भूयोगोमूत्रसाधितम् ।
मधुसर्पिर्युतं चूर्णं सहभक्तेनभोजयेत् ॥
दीपनश्चाग्निजननं शोथपाण्ड्वामयापहम् ॥

यो. म., पाण्डधिकारे

**भाषा**—गोमूत्रमेंभस्मकियाहुआमण्डूर यथोचितमात्रामेंलेकर मधुऔरघीकेसाथमिलाकरभातकेसाथ देनेसे अग्निकीवृद्धिहोती है । शोथऔरपाण्डुरोगनष्टहोतेहै । पथ्यमे हलकाभोजनदेना ॥५०१॥

### ५०२ गोमूत्रमण्डूरम् ( तृतीयम् )

गोमूत्रसिद्धं मण्डूरं सुरभीरसभावितम् ।
मानकार्द्रककन्दानां रसैश्चापि विभावयेत्२०४८
त्रिफलाकटुचव्यानां चूर्णं पाणितलद्वयम् ।
क्षिपेत्सुसिद्धपाके तु मधुनश्च पलद्वयम् ॥
निहन्ति सर्वजं शोथं सर्वाङ्गश्च विशेषतः२०४९

वृ यो. त, नि. र, यो र., र. कौ, शोथाधिकारे।

**भाषा**—गोमूत्रमेंफुकेहुएमण्डूरको गोमूत्रकी बहुतसीभावनाएँदेकर मानकन्द ( कासाळू.म. ), अदरख, सूरणइनकेरसोंसे १—१ भावनादेकर त्रिफला, कुटकी, चव्यइनप्रत्येकका चूर्ण २-२ तोले औरमण्डूरसबकीबराबर डालकर सबसेअठगुनागोमूत्रदेकर पकावे जबइसकीगोलियें बननेलगें तबनीचे उतारले, स्वाङ्गशीतलहोनेपर मधु ८ तोले डालकर खूबमिलाकर रखछोडे, पुनर्नवादिकाथवगैरहकेसाथ इसमेंसे ३—३ माशेसुबहशामखानेसे सन्निपातज औरसर्वाङ्गव्यापी शोथको यह दूरकरताहै ॥ ५०२ ॥

### ५०३ गोमेदकरसायनम्

गोमेदं गन्धयोगेन लकुचद्रवयोगिना ।
पुटित्वा दशवारैश्च जातं भस्म पलोन्मितम् ॥
सुवर्णं रजतं कान्तं सर्वमौषधमारितम् ।
क्रामणं पादपादेन ग्रसितं चूलिकाम्बुना२०५१
पुटितं तापिगन्धर्वतैलेन दशवारकम् ।
निरुत्थं जायते भस्म सर्वथैव गुणाधिकम् ॥
तदर्धसूतगन्धाभ्यां घृतकाञ्चलिकाद्रवैः ।
पूर्वभस्मत्रयं क्षिप्त्वा विनिष्पिष्य समाहरेत् ॥
विचूर्ण्य मुण्डिकाद्रावै भावयेत्सप्तवारकम् ॥
पटचूर्णं विधायाथ क्षिपेदन्तःकरण्डके २०५४
इदं हि परमश्रेष्ठं गोमेदकरसायनम् ॥
योज्यं सर्वेषु रोगेषु तत्तद्रोगानुपानतः २०५५
करोति दीपनं तीव्रं सर्वाहेश्च प्रियंकरम् ॥
पादयेत्परमां पुष्टिं बलं भीमबलोपमम् ।
परमं वृष्यमायुष्यं नेत्र्यं मुखगदापहम्२०५६॥

र. चू, रसायने ।

**भाषा**—गोमेदको अग्निमेंतपाकर बड़हरकेरसमें सातवार बुझावेतो इसके टुकड़ेहोजायगे फिरउसचूर्णको रसमेंसे निकालकर बराबरकागन्धकदेकर बड़हरकेरससे एकदोरोजमर्दनकर शरावसम्पुटमें बन्दकर लघुपुटकीआचदे इसतरह दसआचदेनेसे इसकीभस्महोजायगी इसमेंसे ४ तोलेलेकर रखना फिरसुवर्ण भस्म, रजतभस्म, कान्तपाषाणभस्म और शिंगरिफसे माराहुआकान्तलोह येसब ४—४ तोले लेकर अलगरखना । फिरमैनसिलसेमाराहुआनाग,

हरितालसेमाराहुआवङ्ग, शुद्धवछनाग, शुद्धशिंगरिफ, सोनामाखीसेमाराहुआताम्र, माक्षिकसत्त्व, सोनागेरू येसव१-१ तोलालेकर इनसातचीजोंको हाथीकेमद अथवाधीकुआरके रससे मर्दनकर शरावसम्पुटमे वन्दकर लघुपुटकीआचदे । इसप्रकारदसआचदेनेकेवाद आकड़े केवीजोंकातैल औरलालएरण्डकेवीजोंकातैल इनप्रत्येकमे घोटघोटकर दस १० बार लघुपुटदेनेसे इनकीनिरुत्थभस्महोजायगी । इसभस्मसे आधापारा औरगन्धक, पूर्वकीतीनोभस्में ( अर्थात् गोमेद,औरसुवर्णादि,तथानागादि) सवएकजगहमिलाकर घीकुआरकेरससे अच्छीतरहपीसकर सुखाकर गोरखमुण्डीकेस्वरसकीसातभावनाए देकर सुखाकर कपड़ेमे छानकर रखछोड़े । यह **गोमेदकरसायन** तैयारहुआ । इसकी १ रत्तीमे ३ रत्तीतकमात्रा-तत्तद्रोगहरानुपानकेसाथ देनेसे मन्दाग्नि, समस्तप्रमेह, वार्धक्य, कृशता, निर्वलता, धातुशोष, राजयक्ष्म, जीर्णज्वरतथासमस्तरोग, औरमुखकेतमाम रोगनष्टहोतेहै ॥ ५०३ ॥

## ५०४ गोरक्षवटी

**रसभस्मार्कलोहस्य भावितस्य त्रिसप्तधा ।**
**क्षुद्राफलरसै र्मुद्गतुल्या कार्या वटी शुभा ॥**
**मुखस्था हरते सर्वं स्वरभङ्गमसंशयम् ।**
**गोरक्षनाथै र्गदिता स्वरभेदे कृपालुभिः ॥**

वृ.यो. त., वै र, र कौ., वै. चि, रसायनसं, नि-र,र. सु, चि र भ., र चं, यो र, स्वरभङ्गे । चि र-भ. गोरक्षनाथ इति नाम ।

**भाषा**—रसभस्म, ताम्रभस्मऔरलोहभस्म समभागलेकर इकट्ठेकर भटकटैयाकेफलोंकेरससे इक्कीस दिनमर्दनकर मूगवरावरगोलियें वनाकर मुखमेरखनेसे मुखकेरोग खासकर स्वरभङ्ग नष्टहोताहै॥५०४॥

## ५०५ गोक्षुरपाकः

**प्रस्थं गोक्षुरसूक्ष्मचूर्णमुदितं दुग्धाढकेपाचितं,**
**जातीपत्रलवङ्गलोहमरिचं कर्पूरमाकल्लकम् ।**
**अब्धेः शोपमजाजियुग्ममुसलीधात्रीकणाकेसरं**
**जातीकोषफलैलदीप्यनलदं शुण्ठीकुबेराक्षजम्**
**त्वक्पत्रोत्पलकेसरं गजकणारात्रिर्विलावीजकं,**
**चीनीकन्दयवानिकुङ्कुमतुगाकर्षद्वयं योजयेत् ।**
**तुल्यं शर्करया तदर्धविजयां प्रस्थार्धकं गोघृतं**
**युक्त्या वैद्यवरेण निर्मितमिदं प्रौढाङ्गनादर्पनुत्**
**वीर्यस्तम्भनतुष्टिपुष्टिजनकं वाजीकरं कामिना-,**
**मुक्तोगोक्षुरपाक एप हरिणीनेत्राविलासास्पदम्**

वृ यो त, पा व, वाजीकरणे ।

**भाषा**—१ सेरगोखरूकेचूर्णको ४ सेर दूधमेपकावे, जवखोआहोजाय तव आधसेरघीडालकर खूवसेककर उतारकर इसमेचमेलीकेपत्ते,लौंग,लोहभस्म, मरिच, शुद्धकपूर, अकलकरा, समुद्रशोष,दोनोजीरे, दोनोंमुसली, आवले, पीपल, नागकेसर, जावित्री, जायफल, इलायची, अजवाइन, अजमोद, खस,सोंठ, कञ्जाकी मज्जा, तज, पत्रज, कमलकेसर गजपीपल, हल्दी बीजवद, चोपचीनी खुरासानी अजवाइन, केसर, औरवशलोचन प्रत्येकदोदोतोलेलेकर कूटकपड़छानकर मिलादेना । फिर सवकीवरावर शक्कर औरशक्करसेआधीभुनी भाग मिलाकररखछोड़े । इसमेसे ३ मासेसे १ तोलेतक योग्यतादेखकर देनेसे पण्ढत्व, धातुक्षीणता,राजयक्ष्म, समस्तप्रमेह, जीर्णज्वर, सुजाक, प्रदरयेसव दूरहोते है । औरस्त्रियोंमे अत्यन्तअभिलापा वढतीहै ॥५०५॥

## ५०६ गोक्षुरादिचूर्णम्

**श्वदंष्ट्रा सकणा मुस्ता गुडूची फल्गुपल्लवाः ॥**
**दर्भाङ्कुरास्तु गण्डीरी रोहिषस्य च पल्लवाः ।**
**काला पुनर्नवा श्यामा शारिवा देवदारु च ।**
**त्रिवृता शृङ्गवेरश्च विडङ्गं मरिचानि च ॥**
**पाठा कम्पिल्लकं भार्ङ्गी द्वे हरिद्रे निदिग्धिका ।**
**एरण्डमूलं दन्ती च चित्रकं कटुरोहिणी ॥**
**एतानि समभागानि सूक्ष्मचूर्णानि कारयेत् ।**
**यावन्त्येतानि चूर्णानि स्युस्तावत्स्यादयोरजः**
**ततो विडालपदकं पिवेदुष्णेन वारिणा ।**
**अलाभे चापि मद्यानां प्रमेहान् हन्ति विंशतिम्**

श्वयथुश्च तथार्शांसि पाण्डुरोगं हलीमकम् ।
औदराण्यथ शूलानि प्लीहानश्चापकर्षति ॥
एभि र्गोमूत्रपिष्टैस्तु गुटिकां कारयेद् भिषक् ।
रोगेष्वेतेषु मुख्याः स्यु र्बलमांसविवर्धनाः ॥
भा प्र, ग्रहणीरोगे।

भाषा—गोखरू, पीपल, नागरमोथा, गिलोय, अंजीरकेपत्ते, दर्भकेअकुर, गण्डीरी ( गरमल गु० अथवा कौडगन्दल प०)रोहिडाके पत्ते,असगन्ध,पुनर्नवा, लाखन, सारिवा, देवदारु, निसोत, सोंठ, विडङ्ग, मरिच, पाठा, कमीला, भारङ्गी, हल्दी, दारुहल्दी, भटकटैया, एरण्डकीजड़, दन्ती, चित्रक, कुटकी येसब समभागलेकर कूटकपड़छानकर सबकीबराबरलोहभस्म मिलाकर गोमूत्रमेपीसकर गोलिया बनालेवे अथवाचूर्णहीरक्खे । इसमेसे १ माशेसे ३ माशेतक गरमपानीकेसाथ अथवामद्योकेसाथदेनेसे बीसप्रकारकेप्रमेह, शोथ, बवासीर, पाण्डुरोग, हलीमक, उदररोग, शूल, प्लीहा येसब नष्टहो ॥ ५०६ ॥

### ५०७ गौडो रसः

शुद्धसूतं मृतं तीक्ष्णं गन्धं भागसमन्वितम् ।
चूर्ण तयो र्भावयित्वा शतावर्या रसेन च ॥
धात्र्या गुडूच्यास्त्रिदिनं खल्वे मर्द्य पुनः पुनः
गुञ्जाचतुष्टयं खादेद्धृतेन मधुना पयः ॥
अनुपानं पिबेत्प्रातः सर्वशूलनिवारणम् ।
वातरोगान्पित्तरोगान् कफरोगान्सुदुस्तरान् ।
त्वग्दोषदेहकार्श्यश्च दाहमुग्रं निवारयेत् ।
गौडो रसः समुद्दिष्टो बलवर्णाग्निवर्धनः ॥
र र, रसायने ।

भाषा—शुद्धपारा, लोहभस्म,शुद्धगन्धक, समभागलेकर शतावरीआवलाऔरगिलोयकेरससे तीनतीनरोज़ भावनादेकर चारचाररत्तीकीगोलियेबनाले। इसमेसे१—१गोलीमधुमेमिलाकरचटाकर ऊपरसे दूधपीनेसे समस्तशूल, वातरोग, कफरोग, पित्तरोग, त्वग्दोष, कार्श्य, दाह इनसबको यहदूरकर बल, वर्णऔरअग्निको बढाताहै ॥ ५०७ ॥

### ५०८ ग्रहणीकपाटपञ्चाननो रसः

पारदं गन्धकं नागं कपर्दं मरिचं तथा ।
रसाद्द्विगुणमेकैकं चूर्णं कृत्वा तु मेलयेत् ॥
युक्त्या कृतस्तु ग्रहणीकपाटमुखपञ्चकः ॥
र का, ग्रहण्यधिकारे ।

भाषा—शुद्धपारा १ भाग, गन्धक २ भाग, नागभस्म ४ भाग, कौडीभस्म ८ भाग, मरिच १६ भागलेकर सबकोखरलकररखछोडे । इसमेसे १ माशेसे३माशेतककीमात्रा ग्रहणीहरानुपानकेसाथदेनेसे यह ग्रहणीरोगको दूरकरताहै ॥ ५०८ ॥

### ५०९ ग्रहणीकपाटो रसः ( प्रथमः )

विषामृते रक्तकवङ्गबिल्वं
जातीफलं मोचरसं सिता च ।
सधातुकीसर्जरसश्चलोध्रं
चूर्णं समं वै शशिनागफेनम्॥२०७३॥
भाव्यं त्रिभि र्जीरकमस्तुनीरै-
र्धत्तूरकैः शालिजलैश्च दद्यात् ।
दुष्टातिसारे ग्रहणीविकारे
मात्राप्रदत्तो ग्रहणीकपाटः
यो स, र को, ग्रहणीरोगे ।

भाषा—शुद्धवछनाग, गिलोय, शिगरिफ, बङ्गभस्म, बेलगिरी, जायफल, मोचरस, मिश्री, धावड़ीकेफूल, राल, लोधऔरअफीम, सबसमभागलेकर कूटकपड़छानकर जीरेकाक्वाथ, दहीकातोड़, धतूरेकारस इनकीएकएकभावनादेकर ३ रत्तीसे ६ रत्तीतककी गोलियाबनाकररखछोडे, इसमेसे १-१गोली चावलोंकेधोवनकेसाथ देनेसे दुष्टातिसारऔर, ग्रहणीरोगको यह दूरकरताहै ॥ ५०९ ॥

### ५१० ग्रहणीकपाटो रसः ( द्वितीयः )

तारमौक्तिकहेमानि सारश्चैकैकभागिकाः ।
द्विभागो गन्धकः सूतस्त्रिभागो मर्दयेदिमान् ॥
कपित्थस्वरसै र्गाढं मृगशृङ्गे ततः क्षिपेत् ।
पुटेन्मध्यपुटेनैव तत उद्धृत्य मर्दयेत् २०७६ ॥
बलारसैः सप्तवेलमपामार्गरसैस्त्रिधा ।

लोध्रं प्रतिविषामुस्तधातकीन्द्रयवामृताः ॥
प्रत्येकमेषां स्वरसैर्भावनाः स्यात्त्रिधात्रिधा ।
माषमात्रो रसो देयो मधुना मरिचैस्तथा ॥
हन्यात्सर्वानतीसारान् ग्रहणीं सर्वजामपि ।
कपाटो ग्रहणीरोगे रसोऽयं वह्निदीपनः ॥

शा सं, रसायनस, र शे., र. ( मा ), यो च, र.-चि, र क, वै चि., र म, चि र, र सु, भै. सा, भै.-र, र का, र. स, नि र, यो. र, यो म., ग्रहण्याम् ।

भाषा—रजतभस्म, मोतीभस्म, सुवर्णभस्म, लोहभस्म येप्रत्येक१-१भाग, गन्धक २भाग, शुद्धपारा३भागइनसबको कैथकेरससे ४ पहरमर्दनकर मृगकेसींगमें रखकर तीनचार कपडमिट्टीकर मध्यपुटकीआंचदेवे । स्वाङ्गशीतलहोनेपर निकालकर बलाकेरससे सात, औरअपामार्ग, लोध, अतीस, नागरमोथा, धावडीकेफूल, इन्द्रजव, गुडूचीइनप्रत्येक केस्वरस अथवाक्वाथोंकी तीनतीनभावनाएं देकर सुखाकररखछोडे । यह ग्रहणीकपाटरस तैयारहुआ इसमेंसे एकएकमाशेकीमात्रा मधु औरमरिचकेसाथ देनेसे तमामअतिसार, सग्रहणी, येसबदूरहोतेहैं५१०

### ५११ ग्रहणीकपाटोरसः (तृतीयः)

भागः शुद्धस्य सूतस्य द्वौभागौ गन्धकस्य च ।
अभ्रकस्य त्रयो भागा धूर्तबीजस्य भागकम् ॥
अहिफेनस्य भागोऽपि मेलयित्वाप्रयत्नतः ।
कज्जलीमञ्जनाभां च कारयित्वाभिषग्वरः
नागवल्लीदलद्रावैः पुटत्रितयकं मतम् ।
भृङ्गराजरसैस्तद्वदङ्कोलस्य तथा रसैः २०८२ ॥
अत्यन्तं मर्दनं कृत्वा वटकं मुद्गसन्निभम् ।
कृत्वा तक्रेण सेवेत ग्रहणीनाशकारकम् २०८३
सायं प्रातः पिबेद्यत्नाद्ग्रहणीक्षयहेतवे ।
ग्रहणीकपाटनामा ज्ञानज्योतिर्मिरीरितः ॥

र ज्ञा, ग्रहण्याम ।

भाषा—शुद्धपारा १भाग, गन्धक २ भाग, अभ्रकभस्म ३भाग, धतूरेकेबीजऔरअफीम १-१ भाग इनसबकोइकट्ठेकर पान, भंगरा औरअङ्कोल इनप्रत्येकके अङ्गस्वरस अथवाक्वाथोंसे तीनतीन भावनाएंदेकर मूगबराबरगोलियें बनाकररखछोडे । इसमेंसे १गोलीसे ३गोलीतक योग्यतानुसार छाछके साथ सुबहशामदेनेसे ग्रहणीरोगदूरहो ॥ ५११ ॥

### ५१२ ग्रहणीकपाटो रसः (चतुर्थः)

शुद्धैः कर्कवराटकैर्गणनया भल्लातकांस्तत्समान्
प्रोतान् बुब्बुलकण्टकैर्लघुपुटे
तस्याङ्घ्रिभागं रसम् ।
लेलीतेन समं विचूर्ण्य जयया
सप्तानुभाव्यं शिवा-
प्रोक्तोऽयं ग्रहणीकपाटकरस-
स्त्रैवल्लकः स्वौषधैः ॥ २०८५ ॥

र ल, नि. र, र. को, र. शं, ग्रहण्याम्।

टि०—अयमेव पाठो रसराजशङ्करे अपभ्रष्टतया स्थित अत्र सर्व सम्मिश्रय्य विजयारसभावना प्रदत्ता, रसराजशङ्करे तु पारदगन्धककज्जलीं विजयारसेन मुनिसङ्ख्यया विभाव्य एकभागेन नियोजिता इति विशेष । रसराजशङ्करे वल्लद्वयी मात्राऽभिहिता, विजयाजीर-मधूनि-अनुपानतया नियोजितानि । काकचण्डीश्वरीयोऽय ग्रहणीकपाट ।

भाषा—कैंकडाऔरपीलीकौडीबीसबीसनग, भिलावे ४०नग बब्बूलकेकांटोसे बिंधेहुए, लेकर सबको १हंडीमेंबंदकर लघुपुटकीआंचदेवे । स्वाङ्गशीतलहोनेपर निकालकर इसचूर्णसेचतुर्थांशपारा औरगन्धक मिलाकर भांगकेरस अथवाक्वाथकीसातभावनाएं देकररखछोडे । इसकी ९-९ रत्तीकीमात्रा ग्रहणीरोगहरानुपानकेसाथदेनेसे यहग्रहणीरोगको दूरकरताहै ॥ ५१२ ॥

### ५१३ ग्रहणीकपाटो रसः (पञ्चमः)

मृतसूताभ्रकं गन्धं यवक्षारं सटङ्कणम् ।
अग्निमन्थं वचां कुर्यात्सूततुल्यानिमान्सुधीः ॥
ततो जयन्तीजम्बीरभृङ्गद्रावै विमर्दयेत् ।
त्रिवासरं ततो गोलं कृत्वा संशोष्य धारयेत् ॥
लवणान्तर्गतं लोहपात्रे सम्यग्विमुद्रयेत् ।
अधोवह्निं शनैः कुर्याद्यामार्धश्च तदुद्धरेत् २०८८
रसतुल्यामतिविषां दद्यान्मोचरसं तथा ।

कपित्थविजयाद्रावै र्भावयेत्सप्तधाभिषक् २०८९
धातकीन्द्रयवौ मुस्तालोध्रबिल्वगुडूचिकाः ।
एतद्रसै र्भावयित्वा वारैकञ्च विशोषयेत् २०९०
रसं वज्रकपाटाख्यं माषैकं मधुना लिहेत् ।
वह्निः शुण्ठी विडं बिल्वं लवणञ्चूर्णयेत्समम् ॥
पिबेदुष्णाम्बुना चानु सर्वजां ग्रहणीञ्जयेत् ॥

र म., यो च, र का, र.प्र, र क, र र दी, र. को, चि र, व रा, वै द, वै चि, टो, र चि, यो म, ग्रहण्याम् ।

भाषा—पारदभस्म, अभ्रकभस्म, शुद्धगन्धक, यवक्षार, भुनाहुआसुहागा, अरणी, औरवचइनसबको-समभागलेकर कूटकपड़छानकर जैंत, जभीरी, भगरा इनप्रत्येककेरसमे एकएकदिनमर्दनकर गोलाबनाकर सुखालेवे औरलोहेकेपात्रमे गोलेको नीचेऊपर लवणदे-कर आधेपहर बहुतहल्कीआचदेवे । स्वाङ्गशीतलहोने-परनिकालकर इसकीबराबर अतीसऔर मोचरसमि-लाकर कैथऔरभागकेस्वरसोंसे सातसातभावनाएँदेकर धावड़ीकेफूल, इन्द्रजव, नागरमोथा, लोध, बेलगिरी, गिलोयइनकेरसोसे एकएकभावनादेकर सुखाकररख-छोड़े । इसमेसेएकएकमाशा सुबहशाममधुसेचाटकर चित्रक, सोंठ, सचल, बेलगिरी, सेधानमक इनस-बकोसमभागमिलाकर इसमेसे तीनतीनमाशे गरमपा-नीकेसाथदेनेसे सबप्रकारकीसङ्ग्रहणी दूरहोतीहै ॥

## ५१४ ग्रहणीकपाटो रसः ( षष्ठः )

रसगन्धकयोश्चापि जातीफललवङ्गयोः ।
प्रत्येकं शाणमानञ्च श्लक्ष्णचूर्णीकृतं शुभम् ॥
सूर्यावर्तरसेनैव बिल्वपत्ररसेन च ।
शृङ्गाटकस्य पत्राणां रसैः प्रत्येकशः पलैः ॥
चण्डातपेन संशोष्य वटिकां कारयेद्भिषक् ।
बिल्वपत्ररसेनैव दापयेद्रक्तिकाद्वयम् ॥२०९४॥
ग्रहणीकपाटनामा रसः परमदुर्लभः ।
ज्वरग्रहण्यतीसारपाण्डुशोथप्रणाशनः ॥
पथ्यं दधियुतं भक्तं दापयेदन्नयुक्तितः ॥

वै. क, र क, र र., भै. र. र, स, र सु, ग्रहण्याम्

भाषा—शुद्धपारा, गन्धक, जायफल, लौंग, येप्रत्येक ३माशेलेकर बारीकचूर्णकर हुरहुर, बिल्व-पत्र, सिंघाड़ेइन प्रत्येकके पत्तोकेरसोंसे एकएक भावना देकर कड़ीधूपमे सुखाकर बेरबराबरगोलियें बनाकररखछोड़े । इसमेसे १–१ गोलीबिल्वपत्रके रसकेसाथदेनेसे ज्वर, ग्रहणी, अतिसार, पाण्डु, शोथइनसबको दूरकरतीहै पथ्यदहीभातदेना॥५१४॥

## ५१५ ग्रहणीकपाटो रसः ( सप्तमः )

टङ्कणक्षारगन्धाश्मरसजातीफलानि च ।
बिल्वं खदिरसारञ्च जीरकं श्वेतधूनकम् ॥
कपिहस्तकबीजञ्च अवाक्पुष्पी तथैव च ।
एषां शाणं समादाय श्लक्ष्णचूर्णञ्च कारयेत् ॥
बिल्वपत्रककार्पासफलं शालिञ्चदुग्धिका ।
शालिञ्चमूलं कुटजत्वचं कञ्चटपत्रकम् ॥
सर्वेषां स्वरसेनैव वटिकां कारयेद्भिषक् ।
माषकैकप्रमाणेन खादयेद्दिवसत्रयम् ॥२०९९॥
दधिमण्डस्ततः पेयः पलमात्रप्रमाणतः ।
अपि योगशताक्रान्तां ग्रहणीमुद्धताञ्जयेत् ॥
आमशूलं ज्वरं कासं श्वासं शोथं प्रवाहिकाम् ।
रक्तस्रावकरं द्रव्यं योज्यं नैवात्र जानता ॥
कृष्णवार्ताकुमत्स्यञ्च दधि तैलञ्च शस्यते ।
ज्ञात्वा वायो र्गतिं तत्र जलं तैलं प्रदापयेत् ॥
ग्रहणीकपाटनामा कपाटघटनादिव ॥

र र, र. सु, ध, र. क, भै. र, र. स, ग्रहण्याम् ।

भाषा—भुनासुहागा, सज्जीखार, जवाखार, शुद्धगन्धक, पारा, जायफल, बेलगिरी, कत्था, जीरा, सफेदराल, कैथकेबीज अथवाकेवाचकेबीज और-सर्पाक्षी येप्रत्येक ३–३ माशेलेकर सबकासूक्ष्मचूर्ण-कर बिल्वकेपत्ते, कपासकीमज्जा, सरहंची, दूधी, सरहंचीकीजड़, कुरैयाकीछाल, मरसाकेपत्ते, दही-कापानी, इनप्रत्येकके रसोंसेक्रमसे एकएकरोजमर्द-नकर एकएकमाशेकी गोलियेबनाकर १पलदहीके तोड़केसाथदेनेसे जिसमे हजारोवैद्य हजारोनुस्खे अजमाचुकेहों औरअच्छानहुआहो ऐसा दुस्तरग्रहणी

रोग दूरहोताहै। इसमे कालाबेंगन, मछली, दही, औरतैल येसवदेनेहितकरहैं। अथवा वायुकीगतिको-देखकर जलऔरतैलकाप्रयोगकरे ॥ ५१५ ॥

### ५१६ ग्रहणीकपाटो रसः ( अष्टमः )

मुक्तासुवर्ण रसगन्धटङ्कं
घनंकपर्दोऽमृततुल्यभागम्।
सर्वैः समं शङ्खकचूर्णयुक्तं
खल्वे च भाव्योऽतिविषाद्रवेण २१०३
गोलञ्च कृत्वा मृतकर्करस्थं
संरुध्य चाग्नौ हि पचेद्दिनार्धम्।
सुस्वाङ्गशीतो रस एप भाव्यो
धत्तूरचैत्रैर्मुशलीद्रवैश्च ॥ २१०४ ॥
लोहस्य पात्रे परिपाचितश्च
सिद्धो भवेत्सङ्ग्रहणीकपाटः।
वातोत्तरायां मरिचाज्ययुक्तः
पित्तोत्तरायां मधुपिप्पलीभिः २१०५॥
श्लेष्मोत्तरायां विजयारसेन
कटुत्रयेणापि युतो ग्रहण्याम्।
क्षये ज्वरेऽप्यर्शसि विड्विकारे
सामातिसारेऽरुचिपीनसे च ॥
मोहे च कृच्छ्रे गतधातुवृद्धौ
गुञ्जाद्वयश्चापि महामयघ्नम् २१०६॥

र मं., र. प्र सु., र सु., र. क, भै र., र च, ग्रहण्याम्।

भाषा—मोती, सुवर्णभस्म, शुद्धपारा, गन्धक, औरसुहागा, अभ्रकभस्म, कौड़ीभस्मऔरशुद्धवछनाग, येसवसमभागलेकर सवकीवरावर शखचूर्णमिलाकर सवकोइकट्ठेकर अतीसकेरस अथवाक्वाथसे एकदो रोजमर्दनकर गोलावनाकर सुखालेवे। फिरउसको सम्पुटमेवन्दकर दोपहरअग्निमेपुटदे स्वाङ्गशीतल होनेकेवाद निकालकर लोहेकेपात्रमे डालकर धतूरा चित्रकऔरमुशली, इनकेस्वरसअथवाक्वाथोंसे भावितकर लोहेकेपात्रमे वन्दकर हलकीआचदेवे, स्वाङ्गशीतलहोनेपर निकालकररखछोडे, यह ग्रहणी-कपाट रस तैयारहुआ। इसमेसे २-२रत्तीकीमात्रा वातप्रधानग्रहणीमे मरिचऔरघीकेसाथदेवे। पित्त-प्रधानमे मधुऔरपीपलकेसाथ, कफप्रधानमेभागके रसकेसाथ अथवा साधारणतः त्रिकटुकेसाथदेवे। यहरस क्षय, ज्वर, अर्श, विड्विकार, सामातिसार-अरुचि, पीनस, मूर्च्छा, मूत्रकृच्छ्र, धातुक्षय इन-सवमे त्रिकटुकेसाथ दोदोरत्तीदेनेसे सवको नष्ट करताहै ॥ ५१६ ॥

### ५१७ ग्रहणीकपाटो रसः ( नवमः )

रसेन्द्रगन्धातिविषाभयाभ्रं
क्षारद्वयं मोचरसो वचा च।
जया च जम्बीररसेन पिष्टं
पिण्डीकृतंस्याद्ग्रहणीकपाटः ॥२१०७॥
तस्याएवल्लान्मधुना प्रभाते
शम्बूकभस्माज्यमधूनि लिह्यात्।
सक्षीरिणी जीरकमाणिमन्थ-
तीक्ष्णानिचादौ दधिभोजनञ्च२१०८॥

र. र. स, र का, यो र, वृ यो त, रसायनस, नि. र, र सु, ना वि., वै चि, र क ल., र र. कौ., ग्रहण्याम्।

भाषा—पारा, गन्धक, अतीस, हर्रे, अभ्रक-भस्म, सज्जीखार, यवक्षार, मोचरस, वच, भांग, सवसमभागलेकर जभीरीकेरसमे एकरोजघोटकर तीनतीनमाशेकीगोलियें वनाकर रखछोड़े, इसमेसे एकएकगोलीसुवहशाम मधुकेसाथ चाटकर घोंघेकी भस्म१माशा, घी ६माशे, मधु ३माशेमिलाकर ऊपरसे चाटे, औरखिरनी, जीरा, चनेऔरतीक्ष्ण-पदार्थ खाकर दहीभातखावे ॥ ५१७ ॥

### ५१८ ग्रहणीकपाटो रसः ( दशमः )

शुद्धाहिफेनवलिसूतकपर्दभस्म
हालाहलोपणविशुद्धसुवर्णवीजैः।
अम्भोधिपङ्क्तिकरशैलधराष्टविंश-
त्यंशैर्विचूर्णिततमै ग्रहणीकपाटः २१०९
वल्लोऽस्य हन्ति मधुना सह जीरकेण

भुक्तोऽतिसारमपि सङ्ग्रहणीमुदग्राम् ।
आमं विपाच्य सहसा जनयत्यवश्यं
वैश्वानरं जठरवर्तिनमार्तिभाजः २११०॥

र. यो. त., र. न., रसायन सं., र. कौ., र. म., र. का., ग्रहण्याम् ।

भाषा—शुद्धअफीम४भाग, गन्धक१० भाग, पारा२भाग, कौडीभस्म७भाग, शुद्धबछनाग१भाग, मरिच८भाग, शुद्धधतूरेकेबीज २०भागलेकर सबको कूटकपडछानकर रखछोडे । इसमेसे ३रत्तीकीमात्रा ३माशाजीराऔरमधुकेसाथमिलाकर सुबहशामखानेसे अतिसार औरप्रचण्डसंग्रहणी दूरहोतीहै । यहआम-दोषको पकाकर जठराग्निको प्रदीप्तकरताहै ॥५१८॥

### ५१९ ग्रहणीकपाटो रसः ( एकादशः )

पारदाद्द्विगुणोगन्धस्ताभ्यां तुल्यं कटुत्रिकम् ।
अजाजी टङ्कणं धान्यं हिङ्गुजीरयवानिकाः ॥
प्रत्येकं द्विगुणं सूतात्सर्चकञ्च चतुर्गुणम् ।
सर्वेपाञ्च समा देया दग्धा शुभ्रा वराटिका ॥
सर्वमेकीकृतं चूर्णं मापद्वयमितं ततः ।
तक्रेणालोड्य मतिमान् भक्षयेत्सततं नरः ॥
ग्रहणीकपाटको ह्येप हितः स्याद्ग्रहणीगदे ।
पाचनो दीपनो हृद्यो चतुर्धा ग्रहणीञ्जयेत् ॥

चि र, नि र, र मु., वै. र, ग्रहण्याम् ।

भाषा—शुद्धपारा १ भाग, गन्धक २ भाग, त्रिकटु ३ भाग, जीरा, भुना सुहागा, धानिया, भुना-हींग, स्याहजीरा, अजवाइन येप्रत्येकपारेकीवराबर, और सञ्चल ४ भाग, इनसबकीबराबर कौडीकी-भस्मलेकर इकट्ठेकूटकपडछानकर रखछोडे । इसमेसे २ माशेकीमात्रा छाछमेमिलाकर पीनेसे अग्निकोप्र-दीप्तकरयह ग्रहणीरोगको दूरकरताहै ॥ ५१९ ॥

### ५२० ग्रहणीकपाटो रसः ( द्वादशः )

तुल्यं कान्तं रसं तालं माक्षिकं टङ्कणं तथा ।
सपादनिष्कं प्रत्येकं पञ्चनिष्कं वराटकम् ॥
द्विनिष्कं गन्धकं सर्वं पिष्ट्वा जम्बीरजै र्द्रवैः ।
अर्धभागकरीषेण पुटितं भस्म शोभनम् ॥
प्रदद्याद्ग्रहणीगुल्मक्षयकुष्ठप्रमेहके ॥ २११६ ॥

र मं., र प , [illegible] ।

भाषा—कान्तभस्म, शुद्धपारा, हरितालभस्म अथवा स्वर्णमाक्षिक, शुद्धमाक्षिक, भुनासुहागा, येस-बप्रत्येक सवाटंक, कौडीभस्म ५ टंक, शुद्धगन्धक २ टंक, इनसबको जम्भीरीनिम्बुके रसमें खरलकर गोलाबनाय सम्पुटमेंबन्दकर २॥ गजकण्डेकी आंचदे। स्वाङ्गशीतहोनेपर निकालकर १ मासेसे २ मासेतक ग्रहणीकाअनुपान देनेसे ग्रहणी, गुल्म, क्षय, कुष्ठ, प्रमेहइनसबको यह दूरकरताहै ॥ ५२० ॥

### ५२१ ग्रहणीकपाटो रसः ( त्रयोदशः )

रसाभ्रगन्धान् क्रमवृद्धियुक्तान्
जम्बीररसेन त्रिदिनं विमर्द्य ।
जयन्तिकाभृङ्गकलम्बनीरै-
र्दिनंयवक्षाररसटङ्कणञ्च ॥ २११७ ॥
क्षिप्त्वा तु गन्धस्य च तुल्यभागं
वातारितैलेन युतं पुटित्वा ।
गुडूचिकाशाल्मलिकारसेन
जयारसेनापि विमर्द्य गाणम्॥२११८॥
सार्द्धं मरीचं मधुनासमेतं
ददीत पथ्यं दधि भक्तकञ्च ।
शिवोदितोऽयं जगतां हिताय
महारसोऽयं ग्रहणीकपाटः ॥ २११९॥
सौवीरकं जीरकयुग्मधान्यं
यवासवारीणि च नागरञ्च ।
कपित्थसारेण समं प्रगृह्य
ददीत चूर्णं निशि तीव्रतापे ॥
गद्याणमात्रं मधुखण्डयुक्तं
गुडेनयुक्तञ्च रुचिप्रवृद्ध्यै ।
वातप्रधाने च कफप्रधाने
रात्रौ कपायं कुटजस्य दद्यात् ॥
कृशानुजातीद्वयमाक्षिकेण
कटुत्रयेणापि युतं ददीत ॥ २१२१ ॥

र. स, र. क., र च, र टी, ग्रहण्याम्। र को, र-र. स., र र. कौ, रसरत्नकौमुद्या ग्रहण्यर्गलेति नाम । रस-दीपिकाया सुदर्शनेतिनाम । रसरत्नकौमुद्या तु पाठस्त्रुटि-तोस्ति ।

भाषा—शुद्धपारा १ भाग, अभ्रकभस्म २ भाग, शुद्धगन्धक ३ भाग, इनकोकाकजङ्घाकेरसमे ३ रोज़घोटकर जैत, भांगरा, नाडी, इनकेस्वरसोसे एकएकदिनमर्दनकर यवक्षार, भुनाहुआसुहागा, प्रत्येक ३-३ भागलेकर सबको एरण्डकेतैलमेघोटकर गोला-बनाकर ५ सेर कण्डोंकी आचदेना । स्वाङ्गशीतल होनेपर निकालकर गिलोय, सेंमल औरभाग इनके रसोंसे एकएकरोज मर्दनकर रखछोड़े । इसमेसे ३ मासेरसलेकर ३ माशे मरिचकेसाथ मधुमेमिलाकर देवे औरदहीभातपथ्यमेखिलावे । इससे सबतरहका ग्रहणीरोगदूरहो । कदाचित् इसको देतेहुए आदमीको तीव्रज्वरहोजायतो गोदन्तीहरिताल, दोनोंजीरे, धनिया, जवास, सुगन्धवाला, सोंठ, कैथकीमज्जा, येप्रत्येक-समभागलेकर सबकाचूर्णबनाकर ६-६ माशेमधु-अथवाखाडकेसाथदेवे । अरुचिहोजायतो इसीचूर्णको गुडकेसाथदेवे । वातऔरकफप्रधानसग्रहणीरोगमे कुरैयाकीछालकाकाढा अथवाचित्रक, जायफल, जावित्री, इनकेचूर्णकेसाथ या त्रिकटुकेसाथदेवे॥५२१

## ५२२ ग्रहणीकपाटो रसः ( चतुर्दशः )

श्वेतसर्जस्य शुद्धस्य गन्धकस्य रसस्य च ।
शुभेऽह्नि पृथगादाय चूर्णं माषचतुष्टयम् ॥
एकीकृत्य शिलाखल्वे दद्यात्तत्र शुभं रसम् ।
सूर्यावर्तस्य बिल्वस्य भृङ्गाटस्य च पत्रजम् ॥
प्रत्येकं पलमेकैकं दापयेद्ग्रहणीगदे ।
दापयेत्सततं यत्नाद्दधिभक्तं समाचरेत् ॥
असंवृतगुदद्वारं कपाटमिव ढक्कयेत् ।
ततश्च ग्रहणीरोगकपाटोऽयं रसः स्मृतः ॥

र. चं., र सु., ग्रहण्याम् ।

भाषा—सफेदराल, शुद्धगन्धकऔरपारा ये प्रत्येक एकएक टक लेकर सबकीअच्छीतरह कजली-कर उसमेक्रमसे हुरहुर, बेलऔरसिंघाड़े इनकेपत्तोंका वस्त्रसेछानाहुआरस १-१ पलडालकर सुखावे फिर ३ रत्तीसे ६ रत्तीतककीगोलियाबनाकर संग्रहणीह-रानुपानकेसाथदेनेसे यह समस्त संग्रहणीरोगोंको नष्टकरताहै ॥ ५२२ ॥

## ५२३ ग्रहणीकपाटो रसः ( पञ्चदशः )

जातीफलं टङ्कणमभ्रकञ्च
धुत्तूरबीजं समभागचूर्णम् ।
भागद्वयं स्यादहिफेनकस्य
गन्धालिकापत्ररसेन मर्द्यम् ॥२१२६॥
चणप्रमाणा वटिका विधेया
यत्नाद्विदध्याद्ग्रहणीगदेषु ।
सामेषु रक्तेषु सशूलकेषु
पक्केष्वपक्केषु गुदामयेषु ॥ २१२७ ॥
रोगेषु दद्यादनुपानभेदै-
र्मधुप्रयुक्ता ग्रहणीगदेषु ।
पथ्यं सुदध्योदनमत्र देयं
रसोत्तमोऽयं ग्रहणीकपाटः ॥२१२८॥

र. स., भै. र, र. चं, ग्रहण्याम् ।

भाषा—जायफल, भुनासुहागा, अभ्रकभस्म, शुद्धधतूरेकेबीज, येसब १-१ भाग, शुद्धअफीम २ भाग, इनसबकोइकट्ठे खरलकर अर्जक ( फागळी म० ) अथवाकुकरोंधेकेरसमे एकदोरोज़मर्दनकर चनेप्र-माणगोलीबनाकर रखछोड़े । इसकोमधुकेसाथ ग्रहणी-रोगमेदेवे, पथ्यमे दहीभातदेवे । और साम, सरक्त, सशूल, पक्कअथवाअपक्कग्रहणीरोग और गुदरोग इनसबमे अनुपानभेदसेदेनेसे यह सबकोदूर करताहै ॥ ५२३ ॥

## ५२४ ग्रहणीकपाटो रसः ( षोडशः )

मृताभ्रसूतौ बलिटङ्कणौ च
तयोः समा चापि जया वचा च ।
जयन्तिका भृङ्गभवद्रवैश्च
सर्वं विमर्द्याथ दिनत्रयं तत् ॥२१२९॥
यामार्धकं लोहविनिर्मिते हि
पात्रे तु संस्वेद्य सजीरकन्तु ।

सम्वेष्य तच्छाल्मलिजैर्गदैश्च
समैस्तथा चातिविषासमङ्गैः॥२१३०॥
रम्भाद्रवैः सप्त पुटानि दद्यात्
पुन र्विनिक्षिप्य कृतं सुसूक्ष्मम् ।
निष्काधर्मानो मधुनान्वितश्च
जन्तुघ्नविश्वानलचित्रपदैः॥२१३१॥
युतश्च तप्तोदकमेव पश्चा-
द्वैद्यैस्तुपानं समुदाहृतं च ।
रसः प्रसिद्धो ग्रहणीकपाटो
नामानुकूल्येनगुणान्विदध्यात्२१३२॥

चि क.,ग्रहण्याम् ।

भाषा—अभ्रकभस्म, पारदभस्म, शुद्धगन्धक औरसुहागा येप्रत्येक एकएकभाग, भागऔरवचप्रत्येक २-२भाग, लेकर सबकोकूटकपड़छानकर जैत, और भागराकेरसोंसे ३-३ रोज़मर्दनकर गोला-बनाकर लोहेकेपात्रमे बन्दकर इतनीआचदेवोकि रसजलकरसूखजाय, फिरस्वाङ्गशीतलहोनेपर निका-लकर सेमर, कुठ, अतीस, केलेकाजिड इनप्रत्ये-कके स्वरसोंसे सातसातपुटदेकर सुखाकररखछोडे। इसमेसे २ माशेकीमात्रा मधुमेमिलाकर चाटकर विडङ्ग, सोंठ, चित्रक, सचल इनका चूर्ण ३ माशेसे ६ माशेतक फकाकर ऊपरगरमपानीपिलावेतो यह ग्रहणीरोगोंकोदूरकरे ॥ ५२४ ॥

## ५२५ ग्रहणीकपाटो रसः ( सप्तदशः )

लवङ्गजातीफलहिङ्गुलोहि-
फेनंसिता मोचरसं समांशम् ।
गुटीं विदध्याच्चणकप्रमाणां
सर्वातिसारग्रहणीगदेषु ॥ २१३३ ॥

रसायनसं , ग्रहण्याम् ।

भाषा—लौंग, जायफल, शिंगरिफ, अफीम, मिश्री, मोचरस, येसबसमभागलेकर भागवगैरहके रससेघोटकर चनेबराबरगोलीबनाकर सग्रहणीहरानु-पानकेसाथ देनेसे सबप्रकारकी ग्रहणीऔरअतिसार नष्टहोतेहै॥ ५२५ ॥

## ५२६ ग्रहणीकपाटो रसः ( अष्टादशः )

रसगन्धकयोश्चापि जातीफललवङ्गयोः ।
प्रत्येकं शाणमानञ्च श्लक्ष्णचूर्णीकृतं शुभम् ॥
भृङ्गराजरसेनैव विल्वपत्ररसेन च ।
शृङ्गाटकसमुत्पन्नस्वरसेन च मर्दयेत् ॥
चण्डातपेन संशोष्य वटिकां कारयेद्भिषक् ।
विल्वपत्ररसेनैव दापयेद्रक्तिकाद्वयम् ॥
दध्ना च सम्प्रदातव्यो ग्रहणीरोगनाशनः ।
पाण्डुरोगमतीसारं शोथं हन्ति तथा ज्वरम् ॥
अयञ्च ग्रहणीरोगे कपाटो रस उत्तमः ॥

र सं., र सु , ग्रहण्याम् ।

भाषा—शुद्धपारा, गन्धक, जायफलऔरलौंग येसबसमभागलेकर इकट्ठाचूर्णकर दूरदूर, विल्वपत्र, सिंघाड़ेइनकेरसोंमे एकएकरोज़ मर्दनकर कड़ेधूपमे सुखाकर २-२रत्तीकीगोली बनाकर रखछोडे। इसमेसे १-१गोली दहीकेसाथ देनेसेयह ग्रहणी, पाण्डु, अतिसार शोथ औरज्वर इनकोनष्टकरता है ॥ ५२६ ॥

## ५२७ ग्रहणीकपाटो रसः ( ऊनविंशः )

त्र्यूषणं टङ्कणं पारदं गन्धकं
सत्कपर्दं विषं निम्बुजैर्मर्दयेत् ।
माषमात्रं मरीचाज्ययुक्तं भजे-
त्सङ्ग्रहाख्ये गदे शर्करामिश्रितम् ॥

रसायनसं , वै वि , ग्रहण्याम् ।

भाषा—त्रिकटु, भुनाहुआसुहागा, पारा, शुद्ध-गन्धक, कौड़ीभस्म, शुद्धबछनागयेसबसमभागलेकर कूटकपड़छानकर नीबूकेरसमें एकदोरोज़मर्दनकर एकएकमाशेकी गोलियेंबनाकर मरिच, घीऔरशक्कर केसाथदेनेसे यह सग्रहणीरोगको दूरकरताहै ५२७॥

## ५२८ ग्रहणीकपाटो रसः ( एकविंशः )

कृष्णं खं दिवसत्रयं दृढतरं सम्मर्द्य निम्बाम्बुना,
गोलं तस्य विधाय टङ्कणरजोयुक्तश्च भूपान्तरे,
मृत्स्नामुद्रिकचीवरैः सुनिमितंसंवेष्ट्यतीव्रेऽनले,
ध्मातं मृत्युमुपैति तत्तु गगनं भागैकमानं हरेत्

तत्तुल्यं रसभस्म हेमजनितं भस्मापि तुल्यं ततः,
सर्वैस्तुल्यगुणांक्षिपेद्बलिवसांसम्मर्दयेद्वासरम् ।
पश्चात्कान्तदलंविलिप्यसघृतं सम्पाच्यरम्भादले
स्थाप्यंपर्पटिकेव गोमयचयं तस्योर्द्धपात्रे क्षिपेत्
स्वाङ्गशीतलतामुपागतमिदं सम्मर्दयेद्भृङ्गिका-
नीरेणत्रिदिनंततस्त्वतिविषातोयेनपड्वासरान् ।
शक्राङ्घ्रिस्वरसेन वासरयुगं पाठारसे वासरं,
सिद्धःस्याद्ग्रहणीकपाटहरजःख्यातःक्षितेर्मण्डले

वल्लद्वयश्चातिविषामधुभ्यां
गुडेन मालूरफलेन दध्ना ।
तक्रेण पथ्यं सुरभीभवेन
दध्नायवैः कोलकुलत्थयूषैः ॥
कृताकृतै र्वापि मसूरकाद्यै-
र्विलेपिका तक्रयुता हिता स्यात् ॥

चुक्रिका कारवेल्लञ्च विम्बी कोशातकी तथा ।
गोजिह्वा गिरिकर्णी च शाकार्थमुपकल्पयेत् ॥

र, ग्रहण्याम् ।

भापा—धान्याभ्रककियेहुए कालेअभ्रकको नींबू केरसमेंढोतीनरोज़ अच्छीतरहघोटकर गोलाबनाकर सुखाले, फिरनीचेऊपर सुहागादेकर सम्पुटमेंबन्दकर ४-५कपड़मिट्टीदेकर तीक्ष्णअग्निमे धमनकरेतो इसकीभस्महोजायगी । यहभस्म १भाग, पारदभस्म १ भाग, सुवर्णभस्म१भाग, इनसबकीवराबर गन्धक देकर एकदिन मर्दनकर कान्तिसारकीकड़ाहीमे घी चुपड़कर अग्निपररख कज्जलीकोगलाकर भैंसकेताज़े गोबरपररक्खेहुए केलेकेपत्तेपर डालकर ऊपरसे दूसरापत्रदवाकर दूसरागोबररखदे । स्वाङ्गशीतलहोने पर इसकीपपड़ियोंको निकालकर भागरेकेरससे ३ रोजमर्दनकर अतीसकेरससे ६रोज़मर्दनकरे। फिरभागकीजड़केस्वरससे दोरोज़मर्दनकर पाठाकेरससे १ दिनमर्दनकर सुखाकर रखछोडे । इसमेसे ६रत्ती अतीसऔरमधुकेसाथ अथवा गुड, गूलरकेकच्चेफल औरदहीकेसाथदेवे । पथ्यमे गायकादही, जव, वेर, कुलथीकायूप, कृतऔरअकृतमसूरकायूप, अथवा पतलीखिचडी छाछकेसाथदेवे । चूका, करेला, कुंदरू, लौकी, बनगोभी, अपराजिता इनका शाकदेवे इसके सेवनसग्रहणी रक्तातिसारप्रभृति तमामरोगनष्टहोवै ॥ ५२८ ॥

### ५२९ ग्रहणीकपाटोरसः ( द्वाविंशः )

सूतायोभ्रकतालताप्यवलयःक्षारास्त्रयोमी समाः
शुक्तिःशङ्खकपर्दकाःसमलवाःसूतार्धभागंविषम्
मुस्तोशीरयवेन्द्रशृङ्गविजयाहेमाजमोदाम्बुभिः,
निम्बत्वग्जलतोवलाङ्घ्रिसलिलैस्त्रिःसप्तधाभावयेत्
तं सूतं कदलीदले लघुपुटेत्स्वेद्यश्च चूर्णीकृतं, ।
वल्लैकं ग्रहणीगदेतिसरले रक्तातिसारे ज्वरे ।
देयोऽयं ग्रहणीकपाटरचितो वम्यग्निमान्द्यक्षये,
प्लीहार्शोविकृतौ कणामधुयुतः स्वीयानुपानैरपि

र श, ग्रहण्याम् ।

भापा—शुद्धपारा, लोहभस्म, अभ्रकभस्म, हरितालभस्म या रसमाणिक्य, शुद्धसोनामाखी औरगन्धक, सज्जीक्षार, यवक्षार, सुहागा, सीप, शङ्खऔरकौड़ीयेसबसमभाग, पारेसे आधाशुद्धबछनाग, इनसबको कूटकपड़छानकर नागरमोथा, खस, इन्द्रजव, काकड़ासींगी, भाग, धतूरेकेवीज, अजमोद, नीमकीछाल औरवला इनसबकेस्वरस अथवा क्वाथोंसे २१भावनाएदेकर गोलाबनाकर कदलीपत्रकेसम्पुटमेरखकर कपड़मिट्टीदेकर एकअङ्गुलमोटा लेपकर पुटपाक करे । स्वाङ्गशीतलहोनेपर निकालकर बारीकचूर्णकर रखछोड़े । इसमेसे ३ रत्तीपीपल औरमधुकेसाथ अथवातत्तद्रोगहरानुपानकेसाथ देनेसे उल्टी, अग्निमान्द्य, क्षय, प्लीहा, बवासीर, येसब दूरहोतेहै ॥ ५२९ ॥

### ५३० ग्रहणीकपाटोरसः ( त्रयोविंशः )

सूताभ्रताप्यकृतशुद्धिकपर्दलोहं
तालं लवा बलिविषालवमेकभागम् ।
मुस्ताविषेन्द्रयवबिल्वबलालिवालैः
प्रत्येकशः प्रकृतिकाः किल भावनाः स्युः

एभिश्च सप्त विजयापटुनिम्बघोरा-
निर्यासकैरथ पुटेद्यवचूर्णलिप्तम् ।
गोलं लघुः प्रभवति ग्रहणीकपाटो-
गुञ्जामितो मधुयुतो दधियुक्तपथ्यम्

र श, ग्रहण्याम ।

भाषा—शुद्धपारा, अभ्रक, सोनामाखी, कौडी, लोह, हरिताल इनसबकीभस्में तीन २ भाग, गन्धक, अतीस येएकएकभागलेकर कूटकपडछान कर नागरमोथा, अतीस, इन्द्रजव, बेलगिरी, वला, भंगरा, सुगन्धवाला, इनप्रत्येककेस्वरस अथवा काढे की २१भावनाएदेकर भागरेकेरससे ७ नमक, नीम, वन्दाल, मोचरस इनकी एकएकभावनादेकर गोलावनालेना फिरउसपर जवका आटा १ अङ्गुल- मोटालगाकर अग्निमे सेकना, जव खूब सिककर वाटी फटजाय तव दवाको निकालकर घोटकर १-१ रत्तिकीगोलियेंवनाकर मधुकेसाथदेना औरपथ्यमे दहीभातदेनेसे तमामसग्रहणी दूरहोतीहै ॥ ५३० ॥

### ५३१ ग्रहणीकपाटो रसः ( स्वल्पः ) २४

दरदं गन्धपाषाणं तुगाक्षीर्यहिफेनकम् ।
तथा वराटिकाभस्म सर्वं क्षीरेण मर्दयेत् ॥
रक्तिकायुग्ममानेन छायाशुष्कां वटीं चरेत् ।
ग्रहणीं विविधां हन्ति रक्तातीसारमुल्बणम् ॥

भै र, र सु, रक्तातिसारे ।

भाषा—शुद्धशिंगरिफ, गन्धक, वंशलोचन, अफीम, कौडीभस्म, येसव समभागलेकर दूधसे एकदोरोज मर्दनकर दोदोरत्तीकीगोलियेंवनाकर छाया- मेसुखाकररखछाडे । इनमेसे १-१ गोलीसुबहशाम ग्रहणीहरानुपानकेसाथदेनेसे यह सवप्रकारकेग्रहणी- रोगकोदूर करताहै ॥ ५३१ ॥

### ५३२ग्रहणीकपाटोरसः(जातीफलरसः)२५

पारदाभ्रकसिन्दूरं विषं जातीफलं तथा ।
कुटजस्य च बीजानि धूर्तबीजानि टङ्कणम् ॥
व्योषमुस्ताभयाचूतफलबीजं तथैव च ।
बिल्वमातङ्गबीजानि दाडिमारलुजीरकैः ॥
एतानि समभागानि निःक्षिपेत्खल्वमध्यतः ।
कपित्थस्वरसेनैव मर्दयेच्छ्लक्ष्णचूर्णकम् ॥
गुञ्जामात्रप्रमाणेन वटकान् कारयेद्भिषक् ।
एवं कुटजमूलत्वक्स्वरसं च प्रयोजयेत् ॥
आमग्रहणिकां हत्वा कुरुते दीपनं परम् ।
तक्रेण मधुना चैव रक्तग्रहणिकां जयेत् ॥
शुण्ठीकषायसंयुक्तमतिसारं निवारयेत् ।
सविशेषानुपानैश्च ग्रहणीषु प्रयोजयेत् ॥

र क यो, र सं, र कौ ( ज्ञा० ), र सु, भै र., ध, र. च, । ग्रहण्यधिकारे ।

टि०--भै र, र सु, व, र च ,रसेन्द्रसारसंग्रहेच 'विषं जातीफलं' 'इत्यस्यस्थाने' गन्धजातीफलमिति'पाठो दृश्यते भावनाया कपित्थस्थाने विजया गृहीता, उभयभावनाया न कापिक्षति । 'दाडिमारलुजीरक' मित्यस्य स्थाने दाडिमीफल विल्वकमत्रापिदाडिमीफलारलुविल्वजीरकाणा सर्वेषामपि योगे गुणवृद्धिरेव । उक्तग्रन्थेषु नामच जातीफलरस इति ।

भाषा—शुद्धपारा, अभ्रकभस्म, रससिन्दूर, शुद्धवछनाग, जायफल, इन्द्रजव, शुद्धधतूरेके- वीज, भुनाहुआसुहागा, त्रिकटु, नागरमोथा, हर्रे, आमकीमज्जा, बेलगिरी, अजमोद अथवागज- पीपल, अनारऔरअरलूकीछाल तथाजीरायेसव सम- भागलेकर कूटकपडछानकर कैथकेफलकेरससे एक- दोदिनमर्दनकर एकएकरत्तीकीगोलियें वनाकररखछोडे इसमेसेएकएकगोली कुरैयाकीजड़कीछालकेरससे देने- से आमग्रहणीनष्टहोकर अग्निप्रदीप्तहोताहै । दहीऔर- मधुकेसाथ देनेसे रक्तग्रहणीको दूरकरताहै । जैसीजहा योग्यताहो वैसाअनुपान योजितकरे ॥ ५३२ ॥

### ५३३ ग्रहणीकपाटो रसः ( षड्विंशः )

तुल्यंजातिफलं विशोधितरसं व्योषामृतं गन्धकं
सम्पिष्टं सहकारकोमलफलद्रावैश्च गुञ्जामितम् ।
नाम्नाऽसौग्रहणीकपाटउदितः श्रीकालदेवादृतः
सर्वांश्च ग्रहणीगदान्बहुविधानशोस्यसौ नाशयेत्

वै. चि, ग्रहण्यधिकारे ।

भाषा—जायफल, शुद्धपारा, गन्धक, विषऔर त्रिकटु, येसब समभागलेकर पहिलेपारेऔरगन्धककी

कज्जलीकरलेवे फिरसवचीजोंके चूर्णकोमिलाकर आमकेकच्चेफलोके रससेकईबारभावनादेकर १-१ रत्तीकीगोलियें बनाकररखछोड़े । इसमेसे १-१ गोली ग्रहणीहरानुपानकेसाथदेनेसे सबतरहकीग्रहणी, अतिसारऔरबवासीर इनसबको यह दूरकरताहै ॥५२३॥

**५२४ ग्रहणीकपाटो रसः ( ससविंशः )**

**रालाजमोदाजन्तुघ्नमोचभृङ्गककेसरम् ।**
**जातीपत्रीफलं नागं हंसपाकसमन्वितम् ।**
**भक्षयेत्सर्वरोगेषुसर्वातीसारनाशनम् २१५७ ॥**

रससारसंग्रहे, ग्रहण्याम् ।

भाषा—सफेदराल, अजमोद, विडङ्ग, मोचरस, भगरा, केसर, जायफळ, जावित्री, नागभस्म, शिंगरिफ येसबसमभागलेकर भागरेहकेरससे १-२ रोजघोटकर एकएकमाशेकीगोलियें बनाकररखछोड़े । इसमेसे १-१ गोलीग्रहणीहरानुपानकेसाथ देनेसे सबप्रकारका ग्रहणीरोगदूरहो ॥ ५२४ ॥

**५२५ ग्रहणीगजकेसरी रसः ( प्रथमः )**

**गन्धं पारदमभ्रकञ्च दरदं लोहञ्च जातीफलं,**
**बिल्वंमोचरसंविषंप्रतिविषं व्योषं तथा धातकीम्**
**भङ्गामप्यभयां कपित्थजलदौदीप्यानलौ दाडिमं**
**टङ्काद्भस्म कलिङ्गकं कनकजंबीजञ्च यक्षेक्षणम्**
**एततुर्यमफेनमेतदखिलं सम्मर्द्य सञ्चूर्णये-**
**द्धत्तूरच्छदजे रसैश्च मतिमान्कुर्यान्मरीचाकृतिम्**
**दत्ता सा ग्रहणीगदं सरुधिरं सामं सशूलं चिरातीसारंविनिहन्तिजूर्तिसहितांतीव्रां विसूचीमपि**
**दुःसाध्यामपि विम्बिशीं परिहरेदुक्तानुपानैरयं,**
**नाम्ना तु ग्रहणीमतङ्गजमदध्वंसीभकण्ठीरवः**

वै. र., नि. र., यो. र, रसायनसं., वै. चि, वृ यो. त., र. चं., चि. र भ, ग्रहण्याम् ।

भाषा—शुद्धपारा, शुद्धगन्धक, अभ्रकभस्म, शुद्धशिंगरिफ, लोहभस्म, जायफल, वेलगिरी, मोचरस, शुद्धवछनाग, अतीस, त्रिकुटु, धावडीकेफूल, हरडे, भाग, कैथकीमज्जा, नागरमोथा अजवाइन, चित्रक, अनारकेबीज, सुहागा, इन्द्रजव, शुद्धधतूरेके बीज, कंजाकीमज्जा येसबसमभाग, इनसबसे चतुर्थांश अफीमदेकर सबकोकूटकपडछानकर धतूरेकेपत्तोंकेरससे १-२ रोज मर्दनकर मरिचबराबरगोलियेंबनाकर रखछोड़े । इसमेसे सुबहशामएकएकगोली ग्रहणीहरानुपानकेसाथदेनेसे रुधिरकेसाथ सामसंग्रहणी औरशूलसहितअतिसार, ज्वर, भयंकरहैजा, दुःसाध्यप्रवाहिका इनसबको यह बहुतशीघ्रदूरकरताहै ॥ ५२५ ॥

**५२६ ग्रहणीगजकेसरी रसः ( द्वितीयः )**

**रसं गन्धं विषं व्योषं टङ्कणं लोहभस्म च ।**
**अजमोदाहिफेनौ च सर्वतुल्यं मृताभ्रकम् ॥**
**चित्रकस्य कषायेण मर्दयेद्याममात्रकम् ।**
**मरिचाभां वटीं कृत्वा खादेदेकां जयेदसौ ॥**
**चतुर्विधां च ग्रहणीं रहस्यं तदिदं स्मृतम् ॥**

वृ यो त, र कौ, रसायनस., ग्रहण्याम् ।

भाषा—शुद्धपारा, गन्धक, वछनाग, त्रिकुटु, भुनासुहागा, लोहभस्म, अजमोद, अफीम, येसबसमभाग, इनसबकी बराबर अभ्रकभस्मलेकर सबको इकट्ठेकर चित्रककेरससे १ पहरघोटकर मरिचबराबर गोलियेबनाकर रखछोडे । इसमेसे एकएकगोली ग्रहणीहरानुपानकेसाथ देनेसे चारप्रकारकी संग्रहणीको यह दूरकरताहै ॥ ५२६ ॥

**५२७ ग्रहणीगजकेसरी रसः ( तृतीयः )**

**पारदं व्योम गरलं हिङ्गुलुः सुरभि र्बलिः ।**
**आयसं टङ्कणश्चैव धूर्तबीजं सवत्सकम् ॥**
**व्योषं चित्रकणाजाजीवयःस्यादग्धभस्म च ।**
**अजमोदा प्रतिविषा कुबेराक्षी तथैव च ॥**
**कपित्थबिल्वपैशाचमेते च समभागिनः ।**
**एतत्सममफेनञ्च धुस्तूररसमर्दितम् ॥२१६४॥**
**वासरं मर्दितं कल्कं मरीचस्य प्रमाणतः ।**
**माक्षिकेण लिहेदेवं शुण्ठीरससमन्वितम् ॥**
**ज्वरातिसारग्रहणीगुल्मशूलमजीर्णकम् ।**
**रक्तातिसारप्रदरं विसूचीपाण्डुरोगनुत् ॥**
**दीपनं कुरुतेऽतीव ग्रहणीगजकेसरी ॥२१६६॥**

व रा., ग्रहण्यधिकारे।

भाषा—शुद्धपारा, गन्धक, शिंगरिफ, वछनाग, अभ्रकभस्म, लोहभस्म, भुनासुहागा, शुद्धधतूरेकेबीज

इन्द्रजव, त्रिकटु, चित्रक, पीपल, जीरा, हरडेकीभस्म, अजमोद, अतीस, कजेकीमज्जा, कैथकीमज्जा, विल्वमज्जा, मोचरस, येप्रत्येकसमभाग, इनसबकी बराबर अफीमलेकर धतूरेकेरसमे १ रोजमर्दनकर मरिचबराबरगोलिये बनाकररखछोडे। इसमेसेएकएकगोली मधुऔरसोंठकेकाढेकेसाथ देनेसे ज्वरातिसार, संग्रहणी, गुल्म, शूल, अजीर्ण, रक्तातिसार, प्रदर, हैजा, पाण्डुरोग, मन्दाग्नि इनसबको यह दूरकरताहै ॥ ५३७ ॥

### ५३८ ग्रहणीगजकेसरीरसः ( चतुर्थः )

रसगन्धकयोः कृत्वा कज्जलीं तुल्यभागयोः।
द्रावयित्वाऽऽयसे पात्रे रसतुल्यं विनिःक्षिपेत्
चराचरभवं भस्म तत्रमाक्षिकसम्भवम्।
गन्धपाषाणसहितं पात्रे लोहमये क्षिपेत् २१६८
तत्काष्ठेन विलोड्याथ निक्षिपेत्कदलीदले।
स्वर्णं समांशकं कृत्वा रसेनार्धांशिकं क्षिपेत् ॥
चराचरभवं भस्म गन्धपाषाणसाधितम्।
तत्काष्ठेन विलोड्याथ निक्षिपेत्कदलीदले ॥
तत आच्छाद्य सञ्चूर्ण्य निधायाऽऽयसभाजने।
अक्षमात्रं क्षिपेद्भस्म तत्र माक्षिकसम्भवम् ॥
सम्यङ् निश्चन्द्रतां नीतं व्योमभस्म पलोन्मितम्।
विषं विषाश्च गान्धारीं मोचसारं सजीरकम् ॥
सर्वं समांशकं कृत्वा रसेनार्धांशतः क्षिपेत्।
सर्वमेतन्मर्दयित्वा भावयेदतियत्नतः॥२१७३॥
जयन्त्या च महाराष्ट्र्या गजाङ्क्रिन्याऽश्वगन्धया।
पञ्चकोलकषायैश्च कुर्याच्चूर्णं ततः परम् २१७४
इति सिद्धो रसः सोऽयं ग्रहणीगजकेसरी।
नामतो नन्दिना प्रोक्तः कर्मतश्च सुधानिधिः ॥
वल्लेन प्रमितश्चायं रसः शुण्ठ्या घृताक्तया।
सेवितो ग्रहणीं हन्ति सत्सङ्ग इव विग्रहम् २१७६
पथ्यमत्र प्रदातव्यं स्वल्पाज्यं दधितक्रयुक्।
हितं मितञ्च विशदं लघुग्राहि रुचिप्रदम् २१७७
पाचनो दीपनोऽत्यर्थमामघ्नो रुचिकारकः।
तत्तदौषधयोगेन सर्वातीसारनाशनः ॥
ग्रघ्नात्यपिमलं शीघ्रं नाऽऽध्मानं कुरुते नृणाम्

र. र. स., र. र. का., ग्रहणीरोगे।

टि०— अत्र रसे पाठोऽपभ्रष्टस्तदनुवादकर्त्रा रसरत्नकौमुदीकारेणापि पथान्तरे निवद्धो भ्रमवारणाय। पर तत्र स्वयमपि भ्रमगह्वरे निपत्य द्वितीया स्वर्णपर्पटी परित्यक्ता,अत्र पर्पटीद्वयसम्मेलनेनायं रस सम्पादितस्तत्र प्रथमारसपर्पटी--द्वितीया तु स्वर्णपर्पट्यस्ति, 'स्वर्णं समांशकं कृत्वा रसेनार्धांशिकं क्षिपे'दित्यस्य स्थाने 'सर्वं समांशकं कृत्वा' इति लेखकादिप्रमादात्पाठ सञ्जात.। स एव भ्रमकारणमिति रहस्यम्।

भाषा—शुद्धपारा औरगन्धक एकएकतोला लेकर कज्जलीबनाकर कडाहीमेथोड़ाघीदेकरगलावे, गलनेपर कौडीकीभस्म, शुद्धमाक्षिकये प्रत्येकपारेकी बराबरडालकरमिलादे, जबएकजीवहोजाय तब भैंसके ताजेगोबरपर रक्खेहुए केलेकेपत्रपर डालकर दूसरा केलेकापत्तादेकर ऊपरगोबररखदे औरइसकीपपड़िया निकालकररखछोडे। फिर १ तोलेपारेमे एकतोला सुवर्णभस्म अथवासोनेकेवर्क डालकर एकदोरोजमर्दनकर पारेकीबराबर गन्धकडालकर कज्जलीबनाले, इसको पहलेकीतरह कड़ाहीमेगलाकर उसमेपारेसे आधीकौड़ीकीभस्म डालकर लकडीसेचलावे जबएकजीवहोजाय तबपहिलेकीतरह इसकीपर्पटीबनाले। स्वाङ्गशीतलहोनेपर इसेनिकालकर पूर्वपर्पटीकेसाथ खरलकर सोनामाखीभस्म १ तो०, निश्चन्द्रअभ्रकभस्म ४ तो०, शुद्धबछनाग, अतीस, हींग, मोचरस, जीरा, येप्रत्येक आधा तोलालेकर सबको- इकट्ठेखरलकर जैत, मराठी, सफेदगुञ्जा, असगन्ध, पञ्चकोलइनकेकाथोंसे एकएकदिन भावनादेकर तीनतीनरत्तीकीगोलिये बनाकररखले यह **ग्रहणीगजकेसरी** रस सिद्धहुआ इसकीएकएकगोली घीमेसिकीहुई सोठकेचूर्णकेसाथदेनेसे यहग्रहणीको इसतरहनष्टकरताहै जैसेअच्छेपुरुषोकासङ्ग लड़ाईको शान्तकरताहै। इसमेपथ्य थोड़ाघीऔरदही छाछयुक्तहितऔरमित, हलका, रुचिकारकअन्न देनाचाहिये। यह पाचनऔरदीपनहै। अत्यन्तरुचिकारकहै। औरअनुपान-

भेदसे समस्तअतिसारोको दूरकरताहुआभी आध्मानको नहींकरताहै ॥ ५३८ ॥

**५३९ ग्रहणीगजकेसरीरसः ( पञ्चमः )**

शुद्धसूतं विषं गन्धं टङ्कणं लोहभस्मकम् ।
जातीफलं धातकी च मरालं चित्रमूलकम् ॥
जीरकं नागरं सिन्धुश्रूतवीजञ्च पिप्पली ।
मोचसारं विल्वमज्जा मुस्ता चातिविषं समम् ॥
सप्तभागमफेनञ्च सर्वतुल्यं मृताभ्रकम् ।
बदरीबीजतुल्यन्तु खादेद्वह्निकरं परम् ॥
अनुपानविशेषेण ग्रहणीञ्च चिरन्तनाम् ।
सर्वाजीर्णं प्रशमयेदनुपानन्तु माक्षिकम् ॥
गजकेसरिको नाम ग्रहणीगदनाशकः २१८२

वै चि , ग्रहण्यधिकारे ।

**भाषा**—शुद्धपारा, गन्धक औरवछनाग, भुनासुहागा, लोहभस्म, जायफल, धावड़ीकेफूल, शिंगरिफ, चित्रकमूल, जीरा, सोठ, सेंधानमक, आमकीमज्जा, पीपल, मोचरस, बिल्वमज्जा, नागरमोथा, अतीस, येसवसमभाग, अफीम७भाग, अभ्रकभस्मसबकीबराबरलेकर सबकोघोटकर गुञ्जाकीबराबर गोलियें बनाकर रखछोड़े । इसमेंसेएकएकगोलीमधुकेसाथ अथवा ग्रहणीरोगहरानुपानकेसाथ देनेसे यह बहुतपुरानी संग्रहणी औरअजीर्णको दूरकर समस्तप्रमेह, धातुक्षय, वातरोग सन्निपातइनसबको नष्टकरता है । और उत्तमवाजीकरणहै ॥ ५३९ ॥

**५४० ग्रहणीगजेन्द्रवटिका**

रसगन्धकलौहानि शङ्खटङ्कणरामठम् ।
शटी तालीसमुस्तानि धान्यजीरकसैन्धवम् ॥
धातक्यतिविषा शुण्ठी गृहधूमो हरीतकी ।
तेजःपत्रं च भल्लातं जातीफललवङ्गकम् २१८४
त्वगेलावालुकं विल्वं मेथी शक्राशनं समम् ।
छागीदुग्धेन वटिका रसवैद्येन कारिता ॥
गहनानन्दनाथेन भाषितेयं रसायने ।
वटी गजेन्द्रसंज्ञेयं श्रीमता लोकरक्षणे ॥
ग्रहणीं विविधां हन्ति ज्वरातीसारनाशिनी ।
शूलगुल्माम्लपित्तानि कामलाञ्च हलीमकम् ॥
बलवर्णाग्निजननी सेविता च चिरायुषे ॥
कण्डूं कुष्ठं विसर्पञ्च गुदभ्रंशं कृमिञ्जयेत् ॥
माषद्वयां वटीं खादेच्छागीदुग्धानुपानतः ॥
वयोऽग्निबलमावीक्ष्य युक्त्या वा त्रुटिवर्द्धनम् ॥

र स , र. च , र र., र सु , भै र , ग्रहण्याम् ।

**भाषा**—शुद्धपारा, गन्धक, लोहभस्म, शङ्खभस्म, भुनासुहागाऔरहींग, कचूर, तालीसपत्र, नागरमोथा, धनिया, जीरा, सेंधानमक, धावड़ीकेफूल, अतीस, सोंठ, घरकाधूआ, हरैं, पत्रज, भिलावा, जायफल, लौंग, तज, गेहुंला, बेलगिरी, मेथी, गाजाअथवा भाग येसब समभागलेकर कूटकपडछानकर बकरीकेदूधसे मर्दनकर २ माशेकी गोलियें बनाकररखछोड़े । इसमेंसे एकएकगोली अथवा अवस्थाऔरअग्निबलदेखकर मात्राकायमकर देनेसे नानातरहकी संग्रहणी, ज्वरातिसार, शूल, गुल्म, अम्लपित्त, कामला, हलीमक, बलवर्णाग्निनाश, कण्डू, कुष्ठ, विसर्प, गुदभ्रंश, कृमि, इनसबको यह दूरकरतीहै । अनुपान बकरीकादूधहै ॥ ५४० ॥

**५४१ ग्रहणीगुटिका**

चतुर्गुणा धूर्तवधूश्च विश्वा
तीक्ष्णंतदर्धेन रसोऽर्धमस्य ।
कपित्थतोयेन चणप्रमाणा
गुटी ग्रहण्यां ससिता हिताऽसौ२१९०॥

र ( मा ) ग्रहण्याम् ।

**भाषा**—भागऔरसोंठ४—४तोले, लोहभस्म २ तोले, पारदभस्मअथवा रससिन्दूर १तो० इनसबकोकैथके रससे ३—४रोजमर्दनकर चनेप्रमाणगोली बनाकर रखछोड़े । इसमेंसे १—१गोलीशक्करकेसाथदेनेसे यह तमामसग्रहणीकेरोगोको दूरकरताहै ॥ ५४१ ॥

**५४२ ग्रहणीघ्नो रसः**

हेमभस्म रसभस्मकं समं
मौक्तिकं कुरुततत्समानकम् ।
लोहटङ्कणमृताभ्रकशङ्ख—

तुल्यभागमिलितं सकलेन ॥२१९१॥
गन्धकोऽपि निखिलेन समांशो
वासरञ्च विजयाविमर्दितः ।
तस्य गोलकविधिं रचयित्वा
चीरमृल्लवणकैः परिलिप्य ॥ २१९२॥
सम्पचेल्लवणयन्त्रमध्यगं
स्वाङ्गशीतमपि चोद्धरेद्द्रुतम् ।
धातकीकनकभृङ्गिकाविषा
शक्रमूलकरसैः परिमर्द्य ॥ २१९३ ॥
द्वित्रिपञ्चघनविश्वसम्मितो
जायते रसवरो ग्रहणीघ्नः ।
वल्लयुग्ममशितोऽम्बुजविश्वा-
शक्रचित्रकमदातिविषाभिः ॥२१९४॥
पथ्यं हितं स्याद्ग्रहणीकपाटव-
द्भृतञ्च योज्यं बृहदग्निसञ्ज्ञकम् ।
शुण्ठीघृतं शीतलचन्दनादिभि-
र्युक्तं घृतं वापि शतावरीघृतम् २१९५

र., ग्रहण्याम् ।

भाषा—सुवर्णभस्म, पारदभस्म १-१तोला, मोती २तोला, शुद्धगन्धक ८तोला, इनसबकोभागकेरससे एकरोज़मर्दनकर इसका १गोलाबनाकर उस परवरावर प्रमाणसे कपडेलपेटकर ऊपरदोतीनकपड़ मिट्टी देकर नमकऔरमिट्टीमे कपड़ेकोभिगोकर लपेटदे फिरसुखाकर लवणयन्त्रमे एकरोज़की आच देके स्वाङ्गशीतलहोनेपर धावड़ीकेफूल, धतूरा, भगरा, अतीस, कुरैयाकीजड, इनप्रत्येकके स्वरसोंसे क्रमसे २-३-५-२-१ भावनाएंदेकर ६-६ रत्तीकी गोलियेबनाकररखछोडे । इसमेसे एकएकगोली कमल, सोंठ, कुरैया, चित्रक, भागऔरअतीस इनके चूर्णकेसाथदेनेसे समस्तग्रहणीविकारनष्टहोवे। ग्रहणीवालेको अग्निघृत, शुण्ठीघृत, चन्दनादिघृतऔर शतावरीघृत इनकाघृतकेस्थानमेंउपयोगकरना । इन घृतोंकापाठ चक्रदत्तमेंहै वहनीचेदियागयाहै । चन्दनादितैलकीदवाओंसेघृतपकालेना ।

## अग्निघृतम्

पिप्पलीपिप्पलीमूल चित्रको हस्तिपिप्पली ।
हिङ्गु चव्याजमोदे च पञ्चैव लवणानि च ॥
द्वौ क्षारौ हपुषा चैव दद्यादर्धपलोन्मितम् ।
दधिकाञ्जिकशुक्तानि स्नेहमात्रासमानि च ॥
आर्द्रकस्वरसप्रस्थ घृतप्रस्थ विपाचयेत् ॥ इति ॥

## शुण्ठीघृतम्

विश्वौषधस्य गर्भेण दशमूलजले शृतम् ॥
घृत निहन्यात् श्वयथु ग्रहणीं सामतामयम् ॥

## शतावरीघृतम्

शतावरीदाडिमतिन्तिडीकं
काकोलिमेदे मधुकं विदारीम् ।
पिष्ट्वा च मूल फलपूरकस्य
घृत पचेत्क्षीरचतुर्गुण ज्ञः ॥
कासज्वराऽऽनाहविबन्धशूल
तद्रक्तपित्त च घृत निहन्यात् ॥ ५४२ ॥

## ५४३ ग्रहणीमदवारणसिंहोरसः

सुरभिपारदहिङ्गुलचित्रकान्
गगनभर्जितटङ्कणजातिजान् ।
कनकबीजमथोतिविषाकटु-
त्रयहरीतकिभस्मसुदीप्यकान् ॥२१९६
गरलबिल्वकलिङ्गकपित्थका-
म्बलदमोचकदाडिमधातकीः ।
जलदशाल्मलिपिच्छयुतान्समान्
कनकसाम्यमफेनमिदं दृढम् ॥२१९७
कनकपत्ररसैः परिमर्दये-
न्मरिचमानवटी मधुसंयुता ।
विनिहरेद्ग्रहणीगदमुत्कटं
ज्वरयुता मसतीश्च विसूचिकाम् २१९८
अनलमान्द्यविबन्धकशूलजित्
सकलपाण्डुहरस्त्वथ गुल्महा ।
सरुधिराममतीवसमुत्कटं
ग्रहणिकामदवारणकेसरी ॥२१९९ ॥

नि. र, र. सु, वै चि, व. रा, र क यो, ग्रहण्याम् ।

भाषा—शुद्धगन्धक, पारा, शिगरिफ, चित्रक, अभ्रकभस्म, भुनासुहागा, जायफल, शुद्धधतूरेके बीज, अतीस, त्रिकटु, हर्रैकीभस्म, अजवाइन, शुद्धवछनाग, बेलगिरी, इन्द्रजव, कैथकीगिरी, खस, केलेकाकन्द, अनारकेदाने, अथवाछाल, धावड़ीके फूल अथवाछाल, नागरमोथा, मोचरस, अफीम ये सबसमभागलेकर कूटकपडछानकर धतूरेकेपत्तोंके रससे एकरोज़मर्दनकर कालीमिरचबराबरगोलियें बनाकररखछोड़े। इसमेंसेएकएकगोली मधुकेसाथदेनेसे एकदमबढाहुआज्वरसहितग्रहणीरोग, भयंकरहैजा, मन्दाग्नि, शूल, विबन्ध, गुल्म, उत्कटपाण्डुरोग, रुधिरयुक्तआमातिसार, इनसबको यह नष्टकरताहै ॥ ५४३ ॥

### ५४४ ग्रहणीवज्रकपाटो रसः ( प्रथमः )

मृतसूताभ्रकं गन्धं यवक्षारं सुटङ्कणम् ।
अग्निमन्थं वचां कुर्यात्सूततुल्यानिमान्सुधीः ॥
ततो जयन्तीजम्बीरभृङ्गद्रावै र्विमर्दयेत् ।
त्रिवासरं ततो गोलं कृत्वा संशोष्य धारयेत् ॥
लोहपात्रे शरावञ्च दत्त्वोपरि विमुद्रयेत् ।
अधो वह्निं शनैः कुर्याद्यामार्धं तत उद्धरेत् ॥
रसतुल्यां प्रतिविषां दद्यान्मोचरसं तथा ।
कपित्थविजयाद्रावै र्भावयेत्सप्तधा भिषक् ॥
धातकीन्द्रयवा मुस्ता लोध्रं बिल्वं गुडूचिका ।
एतद्रसै र्भावयित्वा वेलैकैकं च शोषयेत् २२०४
रसं वज्रकपाटाख्यं शाणैकं मधुना लिहेत् ।
वह्निं शुण्ठीं विडं बिल्वं लवणं चूर्णयेत्समम् ॥
पिबेदुष्णाम्बुनाचानुसर्वजां ग्रहणीञ्जयेत्२२०५

यो. च, शा, र प्र, र का, र क., र. म, चि.- र, वै द, व रा, टो, र कौ, र चि, र स, वै चि., रसायनस, यो म, र प्र सु, र को, र म मा., र. र स, नि र, र सु, र र दी, चि र., ग्रहण्याम् । रसेन्द्रसारसङ्ग्रहे भावनाया कपित्थस्थाने शाल्मली नियोजिता । उभयोरपि भावनाया न कापि हानि ।

भाषा—पारदभस्म, अभ्रकभस्म, शुद्धगन्धक, यवक्षार, भुनासुहागा, अरणी, वच, येसब समभाग लेकर पहिलेपारदऔरगन्धककी कज्जलीकर फिर सबचीजें मिलाकर जैत, जंभीरी, भागरा, इनप्रत्येक-केरसोंसे एकएकरोज़मर्दनकर गोलाबनाकर सुखालेना । फिरलोहेकीकडाहीमे रखकर ऊपरसे ढक्कन रख उसकीसन्धि गुड़चूनेसे बन्दकर नीचे आधे पहर मन्दमन्दआचदेना । स्वाङ्गशीतलहोनेपर निकालकर सबकीबराबर अतीसऔर मोचरस डालकर कैथ औरभागकेरसोंसे सातसातभावनाए देकर धावड़ीकेफूलअथवाछाल, इद्रजव, नागरमोथा, लोध, बेलगिरी गुडूची इनप्रत्येककेरसोंसे एकएक भावनादेकर चारचारमाशेकीगोलियें बनाकररखछोड़े अथवासुखाकर चूर्णहीरक्खे । इसमेंसे १गोलीअथवा ४माशेचूर्ण मधुकेसाथ चाटकर ऊपरसे चित्रक, सोंठ, विडङ्ग, बेलगिरी, सेधानमक, येसबबराबर चूर्णकर इनमेंसे आधातोलाचूर्ण गरमपानीकेसाथ पीनेसे सबतरहकी ग्रहणीदूर होतीहै ॥ ५४४ ॥

### ५४५ ग्रहणीवज्रकपाटोरसः ( द्वितीयः )

पारदं गन्धकञ्चैव नागफेनं समोचकम् ।
त्रिकटुं त्रिफलाञ्चैव सममेकत्र कारयेत्२२०६
भङ्गाभृङ्गद्रवैश्चैतद्भावयेच्च पुनःपुनः ।
रक्तित्रयं ततश्चास्य मधुना सह भक्षयेत् ॥
असाध्यां ग्रहणीं हन्ति रसोवज्रकपाटकः२२०७

र स, र च, ग्रहण्याम् ।

भाषा—शुद्धपारा, गन्धक, अफीम, मोचरस, त्रिकटु, त्रिफला, येसबसमभागलेकर कूटकपडछान कर भागऔरभागराके रसोंसे भावनायेदेकर ३-३ रत्तीकीगोलियेबनाकररखछोड़े । इनमेंसे एकएकगोली मधुकेसाथदेनेसे असाध्यसङ्ग्रहणीभी नष्टहोतीहै ॥

### ५४६ ग्रहणीशार्दूलचूर्णम्

रसगन्धकलोहाभ्रं हिङ्गुलवणपञ्चकम् ।
हरिद्रे कुष्ठकञ्चैव वचामुस्तविडङ्गकम् २२०८॥

त्रिकटुत्रिफलाचित्रमजमोदायवानिका।
गजोपकुल्याक्षाराणि तथैव गृहधूमकम् २२०९
एतेषां कार्षिकश्चूर्णं विजयाचूर्णकं समम्।
माषद्वयमिदं चूर्णं शालितण्डुलवारिणा २२१०
भक्षयेत्प्रातरुत्थाय ग्रहणीगदनाशनम्॥
अग्निश्च कुरुते दीप्तं वडवानलसन्निभम्२२११
सर्वातिसारशमनं तृष्णाज्वरविनाशनम्॥
पक्कापक्कमतीसारं नानावर्णं सवेदनम् २२१२
आमातिसारमखिलं विशेषाच्छ्वयथुञ्जयेत्।
असाध्यां ग्रहणीं हन्ति पाण्डुप्लीहचिरज्वरान्॥
चूर्णं ग्रहणिशार्दूलं सर्वरोगकुलान्तकम्२२१३

वै. क., ग्रहण्याम

भाषा—शुद्धपारा, गन्धक, लोहभस्म, अभ्रकभस्म, भुनाहींग, पाचोनमक, हल्दी, दारुहल्दी, कुठ, वच, नागरमोथा, विडङ्ग, त्रिकटु, त्रिफला, चित्रक, अजमोद, अजवाइन, गजपीपल, यवक्षार, सज्जी, सुहागा, घरकाधूआ येसब १—१ तोला, भाग-सवकीवरावर लेकर सवकाबारीकचूर्णकर रखछोडे। इसमेसे २ माशाचूर्ण चावलकेधोवनकेसाथ सुवहदेनेसे ग्रहणीरोगको नष्टकर वडवानलकीतरह अग्निको दीप्तकरताहै। समस्तअतिसार, अधिकप्यास, ज्वर, पक्कअथवाअपक्कनानारगकाअतिसार, आमातिसार, विशेषकरशोथ, असाध्यग्रहणी, पाण्डु, प्लीह, जीर्णज्वरइनसवको यह दूरकरताहै॥ ५४६॥

### ५४७ ग्रहणीशार्दूलरसः

रसगन्धकयोश्चापि कर्षमेकं सुशोधितम्।
द्वयोः कज्जलिकां कृत्वा हाटकं षोडशांशतः॥
लवङ्गं निम्बपत्रञ्च जातीकोषफले तथा।
एतेषां कर्षचूर्णेन सूक्ष्मैलां सहमेलयेत्॥
मुक्तागृहे तु संस्थाप्य पुटपाकेन साधयेत्।
गुञ्जापञ्चप्रमाणेन प्रत्यहं भक्षयेन्नरः २२१६॥
सूतिकां ग्रहणीरोगं हरत्येष सुनिश्चितम्।
अर्शोघ्नो दीपनश्चैव बलपुष्टिप्रसाधनः॥
कासश्वासातिसारघ्नो बलवीर्यकरः परः।
दुर्वारं ग्रहणीरोगं चामशूलञ्च नाशयेत्॥
संसारलोकरक्षार्थं पुरा रुद्रेण भाषितः २२१८

र सं, र, चं, ग्रहण्याम्।

टि०—अस्मिन्रसे सिन्धुवारदलप्रक्षेपणेन सर्वाङ्गसुन्दर इति नाम सिन्धुवारदलसहितस्य, अथचसुवर्णरहितस्य महागन्धकमिति नाम।

भाषा—शुद्धपाराऔरगन्धकसमभागलेकर दोनोकी नीलवर्णकज्जलीकर सोलहवा हिस्सा सुवर्णभस्म डालकर लौग, निम्बपत्र, जायफल, जावित्रीऔर-इलायची एकएकतोला लेकर निम्बपत्रोंकेस्वरस अथवा दाडिमकेरससे खूबघोटकर मोतीकीसीपोंके अन्दरसम्पुटकर कपड़मिट्टीदेकर पुटपाकविधिसे उसको इसतरहपकावे जिसमेकि दवानजले, स्वाङ्गशीतलहोनेपर इसकोनिकालकर औरखूबघोटकर ५-५ रत्तीकीगोलिये वनाकररखछोड़े। इसमेसे एकएकगोली तत्तद्रोगहरानुपानकेसाथदेनेसे यह सूतिकारोग, ग्रहणी, ववासीर, मन्दाग्नि, बलऔरपुष्टिकाह्रास, कास, श्वास, अतिसार, बलवीर्यकीक्षीणता, औरआमशूल इनसवको वहुतशीघ्रनष्टकरताहै॥ ५४७॥

### ५४८ ग्रहणीशार्दूलवटिका

जातीफलं देवपुष्पमजाजीकुष्ठटङ्कणम्।
विडं त्वगेला धुत्तूरं फणिफेनं समं समम्॥
प्रसारिणी रसेनैव सम्मर्द्य वटिका कृता।
यथादोषानुपानेन सेविता ग्रहणीं हरेत्॥
नानावर्णमतीसारं दारुणाञ्च प्रवाहिकाम्।
मता ग्रहणीशार्दूलवटिका ग्राहिणी परम्॥

भै र, र. सु, ग्रहण्याम्।

भाषा—जायफल, लौग, जीरा, कुठ, भुनासुहागा, सचल, तज, इलायची, शुद्धधतूरेकेवीज और अफीम येसवसमभाग लेकर प्रसारिणीके रससे मर्दनकर एकएकरत्तीकीगोलिये वनाकर उचितानुपानके साथ देनेसे नानातरहके अतिसारऔरभीषणप्रवाहिका दूरहोतीहै॥ ५४८॥

### ५४९ ग्रहणीसेतू रसः ( प्रथमः )

रसं गन्धं विषं मोचं समं सर्वं सखर्परम् ।
मर्द्यं विल्वदलद्रावैर्भावयेदेकविंशतिम् ॥
मुस्ताचातिविषा शृङ्गी द्रावैः सप्त पृथक्पृथक् ।
मात्रा वल्लद्वयश्चैव घृतश्च पलमानकम् ॥
पाययित्वा समुद्रिक्तग्रहणीरोगनाशनम् ।
आमरक्तातिसारस्य दुर्निवारस्य शान्तये ॥
रसोऽयं ग्रहणीसेतु रसाध्यां साधयेद्रुजम् ।
दध्योदनं सदा पथ्यं शाकश्रीफलवर्जनम् ॥
गुर्वन्नञ्च त्यजेन्नित्यं चणान्नं चैव मापकम् ।
सेवयेदेकमूलानां शाकं कूष्माण्डकं तथा ॥

र शं., ग्रहण्यधिकारे

भाषा—शुद्धपारा, गन्धक, वछनाग, मोचरस, और शुद्धखपरिया येसवसमभागलेकर वेलगिरीकेकाढेसे २१ भावनाए देकर नागरमोथा, अतीस, काकड़ासीगीं इनकेकाढेसे सातसातभावनाएंदेना फिर६-६रत्तीकीगोलिये वनाकर रखलेना, इनमेसे १-१ गोली ४ तोलेघीकेसाथ देनेसे एकदमवढाहुआ सङ्ग्रहणीरोग, आमातिसार, रक्तातिसारइनको यह नष्टकरदेताहै, दही औरभातखानेकोदेना । शाकऔरनारियल भारीअन्न, चना, उड़द, इनको छोड़देवे, एकजड़वालेशाक औरकूष्माण्डदेवे ॥५४९॥

### ५५० ग्रहणीसेतू रसः ( द्वितीयः )

सूतहेमघनलोहरौप्यकं
ताप्यकंगन्धयवजेन्द्रयवाख्यम् ।
शुक्तिशङ्खलघुशङ्खमौक्तिकं
स्वर्जिकार्णवकफं कपर्दिकाम् ॥ २२२७
तुल्यभागमिलितं विमर्दितं
सर्पफेनमपि सूतसमांशम् ।
वासरत्रितयकं जयारसैः
शक्रमूलकरसेनदिनेद्वे ॥
घालकस्य रसतो दिनयुग्मं
वासरं त्वतिविषास्वरसेन ॥ २२२७ ॥
विपकः कामठे यन्त्रे सिद्धिं याति रसेश्वरः ।
ग्रहणीसेतुसञ्ज्ञः स्यात्सर्वसङ्ग्रहणीहरः ॥
अनुपानं जयाक्षौद्रं शाखिरुण्डमधुप्लुतः ।
रक्तस्रुतौ वल्लमात्रो वालबिल्वगुडान्वितः ॥

र०, ग्रहण्याम्

भाषा—शुद्धपारा, स्वर्णभस्म, अभ्रकभस्म, लोहभस्म, रजतभस्म, सोनामाखी, गन्धक, इन्द्रजव, यवक्षार, सीपभस्म, शङ्खभस्म, घोघाभस्म, मोती, सज्जीक्षार, समुद्रफेन, कौड़ीभस्म, अफीम येसबसमभागलेकर सबकोभागकेरसकी ३ औरकुड़ेकीजड़केरससे २, सुगन्धवालाऔरअतीसकेक्वाथसे १-१ भावनादेकर सुखाकर आतशीशीशीमे भरकर चारपहरकीमन्दअग्निसे पकावे । स्वाङ्गशीतलहोनेपर निकालले, इसमेसे ३--३रत्तीभागऔरमधुकेसाथ अथवा शाखिरुण्ड ( हिं० माई. गु० पड़वास ) और मधुके साथ, रक्तातिसारमे वेलगिरी औरगुड़ अथवा वेलगिरीकेमुरब्बेकेसाथदेना ॥ ५५० ॥

### ५५१ ग्रहणीहरो रसः ( चण्डसङ्ग्रहगदैककपाटः ) (प्रथमः )

समाकर्षितो हिङ्गुलुत्थो रसेन्द्र-
स्तथाटङ्कणक्षारगन्धाभ्रयुक्तः ।
समं कोकिलाक्षस्य बीजेन युक्तो
दृढं मर्दितो लोहपात्रे घृताक्ते२२३१ ॥
ततो ढालयेत्पर्पटीं युक्तियुक्तः-
कणाक्षौद्रयुग्द्वन्द्ववल्लो हि भुक्तः ।
महासङ्ग्रहं नाशयत्येप मास
त्रयाद्भूत तापमस्रस्रुतिश्च ॥ २२३२ ॥
अर्शांसि गुल्मानि तथा प्रमेहं
शोपञ्च पाण्डुं जयति प्रसह्य ।
तक्रौदनञ्चास्य हितञ्च पथ्य
मस्यानुपानं कुटजाष्टकञ्च ॥२२३३ ॥
सरक्तग्रहणीरोगे पित्तग्रहणिकागदे ।
सगुडेन श्रीफलेन योज्यः सङ्ग्रहणीहरः ॥

॥ कुटजाष्टकम् ॥

तुलां गृहीत्वा गिरिमल्लिकाया-

सोमं निहन्त्यत्र बहुप्रकारं
सूतीविकारं श्वयथुं समग्रम् ।
कासञ्च पञ्चात्मकमम्लपित्त-
मियं निहन्याद्ग्रहणीं प्रवृद्धाम् ॥७५२॥
अभ्यस्य जीयाद्गुदजानसाध्या-
नामानुबन्धं ह्यतिसारमुग्रम् ।
श्वासं तथा पाण्डुगदं निहन्ति
चिरोद्भवां च ग्रहणीं प्रदुष्टाम् ॥ ७५३
जयेद्भृशं योगशतैरसाध्यां
विवर्जनीया इह दुष्टमत्स्याः ।
मत्स्यास्तथा पाण्डुरवर्णकाश्च
रम्भाफलं मूलमथो दलञ्च ॥ ७५४ ॥
बुधै र्विधेयं न कदाचिदत्र
जातीफलाद्या वटिका च हृद्या ।
यशोऽर्थिनो वैद्यवरस्य विद्या
ह्यनेकसम्भावितमर्त्यलोके ॥
नानाविधव्याधिपयोधिनौका
निर्णाशयेन्मृत्युमति प्रसिद्धा ॥ ७५५ ॥

र. र, र. क, र सु., भै र., ग्रहण्यधिकारे ।

भाषा—शुद्धपारा, गन्धक ४–४ माशे लेकर नीलवर्ण कज्जलीकर जायफल, मोचरस, नागरमोथा भुनासुहागा, अतीस, जीरा, मिर्च, येप्रत्येक ४–४ माशे, शुद्धवछनाग १ माशा सबको कूटकपड़छानकर इकट्ठे मिलाकर वास, आम्र, चन्दन, ऊटकटाला, जलपीपल, इन्द्रायण, गाजा अथवा भांग, कास, जामुन, जैत, अनार, कालाभगरा, पाठा, पीला अथवा सफेद भंगरा, क्रमसे इनप्रत्येकके रसोंसे १–१ भावना देकर बेर बराबर गोलियें बनाकर रखछोडे । इनमेसे १–१ गोली दूध वग़ैरह अनुपानके साथ देनेसे स्त्रियोंका सोमरोग, नानातरहका प्रसूतिरोग, सबप्रकारका शोथ, पाचप्रकारकी खासी अम्लपित्त, वढीहुई ग्रहणी, ववासीर, अतिसार, श्वास, पाण्डु, इनको यह दूर करती है । विगडी हुई जो कि हज़ारो वैद्योकी छोड़ी हुई ग्रहणी है उसको यह नष्ट करती है । खराबमछली तथा सफेद रंगकी मछली, केलेका फल, मूल और पत्ता इनका इसमे किसीतरहभी प्रयोग न होना चाहिये १८२॥

## १८३ जातीफलादिवटी ( तृतीया )

जातीफलार्ककरहाटलवङ्गशुण्ठी-
कङ्कोलकेसरकणा हरिचन्दनश्च ।
एतत्समानमहिफेनमचन्द्रमभ्रं
सर्वैः समं न सहते रतिविन्दुपातम् ॥

र. यो. त, वाजिकरणे । घृतमधुभ्यां वटिका बलमिता ।

भाषा—जायफल, ताम्रभस्म, अक्लकरा, लौंग, सोंठ, कक्कोल ( शीतलचीनी ), केसर, पीपल, सफेद चन्दन समभाग, इनसबकी बराबर अफीम और निश्चन्द्र अभ्रक भस्म लेकर पानवगैरहके रससे घोटकर ३–३ रत्तीकी गोलियें बनाकर रखछोड़े । इनमेसे १–१ गोली रतिसमयसे १ घंटा पहिले लेनेसे यथेष्ट स्तम्भन होता है ॥ १५३ ॥

## १८४ जातीफलादिवटी ( चतुर्थी )

जातीफलं लवङ्गञ्च पिप्पली सैन्धवं तथा ।
शुण्ठी धुत्तूरबीजञ्च दरदं टङ्कणं तथा ॥
समं सर्वं विचूर्ण्याथ जम्भनीरेण मर्दयेत् ।
वटी जातीफलाद्येयमर्शोऽग्निमान्द्यनाशिनी ॥

र स, अर्शोऽधिकारे ।

भाषा—जायफल, लौंग, पीपल, सेंधानमक, सोठ, शुद्धधतूरेके बीज, शिंगरफि, भुनासुहागा येसब बराबर लेकर जभीरीके रसमे मर्दनकर बेर बराबर गोलियें बनाकर रखछोड़े । इनमेसे १–१ गोली तत्तद्रोगहरानुपानके साथ देनेसे बवासीर और मन्दाग्नि नष्ट होती है ॥ १८४ ॥

## १८५ जीरकादिचूर्णम्

जीरकं टङ्कणं मुस्तं पाठाबिल्वं सधान्यकम् ।
बालकं शतपुष्पा च दाडिमं कुटजं तथा ॥
समङ्गा धातकीपुष्पं व्योषञ्चैव त्रिजातकम् ।
मोचरसः कलिङ्गञ्च व्योमगन्धकपारदौ ७६०
यावन्त्येतानि चूर्णानि तावज्जातीफलानि च ।

एतत्प्राशनमात्रेण ग्रहणीं दुस्तराञ्जयेत् ॥७६१
अतिसारं निहन्त्याशु सामं नानाविधं तथा।
कामलां पाण्डुरोगञ्च मन्दाग्निञ्च विशेषतः॥
जीरकाद्यमिदंचूर्णमगस्त्येन प्रकाशितम् ॥७६२

मै र, वै. क., ग्रहण्यधिकारे।

भाषा—जीरा, भुनासुहागा, नागरमोथा, पाठा वेलगिरी, धनिया, सुगन्धवाला, सौंफ, अनारदाना कुरैयाकी छाल, लज्जालु अथवा मजीठ, धावडीके फूल, त्रिकुटु, त्रिजात, मोचरस, इन्द्रजव, अभ्रक भस्म, शुद्धगन्धक और पारा येसब समभाग, सबकी बराबर जायफल डालकर चूर्णकर रखछोड़े। इसमेसे २-२ मासे तत्तद्रोगहरानुपानके साथ देनेसे दुस्तर ग्रहणी और साम अथवा निराम अतिसार, कामला पाण्डुरोग, मन्दाग्नि इनसबको यह दूर करताहै १८५

## १८६ जीरकादिपुटपाकः

जीराहिफेनकरभद्रुमसारगन्ध-,
जातीफलं सुनवदाडिमबीजतोयैः।
पिष्ट्वा तदीयपुटपकमिदं निहन्या-
द्धोढं सुतण्डुलजलैरतिसारमुग्रम् ॥ ७६३ ॥

रसायनस, अतिसारे

भाषा—जीरा, अफीम, अकलकरा, मोचरस, अथवा राल, गन्धक, जायफल, ये सब समभाग लेकर अच्छेपके अनारके रससे पीसकर जातिफलादि पुटपाककीतरह पुटपाक करके यथोचित मात्रासे गोली बनाकर चावलोंके पानीकेसाथ देनेसे घोर अतिसारको यह नष्ट करता है ॥ १८६ ॥

## १८७ जीरकादिमोदकः (प्रथमः)

श्लक्ष्णचूर्णीकृतं जीरं पलाष्टकमितं शुभम्।
तदर्धं विजयाबीजं भर्जितं वस्त्रपूतकम् ॥७६४
अयश्चूर्णं तथा वङ्गमभ्रकं कर्षमानतः।
मधूरिकाञ्च तालीसं जातीकोषफले तथा ७६५
धान्यकं त्रिफला चैव चातुर्जातलवङ्गकम् ॥
शैलेयं चन्दने द्वे च मांसी द्राक्षा शटी तथा॥
टङ्कणं कुन्दुरु यष्टी तुगा कङ्कोलवालकम्।
गाङ्गेरुस्त्रिकटुश्चैव धातकी बिल्वमर्जुनम् ॥७६७
शतपुष्पा देवदारु कर्पूरं सप्रियङ्गुकम्।
जीरकं शाल्मलश्चैव कटुका पद्मनालकम् ७६८
एषां कर्षसमश्चूर्णं गृह्णीयात्कुशलो भिषक्।
शर्करामधुनाज्येन मोदकश्च विनिर्मितम् ॥७६९
खादेत्कर्षसमं तस्य प्रत्यहं प्रातरुत्थितः।
शीततोयानुपानेन सर्वग्रहणिकाञ्जयेत् ॥ ७७०
अम्लदोषावृते पित्ते वह्निमान्द्ये तथैव च।
रक्तातिसारेऽतीसारे प्रयोज्यो विषमज्वरे७७१
सशब्दघोरं गम्भीरं हन्ति सद्यो न संशयः।
अम्लपित्तकृतं दोषमुदरं सर्वरूपिणम् ॥७७२॥
सर्वातीसारशमनं सङ्ग्रहग्रहणीञ्जयेत्।
एकजं द्वन्द्वजञ्चैव दोषत्रयकृतं तथा ॥७७३ ॥
विकारं कोष्ठजञ्चैव हन्ति शूलमरोचकम्।
भाषितं वृष्णिनाथेन जन्तूनां हितकारकम् ॥

मै. र, ग्रहण्यधिकारे।

भाषा—पीसाहुआ सफेद जीरा ८ पल, भागके बीज सेककर छानेहुए ४ पल, लोह-बङ्ग और अभ्रक भस्म १-१ तोला, सोआ, तालीसपत्र, जावित्री, जायफल, धनिया, त्रिफला, चातुर्जात, लौंग, छरीला, दोनोंचन्दन, जटामासी, द्राक्ष, कचूर, भुनासुहागा, कुदरू, मुलहठी, वसलोचन, शीतलचीनी, सुगन्धवाला, गगेरन, त्रिकुटु, धावड़ीके फूल और छाल, वेलगिरी, अर्जुनकी छाल, सोफ, देवदारु, कपूर, गेहुला, जीरा मोचरस, कुटकी, भसींड, ये प्रत्येक १-१ तोला, इन सबको कूट कपड़छानकर सबसे दूनी शक्कर और उचितप्रमाणमे घीमिलाकर १-१ तोलेके लड्डू बनाकर रखछोड़े। इनमेसे एकएक लड्डू सुबहमे ठढे पानीकेसाथ देनेसे सब प्रकारकी ग्रहणी, आम, अग्निमान्द्य, रक्तातिसार, विषमज्वर, गम्भीरज्वर, अम्लपित्त, सब तरहके उदररोग, सङ्ग्रहग्रहणी, शूल, अरुचि, इन सबको यह नष्ट करता है ॥ १८७ ॥

## १८८ जीरकादिमोदकः (बृहन्) द्वितीयः

जीरकं कृष्णजीरञ्च कुष्ठं शुण्ठी च पिप्पली ।
मरिचं त्रिफला त्वक्च पत्रमेला च केसरम् ॥
शुभा लवङ्गं शैलेयं चन्दनं श्वेतचन्दनम् ।
काकोली क्षीरकाकोली जातीकोषफले तथा ॥
यष्टी मधुरिका मांसी मुस्तं सचलकं शटी ।
धान्याकं देवताडश्च मुरा द्राक्षा नखी तथा ॥
शतपुष्पा पद्मकश्च मेथी च सुरदारु च ।
सजलं नलिका चैव सैन्धवं गजपिप्पली॥७७८।
कर्पूरं वनिता चैव कुन्दखोटी समांशकम्॥—
लौहमभ्रकवङ्गानां द्विभागं तत्र दापयेत्॥७७९
सवचूर्णसमं देयं भृष्टजीरकचूर्णकम् ।
सिता द्विगुणिता देया मोदकं परिकल्पयेत् ॥
घृतेन मधुना मिश्रं मोदकञ्च भिषग्वरः ।
भक्षयेत्प्रातरुत्थाय यथादोषबलाबलम्॥७८१॥
गव्यं सशर्करञ्चैवानुपानाय प्रयोजयेत् ।
अशीतिं वातजान्रोगांश्चत्वारिंशच्च पैत्तिकान् ॥
सर्वांस्तान्नाशयत्याशु वृक्षमिन्द्राशनि र्यथा ।
नानावर्णमतीसारं विशेषादामसम्भवम् ॥
शूलमष्टविधं हन्या दर्शोरोगं चिरोद्भवम् ।
जीर्णज्वरञ्च सततं विषमज्वरमेव च ॥७८४॥
स्त्रीणाञ्चैवानपत्यानां दुर्बलानाञ्च देहिनाम् ।
पुष्पकृत्पुत्रकृच्चैव बलवर्णकरं परम् ॥ ७८५ ॥
सूतिकारोगमत्युग्रं नाशयेन्नात्र संशयः ।
प्रदर नाशयत्याशु सूर्यस्तम इवोदितः ७८६॥
दाहं सर्वाङ्गगञ्चैव वातपित्तोत्थितञ्च यत् ।
अयं सर्वगदोच्छेदी जीरकाद्यो हि मोदकः ॥

भै र, ग्रहण्यधिकारे । टि०—चल शिलारस स्वार्थे-कप्रत्यये चलकस्तेनसहितं सचलकमिति ।

**भाषा**—जीरा, स्याहजीरा, मीठीकुठ, सोंठ, पीपल, मिर्च, त्रिफला, तज, पत्रज, इलायची, नागकेसर, वंसलोचन, लवङ्ग, छरीला, चन्दन, सफेद चन्दन, काकोली, क्षीरकाकोली, जावित्री, जायफल, मुलहठी, सोआ, जटामासी, नागरमोथा, शिलारस, कचूर, धनिया, इन्द्राल, मुरा, द्राक्ष, नख, सौंफ, पद्मकाठ, मेथी, देवदारु, सुगन्धवाला, लोवान, सेंधा, गजपीपल, कपूर, गेंदुला अथवा अनन्तमूल, कुंदुरु ये सब एकएक भाग, लोह-अभ्रक वङ्गभस्म २—२ भाग लेकर सबको कूट कपड़छानकर सब चूर्णकी बराबर भुनेहुए जीरेका चूर्ण मिलाकर सबसे दूनी शक्कर और उचित प्रमाणमे घी और मधु मिलाकर १—१ तोलेके लड्डू बनाकर रखछोड़े । इनमेसे एकएक लड्डू शक्कर डालेहुए दूधकेसाथ लेनेसे ८० वातरोग, ४० पित्तरोग, नानावर्ण अतिसार, विशेषकर आमातिसार, ५ प्रकारका शूल, पुराना बवासीर, जीर्णज्वर, सतत और विषमज्वर, सूतिकारोग, प्रदर, सर्वाङ्ग-दाह इन सबको यह दूरकर कृश और वाझस्त्रियोंके ऋतुको लाता है और बलवर्णको करता है ॥

## १८९ जीर्णज्वरहररसः

नागं वङ्गं रसं ताम्रं गन्धकं टङ्कणं तथा ।
रसकं क्ष्वेडनेपालं हरितालं समं तथा॥७८८॥
वटक्षीरेण संमर्द्य सर्वं कुर्यात्तु गोलकम् ।
तं गोलं भाण्डमध्ये तु पाचयेद्दीपवह्निना ॥
शीतलं तु समाकृष्य भृङ्गराजेन मर्दयेत् ।
आर्द्रकस्य रसेनापि मर्दयेच्च पुनः पुनः ७९०
चणप्रमाणान् वटकान् दापयेदार्द्रकाम्भसा ।
गुञ्जाद्वयप्रमाणेन ज्वरं जीर्णं हरत्यसौ ॥ ७९१

र. र स, र को, र सु, जीर्णज्वरे । रसरत्नसमुच्चये जीर्णज्वराररिरितिनाम ।

**भाषा**—नाग-वङ्ग-ताम्र इनकी भस्में, शुद्धपारा, गन्धक, सुहागा, खपरिया, वछनाग, जमालगोटा, और हरिताल ये सब समभाग लेकर वटके दूधमे १—२ रोज़ घोटकर इनका गोला बनाकर सुखाकर हडीमे रख मुह बन्दकर दीपककी अग्निसे चार पहर पकावे । स्वाङ्गशीतल होनेपर निकालकर भंगरा और अदरखके रससे १—१ रोज़ मर्दनकर दोदोरत्तीकी गोलियें बनाकर रखछोड़े । इनमेसे

एकएक गोली अदरखके रसकेसाथ देनेसे यह सर्व प्रकारके जीर्णज्वरोंको नष्ट करता है ॥ १८९ ॥

## १९० जीर्णज्वराङ्कुशोरसः

मृतसूताभ्रनागार्ककांतंवैक्रान्तमेव च ।
हिङ्गुलं टङ्कणं गन्धं विषं कुष्ठं समांशकम् ॥
त्रिकटुत्रिफलामुस्ताभृङ्गनिर्गुण्डिकाद्रवैः ।
भावयेत्त्रिदिनंश्चैव मापमात्रानुमानतः ॥७९३
जीर्णज्वरं क्षयं कासं दोषान्मन्दानलं तथा ।
पाण्डुं हलीमकं गुल्ममुदरश्चार्दितंजयेत् ॥
ग्रहणीं विविधांश्छूलानरोचकमनेकधा ।
कान्ति तेजोबलं पुष्टिं वीर्यं वर्ण विवर्धयेत् ॥
साध्यासाध्यान्निहन्त्याशु रसो जीर्णज्वराङ्कुशः

नि र, र च, जीर्णज्वरे।

भाषा—पारा-अभ्रक-नाग-ताम्र-कान्तलोह वैक्रान्त इनकी भस्में, शुद्धशिंगरिफ, सुहागा, गन्धक और विष, कुठ ये सब समभाग लेकर कूट कपड़छानकर पारेगन्धककी नीलवर्ण कज्जलीकरके मिलादे। फिर त्रिकटु, त्रिफला, नागरमोथा, भागरा, संभालु इन प्रत्येकके रसोंसे तीन रोज़ भावना देकर उडद बराबर गोलियें बनाकर रखछोडे । इनमेसे १-१ गोली तत्तद्रोगहरानुपानकेसाथ देनेसे जीर्णज्वर, क्षय, कास, मन्दाग्नि, पाण्डु, हलीमक, गुल्म, उदररोग, अर्दित, नानाप्रकारकी ग्रहणी और शूल, नानाप्रकारके अरोचक, इन सबको यह नष्ट कर कान्ति, बल और वीर्यको बढाता है ॥ १९० ॥

## १९१ जीर्णज्वरारिरसः

मृतं सूतं मृतं ताम्रं तुल्यभागं प्रकल्पयेत् ।
अस्य गुञ्जाद्वयं खादेन्मधुना मरिचैः सह ॥
पिबेत्तदनुकर्षैकं तुलस्याः स्वरसं वरम् ।
जीर्णज्वरकफध्वंसी कासश्वासविनाशनः ॥
अग्निमान्द्यविबन्धारी राजयक्ष्मविमर्दनः ।
धातुपुष्टिकरश्चैव बलदः कान्तिकारकः ॥
जीर्णज्वरारिनामायं रसः परमदुर्लभः ॥ ७९८

र. प्र., जीर्णज्वरे।

भाषा—पारदभस्म, ताम्रभस्म समभाग लेकर इकट्ठे मिलाकर रखछोड़े । इसमेसे २-२ रत्ती मरिचका चूर्ण डालकर मधुकेसाथ खानेसे और ऊपरसे १ तोला तुलसीका रस पीनेसे यह जीर्णज्वर, कफ, कास, श्वास, अग्निमान्द्य, विबन्ध, राजयक्ष्म, इन सबको नष्टकर धातु-बल और कान्तिको बढाता है ॥ १९१ ॥

## १९२ जीर्णमण्डूरचूर्णम्

जीर्णमण्डूरचूर्णपशुसलिलमृतंभृङ्गराजार्कवासा-
मत्स्याक्षीमेघनादेक्षुरसपविलता-
ब्रह्ममूर्वामृतानाम् ।
वर्षाभूशिग्रुनीलीहपुषबहुदलाशेफकन्यार्द्रकाणां,
भृष्टं श्रेष्ठं रसेन त्रिकटुवरनिशादारुदार्व्यग्निवेल्लैः
एभिस्तुल्यंसमांशंदधिमधुपयसाकुष्ठतोयार्द्रनीरैः
प्रातः पीत्वा निहन्यात्क्षयकसनरुजः
श्वासपाण्ड्वग्निमान्द्यम् ॥ ७९९ ॥

व रा., पाण्डौ.

भाषा—सोवर्षसे ऊपरके मण्डूरको वहेड़ेके कोयलोंमे गरम करके गोमूत्रमे यहातक बुझावे कि उसका बारीक चूर्ण होजाय । फिर उसी गोमूत्रमे पीसकर पुटदेवे, जब इसकी वारितर भस्म होजाय तब भंगरा, नीलार्क, अडूसा, मत्स्याक्षी, कांटेवाली चौलाई, ऊख, जहरी सूरण, तिधारीहड़जोड़, ब्राह्मी, मूर्वा, गिलोय, पुनर्नवा, सहिजन, नील, झाऊ, प्याज, हारसिंगार, घीकुआर, अदरख इन प्रत्येकका रस मण्डूरकीबराबर कड़ाहीमे देकर भूने । फिर त्रिकटु, हल्दी, देवदारु, दारुहल्दी, चित्रक, विडङ्ग, इन सबका चूर्ण मण्डूरकी बराबर देकर दहीका तोड़, मधु, दूध, कुठका काढा और अदरखका रस इनमेसे किसी एकके साथ १-१ मासेकी मात्रा देनेसे क्षय, कास, श्वास, पाण्डु और मन्दाग्नि इनको यह नष्ट करता है ॥ १९२ ॥

## १९३ जीवनानन्दाभ्रम्

वज्राभ्रं मारितं कृत्वा कर्षयुग्मं विचूर्णितम् ।

जीरं कनकबीजञ्च कर्षं वासारसेन च ॥८००
कण्टकारीरसेनैव धात्रीमुस्तरसेन च ।
स्वरसेन गुडूच्याश्च पलांशेन पृथक्पृथक् ॥
मर्दयित्वा वटी कार्या गुञ्जामात्रा प्रयोजिता ।
विषमाख्याञ्ज्वरान्सर्वान् प्लीहानञ्च यकृद्वमी
रक्तपित्तं वातरक्तं ग्रहणीं श्वासकासकौ ।
अरुचिं शूलहृल्लासावर्शांसि च विनाशयेत् ॥
जीवनानन्दनामेदमभ्रं वृष्यं बलप्रदम् ।
रसायनमिदं श्रेष्ठमग्निसन्दीपनं परम् ॥८०४॥

भै र, र. सु, ज्वराधिकारे ।

भाषा—अभ्रकभस्म २ तो., जीरा, धतूरेके बीज १–१ तोला, लेकर बारीक चूर्णकर अडूसा, भटकटैया, आवले नागरमोथा, गुडूची, इनके १–१ पल रसमे क्रमसे मर्दनकर सुखाकर १–१ रत्तीकी गोलियें बनाकर रखछोड़े । इनमेसे १–१ गोली यथोचितानुपानकेसाथ देनेसे विषमादि समस्तज्वर, प्लीहा, यकृत्, वमि, रक्तपित्त, वातरक्त, ग्रहणी, श्वास, कास, अरुचि, शूल, हृल्लास, बवासीर, इन सबको दूरकर यह धातु और बलको बढाकर अग्निको दीप्त करता है ॥ १९३ ॥

## १९४ जीवितवर्धनोरसः

निर्वाप्य त्रिफलाक्काथे लोहपत्राण्यनेकशः ।
तद्रजो मधुसर्पिर्भ्यां लीढं जीवितवर्धनम् ॥

ग., नि, जीवितवर्धने ।

भाषा—लोहेके बारीक पत्रोको त्रिफलाके काढ़ेमे यहातक बुझावे कि उनका बारीक चूर्ण होजाय, उस चूर्णको त्रिफलाके काढेमे घोटकर पुटदेकर वारितर भस्म करके मधुमे मिलाकर खानेसे यह आयुको बढाता है ॥ १९४ ॥

## १९५ ज्योतिःपुञ्जरसः

मृतसूतसमं तथाभ्रकं परिमर्द्याथ सुबिल्वजद्रवैः
अथ नीलिकयाग्निकीलया
पिचुमन्दस्य च कङ्गुणीभवैः ॥८०६॥
परिमर्द्य ततश्च तैलकैरपि कार्पाससुबीजसम्भवैः
अथ माषमितञ्च भक्षितं ,
परिलिप्तं गजचर्मनाशनम् ॥ ८०७ ॥
ज्योतिःपुञ्जाभिधोऽयं सकल-
गदहरो निम्बराजद्रुमूल-
काथैरङ्कोलयुक्तैः सुखदिरसहितैश्चानुपानप्रयुक्तैः
कुष्ठं हन्यात्समस्तन्निखिल-
गदहरं वैद्यभूपप्रयुक्तः
तत्तद्रोगानुपानैस्सकलगदहरं योजयेद्वैद्यराजः

चि. क, र सु, र का, कुष्ठे ।

भाषा—पारदभस्म और अभ्रकभस्म समभाग लेकरबिल्व, नील, चित्रक, अग्निशिखा, नीम, मालकागण इनके रसोसे तथा कपासके बीजोंके तैलसे क्रमसे १–१ रोज़ मर्दनकर १–१ माशेकी गोलियें बनाकर रखछोड़े । इनमेसे १–१ गोली अङ्कोल अथवा खैरके काढेकेसाथ देनेसे और शरीरमे लगानेसे गजचर्म (खरजुआ) और समस्तकुष्ट नष्ट होते हैं १९५

## १९६ ज्वरकालकेतुरसः

रसं विषंगन्धकताम्रकञ्च
मनःशिलारुष्करतालकञ्च
विमर्द्य वज्रीपयसा समांशं
गजाह्वयं तत्र पुटं विदध्यात् ॥८०९॥
द्विगुञ्जमस्याथमधुप्रयुक्तं
ज्वरं निहन्त्यष्टविधं महोग्रम् ।
पुरा भवान्यै कथितो भवेन
नृणां हिताय ज्वरकालकेतुः ॥ ८१० ॥

भै र, र सु, ज्वराधिकारे.

भाषा—शुद्धपारा, बछनाग, गन्धक, ताम्रभस्म, मैनसिल, भिलावे, और हरिताल ये सब समभाग लेकर थूहरके दूधमे मर्दनकर गोला बनाय गजपुटकी आचदेवे । स्वाङ्गशीतल होनेपर निकालकर २ रत्तीकी मात्रा मधुकेसाथ देनेसे ५ प्रकारके ज्वरोको यह नष्ट करता है ॥ १९६ ॥

## १९७ ज्वरकुञ्जरपारीन्द्ररसः

मूर्च्छितं रसकर्षैकं तदर्धं जारिताभ्रकम् ।

तारं ताप्यञ्च रसजं रसकं ताम्रकं तथा ॥८११
मौक्तिकं विद्रुमं लोहं गिरिजं गैरिकं शिला ।
गन्धकं हेमसारञ्च पलार्धञ्च पृथक्पृथक् ॥
क्षीरिणी सुरवल्ली च शोथघ्नी गणकारिका ।
झिण्टी मल्ली ज्योत्स्निका च सतिक्तातु सुदर्शना
अग्निजिह्वा पूतितैला शूर्पपर्णी प्रसारणी ।
प्रत्येकस्वरसं दत्त्वा मर्दयेत्त्रिदिनावधि ॥८१४
भक्षयेत्पर्णखण्डेन चतुर्गुञ्जाप्रमाणतः ।
महाग्निकारको रोगसङ्करघ्नः प्रयोगराट् ८१५
सन्ततं सततान्येद्युस्तृतीयकचतुर्थकान् ।
ज्वरान् सर्वान्निहन्त्याशु भास्करस्तिमिरं यथा
कासं श्वासं प्रमेहञ्च सशोथं पाण्डुकामले ।
ग्रहणीं क्षयरोगञ्च सर्वोपद्रवसंयुतम् ।
ज्वरकुञ्जरपारीन्द्रः प्रथितः पृथिवीतले॥ ८१७

भै र, र सु, ज्वराधिकारे ।

भाषा—रससिन्दूर १ तो., अभ्रकभस्म ½ तो., रजतभस्म, सोनामाखी, रसाञ्जन, खपरिया, ताम्रभस्म, मोती, प्रवाल, लोहभस्म, शिलाजीत, गेरू, मैनसिल, गन्धक, तुत्थ ये प्रत्येक २–२ तोले लेकर सबकी कज्जलीकर सत्यानाशी अथवा चमारदूधी, गिलोय, पुनर्नवा, अरनी, कटसरैया, कुरैया, मालकगुनी, कुटकी, सुदर्शन, सताव, करञ्ज, शालपर्णी, प्रसारिणी, इन प्रत्येकके स्वरसोंसे एकएक रोज़ मर्दनकर ४–४ रत्तीकी गोलियें बनाकर रखछोड़े। इनमेसे एकएक गोली पानमे रखकर खानेसे संतत, सतत, अन्येद्युष्क तृतीयक, चातुर्थिक, श्वास, कास, प्रमेह, शोथ, पाण्डु, कामला, ग्रहणी, इन सबको यह ऐसे नष्ट करता है जैसे कि सूर्य अन्धकारको नष्ट करता है ॥ १९७ ॥

### १९८ ज्वरकुलान्तकरसः ( वातादि )

पारदं टङ्कणं भृष्टं गन्धकञ्च कटुत्रयम् ।
सर्वतुल्यं दन्तिबीजं शुद्धं गाढं विमर्दयेत् ॥
माषतुल्यः प्रदातव्यो शुण्ठीचूर्णेन धीमता ।
रसोऽयं प्रथितो नाम्ना वातज्वरकुलान्तकः ॥
तरुणं मध्यमं जीर्णं सद्यो हन्ति न संशयः ।
गुरूंश्च सिद्धमधुरान् कषायान् श्वसनज्वरे ॥
आहारं दोषपक्त्यर्थं प्रायशः परिवर्जयेत्८२०

ना वि., वातज्वरे ।

भाषा—शुद्धपारा और गन्धक, भुनासुहागा, त्रिकटु येसबसमभाग, इनसबकी बराबर शुद्धजमालगोटा लेकर सबको अदरखकेरस अथवा पानीसे घोटकर एकएक माशेकी गोलिये बनाकर रखछोड़े । इनमेसे १–१गोली ३माशे सोठके चूर्णके साथ देनेसे यह तरुण, मध्यम, अथवा जीर्णवातज्वरको नष्टकरताहै । इसके ऊपर तरुणज्वरमे मधुर और सिद्धकषाय देने उचित है । प्रायः करके आमदोषको पचानेके उद्देश्यसे इसमे खानेको नही देना १९८

### १९९ ज्वरकेसरीरसः ( प्रथमः )

शुद्धसूतं विषं व्योषं गन्धं चैव फलत्रयम् ॥
जयपालं समं कुर्याद्भृङ्गतोयेन मर्दयेत् ॥८२१॥
वटिकां गुञ्जमात्रां तु कृत्वा वैद्यः प्रयत्नतः ।
प्रमाणे सर्षपाकारां बालानाञ्च प्रशस्यते॥८२२
नारिकेलाम्बुना वापि सर्वज्वरविनाशिनी ।
नारिकेलजलं शस्तं त्रिकर्षं पाययेदनु ॥८२३॥
सितया च समं पीता पित्तज्वरविनाशिनी ।
मरिचेन च पीता सा सन्निपातज्वरञ्जयेत् ॥
पिप्पलीजीरकाभ्यान्तु दाहज्वरविनाशिनी ।
विषमज्वरभूतोत्थं ज्वरं प्लीहानमेव च ८२५॥
अग्निमान्द्यमजीर्णञ्च श्वयथुं च सुदारुणम् ।
शूलाजीर्णं तथागुल्मं पित्तकुष्ठमशेषतः ॥
ज्वरकेसरिकाख्याता तरुणज्वरनाशिनी ८२६॥

र स, र च, भै र, व, र. क यो, र. सु., नि. र, ज्वराधिकारे । नि. रत्नाकरे द्रोणपुष्प्या भावना प्रदत्ता युक्तश्चैतद्भृङ्गापेक्षया ज्वरापाकरणे तत्राधिकशक्तित्वात् ।

भाषा—शुद्धपारा, बछनाग और गन्धक, त्रिकटु त्रिफला, शुद्धजमालगोटा येसब समभागलेकर पारे गन्धककी नीलवर्ण कज्जलीकर और चीजोका कपड़छान चूर्णकर कज्जलीमे मिलाकर भागरेके रससे

१ रोज मर्दनकर १–१ रत्तीकी गोलियें बनाकर रखछोड़े, बालकोंके लिये सरसोके बराबर गोलिये बनानी चाहियें। इनमेंसे १–१ गोली ३ तोले नारियलके जलकेसाथ देनेसे यह सब ज्वरोंको नष्ट करती है। शक्करके साथ पित्तज्वरको। मरिचके साथ सन्निपातको, पीपल, जीरा के साथ दाहज्वरको और उचितानुपानके साथ देनेसे विषम, भूतोत्थज्वर, प्लीहा, मन्दाग्नि, अजीर्ण, भयङ्कर शोथ, शूल, गुल्म १८ कुष्ठ इनसबको यह रस नष्ट करता है १९९

**२०० ज्वरकेसरीरसः ( द्वितीयः )**

**पूर्वोक्तसिद्धिसम्पन्नं रसं सम्मर्दयेद्बुधः ।**
**शङ्खचूर्णैर्यवक्षारै राजिका निचुलानलैः ८२७**
**पुष्पैरम्भाभवैर्व्योपैः पटुगोमूत्रकाञ्जिकैः ।**
**स्वेदयेत्त्रिदिनं पश्चात्त्रिफलाचित्रकैस्ततः ॥**
**संस्वेद्याथ रसं खल्वे क्षिप्त्वा पश्चात्प्रमर्दयेत् ।**
**अर्कक्षीरेण यत्नेन कृष्णधत्तूरकद्रवैः ॥८२९॥**
**चन्द्रवल्लीरसैर्मर्द्यस्तुरुटक्षीरकैस्तथा ।**
**एतैश्चतुर्भिः क्रमशो व्यत्यासेनापि मर्दयेत् ॥**
**त्रिः सप्तदिवसान् पश्चाद्यन्त्रे सोमानले क्षिपेत्**
**तीक्ष्णाग्निं ज्वालयेत्त्रीणि दिनान्यथ समुद्धरेत्**
**पुनः सम्मर्दयेत्तत्तु पुनर्यन्त्रे पचेत्तथा ॥**
**पुनः प्रमर्दनं पाकस्तथैव स्यात्तु मर्दनम् ८३२**
**इत्थं कुर्यात्सप्तवारान् निरुत्थं भस्म जायते ॥**
**एवं भस्मीकृतः सूतः सर्वलोहान् प्रमारयेत् ॥**
**एवं सिद्धो रसो ग्राह्यः शीतवातविवर्जितः ॥**
**स्थाप्यो बन्ध्यामधूकस्य काष्ठजेऽथ करण्डके ॥**
**वातजे श्लेष्मजे पित्ते द्विजे वाऽथ त्रिजेऽपि वा**
**ज्वरे नवेऽथवा जीर्णे विषमे त्र्याहिके द्विके ॥**
**ऐकाहिके वा चातुर्थे देयः सूतेश्वरस्तथा ॥**
**निःशङ्कमेव वैद्येन्द्रै वल्लमात्रस्त्वतन्द्रितैः ८३६**
**कर्पूरेण मर्दयोऽयमनुपानं ततो भजेत् ॥**
**भद्रमुस्तां पर्पटकं समभागं समाहरेत् ८३७॥**
**अष्टावशेषं प्रकाथ्य तं काथं पाययेदनु ॥**
**सद्यो निवर्तते वेगो ज्वरस्य न हि संशयः ॥**
**ततः प्रस्वापयेद्वस्त्रैः सम्यग्देहं पिधापयेत् ॥**
**ततः सञ्जायते स्वेदो देहे लाघवमुत्तमम् ॥**
**शिरस्तोदः क्षणादेव निवर्तेत न संशयः**
**ततः पथ्यं प्रयुञ्जीत मुद्गयूषं मसूरजम् ८४०॥**
**तद्दिने न घृतं योज्यं द्वितीये कामचारतः ॥**
**ज्वराणामेव सर्वेषां विनिवारणदक्षिणः ८४१॥**

रसालं, सर्वज्वरे

**भाषा**—सप्तकञ्चुकी रहित पारेको तप्तखरलमे डालकर शङ्खचूर्ण, यवक्षार, वेत, राई, चित्रक, केलेकेफूल, त्रिकटु, सेंधानमक, गोमूत्र और काञ्जी इनमे एकएक रोज़ मर्दनकर काञ्जीसे धोकर गाढे चारतह कपड़ेमें बांधकर त्रिफला, और चित्रकके क्काथोंसे ३–३ रोज़ स्वेदनकर तप्तखरमे डालकर आकका दूध, काले धतूरेका रस, बाकुचीद्रव, तुव-रकका दूध इनमे २१ रोज़तक मर्दनकर सुखाकर डमरू यन्त्रमे रख तीन रोज़तक कडी आंचदेवे। स्वाङ्गशीतल होनेपर निकालकर नीचे ऊपरके सब पारेको इकट्ठाकर फिर उसीतरह चारों चीजोंसे मर्दनकर आंचदे। इसतरह ७ वार करनेसे इस समस्तकी निरुत्थभस्म होजायगी। यह सूतभस्म और आठो लोहोंकी भस्म ( सोना-चांदी-तांबा-नाग वङ्ग, कान्त, विडलोह और तीक्ष्णलोह इनकी भस्में ) समभाग लेकर इकट्ठी मिलाकर बाझमहुएके हीरकी डिब्बीमें रखकर ऐसी जगह रक्खे कि जहां सर्दी और वायु न लगे। इसमेसे ३–३ रत्ती थोड़ा कपूर मिलाकर देवे और ऊपरसे नागरमोथा पित्त-पापड़ा ये दोनों एकएक तोला लेकर इनका अष्टा-वशेष क्काथ बनाकर पिलानेसे ज्वरका वेग तत्क्षण नष्ट होजायगा। इसके बाद खूब कपड़े ओढाकर सुलादेवे तो पसीना होकर ज्वरका समस्तांश निक-लकर शिर एकदम हल्का होजायगा फिर मूग अथवा मसूरका यूप देना चाहिये। उस दिन घी बिल्कुल नहीं देना, दूसरे रोजसे यथेष्ट भोजन देवे॥ २००॥

## २०१ ज्वरकेसरीरसः

शिलाश्मतुल्यचूर्णश्च पेषयेत्समभागतः ।
वारिणा चातपे तप्तं न्यसेच्चुल्ल्याश्च खर्परे ८४२
मुहूर्तं ज्वालयेदग्निं लोहदर्व्या विचालयेत् ।
निर्धूमत्वं समायाति तथैव घटिकाद्वयम् ८४३
चालयेत्स्युञ्जया सर्वं छादयेच्च प्रणीतया ।
निर्वाप्यन्ते यदाङ्गारास्तावच्चुल्ल्यां निधापयेत् ॥
अर्धगुञ्जामिता मात्रा प्रतिवापो घृतं सिता ।
दधि वा तिलतैलश्च क्षाराम्लश्च विवर्जयेत् ॥
अष्टज्वरेषु योगोऽयं कथितो मुनिपुङ्गवैः ।
मात्रात्रयेण निःशेषं ज्वरस्योत्क्रन्तनं भवेत् ॥
सद्योज्वरविनाशाय रोहिणी चार्धटङ्किका ।
पादटङ्का भवेत्तिक्ता द्विवल्ला च हरीतकी ॥
एतैः सार्धं भजेन्मात्रां गुञ्जामानमितां ततः॥
कौतुकार्थं पुन र्देहे ज्वरमामन्त्रयेत्ततः ८४८॥
पादटङ्कं कणामूलं तथाऽऽकल्लोऽर्धटङ्ककः ।
मात्रा गुञ्जामिता सा च प्रदेया रोगिणे ततः
ज्वरस्तु जायते देहे दारुणस्तु पुनस्तदा ।
दाहो यदा भवेद्देहे सातलाफेनलेपतः ८५० ॥
शमं याति पुन र्देया मात्रा निःसारणाय च ।
गोप्योऽयं रसराजश्च सर्वदा ज्वरकेसरी ॥८५१

वै. वि , ज्वरे.

**भाषा**—मैनसिल, सोमल, तुत्थ, ये सब समभाग लेकर पानीसे खूब घोटकर धूपमे एक रोज़ रखकर मिट्टीके खपड़ेमेरख चूल्हेपर चढाकर २ घड़ी अथवा पानी सूखनेतक अग्नि देवे। और लोहेकी कडछीसे चलाता जाय । इसके बाद लोहेका कटोरा उल्टा मारके, २ घण्टे और अग्नि रहनेदे । जबतक चूल्हेके अङ्गारे सब ठढे न होजाय तब तक उसीपर रहनेदे । स्वाङ्गशीतल होनेपर निकालकर रखछोडे । इसमेसे आधीआधी रत्ती घी, शक्करके साथ देनेसे ८ प्रकारके ज्वर नष्ट होते है। इसमे दही, तिल, तैल, क्षार और अम्ल ये सब चीजें नहीं देनी चाहियें । इसकी तीन मात्राओंमे ज्वर निकल जाता है । सद्योज्वरमे २ माशे कुटकीके चूर्णकेसाथ १ मात्रा देकर १ घटेबाद १ माशा कुटकी और ६ रत्ती हर्रेके चूर्णकेसाथ १ रत्तीकी मात्रा दे तो तत्क्षण उतर जाता है। अगर कौतुक दिखाना होतो १ माशा पिपलामूल, २ माशा अकलकरा और ३ रत्ती रसकी रोगीको देनेसे घोरज्वर आजाता है और दाह उत्पन्न होता है । उस दाहकी शान्तिकेलिये सीकाकाईका फेन शरीरपर लगाना और ज्वरको निकालनेकेलिये वही कुटकीकेसाथ दूसरी मात्रा देनी चाहिये यह रस अत्यन्त गोपनीय है ॥

## २०२ज्वरगजसिंहरसः(ज्वरगजहरीरसः)

दरदजलदयुक्तं शुद्धसूतश्च गन्धं,
प्रहरमथ सुपिष्टं वल्लयुग्मश्च दद्यात् ।
ज्वरगजहरिसंज्ञं शृङ्गवेरोदकेन,
प्रथमजनितदाहे क्षीरभक्तेन भोज्यः ॥८५२॥

र र स, यो र, वै. चि , व रा, नि र , रसायनस , र को., टो , र सु, ना वि , वे चि ,(ल ), र. क यो , ज्वराधिकारे । यो र , वै चि , व रा., नि र , रसायनसं , एषु ग्रन्थेषु **चन्द्रकलेति** नाम स्थापितम्-टो , **ज्वरेभकेसरी**, र क.यो , र र स , र को , र सु., **ज्वरगजहरीति** नाम। र क योगे दरदस्थाने विषन्नियोजितम् । भावनायाश्च सुरसभावनाधिका दृश्यते ।

**भाषा**—शिंगरिफ़, अभ्रक, शुद्धपारा और गन्धक सब समभाग लेकर एक पहर अच्छीतरहसे घोटकर रखछोडे । इसमेसे ६–६ रत्ती अदरखके रसकेसाथ देनेसे समस्तज्वर नष्ट होते हैं । इसको देनेकेबाद कदाचित् दाह हो तो दूधभात खानेको देना ॥ २०२ ॥

## २०३ ज्वरगजाङ्कुशः ( तरुणादिः ) १

सूतनागार्कधान्यानि हिङ्गु चैव समंसमम् ।
चित्रकार्द्रकनिर्गुण्डीरसै र्मर्द्यं द्विवासरम् ॥
शृङ्गवेराम्भसा योज्यो रसोऽयं तरुणज्वरे ।

र क, यो , ज्वरे

**भाषा**—शुद्धपारा, नाग, और ताम्रभस्म, धनिया भुनाहींग, ये सब समभाग लेकर, चित्रक, अदरख,

संभालू इनके रसोंसे दो दो रोज़ मर्दनकर तीनतीन रत्तीकी गोलिये बनाकर रखछोडे। इनमेसे १-१ गोली अदरखके रसकेसाथ देनेसे तरुणज्वर निवृत्त होता है ॥ २०३ ॥

### २०४ ज्वरगजाङ्कुशः ( वातादिः ) २

रसतालकताप्याभ्रलाङ्गलीवह्निरामठान् ।
पथ्यापटोलनिर्गुण्डीसुगन्धानिम्बपल्लवान् ॥
पाठाविडङ्गमुस्तैलाबोलधत्तूरतण्डुलान् ।
भृङ्गीमधुकसारञ्च जम्बीराम्लेन पेषयेत् ८५५
कुर्यात्कृतकमानेन वटिकां सन्नियच्छति ।
सस्वेददाहाभिन्यासं वातज्वरगजाङ्कुशः॥८५६

र. क यो., ज्वराधिकारे

भाषा—शुद्धपारा, हरिताल, सोनामाखी, अभ्रकभस्म, करिहारीकीजड, चित्रक, हींग, हरें, पटोल, संभालू, तुलसी और नीमके पत्ते, पाठा, विडङ्ग, नागरमोथा, इलायची, एलुआ, धतूरेके बीज, भंगरा, मुलहठी सवसमभाग लेकर पारे-गन्धककी नीलवर्ण कज्जलीकर सवके चूर्णको इकट्ठा मिलाय जंभीरीके रससे १ रोज़ मर्दनकर निर्मलीके बीज बराबर गोलियें बनाकर रखछोडे। इनमेसे १-१ गोली अदरखके रसकेसाथ देनेसे स्वेद, दाह और अभिन्यास इन सबको यह नष्ट करता है ॥ २०४ ॥

### २०५ ज्वरगजाङ्कुशः (सर्वादिः) (तृतीयः)

रसाम्लसारगन्धश्च जैपालबीजटङ्कणम् ।
दन्तीक्वाथे विमर्द्याथ मुद्गमात्रा वटीकृता ॥
चणमात्राऽथवा ज्ञेया नागवल्लीदलान्विता ।
देया सर्वज्वरान्हन्ति सन्ततं तरुणज्वरम् ८५८
शर्कराक्षीरदधिभिः पथ्यश्चैव प्रदापयेत् ।
पूज्यपादोपदिष्टोऽयं सर्वज्वरगजाङ्कुशः ८५९॥

व रा, र. क यो, बा., र प्र, ज्वरे।

भाषा—शुद्धपारा, गन्धक, जमालगोटा, और भुनासुहागा येसब समभाग लेकर दन्तीमूलके काढेसे मर्दनकर मूंग अथवा चने बराबर गोलियें बनाकर रखछोडे। इनमेसे प्रकृत्यवस्थादि देखकर १-१ गोली पानके साथ देनेसे सन्तत, तरुणज्वर इत्यादि समस्त ज्वरोंको यह नष्ट करता है। इसमे शक्कर दूध और दही इनके साथ पथ्य देना उचित है॥२०५॥

### २०६ ज्वरगणविध्वंसनरसः ( अर्द्धयामिकः )

सूतं गन्धकतालकं जयफलं भागोत्तरेणामृतं,
खल्वे प्रस्तरके निकुम्भजलतो यामत्रयं मर्दयेत्।
गुञ्जैकश्चपलार्द्रकेण सहितंहन्यात्त्रिदोषज्वरान्
सश्वासभ्रमतृड्विदाहविषमान् शोषज्वरांश्छीतका
नत्याश्चर्यकरं रसायनवरं सर्वज्वरौघापहं,
कृष्णात्रेयविनिर्मितं ज्वरगणध्वंसो रसो नामतः

रसायनस, वा., ज्वरे। टि०—वाहटे श्यामाया अधिका भावना प्रदत्ता तत्र नाम च अर्धयामिक इति स्थापितम्।

भाषा—शुद्धपारा, १ भाग, गन्धक २ भा., हरिताल ३ भा., जमालगोटा ४ भा., वछनाग ५ भा., लेकर दन्तीके काथसे १ पहर मर्दनकर १-१ रत्तीकी गोलियें बनाकर रखछोड़े। इनमेसे एक२क गोली पीपल और अदरखके साथ देनेसे त्रिदोषज्वर, श्वास, कास, भ्रम, तृषा, विदाह, विषमज्वर, शोषज्वर और शीतज्वर इनको यह नष्ट करता है। ज्वरगणको नष्ट करनेमे यह अत्यन्त आश्चर्यकारक है ॥ २०६ ॥

### २०७ ज्वरघ्नीगुटिका

भागैकः स्याद्रसाच्छुद्धादेलीयः पिप्पलीशिवा।
आकारकरभो गन्धः कटुतैलेन शोधितः ॥
फलानि चेन्द्रवारुण्याश्चतुर्भागमिता ह्यमी ।
एकत्र मर्दयेच्चूर्णमिन्द्रवारुणिकारसे ॥ ८६२ ॥
माषोन्मितां गुटी कृत्वा दद्यात्सर्वज्वरे बुधः ।
छिन्नारसानुपानेन ज्वरघ्नी गुटिका मता ॥

शा स, रसायनस, यो र, र प्र. सु, रससारसङ्ग्रह, र सु, र. का, नि र, यो म, भा प्र, र को, ज्वरे।

भाषा—शुद्धपारा १ भाग, एलुआ, पीपल, हरें, अकलकरा, कड़वे तैलमे शोधाहुआ गन्धक,

इन्द्रायणके फल येप्रत्येक ४-४ भाग, लेकर पहिले पारे गन्धककी नीलवर्ण कज्जलीकर और सबके सूक्ष्म चूर्णमे मिलाकर इन्द्रायणके स्वरससे मर्दनकर १-१ माशेकी गोलिये बनाकर रखछोड़े । इनमेसे १-१ गोली गुडूचीके रसके साथ देनेसे यह तत्क्षण ज्वरको दूर करता है ॥ २०७ ॥

## २०८ ज्वरधूमकेतुरसः
## ( ज्वराऽऽरण्यदावानलः )

भवेत्समं मृतसमुद्रफेनं
हिङ्गूलगन्धं परिमर्द्य यत्नात् ।
नवज्वरे वल्लमितं त्रिघस्र-
मार्द्राम्बुनाऽयं ज्वरधूमकेतुः ॥८६४॥

र स., र., र प्र, र.शं, रसायनस., र का., र चं., चि. क, भा प्र, वै चि, र चि., र क., भै. र, र क ल., वै. क, र र दी, वै द, नि र., र सु, र सि, टो, र क्रो, यो. म, ज्वराविकारे । चि क कल्पवल्ल्या ज्वरारण्यदावानलेति नाम ।

टि०—रसावतारे अयोभस्माधिक नियुज्यास्य ज्वरदारुणरस इतिनाम स्थापित, विचारमकृत्वा रसकल्पद्रुमे ज्वरधूमकेतो पृथक् तस्यापि पाठ उद्धृतस्तदज्ञानविलसितमतस्तस्मिन्नास्ति रसान्तरता । अन्यो वृद्धज्वराङ्कुशनाम्ना पाठोस्ति तत्र ताम्रमधिकतया प्रक्षिप्तं स पाठ र शि, रसायन सं, र का, एषु उद्धृतोऽस्ति रसकामधेनौ सर्वज्वरहरेति नाम स्थापितम् अत्रायस्ताम्रयो र्द्वयोरप्यधिकप्रक्षेपेणापि योगसम्पादने नकाप्यनुपपत्ति । भावना च सप्तदिवसं दातव्या तर्हि भवति सर्वेषा समावेश ।

भाषा—शुद्धपारा और गन्धक, समुद्रफेन, शिंगरिफ, सब समभाग लेकर गन्धक पारेकी नीलवर्ण कज्जलीकर अदरखकेरससे मर्दनकर ३-३ रत्तीकी गोलियें बनाकर रखछोड़े । इनमेसे १-१ गोली अदरखके रसकेसाथ ३ रोज लगातार देनेसे यह ज्वरकेलिये धूमकेतुका काम करता है ॥२०८॥

## २०९ ज्वरध्वान्तदिवाकररसः

पारदं गन्धकं ताम्रं जैपालं त्रिवृतां कणाम् ।
नलिकां कटुकीं पथ्यां विषतिन्दुकबीजकम् ॥
समभागं समादाय सूक्ष्मचूर्णन्तुकारयेत् ।
वज्रीक्षीरेण सम्मर्द्य पश्चादुन्मत्तवारिणा ॥
आर्द्रकस्य रसेनैव श्लक्ष्णं गुञ्जाचतुष्टयम् ।
नवज्वरे प्रयोक्तव्यो ज्वरध्वान्तदिवाकरः ॥
आमान्तशोधनात्पश्चात्पथ्यं मुद्गौदनं हितम् ॥

र. का, ज्वराविकारे ।

भाषा—शुद्धपारा, गन्धक, जमालगोटा, ताम्रभस्म, निशोत, पीपल, लोबान, कुटकी, हर्रे, शुद्धकुचिला ये सब समभाग लेकर पारदगन्धककी नीलवर्ण कज्जलीकर सबके सूक्ष्म चूर्णमे मिलाकर थूहरका दूध, धतूरेका रस, अदरखका रस इन प्रत्येकमे एकएक रोज़ मर्दनकर ४-४ रत्तीकी गोलियें बनाकर रखछोड़े । इनमेसे एकएक गोली अदरखके रसकेसाथ अथवा उचितानुपानकेसाथ देनेसे यह आमान्तरेचन करके ज्वरको शान्त करता है । इसमे पथ्य मूंगकी दालभात देना ॥ २०९ ॥

## २१० ज्वरनागमयूरचूर्णम्

लौहाभ्रं टङ्कणं ताम्रं तालकं वङ्गमेव च ।
शुद्धसूतं गन्धकञ्च शिग्रुबीजं फलत्रिकम् ८६८
चन्दनातिविषा पाठा वचा च रजनीद्वयम् ।
उशीरं चित्रकं देवकाष्ठञ्च सपटोलकम् ॥८६९
जीवकर्षभकाजाज्यस्तालीसं वंशरोचना ।
कण्टकार्याः फलं मूलं शटीपत्रं कटुत्रयम् ॥
गुडूचीसत्त्वधान्याकं कटुका क्षेत्रपर्पटी ।
मुस्तकं बालकं बिल्वं यष्टीमधु समंममम् ॥
भागाच्चतुर्गुणं देयं कृष्णजीरस्य चूर्णकम् ।
तत्समं तालपुष्पञ्च चूर्णं दण्डोत्पलाभवम्८७२
कैरातं तत्समं देयं तत्समञ्चपलाभवम् ।
एतच्चूर्णं समाख्यातं ज्वरनागमयूरकम् ॥ ८७३
प्रतिमाषमितं खाद्यं युक्त्या वा त्रुटिवर्धनम् ।
सन्ततादिज्वरं हन्ति साध्यासाध्यं न संशयः ॥
क्षयोद्भवञ्च धातुस्थं कामशोकोद्भवं ज्वरम् ।
भूतावेशज्वरञ्चैवमभिचारसमुद्भवम् ॥ ८७५ ॥
दाहशीतज्वरं घोरं चातुर्थादिविपर्ययम् ।
जीर्णञ्च विषमं सर्वं प्लीहानमुदरन्तथा ८७६

कामलां पाण्डुरोगञ्च शोथं हन्ति न संशयः ।
भ्रमं तृष्णाञ्च कासञ्च शूलानाहौ क्षयंतथा ॥
यकृद्गुल्मौ च शूलञ्च आमवातं निहन्ति च ।
त्रिकपृष्ठकटीजानुपार्श्वानां शूलनाशनम् ॥
अनुपानं शीतजलं न देयमुष्णवारिणा ॥८७८

भै. र., ज्वराधिकारे ।

भाषा—लोह, अभ्रक, ताम्र, वङ्ग इनकी भस्में, भुनासुहागा, शुद्धहरिताल, पारा और गन्धक, सहि-जनके बीज, त्रिफला, चन्दन, अतीस, पाठा, वच, हल्दी, दारुहल्दी, खस, चित्रक, देवदारु, कटुपरवल, जीवक, ऋषभक, जीरा, तालीसपत्र, वंशलोचन, भटकटैयाके फल और जड, कचूर, पत्रज, त्रिकटु, गुडूचीसत्त्व, धनिया, कुटकी, पित्तपापडा, नागर-मोथा, सुगन्धवाला, वेलगिरी, मुलहठी ये सब समभाग, इन सबसे चौगुना काली जीरीका चूर्ण और उन सबकी बराबर ताडवाली, गोरखमुण्डी और इन सबकी बराबर चिरायता और इन सबकी बराबर पीपल लेकर सबको कूट कपडछानकर पारे और गन्धककी नीलवर्ण कज्जली बनाकर सबको एक जगह मिलाकर रखछोडे । यह नागमयूर चूर्ण तैयार हुआ । इसमेसे १–१ मासा अथवा जैसी औचिती समझे उस प्रमाणमे देनसे साध्यासाध्य सततादि विषमज्वर, क्षयज, धातुस्थ, कामशोको-द्भव, भूतावेशज, अभिचारज, दाहपूर्व, शीतपूर्व, चातुर्थिकादिविपर्यय, जीर्णज्वर, प्लीहा, उदररोग, कामला, पाण्डु, शोथ, भ्रम, तृषा, कास, शूल, आनाह, क्षय, यकृत्—गुल्मशूल—त्रिक—पृष्ठ—कटी-जानु—पार्श्वशूल, इनसबको यह नष्ट करता है । इसमे अनुपान ठंढा जल है गरम जल भूलकर नहीं देना ॥ २१० ॥

## २११ ज्वरनाशकरसः ( प्रथमः )

पारदं निष्कमात्रं स्याद्गन्धकञ्च द्विनिष्ककम् ।
निष्कञ्च टङ्कणक्षारं निष्कं वैतालकं तथा ॥
एतेषां समभागानि दन्तीबीजानि मर्दयेत् ।
नागवल्लीदलेनैनद्गुञ्जामात्रं प्रदापयेत् ॥
पथ्यं क्षीरौदनं दद्याद्रसोऽयं ज्वरनाशनः ॥

र. रा., ज्वरे ।

भाषा—शुद्धपारा १ टंक, गन्धक २ टंक, भुनासुहागा १ टंक, हरिताल १ टंक, इनसबकी बराबर शुद्धजमालगोटा लेकर पारे गन्धककी नील-वर्ण कज्जलीकर और चीजें डालकर पानके रसमे एक रोज मर्दनकर १–१ रत्तीकी गोलियें बनाकर रखछोडे । इसमेसे १–१ गोली पानके रसके साथ देनेसे समस्त ज्वरोंको यह नष्ट करता है । इसमें पथ्य दुग्धभात देना ॥ २११ ॥

## २१२ ज्वरनाशकरसः ( द्वितीयः )

नेपालकं टङ्कणपारदौ च
तुल्यं तथा चामलगन्धकश्च ।
सर्वैः समांशं रस एष सिद्धो-
ज्वरेषु सर्वेषु च नित्यमिष्टः ॥८८१॥
रसः प्रदेयः स्फुटमेकगुञ्जा
पथ्यं सितातण्डुलमुद्गयूषाः ।
श्रीपूज्यपादैः कथितो रसोऽयं
सद्योज्वरश्चापि निहन्ति सत्यम् ८८२॥

यो. चि., ज्वरे ।

भाषा—भुनासुहागा, तुत्थ, शुद्धजमालगोटा पारा, और गन्धक येसब समभागलेकर सबकी कज्जलीकर अदरख वगेरहके रससे घोटकर रखछोडे इसमेसे १–१ रत्ती यथोचितानुपानके साथ देनेसे यह समस्त ज्वरोंको नष्ट करता है । शकर, चावल, और मुद्गयूष इसमे पथ्य है । सद्योज्वरके लिये यह रामबाण है ॥ २१२ ॥

## २१३ ज्वरपञ्चाननोरसः

शुद्धंरसं गन्धकनागहेम-
बीजं समं कोलकणाजगद्भिः ।
विमर्दयेत्स्त्रितयं शनैश्च
जम्बीरनिम्बार्द्रकवारिणा तत् ॥८८३॥

वल्लः सिताचन्द्ररसेन देयः
सर्वज्वरान्नाशयति क्षणेन ।
सर्वेषु रोगेष्वथ सन्निपाते
दध्योदनोऽस्मिन् खलु पथ्यहेतुः ८८४

र क, ज्वराधिकारे।

भाषा—शुद्धपारा, गन्धक, नागभस्म, धतूरेके-बीज येसब समभागलेकर नीलवर्ण कज्जलीकर त्रिकटुके क्वाथकी ३ रोज भावना देकर जमीरी, निम्ब और अदरखके रसकी १–१ भावना देकर ६–६ रत्तीकी गोलिये वनाकर रखछोडे। इनमेसे १–१ गोली सुगन्धवालाके काढेमे शक्कर मिलाकर अथवा कमीलेके काढेमे शक्कर मिलाकर उसके साथ देनेसे सब प्रकारके ज्वरोंको यह नष्ट करता है। इसमे पथ्य दही चावल देना ॥ २१३ ॥

## २१४ ज्वरपञ्चाननोरसः

तैलादिना नागवङ्गौ शोधितौ द्रावितौ समौ ।
तत्रैकभागं सूतेन्द्रं क्षिप्त्वा समवतारयेत् ॥
रसे विषं शुद्धमेतन्मेलयित्वा विमर्दयेत् ।
कज्जलाभं दिनं खल्वे स्थापयेद्दन्तभाजने ॥
आर्द्रकस्य रसेनैव गुञ्जामात्रो ज्वरापहः ॥
अतितापे सन्निपाते विहितोऽयं रसोत्तमः ॥
मुहूर्तद्वितयात्तीव्रं ज्वरं नाशयति स्फुटम् ।
ज्वरपञ्चाननो नाम नवज्वरविनाशनः ८८८॥

र का, ज्वराधिकारे।

भाषा—तैलादिकसे शुद्धकिये हुए समभाग नाग और वङ्गको गलाकर उसमे १ भाग पारा डालकर उतारले। इसमे पारा और शुद्धबछनाग एकएक भाग मिलाकर कज्जलीकरे। जब एकदम चमकरहित होकर काला होजाय तब उसको हाथीदांतके वर्तनमे रखछोडे। इसमेसे १–१ रत्ती अदरखके रसके साथ देनेसे यह समस्त ज्वर और सन्निपातोंको दूर करता है। २ घण्टेके भीतर यह अत्यन्त बढेहुए ज्वरको साफ़ उतार देता है ॥ २१४ ॥

## २१५ ज्वरभेदीरसः

गन्धटङ्कणविषोषणदन्ती-
बीजकट्फलमुपेतरसार्धम् ।
मर्द्यमार्द्रकजलैरथ माषं
तत्सितार्द्ररसयुग्ज्वरभेदी ॥ ८८९ ॥

यो. च, ज्वरे।

भाषा—शुद्धगन्धक, भुनासुहागा, बछनाग, मरिच, जयपाल, कायफल, येसब आधा आधा तोला शुद्धपारा १तो०, लेकर पहिले पारे गन्धककीनीलवर्ण कज्जलीकर सबचीजें मिलाकर अदरखके रससे १–२रोज़घोटकर १–२माशेकीगोलिये बनाकर रख छोडे। इनमेसे १–१गोली अदरखऔर शक्करके साथ लेनेसे तमामज्वरोंको दूरकरता है ॥ २१५ ॥

## २१६ ज्वरभैरवचूर्णम्

नागरं त्रायमाणा च पिचुनन्दं दुरालभा ।
पथ्या मुस्ता वचा दारु व्याघ्री शृङ्गी शतावरी
पर्पटं पिप्पलीमूलं विशाला पुष्करं शटी ।
मूर्वा कृष्णा हरिद्रे द्वे लोध्रं चन्दनमुत्पलम् ॥
कुटजस्य परं वल्कं यष्टीमधुकचित्रकम् ।
शोभाञ्जनं वला चातिविषा च कटुरोहिणी ॥
मुसली पद्मकाष्ठञ्च यवानी शालपर्णिका ।
मरिचं चामृता बिल्वं वालं पङ्कस्य पर्पटी ॥
तेजःपत्रं त्वचं धात्री पृश्निपर्णी पटोलकम् ।
गन्धकं पारदं लोहमभ्रकं च मनःशिला ॥
एतेषां समभागेन चूर्णमेवं विनिर्दिशेत् ।
तदर्धं प्रक्षिपेत्तत्र चूर्णं भूनिम्बसम्भवम् ॥८९५
मात्रामस्य प्रयुञ्जीत दृष्ट्वा दोषबलाबलम् ।
चूर्णं भैरवसंज्ञं तु ज्वरान्हन्ति न संशयः ८९६
पृथग्दोषांश्च विविधान् समस्तान्विषमज्वरान् ।
द्वन्द्वजान्सन्निपातोत्थान्मानसानपि नाशयेत् ॥
प्राकृतं वैकृतं चैव सौम्यं तीक्ष्णमथापि वा ।
अन्तर्गतं बहिःस्थञ्च निरामं साममेव च८९८
ज्वरमष्टविधं हन्ति साध्यासाध्यं न संशयः ।
नानादोषोद्भवञ्चैव वारिदोषभवं तथा॥८९९॥

विरुद्धभेषजभवं ज्वरमाशु व्यपोहति ॥
अग्निमान्द्ययकृत्प्लीहपाण्डुरोगानरोचकम् ॥
उदराण्यन्त्रवृद्धिश्च रक्तपित्तं त्वगामयम् ॥
श्वयथुश्च शिरःशूलं वातामयरुजाञ्जयेत् ॥
ज्वरभैरवसंज्ञं तु भैरवेण कृतं शुभम् ॥९०१॥

व. रा, भै. र, ज्वरे।

भाषा—सोंठ, त्रायमाण, नीमकीछाल, जवास, हर्रे, नागरमोथा, वच, देवदारु, भटकटैया, काकडा-सींगी, शतावर, पित्तपापडा, पिपलामूल, गहर, पुष्करमूल, कचूर, मूर्वा, पीपल, दोनोंहल्दी, लोध, चन्दन, कमलगट्टा, कुरैयाकी छाल, मुलहठी, चित्रक, सहिजन, वला, अतीस, कुटकी, मुसली, पद्म-काष्ठ, अजवाइन, शालपर्णी, मरिच, वच, गिलोय, वेलगिरी, सुगन्धवाला, तलावकीपपड़ी, पत्रज, तज, आवले, शारिवा, पटोलपत्र, शुद्धगन्धक, पारा, लोहभस्म, अभ्रकभस्म, शुद्धमैनसिल, ये सवसमभाग, लेकर चूर्णकरले, इसचूर्णसे आधा चिरायतेका चूर्ण मिलाकर रखछोडे। इसमेंसे दोषादिकका बलावल देखकर ३मासेकी मात्रा यथोचितानुपानकेसाथ देनेसे साधारण ज्वर, विषम, द्वन्द्वज, सान्निपातिक, मानासिक, प्राकृत, वैकृत, ठढा, गरम, अन्तर्वेग, वहिर्वेग, निराम, साम, जलदोषोद्भव, विरुद्धऔषधजज्वर, अग्निमान्द्य, यकृत्, प्लीह, पाण्डु, अरोचक, समस्तउदररोग, अन्त्रवृद्धि, रक्तपित्त, चर्मरोग, शोथ, शिरःशूल, वातिकरोगइनसबको यह नष्टकरता है॥ २१६॥

## २१७ ज्वरभैरवोरसः
## ( नवज्वरहरीवटी ) ( प्रथमः )

त्रिकटु त्रिफला टङ्कविषगन्धकपारदम्।
जयपालसमं मर्द्य द्रोणपुष्पीरसै र्दिनम् ९०२॥
ताम्बूलेन समं ह्यस्य खादेद्गुञ्जामितां वटीम्।
मुद्गयूषं शिखरिणीं पथ्यं देयं प्रयत्नतः ९०३॥
नवज्वरं त्रिदोषोत्थं जीर्णञ्च विषमज्वरम्।
दिनेकेन निहन्त्याशु रसोऽयं ज्वरभैरवः॥९०४॥

र. सु., भै. र., भ. [illegible], र. म., शा. प्र., शा. स., (नवज्वरघ्नी) र. रा. सु., (नागार्जुनीय), ज्वरे।

टि०—[illegible]

भाषा—त्रिकटु, त्रिफला, सुहागाकीखील, शुद्धबच्छनाग, गन्धक, पारा, और जमालगोटा, सब समभाग लेकर पारेगन्धककी नीलवर्ण कज्जलीकर सब चीजोंके चूर्णमें मिलाकर गूमाके रसमें १ दिन घोटकर १–१ रत्तीकी गोलियें बनाकर रखछोडे। इनमेंसे १–१ गोली पानके रसकेसाथ देनेसे नवीन, त्रिदोषोत्थ, और विषमज्वर इन ज्वरोंको यह नष्ट करता है। इसमें मूंगका यूष और शिखरन पथ्यमें देना उचित है॥ २१७॥

## २१८ ज्वरभैरवोरसः ( द्वितीयः )

रसस्य भाग एकस्तु गन्धको द्विगुणो मतः।
मनःशिला त्रिकटुकं कुष्ठं श्वेतवहस्तथा ॥९०५
वचैलीयकमेतेषां भागः सूतसमः स्मृतः।
श्लक्ष्णं चूर्णीकृतं सर्वं भावयेच्च दिनत्रयम् ॥
जयन्त्या नागवल्ल्यास्तु शृङ्गवेररसैः सह।
ज्वरभैरवनामासौ वल्लयुग्मो निषेवितः ॥
सर्वज्वरविनाशाय मरिचै र्दशभि र्युतः ॥९०७

र. को, यो. स, ज्वरे।

टि०—रसेन्द्रकल्पद्रुमे "अर्कभृङ्गेन पुष्पेन सम्मर्द्य वटिकीकृतम्। भिषग् जीर्णज्वरे दद्याच्छीघ्रप्रत्ययकारकम्"इत्यधिक पाठोऽस्ति स च योग्योऽस्ति।

भाषा—शुद्धपारा १ भाग, गन्धक २ भाग, मैनसिल, त्रिकटु, कुठ, सफेद अर्जुनकी छाल, वच, एलुआ १–१ भाग, लेकर पारद गन्धककी नीलवर्ण कज्जलीकर सब चीजोंके वारीक चूर्णमें मिलाकर जैत, पान, अदरख इन प्रत्येकके स्वरससे तीनतीन दिन मर्दनकर ६–६ रत्तीकी गोलियें बनाकर रखछोड़े। इनमेंसे १–१ गोली १० मरिचकेसाथ देनेसे समस्तज्वरोंको यह नष्ट करता है॥ २१८॥

### २१९ ज्वरभैरवोरसः ( तृतीयः )

पलैकं पारदं शुद्धं गन्धकञ्च पलोन्मितम् ।
मर्दितं कज्जलाभासं क्षिपेत्ताम्रस्य सम्पुटे ॥
कृत्वा तां पिठरीमध्ये शरावेण पिधापयेत् ।
सन्धिलेपं ततः कृत्वा भस्मना परिपूरयेत् ॥
मन्दादिवह्निना यामषट्कं तद्विपचेद्भिषक् ।
स्वाङ्गशीतं समुद्धृत्य पलार्धं बलिना दृढम् ॥
मर्दयित्वा शुक्तिकायाः स्वरसेन विभावयेत् ।
तक्रेण मर्दयेत्किञ्चित्स्वेदयेत्तच्छनैः शनैः ।
भावयेत्तुलसीनीरै र्दशवारं प्रयत्नतः ।
वलात्रयस्य रसतो भावितः शुद्धिमाप्नुयात् ॥
नागवल्लीरसेनैव त्रिगुञ्जासम्मितो ज्वरे ।
जन्तो र्जीर्णज्वरे देयः पथ्यं मुद्गौदनं हितम् ॥
शूलमन्दानलं गुल्ममतिसारं गुदाङ्कुरान् ।
कासं श्वासं जयेच्छीघ्रं तत्तद्रोगानुपानतः ॥
ज्वरभैरवनामायं निर्मितो रससागरे ॥९१४॥

र का, ज्वराधिकारे।

भाषा—शुद्धपारा और गन्धक १-१पल लेकर नीलवर्ण कज्जलीकर बिजोरे वगैरहके रसमे घोटकर गोला बनाकर इसकी बराबर तांबेके सम्पुटमे रखकर बद करदे। और इस सम्पुटको हडीके भीतर बन्दकरके ऊपर एक शरावसे ढककर सन्धिको गुडचूनेसे बन्दकर ऊपर भस्मसे हडीको भरकर मुहपर ढक्कन देकर १—२ कपडमिट्टी देकर चूल्हेपर रख क्रमसे ६ पहरकी आच देवे। स्वाङ्गशीतल होनेकेबाद तांबेके सम्पुटको निकालकर दो तोले नया गन्धक देकर चूकेके रससे १ रोज मर्दनकर गोला बनाकर छाछमे ४ पहर स्वेदन करे। फिर तुलसीके रससे १० और नागवलाके रससे ३ भावनाए देकर ३—३ रत्तीकी गोलियें बनाकर रखछोडे। इनमेसे १—१ गोली पानके रसकेसाथ देनेसे जीर्णज्वर, शूल, मन्दाग्नि, गुल्म, अतिसार, बवासीर, कास, श्वास, इन सबको यह उचितानुपानकेसाथ देनेसे नष्ट करता है पथ्यमे मूगकी दाल चावल हितकर है ॥ २१९ ॥

### २२० ज्वरभैरवोरसः ( चतुर्थः )

रसेन्द्रगन्धकव्योषवह्निस्फाटिकटङ्कणम् ।
फलमारुष्करं भृङ्गजयपालं समांशकम् ॥ ९१५
भागद्वयं विषश्चात्र दत्वा सर्वं विमर्दयेत् ।
भावयेन्मार्कवरसैः सप्तधा रवितापतः ९१६ ॥
शर्करार्द्रकनीराभ्यां दद्याद्गुञ्जाद्वयं भिषक् ।
श्वासं नवज्वरं जीर्णं विषमं कफपित्तजम् ॥
वह्निमान्द्यं तथा शूलं जयेद्रोगानुपानतः ९१७

र का, ज्वराधिकारे

भाषा—शुद्धपारा, गन्धक, त्रिकटु, चित्रक, फिटकडी, सुहागा, भिलावा, भगरा, जमालगोटा ये सब समभाग लेकर २ भाग बछनाग डालकर सबको इकट्ठेकर भागरेके रसकी धूपमे सात भावनाए देकर दो दो रत्तीकी गोलिये बनाकर रखछोडे। इनमेसे १—१ गोली अदरखके रसमे शक्कर मिलाकर इसकेसाथ देनेसे श्वास, नवज्वर, जीर्ण, विषमज्वर, कफपित्त, अग्निमन्दता, शूल, इन सबको यह नष्ट करता है ॥ २२० ॥

### २२१ ज्वरभैरवोरसः ( पञ्चमः )

रसगन्धकतालेन्दुमल्लटङ्कणकं विषम् ।
आकल्लकं द्विद्विभागं कृष्णधूर्तफलं त्रिधा ९१८
जैपालश्च समुद्रश्च जीरकश्च विभावयेत् ।
तुलस्यां गुटिका गुञ्जा रसोऽयं ज्वरभैरवः ॥
तप्तोदकेन सकलाञ्जयेज्जीर्णज्वरान्भृशम् ।
हिङ्गुदीप्यवचाभिस्तु सतक्राभिः स शूलजित्॥
त्रिकटुत्रिफलाचित्रै र्वात पित्तं फलत्रिकैः ॥
सहदेवीभृङ्गशुण्ठीब्राह्मीनिर्गुण्डिकारसैः ।
सगव्यदुग्धै र्जयति सर्वरोगानशेषतः ॥९२१॥

र. का, ज्वराधिकारे।

भाषा—शुद्धपारा, गन्धक, हरिताल, सोमल, बछनाग, कपूर, भुनासुहागा, अकलकरा ये सब १—१ भाग, काले धतूरेके फल ३ भाग, शुद्धजमालगोटा और जीरा ४—४ भाग, लेकर पारेगन्धककी कज्जलीकर सबके चूर्णमे मिलाकर तुलसीके

रससे मर्दनकर एकएक रत्तीकी गोलिये बनाकर रखछोड़े। इनमेसे एकएक गोली गरम पानीकेसाथ देनेसे जीर्णज्वरको नष्ट करता है। हींग, अजवाइन, वच, इनका चूर्ण छाछमे डालकर इसकेसाथ लेनेसे शूलको दूर करता है। त्रिकटु, त्रिफला चित्रक इनकेसाथ वातको तथा त्रिफलाकेसाथ पित्तको और सहदेवी, भगरा, सोठ, ब्राह्मी, सभाल्ट इनका रस दूधमे मिलाकर उसकेसाथ देनेसे तमाम रोगोंको नष्ट करता है॥ २२१॥

## २२२ ज्वरमत्तेभकेसरीरसः

पूर्ववच्छोधितं सूतमाहरेत्पलमात्रकम्।
शुद्धं बलिं वरां तस्य द्विगुणीकृत्य योजयेत्॥
पलञ्च शुद्धं बाह्लीकं मर्दयेद्द्विपले जले।
तेन पञ्चदिनं मर्द्यं रसं पश्चात्समुद्धरेत्॥९२३
तं कल्कं गोलकं कृत्वा दृढे भाण्डे निवेशयेत्।
दृढेनाथ शरावेण गोलकं तं निरोधयेत्॥
सन्धिलेपं दृढं कृत्वा सैन्धवेन प्रपूरयेत्।
द्वितीयेनैव भाण्डेन मुखंयत्नात्सुसन्धयेत्॥
दिनानि पञ्च सन्ताप्य मृदुमध्योत्तमक्रमात्।
वह्निं ज्ञात्वा स्वतः शीतं रसभस्म ततः शिवम्
हिङ्गुनीरेण सम्भाव्य पञ्चविंशतिसङ्ख्यया।
प्रपुटेत्कुक्कुटारव्येन पुटेन च विचक्षणः ९२७
एवं शुद्धो भवेत्सूतो ज्वरमत्तेभकेसरी।
अस्य सूतस्य भागैकं वचाभागचतुष्टयम् ९२८
मरीचस्य तथा भागाश्चत्वारः परिकीर्तिताः।
हिङ्गुनीरेण सम्मर्द्य वटिकाश्चणकोपमाः ९२९
छायाविशोषिताः पश्चाज्ज्वरार्तानां प्रदापयेत्।
वटिकादानमात्रेण ज्वरवेगो निवर्तते॥
नवज्वरं वा जीर्णं वा विषमं नाशयेद्ध्रुवम्॥

टी, रसाल, ज्वरे। रसालङ्कारे ज्वराङ्कुशेति नाम।

भाषा—बुभुक्षान्त सस्कार कियाहुआपारा १ पल, शुद्ध गन्धक २ पल, लेकर दोनोंकी नीलवर्ण कज्जलीकरले फिर १ पल उत्तमहींग लेकर २ पलपानीमे घोटे। फिरइसपानीमे उसकज्जलीको ५ दिनतकमर्दन करके गोलाबनायसुखाकर कपडमिट्टीकी हुई-हंडीमे बहुत बारीकसेन्धानमक गलेतक भरकर ऊपर ढक्कन देकर गुड़चूनेसे मुहबन्दकर ३–४ कपडमिट्टी करकेसुखादे सूखनेपर चूल्हेपर रखकर ५ दिनतक मन्द, मध्य और खर इसक्रमसे आचदेवे। स्वाङ्गशीतलहोनेपर निकालकर ऊपरकी हंडीमे सफेद रगकी लगीहुई भस्ममिलेगी इसको धीरजसे निकालकर हींगके पानीसे २५ भावनाए देकर गोला बनायसुखाकर सम्पुटमेबन्दकर कुक्कुटपुटकी आच देवे। स्वागशीतल होनेपर पीसकर रखलेवे। इसमेसे १ भाग, वच ४ भाग, मरिच ४ भाग, सबको इकट्ठे मिलाय हींगके पानीसे १–२ रोजघोटकर चने प्रमाण गोलियें बनाकर छायामे सुखाकररखछोडे। इनमेसे १–१ गोली उचितानुपानके साथदेनेसे नवज्वर, जीर्णज्वर, विषमज्वर येसब नष्टहोते हैं॥ २२२॥

## २२३ ज्वरमातङ्गकेसरीरसः

पारदं गन्धकञ्चैव हरितालं समाक्षिकम्।
कटुत्रयं तथा पथ्या क्षारौ द्वौ सैन्धवं तथा॥
निम्बस्य विषमुष्टेश्च बीजं चित्रकजं तथा।
एषां माषमितं भागं ग्राह्यं प्रति सुसंस्कृतम्॥
द्विमाषं कानकफलं विषञ्चापि द्विमाषिकम्।
निर्गुण्डीस्वरसेनैव शोषयेत्तत्प्रयत्नतः॥९३३॥
सार्धरक्तिप्रमाणेन वटी कार्या सुशोभना॥
सर्वज्वरहरी चैषा भेदिनी दोषनाशिनी ९३४
आमाजीर्णप्रशमनी कामलापाण्डुरोगहा।
वह्निदीप्तिकरी चैषा जठरामयनाशिनी ९३५॥
उष्णोदकानुपानेन दातव्या हितकारिणी।
भाषितो लोकनाथेन ज्वरमातङ्गकेसरी ९३६॥

भै. र, र. सु, ज्वरे।

भाषा—शुद्धपारा, गन्धक और हरिताल, सोनामाखी, त्रिकटु, हर्रे, यवक्षार, सज्जीक्षार, सेधानमक; हींग, नीमकी मज्जा, शुद्धकुचिला, चित्रकके बीज ये प्रत्येक १–१ माशा, शुद्धबछनाग और

धतूरेके बीज २–२ माशे लेकर पारेगन्धककी नीलवर्ण कज्जलीकर सबचीज़ोंके बारीक चूर्णमेमिलाकर सभालूके रससे भावना देकर १॥ डेढ रत्तीकी गोलियें बनाकर रखछोडे। इनमेसे १–१ गोली उचितानुपानके साथ देनेसे आमाजीर्ण, कामला, पाण्डु, समस्त ज्वर इनको यह नष्ट करताहै। गरमपानीके साथ देनेसे उदरके रोगोंको नष्टकर अग्निको दीप्तकरताहै॥

## २२४ ज्वरमारीरसः

शुद्धं भस्मीकृतं सूतं तोलकैकं बलेर्द्वयम्।
मृताभ्रताम्रलोहानां प्रत्येकं तोलकं हरेत्॥
समस्तमेकतः कृत्वा दिनानि त्रीणि मर्दयेत्।
शुष्कमर्दनयोगेन ततो वटरसैः रसम् ९३८॥
दिनमेकं कर्णिनीरै रजमोदोद्भवै रसैः।
यवानीसलिलै मर्द्यो जयन्तीजैश्च चिक्कणैः॥
तर्कारीसलिलै मर्द्यो मण्डूकीनीरतस्तथा।
तथा शीतलिकानीरै र्निम्बूजैस्तिलपर्णिजैः॥
चित्रजैः शिग्रुजै र्हस्तिमूलजैः कृष्णधूर्तजैः
भृङ्गराजरसैः श्वेतविष्णुक्रान्तारसैः पुनः॥
प्रत्येकमेभिरेकैकं दिनं मर्द्यो यथाक्रमम्।
गोलिकां बदरस्थूलां कृत्वा सम्यग्विशोषयेत्।
नवज्वरे महाघोरे सन्निपातेऽतिदारुणे॥
प्रदद्याद्वटिकामेकामार्द्रकद्रवसंयुताम् ॥९४३॥
आर्द्रकस्यानुपानन्तु विदधीत विचक्षणः॥
रसप्रयोगमात्रेण ज्वरो नश्यत्यसंशयम् ९४४॥
सन्निपातं क्षयं याति रसेन्द्रस्य प्रभावतः॥
ज्वरो वा सन्निपातो वा न हन्याद्रससेविनम्॥
ज्वरमारीति विख्यातो रसेन्द्रः स तु दुर्लभः
मुद्गक्वाथेन भक्तंहिरसेऽस्मिन् सम्प्रयोजयेत्
दृष्टप्रभावः सृष्टोऽत्र लोकोपकृतिहेतवे॥
देवीशास्त्रानुसारेण विविच्य प्रतिपादितः॥

रसाल, ज्वरे

**भाषा**—शुद्धकरके माराहुआ पारा १ तोला, शुद्धगन्धक २ तोला, अभ्रक-ताम्र-लोह इनकी भस्मे १–१ तो., लेकर सबको इकट्ठेकर ३ दिनतक सूखे रगडकर वटकी जटाओंके क्वाथसे एक रोज़ मर्दनकर हस्तिकर्णपलाश, अजमोदा, अजवाइन, जैत, बला, अरणी, ब्राह्मी, जङ्गली कपास, नीबू, हुरहुर, चित्रक, सहिजन, हस्तिकर्णपलाश, काला धतूरा, भृङ्गराज, सफेद फूलकी अपराजिता इन प्रत्येकके रससे १–१ रोज़ मर्दनकर वेरबराबर गोलियें बनाकर छायामे सुखाकर रखछोड़े। इनमेसे १–१ गोली अदरखके रसकेसाथ देनेसे घोरनवज्वर सन्निपात इनको यह नष्ट करता है। यह बहुतही अनुभूत प्रयोग है लोगोंके उपकारकेलिये लिखागयाहै

## २२५ ज्वरमुरारिरसः ( प्रथमः )

शुद्धं सूतं शुद्धगन्धं विषञ्च दरदं पृथक्।
कर्षप्रमाणं कर्षार्धं लवङ्गं मरिचं पलम्॥९४८॥
शुद्धं कनकबीजञ्च पलद्वयमितं तथा।
त्रिवृताकर्षमेकञ्च भावयेद्दन्तिकाद्रवैः॥९४९॥
सप्तधा च ततः कुर्याद्गुटीं गुञ्जामितां शुभाम्।
ज्वरमुरारिनामायं रसो ज्वरकुलान्तकः९५०
अत्यन्ताजीर्णपूर्णे च ज्वरे विष्टम्भसंयुते।
सर्वाङ्गग्रहणे गुल्मे चामवातेऽम्लपित्तके ९५१
कासे श्वासे यक्ष्मरोगेऽप्युदरे सर्वसम्भवे॥
गृध्रस्यां सन्धिमज्जस्थे वाते शोथे च दुस्तरे॥
यकृति प्लीहरोगे च वातरोगे चिरोत्थिते।
अष्टादशसु कुष्ठेषु सिद्धो गहननिर्मितः॥९५३॥

र. इ, भै र., सन्निपाते।

**भाषा**—शुद्धपारा, गन्धक, बछनाग और शिंगरिफ १–१ तोला, लौंग आधा तोला, मरिच १ पल, शुद्धधतूरेके बीज २ पल, निशोत १ तोला, लेकर पारेगन्धककी नीलवर्ण कज्जलीकर सब चीजोंके बारीक चूर्णमे मिलाकर दन्तीमूलके क्वाथसे सात भावनाएं देकर, १–१ रत्तीकी गोलियें बनाकर रखछोडे। अत्यन्त अजीर्ण और विष्टम्भयुक्तज्वर, सब अङ्गका जकड़ना, गुल्म, आमवात, अम्लपित्त, कास, श्वास, राजयक्ष्म, उदर, गृध्रसी, सन्धि और मज्जस्थवायु, दुस्तरशोथ, यकृत् और प्लीहरोग, बहुत

दिनका वातरोग, १५ प्रकारका कुष्ठ इन सबको यह नष्ट करता है ॥ २२५ ॥

### २२६ ज्वरमुरारिरसः ( द्वितीयः )

हिङ्गुलश्च विषं व्योषं टङ्कणं नागराभये ।
जयपालसमायुक्तं सद्योज्वरविनाशनम् ९५४

र. स., भै. र., र सु, ज्वराधिकारे ।

भाषा—शुद्धशिंगरिफ और बछनाग, त्रिकटु, भुनासुहागा, सोंठ, हर्रे, जमालगोटा ये सब समभाग लेकर कूट कपड़छानचूर्णकर रखछोड़े । इसमेसे २ रत्तीकी मात्रा देनेसे यह सद्योज्वरको दूर करता है।

### २२७ ज्वरमुरारि रसः ( तृतीयः )

शुद्धे ताम्रस्यपात्रे द्विपलपरिमिते,
हिङ्गुलं वह्निभागं,
निक्षिप्यावृत्तसन्धौ लवणभृतियुते,
भाजने सम्पचेत्तत् ।
यामान्सामुद्रसंख्यान् तदनुचमृदितं,
पात्रयुक्तंजयाम्भः,
जानीयात्कश्चिदेनंज्वरमुरदमनं सद्गुरोरङ्घ्रिभक्त्या
गुञ्जा देयाऽस्यार्द्रवारा प्रभूते शर्करां तथा ।
विषमे वह्निमान्द्ये च कणाक्षौद्रानुपानतः ९५६

र. शं., ज्वरे ।

भाषा—२ पल शुद्धताबेका सम्पुट बनाकर उसमे ३ पल शिंगरिफ डालकर सन्धिबंदकर ३–४ कपड़मिट्टीकीहुई हंडीमे रखकर ऊपरसे बारीक पिसा हुआ नमक भरकर हडीपर ढकन रख कपड़मिट्टी देकर सुखाले । फिर चूल्हेपर रख ४ रोज़की खूब कड़ी आचदे । स्वाङ्गशीतल होनेपर निकालकर तावेके सम्पुटको खूब खरलकरके भागके रसमे सातरोज मर्दनकर १–१ रत्तीकी गोलियें बनाकर रखछोडे । इनमेसे १–१ गोली शकरमिले हुए अदरखके रसके साथ देनेसे यह तमाम ज्वरोको दूर करता है विषमज्वर और मन्दाग्निमे पीपल और मधुके साथ देना चाहिये ॥ २२७ ॥

### २२८ ज्वरमुरारिरसः ( चतुर्थः )

मनुजमूत्रविभावितखर्परं
गरलतालकताप्यसुवाप्ययुक् ।
सुलघुनिम्बुकचुक्रकभावितं
झटिति हन्ति नवज्वरमुल्बणम् ॥
ज्वरमुरारि रयं समयं विना
हरति नात्र कदापि विचारणा ॥९५७॥

टों, नवज्वरे ।

भाषा—खर्परको २१ रोज़ नरमूत्रमे भावित करके उसकी बराबर का ताज़ा मक्खन मिलाकर नीबूकारस देकर यहातक घोटेकि उसकी चिकनाई सब निकलजाय । फिर शुद्धबछनाग, रसमाणिक्य सोनामाखी और कुठ, इनसबको समभागलेकर कागज़ी नीबू और चूकेके रससे ३–४ रोज़ मर्दनकर १–१रत्तीकी गोलिया बनाकर रखछोड़े । इनमेसे वात और कफजात नवज्वरमे सोंठ अथवा तुलसीके रसके साथ, पित्तजमे धनिया, पित्तपापड़ा, मुलहठी और द्राक्षके हिमके साथ देनेसे यह समयकी अपेक्षा न करके तत्क्षण ज्वरको उतार देता है॥

### २२९ ज्वरराजरसः (चातुर्थिकनिवारणः)

भागैको रसराजः स्याद्भागः स्याद्धेममाक्षिकात्
भागद्वयं शिलायाश्च गन्धकस्य त्रयो मताः ॥
तालस्याष्टादशैव स्युः शुल्वं स्याद्भागपञ्चकम् ।
भल्लातकास्त्रयो भागा सर्वमेकत्र चूर्णयेत् ९५९
वज्रीक्षीरप्लुतं कृत्वा दृढे मृन्मयभाजने ।
विधाय सुदृढां मुद्रां पचेद्यामचतुष्टयम् ९६०
स्वाङ्गशीतलमुद्धृत्य मर्दयेत्सुदृढं पुनः ।
गुञ्जाचतुष्टयश्चास्य पर्णखण्डेन दापयेत्९६१॥
ज्वरराजः प्रसिद्धोऽयमष्टज्वरनिवारणः ।
प्रातःकाले प्रयोक्तव्यः पथ्यं तक्रौदनं भजेत्
तुत्थभागेन संयुक्तश्चातुर्थिकनिवारणः॥९६२॥

रसायनस., ना वि., र म, र म मा., यो. म, र. सु, भै र., र का, विषमज्वरे । रसायनसङ्ग्रहेऽस्यद्वितीय पाठ॰ ज्वरहस्तिहरिः, इतिनाम्ना स्थापित । र. सु.

भैषज्यरत्नावल्या च **रसराजेति** नाम । र का, **ज्वरारिरिति** नाम, तथाच रसादर्द्धमाक्षिकं नियुज्य शिलास्थाने सिता नियोजिता ।

**भाषा**—शुद्धपारा और सोनामाखी १–१भाग, शुद्धमैनसिल २भाग, शुद्धगन्धक३भाग, शुद्धहरिताल १८भाग, ताम्रभस्म ५भाग, मिलावे और अभ्रकभस्म ३-३भाग,इनसबको इकट्ठेकर गन्धकपारेकी-नीलवर्ण कज्जलीकर और सबचीजोंको बारीकपीसकर मिलावोंको उस चूर्णकेसाथ कूटे। फिर इसे थूहरके दूधसे तरकर तीनचार कपडमिट्टी दीहुई मज़बूत मिट्टीकी हंडीमेंधरकर ऊपर ढक्कन लगाय मुहपर ३–४कपडमिट्टी देकर सूखनेपर ४पहरकी अग्निदेवे । स्वाङ्गशीतल होनेपर निकालकर खूबबारीक मर्दनकर रखछोडे । इसमेंसे ४ रत्ती पके पानके साथ देनेसे ८ प्रकारके ज्वरोंको यह नष्टकरताहै । प्रातः कालमे इसका प्रयोगकरना उचित है छाछ, दूध खानेको देना । इसी रसमेंपारेकी बराबर तुल्यमिलादिया जायतो यह चातुर्थिक ज्वरको निवृत्तकरता है उसवक्त इसकानाम **चातुर्थिकनिवारण** होगा ॥ २२९ ॥

## २३० ज्वरारिपुरसः

**रसस्यैकं भागं दरदझषपित्तामृतबलीन् ,**
**द्विभागान् सौभाग्यं त्रिरथ मरिचंवेदतुलितम्।**
**विमर्द्यार्द्रद्रावै र्ज्वरसुररिपुश्चेद्विरचितो ,**
**ज्वराणाञ्जेताऽयं नियतदिवसेषूद्भववताम् ॥**
**जडिम्न्यार्द्रद्रावैः ससितजरणाम्भोभिरपरैः,**
**तृतीयादौ युक्तः सुरसदलवार्भिः समरिचैः ॥**

र. प., ज्वरे ।

**भाषा**—शुद्धपारा १ भाग, शुद्धशिंगरिफ, मछलीकापित्त, बछनाग और गन्धक २-२ भाग, सुनासुहागा ३ भाग, मरिच ४ भाग, लेकर पारे गन्धककीनीलवर्ण कज्जलीकर सबको इकट्ठे मिलाकर अदरखके रससे १–२ रोज घोटकर ३–३ रत्तीकी गोलियें बनाकररखछोड़े । इनमेंसे १–१ गोली-अदरखके साथ अथवा जीरेके पानीमे शक्कर मिलाकर उसके साथ अथवा मरिच डालेहुए तुलसीके रसके साथ देनेसे तृतीयक वग़ैरह विषमज्वरोंको यह नष्टकरताहै । इस अकेले योगसे सबतरहके ज्वर नष्टहोतेहैं फिरवैद्योंको दो चार योगोंके रखनेकी कोई जुरूरत नहीं ॥ २३० ॥

## २३१ ज्वरवैरिवटकः

**रसो गन्धकनाभी च बीजमुन्मत्तसम्भवम् ।**
**द्वे द्वे पलेतथैतानि ह्येकाशुण्ठी च पिप्पली९६४**
**पलानि पञ्च मरिचान्मर्दयेद्गुडवारिणा ।**
**गुञ्जामात्रं प्रकुर्वीत गुडेनैव प्रयुज्यते ॥९६५॥**
**उष्णोदकानुपानेन भेषजं ज्ञानपारगैः ।**
**ज्वरवैरीति विख्यातं सर्वज्वरविनाशनम् ९६६**

व. रा., वै. चि , ज्वरे ।

**भाषा**—शुद्धपारा, गन्धक, कस्तूरी, शुद्ध धतूरेके बीज ये प्रत्येक २–२ पल, सोंठ और पीपल १–१ पल, मरिच ५ पल, इनसबको लेकर पारे गन्धककी कज्जलीकर सबके बारीक चूर्णमे मिलाकर गुड़के पानीसे १–२ रोज़ मर्दनकर १–१रत्तीकी गोलियें बनाकर १–१गोली गरमपानीके साथ देनेसे सबज्वरोंको नष्टकरताहै ॥ २३१ ॥

## २३२ ज्वरशूलहररसः

**रसगन्धकयोः कृत्वा कज्जलीं भाण्डमध्यगाम्।**
**तत्राधोवदनां ताम्रपात्रीं संरुध्यशोषयेत् ९६७॥**
**पादाङ्गुष्ठप्रमाणेन चुल्यां काष्ठेन तां पचेत् ।**
**यामद्वयं ततस्तत्स्थं रसपात्रं समाहरेत् ॥९६८**
**सञ्चूर्ण्य गुञ्जायुगलं त्रितयं वा विचक्षणः ।**
**ताम्बूलदलयोगेन दद्यात्सर्वज्वरेष्वमुम् ॥९६९**
**जीरसैन्धवसंलिप्तवक्त्राय ज्वरिणे हितम् ।**
**स्वेदोद्गमो भवत्येव देवि सर्वेषु पाप्मसु॥९७०**
**चातुर्थिकादीन्विषमान्नवमागामिनं ज्वरम् ।**
**साधारणं सन्निपातं जयत्येव न संशयः ॥९७१**

र. चि., र सु, भै. र., र. का , ज्वराधिकारे ।

नष्ट करता है। और तत्तद्रोगहरानुपानके साथ देनेसे समस्त अन्यरोगोंको दूर करता है। शूलमे इसकी ९ रत्ती मैनफलके साथ देनेसे उसको नष्ट करता है। त्रिकटुके क्वाथके साथ २१ रोज़तक देनेसे परिणामशूल नष्ट होता है। इसीतरह अनुपान विशेषसे यहरस सबरोगोको दूर करता है २८५

## २८६ ज्वरान्तकोरसः (तृतीयः)

भास्करो गन्धकः शार्वो देवी विहगतीक्ष्णकम्।
शोणितं गगनञ्चैव पुष्पकञ्च महेश्वरम्॥
भूनिम्बादिगणै भाव्यं मधुना गुटिका दृढा।
चातुर्थिकं तृतीयञ्च ज्वरं सन्ततकं तथा॥
आमज्वरं भूतकृतं सर्वज्वरमपोहति॥११५१॥

भै. र., ध.,ज्वराधिकारे।

टि०—अत्र शार्वोरस., देवी-सौराष्ट्रमृत्तिका, विहगं, स्वर्णमाक्षिकम्। पुष्पक कासीसं महेश्वर कनकबीजमन्यत् सुगमम्। ताम्रादीना समभागचूर्णं भूनिम्बादिक्काथेन भावयेत्। भूनिम्बाद्यष्टादशद्रव्याणि सर्वद्रव्यतुल्यानि गृहीत्वा अष्टावशिष्ट क्वाथं कृत्वा दिनत्रयं विभाव्य विशोष्य मधुना विमर्द्य अनुरूप लिहेत्॥ भूनिम्बदारुदशमूलमहौषधाब्दतिक्तेन्द्रबीजधनिकेभकणाकषाय। इति भूनिम्बाद्यष्टादशद्रव्याणि।

भाषा—ताम्रभस्म, गन्धक, पारा, फिटकड़ी, सोनामाखी, लोहभस्म, शिंगरिफ, अभ्रकभस्म, कसीस, रसाञ्जन, धतूरेके बीज समभाग लेकर पारेगन्धककी नीलवर्ण कज्जलीकर दूसरीचीज़ोंके अत्यन्त सूक्ष्मचूर्णमे मिलाकर भूनिम्बादि गणके क्वाथसे भावना देकर सुखाकर मधुसे १–१ रत्तीकी गोलिये बनाकररखछोड़े। इनमेसे १–१ गोली तत्तद्रोगहरानुपानके साथ देनेसे चातुर्थिक, सन्तत, आमज्वर, भूतज्वर और तमामज्वर नष्टहोतेहै। पुरानेबुखारोंमे भूनिम्बादिगणकेसाथ ही इसको देनाचाहिये। चिरायता, दारुहल्दी या देवदारु, वेलगिरी, अरलू, गंभारी, पाटला, अरणी, शालिपर्णी, पृश्निपर्णी, दोनोंकटेरी, गोखरू, सोंठ, नागरमोथा, कुटकी, इन्द्रजव, धनिया और गजपीपल यह भूनिम्बादिगणहै॥२८६॥

## २८७ ज्वरान्तकोरसः (पित्तादिः) ४

सूताभ्रं हिमपाथोदं टङ्कणाञ्जनतालकम्।
केतकीस्तनसर्पाक्षीबृहतीयकमारिपैः ११५२
विष्णुक्रान्तादीप्यसहावर्पाभूबहुपुत्रिजैः।
पृथग्दिनं मर्दयित्वा गुञ्जामात्रं सशर्करम्॥
एलाधान्याकमधुकलाक्षाचन्दनरोचनाः
नारिकेलोदके पिष्ट्वा निष्कमात्रं पिबेदनु॥
अम्लपित्ते रक्तपित्ते मूत्रकृच्छ्रेऽप्यसृग्दरे।
पित्तज्वरे प्रदातव्यः पित्तज्वरकुलान्तकः॥
कूष्माण्डशिग्रू जीवन्ती वार्ताकं तण्डुलीयकम्।
गोतक्रं नवनीतञ्च मौद्गशाल्योदनं हितम्॥
यथावस्थं यथावह्नि प्रयुञ्ज्याद्भिषगुत्तमः॥

सू. प्र, ज्वरे।

भाषा—पारदभस्म अथवारससिन्दूर, अभ्रकभस्म, खस, नागरमोथा, भुनासुहागा, रसाञ्जन, हरितालभस्म अथवा रसमाणिक्य, येसवसमभाग लेकर वारीकचूर्णकर केतकीकीजड़,सर्पाक्षी,बड़ी भटकटैयाकेफल,मरसा,विष्णुक्रान्ता,अजमोदा, मापपर्णी, मुद्गपर्णी, इटसिट, शतावरी इनप्रत्येकके स्वरससे १–१ रोज़ मर्दनकर १–१ रत्तीकी गोलियें बनाकर रखछोड़े। इनमेसे १–१ गोली इलायची, धनिया, मुलहठी, पीपलकीलाख, चन्दन, गोरोचन, सव समभागलेकर कूटकर इसमेसे ४ माशे अथवा आधा तोला नारियलके जलमे विसकर शक्कर मिलाय इसके साथ पीनेसे अम्लपित्त, रक्तपित्त, मूत्रकृच्छ्र, रक्तप्रदर, पित्तज्वर इनसबको यह नष्टकरताहै। इसमे पथ्यकुंहडा, सहिजन, डोडी, वृन्ताक, चौलाई, गायकी छाछ, मक्खन, मूगऔर पुराने चावल येसव अवस्था और अग्निवल देखकर देने उचितहै॥

## २८८ ज्वरान्तकोरसः (पञ्चमः)

दरदोत्थितसूतेन्द्रं बलिमभ्रञ्च पार्वतम्।
सर्वं विमर्दितं कारवल्लीतोयेन भावितम्॥
सप्तधा मीनपित्तेन मर्दनात्स्याद्रसोत्तमः।
शृङ्गवेरस्यतोयेन द्विवारंपरिभावयेत्॥११५८॥

पिप्पलीचूर्णसंयुक्तो वातश्लेष्मज्वरञ्जयेत् ।
यथानुपानयोगेन जीर्णज्वरमपोहति ॥
चातुर्थिकादीन्विषमान्निश्चयेन ज्वरान्तकः ॥
र. सु , ज्वराधिकारे ।

भाषा—शिंगरिफसे निकालाहुआ पारा,गन्धक, अभ्रकभस्म और सोमल येसब समभाग लेकर करेलेके रसमे ७ दिनमर्दनकर मछलीके पित्तकी ७ भावनाएं देकर दोभावना अदरखके रसकी देकर आधीरत्तीसे १ रत्ती तककी गोलियें बनाकर रखछोड़े। इनमेसे १—१ गोली ४ रत्ती पीपलके चूर्णकेसाथ मिलाकर अदरख वगैरहके रसकेसाथ देनेसे वायु और कफके ज्वरको दूरकरताहै । अनुपान विशेषोंसे यह चातुर्थिकादि विषमज्वरोंको नष्टकरताहै ॥ २८८ ॥

## २८९ ज्वरान्तकलोहम् ( बृहत् )

रसं गन्धं तोलकञ्च जातीकोषफले तथा ।
हेमभस्म तु पादैकं तोलार्धं रूप्यलोहकम् ॥
शिलाजत्वभ्रकञ्चैव भृङ्गराजञ्च मुस्तकम् ।
केशराजमपामार्गं लवङ्गञ्च फलत्रिकम् ॥
वराङ्गवल्कलञ्चैव पिप्पलीमूलमेव च ।
सैन्धवञ्च विडञ्चैव गुडूचीचूर्णमेव च ॥
कण्टकारीं रसोनञ्च धान्यकं जीरकद्वयम् ।
चन्दनं देवकाष्ठञ्च दार्वीन्द्रयवमेव च ॥
किराततिक्तकं वालं तोलकञ्च समाहरेत् ।
द्वितोलं मरिचं देयं भावयेदार्द्रकद्रवैः ॥
माषार्धं भक्षयेत्प्रात मधुना मधुरीकृतम् ।
ज्वरं नानाविधं हन्ति शुक्रस्थं चिरकालजम् ॥
साध्यासाध्यविचारोऽत्र नैव कार्यो भिषग्वरैः ।
अन्तर्धातुगतञ्चैव नाशयेन्नात्र संशयः ॥
भूतोत्थं श्रमजंचापि सन्निपातज्वरन्तथा ।
असाध्यञ्च ज्वरं हन्ति यथा सूर्योदयस्तमः ॥
गरुडञ्च समालोक्य यथा सर्पः पलायते ।
तथैवास्य प्रसादेन ज्वरः सोपद्रवो ध्रुवम् ॥
बलदं पुष्टिदञ्चैव कामलापाण्डुरोगनुत् ।
सदा तु रमते नारीं न वीर्यं क्षयतां व्रजेत् ॥
प्रमेहं विविधञ्चैव विविधां ग्रहणीं तथा ।
अनुपानविशेषेण सर्वव्याधिं विनाशयेत् ११७०
र. सं., ज्वराधिकारे ।

भाषा—शुद्धपारा,गन्धक १—१ तोला,जायफल जावित्री, सुवर्णभस्म ये प्रत्येक ३—३ माशे, रजत और लोहभस्म ६—६ माशे, शिलाजीत, अभ्रकभस्म, भगरा, नागरमोथा, कालाभगरा, अपामार्ग, लौंग, त्रिफला, तज, पिपलामूल, सेंधानमक, विडनमक, गुडूच, भटकटैया, लशुन, धनिया, दोनोंजीरे, चन्दन, देवदारु, दारुहल्दी, इन्द्रजव, चिरायता, सुगन्धवाला ये प्रत्येक १—१ तोला लेकर सबको कूटकपड़छानकर पारे गन्धककी नीलवर्ण कज्जलीमे मिलाकर २ तोले मरिचकाचूर्ण मिलाकर अदरखके रसकी १—२ भावनाएं देकर आधे आधेमाशेकी गोलिये बनाकर मधुकेसाथ मिलाकर खानेसे शुक्रस्थ चिरकालज, अन्तर्धातुगत, भूतोत्थ, श्रमज, सन्निपातज, साध्य अथवा असाध्य इन सब ज्वरोको और कामला, पाण्डु तथा षण्ढत्व, बीसप्रकारके प्रमेह, नानातरहकी ग्रहणी इनसबको यह अनुपान विशेषसे दूर करता है । इसमे साध्यासाध्यका विचार नहीं करना चाहिये ॥ २८९ ॥

## २९० ज्वरारिरसः ( प्रथमः )

शुद्धसूतं द्विधा गन्धं विषञ्चैव कटुत्रयम् ।
नागभस्म शिलाचैव प्रत्येकं कर्षमानकम् ॥
शुद्धतालार्धकर्षञ्च शुल्वमेकत्र कारयेत् ।
धुस्तूरस्य च बीजानि कार्षिकाणि प्रकल्पयेत् ॥
रोहितोद्भवपित्तेन सूर्यक्षीरार्द्रकाम्बुना ।
मर्दयेदुदयास्तञ्च चणकाभा वटी कृता ॥
आर्द्रकस्वरसैः कर्षैं मधुमाषसमायुतम् ।
भक्षयेत्प्रातरुत्थाय ज्वरारिरससञ्ज्ञितम् ११७४
वातिकं पैत्तिकञ्चैव कफजं नाशयेद्ध्रुवम् ।
वातपित्तसमुद्भूतं वातश्लैष्मिकमेव च ॥११७५
भयादुत्पत्तिकं वापि शोकोत्पन्नमथापि वा ।
अभिचाराभिशापोत्थं भूतोत्थञ्च ज्वरञ्जयेत् ॥

मेदःप्राप्ते सन्ततश्च रसस्थे तु ज्वरे तथा।
सन्निपातज्वरे देयो मधुव्योपसमायुतः॥
घर्मपित्तं तथाकम्पं दाहं हन्ति न संशयः।
इन्द्रवज्रो यथा वृक्षं तथा ज्वरविनाशनः॥
वर्जयेत्क्षीरमांसञ्च दधितक्रसुराघृतम्।
ज्वरे मांसास्थिगे चैव रक्तस्थे तु ज्वरे नृणाम्॥
शैत्ये दाहे तथा घर्मे प्रलापे चातुराहिके।
महावेगे ज्वरे चैव जीर्णे चापि प्रदापयेत्॥
र. स, र. चं., ज्वराधिकारे।

भाषा—शुद्धपारा १ भाग, गन्धक २ भाग, शुद्धवछनाग, त्रिकटु, नागभस्म, मैनसिल, येप्रत्येक १–१ तोला, शुद्धहरिताल और ताम्रभस्म आधा आधा तोला, शुद्धधतूरेकेबीज १ तो., इनसबको कूटकपड़छानकर पारे गन्धककी नीलवर्ण कज्जलीमे मिलाकर रोहितमछलीकेपित्त, आकके दूध और अदरखके रससे सूर्योदयसे सूर्यास्ततक मर्दनकर चने प्रमाण गोलियें बनाकर रखछोड़े। इनमेसे १ माशा शहदमिलेहुए १ तोला अदरखके रसकेसाथ सवेरे देनेसे वातिक, पैत्तिक, कफज, वातपित्तज वातश्लैष्मिक, भयशोकज, अभिचाराभिघातज, भूतोत्थ, मेदःप्राप्त, रसस्थ, सतत और सन्निपातज्वरोंको यह नष्ट करता है। त्रिकटु और मधुके साथ देनेसे सन्निपात, अत्यन्तपसीना, कम्प तथा दाहको इसतरह नष्ट करता है जैसे बिजली दरख़्तोको नष्ट करती हैं। इसमे दूध, मास, दही, छाछ, मद्य और घृत ये छोडदेने चाहियें॥ २९०॥

## २९१ ज्वरारिरसः ( द्वितीयः )

रसगन्धककासीसत्र्यूपणातिविषाऽभयाः।
चम्पकत्वक् च सर्वाणि यवतिक्तारसै र्दिनम्
मर्दयित्वा वटी कार्या रक्तिकाद्वयसम्मिता।
आर्द्रकस्वरसेनाथ दापयेज्ज्वरशान्तये ११८२॥
रसै र्वा बहुमञ्जर्याः केवलेन जलेन वा।
नवज्वरं महाघोरं वातपित्तकफोद्भवम् ११८३
सोपद्रवं त्रिदोषाख्यं जीर्णञ्च विषमज्वरम्।
ज्वरारिरसनामाऽसौ नाशयेन्नात्र संशयः॥
र, चं., ज्वराधिकारे।

भाषा—शुद्धपारा, गन्धक, कसीस, त्रिकटु, अतीस, हर्रे, स्वर्णचम्पककी छाल, येसब समभाग लेकर नितलीके रससे १ रोज़ मर्दनकर २–२ रत्तीकी गोलियें बनाकर रखछोड़े। इनमेसे १–१ गोली अदरखके रसके साथ अथवा तुलसीके रस अथवा पानीके साथ देनेसे वात, पित्त और कफसे उत्पन्न हुआ महाघोर नवज्वर और उपद्रव सहित त्रिदोषज, जीर्ण तथा विषम इनसबज्वरोको यह नष्ट करता है॥ २९१॥

## २९२ ज्वरारिरसः

## ( ज्वरान्तकः–ज्वरमुरारिः ) ( ३ )

दरदजनितसूताद्भाग एको बलेर्द्वौ,
त्रय इह च मृताभ्राद्धिङ्गुलो वेदभागाः।
अथ मृदितमशेषं सप्तधार्द्रोत्सुपर्व्या-
स्तदनु च झषपित्तै र्भावितः स्याज्ज्वरारिः॥
ज्वरमभिनवमुग्रं वार्द्रनीरै र्द्विवल्ल-
श्चिरजमपि जयेद्वा पिप्पलीक्षौद्रयुक्तः ११८५

र.शं, वा., र.प,टो, ज्वराधिकारे वाहटे ज्वरमुरारीति नाम। टि०–अयं पाठो र,श, टोडरानन्दयोर्ज्वरान्तक इति नाम्ना विन्यस्त। रसपद्धत्या तु ताम्रमधिकतयाप्रक्षिप्तमतस्तत्र "रस १ ताम्र २ गन्ध ३ गगन ४ दरदा ५ क्रमेणवर्धिता नियोजिता यथा–हिङ्गुलोद्भवताम्रगन्धगगनम्लेच्छान् क्रमाद्वर्धितानिति" ताम्रस्याधिकतया प्रवेशात्पारदादग्रे सङ्ख्यायामेकैकस्य सञ्जातो व्यत्यास एतावानेव विशेषो रसस्तु एकएव।

भाषा—शिंगरिफसे निकालाहुवा पारा १ भाग, गन्धक २ भाग, अभ्रकभस्म ३ भाग, शिंगरिफ ४ भाग, लेकर सबकी कज्जलीकर अदरख, करेला, मछलीका पित्त इनसे सात सात भावनाए देकर २–२ रत्तीकी गोलियें बनाकर रखछोड़े। इनमेसे १–१ गोली अदरखके रसकेसाथ देनेसे नवज्वर और पीपल-मधुकेसाथ देनेसे जीर्णज्वरको यह नष्ट करता है॥ २९२॥

२९३ ज्वरारिरसः ( चतुर्थः )

दरदबलिरसानां शुद्धनागाभ्रकाणां,
सुभगविडशिलानां सर्वमेकत्र योज्यम् ।
विपिननृपदलोत्थैः शोषयेन्मर्दयेच,
दिवसदशसमाप्तौ वर्तिकां निर्मिमीत ११८६
गुञ्जाप्रमाणतो नित्यं भक्षयेदार्द्रकेण वै ।
सर्वशूलविनाशार्थं कफशोथविनाशनम् ॥
दत्तमात्रो ज्वरं हन्ति ज्वरारिश्च निगद्यते ॥

र र, भै र, ध, ज्वराधिकारे । भै. रत्नावल्याम् शुद्धनागाभ्रक मित्यस्य स्थाने शुल्वनागाभ्रकाणा मिति पाठ ।

भाषा—शुद्धशिंगरिफ, गन्धक, पारा, नागभस्म, अभ्रकभस्म, भुनासुहागा, विडनमक, मैनसिल येसब समभागलेकर पारे गन्धककी नीलवर्ण कज्जलीकर इकट्ठे मिलाकर अमिलतासके पत्तोंके रससे सुखासुखाकर दसरोज़तक मर्दनकर १–१ रत्तीकी गोलियें बनाकर रखछोड़े । इनमेसे १-१ गोली अदरखके रसके साथ देनेसे समस्तशूल, कफशोथ और ज्वर इनसबको यह नष्ट करता है२९३

२९४ ज्वरारिरसः ( पञ्चमः )

खट्वाङ्गयन्त्रेण समुद्धृते द्वे
मल्लस्फटी तुल्यतया गृहीते ।
कृष्णोपणे तद्द्विगुणे स्फटीं तां
कन्याद्रवैःश्लक्ष्णतरं विमर्द्य ॥११८८॥
वटीर्विधायाथ ददीत मुद्ग-
मानां द्विसन्ध्यं ज्वरिताय चैकाम् ।
जलानुपानेन रसो ज्वरारि-
र्निरस्य रोगं सुखितां करोति ११८९

रसायनसार, ज्वरे ।

भाषा—सफेद सोमल और फटकडी समभागलेकर एक हडीमे आधा फिटकड़ीका चूर्ण नीचे बिछाकर बीचमे सोमल रख आधी फिटकड़ी ऊपर रखदे और दूसरी हडीको रख डमरू यन्त्र बनाकर ४ पहरकी अग्निदेवे । स्वाङ्गशीतल होनेपर ऊपर उडेहुए और आजूबाजूमे लगेहुए सोमलको खुरचकर नीचेकी फूलीहुई फिटकड़ीमे मिलाकर इनदोनोंकी बराबर पीपल और मिरच का चूर्ण डालकर घीकुआरके रससे १–२ रोज मर्दनकर मूंग बराबर गोलियें बनाकर रखछोडे । इनमेसे १–१ गोली सुबहशाम ठंढेजलके साथ देनेसे यह सबप्रकारके ज्वरोको दूरकर आदमीको तन्दुरुस्त बनाता है २९४

२९५ ज्वरारिरसः ( महान् ) ( षष्ठः )

चन्द्रोदयः पारदगन्धकौ च
समानभागाः समपिप्पलीकाः
क्षौद्रेण लीढा पवनादिजातान्
सर्वाञ्ज्वरान्घ्नन्ति बुभुक्षयन्ति ॥
विष्टम्भकं कासमथापि कुक्षे
रुजंसमस्ताङ्गभवाश्च शीघ्रम् ।
किञ्चिच कालं यदि सेविताः स्यु-
र्नैर्बल्यनाशाय महौषधानि ॥
महाज्वरारीत्यभिधो रसोऽयं
धनाढ्य नॄणां परितोषहेतुः॥११९१॥

रसायनसार, ज्वरे ।

भाषा—चन्द्रोदय, शुद्धपारा और गन्धक समभाग, इनसबकी बराबर पीपलका चूर्ण मिलाकर रखछोडे । इसमेसे ४–४ रत्तीकी मात्रा मधु वगैरहके साथ देनेसे यह समस्त ज्वर, विष्टम्भ, कास, कुक्षिशूल, समस्ताङ्गपीडा इनसबको दूर करता है । यदि लगातार इसका कुछदिन सेवन किया जायतो अशक्तिको दूरकर भूखको अत्यन्त जागृत करता है ॥ २९५ ॥

२९६ ज्वरारिरसः ( सप्तमः )

रसगन्धकताम्राणि नेपालं गुग्गुलुं विषम् ।
मधुना गुटिका चैषा सद्योज्वरविनाशिनी ॥

र को, र क ल, र. का, सद्योज्वरे । र कामधेनौ ज्वराङ्कुशेति नाम स्थापितम् । सर्वज्वराधिकारे ।

भाषा—शुद्धपारा और गन्धक, ताम्रभस्म, शुद्धजमालगोटा, गुग्गुल और शुद्धवछनाग सबसम-

भाग लेकर कूटकपडछानकर पारे गन्धककी नीलवर्ण कज्जलीमें मिलाकर मधुके साथ १-१ रत्तीकी गोलियें बनाकर रखछोड़े। इनमेसे १-१ गोली समयोचितानुपानके साथ देनेसे यह नवीनज्वर, गठिया और उपदशको दूर करता है ॥ २९६ ॥

## २९७ ज्वरारिरसः ( अष्टमः )

विशुद्धगन्धाभ्रकटङ्कणानि
नेपालबीजं क्रमतोऽभिवृद्धम्।
दिनद्वयं विश्वजले विमर्द्य-
गुञ्जासितोऽयं ज्वरहा ज्वरारिः ११९३

र को ज्वरे।

भाषा—शुद्धगन्धक १ भाग, अभ्रकभस्म २-भाग, भुनासुहागा ३ भाग, शुद्धजमालगोटा ४ भाग, इनको अदरखके रसमे १-२ दिन घोटकर १-१ रत्तीकी गोलिये बनाकर रखछोडे। इनमेसे १-१ गोली समयोचितानुपानके साथ देनेसे यह समस्त ज्वरोंको दूर करता है ॥ २९७ ॥

## २९८ ज्वरारिरसः ( नवमः )

श्रीशम्भुबीजाद् द्विगुणश्च देव्या
भागत्रयश्चाथ मनःशिलायाः।
सम्मर्द्य कन्याद्रवसंयुतं त-
त्ताम्रस्यसूक्ष्मे पुटके निधाय ॥११९४
तद्वालुकायन्त्रगतश्च याम-
चतुष्टयं पक्वमथोऽतिशीतम्।
सञ्चूर्ण्य गुञ्जात्रयसम्मितंत-
त्सशर्करं वार्द्रकनीरयुक्तम् ॥११९५॥
देयश्च दुग्धौदनमत्र पथ्यं
समुद्गयूषं ह्यथवाऽपि भक्तम् ॥
महाज्वरारिः प्रथितस्तु लोके
विनाशयेद्वै विषमज्वरांस्तत् ॥११९६॥

चि क, ज्वरे।

भाषा—शुद्धपारा १ भाग, शुद्धगन्धक २ भाग, शुद्धमैनसिल ३ भाग, इनसबकी कज्जलीकर घीकुंआरके रसमे १ रोज़ घोटकर गोलाबनाकर इनसबकेबराबर बारीक ताम्रके पत्रोंके सम्पुटमे रखकर बालुकायन्त्रमे ४ पहरमध्यम अग्नि देकर स्वाङ्गशीतलहोनेपर निकालकर रखछोडे। उसमेसे ३-३ रत्तीकी मात्रा शक्कर मिलेहुए अदरखके रसकेसाथ देनेसे यह समस्तज्वरोको नष्टकरताहै। उसमे दूधभात अथवा मूंगका यूष और भात पथ्य देना उचितहै॥

## २९९ ज्वरारिरसः ( दशमः )

भृत्वाभाण्डकमङ्घिजेनचरसं हिङ्गूदरस्थं मृदो,
मूषायां विनिवेश्य तत्र तदनु द्वारं निरुन्ध्याद्दृढम्।
सन्तप्याथदिनान्तमग्निशिरयाभाण्डेगतश्चोर्द्धगे
सिद्धोगोलकवत्सनाभसहितःसोऽयं ज्वरारीरसः
सिद्धरसामृतगोलाद् द्विद्वि-
त्रिभागवर्धिताःक्रमशः।
अमृतारसेन बद्धा गुटी विरेकाज्ज्वरं जयति ॥

र. (मा), ज्वरे।

भाषा—शुद्धपारेको कठगूलरके दूधमे १-२ रोज़मर्दनकर गोलीबनाकर उत्तम हींगको गूलरके दूधमे पीसकर उसके सम्पुटमे इसगोलेको रख मिट्टीकी मूसीमे इसको रखकर सन्धिबन्दकर २-३ कपडमिट्टी देकर सुखाकरबालुकायन्त्र अथवा लवणयन्त्र मे बन्दकर ४ पहरकी अग्निदेकर पकावे। स्वाङ्गशीतल होनेपर निकालकर मिट्टीको अलगकरके जितना वजन सम्पुटकाहो उतनाही शुद्धबछनाग और डेढभाग शुद्धजमालगोटा डालकर गुडूचीके स्वरससे ३-३ रोज मर्दनकर ३-३ रत्तीकी गोलियें बनाकर रखछोडे। इनमेसे १-१ गोली अदरखके रसकसाथ देनेसे झाडेहोकर तमामज्वर दूरहोते हैं ॥

## ३०० ज्वरारिरसः ( तरुणादिः ( ११ )

जैपालगन्धं विषपारदञ्च
तुल्यं कुमारीस्वरसेन पिष्टम्।
अस्य द्विगुञ्जा हि सितोदकेन
ख्यातो रसोऽयं तरुणज्वरारिः ११९९
दातव्य एषोऽहनि पञ्चमे वा
षष्ठेऽथवा सप्तम एव वाऽपि।

जाते विरेके विजितो ज्वरः स्या-
त्पटोलमुद्गाम्बुनिषेवणेन ॥ १२०० ॥

र स., ध , भै र , र. च., व रा, र. सु , ज्वराधिकारे ।

शुद्धजमालगोटा, गन्धक, वछनाग और पारा येसब समभाग लेकर पारे गन्धककी नीलवर्ण कज्जलीकर जयपालके साथ मिलाकर घीकुंआरके रससे १–२ दिन मर्दनकर २–२ रत्तीकी गोलिये बनाकर रखछोड़े। इनमेसे १–१ रत्ती पाच, छः अथवा सातवा रोज बीतनेपर ठंढे जलकेसाथ देनेसे विरेचन होकर ज्वर उतरजायगा। इसकेबाद परवल और मूंगका यूष पथ्य देना चाहिये ॥ ३०० ॥

### ३०१ ज्वरारिरसः ( तरुणादिः ) १२

त्रिकटुकविषरसगन्धक-
हिङ्गुलकटङ्कणं सनेपालम् ।
जम्बीरार्द्रकतोये पिष्टं
तरुणज्वरारियोगोऽयम् ॥ १२०१ ॥

र. क. यो , ज्वरे ।

भाषा—त्रिकटु, शुद्धवछनाग, पारा, गन्धक, शिंगरिफ, सुहागा और जमालगोटा येसब समभागलेकर पारे गन्धककी नीलवर्ण कज्जलीकर और चीजोमे मिलाकर जमीरी और अदरखके रसमे १-१ रोज मर्दनकर एक या दो रत्तीकी गोलियें बनाकर रखछोड़े। इनमेसे १–१ गोली समयोचितानुपानके साथ देनेसे यह नवीन ज्वरको दूर करता है॥ ३०१॥

### ३०२ ज्वरारिरसः ( तरुणादिः ) १३

रसगन्धकताप्यानि विषखर्परटङ्कणम् ।
तुत्थं ताम्रमयोभस्म दन्तीबीजं समांशकम् ॥
तरुणज्वरहा नाम्र सर्वज्वरनिवारणः॥१२०२॥

र. क यो , ज्वरे ।

भाषा—शुद्धपारा, गन्धक, सोनामाखी, वछनाग, खर्पर, सुहागा और तुत्थ, ताम्रभस्म, लोहभस्म, शुद्धजमालगोटा येसब समभागलेकर पारे गन्धककी नीलवर्ण कज्जलीकर जमीरी वगैरहके रसमे मर्दनकर एक अथवा दो रत्तीकी गोलियें बनाकर रखछोड़े। इनमेसे १-१ गोली समयोचितानुपानके साथ देनेसे यह रेचनकराके तरुण ज्वरोको उतार देता है ॥ ३०२ ॥

### ३०३ ज्वरारिरसः ( चतुर्दशः )

पलमात्रा गजकणा पलमेकञ्च तालकम् ।
अश्मचूर्णं वेदपलं सुषवीरसमर्दितम् १२०३
वटी गुञ्जामिता ग्राह्या पथ्यं क्षीरौदनं स्मृतम् ।
शर्करासहितो ग्राह्यो ज्वरारी रसनायकः ॥

वै वि , रसायनस , ज्वरे,

भाषा—गजपीपल १ पल, हरिताल १ पल, सोमल ४ पल लेकर करेलेके रसमे १-२ रोज मर्दनकर १-१ रत्तीकी गोलियें बनाकर रखछोड़े। इनमेसे १-१ गोली शक्करके साथ देनेसे तमाम ज्वरोको दूर करती है। इसमे पथ्य दूध चावल देना ॥३०३

### ३०४ ज्वरारिरसः ( सद्यआदिः ) १५

हिङ्गूलताम्रविषगन्धकतुल्यभागं,
घस्रार्धमार्द्रकरसेन धनञ्जयेन ।
मर्द्यः सुधार्कमुनिजातरसैरशेषा-,
न्मीनाग्निना तदनु भावितमेकवारम्॥१२०५॥
योज्यश्चनिम्बुकजले भिषजा ज्वरादौ,
दाहो भवेद्यदि तदा कुरु वारिषेकम् ।
कान्ताकटाक्षपरिभाविततालवृन्त-
मन्दानिलेन नितरां कुरु वीज्यमानम् ॥
वृन्ताकतक्रदधिभोजनतक्रपानात्,
सद्योज्वरं जयति मृत्युनिवारणोऽयम् ॥१२०६

र का., ज्वराधिकारे ।

भाषा—शिंगरिफ, ताम्रभस्म, शुद्धवछनाग और गन्धक समभाग लेकर पारे गन्धककी नीलवर्ण कज्जलीकर और चीज़ोमे मिलाकर अदरख, चित्रक थूहर, आक, अगस्त्य इनसबके रस और मछलीके पित्तसे १-१ दिन मर्दनकर १-१ रत्तीकी गोलियें बनाकर रखछोड़े। इनमेसे १-१ गोली नीबूके रससे देनेसे नवीनज्वर तुर्त उतरजाता है। इसके

देनेसे कदाचित् दाह हो तो शिरपर ठंढे पानीकी धारा देना और नवयौवना प्रियस्त्रियें ताडके पखेसे कटाक्षपातकरती हुई हवाकरे। बैगन, छाछ, दही और चावल प्रभृति भोजनदें। अथवा छाछ पिलावें, यह रस मृत्युका निवारण करनेवाला है ॥ ३०४ ॥

### ३०५ ज्वरारिरसः ( वातादिः ) १६

गन्धकं दरदं सूतं खल्वे तुल्यं विमर्दयेत्।
भावयेदार्द्रकद्रावैः सप्तधा पिप्पलीजलैः ॥
मरिचस्य कषायेण विजयास्वरसेन च।
कृष्णधत्तूरनीरेण प्रत्येकं सप्तभावनाः १२०८
पिप्पलीमधुना द्वेप वली वातज्वरापहः।
वातज्वरारिनामायं प्रयुक्तो रससागरे १२०९

र. का., ज्वराधिकारे।

भाषा—शुद्धपारा, शिंगरिफ, और गन्धक समभागलेकर नीलवर्ण कज्जलीकर अदरख, पीपल, मरिच, भाग, काला धतूरा इनके यथा सम्भव-स्वरस अथवा क्वाथसे सातसात भावनाए देकर ३-३ रत्तीकी गोलिये बनाकर रखछोड़े। इनमेसे १-१ गोली मधु और पीपलके साथ देनेसे यह वातज्वरको दूर करता है ॥ ३०५ ॥

### ३०६ ज्वरारिरसः ( सप्तदशः )

रसनृपविषगन्धैस्तुल्यमार्तण्डभागै-
स्तदनु च जयपालैष्टङ्कणस्तत्समानः।
विरचय गुटिकैकां वल्लयुग्मप्रमाणा-
मभिलषसि यदि त्वं शीघ्रमेव ज्वरान्तम् ॥

रसायनसङ्ग्रहे, ज्वरे।

भाषा— शुद्धपारा, बछनाग और गन्धक, अमिलतासकागूदा ये सब एकएकभाग, ताम्रभस्म शुद्धजमालगोटा और सुहागा ये १२-१२ भाग लेकर पारेगन्धककी कज्जलीकर और चीजोंमें मिला कर जंभीरी वगैरहके रसमे १-२ दिन घोटकर ६-६ रत्तीकी गोलिये बनाकर रखछोड़े। इनमेसे १-१ गोली समयोचितानुपानकेसाथ देनेसे तत्काल ज्वर उतर जाता है ॥ ३०६ ॥

### ३०७ ज्वरारिरसः ( अष्टादशः )

रसगन्धकताम्राणि नागवङ्गौ विषन्तथा।
सप्तधा घनजं भाव्यं सप्तधा चैत्रकेण तु ॥
तथा कार्चूरकं भाव्यमार्द्रकेण च सप्तधा।
कासे श्वासे कफे वाते हितः सर्वज्वरापहः ॥

रससारसङ्ग्रह, ज्वरे।

भाषा—शुद्धपारा, गन्धक और बछनाग, ताम्र-नाग और वङ्गभस्म, येसब समभागलेकर पारे गन्धककी नीलवर्ण कज्जलीमे मिलाकर नागरमोथा चित्रक, कचूर, अदरख इनप्रत्येकके स्वरसोंने ७-७ भावनाएं देकर २-२ रत्तीकी गोलियें बनाकर रख-छोडे। इनमेसे १-१ गोली समयोचितानुपानकेसाथ देनेसे श्वास, कास, कफ और तमाम ज्वरोंको यह नष्ट करता है ॥ ३०७ ॥

### ३०८ ज्वरारिरसराजः ( ऊनविंशः )

रसगन्धकयो र्भागौ शुद्धयो रुभयोरपि।
त्रिकटु त्रितयश्चैवमेकैकं वह्निभृङ्गयोः ॥
आकल्लकरभागैकमेकं स्फटिकटङ्कणात्।
ताम्रस्य वत्सनाभस्य भागद्वितयसंयुतम् ॥
सारणाख्याहिफेनस्य दत्त्वा पादं विचूर्णयेत्।
दिनानि सप्त सम्प्लाव्य भृङ्गराजरसेन तु ॥
जैपालजातनीरेण दिनैकं भावितं कुरु।
वल्लमात्रां प्रकुर्वीत गुटिकां तज्जलेन हि ॥
जैपालेन विहीनन्तदपक्वमलजे ज्वरे।
सम्पक्वमलजे दद्याज्जैपालरसभावितम् ॥
क्षणेनैव ज्वरं हन्यात् मलपाकात्सुखावहः।
छोटिकापष्टिमात्रेण ज्वरारि र्नाशयेज्ज्वरान् ॥
षष्टिकान्नं प्रदातव्यं पथ्यं दधि सुशीतलम्।
उत्पन्ने परितापे तु क्रिया कार्या सुशीतला ॥
देहरोगवलञ्ज्ञात्वा ज्वरारि र्दीयते पुनः।
दक्षकोपावसाने तु जनं दृष्ट्वा निपीडितम् ॥
सर्वभूतप्रसन्नात्मा ज्वरारिमसृजत्प्रभुः।
अमोघवीर्यमेनन्तु सुरासुरसुपूजितम् ॥
आराधयति यो वैद्यः स ज्वरै र्नाभिभूयते।

स्वपीतपुष्पजटिले सारणाख्याहिफेनके ॥

र. का., टो, र. (मा.), र. को, ज्वरे ।

भाषा—शुद्धपारा, गन्धक २–२ भाग, त्रिकटु ३ भाग, चित्रक, भंगरा, अकलकरा, स्फटिक, सुहागा १–१ भाग, शुद्ध बछनाग २ भाग, पीले फूलकी अफीम आधा भाग, लेकर पारेगन्धककीनीलवर्ण कज्जलीमे तमामचीजों का बारीकचूर्णमिलाकर भंगरा, दन्तीमूल इनके रसोसे १–१ रोज़ भावना देकर ३–३ रत्तीकी गोलियें बनाकररखछोडे । अगर इसे अपक्वमलज ज्वरमे देनाहोतो इसमे जमालगोटा न डाले । इसमेसे १–१ गोली अच्छीतरह पकेहुए मलज्वरमे देनेसे तत्काल मलपाक करके यह ज्वरको उतारदेताहै । इसमे पथ्य साठीचावल और ठंढा दही देवे । इसके देनेसे दाह उत्पन्नहो तो शीतोपचार करना । रोगीकीअवस्था और वल देखकर इसका प्रयोग करना । दक्षकोपके पीछे शङ्करने ज्वरसे जगतको सतायाहुआ देखकर समस्तभूतोंपरदयाकरके इसको बनायाहै । अमोघवीर्य इसरसको जोवैद्य अपने पासरखताहै उसकाज्वरोंसे तिरस्कार नहींहोता है ॥

### ३०९ ज्वरारिवटी

ताम्रं लोहं रसं गन्धं मधुकं द्विगुणं क्रमात् ।
दद्याच्च दशभागान्वै जयपालांश्च निर्मलान् ॥
द्वादशांशं कणाचूर्णं सर्वं स्नुग्दुग्धभावितम् ।
एषा ज्वरारिवटिका सर्वज्वरविनाशिनी ॥
वातलं भोजनं देयं नोचेत्तक्रौदनं हितम् ॥

रससारसङ्ग्रह, ज्वरे ।

भाषा—ताम्र १ भाग, लोहभस्म २ भाग, शुद्धपारा ४ भाग, गन्धक ६ भाग, मुलहठी ८ भाग, शुद्धजमालगोटे १० भाग, पीपल बारह भाग, लेकर पारेगन्धककी नीलवर्ण कज्जलीकर सबचीजें मिलाकर थूहरके दूधमे १–२ रोज़ मर्दनकर एक या दो रत्तीकी गोलियें बनाकर रखछोड़े । इनमेसे १–१ गोली समयोचितानुपानके साथ देनेसे यह तमामज्वरोंको नष्टकरतीहै। इसमे–पथ्य छाछभातदेना। यदि ये अनुकूल न हों तो वातलपदार्थ देना॥३०९॥

### ३१० ज्वरारिरसराजः

रसेशगन्धौ च विषं सुताम्रं
समं तु खल्वे कृतसूक्ष्मचूर्णम् ।
तच्छृङ्गवेरस्वरसै र्विभाव्य
निःक्षिप्य भाण्डेऽथ पुटं ददीत १२२५
कपोतकाख्ये पुटके प्रदद्या-
त्सिद्धोऽतिशुतोऽभिनवज्वरेषु ।
स गुञ्जमात्रः सितया प्रदेयः
शीतोपचारैश्च सुखं प्रयाति ॥
यथेप्सितं पथ्यमतः प्रदेयं
ज्वरारिसञ्ज्ञो रसराज एषः ॥१२२६

र. शं., ज्वरे

भाषा—शुद्धपारा, गन्धक और बछनाग, ताम्रभस्म सब समभाग लेकर पारेगन्धककी नीलवर्ण कज्जलीकर अदरखके रससे १–२ रोज़ मर्दनकर गोला बनाय शरावसम्पुटमेबन्दकर दोतीन कपड़मिट्टी देकर सुखाकर कपोतपुटमे अग्नि दे । स्वाङ्गशीतल होनेपर इसमेसे १–१रत्ती शक्करके साथ देनेसे यह नवीनज्वरको दूरकरताहै । इसके देनेसे दाहवगैरह माळूमहो तो शीतोपचार करना । पथ्य इच्छानुसार देना॥

### ३११ ज्वरार्यगदः

विषद्वयश्च नेपालं तुत्थकोपणसादरम् ।
स्वर्जिक्षारसमायुक्तोऽगदोऽयं ज्वरशल्यजित् ॥

र का, ज्वरे ।

भाषा—शुद्धबछनाग २ भाग, शुद्धजमालगोटा और तुत्थ, मरिच, नोसादर, सज्जीखार येसब १–१ भाग लेकर घोटकररखछोडे । इसमेसे २–२ रत्तीकी मात्रा समयोचितानुपानके साथ देनेसे यह ज्वररूपी शल्यको दूरकरताहै ॥ ३११ ॥

### ३१२ ज्वरार्यञ्जनम्

पारदं गन्धकं तुल्यं चाङ्गेरीरसमर्दितम् ।
अञ्जनं ज्वरनुन्नेत्रप्रयुक्तं क्षणमात्रतः ॥१२२८

यो. स., ज्वरे ।

भाषा—शुद्धपारा और गन्धकसमभाग लेकर चूका (खट्टीतिपतिया)के रससे घोटकर नेत्रमे अञ्जनकरनेसे यह तत्क्षण ज्वरको दूरकरताहै ॥ ३१२ ॥

### ३१३ ज्वरार्यभ्रम्

अभ्रं ताम्रं रसं गन्धं विषञ्चैव समंसमम् ।
द्विगुणं धूर्तबीजञ्च व्योषं पञ्चगुणं मतम् ॥
आर्द्रकस्य रसेनैव वटी कार्या द्विगुञ्जिका ।
अनुपानं प्रयोक्तव्यं यथादोषानुसारतः १२३०
अभ्रं ज्वरारिनामेदं सर्वज्वरविनाशनम् ।
वातिकं पैत्तिकञ्चैव श्लैष्मिकं सान्निपातिकम् ॥
विषमाख्याञ्ज्वरान्सर्वान् धातुस्थान्विषमज्वरान्
प्लीहानञ्च यकृद्गुल्ममग्रमांसं सशोथकम् ।
हिक्कां श्वासञ्च कासञ्च मन्दानलमरोचकम् ॥
नाशयेन्नात्र सन्देहो वृक्षमिन्द्राशनि र्यथा ॥

र स., र. चं., भै. र., र सु , ज्वराधिकारे ।

भाषा—अभ्रक और ताम्रभस्म, शुद्धपारा, गन्धक और बछनाग येसब समभाग, शुद्धधतूरेके बीज २ भाग, त्रिकटु ५ भाग, लेकर पारे गन्धकको नीलवर्ण कज्जलीमे मिलाकर अदरखके रससे १–२ रोज घोटकर २–२ रत्तीकी गोलियें बनाकर रखछोड़े । इनमेसे १–१ गोली यथादोषानुपानसे देनेसे वातिक, पैत्तिक, श्लैष्मिक, सान्निपातिक, विषमज्वर, धातुस्थज्वर, प्लीहा, यकृत्, गुल्म, अग्रमास ( हृदयसंलग्न महाधमनी संजात मासवृद्धि ), शोथ, हिचकी, श्वास, कास, मन्दाग्नि, अरुचि इनसबको यह निःसन्देह नष्ट करता है ॥ ३१३ ॥

### ३१४ ज्वराशनिरसः

रसं गन्धं सैन्धवञ्च विषं ताम्रं समांशिकम् ।
सर्वचूर्णसमं लौहं तत्समं शुद्धमभ्रकम् १२३४
लौहे च लौहदण्डेन निर्गुण्डीस्वरसेन च ।
मर्दयेद्यत्नतः पश्चान्मरिचं सूततुल्यकम् १२३५
नागवल्ल्या दलेनैव दातव्यो रक्तिसम्मितः ।
सर्वज्वरहरः श्रेष्ठो ज्वरान्हन्ति सुदारुणान् ॥
कासं श्वासं महाघोरं विषमाख्यं ज्वरं वमिम् ।
धातुस्थं परमं दाहं ज्वरं दोषत्रयोद्भवम् ॥

र. स., भै र , व , र. चं , ज्वरे ।

भाषा—शुद्धपारा, गन्धक और बछनाग, सेंधा नमक, ताम्रभस्म येसब समभाग, सबकी बराबर लोहभस्म और अभ्रकभस्म, लेकर पारे गन्धककी नीलवर्ण कज्जलीकर सबको इकट्ठे मिलाय लोहेकी कड़ाहीमे डालकर संभालूके रसके साथ लोहेके डंडेसे १ रोज़ मर्दनकरे । फिर पारेकी बराबर मरिचका चूर्ण डालकर अच्छीतरह घोटकर १-१ रत्तीकी गोलियें बनाकर रखछोड़े । इनमेसे १-१ गोली पानके साथ देनेसे समस्तज्वर, कास, श्वास, महाभयङ्कर विषमज्वर, धातुस्थ और अत्यन्त दाहयुक्त तथासान्निपातिकज्वर इनको यह नष्ट करता है ॥

### ३१५ ज्वरेभसिंहरसः ( प्रथमः )

पारदं मरिचं शोषं शङ्खभस्म विषं समम् ।
जयपालं तथा गन्धं त्रिभागं मर्दयेद्दिनम् ॥
जयायाः स्वरसेनैव दद्याद्गुञ्जाद्वयं भिषक् ।
कफवातज्वरं तीव्रं हन्याद्रोगांश्च तत्क्षणात् ॥
हृद्रोगमामवातञ्च शूलं शीतं ज्वरं दृढम् ।
विसूचिकाञ्च मान्द्यञ्च जयेद्रोगानुपानतः ॥
यथा दानववृन्दानां नरसिंहो भयावहः ।
तथाज्वरेभसिंहोऽयं कफवातनिवारणः १२४१

र का , ज्वराधिकारे ।

भाषा—शुद्धपारा, मरिच, सोंठ, समुद्रशोष शखभस्म, शुद्धबछनाग येसब १-१ भाग, शुद्धजमालगोटा और गन्धक ३-३ भाग, लेकर पारे गन्धककी नीलवर्ण कज्जलीकर भागरेके रसमे १ रोज़ मर्दनकर २-२ रत्तीकी गोलिये बनाकर रखछोड़े । इनमेसे १-१ गोली समयोचितानुपानके साथ देनेसे कफ वातजज्वर, शीतज्वर, हृद्रोग, आमवात, शूल, हैजा, मन्दाग्नि, इनसबको यह नष्ट करता है ॥ ३१५ ॥

### ३१६ ज्वरेभसिंहरसः ( द्वितीयः )

पारदं गन्धकं ताम्रं विषं तुल्यं विमर्दयेत् ।

शेफालिकारवरसतो भावयेदातपे दृढे १२४२
शृङ्गवेराम्बुना तद्वद्भावितं सिद्धिमाप्नुयात्।
गुञ्जैकं ससितं दद्याच्छृङ्गवेराम्बुना भिषक्।
अभ्यङ्गंतिलतैलेन कृत्वा स्नानं हिमोदकैः।
पित्तरोगे यथोष्णेन विदध्यात्पयसा ततः॥
तत्तच्छीतोपचारैस्तु हन्यात्तत्तदुपद्रवान्१२४४

र का, ज्वराधिकारे।

भाषा—शुद्धपारा, गन्धक, ताम्रभस्म औरवछनाग येसबसमभागलेकर पारेगन्धककीनीलवर्णकज्जलीकर हारसिंगारऔरअदरखकेरसोसे १–१ रोज़मर्दनकर १–१ रत्तीकीगोलियें बनाकररखछोड़े। इनमेंसे१–१गोली अदरखकेरसकेसाथदेनेसे यह समस्तरोगोंको दूरकरताहै। पित्तरोगमेशीतोपचारकरना वातऔरकफविकारोंमेउष्णोपचारकरना। तत्तद्विशेषअनुपानोंसे तत्तद्रोगोको नष्टकरताहै।३१६॥

## ३१७ ज्वरेभाङ्कुशोरसः

हृद्धात्री विषवह्निसूतवलयः सम्मर्दिता वासरं,
व्योषाम्भोधिफलाम्बुभिः सुरसया
तावच्च विश्वाम्बुना।
पित्तैः पञ्चभिरेव वाजतिमिजैः
सिद्धो ज्वरेभाङ्कुशो,
गुञ्जास्यार्द्रकतोययुक्त्वभिनवे
तापे सितासंयुता॥१२४५॥

र. ज्वरे।

भाषा—चूका (खट्टीतिपातिया), शुद्धबछनाग, चित्रक, शुद्धपाराऔरगन्धक येसबसमभागलेकर पारेगन्धककीनीलवर्णकज्जलीकर त्रिकटु, समुद्रफल, तुलसी, अदरख, पाचोंपित्त इनमेंक्रमसे १–१रोजमर्दनकरे फिर१–१रत्तीकी गोलिये बनाकररखछोड़े। इनमेसे१-१गोली अदरखकेरसकेसाथ नवीनज्वरमे दे। दाहज्वरमेशक्करकेसाथदेवे॥ ३१७॥

## ३१८ ज्वालानलभैरवोरसः

क्षारत्रयं सूतगन्धौ पञ्चकोलमिदं समम्।
सर्वतुल्या जया देया तदर्धं शिग्रुवल्कलम्॥
एतत्सर्वं जयाशिग्रुवह्निमार्कवजै रसैः।
भावयेत्त्रिदिनं घर्मे ततो लघुपुटे पचेत्॥
भावयेत्सप्तधा चार्द्रद्रवै ज्वालानलो भवेत्।
पाचनो दीपनो हृद्यश्चोदरामयनाशनः॥
निष्कोऽस्य मधुना लीढोऽनुपानं गुडनागरैः।
ज्वराजीर्णमतीसारं ग्रहणीं वह्निमार्दवम्॥
श्लेष्म हृल्लासवमनमालस्यमरुचिञ्जयेत्॥

र. सं, चि र भ, भा प्र., टो, वै र., रसायनसं, र. र दी, र (मा), भै सा, ना. वि, यो. म, नि. र, र. का, र क ल, र प्र, अजीर्णाधिकारे। कुत्रचिन्मार्कवभावना नैव प्रदत्ता तथाच प्रक्षेपे पञ्चकोलं निष्कासितम्—यथा रसप्रदीपे।

भाषा—सज्जीखार, जवाखार,सुहागा,पारा गन्धक, और पञ्चकोल (पीपल, पिपलामूल, चव्य, चित्रक, सोंठ) येसब समभाग, इनसबकी बराबर भाग, भागसे आधी सहिजनकी छाल, इनसबक वारीक चूर्णकर भाग, सहिजन, चित्रक, भंगरा, इन प्रत्येकके रसोसे धूपमेतीनतीन भावनाएंदेकर गोलाबनाय शरावसम्पुटमे बन्दकर लघुपुटमे आचदे स्वाङ्गशीतलहोनेपर निकालकर अदरखके रसकीसात भावनाएदेकर ४–४माशेकी गोलिया अथवा चूर्ण मधुकेसाथ चटावे अथवा गुड और सोठकेसाथ देवेतो इससे जीर्णज्वर, अतिसार, ग्रहणी, मन्दाग्नि, कफ, जीमिचलाना, वमन, आलस्य और अरुचि, येसब नष्टहोतेहै॥ ३१८॥

## ३१९ ज्वालामुखीरसः

शुद्धसूतं समं गन्धं मृताभ्रञ्च मनःशिला।
सैन्धवं माक्षिकं तालं धुत्तूरं हिङ्गुसूरणम्॥
महाराष्ट्र्यर्कनिर्गुण्डीघनैरण्डद्रवैर्दिनम्।
मर्द्यं रुद्ध्वापुटे पक्त्वा कुक्कुटाख्योदरे पुटे॥
अष्टगुञ्जं लिहेत्क्षौद्रैः सर्वशो वातशूलजित्॥

र. क यो, शूले

भाषा—शुद्धपारा और गन्धक, अभ्रकभस्म, शुद्धमैनसिल, सेंधानमक, सोनामाखी, रसमाणिक्य, शुद्धधतूरेके बीज, भुनाहींग, सूरण येसब समभाग

लेकर पारेगन्धककी नीलवर्णकज्जलीमे सबचीजें मिलाकर मराठी, आक, सभाल्ह, जङ्गलीएरण्ड इनके रसोंसे १–१रोज़ मर्दनकर गोलाबनायसुखाकर कुक्कुटपुटमे आचदे। स्वाङ्गशीतलहोनेपर निकालकर इसमेसे १–१ माशा मधुकेसाथ चाटनेसे समस्तवातशूल नष्टहोतेहैं॥

## ३२० ज्वालामुखी वटी

सूतगन्धकनागानां हृद्धात्रीपिप्पलीलवाः ।
क्रमवृद्धया प्रतिग्राह्या भाव्यं मार्कवजै र्द्रवैः ॥
सप्तवारं धान्यमापमुद्गैश्च तुलिता वटी ।
अजीर्णं सन्निपातश्च वातं हन्त्यार्द्रकद्रवैः ॥
जलपिष्टाञ्जनाद्धन्ति विसूचीं मत्स्यपित्ततः ।
त्रिवारं भाविता हन्ति सन्निपातं सुदुःसहम् ॥

र. सं., सन्निपाते ।

टि०–अस्मिन्नेव योगे नागस्थाने तीक्ष्ण नि क्षिप्य द्वितीय पाठ सम्पादितस्तद्वयमप्यस्मिन्निक्षिप्य सम्पादनेन न कापि क्षति ।

भाषा—शुद्धपारा और गन्धक, नागभस्म, मैनसिल, पीपल येसब क्रमवृद्धलेकर पारेगन्धककी नीलवर्ण कज्जलीकर इकट्ठे मिलाकर भगरा, मापपर्णी, मुद्गपर्णी, इनके रसोंसे ७–७ रोज मर्दनकर ३–३ रत्तीकी गोलियें बनाकर रखछोडे । इनमेसे १–१ गोली अदरखके रसके साथ देनेसे अजीर्ण, सन्निपात और वायुको दूरकरतीहै । जलमे पीसकर अञ्जनकरनेसे हैज़ाको दूरकरतीहै । मछलीके पित्तसे ३ वार भावना देनेसे दुःसाध्य सन्निपातको दूरकरती है ॥ ३२० ॥

## ३२१ ज्वालालिङ्गरसः

शुद्धसूतं मृतं स्वर्णं मरिचं तुत्थकं समम् ।
ज्वालामुख्याग्निजै र्द्रवैः जलमुण्डितिकाद्रवैः ॥
दिनैकं मर्दयेत्खल्वे गुञ्जामात्रञ्च भक्षयेत् ।
कर्पैकं वह्निमूलन्तु तक्रैः पिष्ट्वा पिबेदनु ॥
ज्वालालिङ्गो रसो नाम त्रिदोषां ग्रहणीञ्जयेत् ।
निहन्ति ग्रहणीरोगं साध्यासाध्यं न संशयः ॥

र. को., नि. र., र. सु., र. का., र. क. ल., ग्रहण्यधिकारे ।

टि०—"जलवाना सबीजा च विजया मृदुभर्जिता । घृतस्निग्धे पचेद्भाण्डे दुग्धे शतगुणे गवाम् ॥ यावत्पिण्डं समापन्न तावन्मृद्वग्निना पचेत् । पिण्डतुल्या सिता योज्या क्षौद्र निष्कत्रय तत ॥" इति रसेन्द्रकल्पद्रुमकोपेतार्गक पाठेऽस्मिन्, तत्र कशाणां सबीजा घृतभर्जिता विजया पञ्चविंशतिकर्पमिते दुग्धे विपाच्य पिण्डीभावे समुत्पन्ने त्रिनिष्कं मधु मिश्रय्य भक्षयित्वा तदुपरि तत्र गर्धित वह्निमूलपानमिति तदभिप्रायो बोध्य, एतस्मद्रस कर्तव्यम्, भक्षापार्के च यावदग्निबलापेक्षा बोध्या ।

भाषा—रससिन्दूर, स्वर्णभस्म, मरिच, तुत्थभस्म येसब समभाग लेकर ज्वालामुखी (अग्निशिखा-जळजाभुळम.), चित्रक, पीतपुष्पकीगोरखमुण्टी, इनके रसोंसे १–१ रोज़ मर्दनकर १–१ रत्तीकीगोलियें बनाकररखछोडे । इनमेसे १–१ गोली एक तोला चित्रककी जड़को छाछमे पीसकर इसके साथ लेनेसे त्रिदोषज, साध्यासाध्य सङ्ग्रहणी नष्टहोतीहै ॥ ३२१ ॥

## ३२२ डामरानन्दाभ्रकम्

अभ्रस्यामलमारितस्य तु पलं क्षुद्राटरूपा स्थिरा
बिल्वंटिण्डुकपाटलाकलशिकासत्रयष्ट्यार्द्रिका
चित्रग्रन्थिकगोक्षुरं सचविकंमार्गात्मगुप्तान्वितं
सत्त्वै र्मर्दितमेकशश्च पलिकै र्गुञ्जार्धिकं भक्षितम्
कासं पञ्चविधं स्वरामयमुरोघातञ्च हिक्कां ज्वरं,
श्वासंपीनसमेहगुल्ममरुचिं यक्ष्माम्लपित्तंक्षयम्
दाहं मोहमशेपदोपजनितं शूलं बलासं क्रिमीन्
छर्दिं पाण्डुहलीमकंगलगदं विस्फोटकंकामलाम्
मन्दाग्निं ग्रहणीक्षयञ्च यकृतं प्लीहानमर्शांसिपट्
हन्यादामकफोद्भवान्गुदगदां-
श्च्छ्रीडामरानन्दकम् ।
बल्यं वृष्यमशेपदोपशमनं धातुप्रदं कामिनां,
मेध्यं हृद्यरसायनं पशुपते ज्ञात्वा मया वर्णितम्

भै. र.,

भाषा—निश्चन्द्र अभ्रक ४ तोले लेकर भटकटैया, अडूस, शालिपर्णी, बेलगिरी, सोनापाठा, पाटला, सारिवा, मुलहठी, चित्रक, पिपलामूल, गोखरू, चव्य, अपामार्ग, केवाच, इनसवके ४–४ तोले

रससे अलग २ मर्दनकर रखछोडे । इसमेसे १-१ रत्ती यथोचितानुपानके साथ देवे । और जहातक बढसके वहातक मात्रा बढावे । इसके सेवन करनेसे ५ प्रकारका कास, श्वास, स्वरभेद, उरःक्षत, हिचकी, ज्वर, पीनस, प्रमेह, गुल्म, अरुचि, राजयक्ष्म, अम्लपित्त, धातुक्षय, दाह, सबतरहका मोह, शूल, कफ, कृमि, उल्टी, पाण्डु, हलीमक, गलेकेरोग, विस्फोटक, कामला, मन्दाग्नि, ग्रहणी, क्षय, यकृत्, प्लीहा, छः प्रकारका ववासीर इन सवको यह दूरकर वल, धातु, मेधा, इन सवको वढाकर पुरुपको पुरुपत्व देता है ॥

### ३२३ डामरेश्वराभ्रम्

मेचकं पलमितं मृतमभ्रं
ब्रह्मयष्टिकनकामृतवासाः ।
कासमर्दवननिम्बकचव्यं
ग्रन्थिकं दहनमूलसमेतम् ॥ १२६१ ॥
एकशश्च पलिकैरिहसर्वै-
र्मर्दितं सुवलितं गुरुहिक्काम् ।
श्वासकासमुदरं चिरमेहान्
पाण्डुरोगयकृती गलरोगम् ॥१२६२॥
शोथमोहनयनास्यजरोगं
यक्ष्मपीनसगरं वलसादम् ।
गण्डमण्डलवमिभ्रमदाहं
प्लीहशूलविपमज्वरकृच्छ्रम् ॥१२६३॥
हन्ति वातकफपित्तमशेषं
द्वन्द्वरोगमनुपानविशेषैः ।
डामरेश्वरमिदं महदभ्रं
पूर्ववैद्यगदितं सुखहेतु ॥ १२६४ ॥

भै र, र सु, हिक्काश्वासे च ।

भापा—मयूरपिच्छके अग्रभागकीभस्म और अभ्रकभस्म, १—१ पल लेकर ब्रह्मदण्डी, धतूरा, गुडूची, अडूसा, कसोंदी, बकायन, चव्य, पिपलामूल, चित्रकमूल इन प्रत्येकके १ पलरसोसे अलग अलग मर्दनकर धररक्खे । इसमेसे १—१ रत्ती यथोचितानुपानके साथदेनेसे श्वास, कास, उदर, पुराने प्रमेह, पाण्डु, यकृत्, प्लीह, गलरोग, शोथ, मोह, नेत्र और मुहकेरोग, राजयक्ष्म, पीनस, बनावटीज़हर, बलनाश, गलगण्ड, चकत्ते, उल्टी, भ्रम दाह, शूल, विपमज्वर, मूत्रकृच्छ्र इनसबको यह डामरेश्वराभ्रक नष्ट करता है ॥ ३२३ ॥

चन्द्रोदयाद्युज्ज्वलजातवीचिके
प्रसिद्धनानारसरत्नसंस्तरे ।
हरिप्रपन्नेन कृते क्रमान्विते
चुडूसमाप्तौ रसयोगसागरे ॥

---

## अथतकारादिरसाः ।

### १ तक्रमण्डूरम्

गोमूत्रशुद्धं मण्डूरचूर्णं पलचतुष्टयम् ।
विल्वपत्रं भृङ्गराजद्वयश्च गणकारिका ॥ १ ॥
शोथघ्नो कोकिलाक्षश्च रसैरेपां पृथक्पृथक् ।
गोमूत्राष्टपलैश्चैव भावयेद्यत्नतस्त्रिधा ॥ २ ॥
दशगुञ्जामितां खादेत्तक्रेण वर्जयेज्जलम् ।
तक्रेण भोजयेदन्नं पाने तक्रश्च दापयेत् ॥
पाण्डुशोथं हरेत्तूर्णं भास्करस्तिमिरं यथा ॥३

भै. र., शोथे ।

भापा—गोमूत्रमे शुद्धकरके और गोमूत्रमेही घोटकर वारितरभस्मकियाहुआ मण्डूर ४ पललेकर विल्वपत्र, स्याह-सफेदभगरा, अरणी, पुनर्नवा, तालमखाना इनप्रत्येककी ३—३ भावनाएं देकर आठपल गोमूत्रकी अखीरमे भावना देकर १०—१० रत्तीकी गोली छाछके साथदेवे और छाछहीके साथ भोजन दे । पीनेकोभी छाछही दे पानी बिल्कुल छोडदे । यह पाण्डु और शोथको इसतरह नष्टकरताहै जैसे सूर्य अन्धकारको नष्टकरताहै ॥ १ ॥

### २ तक्रवटी

रसस्य मापकं ग्राह्यं गन्धकस्य च मापकम् ।
द्विमापकं विपस्यापि ताम्रं मापचतुष्टयम् ॥
तोलकं पिप्पलीचूर्णं मण्डूरस्य च तोलकम् ।
क्काथेन कृष्णजीरस्य भावयेत्सप्तवासरम् ॥ ५ ॥

वल्लप्रमाणां वटिकां तक्रेण सह पाययेत् ।
तक्रेण भोजनं पानं लवणाम्भोविवर्जितम् ॥
निहन्ति शोथं ग्रहणीं मन्दाग्निं पाण्डुतामपि ॥

भै. र, शोथे ।

भापा—शुद्धपारा और गन्धक १–१ माशा, शुद्ध वछनाग २ माशे, ताम्रभस्म ४ माशे, पिप्पलीचूर्णऔरमण्डूर १–१ तोलालेकर कालीजीरीके काढेसे सातरोज भावना देकर ३–३ रत्तीकी गोलिये बनाकर रखछोडे । इनमेसे एकएक गोली छाछके साथ देवे । भोजनभी छाछहीके साथ दे । नमक और पानी विल्कुल न दे तो यह शोथ, ग्रहणी, मन्दाग्नि और पाण्डुरोगको नष्टकरती है ॥ २ ॥

### ३ तपनायसम्

सिन्धुजन्ममिसिकैरलीरसा-
श्रेयसीदहनवारिदोपणात् ।
चूर्णितात्पलमिहकशोऽखिलै
स्तुल्यभागतपनायसोरजः ॥ ७ ॥
मिश्रितंद्विगुणभागसम्मितं
लीढमाज्यसहितंमिताशिनाम् ।
कोष्णमम्बुपिबतोनुपायुजान्
साममारुतरुजंनिकृन्तति ॥ ८ ॥

लो. प., (स) अर्शोरोगे ।

भापा—सेंधानमक, सोंफ, इलायची, तुलसी, गजपीपल, चित्रक, नागरमोथा, मरिच, येसवसमभाग लेकर इनकाचूर्ण मिलकर १ पल, सोनामाखी और लोहभस्म १–१ पल, मिश्री सबसे दूनीलेकर एकजगह मिलाकर रखछोडे । इसमेसे रोगीका अग्निवल देखकर १ या २ माशेकी मात्रा घीकेसाथ चाटकर गरमपानी पीनेवाले पथ्याशी के तमाम ववासीर और आमवातकी पीडाओंको यह नष्टकरताहै ॥ ३ ॥

### ४ तरुणाग्निरसः

सुरभिद्विजाऽर्धपलं न्यग्रोधस्य पलद्वयम् ।
शिवगार्यौ च सूर्यश्च माक्षिकं सीसकन्तथा ॥
पलमात्रं ततो घर्मपुटं दद्याद्विचक्षणः ।
कारवल्ल्या रसै रेवं दद्याद्द्वादशकं ततः १० ॥
सच्छिद्रे सम्पुटे दध्याद्यावद्यामार्धकं पचेत् ।
सिकताह्वेन यन्त्रेण ततः शीतं समुद्धरेत् ॥
मरिचैरेकविंशत्या वल्लमात्रं प्रदापयेत् ॥ ११ ॥

र. को, ज्वराविकारे ।

भापा—तुलसी, द्विजा (दन्ती) २–२ तोले, वटकी छाल २ पल, शुद्धपारा और गन्धक, ताम्रभस्म, सोनामाखी, नागभस्म १-१ पल लेकर पारे गन्धककी नीलवर्ण कज्जलीकर और चीजोंके वारीक चूर्णमे मिलाकर करेलेके रसकी धूपमे वारहभावनाए देकर गोला वनाय सुखाकर विसकर वरावर किये हुए और ऊपरके शरावके वीचमे छिद्र किये हुए सम्पुटमे इसको रख अच्छीतरह सन्धि वन्दकर २-३ कपड़मिट्टी देकर सच्छिद्र नादमे रखकर ऊपर वालू भरदे । परन्तु शरावका छिद्र न रुकने पावे क्योंकि इसमे जो काष्ठौपधिया हैं उनका धूंआ जलकर उसीरास्तेसे निकलेगा फिर नादके नीचे आधे पहर मन्दाग्नि देकर छोडदेवे । स्वाङ्गशीतल होनेपर निकालकर इसमेसे ३ रत्तीकी मात्रा २१ कालीमिर्चकेसाथ देनेसे यह जीर्ण तथा तत्कालजात ज्वरको दूर करता है ॥ ४ ॥

### ५ तरुणानन्दरसः

कर्षद्वयं रसेन्द्रस्य तावानेव हि गन्धकः ।
कज्जलीकृत्य यत्नेन शिलातलशुभे दृढे ॥ १२
विल्वाग्निमन्थश्योनाककाश्मरीपाटला वला ।
मुस्तं पुनर्नवा धात्री वृहती वृषपत्रकम् ॥ १३
विदारी शतमूली च कर्षैरेषां पृथग्रसैः ।
मर्दयित्वा पुन वांसास्वरसै र्दशतोलकैः ॥१४
मर्दयेत्तत्र शुद्धाभ्रं रसस्य द्विगुणं क्षिपेत् ।
रसस्यार्धश्च कर्पूरं तत्रैव दापयेद्बुधः ॥ १५ ॥
जातीकोषफले मांसी तालीसैलालवङ्गकम् ।
चूर्णं कृत्वा प्रयत्नेन मापमानं क्षिपेत्पृथक् ॥
विदारीस्वरसेनैव वटिकां कारयेद्भिषक् ।

राजयक्ष्माणमत्युग्रं क्षयश्चोग्रमुरःक्षतम् ॥१७॥
कासं पञ्चविधं श्वासं स्वराघातमरोचकम् ।
कामलां पाण्डुरोगञ्च प्लीहानं सहलीमकम् ॥
जीर्णज्वरं तृषां गुल्मं ग्रहणीमामसम्भवाम् ।
अतिसारञ्च शोथञ्च कुष्ठानि च भगन्दरम् ॥
नाशयेदेष विख्यातस्तरुणानन्दसंज्ञितः ।
रसायनवरो वृष्यश्चक्षुष्यः पुष्टिवर्धनः ॥ २० ॥
सहस्रं याति नारीणां भक्षणादस्य मानवः ।
क्षीणता न च शुक्रस्य न च बुद्धिनलक्षयः ॥
मासद्वयोपयोगेन निहन्ति कामलागदम् ।
शुक्रसञ्जननं श्रेष्ठं ज्वरं हन्ति न संशयः ॥२२
नालिकेररसेनैव भक्षयेद्रसमुत्तमम् ।
क्षीरानुपानाद्वृष्योऽयं न क्वचित्प्रतिहन्यते॥२३

रस चि, र स, र सु, ध, कासाधिकारे ।

भाषा—शुद्धपारा और गन्धक २-२ तोले लेकर नीलवर्ण कज्जली बनाकर पत्थरकी खरलमे रखकर, वेलगिरी, अरणी, सोनापाठा, गंभारी, पाटला, बला, नागरमोथा, पुनर्नवा, आवले, वनभाटा, अडूसके पत्ते, विदारी, शतावर इन प्रत्येकके १-१ तोले रससे मर्दनकर १० तोले अडूसेके रससे मर्दनकरना । फिर अभ्रकभस्म ४ तोले, कपूर १ तोला, जावित्री, जायफल, जटामासी, तालीसपत्र, इलायची लौंग इनका चूर्णकर १ माशा डालकर विदारीके अङ्गस्वरससे मर्दनकर २-३ रत्तीकी गोलिये बनाकर रखछोडे । इनमेसे १-१ गोली दूध वगैरह समयोचितानुपानके साथ देनेसे उपद्रवयुक्त राजयक्ष्मा, धातुक्षय और उत्कट उरःक्षत, पाचप्रकारका कास, श्वास, स्वरभङ्ग, अरुचि, कामला, पाण्डु, प्लीहा, हलीमक, जीर्णज्वर, तृषा, गुल्म, आमज—सङ्ग्रहणी, अतिसार, शोथ, कुष्ठ, भगन्दर इनसबको यह नष्ट करता है । यह उत्तम रसायन है । धातुओंको बढाता है । चक्षुके लिये हितकर है । पुष्टि, रति, बुद्धि, बल इनको बढाता है । इसके सेवन करनेसे स्त्रीसङ्गसे किसी तरहकी खराबी नहीं होती है । इसका अनुपान नारियलका जल है । और क्षीरानुपानसे वृष्यका काम करता है ॥ ५ ॥

### ६ तरुणार्करसः ( प्रथमः )

अभ्रकं गन्धकं ताम्रं टङ्कणं नागवङ्गकम् ।
माक्षिकं लोहभस्माथ मौक्तिकं फणिनो विषम्॥
जाम्बूनदोन्मत्तबीजं प्रवालं रक्तचन्दनम् ।
तवक्षीरी च कस्तूरी रोहिणी च मनःशिला ।
एतत्सर्वं समांशं स्यात्सर्वतुल्यं तु नाभकम् ।
सर्वार्द्धार्द्धिकमर्द्धं वा तत्समानञ्च हिङ्गुलम् ॥
सर्वं खल्वे विनिःक्षिप्य मातुलुङ्गरसेन च ।
मर्दयेत्त्रिदिनं खल्वे नवनीतसमं मृदु ॥२७॥
मुद्गमानां वटीं कृत्वा वटीद्वन्द्वं प्रयोजयेत् ।
उद्धतान्विनिहन्त्याशु सन्निपातांस्त्रयोदश ॥
पुंसां तु जनितान्दोषान् स्त्रीणां दोषांश्च नाशयेत्
सर्वे रोगा विनश्यन्ति ह्यनुपानविशेषतः ॥
तरुणार्कइतिख्यातोबालदोषप्रशान्तिकृत् ॥ २९

व रा., बालरोगे ।

भाषा—अभ्रकभस्म, शुद्धगन्धक, ताम्रभस्म, भुनासुहागा, नाग, वङ्ग, माक्षिक, लोह और मोती इनकीभस्मे, सर्पकाविष, सुवर्णभस्म धतूरेकेबीज, प्रवालभस्म, लालचन्दन, वसलोचन अथवा तीखुर, कस्तूरी, कुटकी, मैनसिल येसब समभाग लेकर सबकी बराबर अथवा ¾ भाग या आधा भाग बछनाग डालदेना और जितनाबछनागहो उतनाही हिङ्गुल देना फिरसबको बारीक कपड़छानकर बिजोरेके रससे ३ रोज़ तक यहातक मर्दनकरनाकी मक्खनके समान होजाय । फिर मूग बराबर गोलियें बनाकर रखछोडना । इनमेसे २–२ गोली अदरख वगैरह केरसके साथ देनेसे मनुष्योंके उद्धत १३ सन्निपात, पुरुष और स्त्रियोंके शुक्रार्तव दोष, समस्त बालरोग, यह इनसबको अनुपान विशेषसे दूरकरताहै ॥ ६ ॥

### ७ तरुणार्करसः ( द्वितीयः )

गोदन्तं हिङ्गुलं तुल्यं द्वयोस्तुल्यं हलाहलम् ।
त्रयाणां गरलं तुल्यं गरलं कृष्णसर्पजम् ॥३०

मातुलुङ्गरसै मर्द्य दिनमेकन्तु कज्जलीम् ।
मुद्गप्रमाणवटिका नारिकेलोदकेन च ॥ ३१ ॥
दातव्या सन्निपातार्ते ततः शैत्यमुपाचरेत् ।
तरुणार्करसो नाम मृत्युञ्जयति निश्चयात् ॥
मृत्युवक्त्रगतं वापि रोगिणं जीवयेद्ध्रुवम् ३२

व. रा, र क. यो., सन्निपाते ।

भाषा—गोदन्ती हरिताल, शुद्धशिंगरिफ १—१ भाग, शुद्धबछनाग २ भाग, कृष्णसर्पविष ४ भाग लेकर सबको विजोरेकेरससे एकदिन मर्दनकर मूग-बराबर गोलियें बनाकर रखछोडे । इनमेसे १—१ गोली नारियलके पानीके साथ देनेसे दुस्तर सन्निपातको यह दूरकरताहै । इसके देनेसे कदाचित् दाह होतो शीतोपचार करना ॥ ७ ॥

## ८ तरुणार्करसः ( तृतीयः )

गन्धकं टङ्कणं चाभ्रमग्निं धुत्तूरबीजकम् ।
कृष्णसर्पस्य गरलं रक्तचन्दनवङ्गकम् ॥ ३३
एतानि समभागानिसर्वेभ्यो हिङ्गुलुः समः ।
मातुलुङ्गरसै मर्द्य त्रिदिनञ्च महामृदु ॥ ३४ ॥
वटिकां सर्पपाकारां ह्यनुपानविशेषतः ।
तरुणार्करसः ख्यातः सर्वज्वरनिवारणः ॥ ३५

व. रा., सर्वज्वरे ।

भाषा—शुद्धगन्धक, भुनासुहागा, अभ्रकभस्म, चित्रक अथवा भिलावे, धतूरेकेबीज, कृष्णसर्पका विष, लालचन्दन, वङ्गभस्म, येसब समभाग लेकर सबकी बराबर शिंगरिफलेकर सबकोकूटकपड्छानकर विजोरेके रससे ३ रोज़ मर्दनकर सरसोंके बराबर गोलियें बनाकर रखछोडे । इनमेसे १—१ गोली समयोचितानुपानके साथ देनेसे यह समस्त ज्वरोंको नष्टकरताहै ॥ ८ ॥

## ९ तलभस्म

सूतश्चतुष्पलमितः समशुद्धगन्धः
स्याद्धूमसारपिचुरेक इदंक्रमेण ।
सम्मर्दयेद्विमलदाडिमपुष्पतोयै-
र्घस्रं विमिश्र्य सितसोमलमापकेण ॥
एतन्निधाय सकलं जलयन्त्रगर्भे
सम्मुद्रय सन्धिमुदिते तु पुरा क्रमेण।
आपूर्य यन्त्रमुदकेन दिनानि चाष्टौ
वह्निं क्रमेण तदधो विदधीत विद्वान्॥
पश्चाच्च तज्जलमुदस्य रसं तलस्थ-
मादाय भाजनवरे सुभिषड्निदध्यात् ।
सम्पूज्य शम्भुगिरिजागिरिजातनूजा-
नद्याच्छुभेऽहनि रसं वरमेकगुञ्जम् ॥
ताम्बूलिकादलयुतं ससितं पयोऽनु
पीत्वाऽम्लमापलवणैरहितं सदन्नम् ।
अद्यात्कियन्त्यपि दिनानि ततो यथेच्छं
भक्ष्यं भजेदथ नरो विगतामयः स्यात्॥

वृ. यो त., रसायने ।

भाषा—शुद्धपारा और गन्धक ४-४ पल, गृहधूम १ तो., सफेदसंखिया १ माशा लेकर पारेगन्धककी नीलवर्ण कज्जलीकर धूआ औरसंखिया मिलाकर अनारके फूलोंके स्वरससे १ रोज़ मर्दनकर गोला बनाकर जलयन्त्रमे रखकर जलमुद्रा देकर कड़ाहीमे रख ऊपर पानी भरदे । और ध्यान रक्खे कि जलमुद्रा पानीसे फटे नहीं, नहीं तो सब मिहनत बरबाद होजायगी । फिर उस सम्पुटपर भारी पत्थर रखदे । जिसमेकि वह बाष्पसे उछले नहीं फिर इसके नीचे ५ दिनतक मन्द, मध्य और तीक्ष्ण इसक्रमसे अग्निदेवे, पर यह ध्यानरक्खेकि पानी सूखने न पावे, कमपडनेपर दूसरा गरमपानी डालदे । स्वाङ्गशीतल होनेपर कड़ाहीमेसे पानी निकालकर उस यन्त्रको निकालकर जलमुद्राको दूर कर पारेकीभस्म निकालकर शिव, पार्वती और गणेशकी पूजा करके अच्छी मज़बूत शीशीमे रखदे इसमेसे १—१ रत्ती लेकर अपने अनुकूल ग्रहोंको देखकर पक्के पानमे रखकर खावे । ऊपरसे शक्कर मिलाहुआ अधौटा दूध पीवे । खटाई, उड़द और लवणरहित उत्तम अन्न खाय । थोडे दिनतक इस-तरह पथ्य पालकर फिर यथेष्टाहारविहारकरे ।

इसके सेवन करनेसे समस्त रोगोसे निवृत्त होकर नवीन यौवनावस्थाको प्राप्त होता है ॥ ९ ॥

### १० ताण्डववारणरसः

रससिन्दूरकात्कर्षसमृतं कर्षसम्मितम् ।
माक्षिकं गन्धकं सूतं तालं कर्षमितं पृथक् ॥
ऊषणं कट्फलं भृङ्गीं वचां जातीं लवङ्गकम् ।
कर्षद्वन्द्वप्रमाणेन प्रत्येकं योजयेद्भिषक् ॥४१॥
मातुलान्यार्द्रकद्रावे मातुलाद्भिश्च पेषयेत् ।
वितरेद्वल्लसम्मानां कण्टकार्यादियूषकैः ॥४२॥
अष्टादशाङ्गकाथेन दद्याद्वार्द्रकवारिणा ।
भूतवच्चेष्टमानाय नष्टज्ञानाय रोगिणे ॥ ४३ ॥
सञ्ज्ञास्थं कुरुते नित्यं रसस्ताण्डववारणः ।
श्वासकासाग्निमान्द्यादींश्छीघ्रमेव व्यपोहति४४

नू. क, कासश्वासाधिकारे ।

भाषा—रससिन्दूर, शुद्धवछनाग, सोनामाखी, शुद्धगन्धक, पारा और हरिताल १–१ तोला, मरिच, कायफल, काकड़ासींगी, बच, जावित्री, लौग येप्रत्येक २ तोले लेकर पारे गन्धककी नील-वर्ण कज्जलीकर और चीजोके बारीकचूर्णमे मिला-कर भाग, अदरख और धतूरेके रसोसे १–१ रोज मर्दनकर ३–३ रत्तीकी गोलियें बनाकर रखछोड़े इनमेसे १-१ गोली कण्टकार्यादिकाथ अथवा अष्टादशागकाथ ( दशमूलादि ) अथवा अदरखके रसकेसाथ देनेसे प्रेतकी तरह चेष्टा करता हुआ और तमाम ज्ञान नष्ट हुआ जो रोगी है उसको यह फिरसे होशमे लाता है और श्वास, कास, मन्दाग्नि वगैरहको बहुत जल्दी दूर करता है ॥१०॥

### ११ ताप्यादिरसायनम्

ताप्याभ्रकत्रिकटुतुत्थशिलाजकान्त-
मङ्कोल्ललोहमलटङ्कणसैन्धवञ्च ।
भृङ्गीरसेन वटकांश्च मसूरमात्रान्
खादेद्रसायनवरं सकलामयघ्नम् ॥४५॥

र. र. स, र र कौ, रसायने ।

भाषा—सोनामाखी, अभ्रकभस्म, त्रिकटु, तुत्थ, शिलाजीत, कान्तलोहभस्म, अङ्कोलमूल, मण्डूर, भुनासुहागा, सेधानमक, सबसमभागलेकर भांगरेके रससे १–२ रोज़ मर्दनकर ३–३ रत्तीकी गोलियें बनाकर रखछोड़े । इनमेसे १–१ गोली तत्तद्रोग हरानुपानके साथ अथवा दुग्धादिकके साथ देनेसे सबरोगोको दूर करता है ॥ ११ ॥

### १२ ताम्रकल्पः

अक्षपारदगन्धश्च कर्षद्वयमितं पृथक् ।
सर्वैः समं भवेत्ताम्रं जम्बीराम्लेन मर्दयेत् ४६
सूर्यावर्तरसैः पश्चात्कणामोचरसेन च ।
योजयेत्तीव्रघर्मे तु यावत्सर्वन्तु जीर्यति ॥४७॥
जम्बीरस्य रसै भूयो रसं दण्डेन चालयेत् ।
दृढे शिलामये पात्रे चूर्णयेदतिशोभनम् ॥४८॥
रक्तिद्वयक्रमेणैव योज्यं माषद्वयावधिम् ।
ह्रासयेच्च क्रमेणैव तथा चैव विवर्धयेत् ॥४९॥
जीर्णे भुञ्जीत शाल्यन्नं क्षीरं घृतसमन्वितम् ।
हन्त्यम्लपित्तं विविधां ग्रहणीं विषमज्वरम् ५०
चिरज्वरं प्लीहगदं यकृद्रोगं सुदुस्तरम् ।
अग्रमांसं तथा शोथं कांस्यक्रोडं सुदुर्जयम् ॥
कमठञ्च तथा शोथमौदरञ्च सुदारुणम् ।
धातुवृद्धिकरं वृष्यं बलवर्णकरं शुभम् ॥ ५२ ॥
सद्यो वह्निकरश्चैव सर्वरोगहरं परम् ।
मुखशुद्धि र्विधातव्या पर्णैश्चूर्ण समन्वितैः ॥
ताम्रकल्पमिदं नाम्ना सर्वरोगप्रशान्तये ॥५३॥

र. सं, र सु, र. चि, प्लीहाधिकारे ।

भाषा—बहेड़ा, शुद्धपारा और गन्धक २–२ तोले, सबकी बराबर ताम्रभस्म लेकर जंभीरी, हुरहुर, पीपल, मोचरस इनप्रत्येकके अङ्गस्वरस अथवाक्काथसे धूपमे १–१ भावनादे । फिर जभीरीकारस देकर खरलमे १–२ रोज मर्दनकर २–२ रत्तीकी गोलिये बनाकर रखछोडे । इनमेसे १–१ गोलीसे आरम्भ करके रोज़ एकएक गोली बढातारहे इसतरह २ माशे-तक बढाकर फिर क्रमसे घटावे । इसतरह ४९ दिनतक करनेसे असाध्य अम्लपित्त, ग्रहणी, विषम-

ज्वर, जीर्णज्वर, प्लीहा, यकृत, अग्रमांस (हृदयमलाग्र-धमनीस्थमांसवृद्धि), शोथ, दुर्जयफांस्फोड (प्लुर-सीड़०) फल्गुली, पेटका अमाशयशोथ, इनसबको दूरकरताहै । धातुओंकीवृद्धि, बल और वर्णको करताहुआ अग्निको प्रदीप्तकर समस्तरोगोंको दरकर-ताहे । इसमे दवा जीर्णहोनेपर पुरानेचावल, दूध और घी खानेको देना भोजनके बाद चूना लगाहुए पानसे मुखशुद्धि करना ॥ १२ ॥

## १३ ताम्रचक्रिका

ताम्रचक्रिकया बद्धं मृतं तालं सतुत्थकम् ।
वटाङ्कुररसं मर्द्यं तृष्णाहृद्वल्लमानतः ॥ ५४ ॥

र. नि., र. च., व रा , र. कौ , र फा , र म.,प , र. सु , रपुमहोदधिरिति नाम, तृष्णागाम ।

टि०—ताम्रचक्रिकयावद्धमिति तु अत्र पाठ यदस्माभिः सज्जात । गर्क्षोद्भमामजम्बूत्थ पिबेत्काश पलोन्मितम् । सकृष्णमधुना कुर्यात्तृष्णाय शीतके स्थित स्वस्थिक. पाठोऽन्तिमश्लोकगां । अत्र शुद्धताम्रचक्रिका सूर्यभक्ताटिरसे बहुशो निर्वाप्य ज्वलदङ्गारोपरि विन्यस्य तदुपरि शुद्धं पारद स्थाप-यित्वा स्त्रोतरस पातयित्वा पारद वस्त्रात्प्रगाल्य घनीभूतं पृथक्कुर्यात्, एव पुन पूर्ववत्कुर्यात्सनष्टपिष्टिता भवत । त पारद तुत्थतालकयो भस्म च वटाङ्कुर विमर्द्य रस उत्पाद्य इति तत्त्वम् । अथवाशुद्धताम्रोपरि पारद विमर्द्य चक्रिका निष्पादनीया ।

भाषा—ताम्रचक्रिकासे बाधाहुआपारा, स्वमा-णिक्य और तुत्थभस्म सब समभाग लेकर वटकी जटाओंके स्वरससे १—२ रोज मर्दनकर २—२ रत्तीकी गोलिये बनाकर रखछोडे । इनमेसे एकएक गोली इलायची और शक्करके साथ देनेमे तृष्णा नष्टहोती है ॥ १३ ॥

## १४ ताम्रपर्पटी ( प्रथमा )

प्रत्येकं दशगद्याणान् शुद्धगन्धकसूतयोः ।
मृतताम्रस्य पञ्चैव खल्वेवं पञ्चविंशतिम् ॥५५
क्षिप्त्वा सम्मर्दयेत्तावद्यावन्निर्याति सत्वरम् ।
निर्धूमाङ्गारके वह्नौ लोहपात्रे घृताक्तके ॥ ५६
तावच्च स्थाप्यते यावत्तैलाभो जायते रसः ।
प्रथमं कदली श्रेष्ठा ह्यलाभे पद्मिनीदलम् ५७
तदलाभे नागवल्ली गोरक्षस्य च पत्रद्वयम् ।
गोमयोपरि निक्षिप्य पत्रं तं ढालयेद्रसम् ॥५८
पुन दत्त्वाऽपरं पत्रं पत्रस्योपरि गोमयम् ।
रसं तं शीतलीभूतं खल्वे सूक्ष्मं हि पेषयेत ॥
भृङ्गराजरसेनार्द्रा दातव्याः सप्तभावनाः ।
आटरूषकपत्राणां स्वरसैः सप्त भावनाः ॥ ६०
कटुत्रयजलैः सप्त तथैवं त्रिफलाम्भसा ।
मत्ताद्रकरसेनैवं सप्त पत्रकजै द्रवैः ॥ ६१ ॥
व्याघ्रीरसेन सप्तैव शिग्रुमूलरसेन च ।
वत्सनाभनिर्यासैश्च श्रीगण्डेनैव सप्त च ॥६२॥
संशुष्कञ्च ततश्चूर्णं सूक्ष्मं सम्मर्दयेद् दृढम् ।
प्रक्षिपेत्कूप्यके चूर्णं मस्मितन्नाञ्जनसन्निभम् ६३
ताम्रपर्पटिसञ्ज्ञोऽयं रसश्च परिकीर्तितः ।
रोगिणे प्रत्यहं देयो वल्लयुग्मो जलान्वितः ॥
त्रिभि र्दिनै र्ज्वरो याति श्लेष्मवातादिसम्भवः
वातरक्ते ह्यजीर्णेषु ग्रहण्यां कुष्ठरोगिषु ॥
मासैकेन निहन्त्याशु रोगानेतान्सुदारुणान् ६५

रसनि., र. क नौ., जारे।

भाषा—शुद्धपारा और गन्धक ५—५ तोले, ताम्रभस्म २॥ तोले, लेकर यहांतक मर्दनकरे कि नीलवर्ण कज्जली होजाय । फिर घृताक्त लोहेकी कडाहीमे गलाकर भेसके ताजे गोबरपर रक्खेहुए केलेके पत्रपर उसको ढालकर दूसरे पत्तेसे दबाकर ऊपर ताजागोबर रखदे । स्वाङ्गशीतल होनेपर नि-कालकर बारीक पीसकर भागरा, अडूसा, त्रिकुटु, त्रिफला, अदरख, पत्रज, भटकटैया, सहिजनकीजड, बछनाग, चन्दन इनप्रत्येकके रसोंकी सात ७ भाव-नाएं देकर ६—६ रत्तीकी गोलिये बनाकर रखछोडे अथवा चूर्णही रक्खे । इनमेसे १—१ गोली जलके साथ अथवा तत्तद्रोगहरानुपानके साथ देनेसे श्लेष्म-वातज्वर तीनरोजमे नष्टहोताहै । वातरक्त, अजीर्ण, ग्रहणी और कुष्ठरोग इनको यह पर्पटी १ महीनेमे अच्छा करती है ॥ १४ ॥

## १५ ताम्रपर्पटी ( द्वितीया )

मृतं ताम्रं त्रिभागश्च रसं गन्धश्च तत्समम् ।
भागमेकं वत्सनाभं कज्जलीं खल्वमध्यगाम् ॥
गोघृतेन कृतं कल्कं लोहपात्रे विपाचयेत् ।
ढालयेदर्कपत्रस्थां पर्पटीं रससिद्धये ॥ ६७ ॥
गुञ्जाद्वयं त्रिगुञ्जं वा पिप्पलीमधुसंयुतम् ॥
त्रिसप्तरात्रयोगेन रोगराजञ्च नाशयेत् ॥६८॥
आर्द्रकस्य रसेनैव सन्निपातं नियच्छति ॥
त्रिफलारससंयुक्ता सर्वपाण्डुं विनाशयेत् ॥६९
वातारितैलसंयुक्ता सर्वशूलनिवारिणी ।
कुमारीरसयोगेन वातपित्तोपशान्तिकृत् ॥७०॥
वाकुचीरससंयुक्ता सर्वदद्रुविनाशिनी ।
त्रिफलामधुसंयुक्ता सर्वमेहनिवारिणी ॥७१॥
खदिरक्वाथपानेन कुष्ठाष्टादशनाशिनी ।
मन्थानभैरवेणोक्ता लोकानां हितकाम्यया ७२

यो. र., र च , नि.र , वै क , र सु , वै.वि ,कासाधिकारे ।

भाषा—ताम्रभस्म, शुद्धपारा और गन्धक ३—३ भाग, शुद्धवछनाग १ भाग लेकर सबकी नीलवर्ण कज्जलीकर थोड़ा घीडालकर कल्क बनाले फिर इसको लोहेकी कड़ाहीमे गलाकर आकके पत्तोपर ढालकर पर्पटी तैयारकरे । इसमेसे २—२ रत्ती पीपल और मधुकेसाथ देनेसे २१ रोज़मे राजयक्ष्मको दूरकरतीहै अदरखके रससे सन्निपातको, त्रिफलाके रससे समस्त पाण्डुको, एरण्डके तैलसे समस्त शूलोको, घीकुआरके रससे वातपित्तको, वाकुचीके रससे समस्त दद्रुओंको, त्रिफला और मधुके साथ सब प्रमेहोको और खदिरक्वाथसे १८ कुष्ठोंको नष्टकरती है । लोकोके हितके लिये मन्थानभैरवने कहीहै ॥ १५ ॥

## १६ ताम्रपर्पटी ( तृतीया )

रसगन्धकताम्राणां चूर्णं कृत्वा समांशकम् ।
पुटपाकविधौ पक्त्वा मधुनाऽऽलोड्य संलिहेत्
सर्वरोगहरश्चैतत्पर्पटाख्यं रसायनम् ॥ ७३ ॥

र. र , ध , व. से., सर्वरोगे ।

भाषा—शुद्धपारा और गन्धक, ताम्रभस्म येसब समभाग लेकर पर्पटीकी क्रियासे पर्पटी बनाकर दोदोरत्ती तत्तद्रोगहरानुपानके साथ अथवा मधुके साथ देनेसे यह समस्तरोगोको नष्टकरती है ॥१६॥

## १७ ताम्रपर्पटी ( चतुर्थी )

ताम्रञ्च पारदं तुल्यं मर्दयेत्त्रिफलाद्रवैः ।
सगन्धं सामृतं कुर्यात्ततः पर्पटिका शुभा ॥
मूर्च्छाभ्रमेषु तृष्णायां सा प्रयोज्या यथाबलम् ।

ना वि , र म मा , मूर्च्छाधिकारे ।

भाषा—ताम्रभस्म, शुद्धपारा समभागलेकर त्रिफलाके क्वाथसे १-२ रोज मर्दनकर पारेकी बराबर गन्धक और शुद्धवछनाग देकर इसकी पर्पटी बनाकर दो दो रत्ती तत्तद्रोगहरानुपानके साथ देनेसे मूर्च्छा, भ्रम, अधिक पिपासा इनसबको यह नष्ट करती है ॥ १७ ॥

## १८ ताम्रपिष्टिका ( प्रथमा )

देवदालीरसे घृष्टा शुद्धताम्रस्य पिष्टिका ।
गन्धाश्मचूर्णसंयुक्ता महतीं कामलाञ्जयेत् ॥

यो म , रसेन्द्र म., कामलायाम् ।

भाषा—शुद्धताम्रका चूर्ण लेकर समभाग शुद्धपारेमे मिलाकर बन्दालके रससे ४-५ रोज मर्दनकर पिष्टी बनाले । इसमे सबकी बराबर गन्धक मिलाकर रखछोड़े । इसमेसे २-२ रत्ती यथारोगहरानुपानके साथ देनेसे अत्यन्त बढी हुई कामला को दूर करती है ॥ १८ ॥

## १९ ताम्रपिष्टिका ( द्वितीया )

शतावरीरसै घृष्टां तुत्थताम्रस्य पिष्टिकाम् ।
पाचितां कटुतैलेन मूत्रकृच्छ्रे प्रयोजयेत् ॥७६

यो. म , रसेन्द्रम., मूत्रकृच्छ्रे ।

भाषा—शुद्धतुत्थ, ताम्र और पारा इनको शतावरीके रसमे घोटकर पिष्टी बनाकर सुखाले फिर कड़वे तैलका चोया देकर ४ पहरतक पकावे स्वाङ्गशीतल होनेपर इसकी २-२ रत्ती मूत्रकृच्छ्र हरानुपानके साथ देनेसे मूत्रकृच्छ्रको दूर करती है

## २० ताम्रभैरवोरसः ( प्रथमः )

ताम्रपत्राणि निष्पाद्य काकमाच्याश्च शोधयेत् ।

द्विगुणं गन्धकं कृत्वा भागैकं तालकं पुनः ॥
मनःशिलां चतुर्थांशां रसांशः पञ्चमः स्मृतः ।
अन्धमूषागतं सर्वं पचेद्यामचतुष्टयम् ॥ ७८ ॥
स्नुहीक्षीरेण सम्भिन्नं वत्सनाभसमन्वितम् ।
कटुत्रयसमायुक्तं गुटिका चणकोपमा ॥७९॥
ज्वरं हरति सद्यश्च सन्निपातांस्त्रयोदश ।
भोजने दधिभक्तञ्च शर्कराक्षीरदाडिमम् ॥
सर्वत्र विदितो लोके रसोऽयं ताम्रभैरवः ८०

र. ( मा. ) र का., रससारसग्रह, ज्वराधिकारे ।

भाषा—तांबेके बारीक पत्र बनाकर मकोयके रसमे ४ पहर स्वेदनकर द्विगुण गन्धक और एक भाग हरिताल और चतुर्थांश मैनसिल तथा पञ्चमांश पारा देकर मकोयके रससे ४ पहर घोटकर सुखाकर सम्पुटमे बन्दकर ४ पहरतक बालुकायंत्रमे पकावे । स्वाङ्गशीतल होनेपर निकालकर शुद्धबछनाग, त्रिकटु, ये दोनो उसके बराबर २ मिलाकर थूहरके दूधमे मर्दनकर चनेप्रमाण गोलियें बनाकर रखछोड़े । इनमेंसे १-१ गोली शक्कर अथवा अष्टादशाङ्गादि क्वाथके साथ देनेसे यह १३ सन्निपातोंको नष्ट करता है । भोजनमे दही, भात, शक्कर और दूध देना ॥ २० ॥

## २१ ताम्रभैरवोरसः ( द्वितीयः )

ज्वरे वा सन्निपाते वा शून्यतायां भ्रमे तथा ।
दत्तन्यरसमध्ये तु ताम्रं क्षेप्यं शिवास्रये ॥८१
न कस्यापि प्रकाश्यं स्याद्यानुभूतं सहस्रशः ।
धन्वन्तरिप्रणीतं हि ताम्रं सर्वगुणाधिकम् ॥
अम्लान्तरस्थं त्रिदिनं दिनेश-
पत्रं ततो भूमिमलावगूढम् ।
तप्तं ततो हुण्डपुटत्रयेण,
क्षिप्तं ततो निम्बुरसे दिनैकम् ॥८३॥
ऐङ्गुदके किण्वरसेऽथ दुग्धे
त्रिस्त्रिर्निषिक्तं च रसार्धलिप्तम् ।
द्विभागगन्धाश्वितदुग्धिकाम्बु-
प्लुतं ततो भस्मपुटे मृतञ्च ॥ ८४ ॥
सगन्धसूर्याम्लगणार्द्रकाग्नि-
भृङ्गोद्भवाम्भोभिरनुक्रमेण ।
पञ्चामृतेनाथ च सप्तकृत्वः
पृथक् पुटैः सिद्धमिदं गदारि ॥८५॥
त्रिदोषादिगणै ग्रैस्तं लोकमालोक्य भैरवः ।
तज्जीवनममुं ताम्ररसं चक्रे कृपापरः ॥८६॥
अभ्रकेण क्षये गूढआलगोलेन भैरवः ।
देयो व्योषेण हृद्रोगे विसूच्यां विश्वया सह ॥
गर्भगुप्तरसं भाण्डं भूत्या कृत्वा निरुध्य च ।
ताप्यतेऽनलकीलायामेवं भस्मपुटं स्मृतम् ८८

र (मा ), ज्वराधिकारे ।

टि०—आलं तालकं, गोला मन शिला, अनयो समाहार आलगोल तेन आलगोलेन ।

भाषा—साधारणज्वरमे या सन्निपातमे सज्ञाशून्यता तथा भ्रममे जितने रस दिये जाय इनमे यदि इसताम्रका योग कियाजाय तो वह बहुतही चढवढ कर कामकरताहै । यह हजारों वारका अनुभूताकियाहुआहै । इसकाविधान यहहै अत्यन्तखट्टीकाजीमे ताम्रके बारीकपत्रो को ३ रोज रखकर चौथेरोज उनसेदूना गन्धक काजीमे पीसकर उनके ऊपर लगाकर गोला बनाय शरावसम्पुटमे बन्दकर बराहपुटमे आचदे । ऐसे तीनबार आचदेकर एकरोज नीबूके रसमे उन पत्रोंको भिगोकर दूसरेरोज उसीपात्रको अग्निपररख पत्रोंको गरमकरके इगोरन, सुराबीज, आक और थूहरका दूध, इनप्रत्येकमे तीनतीन वार बुझावे । फिर उसतावेसे आधापारा और दूना गन्धक देकर छोटी दूधीके रसमे घोटकर गोलाबनाकर सुखाकर ३—४ कपड़मिट्टी दीहुई हंडीमे रख ऊपरसे शराव ढककर सन्धिको गुड़चूने प्रभृतिसे बन्दकर हंडीके मुहतक सफेद छनीहुई राखभरकर ऊपर कुल्हड़ी उल्टी रखकर सान्धिको गुड़चूने वगैरहसे बन्दकर कपड़मिट्टी देकर सुखाकर चूल्हेपर १२ प्रहरकी क्रमसे मन्द, मध्य और खर अग्नि देवे । स्वाङ्गशीतल होनेपर निकालकर द्विगुण गन्धक देकर हुरहुर या आकका

दूध, अम्लवर्ग (नीवू-जंभीरी-बीजपूर और अम्लवेत), अदरख, चित्रक, भिलावा और भाग इनप्रत्येकके रसोसे मर्दनकर गोला बनाकर वराहपुटमे ७-७ आचे देकर अखीरमे पञ्चामृतकी ७ आचें देनेसे यह **ताम्रभैरवरस** सिद्धहोगा। त्रिदोषादि रोगोंसे जगत्को कवलित कियाहुआ देखकर उनके कल्याणकेलिये भैरवने इसको तैयार कियाहै। इसमेंसे १ रत्ती द्विगुण कर्पूर प्रभृतिके साथ सन्निपातमे और अभ्रक, हरिताल और मैनसिल इनप्रत्येककी भस्म १-१ रत्तीके साथ क्षयमे, द्विगुण त्रिकटुके साथ हृद्रोगमे, द्विगुण सोठके साथ हैजेमे, एव तत्तदनुपानोंके साथ इसको देनेसे यह समस्त रोगोंको दूरकरताहै ॥२१॥

## २२ ताम्रभैरवोरसः ( तृतीयः )

**विषं खदिरसारश्चाऽऽकल्लकं टङ्कणं तथा ।**
**व्योषं ताम्रं शुद्धफेनं चणमात्रा वटी कृता ८९**
**दीयते श्वासकासेषु पीनसे ग्रहणीकफे ।**
**नाशयेन्नात्र सन्देहस्तिमिरञ्च यथा रविः ॥**
**ताम्रभैरव इत्येष ज्वराणाञ्च निकृन्तनः॥९०॥**

र. सु, यो स, ज्वराधिकारे ।

भाषा—शुद्धवछनाग, खैरसार, अकलकरा, भुनासुहागा, सोंठ, मिर्च, पीपल, ताम्रभस्म और शुद्ध अफीम सबसमभाग लेकर अदरखके रस वगै़रहसे घोटकर चने प्रमाण गोलिये बनाकर रखलेना। इनमेसे १-१ गोली तत्तद्रोगहरानुपानके साथ देनेसे श्वास, कास, पीनस, ग्रहणी, कफरोग, इनसबको इसतरह नष्टकरताहै जैसे सूर्य अन्धकारको ॥२२॥

## २३ ताम्रभैरवोरसः ( चतुर्थः )

**चिञ्चेङ्गुदीधूर्तपयःस्विनीनां**
**निर्गुण्डिपञ्चाङ्गरसेऽथयूषे ॥**
**वज्र्यर्कदुग्धे क्रमशस्त्रिवारा-**
**न्निर्वापितं शुद्ध्यति ताम्रपत्रम् ॥९१॥**
**सकाञ्जिकेन द्विगुणेन पञ्च-**
**कृत्वः सुगन्धेन कृतोपलेपम् ।**
**छायाविशुष्कं पुटपाकपक्वं**
**पञ्चत्वमप्यश्नुति शुभ्रताञ्च ॥ ९२ ॥**
**पुटानि पञ्चामृतजानि पञ्च**
**फलत्रयस्य त्रिपुटान्यवाप्य ।**
**सिद्धं सुधाभूतमिदं त्रिदोष-**
**ज्वरादिरोगापहमादिशन्ति ॥ ९३ ॥**

र (मा ) ज्वराधिकारे ।

भाषा—तात्रेके वारीक पत्रोंको इमली, इगोरन, धतूरा, दूधी, पञ्चाङ्गनिर्गुण्डी, इनका अङ्गस्वरस अथवा काथ, थूहर और आकका दूध, इन प्रत्येकमे ३-३ बार बुझानेसे ये शुद्ध होते है। फिर इनमे द्विगुण गन्धकको काजीमे पीसकर उनपत्रोंपर लेपकर छायामे सुखाकर भस्मयन्त्रमे १२ पहरकी आच देनेसे इनकी भस्म हो जायगी । इसके बाद पञ्चामृतमे घोटकर पूर्ववत् आचदे, ऐसे पञ्चामृतमे ५, त्रिफलामे ३, आचे देनेसे यह **ताम्रभैरवरस** सिद्ध होगा। इसकी १-१ रत्ती तत्तद्रोगहरानुपानके साथ देनेसे यह समस्त रोगोंको दूर करता है ॥२३

## २४ ताम्रयोगः ( प्रथमः )

**मृतं ताम्रं कणातुल्यं चूर्णं क्षौद्रविमिश्रितम् ।**
**निष्कार्धं भक्षयेन्नित्यं नष्टवह्निप्रदीप्तये ॥**
**आर्द्रकस्वरसं क्षौद्रं पलमात्रं भवेदनु ।**
**यथेष्टं घृतमांसाशी शक्तो भवति पावकः ॥**

र र स, र को, चि. र, वै चि, र क यो, व. रा, अग्निमान्द्ये चि र, ( **पञ्चवक्त्रः** ) र क यो, ( **अजीर्णकण्टकः** )।

भाषा—ताम्रभस्म और पीपलका चूर्ण समभाग मिलाकर रखछोड़े। इसमेसे ४-४ रत्ती मधुमिलाकर चाटकर ऊपरसे २ तोले अदरखकारस और २ तोले मधु मिलाकर पीनेसे नष्ट अग्नि प्रदीप्त होकर मासादि भारीपदार्थ पचानेकोभी समर्थ होता है॥ २४ ॥

## २५ ताम्रयोगः ( द्वितीयः )

**मृतताम्रस्य वल्लैकं शुण्ठीचूर्णं द्विमाषकम् ।**
**विड्भेदञ्च निहन्त्याशु पिबेदुष्णेन वारिणा ॥**

शुण्ठीस्थाने यवक्वाथं मलबन्धहरं भवेत् ॥९६
यो म, टो, मलभेदे। शूलाधिकारे।

टि०—मृतताम्रस्य भागैक पिवेदुष्णजलेनवा। शुण्ठीक्वाथं पिवेच्चानु हिङ्गुसौवर्चलान्वितमिति टोडरानन्दे पाठोस्ति अतो हिङ्गुसौवर्चलशुण्ठीना तुल्येन चूर्णेन दत्त्वा शुण्ठीक्वाथो दातव्य इत्यस्माकं सम्मति।

भाषा—ताम्रभस्म ३ रत्ती, सोठकाचूर्ण २ माशे मिलाकर गरमपानीके साथ पीनेसे पतलेदस्तोको दूर करता है। और केवल ताम्रभस्म मधुवगैरहके साथ चाटकर जवका क्वाथ पीनेसे मलवन्ध दूर होता है॥ २५॥

### २६ ताम्रयोगः ( तृतीयः )

वल्लैकं मारितं ताम्रं वह्निमूलककाञ्जिकैः।
पीत्वा जलोदरं हन्ति काञ्चनी वा भृता जले॥
अनुपिवेदितिशेष। यो म, जलोदरे।

भाषा—ताम्रभस्म ३ रत्ती, मधु वगैरहमे चाटकर चित्रकका क्वाथ अथवा काञ्जी अथवा हल्दीका क्वाथ पीनेसे जलोदर नष्ट होता है॥ २६॥

### २७ ताम्रयोगः ( चतुर्थः )

विषव्योषसमायुक्तं ताम्रश्वेतपरिशीलितम्।
वातशूलं तथा गुल्मं सद्यो हन्ति विसूचिकाम्
नृ क, वातरोगे

भाषा—शुद्धवछनाग और त्रिकटुकेसाथ ताम्र सेवन करनेसे वातशूल, गुल्म और हैज़ा ये तत्काल नष्ट होते हैं॥ २७॥

### २८ ताम्रयोगः ( पञ्चमः )

केवलं जारितं ताम्रं शृङ्गवेररसैः सह।
दातव्यं पर्णखण्डेन सर्वगुल्मनिवारणम्॥ ९९
र क, र का, गुल्मे।

भाषा—केवल ताम्रभस्मको अदरखके रसके साथ अथवा पानके साथ देनेसे सव प्रकारके गुल्म नष्ट होते हैं॥ २८॥

### २९ ताम्रयोगः ( षष्ठः )

त्र्यूषणं पञ्चलवणं वल्लमात्रञ्च ताम्रकम्।
गुल्मशूलं हरत्येव विसूचीशूलवारणम्॥१००
वै. वि., गुल्माधिकारे।

भाषा—ताम्रभस्म ३ रत्ती, त्रिकटु और पाचों नमक मिलकर ४ माशेकेसाथ लेनेसे गुल्म, शूल और हैज़ा इनको यह नष्ट करता है॥ २९॥

### ३० ताम्रयोगः ( सप्तमः )

काकमाचीशृङ्गवेरजयारुबूकजैः पृथक्।
सप्तधा मूर्च्छितं शैले रसं निर्मलताङ्गतम्॥
सूक्ष्मपत्रीकृतं ताम्रं गन्धचूर्णेन योजितम्।
पुटेत्तदन्धमूषायां चूर्ण तक्रेण कारयेत्॥१०२
तच्चूर्णं त्रिकटूपेतं योजयेन्मधुसर्पिषा।
ग्रहणीक्षयरोगेषु हितं सोपद्रवेषु च॥
अम्लपित्ते च कुष्ठे च ज्वरे मेहे च कामले॥
र. र, व, ग्रहणीरोगे।

भाषा—मकोय, अदरख, भाग, अरनी, एरण्ड इन प्रत्येकके रसोमे पत्थरकीखरलमे सात ७ दिन मर्दनकरके काञ्जीसे साफ़ किया हुआ पारा, वहुत वारीकपत्र किया हुआ ताम्र और गन्धक समभागलेकर नीवूके रससे मर्दनकर गोलाबनाकर सुखाकर अन्धमूषामेरख गजपुटकी आचदे। स्वाङ्गशीतल होनेपर निकाल्कर ३-४ रोज़ खट्टी छाछकेसाथ मर्दनकर रखछोड़े। इसमेसे ३-३ रत्ती लेकर ३ माशे त्रिकटुके साथ घी और मधुमे मिलाकर चाटनेसे उपद्रवसहित ग्रहणी, क्षय, अम्लपित्त, कुष्ठ, ज्वर, और कामला इनसबको यह नष्ट करता है॥ ३०॥

### ३१ ताम्रयोगः ( अष्टमः )

ताम्रं मृतमपामार्गक्षारश्च क्षारकद्वयम्।
समं गुञ्जाद्वयं प्रातःप्रातर्नित्यं निषेवयेत्॥
मध्याह्ने भोजनात्पूर्वं सायमेव द्वयं भवेत्।
औदुम्बरे महाकुष्ठे साध्यासाध्येऽपि निश्चितम्
सप्तसप्तकमध्ये तदवश्यं नाशयेदपि।
माषं न भक्षयेन्नूनं न मत्स्यं क्षीरमेवच॥
अन्यद्वस्तु न चाश्नीयाद्विदाहि न गुरूदकम्॥
र का, कुष्ठे।

भाषा—ताम्रभस्म, अपामार्गकाक्षार, सज्जी, यवक्षार, ये सव समभाग लेकर मिलाकर २-२ रत्ती

प्रातःकाल और मध्याह्न तथा सायंकालको भोजनसे पहिले पानीकेसाथ लेनेसे ४९ दिनमे साध्य अथवा असाध्य औदुम्बर महाकुष्ठको यह नष्ट करता है । इसमे उड़द, मछली, दूध, दाह करनेवाली चीजें और भारी पानी इनका सेवन न करे ॥

### ३२ ताम्रयोगः ( नवमः )

म्लेच्छतुल्यं विषं पिष्ट्वा प्रदद्याद्रक्तिकामितम् ।
ऐकाहिकं द्व्याहिकञ्च तृतीयकचतुर्थकौ ॥
निहन्यान्नात्र सन्देहो यथा सूर्योदयस्तमः ॥

ना नि , र क ल , ज्वराधिकारे ।

टि०—रसकल्पग्रन्थान्तरात्र विषस्थाने रसो गृहीतोऽतस्तद्द्वयस्यापि दाने न कापि क्षतिः ॥

भाषा—ताम्रभस्मकी बराबर बछनाग पीसकर रखलेवे । इसमेसे १-१ रत्ती मधु वगैरहके साथ देनेसे ऐकाहिक, द्व्याहिक, तृतीयक और चातुर्थिक ज्वरोंको इसतरह नष्ट करता है । जैसे सूर्य अन्धकारका नाश करता है ॥ ३२ ॥

### ३३ ताम्रयोगः ( दशमः )

सताम्रो रस एवैकः पीतः शूलनिवारणः ।
कृमिजाते तुलस्या वा कषायः शर्करायुतः ॥

चि. क., शूले ।

भाषा—१ रत्ती ताम्रभस्मकेसाथ अकेली पारदभस्म १ रत्ती खानेसे शूल दूर होता है । यदि कृमिजशूल हो तो ऊपरसे शक्कर मिलाया हुआ तुलसीकारस या क्वाथ पिलाना चाहिये ॥ ३३ ॥

### ३४ ताम्रयोगः ( एकादशः )

कन्यातोयेताम्रं पत्रंतप्तंवारान् विंशतिं क्षिपेत्तत् ।
रसतस्ताम्रं द्विगुणं ताम्रात्कृष्णाभ्रकं द्विगुणम् ॥
एतत्सिद्धं त्रितयं चूर्णितताम्रार्द्धिकैः पृथग्युक्तम् ।
पिप्पलीविडङ्गोपणैः श्लक्ष्णं द्वैमाषिकं योज्यम् ॥
शूलाम्लपित्तशोथग्रहणीयक्ष्मादिकुक्षिरोगेषु ।
रसायनं महदेतत्परिहारो नियमितो नात्र ॥

र. चि., शूले.

भाषा—घीकुंआरके रसमे तांबेके बारीक पत्रोंको तपाकर बीसबार बुझावे । यह तांबा २ भाग, शुद्धपारा १ भाग, कृष्णाभ्रक भस्म ४ भाग, इन सबको मिलाकर तुलसी, अथवा अदरख वगैरहके साथ मिलाकर इसमे पीपल, विडङ्ग और मिरच खूब बारीक पीसकर तांबेसे आधे आधे भाग मिलाकर रखछोड़े । इसमसे २ माशे समयोचितानुपानके साथ देनेसे शूल, अम्लपित्त, शोथ, ग्रहणी, राजयक्ष्म और कुक्षिरोग इनसबको यह नष्ट करता है । इसमे कोई खास परहेज़ नहीं है ॥ ३४ ॥

### ३५ ताम्रयोगः (शुल्वसुन्दरः २) १२

रसेन ताम्रस्य दलानि लिप्त्वा
गन्धेन ताम्रद्विगुणेन पश्चात् ।
वस्त्रेण बद्धाऽथ समुद्रजेन
क्षारत्रयेणापि च वेष्टयित्वा ॥११२॥
मृदा च संलिप्य पुटं ददीत
दलानि ताम्रस्य विचूर्णयेच्च ।
धत्तूरचित्रार्द्रकदुत्रयैश्च
विमर्दयेत्तत्त्रिदिनप्रमाणम् ॥
कलाप्रमाणञ्च विषञ्च दत्त्वा
वल्लं ददीतास्य च वातशूले ॥११३॥

र. दी , शूले । रसरत्नसमुच्चये क्षारताम्रमिति नाम । नि. र , रसायनस., र. कौ., र.क.,र. चि , र. का., वै.चि., एषु शुल्वसुन्दरेति नाम ।

टि०—सम ताम्रदल लिप्त्वा रसेन्द्रेण द्विगन्धकम् । मृद्वस्त्रेण समाऽऽवेष्ट्य पुटयन्त्रे पुट ददेदिति शुल्वसुन्दरस्य पाठोस्ति तदपेक्षया प्रकृतपाठ एव श्रेयानिति । शुल्वसुन्दरे आर्द्रकस्थाने भावनाया वातारिर्गृहीतस्तत्रद्वयोरपि भावनाया न कापि क्षतिरस्ति ।

भाषा—ताम्रके कण्टकवेधीपत्रलेकर पत्रोंसे दूने पारे गन्धककी कज्जली बनाकर नीबूके रसमे घोटकर पत्रोंपर लपेटकर गोला बनाय सुखाकर चारतह कपड़ेमे बांधकर गेंद जैसा बनाले फिर इसके वज़नसे दूना सैंधानमक नीबूके रसमे पीसकर कपड़ेपर लेपकर उस पोटलीपर लपेट दे । इसके बाद इसीतरह उस पोटलीके बराबर सज्जीको नीबूके रसमे पीसकर कपड़ेपर लेपकर पोटलीपर

लपेट दे । सूखनेपर इसीतरह सुहागेको लपेटे । फिर अच्छीतरह पोटलीको सुखाकर ३-४ कपड़-मिट्टी सुखासुखाकर देकर शरावसम्पुटमे वन्दकर गजपुटकी आंचदे । स्वाङ्गशीतल होनेपर निकाल-कर धतूरा, चित्रक, अदरख और त्रिकटु इन प्रत्ये-कके यथा सम्भव स्वरस अथवा क्वाथसे १-१ रोज मर्दनकर सुखाकर इसमे १६ वां हिस्सा शुद्धवछ-नाग मिलाकर रखछोड़े । इसमेसे ३-३ रत्ती अदरख के रस वगैरहके साथ देनेसे वातशूल नष्ट होता है ॥

## ३६ ताम्रयोगः ( त्रयोदशः )

**ताम्रपत्रं रवेः क्षीरे निर्गुण्डीस्वरसे तथा ।**
**त्रिकण्टजे स्नुहीक्षीरे ताम्रं दग्ध्वा क्षिपेत्ततः**
**रसस्यार्द्धपलं शुद्धं गन्धकस्य पलन्तथा ।**
**कज्जल्यर्द्धेन जम्बीररसेन ताम्रतः पलम् ॥**
**परिलिप्यान्धमूषायां दद्यात्पञ्चपुटांल्लघून् ।**
**सम्मर्द्य मधुसर्पिर्भ्यां ततो रक्तिमित लिहेत् ॥**
**भगन्दरे सर्वभवे खाद्यं सर्वव्रणेषु च ॥११६॥**

भै र, भगन्दरे ।

**भाषा**—तांबेके बारीक पत्रोंको खूबलालकर आक और थूहरका दूध, संभाळू और गोखरूके स्वरसमे सात ७ वार बुझावे । फिर यह तांबा १ पल, शुद्धपारा आधा पल, शुद्धगन्धक १पल, लेकर पारे गन्धककी नीलवर्ण कज्जलीकर कजलीसे आ-धाजंभीरीकारस मिलाय तांबेपर लेपकरके गोला बनाले । फिर अन्धमूषामे बंदकर लघुपुटकी आंच देवे । ऐसे पारे और गन्धकका लेपकर पॉच पुट देनेसे यह सिद्धहोजायगा । इसमेसे १ रत्तीसे २ रत्तीतक औचिती देखकर मधु और घीमे मिला-कर देनेसे त्रिदोषज भगन्दर, और समस्तव्रण नष्ट होते हैं ॥३६॥

## ३७ ताम्रयोगः ( चतुर्दशः )

**मृतताम्रस्य गुञ्जैकं सितया सह लेहयेत् ।**
**द्राक्षां पथ्यासमां खादेदनुस्यादम्लपित्तजित् ॥**

यो. म, रसायनस., व रा, अम्लपित्ते ।

टि० वसवराजीये द्राक्षापथ्ये ताम्रेण सह पिष्ट्वा वटिका कृता दृश्यन्ते फले नास्ति विशेष । भवति भिषग्योगिणोश्च दाने भक्षणे च सौकर्यमिति विशेष , नाम च ताम्रकल्प इति स्थापितम ।

**भाषा**—ताम्रभस्म १ रत्ती शक्कर और मधुके साथ चाटकर द्राक्ष और हर्रे मिलाकर इतनेप्रमाणमे खाय जिसमे कि १-२ झाडे आजाय । उस प्रयोगसे अम्लपित्त बहुतजल्दी नष्टहोताहै ॥ ३७ ॥

## ३८ ताम्रयोगः ( पञ्चदशः )

**शुद्धं पारदगन्धकाभिकलितंयुक्त्याहतं यः पुमा-**
**नद्यात्ताम्रमनूतने शशिकलाक्षौद्रान्वितं पथ्यभुक्**
**कोठोदर्दकशीतपित्तजरुजो नश्यन्त्यवश्यं दिनै-**
**रल्पैरस्य नरस्य यान्ति विलयं कुष्ठानि चाष्टादश**

यू यो त., रसायनम., शीतपित्तोदर्दकुष्ठेषु ।

**भाषा**—शुद्धपारे और गन्धकके योगसे मारेहुए ३ रत्तीताम्रको ४ आनेभर बाकुचीके चूर्णके साथ मधुमे मिलाकर चाटनेसे और पथ्यपूर्वकरहनेसे कोठ, उदर्द, शीतपित्त और १८ प्रकारके कुष्ट थोडेही दिनोंमे नष्टहोजाते हैं ॥ ३८ ॥

## ३९ ताम्रयोगः ( षोडशः )

**ताम्रचूर्णं समोशीरं केसरं शीतवारिणा ।**
**पीतं मूर्च्छां द्रुतं हन्याद्वृक्षमिन्द्राशनि र्यथा ॥**

र सु, यो म, र क. ल., र. च, मूर्च्छायाम् ।

**भाषा**—ताम्रभस्म, खस और केसर ३-३ रत्ती लेकर एकजगह मिलाकर ठंढे पानीके साथ पीनेसे मूर्च्छाको इसतरह नष्ट करताहै जैसे वृक्षको विजली नष्टकरतीहै ॥ ३९ ॥

## ४० ताम्रयोगः ( सप्तदशः )

**ताम्रं दुरालभाक्वाथैः पीतन्तु घृतसंयुतम् ।**
**निवारयेद्भ्रमं शीघ्रं मूर्च्छांश्चापि सुदुस्तराम् ॥**

र. सु, यो म, वै. द, र क ल, र क, र. च, भ्रमे ।

**भाषा**—शुद्ध ताम्रभस्म एकरत्तीसे तीनरत्तीतक घीके साथ चाटकर जवासाका क्वाथ पीनेसे भ्रम और दुस्तर मूर्च्छा इनको यह बहुत शीघ्र नष्टकर-ताहै ॥ ४० ॥

## ४१ ताम्रयोगः ( अष्टादशः )

अथवा सुमृतं ताम्रं सूक्ष्मैलाविजयान्वितम् ।
माषमात्रं मधुयुतं मूत्रकृच्छ्रनिवारणम् ॥१२१

ना. वि., र म. मा , मूत्रकृच्छ्रे ।

भाषा—अच्छीतरह माराहुआ ताम्रा, छोटी इलायची और भाग इनतीनोंको समभागमे मिलाकर १ माशाके प्रमाणमे मधुके साथ मिलाकर चाटनेसे मूत्रकृच्छ्रको नष्टकरताहै ॥४१॥

## ४२ ताम्रयोगः ( ऊनविंशः )

रसगन्धकयोः कर्ष प्रत्येकं शोधयेद्भिषक् ।
ततः कज्जलिकां कृत्वा नैपालं ताम्रपत्रकम् ॥
कण्टवेध्यं विधातव्यं सर्वमेकत्र कारयेत् ।
पात्रे हि मृत्तिकोद्भूते परं दद्याद्रसं शुभम् ॥
पक्वजम्बीरसम्भूतं यथा प्लावितमेव तत् ।
आतपे स्थापयेत्पश्चाद्यावत्पङ्कोपमं भवेत् ॥
पाणिना मर्दयित्वा तु वटिकां कारयेत्ततः ।
विशोष्य भक्षयेद्रक्तिद्वयं तस्मान्महौषधात् ॥
दिनत्रयान्तरेणैव रक्तिरक्तिं विवर्धयेत् ।
परिहारविधिस्तेन धान्यजीरानुपानतः ॥
प्रातरेतद्विधातव्यं हन्ति पित्ताम्लसम्भवम् ।
ग्रहण्यामुद्भूतं शूलमम्लपित्तञ्च दारुणम् ॥
अजीर्णं रक्तपित्तञ्च क्षयं कुष्टं विशेपतः ॥

र. र, र. च , अजीर्णे ।

भाषा—शुद्धपारा, गन्धक और नेपाली ताम्रके बारीकपत्र इनसबको जमीरीका रसदेकर १–२ रोज घुटावे । फिर मिट्टीके मकोरेमें रखकर इतना रस देवे जिसमेकि यह आप्लुतहोजाय फिर उसको कड़े धूपमे रखदे । यह देखताहरे कि ताम्बेके पत्र गलकर उसमे अदृश्य होजाय । फिर उसकी २–२ रत्तीकी गोलियें बनाकर रखछोड़े । इनमेसे १–१ गोली खाकर चार ४ आनेभर जीरा और धनियाको पानीमे पासकर उसके ऊपरसे सुबहमे लेनेसे तीनदिनमे भयङ्कर अम्लपित्त और सङ्ग्रहणीसे उत्पन्न शूल, अजीर्ण, रक्तपित्त, क्षय और कुष्ठ इनको यह नष्टकरताहै ॥ ४२ ॥

## ४३ ताम्रयोगः ( विंशः )

मृतं ताम्रं पलैकन्तु चिञ्चाक्षारं पलाष्टकम् ।
रामठं च शिवां व्योपं करञ्जबीजचोरकम् १२८
प्रत्येकं पलमात्रन्तु चूर्णं कोष्णोदके पिबेत् ।
कर्षैकं शूलशान्त्यर्थं सर्वोपद्रवसंयुतम् ॥१२९॥

र र, र को, र. क, र च, शूलाधिकारे । र च., शूलगजकेसरी ।

भाषा—विशुद्ध ताम्रभस्म १ पल, इमलीकाक्षार ८ पल, भुनीहींग, हर्रे, त्रिकटु, करंजबीज, खरजवायण ये प्रत्येक १-१ पल लेकर कूटकपडछानकर मिलाकर रखछोड़े । इसमेसे १-१ तोला गरमपानीके साथ लेनेसे समस्त उपद्रवोंके साथ शूलको नष्टकरताहै ॥ ४३ ॥

## ४४ ताम्रयोगः ( एकविंशः )

स्थाल्यां सम्मर्द्य दातव्यौ माषिकौ रसगन्धकौ
नखक्षुण्णं तदुपरि तण्डुलीयं द्विमाषिकम् १३०
ततो नैपालताम्रस्य विधाय सुकपालकम्
त्र्यूषणैः पूरयेदूर्ध्वं सर्वां स्थालीं ततोऽनलः ॥
स्थाल्यधो नालिकां यावद्देयस्तेन मृतस्य च ।
रक्तिकैकां समादाय त्रिफलाचूर्णरक्तिकाम्१३२
रक्तिमेकां त्र्यूपणस्य विडङ्गस्य च रक्तिकाम् ।
घृतेन मधुनाऽऽलोड्य प्रथमे दिवसे ततः ॥
रक्तिवृद्धिं प्रतिदिनं कुर्यात्ताम्रादिषु त्रिषु ।
स्थिराविडङ्गरक्तिस्तु यदा भेदोऽविवक्षितः ॥
रक्तदुष्टौ विडङ्गस्य भेदोऽयं सम्प्रदर्शितः ।
तदा विडङ्गं त्वधिकमन्यथा रक्तिकाद्वयम् ॥
द्वादशाहं योगवृद्धिस्ततो ह्रासक्रमोऽप्ययम् ।
ग्रहणीमम्लपित्तञ्च क्षयंशूलञ्च सर्वथा ॥
ताम्रयोगोजयत्येष बलवर्णाग्निवर्धनः ॥१३६॥

टो., च. द , ग्रहण्याम्

भाषा—एकनई मज़बूतहंडीपर ६-७ कपडमिट्टी देकर उसमे समभाग पारे और गन्धककी नीलवर्ण

कज्जलीरखकर कज्जलीकी बराबर कांटेवाली चौलाई को नखोंसे तोडकर कज्जलीपर डालकर कज्जलीकी बराबर शुद्धनेपाली ताम्रकीकटोरी ढकदे । और गुडचूने वगैरहसे सन्धि बदकर त्रिकटुके बारीकचूर्णसेहंडीको ऊपरतक भरदे । फिर उसपर टक्कन देकर ५-६ कपडामिट्टी करदे । सूखनेपर चूल्हेपर चढाय ४ पहरकी तीक्ष्ण अग्नि देकर स्वाङ्गशीतल होनेके बाद भस्महुई ताम्रकी कटोरीको निकालकर खरलकर रखछोडे । इसमेंसे एक एक रत्ती लेकर त्रिफला, त्रिकटु, विडङ्ग इनकी १-१ रत्तीके साथ मिलाकर घृत और मधुके साथ देवे । फिर प्रतिदिन १-१ रत्ती सबकी बढावे । पर विडङ्गकी एक रत्ती रक्खे । जब रक्तविकार कुष्ट प्रभृतिमे इसका प्रयोगकरना होतो प्रथमहीसे ताम्रादिकोंकी १-१ रत्ती और विडङ्गकी २ रत्ती से बढाना शुरूकरे । ऐसे १२ रोजतक बढाता जाय फिर १२ रोज तक उसीतरह घटावे। यह इसका १ कल्प हुआ। इसतरह करनेसे ग्रहणी, अम्लपित्त, क्षय, शूल, मन्दाग्नि, धातुक्षय प्रभृतिको यह बहुतशीघ्र नष्टकरताहै ॥४४॥

**४५ ताम्रयोगः ( शूलहरः ) ( द्वाविंशः )**

**अच्छं कण्टकवेध्यं शुद्धं नेपालजं ताम्रम् ।**
**हलिनीमूलककल्कै र्लिप्त्वा पुटेच्छरावैस्त्रिः**
**आप्लाव्य जम्भनीरै र्लोहं सूतं सुगन्धकंशुद्धम्**
**दत्त्वा पुटेत्सुयुक्त्या स्वाङ्गशीतंसुचूर्णयेद्वैद्यः ॥**
**सर्वाष्टांशं सूतं बद्धं वा गन्धकार्धसंयुक्तम् ।**
**भूयो दत्त्वा घृष्ट्वा यथानुपानं प्रयोजयेत्प्राज्ञः॥**
**रक्तित्रितयं प्रात र्वाते कफे च सर्वत्र ।**
**क्षीरं घृतमधुतोयं शीतं चोष्णं रसं वानु १४०**
**एतच्छूलहरं रसायनवरं गुल्माम्लपित्तापहं,**
**कासश्वासविनाशनं क्षयहरं पाण्डुामयध्वंसनम् ।**
**कोष्ठस्थान् ग्रहणीगदानपिजयेत्सर्वामयानामजां-**
**श्छोथार्शोगुदजाग्निमान्द्यमुदरं**
**प्लीहानमप्युद्धतम् ॥**

र. क, शूले ।

भाषा—विशुद्ध नेपाली ताम्रके कण्टकवेधी पत्र बनाकर करिहारी और मूलीकी जड़के कल्कसे लेपित-कर शरावसम्पुटमे बन्दकर गजपुटकी तीन आचदे । फिर लोहभस्म, शुद्धपारा और गन्धक ये प्रत्येक उस तावेकी बराबर उसमे मिलाकर जंभीरीके रससे मर्दनकर गोला बनाय सुखाकर शरावसम्पुटमे बन्द-कर गजपुटकी आचदे । स्वाङ्गशीतल होनेपर निका-लकर इसतमामसे आधा शुद्धगन्धक और अष्टमाग बद्धसूत अथवा शुद्धपारा देवे । और नीलवर्ण कज्जलीकर रखछोडे । इसमेंसे ३-३ रत्ती लेकर सुबहमे दूध, घृत, मधु और पानी ( ठढा या गरम) केसाथ लेनेसे शूल, गुल्म, अम्लपित्त, कास, श्वास क्षय, पाण्डु, ग्रहणी, उदररोग, शोथ, बवासीर, मन्दाग्नि, प्लीह इनको यह दूर करता है ॥ ४५ ॥

**४६ताम्रयोगः ( त्रयोविंशः )**

**शुद्धं ताम्रं समादाय सूक्ष्मपत्राणि कारयेत् ।**
**निर्वापयेत्तापयित्वा दशवारान् पृथक् पृथक् ॥**
**हेमपुष्प्या स्तथा व्याघ्र्याः सन्धिभग्नकधूर्तयोः ।**
**शिरीषपुष्पाऽब्जपुष्प्योः शृगालपुच्छकस्यच ॥**
**करीरपुष्पस्य तथा स्वरसेषु समाहितः ।**
**सूतगन्धकयोः कुर्यात्कज्जलीं समभागयोः ॥**
**शिरीषपुष्पस्वरसे मर्दयित्वाऽञ्जनप्रभाम् ।**
**ताम्रपत्राणि च तया लेपयेद्भिषगुत्तमः ॥**
**रुद्ध्वा लवणयन्त्रे तु पचेत्तानि दिनत्रयम् ।**
**निसर्गशीतान्युद्धृत्य सूक्ष्मचूर्णं समाचरेत् ।**
**उपर्युक्तद्रव्यरसै रेकैकं च पृथग्दिनम् ॥**
**चक्रिकाः कारयेत्सूक्ष्माः शोषयित्वा खराऽऽतपे**
**पुटेत्क्रोडपुटे सर्वं स्वरसैरेवमाचरेत् ॥**
**ताम्रयोगोऽयमुचितानुपानैः सर्वरोगहा ॥**

नू क, सर्वरोगे ।

भाषा—शुद्धताम्रपत्रोंको तपातपाकर स्वर्ण-पुष्पी ( सत्यानाशी ) कटेरी, धतूरा, जोडतोड़ ( पंजाबी ), गीदड़तमाखू, सिरसके फूल, करीर पुष्प, श ाङ्खली इनप्रत्येकके रसोमे १०-१० बार

वुझाकर शुद्धपारा और गन्धककी समभाग कज्जली वनाय शिरीषपुष्पस्वरसमे घोटकर ताम्रपत्रोंपर चढाय लवणयन्त्रमें बन्दकर तीन दिनकी आच देकर स्वाङ्गशीतल होनेपर निकालकर उक्त द्रव्योंके रसोंमें एक एक रोज़ घोटकर टिकिया वनाय शराव सम्पुटमे वन्दकर पाचसेर कण्डोंकी आचदे । ऐसे वारवार प्रत्येककी १०-१० आचेदेवे । फिर वारीक पीसकर रखछोडे । इसमेसे तत्तद्रोगहरानुपानके साथ एक एक रत्ती देनेसे समस्तरोग दूर होते है यह हजारों वारका अनुभूत है । लोकोपकारके लिये यहा प्रकट किया गया है । पाण्डु, प्लीहा, यकृत, गुर्दोंकासोजा मन्दाग्नि, उल्टी, श्वास, कास, हिचकी प्रभृतिमे रामवाणकीतरह कामकरता है ॥ ४६ ॥

## ४७ ताम्ररसायनम्

तनु पत्रीकृतं ताम्रं नैपालं गन्धकं समम् ।
दत्त्वा चोर्ध्वमधो मध्ये शरावे तु भिषग्वरः ॥
कृत्वा स्वल्पपिधानञ्च स्थालीमध्ये निधापयेत्॥
शर्कराभक्तलेपेन तस्य सन्धीन्निरोधयेत्१५०॥
वालुकाभिः प्रपूर्याथाऽऽगलस्थालीं प्रयत्नतः ।
चुल्ल्यामारोप्य यामैकमधो ज्वालां प्रदापयेत् ॥
तत आकृष्टताम्रस्य मृतस्य त्विह योजना ।
अथकर्षं गन्धकस्य वह्निस्थलोहपात्रगम्१५२
अश्मदण्डेन सम्मर्द्य द्रुतं घृष्टं पुनः पुनः ।
रसोम्लमथितः शुद्धस्तावन्मानः प्रदीयते१५३
ततस्तथैवसम्मर्द्य पुनराज्यं प्रदापयेत् ।
अष्टबिन्दुकमानञ्च मर्दयेन्मूर्छितं तथा१५४
सर्वं स्यात्तत आकृष्य अश्मदण्डादिकाद् दृढम्
संहृत्यालम्बुपरसप्रस्तेन विलोडितम् ॥१५५॥
पुनस्तथैव वह्निस्थे लोहपात्रे विमर्दयेत् ॥
अलम्बुपारसैः पश्चाद्गोलकं सम्प्रकल्पयेत् १५६
तं गोलं वस्त्रसंबद्धं पिण्डे त्रिकटुजे पुनः ।
वसनान्तरितं कृत्वा पोट्टलीं कारयेत्सुधीः ॥
ततस्तां पोट्टलीमाज्ये मग्नां कृत्वा विधारयेत् ।
सूत्रेण दण्डसंलग्नां पाचयेत्कुशलो भिषक्१५८
यदा निष्फेनता चाज्ये गुटिका च दृढा भवेत्
तदा पक्वां समाकृष्य रक्तिमेकां तथा घृतम् ॥
त्रिकटुत्रिफलाचूर्णं तुल्यं प्रातः प्रयोजयेत्
तक्रं स्यादनुपाने तु ह्यम्लपित्तोच्छ्रये पुनः ॥
त्रिफलैव समा देया कोष्णं वारि पिबेदनु ।
सप्तमं दिवसं यावदेकैकां वर्धयेत्क्रमात् १६१
यथा वृद्धिं गतो योगस्तं तथैवाऽपकर्षयेत् ॥
योगोऽयं ग्रहणीयक्ष्मपक्तिशूलाम्लपित्तहा ॥
रसायनं समुद्दिष्टं गुदकीलादिनाशनम् ।
न चात्र परिहारः स्याद्विहाराहारकर्मसु १६३

वं. से, रसायने ।

भाषा—तैलादिकमे शुद्धकरके वारीकपत्र वनायाहुआ नेपाली ताम्र और शुद्धगन्धक समभाग लेकर ६–७ कपड़मिट्टी दियेहुए शरावमे आधागन्धक पीसकर नीचेरख ऊपरसे तावेके पत्रोंको उसमे दवाकर ऊपरसे फिर दूसरे पत्रे रख थोड़ा गन्धक छिडककर फिर वाकीके पत्रोको रखदे । इसप्रकार जितने पत्रहो उनको तहवतह लगाकर ऊपर गन्धकसे ढककर शरावको दूसरे शरावसे बन्दकर सन्धिको शक्कर और भातसे वन्दकर हडीमे रखके उसमे गलेतक वालूभरदे । फिर इसको चूल्हेपर चढाकर एकपहर तीव्र अग्निसे पकावे । स्वाङ्गशीतल होने पर निकालकर खूब वारीक पीसकर रखछोड़े । फिर उसकी वरावर गन्धक मिलाकर अग्निपर चढावे । गन्धकके गलजानेपर २–४ रोज नीवूके रसमे घोटाहुआ शुद्धपारा गन्धकके वरावर डालकर लोहेके डडेसे मर्दनकरे । कज्जली होजानेपर ये सवचीजे तोले तोलेभर होंतो ८ बूदके अदाज उसमे घी डालकर आगसे नीचे उतारकर लोहेके डंडेसे खूब मर्दनकरे । फिर उसमे २ पल गोरखमुण्डीका अङ्गस्वरस देकर चूल्हेपर चढाकर घोटते घोटते सुखादे । फिर नीचे उतारकर गोरखमुण्डीका रसदेकर १गोला बनाकर ४–५ तह कपड़ेके अन्दर लपेटकर पोटली बनाले । इसपोटलीको चतुर्गुणित त्रिकटुके कल्कमे

रखकर कपड़ेमे लपेटदे । फिर लोहेके पात्रमे गायका घी इतनाभरे कि पोटली उसमे डूबजाय और इस पोटलीको इसतरहलटकावे कि वर्तनके पेंदेसे २ अङ्गुल ऊचीरहे । फिर धीरे २ आच देकर पकावे जब घीमेसे फेन निकलना बदहोजाय और पोटली एक-दम कड़ी होजाय तब निकालकर रखछोड़े । स्वाङ्ग-शीतल होनेपर त्रिकटुका कल्क और वस्त्र वगैरहको निकालकर भीतरसे रसके गोलेको निकालले इसमेसे १ रत्तीकी मात्रा लेकर त्रिफला और त्रिकटु-काचूर्ण ३–३ रत्ती मिलाकर घीके साथ चाटकर ऊपरसे छाछपीवे । अगर अम्लपित्तकी अधिकता होतो त्रिकटु न दे । और छाछकी जगह केवल गर-मपानीदे इसतरह सातरोज़तक १–१ रत्ती रसकी तथा अनुपानकी वढाताजाय । आठवें रोज़से १–१ रत्ती घटानी शुरूकरे । इसतरह १४ रोजमे यह प्रयोग पूरा होगा । इससे ग्रहणी, राजयक्ष्म, पक्तिशूल, अम्लपित्त,ववासीर ये सब नष्टहोकर रसायनका फल होताहै । इसयोगमे विहार तथा आहारमे खासकोई-बन्धन नहींहै ॥४७॥

## ४८ ताम्ररसायनम्

कण्टकवेधनयोग्यं ताम्रस्य पत्रं पलं समादाय।
कर्षाधिकपलमात्रेऽम्लेऽग्नौ निर्दहेद्भिषक्कुशलः
एवं पुनरपि वारद्वितयं विमर्धमतिगाढम् ।
प्रत्येकं मिलितेष्वपि तथैव वारत्रयं दद्यात् ॥
इन्द्रस्वरसभावितगन्धकलिप्तन्तुताम्रकं कृत्वा ।
खर्परसम्पुटमध्ये विनिधाय मृदा तमुपलिम्पेत्
हस्तप्रमाणवदने गर्ते चतुर्हस्तपरीणाहे ।
दत्त्वेन्धनं करीषन्तुषमध्ये दहनमाधाय १६७
तदुपरि दत्त्वा ताम्र-
सम्पुटंनिहितं पुनश्च करीषाभिः ॥
संछाद्य तत्र वह्निं प्रज्वालयेद्भिषग्विशङ्कः १६८
तावत्पुटं प्रदेयं यावत्ताम्रश्च मृत्युमायाति ॥–
मृतमधिगम्य च भाण्डे
क्वचिदपि तत्स्थापयेत्पुटितम् १६९

तदनु तावत्प्रमाणं पारदमादायमर्दयेन्निपुणः ।
खल्वशिलाया मध्ये गृहधूमनिशेष्टिकाचूर्णैः ॥
पश्चाद्वारिविधानं पुनश्चत्रिकटुना खल्वयेन्निपुणः
मर्दितसूतस्यैवं पातनयन्त्रेण चोद्धारः ॥१७१॥
समकृतगन्धकसहितं
पुनरपि कृत्वा खल्वयेत्त्रिदिनम् ।
एवं च शुद्धसूतं मृतताम्रविमिश्रितंकुर्यात् १७२
दुग्धपलाष्टकमाज्यं तत्समश्च नारिकेलजलम् ।
द्विपलं कलितत्रिफलाक्काथश्च चतुर्गुणं दद्यात्
सुदृढे ताम्रकटाहे मार्तेवास्थापयेद्विविधविधिज्ञः।
दर्व्याच ताम्रमय्याऽऽयस्या चाल्यं पुनःपचेद्वैद्यः
ज्ञात्वा पाकं भूयो झटितिकटाहमवतारयेन्निपुणः
तदनु च तस्मिन्निष्टाः
संस्कृती विचार्य विदध्यान्निपुणः ॥
त्रिकटुत्रिफलालोहित–
चित्रकविडङ्गकभद्रमुस्तानाम्
जीरकयोः प्रत्येकं कर्षकलितचूर्णनिक्षेपः १७६
पुनरैलाकङ्कोललवङ्गजातीफलजातिकोषाणाम् ।
चूर्णं गुडत्वचोऽपि माषाष्टपरिमितं दद्यात्१७७
ततः सुशीते ताम्रे
माषाष्टकमतिविकीर्य घनसारम् ।
ताम्रमयादिकभाण्डे स्निग्धे मार्ते वा स्थाप्यम्॥
मनसि च विधाय सूर्यपूजां कृत्वा शुभे दिने चर्क्षे।
आदाय माषमेकं दधिमधुना सह भक्षयेत्सुचिरम्
तदनु चकण्ठप्रासंक्षीरंकार्यमनुपानमधिकाल्पम्
नक्तमनल्पं पुनरपि ताम्बूलं भक्षयेत्सरुजः ॥
गुञ्जाद्वयं त्रयं वा पञ्चकं वृद्धिं माषकं यावत् ।
स्थितमतश्चोपरिष्टात्प्रतिलोमंहासयेत्तदनु १८१
खादितमेतन्नियतं यस्य न ताम्रं प्रवर्तते प्रायः
तत्रापि सयवक्षारस्त्रिफलाक्काथोऽत्र पातव्यः
प्रारब्धेऽस्मिंस्ताम्रे
कतिचिद्दिवसान्न भक्षयेन्मत्स्यान् ।
क्रोधश्च दिवा निद्रां वेगनिरोधांस्त्यजेद्वैरम् ॥
शाकं चाम्लकवर्ज्यं दधिवहिरम्लं भक्षयेदेव ।

जह्यात्तिक्तकषायौजह्यात्तात्कालिकींपुष्टिम् १८४
वृष्यं मधुरं शीतलमथशाल्यन्नंमधुघृतमश्नीयात्
मद्गुररोहितशकुलगशमृगैणादिकं मांसम् १८५
खादन्नेतद्भेपजमजीर्णञ्च न जानाति ॥
जयति च कफमतिगाढं
कासं श्वासञ्च निवारयति ॥ १८६ ॥
विरचितमेतत्ताम्रं धर्माध्यक्षेण धर्मपालेन ।
विन्ध्याटवीये पिण्डितमिडानिबन्धचर्याभिः ॥

व से, रसायने ।

भाषा—तावेके कण्टकवेधी पत्र १ पल लेकर ५ तोले विजोरे वगैरहके अम्लरसमे डालकर अग्निमे पकावे । रसजलजानेके वाद वैसेही फिर रस डालकर जलावे । इसतरह तीनवार करे । फिर कुरैयाके अह्नस्वरससे शुद्धगन्धकको कईवार भावनाए देकर और इसी रसमे पीसकर उनपत्रोंपर समान प्रमाणमे लेपकर सुखाकर मिट्टीके शरावमे वन्दकर ३-४ कपडमिट्टी देकर सम्पुटको सुखाले । फिर ४ हाथ लवा चौडा खड्डा खोदे । पर उसका मुह एकही हाथ चौडारहे । उसमे सूखी लकड़ी और छानोंकी करसी आधेतक भरकर वीचमें थोड़ासा भूसा डालकर अग्नि रखदे । जिसमे कि वह तमाम अग्नि अंदर व्याप्त होजाय और वुझनेकी शका न रहे । उस तुषाग्निपर इस तावेके सम्पुटको रखकर ऊपरसे थोड़ासा भूसा और देकर करसी और लकड़ियोंसे खड्डेको भरदे । उसमेसे जब अग्निकी लपट निकलने लगे तव उसका मुंह खपडे वगैरहसे इसतरह ढकदे कि अधिक हवा प्रवेश न करे और अग्निभी न वुझे । जव वह १०-१२ दिनमे ठढा होजाय तव निकालकर खरलकरके रखछोड़े । इसके वाद घरका धूआ, हल्दी, ईंट, त्रिकटु इनमे १-१ रोज़ मर्दनकर डमरूयन्त्रसे उडाकर पारेको शुद्धकरले फिर उसकी वरावर शुद्धगन्धक देकर घीकुंआर वगैरहके रसके साथ ३ रोज़ मर्दनकर सुखाकर आतशी शीशीमे भरकर वालुकायन्त्रमे पकाकर रससिन्दूर बनावे । यह रससिन्दूर और पूर्वोक्त ताम्रभस्म समभाग लेकर इकट्ठे मर्दनकरले फिर तावे या मिट्टीकी कडाहीमे डालकर उसमे दूध घी ५-५ पल, नारियलका जल २ पल, त्रिफलाका काढा सबसे चौगुना देकर मन्द आचसे पकावे । और तावे या लोहेकी कड़छीसे घोटतारहे, जवपानी जलजाय और मावा एकदम लालहोजाय तवनीचे उतारकर इसको जिसरोगके ऊपरदेनाहो उसरोगको नष्टकरनेवाले गणोके क्वाथोंमे इसको परिपक्वकरके त्रिकटु, त्रिफला, रक्तचित्रककीजड़, विडङ्ग, नागरमोथा, स्याह और सफेद जीरा इनप्रत्येकका सूक्ष्मचूर्ण १—१ तोला मिलावे । और इलायची शीतलचीनी, लौंग, जायफल, जावित्री, दालचीनी इन प्रत्येकका चूर्ण, आठ आठ माशे मिलावे । इसके वाद अच्छी तरह ठंढा होनेपर १ माशे उड़ायाहुआ कपूर मिलाकर ताम्र अथवा लोहेके भाण्डको घीसे पोतकर अथवा घीके चिकने मिट्टीके पात्रमे रखदे । फिर मरीज़को वमन विरेचनादिकसे शुद्धकर उसके शुभ जन्मनक्षत्रादि देखकर सूर्यका पूजनकर इस रसायनमेसे १ माशालेकर दही और मधुके साथ मिलाकर खाकर यथेष्ट दूधपीवे । फिर दिनभरकुछ न खाय । रात्रिमे यथेष्टदूधसे तृप्तिकर ताम्बूलका सेवनकरे । इसके वाद दूसरे दिनसे २—२ रत्ती अथवा तीन ३ या पाच ५ रत्ती रोज बढाकर दूसरा १ माशा न वढे तवतक इसतरहक्रम जारी रक्खे । २ माशा मात्रा होनेपर जिसतरह वढायाहै उसीतरह घटाकर २ रत्तीतक लावे । इसका योग पूरा होनेतक यदि मनुष्यके शरीरमे फेरफार न मालूमहो तो फिरसे इसयोगको चालूकरे । और उसके ऊपर १ पल त्रिफलाके क्वाथमे२ माशे यवक्षार डालकर पिलावे । इस ताम्रयोगके प्रारम्भ करनेपर थोड़े दिनतक मछली न खाय । और क्रोध, दिनकी निद्रा, वेगरोध, शाक, और अम्लपदार्थ इनका परित्यागकरे । दही खट्टा होय तो भी भक्षणकरे ।

रखकर कपड़ेमे लपेटदे। फिर लोहेके पात्रमे गायका घी इतनाभरे कि पोटली उसमे डूबजाय और इस पोटलीको इसतरहलटकावे कि वर्तनके पेंदेसे २ अङ्गुल ऊचीरहे। फिर धीरे २ आच देकर पकावे जब घीमेसे फेन निकलना बदहोजाय और पोटली एकदम कडी होजाय तब निकालकर रखछोडे। स्वाङ्गशीतल होनेपर त्रिकटुका कल्क और वस्त्र वगैरहको निकालकर भीतरसे रसके गोलेको निकालले इसमेसे १ रत्तीकी मात्रा लेकर त्रिफला और त्रिकटुकाचूर्ण ३–३ रत्ती मिलाकर घीके साथ चाटकर ऊपरसे छाछपीवे। अगर अम्लपित्तकी अधिकता होतो त्रिकटु न दे। और छाछकी जगह केवल गरमपानीदे इसतरह सातरोज़तक १–१ रत्ती रसकी तथा अनुपानकी वढाताजाय। आठवे रोज़से १–१ रत्ती घटानी शुरूकरे। इसतरह १४ रोजमे यह प्रयोग पूरा होगा। इससे ग्रहणी, राजयक्ष्म, पक्तिशूल, अम्लपित्त,ववासीर ये सब नष्टहोकर रसायनका फल होताहै। इसयोगमे विहार तथा आहारमे खासकोईबन्धन नहींहै ॥४७॥

## ४८ ताम्ररसायनम्

कण्टकवेधनयोग्यं ताम्रस्य पत्रं पलं समादाय।
कर्षाधिकपलमात्रेऽम्लेऽग्नौ निर्दहेद्भिषक्कुशलः
एवं पुनरपि वारद्वितयं विमर्द्यमतिगाढम्।
प्रत्येकं मिलितेष्वपि तथैव वारत्रयं दद्यात्॥
इन्द्रस्वरसभावितगन्धकलिप्तन्तुताम्रकं कृत्वा।
खर्परसम्पुटमध्ये विनिधाय मृदा तमुपलिम्पेत्
हस्तप्रमाणवदने गर्ते चतुर्हस्तपरीणाहे।
दत्त्वेन्धनं करीषन्तुषमध्ये दहनमाधाय १६७
तदुपरि दत्त्वा ताम्र-
सम्पुटंनिहितं पुनश्च करीषाभिः॥
संछाद्य तत्र वह्निं प्रज्वालयेद्भिषग्विशङ्कः १६८
तावत्पुटं प्रदेयं यावत्ताम्रश्च मृत्युमायाति॥–
मृतमधिगम्य च भाण्डे
क्वचिदपि तत्स्थापयेत्पुटितम् १६९

तदनु तावत्प्रमाणं पारदमादायमर्दयेन्निपुणः।
खल्वशिलाया मध्ये गृहधूमनिशेष्टिकाचूर्णैः॥
पश्चाद्वारिविधानं पुनश्चत्रिकटुना खल्वयेन्निपुणः
मर्दितसूतस्यैवं पातनयन्त्रेण चोद्धारः॥१७१॥
समकृतगन्धकसहितं
पुनरपि कृत्वा खल्वयेत्त्रिदिनम्।
एवं च शुद्धसूतं मृतताम्रविमिश्रितंकुर्यात् १७२
दुग्धपलाष्टकमाज्यं तत्समश्च नारिकेलजलम्।
द्विपलं कलितत्रिफलाक्वाथश्च चतुर्गुणं दद्यात्
सुदृढे ताम्रकटाहे मार्तेवास्थापयेद्विविधविधिज्ञः।
दर्व्या च ताम्रमय्याऽऽयस्या चाल्यं पुनःपचेद्वैद्यः
ज्ञात्वा पाकं भूयो झटितिकटाहमवतारयेन्निपुणः
तदनु च तस्मिन्निष्टाः
संस्कृती विचार्य विदध्यान्निपुणः॥
त्रिकटुत्रिफलालोहित–
चित्रकविडङ्गकभद्रमुस्तानाम्
जीरकयोः प्रत्येकं कर्षकलितचूर्णनिक्षेपः १७६
पुनरैलाकङ्कोललवङ्गजातीफलजातिकोपाणाम्।
चूर्णं गुडत्वचोऽपि माषाष्टपरिमितं दद्यात् १७७
ततः सुशीते ताम्रे
माषाष्टकमतिविकीर्य घनसारम्।
ताम्रमयादिकभाण्डे स्निग्धे मार्ते वा स्थाप्यम्॥
मनसि च विधाय सूर्यपूजां कृत्वा शुभे दिने चर्क्षे।
आदाय माषमेकं दधिमधुना सह भक्षयेत्सुचिरम्
तदनु चकण्ठप्रासंक्षीरंकार्यमनुपानमधिकालपम्
नक्तमनल्पं पुनरपि ताम्बूलं भक्षयेत्सरुजः॥
गुञ्जाद्वयं त्रयं वा पञ्चकं वृद्धिं माषकं यावत्।
स्थितमतश्चोपरिष्टात्प्रतिलोमंह्रासयेत्तदनु १८१
खादितमेतन्नियतं यस्य न ताम्रं प्रवर्तते प्रायः
तत्रापि सयवक्षारस्त्रिफलाक्वाथोऽत्र पातव्यः
प्रारब्धेऽस्मिंस्ताम्रे
कतिचिद्दिवसान्न भक्षयेन्मत्स्यान्।
क्रोधश्च दिवा निद्रां वेगनिरोधांस्त्यजेद्वैरम्॥
शाकं चाम्लकवर्ज्यं दधिवहिरम्लं भक्षयेदेव।

जह्यात्तिक्तकषायौजह्यात्तात्कालिकींपुष्टिम् १८४
वृष्यं मधुरं शीतलमथशाल्यन्नंमधुघृतमश्नीयात्
मद्गुररोहितशकुलशशमृगैणादिकं मांसम् १८५
खादन्नेतद्भेपजमजीर्णश्च न जानाति ॥
जयति च कफमतिगाढं
कासं श्वासञ्च निवारयति ॥ १८६ ॥
विरचितमेतत्ताम्रं धर्माध्यक्षेण धर्मपालेन ।
विन्ध्याटवीये पिण्डितमिडानिबन्धचर्याभिः ॥

व से, रसायने ।

भाषा—तावेके कण्टकवेधी पत्र १ पल लेकर ५ तोले विजोरे वगैरहके अम्लरसमे डालकर अग्निमे पकावे । रसजलजानेके बाद वैसेही फिर रस डालकर जलावे । इसतरह तीनबार करे । फिर कुरैयाके अङ्गस्वरससे शुद्धगन्धकको कईबार भावनाए देकर और इसी रसमे पीसकर उनपत्रोंपर समान प्रमाणमे लेपकर सुखाकर मिट्टीके शरावमे वन्दकर ३-४ कपडमिट्टी देकर सम्पुटको सुखाले । फिर ४ हाथ लवा चौड़ा खड्डा खोदे । पर उसका मुह एकही हाथ चौड़ारहे । उसमे सूखी लकड़ी और छानोंकी करसी आधेतक भरकर बीचमें थोड़ासा भूसा डालकर अग्नि रखदे । जिसमे कि वह तमाम अग्नि अदर व्याप्त होजाय और वुझनेकी शका न रहे । उस तुपाग्निपर इस तावेके सम्पुटको रखकर ऊपरसे थोड़ासा भूसा और देकर करसी और लकड़ियोंसे खड्डेको भरदे । उसमेसे जव अग्निकी लपट निकलने लगे तव उसका मुह खपड़े वगैरहसे इसतरह ढकदे कि अधिक हवा प्रवेश न करे और अग्निभी न वुझे । जव वह १०-१२ दिनमे ठंढा होजाय तव निकालकर खरलकरके रखछोड़े । इसके वाद घरका धूआ, हल्दी, ईंट, त्रिकटु इनमे १-१ रोज मर्दनकर डमरूयन्त्रसे उडाकर पारेको शुद्धकरले फिर उसकी वरावर शुद्धगन्धक देकर घीकुआर वगैरहके रसके साथ ३ रोज़ मर्दनकर सुखाकर आतशी शीशीमे भरकर वालुकायन्त्रमे पकाकर रससिन्दूर वनावे । यह रससिन्दूर और पूर्वोक्त ताम्रभस्म समभाग लेकर इकट्ठे मर्दनकरले फिर तावे या मिट्टीकी कड़ाहीमे डालकर उसमे दूध घी ५-५ पल, नारियलका जल २ पल, त्रिफलाका काढा सबसे चौगुना देकर मन्द आचसे पकावे । और तावे या लोहेकी कड़छीसे घोटतारहे, जबपानी जलजाय और मावा एकदम लालहोजाय तबनीचे उतारकर इसको जिसरोगके ऊपरदेनाहो उसरोगको नष्टकरनेवाले गणोंके काथोंमे इसको परिपक्वकरके त्रिकटु, त्रिफला, रक्तचित्रककीजड़, विडङ्ग, नागरमोथा, स्याह और सफेद जीरा इनप्रत्येकका सूक्ष्मचूर्ण १-१ तोला मिलावे । और इलायची शीतलचीनी, लौंग, जायफल, जावित्री, दालचीनी इन प्रत्येकका चूर्ण, आठ आठ माशे मिलावे । इसके बाद अच्छी तरह ठंढा होनेपर १ माशे उड़ायाहुआ कपूर मिलाकर ताम्र अथवा लोहेके भाण्डको घीसे पोतकर अथवा घीके चिकने मिट्टीके पात्रमे रखदे । फिर मरीज़को वमन विरेचनादिकसे शुद्धकर उसके शुभ जन्मनक्षत्रादि देखकर सूर्यका पूजनकर इस रसायनमेसे १ माशालेकर दही और मधुके साथ मिलाकर खाकर यथेष्ट दूधपीवे । फिर दिनभरकुछ न खाय । रात्रिमे यथेष्टदूधसे तृप्तिकर ताम्बूलका सेवनकरे । इसके बाद दूसरे दिनसे २-२ रत्ती अथवा तीन ३ या पाच ५ रत्ती रोज़ वढाकर दूसरा १ माशा न वढे तवतक इसतरहक्रम जारी रक्खे । २ माशा मात्रा होनेपर जिसतरह वढायाहै उसीतरह घटाकर २ रत्तीतक लावे । इसका योग पूरा होनेतक यदि मनुष्यके शरीरमे फेरफार न मालूमहो तो फिरसे इसयोगको चालूकरे । और उसके ऊपर १ पल त्रिफलाके काथमे२ माशे यवक्षार डालकर पिलावे । इस ताम्रयोगके प्रारम्भ करनेपर थोड़े दिनतक मछली न खाय । और क्रोध, दिनकी निद्रा, वेगरोध, शाक, और अम्लपदार्थ इनका परित्यागकरे । दही खट्टा होय तो भी भक्षणकरे ।

तिक्तकषायरसोंका वर्जनकर तत्कालीन मेदवगैरहकी क्षीणता होनेके कारण जोकुछशरीरमे कृशता हो उसकी तरफ ख्याल न करे। वृष्य, मधुर और शीतवीर्य पदार्थ, पुराने चावल, मधु, घृत, मद्गुर और रोहित (रोहू मछली), शकुल (शलमाछ ब.), खरगोश, साधारण और कालामृग, इनका मास खाय। इसरसके खानेवालेको अजीर्णनहीं होताहै और इससे अत्यन्त वढाहुआ कफ, कास, श्वास, येसव नष्ट होतेहं। इसको विन्ध्यवासीने वनाया है॥

## ४९ ताम्ररसायनम् ( तृतीयम् )

गन्धकं जीर्णताम्रञ्च सूतकञ्च समांशकम्।
तण्डुलीयकमूलस्य रसे चाहिदलस्य च
लोहपात्रे पचेत्तावद्यावत्तद्गुलिकायते।
वस्त्रे तत्पोट्टलीं बद्ध्वा वेष्टयेत्तां सुपिष्टया॥
आमलक्या ततः पक्त्वा सर्पिषा मृदुवह्निना।
शर्करामधुसर्पिर्भिरालोड्य विधिवल्लिहेत्॥
नारिकेलपयः पेयं तक्रं चानुयथाविधि।
आचरेद्ब्रह्मचर्यन्तु हितार्थं वैद्यवत्सलः॥
दुर्नामप्लीहपाण्डुत्वज्वरकासादिकान्गदान्।
अग्निमान्द्यकृतान्सर्वान्निहन्यात्क्षिप्रमेव तु॥

व से, ( रसायने ), र का., कासाधिकारे।

भाषा—शुद्धगन्धक, ताम्रभस्म और शुद्धपारा समभाग लेकर कांटेवाली चौलाई और पान इनका अलग २ आठआठगुना रस देकर लोहेके पात्रमे पकावे। जब गोली बधने लायक होजाय तब उसका गोला बनाकर कपडेमे लपेटकर पूर्वोक्त रसोंसे आवलोंको वारीकपीस इसगोलीसे चतुर्गुणित कल्कमे इसपोटलीको रखकर लोहेके पात्रमे घी भरकर इस पोटलीको दोलायन्त्रमे लटकावे। परन्तु पोटली वरतनके पेदेसे दो अङ्गुल उंची और घीमे डूबीहुई रहनी चाहिये। फिर धीरे २ आच देकर पकावे। जब घीमेसे फेन आना वद होजाय और गोली परिपक्व होकर कड़ी होजाय तव निकालकर रखछोड़े। इसकी १-१ रत्ती मधु और घीके साथ चाटकर नारियलका जल अथवा छाछ पीवे। और रोज १-१ रत्ती वढावे। सातदिन वाद फिर १-१ रत्ती घटावे तो १४ दिनमे उसका प्रयोग पूरा होता है। अगर इतनेमे कार्य न होतो दूसरा अथवा तीसरा प्रयोगकरे। इसमें ब्रह्मचर्य रखना प्रधान है। यह रसायन बवासीर, प्लीह, पाण्डु, ज्वर, कास, श्वास, मन्दाग्नि इनसबको दूर करता है॥ ४९॥

## ५० ताम्ररसायनम् ( खण्डखाद्यं ) ४

रसस्य कर्षमादाय कालिन्दस्य रसेन च।
खल्वयित्वा च सप्ताहंदशाहं वाऽर्कवासरान्॥
नैपालञ्च वरं ताम्रं कृतपत्रंप्रलेपयेत्।
गन्धकस्य विशुद्धस्य मङ्गृह्य च पलार्धकम्॥
सूर्यावर्तरसेनापि शोधयेत्सप्तवारकम्।
पीतजामातृजरसै र्भावयेत्सप्तधा पुनः॥१९५॥
पश्चाद्विशोष्य सञ्चूर्ण्य पत्राणाञ्च तथोपरि।
चूर्णं दत्त्वा च संस्थाप्य स्थाल्याः पाकं समन्ततः
अहोरात्रगते पाके ताम्रात्तमुद्धरेत्सुधीः।
चूर्णयित्वा ततस्ताम्रं पटघृष्टञ्च कारयेत् १९७
गुडूच्याः सप्तकर्षास्तु खण्डात्सप्तार्धमुष्टिकम्।
सूर्यावर्तगुडूचीभ्यां स्वरसं द्विशरावकम्॥१९८॥
घृतस्य च पलं दत्त्वा पाचयेन्मृदुनाग्निना।
सम्यक् पाकं तु विज्ञाय ततस्तमवतारयेत्॥
एलाकर्पूरजात्यौ च यथालाभं पलानि च।
चूर्णयित्वा विनिःक्षिप्य भक्षयेच्च दिनेदिने॥
शूलमामं विषं हन्ति अम्लपित्तं वमिं तथा।
अन्नद्रवाह्वयं शूलं रात्र्युत्थञ्च सुदारुणम् २०१
परिणामसमुत्थञ्च सद्यो निर्मूलतां नयेत्।
ताम्ररसायनं ह्येतन्मुनिभिः परिकीर्तितम्॥

र का, अम्लपित्ते।

भाषा—एक तोले शुद्धपारेको पकेहुए कलींदेके रससे ७-१० अथवा १२ रोज मर्दनकर उसके बराबर नेपाली तावेके पत्रोपर लेपकर गन्धकको गलाकर हुरहुरके रसमे ७ वार शुद्धकर पीले

फूलके धतूरेके रससे सातरोज मर्दनकर सुखाकर चूर्ण बनाकर ६–७ कपड़मिट्टी दीहुई हण्डीमे चूर्णको छिडककर उसपर एक सकोरा ढकदे। और उसकी सन्धि गुड़चूनेसे बन्दकर ऊपर नमक अथवा राख भरकर ढक्कन बदकर अहोरात्रकी मध्यमाग्नि देवे। स्वाङ्गशीतल होनेपर निकालकर बारीक कपड़छान चूर्णकर गुड़चीका सत्त्व ७ तोले, खाड २८ तो., गुड़ची और हरहुरका रस ३२–३२ तोले, गायका घी ४ तोले लेकर उपरोक्त ताम्रको डालकर मन्द अग्निसे पकावे। जब चाशनीकी गोली बधने लगे तब उतारकर इलायची, शुद्धकपूर जावित्री प्रत्येक ४ तोले लेकर बारीक चूर्णकर उसमे मिलाकर चिकने बर्तनमे रखछोडे। इसमेसे २ माशेसे आधे तोलेतक समय और अग्निबलादिका विचारकर मात्रा कायमकर खानेसे शूल, आमविष, अम्लपित्त, वमि, अन्नद्रवशूल, रात्र्युत्थ भयंकर शूल परिणामशूल इनसबको यह जड़से नष्ट करता है॥

### ५१ ताम्राष्टकम्

हिङ्गुव्योषं मधुकरुचकं तिन्तिडीक्षारताम्रं,
सर्वं चैतन्मसृणमृदितं पीतमुष्णोदकेन।
क्षिप्रं शूलं क्षपयति नृणां तीव्रपीडासमेतं,
ध्वान्तं भानोरिव समुदयः साधु ताम्राष्टकं हि

र. र स, शूले।

भाषा—भुनाहींग, त्रिकटु, मुलहठी, संचल, इमलीका क्षार और ताम्रभस्म येसब समभागलेकर इकट्ठे खरलकर रखछोडे। इसमेसे १–१ माशा गरमपानीके साथ लेनेसे तीव्र पीडायुक्त शूल गुल्म, और मन्दाग्नि इनसबको यह इसतरह नष्ट करता है जैसे सूर्य अन्धकारको नष्ट करता है॥ ५१ ॥

### ५२ ताम्रेन्द्ररसः ( वङ्गेन्द्र-लोहसुंदर )

मृतशुल्वसमं सूतं गन्धश्च क्रमपाचितम्।
सम्भाव्य खदिरक्वाथै मंजिष्ठादिगणेन च॥
भृङ्गजेन वटीं बद्ध्वा कुष्ठाद्युदरनाशिनी।
ताम्रेन्द्रो नाम विख्यातः कफवातहरः स्मृतः
एवं रसौ प्रकर्तव्यौ वङ्गेन्द्रलोहसुन्दरौ २०५

रससार, र. का,

भाषा—ताम्रभस्म, शुद्ध पारा और गन्धक समभाग लेकर पर्पटी बनाकर खैर और मञ्जिष्ठादि गणके क्वाथसे भावनाए देकर सुखाकर भगरेके रससे घोटकर ३–३ रत्तीकी गोलियें बनाकर रखछोड़े। इनमेसे १–१ गोली समयोचितानुपानके साथ देनसे कफवायु, कुष्ठ, शूल, गुल्म और उदररोग इनको यह नष्टकरताहै। इसीतरहसे इसयोगमे ताम्रके स्थानमे वङ्ग मिलानेसे वङ्गेन्द्र और लोह मिलानेसे लोहसुन्दर तैयारहोगा॥ ५२ ॥

### ५३ ताम्रेश्वररसः ( प्रथमः )

गन्धकस्य पलं प्रोक्तं रसस्य द्विपलं तथा।
नैपालस्य विशुद्धस्य ताम्रस्य च पलं भवेत्॥
ततोगन्धार्धचूर्णेन ताम्रं संयोज्य चूर्णयेत्।
शेषार्धगन्धकं दत्त्वा पारदं मर्दयेद्भिषक्॥
रसेन हस्तिशुण्ड्याश्च लोहपात्रे पचेच्छनैः।
कृत्वा पङ्कसमं पाकं ताम्रेण सह योजयेत्॥
तच्च गन्धकचूर्णेन संवेष्ट्य हविषा सह।
पाचयेत भिषक् प्राज्ञः पाकविन्मृदुवह्निना॥
आलोड्य मधुसर्पिर्भ्यां भुक्त्वा तक्रं पिबेदनु।
अग्निमान्द्यमजीर्णञ्च ग्रहणीपाण्डुकामलाः॥
परिणामरुजं चाशु नाशयेत्त प्रयोजितम्॥

व. से, र. का, शूले।

भाषा—शुद्धगन्धक १ पल, पारा २ पल और नेपाली ताम्रभस्म १ पल लेकर आधापल गन्धक ताम्रमे मिलाकर १–२ पहर घोटकर अलग रखछोड़े। और आधा बचाहुआ गन्धक पारेमे डालकर एकरोज घोटकर हस्तिशुण्डीका रसदेकर यहातक मर्दनकरे कि उसमे पारेकी चमक न रहे। फिर इसको सुखाकर लोहेकी कड़ाहीमे डालकर मद अग्निसे पकावे। जब कीचड़ जैसा होजाय तब गन्धक मिलेहुए ताम्रके चूर्णको मिलादे। और नीचे उतारकर उसकी गोली बनाकर एक कपड़ेमे कसकर

बाधकर पोटली बनाकर घीमे मन्द आचसे दोघण्टे तक पकाकर निकालले। ठढा होनेपर इसको साफ करके रखछोडे। इसमेसे ३-३ रत्ती घी और मधुमे मिलाकर चाटकर ऊपर छाछ पीनेसे मन्दाग्नि, अजीर्ण, ग्रहणी, पाण्डु, कामला, परिणामशूल इनसबको यह नष्ट करता है। इसके प्रयोगमें बीमारीका अधिक प्रमाण होतो केवल तक्रका प्रयोग चलावे ॥ ५३ ॥

## ५४ ताम्रेश्वररसः ( द्वितीयः )

जीर्ण ताम्ररसश्चैव गन्धकश्च सुचूर्णितम् ।
स्वर्णमाक्षिकभस्माथ समभागान्प्रकल्पयेत् ॥
पचेद्धत्तरजै द्रवै र्मन्दंमन्दं दिनावधिम् ।
त्रिफलापिण्डमध्यस्थं विधिवत्सर्पिषा पचेत् ॥
ज्ञात्वा पाकं समुत्तार्य शीतं निष्कास्य भक्षयेत्
विमर्द्य मधुसर्पिर्भ्या नरिकेलं पिबेदनु २१३
पाण्डुरोगश्च कासश्च ज्वरांश्च विषमांस्तथा ।
गुल्मं प्लीहामयश्चैव विनाशयति भक्षणात्॥

व. से., ध., र. र., र. का., ( ताम्ररसायनम् ) ।

भाषा—ताम्रभस्म, शुद्धपारा, गन्धक और स्वर्णमाक्षिक समभागलेकर नीलवर्ण कज्जलीकर कड़ाहीमे रखकर धतूरेका अङ्गस्वरस देकर बहुतमन्द आंचसे ४ पहरतक पकावे। फिर उसकी गोली बनाकर कपडेमे लपेटकर धतूरेके रसमे पिसीहुई त्रिफलाके चौगुने कल्कमे रखकर दोलायन्त्रसे घीमे मन्द आचसे पकावे। जबघीमे फेन आना बद होजाय और पोटली कड़ी होजाय तब उतारकर रखछोड़े। इसमेसे ३-३ रत्ती मधु और घीके साथ मिलाकर चाटकर नारियलका जल पीवे। और १-१ रत्ती रोज बढावे। ऐसे सात रोज बढाकर फिर वैसेही कमकरे। ऐसे १४ दिनमे इसका प्रयोग पूरा होगा। इसके सेवनसे पाण्डु, कास, विषमज्वर, गुल्म, प्लीहा येसब बहुत शीघ्र नष्ट होवें। पथ्य समयोचित कायम करे ॥ ५४ ॥

## ५५ ताम्रेश्वररसः ( तृतीयः )

पलानि पञ्च शुद्धानि ताम्रपत्राणि बुद्धिमान् ।
गृहीत्वा योजयेत्तत्र तदर्द्धं शुद्धसूतकम्२१५
मर्दयेन्निम्बुकद्रावैस्त्रिदिनान्युभयं भिषक् ।
ताम्रपत्रैः समं शुद्धं गन्धकं तत्र निःक्षिपेत् ॥
मर्दयित्वा घटीयुग्मं काचकूप्यां च निःक्षिपेत्
यामानष्टौ पचेदग्नौ वालुकायन्त्रसंस्थितम्२१७
एष ताम्रेश्वरो हन्याच्छ्वासादीनखिलान्गदान् ।
धातुपुष्टिकरश्चैव सूतिकारोगनाशनः ॥२१८॥

वै द, र सु, श्वासे।

भाषा—शुद्धताम्रके बहुत बारीक पत्र ५ पल, शुद्धपारा २॥ पल, इनदोनोंका नीबूके रसके साथ ३ रोज़ मर्दनकरके ५ तोले शुद्धगन्धकके चूर्णको उसमेडालकर दोघडी मर्दनकर इसकल्कको ६—७ कपडमिट्टीदीहुई आतशी शीशीमे डालकर आठपहरकी क्रमाग्निसे पकावे। स्वाङ्गशीतल होनेपर निकालकररखछोड़े। यह ताम्रेश्वर तैयारहुआ इसकी ३—३ रत्ती समयोचितानुपानके साथ देनेसे श्वास, कास, प्लीह, गुल्म, उदररोग, धातुक्षयऔर सूतिकारोग इनसबको यह नष्टकरताहै ॥ ५५ ॥

## ५६ ताम्रेश्वरवटी

हिङ्गु त्रिकटुकं चैवापामार्गस्य च पत्रकम् ।
अर्कपत्रं स्नुहीपत्रं तथाच समभागिकम् २१९
सैन्धवं तत्समं ग्राह्यं लौहं ताम्रश्च तत्समम् ।
प्लीहानं च यकृद्गुल्ममामवातं सुदारुणम् ।
अर्शांसि घोरमुदरं मूर्च्छा पाण्डु हलीमकम् ॥
ग्रहणीमतिसारञ्च यक्ष्माणं शोथमेव च ॥
एतानन्यांश्च जयति रोगानेष रसो वरः ।

र स., र चि., र. सु, र चं, व., उदररोगे।

भाषा—हींग, त्रिकटु, अपामार्ग, आकऔर थूहरके पीले पत्ते येसब समभाग और इन सबकी बराबर सेंधानमक, लोह और ताम्रभस्म लेकर इकट्ठे घोटकर ४—४ रत्तीकी गोलिये बनाकर रखछोड़े। इनमेसे १—१ गोली तत्तद्रोगहरानुपानके साथ

देनेसे प्लीहा, यकृत्, गुल्म, घोर आमवात, उदररोग, बवासीर, मूर्च्छा पाण्डु, हलीमक, ग्रहणी, अतिसार, राजयक्ष्म, शोथ इनको यह नष्ट करतीहै ॥

## ५७ तारकेश्वररसः

शुद्धसूतं समं गन्धं लौहं वङ्गं मृताभ्रकम् ।
दुरालभां यवक्षारं बीजं गोक्षुरजं शिवाम् ॥
समांशं भावयेत्सर्वं कूष्माण्डफलवारिणा ।
तृणपञ्चभवक्वाथे रसे गोक्षुरजे तथा ॥२२३॥
सम्पिष्य वटिका कार्या द्विगुञ्जाफलमानतः ।
मधुनाऽऽसर्वयेलिहेन्मूत्रकृच्छ्रविनाशनम्२२४
उदुम्बरफलं पक्कं चूर्णितं कर्षमात्रकम् ।
लेहयेन्मधुना सार्धमनुपानं सुखावहम् ॥
अजाक्षीरंभवेत्पथ्यंशर्करेक्षुरसोहितः ॥२२५॥
भै. र, मूत्रकृच्छ्रे ।

**भाषा**—शुद्धपारा, गन्धक, लोह, वङ्ग और अभ्रकभस्म, जवास, यवक्षार, गोखरू, हर्रे सब समभाग लेकर पारे गन्धककी नीलवर्ण कज्जलीमे वारीक चूर्णकर मिलाकर सफेद कोहड़ा, पञ्चतृणमूल (कुश, कास, सरकंडा या रमसल, डाभ और ईखकी जड़), गोखरू इनके रसोसे १—१ रोज़ मर्दनकर दो दोरत्तीकी गोलियें बनाकर रखछोड़े । इनमेसे १—१ गोली मधुके साथ मिलाकर चाटकर पके हुए गूलरके फलकाचूर्ण १ तोला मधुके साथ चाटे पथ्यमे बकरीका दूध, शक्कर और ईखकारस लेनेसे सबतरहके मूत्रकृच्छ्र नष्टहोते है ॥ ५७ ॥

## ५८ तारकेश्वरी वटी

काकमाच्यमृताद्रावैः पारदं तारकं समम् ।
मर्दयेद्दिनमेकन्तु कृत्वा गोलं विशोषयेत् २२६
निक्षिपेद्वज्रमूषायामाच्छाद्य लौहपर्पटैः ।
रुद्ध्वा सन्धिं धमेद्गाढं खोटबद्धो भवेद्रसः ॥
लोहपर्पटकं दत्त्वा तद्वद्ध्मेयं त्रिधा पुनः ।
वर्षैकं धारयेद्वक्त्रे गुटिकां तारकेश्वरीम् २२८
वाकुचीबीजकर्षैकं गवां क्षीरैः पिबेदनु ।
सर्वकुष्ठानि नश्यन्ति दिव्यकायो भवेन्नरः ॥
रसायनस , रसायने ।

**भाषा**—शुद्धपाराऔरचादी समभागलेकर मकोय और गिलोयके रसोसे २—२रोज़ घोटकर गोला-बनाय सुखाकर लोहेके वारीकपत्रमे लपेटकर लोहेका वारीकचूर्ण और नदीकी पाकसे सन्धि बन्दकर धोंकनीसे खूबधमनकरे तो यह खोटबद्ध (झामा) हो जायगा । इसको फिरसे मकोय और गिलोयके रससे पूर्ववत् मर्दनकर लोहेके वारीकपत्रमे लपेटकर वज्रमूषामे रख सन्धि बन्दकर १ पहर धमनकरे ऐसे तीनबार करनेसे इसकी गोली बनजायगी । इस गोलीको १ वरसतक रोज़ मुहमे रखकर वाकुचीके बीज १ तोला गायके दूधमे पीसकर पीनेसे समस्तकुष्ठ निवृत्तहोकर मनुष्य दिव्यशरीर होताहै ॥

## ५९ तारसुन्दरी गुटी

तारं कान्तं व्योम वङ्गं तावद्भागश्च सूतकम् ।
गन्धकेन समायुक्तं चक्रयन्त्रे स्थिरीकृतम् ॥
क्षुरको गोक्षुरः कच्छुः शतमूली बलात्रयम् ।
एभिर्बद्धा वटी श्रेष्ठा सुन्दरी तारसञ्ज्ञिका ॥
रमयेत्स्त्रीशतं रात्रौ दुर्दण्डविहितेन्द्रियः ।
वलीपलितनिर्मुक्तो दीर्घायु र्जायते नरः २३२
रससार , वाजीकरणे ।

**भाषा**—शुद्धचादी, कान्तलोह, अभ्रक और वङ्ग, इनकी भस्में समभाग, सवकी वरावर पारा और गन्धकलेकर नीलवर्णकज्जलीकर सबचीज़े मिलाकर तालमखाना, गोखरू, केवाच, शतावर तीनोंवला, इनप्रत्येकके स्वरससे मर्दनकर गोलावनाकर सुखाकर सम्पुटमेबन्दकर चक्रयन्त्रमे लघुपुटकी आचदे । इसतरह प्रत्येकचीज़मे घोट घोटकर गोला बनाकर आचदेनेसे यह **तारसुन्दरी** गोली तैयार होगी । इसको चाहे तो एकही गोली बनाके मुहमे रक्खे अथवा इसमेसे ३—३ रत्ती मक्खनप्रभृतिके-साथखानेसे हस्तक्रियाप्रभृतिसे भग्नेन्द्रियभी बहुतसी स्त्रियोंकामनोरथ पूर्णकरसक्ताहै । वली और पलितसे निर्मुक्त होकर दीर्घायुको प्राप्तहोता है ॥ ५९ ॥

## ६० तारामण्डूरम् ( प्रथमम् )

विडङ्गं चित्रकं चव्यं त्रिफलात्र्यूपणानि च ।
समभागानि चैतानि लोहकिट्टसमानि च२३३
गोमूत्रं द्विगुणं दत्त्वा मूत्रार्द्धिकगुडान्वितम् ।
शनैर्मृद्वग्निना पक्त्वा सुसिद्धं पिण्डतां गतम् ।
स्निग्धे भाण्डे विनिःक्षिप्य भक्षयेत्कोलमात्रया
प्राङ्मध्यान्तक्रमेणैव भोजनस्य प्रयोजितः ॥
योगोऽयं शमयत्याशु पक्तिशूलं सुदारुणम् ।
कामलां पण्डुरोगञ्च शोथं मन्दाग्नितामपि ॥
अर्शांसि ग्रहणीदोपं कृमिगुल्मोदराणि च ।
नाशयेदम्लपित्तञ्च स्थौल्यं चैवापकर्षति २३७
वर्जयेच्छुष्कशाकानि विदाह्यम्लगुरूणि च ।
पक्तिशूलान्तको ह्येप गुडो मण्डूरसंज्ञकः ॥
शूलार्तानां कृपाहेतो स्तारया परिकीर्तितः ॥

र र, नि र, यो र, र चं, र क ल, वै चि, रसायन स, र का, ना वि, वृ. यो त, रसमागर वै र, चि र भ, भै र, यो म., च द, टो, वृ मा ( गुडमण्डूरम् ), र. क ल ( सिंहमण्डूरम् ), शूलाधिकारे।

टि० नवायसएव गुडगोमूत्रे प्राक्षिप्य पाकेन तारामण्डूरेतिसंज्ञा कृता नतु नवीन प्रयोग । नवायसे मुस्तकमस्ति अत्रतु तत्स्थाने चव्य प्रयोजितमिति विशेप ।

भाषा—विडङ्ग, चित्रक, चव्य, त्रिफला, त्रिकटु ये प्रत्येक समभाग, इनसवकी वरावर मण्डूरभस्म और इन सवसे दूनागोमूत्र तथा गोमूत्रसे आधागुड लेकर कड़ाहीमे डालकर लोहेकी कडछीसे चलाताहुआ पकावे । जवगोला वंधनेलायक होजाय। तव चिकने वर्तनमे रखछोडे । इसमेसे ६—६ माशे तत्तद्रोगहरानुपानके साथ देनेसे भीपण पक्तिशूल, कामला, पाण्डु, शोथ, मन्दाग्नि, अर्श, ग्रहणी, कृमि, गुल्म, उदर, अम्लपित्त, स्थूलता इनसवको यह वहुतशीघ्र नष्टकरताहै। इसमे सूखे शाक, विदाही अम्ल और भारी पदार्थोंका त्यागकरे । शूलोंसे पीडित आदमियोके ऊपर कृपाकरके ताराने इसयोगको प्रकट कियाहै ॥ ६० ॥

## ६१ तारामण्डूरम् ( द्वितीयम् )

गोमूत्राढकसंसिद्धः प्रस्थार्द्धो लोहनागयोः ।
गुडेन तुल्यो लोहोऽयं सुसिद्धः पक्तिशूलहा ॥

र. क यो, पक्तिशूले ।

भाषा—चारसेर गोमूत्रमे ८—८ पल लोह और नागभस्म मिलाके एक रोज खरलकर तथा गुड १६ पल मिलाकर वहुतमन्द आचदेकर पकावे । जव गोली वधनेलायकहोजाय तव चिकने वर्तनमे रखछोडे । इसमेसे २—२ माशेकी मात्रा तत्तद्रोगहरानुपानके साथ देनेसे परिणामशूल, सद्ग्रहणी, मन्दाग्नि, धातुक्षय, प्रमेह इनसवको यह नष्टकरताहै ॥

## ६२ ताक्ष्यरसायनम्

ताक्ष्यभस्मकशाणैकं वज्रभस्म तदर्धकम् ।
मृतस्वर्णार्ककान्तानां निष्कद्वयमितं पृथक्२४०
लोहभस्म मृतं सूतं सर्वमेकत्र मर्दयेत् ।
पुटेद्विंशतिवारांश्च पुटैः कुक्कुटसंज्ञकैः ।
अमृताम्बुसमायुक्तैः शिलागन्धकतालकैः ।
सप्तवारं द्रवैः सार्द्धं दशभिः पुटकैः पुटेत् ॥
एवंसिद्धं प्रभावाढ्यं ताक्ष्यं नाम रसायनम् ।
चित्रार्द्रकरसोपेतं पीतं राजिकया मितम् २४३
त्रिदोपजान्गदान्सर्वान् कफवातोद्भवानपि ।
असाध्यान्सर्ववैद्यानां भेपजानाञ्च कोटिभिः ।
करोति क्षुधमत्यर्थं भुक्तं जारयति क्षणात्२४४

र चू, रसायने ।

भाषा—ताक्ष्यभस्म ( पन्नेकीभस्म, गारुत्मतं मरकतमश्मगर्भ हरिन्मणिः, इति वैजयन्ती ) १ शाण, हीरेकीभस्म आधा शाण, सुवर्ण, ताम्रा कान्त, तीक्ष्ण, और पारा इनसवकी भस्मे २—२ शाण लेकर मैनसिल, गन्धक, और हरिताल येसवसे चतुर्थांश लेकर गुडूचीके रससे मर्दनकर गोला वनाय सुखाकर गजपुटदे । ऐसे १० वार पुट देनेसे यह **ताक्ष्यरसायन** सिद्ध होगा । इसमेसे १-१ राई जितनी मात्रा चित्रक और अदरखके रसके साथ देनेसे त्रिदोषज समस्तरोग, कफवातज तमाम-

रोग, और जोरोग सब वैद्य और औषधोंके काबूमे नहीं आते है उनसबको यह नष्ट करता है। इसके सेवनसे अग्नि इतना प्रदीप्त होता है कि अत्यन्तभारी और पेटभरकर खायाहुआ खुराक तत्क्षण हजम होजाता है ॥ ६२ ॥

## ६३ तार्क्ष्यरसः

सूतं गन्धं टङ्कणं हेमयुक्तं
घर्षेद्यामं मेघनादद्रवेण ।
गोलं कृत्वा कान्तपाषाण मूषा-
मध्ये धृत्वा भूधरे तं पुटेत ॥
पश्चाद्घर्मे मेघनादद्रवेण
सूतः सिद्धस्त्वेष तार्क्ष्यो विषारिः २४५

र क, र र स, र. को, र र कौ, विषे।

भाषा—शुद्धपारा, गन्धक और सुहागा, सुवर्ण भस्म सब समभाग लेकर १ पहरतक काटेवाली चौलाईके रसमे मर्दनकर कान्तपाषाणकी मूषामे बन्दकर भूधर यन्त्रमे पुटदे। फिर निकालकर काटेवाली चौलाईके रसमे घोटकर रखछोड़े। यह तार्क्ष्य रस तैयार हुआ। इसमेंसे १—१ रत्ती मधु और घृतकेसाथ देनेसे तमामविषोंको यह नष्ट करता है॥

## ६४ तालकद्रुतिः

समूलपत्रां सञ्चूर्ण्य सङ्गृह्य रङ्गपत्रिकाम् ।
दशप्रस्थमितां निम्बत्वचसर्धेन योजयेत् ॥
पातालयन्त्रे निष्कास्य तदर्के तालकं क्षिपेत्।
पञ्चकर्षप्रमाणेन यामैकं मर्दयेद्भिषक् ॥२४७॥
हण्डिकोदरमालिप्य तेनान्यं रङ्गपत्रिका- ।
पञ्चाङ्गं पूरयित्वाऽथ तदर्कं पातयेत्पुनः २४८॥
पातालयन्त्रे विधिना रक्तिकाद्वयसम्मितम् ।
मरीचचूर्णसंयुक्तं रक्तिकानां चतुष्टयम् ॥२४९
नागवल्लीदलोपेतं भक्षयेत्प्रातरेव हि ।
पथ्यश्चालवणं देयं सैन्धवं देयमुत्तमम् ॥
वर्ज्यानि सर्वशाकानि तैलश्चाम्लं दधीनि च ।
सेव्यं मण्डलमेकन्तु वातरक्तं रुजं हरेत् २५१

र. सि., वातरक्ते।

भाषा—पञ्चाङ्गनीलके पौधेका चूर्ण १० सेर नीमकी छालकाचूर्ण५सेर इनदोनोको मिट्टीके चिकने वर्तनमे भरके पातालयन्त्रसे चोवा चुआवे, उसचोएमे ५ तोले हरितालको १ पहरतक पीसकर एक चिकनी हडीके भीतर पोतकर उसहडीमे उपरोक्त दोनो चीजोके चूर्णको भरकर फिर चोवा निकालले। इस चोएको शीशीमेभरले। इसमेसे २ रत्ती लेकर ४ रत्ती मिर्चके चूर्णके साथ पानमे रखकर प्रातःकाल खिलावे। पथ्यमे लवण बदकरे, यदि लवण बिना-न रहसकेतो सेधानमक दे। समस्त शाक, तैल, खटाई और दही इनको न खाय। इसतरह एक मडल (७-१४-२१-४८ दिनतक) मे समस्त वातरक्तको दूर करता है ॥ ६४ ॥

## ६५ तालकयोगः (प्रथमः)

कपिलापयसा पेष्यं तालकं दरदं समम् ।
अष्टयामावधि ततो गुटिकां कारयेद्बुधः ॥२५२
छायाशुष्कां तथा कृत्वा मृत्तिकासम्पुटे पचेत् ।
अग्निं गजपुटे दद्याच्छ्वेतभस्म प्रजायते॥२५३॥
ताम्रपात्रे विन्दुमात्रं सुवर्णञ्च प्रजायते ।
ताम्बूले विन्दुमात्रं स्याद्भक्षितं शृणु तत्फलम् ॥
क्षुधायाश्च गजो भूत्वा नारीणाञ्च शतं व्रजेत् ।
नाशनं सर्व रोगाणां तालभस्म प्रजायते २५५

र चं, सर्वरोगे।

टि०—अय प्रयोगो यथावस्थितो न सेत्स्यति तालकदरदयोरुभयोरप्युड्डयनशीलत्वात्तस्मादिमं निष्पादयितुमिच्छा चेत्तदा अपामार्गक्षारमर्कदुग्धे निक्षिप्य वस्त्राण्यालिप्य गुटिकां वेष्टयित्वा खरातपे शोषयेदेवं गुटिकातश्चतुर्गुणं क्षारं प्रलिप्य विशोष्य च शरावसम्पुटोपरि सप्तकर्पटमृत्तिका प्रदाय गजपुटं दद्यादिति रहस्यम्।

भाषा—शिंगरिफ और हरिताल समभाग लेकर कपिला गायके दूधमे ८ पहर मर्दनकर गोली बनाय छायामे सुखाकर मिट्टीके सम्पुटमे बन्दकर ६—७ कपडमिट्टी देकर गजपुटकी आच देनेसे सफेद भस्म होगी यह भस्म यदि पूरे वज़नकी उतरेगीतो १ तोले गलेहुए ताम्रमे १ रत्ती मोमप्रभृति क्रामक

द्रव्योंके साथ देनेसे उसकारग सुवर्णजैसा होजायगा। इसकी १–१ रत्ती ताम्बूलमे खानेसे मन्दाग्नि और नपुंसकता नष्टहोतीहै और तत्तद्रोगहरानुपानके साथ देनेसे यह तमामरोगोंको नष्टकरताहै ॥ ६५ ॥

## ६६ तालकयोगः ( द्वितीयः )

कफाच्छ्वेतं चित्रं गुरुघनमलं कण्डुरमपि,
निबोध्यं रक्तस्थं परगतमथो मेदसि गतम् ।
सुतालं संशुद्धं बलिमपि पलं चाष्टपलकम्,
सुचूर्णं वाकुच्या मधुघृतयुतं चात्र गदितम् ॥

चि. सा., नि. र, चि. क, स्पर्शवाते।

भाषा—कफप्रधानकुष्टमें श्वेतरङ्ग रहताहै। रक्तस्थमे चित्ररङ्ग रहताहै। मेदमेपहुचनेसे भारी और आपसमे सटाहुआ रहकर अधिक खुजलीवाला होता है। इनसबके दूरकरनेके लिये शुद्ध हरितालभस्म अथवा रसमाणिक्य, शुद्धगन्धक ये प्रत्येक १–१ पल, बाकुचीके बीजोंकाचूर्ण ८ पल लेकर सबको १–२ दिन खरलकर सबकी बराबर मधुऔर घी मिलाकर रखछोड़े। इसमेसे ४ माशेसे आधे तोलेतक रोज़खानेसे श्वित्रप्रभृति समस्त कुष्ठ दूरहोते है पथ्य तालकद्रुतिकी तरहकरे ॥ ६६ ॥

## ६७ तालकरसायनम्

रसस्यद्विगुणंगन्धंरसतुल्यश्च तालकम् ।
दिनमेकश्च सम्मर्द्य काचकूप्यां विनिक्षिपेत् ॥
रुद्ध्वा तस्या मुखंसम्यग्वेष्टयेत्सप्तमृत्पटैः ।
ततो लवणयन्त्रे च दिनमेकन्तु वह्निना ॥
पाचयेत्स्वाङ्गशीतं तज्ज्ञात्वा सम्यक् समाहरेत्।
जातीफलं लवङ्गश्च पिप्पलीमधुसंयुतम् ॥
गुञ्जामात्रप्रयोगेण ज्वरं हन्ति न संशयः ।
सन्निपाते समुद्भूते शीते च विषमज्वरे ॥
पुराणश्च ज्वरं हन्याच्छ्वासकासान्निहन्ति च।
सर्वदोषहरश्चैव तालकाख्यं रसायनम् ॥२६१॥

रसायन स, ज्वराधिकारे।

भाषा—शुद्धपाराऔर हरिताल १–१ भाग, शुद्धगन्धक २ भाग, लेकर १रोज़ घीकुआरके रस वग़ैरहसे मर्दनकर सुखाकर ६-७ कपड़मिट्टीकीहुई आतशी शीशीमे डालकर डाटलगाकर डाटपरभी ६-७कपड़मिट्टी देकर सुखाकर लवणयन्त्रमे शीशी को वन्दकर १ रोज़की कड़ी आचदे। स्वाङ्गशीतल होनेपर निकालकर रखछोड़े। यह **तालकरसायन** तैयारहुआ। जायफल, लौग, पीपल इनका समभागकाचूर्ण ३ माशेसे १ तोलेतक लेकर इसमे १ रत्ती तालकरसायनकी मिलाकर मधुकेसाथ चाटनेसे ज्वर, सन्निपातमे आयाहुआशीत, विषमज्वर, जीर्णज्वर, श्वास, कास इत्यादि समस्तरोग नष्टहोतेहै ॥६७॥

## ६८ तालकराजरसः

वङ्गं चाभ्रं शोधितं तालकं च
सूतं शुद्धं वत्सनाभं तथैव
सौवीराख्यं टङ्कणं व्योषसञ्ज्ञम्
वङ्गं युग्मं भागमत्रैव कुर्यात् ॥२६२ ॥
अभ्रंकुर्यान्नेत्रभागञ्च सम्यक्
सूताच्चैकं तालकाद्वै त्रिभागान् ।
नाभाच्चैकं टङ्कणाद्वेदभागान्
सौवीराद्द्वौ कल्पनीयौ हि भागौ २६३
खल्वे मर्द्यं सर्वमेकत्र वज्री-
क्षीरे चार्के वासरैकं प्रयत्नात् ।
पश्चात्क्षेप्यं काचकूप्यां हि सर्वं
कूपीवक्त्रं ताम्रपत्रेण रुन्ध्यात् ॥२६४॥
मुद्रां कृत्वा पाचयित्वाऽष्टयामान्
शीतंज्ञात्वा पूर्ववन्मर्दनीयम् ।
एवं कुर्यात् त्रींश्चवारान्विशुद्धं
कल्कं जातं षोडशांशेन ताम्रम् २६५
शुभ्रं दत्त्वा सर्वरोगप्रणाशं
कुर्याच्चैतद्भाषितं भैरवेण ।
सेव्यं वल्लं वर्षमेतत्प्रयत्ना-
द्वृद्धत्वं नो जायते सर्वकालम् ॥२६६॥

र. प्र.सु., सर्वरोगे।

भाषा—वङ्ग २ भाग, अभ्रक भस्म २ भाग, शुद्धहरिताल ३ भाग, पारा १ भाग, वछनाग १ भाग, सुरमा २ भाग और सुहागा ४ भाग, त्रिकटु २ भाग, लेकर पारे और हरितालको एक रोज़ मर्दनकर सबचीजोंमे मिलाकर थूहर और आकके दूधसे १-१ रोज मर्दनकर सुखाकर ६-७ कपड़मिट्टीकीहुई आतशी शीशीमे डालकर तांवेके बारीक पत्रोकी डाटवनाकर शीशीका मुह बंदकर कपड़मिट्टी देकर सुखाकर वालुकायन्त्र अथवा लवणयन्त्रमे ८ पहरकी अग्नि दे। स्वाङ्ग-शीतल होनेपर निकालकर फिरमर्दनकरे और इसी-तरह पाककरे। ऐसे ३ वार करे। डाट वही पुरानी लगाता जाय, अखीरमे जितना ताम्रा भस्म होगया हो वह और कूपिस्थ रसायन से १६ वॉ भाग सफेद-ताम्रभस्म मिलाकर रखछोड़े। यह तालकराजरस तैयारहुआ। इसमेसे ३—३ रत्ती तत्तद्रोगहरानुपानके साथ देनेसे यह तमामरोगोंको नष्टकरताहै। यदि लगातार एकवर्षतक मक्खन वगैरहके साथ रोज़रोज़ सेवन करे तो उसको बुढापा कभी नहीं आता ॥

## ६९ तालकवटी ( प्रथमा )

तालकं चाश्वगन्धाश्च हिङ्गुलं विजयां तथा।
गोदुग्धेन समं पिष्ट्वा वटिकां वल्लमानतः २६७
ताम्बूलैं भक्षयेत्प्रातश्चत्वारिंशद्दिनावधिम्।
मत्तमातङ्गवीर्यस्तु वायुतुल्यपराक्रमः ॥२६८॥
गृध्रदृष्टि र्भवेत्तस्य वराहश्रवणो भवेत्।
जायते भास्करस्येव कान्तिः सर्वशुभान्वितः॥

र. च, वाजीकरणे।

टि०-अत्र दरदोविशेषशुद्धियुक्तो ग्रहीतव्योऽन्यथा मूलोक्तगुणा न स्यु.।

भाषा—शुद्ध हरिताल और शिंगरिफ, अस-गन्ध, भाग ये सब समभाग लेकर गायके दूधसे पीसकर ३—३ रत्तीकी गोलिये वनाकर रखछोडे। इनमेसे १—१ गोली पानमे रखकर ४० रोज खानेसे वीर्यमे मत्तहस्ती, पराक्रममे वायु, दृष्टिमे गृध्र, सुननेमे वराह, कान्तिमे सूर्यके सदृश हो जाता है ॥ ६९ ॥

## ७० तालकवटी ( द्वितीया )

तालकं गन्धसूतञ्च शुद्धं दरदटङ्कणम्।
त्र्यूषणं समभागञ्च सर्वमेकत्र मर्दयेत् ॥
भावनैका प्रदातव्या रसेनार्द्रकजेन च।
मुद्गप्रमाणां वटिकामेकां प्रातस्तु भक्षयेत् ॥
प्रसूतिजातजान्रोगान्मन्दाग्निं ग्रहणीं तथा।
श्लेष्मार्गं विषमश्चैव ज्वरं शीतञ्च नाशयेत् ॥

र. सु, वातव्याध्यधिकारे।

भाषा—शुद्ध हरिताल, गन्धक, पारा, शिंग-रिफ और सुहागा, त्रिकटु, ये सब समभाग लेकर पारेगन्धककी नीलवर्ण कज्जलीकर सब चीजे मिला-कर अदरखके रससे १ रोज मर्दनकर मूग बरावर गोलिये वनाकर रखछोड़े। इनमेसे १—१ गोली दूध अथवा उचितानुपानके साथ खानेसे प्रसूति-रोग, वातपित्त, मन्दाग्नि, ग्रहणी, श्लेष्म, विषमज्वर और शीतज्वर इनको यह नष्ट करती है ॥ ७० ॥

## ७१ तालकवटी ( तृतीया )

शुद्धं तालं शिलां शुद्धां यवक्षारंससैन्धवम्।
दार्वीं सुधां चूर्णयेत्तु माक्षिकेण समायुतम् ॥
निष्कार्द्धं घृतयुक्तञ्च कण्ठरोगेषु दापयेत् ॥

व रा, कण्ठरोगे।

भाषा—शुद्ध हरिताल, मैनसिल, यवक्षार, सेंधानमक, दारुहल्दी, चूना, ये सब समभाग लेकर बारीक चूर्णकर मधुमिलाकर २—२ माशेकी गोलिये वनाकर रखछोड़े। इनमेसे १—१ गोली घृतके साथ देनेसे यह कण्ठके तमाम रोगोको नष्ट करती है।

## ७२ तालकामृतकम्

तालकञ्च शिलाभेदस्तथा चैव शिलाजतु।
क्षीरिण्यौ द्वे समङ्गे च कुष्ठं नागबला बला ॥
एला पत्रकतालीसं तमाल हरिचन्दनम्।
मुस्ता द्राक्षा च रास्ना च मुण्डी शैलेयकं पुरः ॥
सुरसा चैव संयोज्या तिलाः कृष्णा द्विभागिकाः

चूर्णं सूक्ष्मं प्रयुञ्जीत गुडेन मधुना युतम् ॥
पश्चाद्गोक्षीरपानं स्यात्क्षीरेण सह भोजनम् ।
राजयक्ष्मादिभिः क्षीणा ग्रहणीपीडिताश्च ये ॥
क्षीणधातुबला ये च तेषां संयोजयेद्भृशम् ।
वृद्धोऽपि तरुणो भूत्वा नरो नार्याऽभिनन्द्यते ॥
वन्ध्यापि लभते पुत्रं पण्ढोऽपि पुरुषायते ।
तालकामृतकं नाम कृष्णात्रेयविभाषितम् ॥

हा स, रसायने ।

भाषा—शुद्ध हरिताल, पाषाणभेद, शिलाजीत, छोटी और बडी दूधी, मजीठ अथवा लज्जालु, कुठ, नागवला, वला, इलायची, तालीसपत्र, तमालपत्र, सफेदचन्दन, नागरमोथा, द्राक्ष, रास्ना, गोरखमुण्डी, छरीला, गुग्गुलु तुलसी, ये सब समभाग, काले तिल २ भाग, लेकर सबको कूट कपडछानकर बराबरका गुड और मधु मिलाकर रखछोडे । इसमेसे १–१ तोला मात्रा लेकर गायका दूध पीवे । और गायके दूधके साथ भोजनकरनेसे राजयक्ष्मा, क्षतक्षीणता, ग्रहणी, धातुक्षय येसब नष्ट होकर तन्दुरुस्त हो जाता है। इसके सेवनसे वृद्धभी तरुण जैसा हो जाता है । वन्ध्या स्त्री पुत्रको प्राप्त होती है । पण्ढ पुरुषत्वको प्राप्त होता है ॥ ७२ ॥

## ७३ तालकामृतताम्रम्

शुद्धताम्रस्य भागैकं चतुर्भागन्तु तालकम् ।
द्विगुणैस्तु रविक्षीरैर्मर्दयेच्च दिनत्रयम् ॥
तत्पिष्ट्या ताम्रपत्राणि लेपितानि विशोषयेत् ।
गर्भयन्त्रे विनिःक्षिप्य सप्तधाधृतकर्पटे ॥
वारत्रयं गजपुटे तत्पचेत्ताम्रसंयुतम् ।
तालकामृतताम्रेदमनुपानेन सेवयेत् २८२ ॥
आर्द्रकस्य रसेनैव गुञ्जार्धं ताम्रमिष्यते ।
असाध्यं रोगराजञ्च सन्निपातांस्त्रयोदश ॥
अशीतिं वातजान्रोगांश्चत्वारिंशच्च पित्तजान् ।
विंशतिं श्लेष्मजान्रोगान्मेहान्सर्वांश्च नाशयेत् ॥

र श, सन्निपाते ।

भाषा—४ भाग शुद्धहरितालको २ भाग आकके दूधसे तीन रोजतक मर्दनकर हरितालमे चतुर्भाग ताम्रके पत्रोपर लेपकर सुखाकर शरावस-म्पुटमे वन्दकर गर्भयन्त्रमे रखकर गजपुटकी आचदे । ऐसे ३ वारकरे फिर आधी आधी रत्ती अदरखके साथ लेनेसे असाध्य राजयक्ष्म, तेरह्सन्निपात, अस्सी वातरोग, ४० पित्तरोग, २० श्लेष्मरोग, समस्त प्रमेह इनको यह नष्ट करता है ॥ ७३ ॥

## ७४ तालकेश्वररसः (महान्) (प्रथमः)

संशुद्धतालाद्द्विपलं पलार्द्धं
शिलाहिलेलीतरसायसानाम् ।
सजातरूपाभ्रकताम्रताप्य-
विषाब्ददन्तीफलटङ्कणानाम् ॥२८५॥
अर्कस्नुहीधूर्तरसेनसप्त-
विभावित ताम्रपुटे विपक्वम् ।
मृदूकृतं लाङ्गलिकाकुमारी-
निशाविशालाचिरबिल्वनिम्बैः ॥ २८६
ज्योतिष्मतीसूरणनीलपुष्पी-
गदारिवृन्ताकविषाकलिङ्गैः ।
सबीजकाऽवल्गुजबाणचक्र-
त्रिवृत्समङ्गाऽऽर्तगलाग्निभृङ्गैः ॥२८७॥
एषां कषाये स्वरसे विशुद्धो
रसो महान् सिध्यति तालकेशः ।
प्रणम्य विश्वार्तिहरं दिनेशं
शुभेऽह्नि सन्मङ्गलमाददीत ॥२८८॥
एवं रसेन्द्र नियतेन्द्रियस्य
समस्तकुष्ठामयनाशनाय ।
सितासितोदुम्बरदद्रुभिन्नो-
विशीर्णनासाङ्घ्रिकरो मनुष्यः ॥२८९
आख्यातकीर्तिं न च काऽपि शक्ति-
र्नचेह सौख्यं न च वा परत्र ।
यतो महापापभवं गदं हि
निवारयत्येष रसः प्रसिद्धः ॥ २९० ॥

र. (मा.,) कुष्ठे

भाषा—शुद्धहरिताल २ पल, मैनसिल, नागभस्म, गन्धक, पारा, लोह, सुवर्ण, अभ्रक, ताम्र और सुवर्णमाक्षिक इनकी भस्मे, शुद्धवच्छनाग, नागरमोथा, दन्तीमूल, त्रिफला, भुनासुहागा, ये प्रत्येक आधा पल लेकर सबका बारीक चूर्णकर पारे गन्धककी नीलवर्ण कज्जलीमे मिलाकर आक, थूहर, धतूरा इनके रसोसे ७–७ बार भावना देकर गोलाबनाय सुखाकर तावेके सम्पुटमे रक्खे अथवा कल्कका सम्पुटके भीतर लेपकर सुखाकर उसपर ६–७ कपडमिट्टी देकर आधेमन जङ्गली कण्डोकी आचदे। स्वाङ्गशीतल होनेपर निकालकर जितना सम्पुटका तावा फुकगयाहो उसको साथमे मिलाकर पीसकर करिहारी, घीकुआर, हल्दी, इन्द्रायण, मोटाकरञ्ज, निम्ब, मालकागन, जहरीसूरण, विष्णुक्रान्ता अथवा कालादाना, कुष्ट, वृन्ताक, अतीस, इन्द्रजव, वाकुचीका पञ्चाङ्ग, पीलाकटसरैया चकवड, निगोत, मजीठ अथवा लज्जालु, गुलेअव्वास, भिलावा, चित्रक, भंगरा इनप्रत्येकके यथासम्भव स्वरस अथवा क्वाथोसे १–१ रोज मर्दनकर १–१ रत्तीकी गोलिये बनाकर रखछोडे। इनमेसे १–१ गोली अपने जन्मनक्षत्रादि शुभ देखकर समस्त ससारके दुःखको दूर करनेवाले सूर्यको प्रणामकर समयोचितानुपानके साथ देनेसे और नमक छुडाकर केवल दूधभातपर रखनेसे सफेद, काला, उदुम्बर, दद्रु और जिसमे नासा, हाथपैर गिरचुके हो ऐसे कुष्ठोकोभी यह दूर करता है। इसलिये इसकी बराबर सुख देनेवाला कोई दूसरा उपाय नही है ॥ ७४ ॥

## ७५ तालकेश्वररसः ( द्वितीयः )

**एकभागो रसस्य स्याच्छुद्धं तालं च तत्समम्।**
**अष्टौ स्यु र्विजयायाश्च गुटिकां गुडतश्चरेत् ॥**
**एकैकां भक्षयेत्प्रातश्छायायामुपसेवयेत्।**
**तालकेश्वरनामायं रोगश्चाऽस्पर्शनाशनः २९२॥**

र. स., र. क., र. च., (तालकवटी), र का, र. सु, ध, नि र ( तालकवटी ) वातव्याध्यधिकारे। यो. र, रसचि., र क ल, चि सा., र सु, चि क, र को, एषु ग्रन्थेषु ( विजयेश्वर ) इति नाम, विजयेश्वर से दार्वीखदिरनिम्बाना क्वाथ तदनु पाययेदित्यधिक पाठ। चि सा, र को, र क्र, र क ल, र दी, र र म, एषु ग्रन्थेषु तालादियोग इति नाम, अत्र पारदात्तालकम ष्टगुण नियुक्तमिति विशेष। यदा पारदमम तालक युज्यते तदा सौम्यप्रकृतिको योग। अष्टगुणयोगे तु चण्डप्रकृतिक इति विशेष., यथाचिति निष्पादनीयो योग, रसस्त्वेक एव।

भाषा—शुद्धपारा और हरितालभस्म १–१ भाग, भाग ८ भाग, इनसबको बारीक पीस दूने गुडके साथ १-१ माशेकी गोली बनाकर रखछोडे। इनमेसे १–१ गोली सुबहमे छायामे बैठकर समयोचितानुपानके साथ खानेसे यह कुष्ठरोगको नष्टकरता है ॥ ७५ ॥

## ७६ तालकेश्वररसः ( तृतीयः )

**तालं सूतं समं गन्धं मृतलोहाभ्रवङ्गकम्।**
**मर्दयेन्मधुना चैव रसोऽयं तालकेश्वरः २९३**
**माषमात्रं भजेत्क्षौद्रै र्वहुमूत्रप्रशान्तये।**
**उदुम्बरफलं पक्वं चूर्णितं कर्षमानतः ॥**
**संलेह्य मधुना सार्धमनुपानं सुखावहम् २९४**

र. स, टो, व, र सु, चि र, वै क, नि. र, चि सा, र को, व रा, सोमरोगे। र र, वै चि, भै. र, यो र., र मा, र. च, रसायनस, एषु ग्रन्थेषु तालगन्धौ न दृश्येते। र (मा) नाम च वङ्गबद्धःप्रमेहाधिकारे र स, र सि, र सु, रसायनम, र चि, र चं, ध., एषु ग्रन्थेषु ताललोहवङ्गानि न दृश्यन्ते नाम च तारकेश्वरेति स्थापितम्। रसायनसङ्ग्रहे द्वितीयपाठे सर्वाङ्गसुन्दरेति नाम स्थापितम्। तत्र मृतसूताभ्रवङ्गानि विहितानि तस्याप्यत्रैवान्तर्भाव।

टि० अस्मिन्रसे यदि ताल दीयते तदा भवति तालकेश्वर। यदि च तालस्थाने तार दीयते तदा तारकेश्वर इति नाम। केषुकेषुचिद् ग्रन्थेषु प्रमादवशात्तारतालयोरुभयोरप्यभावो दृश्यते। तदज्ञानविलसित बोध्यम्। वहुमूत्रे सोमरोगे च तारतालयोरुभयोरपि कार्यकर्तृत्वेन ग्रन्थकारै स्वेच्छाचार स्वीकृत प्रतिभाति।

भाषा—हरितालभस्म, शुद्धपारा और गन्धक,

लोह-अभ्रक और वङ्गभस्म सबसमभाग लेकर १–२ रोज मधुमे मर्दनकर १–१ मासेकी गोलिये बनाकर रखछोडे । इनमसे १–१ गोली समयोचितानुपानके साथ देकर गूलरके पकेफलकाचूर्ण १ तोला लेकर मधुके साथ ऊपरसे चाटनेसे बहुमूत्र नष्टहोवे ॥७६॥

### ७७ तालकेश्वररसः ( चतुर्थः )

धात्री टङ्कणतालानां समान्भागान्समुद्धरेत् ।
धात्र्या रसे मर्दयित्वा माषमात्रां वटीं चरेत्
एकां द्वे वा समश्नीयाच्छिखरीमूलवारिणा ।
सर्वकुष्ठहरः ख्यातः सर्वदा भोजनप्रियः २९६

र. स, र. सु, र. चि., कुष्ठाधिकारे ।

**भाषा**— आवला, भुनासुहागा, हरितालभस्म अथवा रसमाणिक्य ये सब समभाग लेकर आवलेके रससे १–२ रोज मर्दनकर १–१ मासेकी गोलिये बनाकर रखछोडे । इनमेसे १ अथवा २ गोली अपामार्गके रससे खानेसे समस्तकुष्ठोको यह दूरकरताहै । और हरवक्त भोजनमे रुचिको बढाताहै ॥

### ७८ तालकेश्वररसः ( पञ्चमः )

रसं विषं गन्धकतालताम्रकं
कुकुद्विवेदाक्षिपृथक्प्रमाणकम् ।
विमर्द्य धुत्तूररसैस्त्रिमत्कं
खरातपे शोषितबद्धचक्रिकम् ॥२९७॥
संलिप्तचूर्णोदरहण्डिकान्तरे
ह्यश्वत्थचिञ्चाचितभस्ममध्यके ।
निधायगोलं च विधाय पावकं
बन्धूकपुष्पारुणतां यथा भजेत्॥२९८॥
स्फुटन्ति पात्रोद्धविकीर्णशालयः
सिद्धिस्तदा स्याद्धरितालकेश्वरे ।
कुष्ठादिनाशाय नियोजयेत्ततः
स्वस्वानुपानै र्विविधै र्भिषक्तमः ॥ २९९ ॥

र ( मा ) कुष्ठादिरोगे ।

**भाषा**—शुद्धपारा १ भाग, शुद्ध वछनाग १ भाग, शुद्धगन्धक २ भाग, शुद्धहरिताल ४ भाग, ताम्रभस्म २ भाग लेकर सबकी कज्जली बनाय धतूरेके रससे २१ रोज कडे धूपमे मर्दनकर छोटी छोटी टिकिया बनाकर सुखाकर ६–७ कपडमिट्टी-कीहुई और भीतर चूनेसे पुतीहुई हडीमे पीपल और इमलीकी राख आधेतक भरकर अच्छी तरह दबाकर उन टिकडियोंको रख ऊपरसे उपरोक्त भस्मको दबाकर गलेतक भरदे । फिर चूल्हेपर चढाय २ पहर तक मन्द अग्नि दे । हडीमेसे दैववशात् धूआ निकलने लगे तो इसी राखसे उसको दबाकर बंद करे जब वह स्थिर हो जाय तब उसमे मध्यमाग्नि करदे । १ दिनके बाद हडीमे धान डालदे जब धान-भुनने लगे तब अग्नि देना बंद करदे । और उन्हीं कोयलोपर हडीको पडी रहने दे । स्वाङ्गशीतल होनेपर निकालकर रखछोडे । इसमेसे १–१ रत्ती कुष्ठहरानुपानके साथ देनेसे समस्तकुष्ठोको दूर करता है और तत्तद्रोगहरानुपानके साथ देनेसे सब तरहके विषमज्वर, सन्निपात, ग्रहणी, आमवात, वातरोग, शूल, गुल्म इनको यह नष्टकरता है ॥

### ७९ तालकेश्वररसः ( षष्ठः )

कूष्माण्डत्रिफलातैलकन्याकाञ्जिकभावितम् ।
तालकं तुल्यगन्धं स्यादर्धपारदमर्दितम् ३००
अजाक्षीरेण निम्बूककन्यातोये दिनत्रयम् ।
प्रत्येकं भावयेच्छुष्कं चक्रिकाकारताङ्गतम् ३०१
विपचेद्धण्डिकामध्ये पलाशक्षारमध्यगम् ॥
यामान्द्वादश शीतेऽस्मिन् प्रयोज्यं रक्तिकाद्वयम्
हन्त्यष्टादश कुष्ठानि रोमविध्वंसनं तथा ।
विविधं वातरक्तञ्च नाडीदुष्टव्रणानि च ३०२

भै. र, ध, र क, कुष्ठाधिकारे ।

**भाषा**—कूष्माण्ड, त्रिफला, तैल, घीकुआरका रस, काञ्जी इन प्रत्येकमे ४–४ पहर स्वेदनकरके इन्हीमे १–१ रोज मर्दन कीहुई हरिताल और गन्धक समभाग, गन्धकसे आधा पारा देकर कज्जली बनाय बकरीका दूध, नीबू, कुमारीका रस, इन प्रत्येकमे १–१ रोज मर्दनकर टिकिया बनाकर खूब अच्छीतरह सुखाकर ६–७ कपडमिट्टी कीहुई हडीमे

आवेतक पलाशकी राख दवादवाकर भरकर उन टिकियोंको बीचमे रखकर ऊपरसे दूसरी राख दवाकर हंडीके गले तक भरकर चूल्हेपर रख १२ पहरकी आचदे । स्वाङ्गशीतल होनेपर धीरेसे राखको हटाकर हरितालभस्मको निकालकर रखछोडे । इसमेसे २-२ रत्ती सममधुघृतादि कुष्ठहरानुपानके साथ देनेसे १८ प्रकारके कुष्ठ और इन्द्रलुप्त, दो तरहका वातरक्त, नाडीव्रण, दुष्टव्रण इन सवको यह नष्ट करता है । क्षारमे तालकेश्वरके सिद्ध करनेमे प्रायः हंडीका मुह वद नही किया जाता है ॥७९॥

## ८० तालकेश्वररसः ( सप्तमः )

दद्रुघ्नवालांघ्रिरसं दत्त्वा तालं सुचूर्णितम् ।
पुनः पुनश्च सम्मर्द्य शुष्कं कृत्वा पुटे दहेत् ॥
दृढस्थाल्यां घृतं क्षारं पालाशञ्चाप्युपर्यधः ।
ततःसंज्वालये दग्निमहोरात्रे मृतं भवेत् ३०५
शुक्लवर्णं यदा च स्यादग्नौ दत्ते न धूमकम् ।
तदा ज्ञात्वा मृतं तालं सर्वकुष्ठविनाशनम्३०६
गलत्कुष्ठं वातरक्तं ताम्रवर्णञ्च मण्डलम् ।
शीतपित्तमहादद्रुसिध्मकञ्च विनाशयेत् ॥
पथ्यं मसूरं चणकं मुद्गसूपं यथेच्छया ३०७

भै. र, व, कुष्ठाधिकार ।
टि०—अतिदृष्टफलोऽय फिरङ्गे मत ।

भाषा—कोमल चकवडकी जडका रस निकालकर उसमे कपडछन हरितालके चूर्णको सात आठ रोज यहातक मर्दन करे कि उसमे चमक विल्कुल न रहे । फिर टिकिया वनाकर खूव कडे धूपमे सुखाकर ६-७ कपडमिट्टी दीहुई हंडीमे घी १० तोले डालकर २० तोले पलाशकी भस्म डाले । इस तरह तह वतह आवेतक भरकर वीचमे हरितालकी टिकडीको रखकर फिर इसीतरह गलेतक भरदे । फिर चूल्हेपर रख मध्यमाग्नि जलावे एक दिनरात वीतजानेपर आच देनी वद करदे । स्वाङ्गशीतल होनेपर धीरजसे हरितालभस्मको निकालकर अग्निपर डालकर देखे । रग उसका सफेद हो और धूआ न दे तव इसमेसे १ रत्तीसे २ रत्तीतक तत्तद्रोगहरानुपानके साथ देनेसे वातरक्त, ताम्रवर्णमण्डल, शीतपित्त, महादद्रु, पामा इनसवको यह नष्ट करता है पथ्यमे मसूर चना, मूग और घी इनको चाहे जिस तरह खावे ॥ ८० ॥

## ८१ तालकेश्वरद्वयम् ( अष्टमः )

जम्बीरद्रवमध्ये तु प्रस्वेद्य नटमण्डनम् ।
दशांशं टङ्कणं दत्त्वा खण्डशः परिमेलयेत् ॥
चतुर्गुणे गाढपटे निबध्य प्रहरद्वयम् ।
दोलायन्त्रेण संस्वेद्य प्रदीपप्रमितेऽनले ३०९
चूर्णतोये काञ्जिके च कूष्माण्डाम्बुनि तैलके ।
त्रिफलाम्बुनि तत्पश्चात्क्षालयित्वाम्लवारिभिः॥
ततः पलाशमूलत्वग्वारिपिष्टं प्रशोषयेत् ।
महिषीमूत्रसम्पिष्टं पुनस्तं परिशोषयेत् ३११
गोलं पालाशभस्मान्तः शरावाभ्यां निरुद्ध्य च
खादेद्गजपुटे पक्त्वा स्वाङ्गशीतं समुद्धृतम् ॥
अजादुग्धैः पुनः पिष्ट्वा शोषयेद्गोलकीकृतम् ।
आढकं भस्म पालाशं हण्डिकायां दृढं क्षिपेत्
सम्यक् चूर्णस्य कुडवं दत्त्वा सम्यग्विचक्षणः ।
स्थापयेद्गोलकं तत्र पुनश्चूर्णञ्च भस्म च ३१४
धूमो नैति यथा वाह्ये तथा गाढं विमुद्रयेत् ॥
द्वात्रिंशत्प्रहरान्वह्निं भक्तवद्दापयेत्तथा ॥३१५॥
स्वाङ्गशीतं समुद्धृत्य सञ्चूर्ण्य नटमण्डनम् ।
हिमं कुन्दप्रभाकाशं निर्धूमं कृष्णवर्त्मनि ३१६
रक्तिकाऽस्य प्रदातव्या पुराणगुडयोगतः ।
पथ्यं च चणकस्योक्तं षष्टिकाकोद्रवौदनम् ३१७
त्रिःसप्तवासरान् यावल्लवणाम्लौ विवर्जयेत् ।
निर्वातभवनस्थायी सर्वव्यापारवर्जितः ॥३१८॥
अष्टादशैव कुष्ठानि वातरक्तं भगन्दरम् ।
अर्शो विसर्पजं दुःखं नाशयेदुपदंशकम् ३१९
लवणं यः परित्यक्तुं न शक्नोति कथञ्चन ।
स तु सैन्धवमश्नीयान्मधुरो हि रसो हितः ॥

वै र, र का, रसायन स, नि र., चि. र भ.,

कुष्ठाधिकारे। र.र.कौ. कुष्ठाटवीदावानलः। रसरत्नकौमुद्या धेनुमूत्रे पिष्ट्वा चक्रिका निर्मिता, अन्यत् समानम्।

टि०—इद योगद्वयमस्ति, गजपुटपरिपकस्य पुन पाके फलाभावात्। धूमो नैति यथा वाष्पे तथा गाटं विधुद्रयेदिति लिङ्गाच गजपुटपरिपक्कतालकाद्धूमाऽगमनशङ्कोत्थानाऽभावात्। एकत्र पाठस्तु प्रमादात्सञ्जात —एकत्र पाठस्तु समशुद्धिबोधनात्।

**भाषा**—जंभीरीके रसमे तण्डुलाकृति हरितालको ४ पहरतक दोलायन्त्रमे स्वेदितकर उसमे दशांश सुहागेके हरितालजितने मोटे टुकडे मिलाकर गाढे चार तह वस्त्रमे पोटली बनाकर चूनेका पानी, काञ्जी, कूष्माण्डस्वरस, तैल, त्रिफलाका काढा इनसबमे दीपप्रमिताग्निसे १–१ पहर स्वेदनकर खट्टी काजीसे धोकर साफकर पलाशकी जडकी छालके रससे ४ पहर मर्दनकर सुखाकर भैंसके मूत्रमे ४ पहर मर्दनकर टिकडी बनाय धूपमे अच्छी तरह सुखाकर ६–७ कपडमिट्टी दिये हुए शरावमे पलाश-भस्मके बीचमे सम्पुटकर ६–७ कपडमिट्टीसे सन्धि बन्दकर गजपुटकी आंचदे। स्वाङ्गशीतल होनेपर निकालकर १–१ रत्ती यथोचितानुपानके साथ देनेसे रक्तविकारप्रयुक्त समस्तरोगोको दूर करता है। अथवा काञ्जीमे प्रक्षालन करनेके बाद बकरीके दूधसे चमकमिटने तक मर्दनकर टिकडी बनाय सुखाकर ४ सेर पलाशकी भस्म लेकर ६–७ कपडमिट्टीकी हुई मजबूत हडीमे आधीभस्म दबादबाकर नीचे देकर बीचमे टिकडियोको रख १६ तोले बारीक पिसे हुए पत्थरके चूनेसे ढक दूसरी राखको दबादबाकर भरकर इसतरह मुह बद करे कि धूआ न निकले फिर चूल्हेपर रख मध्यमाग्नि जलावे। ऐसे ३२ पहरतक भात पकाने जैसी आग देकर स्वाङ्गशीतल होनेपर निकालकर रखछोडे। यह बर्फ अथवा कुन्दके पुष्पके समान सफेद और निर्धूम भस्म बनेगी। इसमेसे १ रत्ती पुराने गुडमे मिलाकर खानेको दे। और पथ्यमे चना, साठी चावल, कोदो, घी शक्कर इनके सिवाय कुछ न दे, निर्वातस्थानमे रहे। लवण और अम्ल भूलकर न खाय। ऐसे २१ रोज करनेसे १८ कुष्ट, वातरक्त, भगन्दर, अर्श, विसर्प और उपदंश इनसबको यह नष्ट करता है। इसमे कदाचित् रोगी नमक न छोडसके तो थोडासा सैंधानमक देना ॥ ८१ ॥

## ८२ तालकेश्वररसः ( नवमः )

तालकस्य तु यस्येह पत्राणि स्युः पृथक् पृथक्
अभ्रकस्येव तद्ग्राह्यं हरितालं विचक्षणैः ३२१
पुनर्नवायाः स्वरसे तालकं तद्विमर्दयेत्।
दिनमेकं ततस्तस्मिन् घनत्वं गमिते सति ॥
कुर्वीत चक्रिकां तान्तु शोषयेत्सम्यगातपे।
पुनर्नवासमस्ताङ्गक्षारैः स्थालीं गलावधिम्
पूरयेत्तु ततः क्षारं दृढयेत्पीडनेन हि।
क्षारस्योपरि तां सम्यग् दत्त्वा तत्तालचक्रिकाम्
तत आच्छादनं दत्त्वा मुद्रां कृत्वा विशोषयेत्।
स्थालीं चुल्यां निधायाग्निममन्दं ज्वालयेद्भिषक्
निरन्तरमहोरात्रपञ्चकं तेन सिध्यति।
स्वाङ्गशीतं समुत्तार्य गृह्णीयाद्रसमुत्तमम् ३२६
तालकेश्वरनामायं रसो गुञ्जामितोऽशितः।
गुडूच्यादिकषायेण गदानेतान्विनाशयेत् ३२७
सोपद्रवं वातरक्तं कुष्ठान्यष्टादशैव च।
फिरङ्गदेशजं जन्तो हन्ति रोगं सुदुस्तरम् ३२८
विसर्पं मण्डलं कण्डूं पामां विस्फोटकं तथा।
वातरक्तकृतान्रोगानन्यानपि विनाशयेत् ३२९॥
एतद्भेषजसेवी तु लवणाम्लौ विवर्जयेत्।
तथा कटुरसं वह्निमातपं दूरतस्त्यजेत् ॥३३०॥
लवणं यः परित्यक्तुं न शक्नोति कथञ्चन।
स तु सैन्धवमश्नीयान्मधुरोपरसो हितः ३३१

नि र, वै. र, यो म, चि क्र, र क ल, र. कौ, वै चि, कुष्ठाविकारे। नि. र, वातरक्ते। निघण्टुरत्नाकरे त्रिपुस्थानेषु पाठोऽस्ति तत्प्रमादाद्बोध्यम्।

**भाषा**—जिस हरितालके अभ्रककी तरह जुदे जुदे पत्रहो उस हरितालको शुद्धकर बारीक कपड़

छान चूर्णकर पुनर्नवाकी जडके रसमे ३–४ रोज यहातक मर्दन करे कि उसकी चमक मिट जाय, फिर टिकडी वनाकर कडे धूपमे अच्छी तरह सुखाकर पञ्चाङ्ग पुनर्नवाको जलाकर राखको ६–७ कपडमिट्टीदी हुई हर्डीमे आधेतक दवादवाकर भरकर ऊपर हरितालकी टिकडीको रखकर दूसरी राख गलेतक दवादवाकर भरदे। इसके वाद ढकन देकर गुडचूनेसे सन्धि वन्दकर ६–७ कपडमिट्टी देकर सुखादे। फिर हर्डीको चूल्हेपर रख ५ दिन तक लगातार तीक्ष्ण अग्नि देवे। स्वाङ्ग शीतल होनेपर निकालकर रखछोडे। इसमेसे १–१ रत्ती गुडूच्यादिकाथके साथ देनेसे उपद्रवसहित वातरक्त, १८ प्रकारके कुष्ट, फिरङ्गरोग, विसर्प, मण्डल, कण्डू, पामा, विस्फोट इनसवको यह नष्ट करता है, इसमे लवण, अम्ल, कटु, अग्नि, धूप, इनको दूरसे छोडदे। यदि लवण न छोडसके तो सेधानमक और शक्कर देवे ॥ ८२ ॥

### ८३ तालकेश्वररसः ( दशमः )

**तालं ताप्यं शिलां सूतं शुद्धं सैन्धवटङ्कणम्।**
**समांशं चूर्णयेत्खल्वे सूतात्त्रिगुणगन्धकः ३३२**
**गन्धतुल्यं मृतं ताम्रं जम्बीरे दिनपञ्चकम्।**
**मर्द्य षड्भिः पुटैः पाच्यं भूधरे सम्पुटोदरे ॥**
**पुटेपुटे द्रवैर्मर्द्यं सर्वमेतत्पटोः पलम्।**
**मरिचं द्विपलं ताम्रं लोहभस्म चतुःपलम् ॥**
**जम्बीराम्लेन तत्सर्वं दिनं मर्द्य पुटेल्लघु।**
**त्रिंशदंशं विषं चास्मिन् क्षिप्त्वा सर्वं विचूर्णयेत्**
**महिषाज्येन सम्मिश्रं निष्कार्धं पुण्डरीकनुत्।**
**मध्वाज्यै र्वाकुचीचूर्णं कर्षमात्रं लिहेदनु ॥**
**सर्वकुष्ठं निहन्त्याशु महातालेश्वरो रसः ॥**

र. रा. श, र म., र (मा), रसायने, र र स., र च., र. चि, वृ. यो त, र क ल., र र, शा, र. सु, यो चि, र स, र प्र सु, चि. र भ, र कौ., र सि, भै सा, र र दी., चि क, र. का, रससारसङ्ग्रह र र को, यो. म., र क, टो, रससागर, र. को, ना. वि, भा. प्र., । र. प्र. सुधाकरे जम्बीररसस्थाने। चुक्रिकारसो नियोजित इति विशेष —पुटश्च कौक्कुट प्रदत्त, भावप्रकाशे ताम्रस्थाने शङ्खचूर्णं नियोजित मिति विशेष।

**भाषा**—हरितालभस्म अथवा रसमाणिक्य सोनामाखी, मैनसिल और पारा, सेधानमक, सुहागा येसव १–१ तोला, गन्धक और ताम्रभस्म २–२ तोले लेकर जभीरीके रससे ५ रोज मर्दनकर टिकडी वनाय सुखाकर शराव सम्पुटमे वन्दकर ढाईसेर जङ्गली कण्डोकी आच देवे। स्वाङ्गशीतलहोनेपर निकालकर इसमे तीसावा हिस्सा शुद्ध वछनाग मिलाकर रख छोडे। इसमेसे २ माशे भैसके घीके साथ मिलाकर खावे। और वाकुचीके वीजोका एक तोला चूर्ण मधु और घीमे मिलाकर चाटेतो इससे १८ प्रकारके कुष्ट निवृत्त होते है।

### ८४ तालकेश्वररसः ( एकादशः )

**तालं म्लेच्छं शिलां सूतं गन्धकं कनकं समम्**
**अभ्रकञ्चाखिलैस्तुल्यं लोहं सूतांशकं विषम् ॥**
**जम्भाम्भोमर्दितः खल्वे पुटितस्तालकेश्वरः।**
**गुञ्जाचतुष्टयं कुष्ठं हरेद्योगेन योजयेत् ॥३३८**
**षण्मासंसेवनाद्धन्ति सर्वकुष्ठानि नान्यथा।**
**पथ्यं दुग्धं तथा तक्रं स्वल्पाज्यं चैव वास्तुकम्**
**शाल्यादिकं तु भुञ्जीत ग्रहणीं कामलामपि।**
**पाण्डुं क्षयं तथा कासं गुल्मं शूलञ्च नाशयेत् ॥**

र श, कुष्ठे

**भाषा**—हरितालभस्म अथवा रसमाणिक्य, ताम्रभस्म, शुद्ध मैनसिल, पारा और गन्धक, सुवर्णभस्म, लोहभस्म और वछनाग समभाग, अभ्रकभस्म सवकी वरावर लेकर सवको पारेगन्धक की नीलवर्ण कज्जलीमे मिलाकर जभीरीके रसमे १ रोज मर्दनकर गोला वनाय सुखाकर शरावसम्पुटमे वन्दकर २॥ सेर कण्डोकी आचदे। स्वाङ्गशीतल होनेपर ४–४ रत्ती तत्तद्रोगहरानुपानके साथ देनेसे ६ महीनेकेसेवनसे सव प्रकारकेकुष्ट, ग्रहणी, कामला, पाण्डु, धातुक्षय, कास, गुल्म, शूल इनसवको यह नष्ट करता है ॥ ८४ ॥

### ८५ तालकेश्वररसः ( द्वादशः )

तालं सूतटङ्कणं माक्षिकञ्च
म्लेच्छः श्वेतः प्रस्तरस्तुल्यभागाः ।
द्व्यंशोऽश्माङ्को वेदभागश्च लोह-
मर्काम्भोभि मर्दितं तत्पुटित्वा ॥३४१
सर्वं देयं षोडशांसेन रौद्रे
शालि मात्रा वर्धनीया रसस्य ।
कुष्ठघ्नोयं सर्वकुष्ठेषु योज्यः
स्वैःस्वैः सर्वैः स्वौषधैस्तालकेशः ॥
शैत्ये गुल्मे वातरोगे क्षये वा
शूले पाण्डौ कामलायां ग्रहण्याम् ।
जीर्णे सामे सन्निपाते ज्वरे वा
रोगान्सर्वान्नाशयेदेक एषः ॥३४३॥

र. श , कुष्ठे ।

भाषा—शुद्धहरिताल, पारा, सुहागा और सोनामाखी, ताम्रभस्म, सफेद सोमल, येसब समभाग, शुद्धगन्धक २ भाग, लोहभस्म ४ भाग, लेकर सबको पारे गन्धककी नीलवर्णकज्जलीमे मिलाकर आकके दूध अथवा अङ्गस्वरससे ४ पहर मर्दनकर गोलाबनाय सुखाकर ६–७ कपडमिट्टी कियेहुए शरावमे बदकर सुखाकर २॥ सेर जङ्गलीकण्डोमे अग्निदेवे । स्वाङ्गशीतलहोनेपर निकालकर सोलहवा हिस्सा शुद्धबछनाग मिलाकर रखछोडे । इसमेसे १–१ चावलभर तत्तद्रोगहरानुपानके साथ देवे और रोज १–१ चावलवढातारहे । तीनरत्तीमात्रातक पहुचकर आरोग्य लाभकर इसीमात्राको कायमरक्खे । इससे समस्तकुष्ठ, शीत,गुल्म, वातरोग, क्षय, शूल, पाण्डु, कामला, ग्रहणी, अजीर्ण, आमवात, सन्निपात और साधारणज्वर इनसबको यह नष्टकरताहै ॥८५॥

### ८६ तालकेश्वररसः ( त्रयोदशः )

विशुद्धं हरितालञ्च भागद्वादशकं भवेत् ।
गन्धकोऽपि तथा ग्राह्यो रसः सप्तात्र नीयते ॥
कृष्णाभ्रकभवं भस्म ग्राह्यं निश्चन्द्रिकं तथा ।
अङ्कोलमूलनीरेण सेहुण्डपयसा तथा ॥३४५
अर्कदुग्धेन सम्पिष्य करवीरजलेन च ।
काकोदुम्बरनीरेण पेषणीयो रसो भृशम् ॥
शुद्धताम्रमये श्रावे क्षेपणीयो रसेश्वरः ।
पच्यते वालुकायन्त्रे यामषट्कं रसोत्तमः ३४७
पञ्चगुञ्जः प्रदेयोऽसौ काकोदुम्बरवारिणा ।
नाशयेत्तूर्णमेवायं कुष्ठान्यष्टादशैव हि ॥३४८॥
सुरगोद्विजसाधूनां यथाशक्त्या च सेवनम् ।
पिप्पलीभिः समं दद्यात्सर्वज्वरविनाशनः ३४९

रसचि , र सं , र सु , र चि , र का , कुष्ठाधिकारे । रसार्चि , र. का विहाय अन्येषु ग्रन्थेषु कुष्ठहरितालेश्वर-नाम्ना प्रथित ।

भाषा—शुद्धहरिताल और गन्धक १२–१२ भाग, शुद्धपारा ७ भाग, कृष्णाभ्रकभस्म ७ भाग, लेकर पारेगन्धककी कज्जलीमे सबचीजोंको मिलाकर अकोलकी जडका रस, थूहर और आककादूध, कनेर, काकोदुम्बर इनकारस, इनप्रत्येकसे १–१ रोज मर्दनकर शुद्धताबेकी कटोरीमे लेपकर सुखाकर ६–७ कपडमिट्टीदीहुई हडीमे कटोरीको उल्टीरख गुडचूनेसे सन्धिबन्दकर ऊपर वालूभर ६ पहरकी मध्यमाग्नि देकर पकावे । स्वाङ्गशीतल होनेपर निकालकर कटोरीसहित पीसकर रखछोडे । इसमेसे ५–५ रत्ती काकोदुम्बरके दूधसे देनेसे यह १८ कुष्ठोको नष्टकरताहै । देवता, गौ, ब्राह्मण और साधुलोग इनका यथाशक्ति सत्कार करे । इसको यदि पीपलके चूर्णके साथ दियाजायतो समस्तज्वरोको नष्टकरताहै ॥ ८६ ॥

### ८७ तालकेश्वररसः ( चतुर्दशः )

गृहीत्वा कन्यकामूलं निर्व्रणं स्थूलरूपिणम् ।
निर्दोषं तालकं तस्य मध्ये दत्त्वा विमुद्रयेत् ॥
हण्डिकायन्त्रमध्यस्थं क्रियते सन्धिरोधनम् ।
दिनमेकं ददेताग्निं शीतलं तत उद्धरेत् ३५१
सूतं भस्म तदर्धांशं कृत्वा तत्पूर्ववद्धृतम् ।
विपाच्य हण्डिकायन्त्रे स्वाङ्गशीतं तदानयेत् ॥

एकाञ्च गुञ्जिकां कुष्ठे गुडान्तर्विनिवेश्य ताम् ।
दीयते प्रत्यहं पथ्यं सेवनाद् व्रजति स्फुटम् ॥
कुष्ठञ्च देहसंव्याप्तं शिरादृश्यं विभीषणम् ।
घाटालं विषमं प्रायो ब्रह्महत्यादिसम्भवम् ॥
नाशयेदचिरेणैतच्छतजन्मसमुद्भवम् ।
मतिमद्भिः प्रयोगोऽयं चिन्तनीयः पुनःपुनः ॥
अतः परं न चेहास्ति कुष्ठनाशनमौषधम् ॥

रसचि., कुष्ठे ।

टि०—तालकस्याग्नौ क्षारमन्तराऽवस्थानं दुर्घटमतस्तदाऽऽश्रयो ग्रहीतव्य इति रहस्यम् ।

**भाषा**—घीकुआरकी खूबमोटीजड पकीहुई जिसमेकि कीडेवगैरह न लगेहो उसमे खड्डाकर एक तोला हरितालकी डली बीचमे रखकर उसीके गूदेसे मुंहबंदकर १–२ कपडमिट्टी लगादे । फिर ६–७ कपड़मिट्टीकीहुई हंडीमे पुनर्नवा, पलाश अथवा पीपलकी राख ४ अङ्गुल बिछाकर उसजड़को रखकर ४ अङ्गुल उसके ऊपरतक राख भरदे । फिर हडीका मुहबंदकर २–४ कपड़मिट्टी देकर सुखाकर चूल्हेपर ८ पहरकी तीक्ष्णाग्नि देवे । स्वाङ्गशीतल होनेपर निकालकर इससे आधी पारेकी भस्म मिलाकर घीकुंआरके रसमे घोटकर गोली बनाय सुखाकर मलमलके कपड़ेमे बांधकर पहिलेकी तरह घीकुंआरकी जडमे रखकर मुहबंदकर हडीमे केवलजडको रखकर हडीकामुंहबन्दकर एक अहोरात्रकी आंच दे, स्वाङ्गशीतल होनेपर निकालकर रखछोड़े । इसमेसे १–१ रत्ती पुराने गुड़के साथ १ मण्डलतक देनेसे और पथ्यसेवन करनेसे तमाम शरीरमे व्याप्तकुष्ठ और जिसमे शिरा दीखने लगीहो ऐसाभयकर कुष्ठ तथा अत्यन्त उपद्रववालाकुष्ठ, ब्रह्महत्यादि पापोसे उद्भूतकुष्ठ, येसब नष्टहोतेहै । यह बहुत उत्तम कुष्ठघ्न औषधहै ॥ ८७ ॥

### ८८ तालकेश्वररसः ( पञ्चदशः )

विमर्द्य तुल्यौ रसतालकौ च
सप्ताहमेतत्तनुकारवल्ल्या ।
रसेन गोलं सिकताऽभिपूर्णे
सचक्रिकं तत्र निधाय भाण्डम् ३५६
शुल्बस्य पात्रेण विधाय मुद्रां
विधाय मध्यानलपाचितञ्च ।
दिनञ्च चुल्यां किल वल्लमात्रः
सितायुतः स्याद्विषतापहारी ॥ ३५७ ॥
तालकेश्वररसः सुखदायी
क्षीरभक्तभजनेन निषेव्यः ।
तालकः सकलवातविनाशी
रोगिणां हितकरश्च जवेन ॥ ३५८ ॥

र. सा. ७१

रसायनसं, भै र, वै वि, र. सु, र को., र. क., र. का., ज्वराधिकारे । र को–मृतज्वरारि ज्वराङ्कुशनाम, भै र., र.सु, र क एषु ग्रन्थेषु शीतारिरितिनाम स्थापितम् । कुत्रचित्कूष्माण्डक्षारचूर्णोदकतिलेषु पक्व ताल गृहीतम् । र. का मार्कवस्य अधिका भावना प्रदत्ता ।

**भाषा**—शुद्धपारा और हरिताल समभागलेकर हरितालका बारीक कपडछान चूर्णकर पारेके साथ कज्जलीकर जङ्गली करेलेके रसमे सातरोज मर्दनकर टिकड़ी बनाकर दोनोकी बराबर शुद्धताम्रेके सम्पुटमे रखकर ६–७ कपडमिट्टीसे बन्दकर बालुकायन्त्रमे रख मध्यम आचसे १ रोज पकावे । स्वाङ्गशीतल होनपर निकालकर ३–३ रत्ती शक्करके साथ देनेसे जहरीबुखारोकेलिये यह उत्तम औषधहै । इसमें पथ्य दूधभातकेसिवाय और कुछनही देना । इसके सेवनसे तमाम वातरोग नष्ट होतेहै ॥ ८९ ॥

### ८९ तालकेश्वररसः ( षोडशः )

कर्षा द्वादश तालस्य कूष्माण्डरससम्भृते ।
स्वेदयेद्दोलिकायन्त्रे यावत्तोयं न विद्यते ३५९
पश्चात्तं शोषयेत्खल्वे सूतं कर्षद्वयं क्षिपेत् ।
घर्षयेद्बहुधा तत्तु यावत्कज्जलिका भवेत् ३६०
स्नुहीक्षीरं रविक्षीरं छागीगोक्षुरवाकुची-
पातालगरुडाऽङ्कोलचक्रमर्दकहिज्जलाः ॥३६१
कुमार्युन्मत्तभल्लातत्रिफलाम्बुपुनर्नवाः ।
निम्बत्वगेभि भैषज्यैः पुटानाञ्च त्रयंत्रयम् ॥
पट्कर्षं कलिकाचूर्णं हण्डिकायान्तु धारयेत् ।

चतुर्थांशमधः स्थाप्यं मध्ये स्थाप्यं तु तालकम्
पश्चादुपरि चूर्णन्तु सर्वं स्थाप्यं प्रयत्नतः ।
हण्डिकां कण्ठपर्यन्तां कुमारीरसयोगतः ३६४
पूरयेच्च ततो मुद्रां दृढां कुर्यात्प्रयत्नतः ।
तस्योपरि शिलां दत्त्वा दृढां न च चलेद्यथा
दीपाग्निना चतुर्यामं विंशद्यामं हठाग्निना ।
स्वाङ्गशीतलमुद्धृत्य कुष्ठे तालेश्वरो रसः ३६६
कुष्ठनाशकरः ख्यातो भैरवानन्दयोगिना ।
पथ्यं मुद्गाम्बु शाल्यन्नं भिषगत्र प्रयोजयेत् ॥
रसायनस, चि. र. भ, टो., र सं., र. का., र. र. कौ., कुष्ठे ।

भाषा—१२ तोले शुद्धहरितालको सफेदकोहड़ाके रससे भरीहुई हण्डीमे दोलायन्त्रकर पकावे । जब रसजलजाय तब हरितालको निकालकर सुखाकर २ तोला शुद्धपारेके साथ घोटकर नीलवर्ण कज्जलीकर थूहर, आक और बकरीकादूध, गोखरू, बाकुची, पातालगारुडी, अकोल, चकवड, समुद्रफल, घीकुआर, धतूरा, भिलावा, त्रिफला, पुनर्नवा नीमकीछाल इन प्रत्येकमे ३-३ रोज घोटकर टिकिया बनाय सुखाकर ६ तोले अनबुझ कलीका चूना लेकर ६-७ कपड़मिट्टी दीहुई हडीमे २ तोला बिछाकर इसपर हरितालकी टिकियोको रख ४ तोले चूनेसे ढककर खूब दबादे और उसमे गलेतक घीकुआरकारसभरदे। फिर मुहपर शराव रख कपडमिट्टी देकर सुखाकर चूल्हेपर रखकर एक नवीन वजनदार शिला रखदे । जिसमेकि यह हिले नही, फिर ४ पहरतक दीपाग्निसे पकाकर २० पहरतक खूब कड़ी आंचदे । स्वाङ्गशीतलहोनेपर निकालकर रखछोडे । इसमेसे १ रत्तीसे ३ रत्तीतक कुष्ठहरानुपानके साथ देनेसे यह तमामकुष्ठोका नाश करताहै । इसमे पथ्य मूग और सफेद चावल देना ॥८९॥

### ९० तालकेश्वररसः (राजादिः) १७

मूत्रं गवां षोडशभागमानं
निधाय भाण्डेऽथ विधाय तस्मिन् ।
दीपाग्निना तत्परिशोष्य सर्वं
मूत्रं ततस्तालकशुद्धता स्यात् ॥ ३६८
वीर्यं पुरारेरिह नागतुल्यं
भागद्वयं चाऽप्यथ तालकस्य ।
शुद्धेन नागेन रसो विशुद्धो-
विमर्दनीयो हरितालकञ्च ॥ ३६९ ॥
ततस्तु जम्बीररसेन सर्वं
विमर्दनीयं त्रिदिनं त्रिवारम् ।
भाव्यं कुमार्याः सलिलेन भृङ्ग-
वज्राद्रकन्देन च वारयुग्मम् ॥३७०॥
कुष्ठे ददीताऽस्य रसस्य वल्ल-
त्रयं रसैरार्द्रकजैर्विजेतुम् ।
शाखासु पक्वत्वमथो सुषुप्तिं
स्तम्भश्च मन्यास्वथ मण्डलानि ॥३७१
गवां पयः शर्करया समेतं
स्तम्भातिरेके सति तन्नियोज्यम् ।
औदुम्बरं हन्ति सितामधुभ्यां
कृष्णञ्च कुष्ठं त्रिफलारसेन ॥ ३७२ ॥
गुडार्द्रकाभ्यां गजचर्म सिध्म-
विचर्चिकास्फोटविसर्पदद्रून् ।
निहन्ति पाण्डुं च सरक्तपित्तं
तथाविपादीं कटुकीसिताभ्याम् ॥३७३
रोगेषु सर्वेष्वपि वासराणि
त्रिसप्तसङ्ख्यानि रसः प्रदेयः ।
रसप्रयोगाऽवसितौ सुषुप्त्यां
क्वाथं पिबेच्छिन्नरुहाऽसनोत्थम् ३७४
मासद्वयं मुद्गघृतान्वितान्न-
मौदुम्बरे पथ्यमुदाहरन्ति ।
अङ्गानि पञ्चापि पलोन्मितानि
दद्याद‍रिष्टस्य तथाऽऽढकीनाम्॥३७५॥
क्वाथेन युक्तं सघृतौदनञ्च
पथ्याय कृष्णोऽप्यथ कृष्णवर्णे ।
रसाऽवसाने सितया समेतां
पलोन्मितामामलकीं प्रदद्यात् ॥ ३७६

अन्नं समुद्गं सघृतं नियोज्यं
मासद्वयं स्यादथवा विचिह्नम् ।
रसप्रयोगाऽवसितौ प्रयुञ्ज्या-
दङ्गानि पञ्चस्नुत्रनिःसृतानि ॥३७७॥
पादोन्मितानीह च मासयुग्मं
पथ्याय दुग्धौदनमाददीत ।
स्यात्तालकेशाख्यरसप्रयोगे
तक्रञ्च मासं परिवर्जयेत ॥ ३७८ ॥

र. र. स, र म, रसायनस र. चि, यो म, र. सु, र का., र. क, कुष्ठे ।

**भाषा**—सोलहगुने गोमूत्रमे हरितालको डालकर दीपाग्निसे पकावे । तमाम गोमूत्र जलजानेके वाद इसको निकालकर पारदभस्म या रससिन्दूर और नागभस्म १–१ भाग, पूर्वोक्त शुद्ध हरिताल २ भाग, लेकर सबकी कज्जलीकर जमीरीनीबू और घीकुआर के रसोसे तीन तीन रोज खरलकर भंगरा और जहरीमूरणके रसोसे २–२ रोज मर्दनकर ३–३ रत्तीकी गोलिये वनाकर रखछोडे, इनमेसे १–१ गोली अदरखके रसके साथ देनेसे शाखा-ओमे फैलाहुआ और पकाहुआ शून्यपडाहुआ, स्तब्ध और मन्याश्रित तथा मण्डल इनको नष्टकरता है । अधिक कण्डियत रहनेपर अथवा अङ्ग अधिक जकडे होतो गायका दूध शक्कर मिलाकर उसके साथ इसको देना । औदुम्बर कुष्टमे शक्कर अथवा मधुके साथ देना । कृष्णकुष्टमे त्रिफलारसकेसाथ देना, गजचर्म, सिध्म विचर्चिका, स्फोट, विसर्प, दद्रु, इनमे गुड और अदरखकेसाथ देना । पाण्डु, बिवाई, रक्त-पित्तमे कुटकी और शक्करकेसाथ देना । समस्तरोगोमे कमसेकम २१ रोजतक इसका प्रयोगकरना उचित है । रसप्रयोग समाप्त होनेपर यदि सुप्तुप्ति रहजाय अथवा नवीन पैदा होजायतो गिलोय और असनका क्वाथदे । यदि उदुम्बर कुष्टकी चिकित्सा चलती हो तो प्रयोग समाप्तिके अनन्तर दोमहीने तक मूंग, घी और चावल देने चाहिये । कापालिक अथवा कृष्णवर्ण कुष्ठमे निम्ब, अरहरके पञ्चाङ्ग १–१ पलका क्वाथ देवे । और भोजनमे घी और चावल दे । तमामरोगोमे रसप्रयोगके पीछे शक्कर और आवलेका चूर्ण १–१ तोला मिलाकर रोज दो महीनेतक अथवा कुष्ठके समस्त चिन्ह दूर न हो तबतक देवे । मूगकी दाल, घी और चनेकी रोटी दे । अथवा काटीका पञ्चाङ्ग १–१ तोला रोज २ महीनेतक देवे। इसके साथ दूध और भात खानेको दे । प्रयोग समाप्तिके पीछे १ महीनेतक छाछ न लेवे ॥ ९० ॥

## ९१ तालकेश्वररसः ( अष्टादशः )

शुद्धतालस्य भागैकं भागैकं शुद्धपारदम् ।
शुद्धगन्धकभागौ द्वौ तालांशं नवसादरम् ३७९
दिनैकं मर्दितं खल्वे सोमराजीरसेन तु ।
अर्कदुग्धेन सम्मर्द्य कूपिकायां विनिःक्षिपेत् ॥
वालुकापूरिते यन्त्रे अध ऊर्ध्वं विपाचयेत् ।
यामद्वादशकेनैव मन्दमध्यहठाग्निना ॥३८१॥
स्वाङ्गशीतं समुद्धृत्य रसोऽयं तालकेश्वरः ।
सर्वकुष्ठं निहन्त्याशु गलत्कुष्ठनिकृन्तनः॥३८२॥

रसायनसं., कुष्ठे ।

**भाषा**—शुद्धहरिताल, पारा और नवसादर १–१ भाग,गन्धक २ भाग, इनसबकी कज्जलीकर बाकुचीके अङ्गस्वरस और आकके दूधसे १–१ रोज मर्दनकर सुखाकर ६–७ कपडमिट्टी दीहुई आतशी शीशीमे भरकर वालुकायन्त्रमे १२ पहर मन्द, मध्य और हठाग्निसे पकावे । स्वाङ्गशीतल होनेपर निकालकर रखछोडे । इसमेसे ३–३ रत्ती तत्तद्रोगहरानुपानके साथ देनेसे यह तमामकुष्ठ, वातव्याधि, सन्निपात, जीर्णज्वर इनको नष्टकरताहै ॥ ९१ ॥

## ९२ तालकेश्वररसः ( ऊनविंशः )

पारदं तालकन्दारं मृदार्घं मर्दयेद् दृढम् ।
द्विटङ्कणमिदं यन्त्रे पचेद्विद्याधराह्वये ॥३८३॥
मूषायां लवणस्यैव पुनः पक्त्वा ततः पुनः ।
सिकतायां पचेत्कूप्यां कुष्ठहा तालकेश्वरः ३८४

र. क, कुष्ठे ।

भाषा— शुद्धपारा, हरिताल और मुर्दासङ्ग, दोनों सुहागे इनसबको पानीमें पीस गोला बनाय सुखाकर लवणकी मूषामें बन्दकर डमरूयन्त्रमें चार पहरकी आंचदेकर पकावे। स्वाङ्गशीतलहोनेपर ऊपरकी हंडीमें लगेहुए फूलोंको लेकर ६-७ कपडमिट्टी दीहुई आतशीशीशीमें बंदकर वालुकायन्त्रमें रखकर टाटलगाय १२ पहरकी अग्निसे पकावे। स्वाङ्गशीतलहोनेपर निकालकर रखछोडे। उनमेंसे १-१ रत्ती कुष्ठहरानुपानके साथ देनेसे यह तमाम कुष्ठोंको दूरकरताहै ॥ ९२ ॥

### ९३ तालकेश्वररसः ( विंशः )

वेदकर्षः पारदः स्याद्वङ्गश्च पलमात्रकम्।
मल्लं धान्याभ्रकश्चैव टङ्कणश्चेति पालिकम् ॥
एकविंशतिकर्षाः स्युस्तालकं तच्चतुर्गुणम्।
एकत्र खल्वयेत्पश्चाद्भावनाः किल दापयेत् ॥
जैपालैरण्डतैलाभ्यां भाव्यं वज्रार्कदुग्धकैः।
कूप्यां निधाय पश्चाच्च यन्त्रे च सैकते पचेत् ॥
चत्वारिंशद्याममात्रमुद्धरेत्स्वाङ्गशीतलम्।
तैलार्काभ्यां पुनर्भाव्यं पुनरग्निम्प्रदापयेत् ३८८
एवं त्रिवारं कुर्वीत रसः काचनिभो भवेत्।
तण्डुलप्रमितो योज्यो सर्वरोगनिबर्हणः३८९॥

रसायनस, सर्वरोगे।

भाषा— शुद्धपारा, वङ्ग, मल्ल, धान्याभ्रक और सुहागा ये सब १-१ तोला और शुद्धहरिताल २० तोला लेकर वङ्गको गलाकर पारेको मिलाकर थक्का बनाले इसमे सबचीजे डालकर ४ पहरतक मर्दनकर कज्जली बनाले फिर जमालगोटा और एरण्डका तैल, सेहुण्ड और आकका दूध इनप्रत्येकसे १-१ रोज मर्दनकर खूबसुखाकर ६-७ कपडमिट्टी दीहुई आतशीशीशीमें रखकर मुहबन्दकर वालुकायन्त्रमे रखकर ४० पहरकी अग्निदे। स्वाङ्गशीतल होनेपर निकालकर पूर्वोक्त भावनाए देकर फिर आतशी शीशीमें भरकर अग्नि दे। ऐसे ३ वार आंचदेकर निकालनेसे यह काचके रङ्गका चमकदार पदार्थ तैयार होगा। इनमेंसे १-१ चावल नतमरोगहरानुपानके साथ देनेसे यह समस्तरोगोंको दूरकरताहै ॥

### ९४ तालकेश्वररसः ( एकविंशः )

संशोधितश्च रसभस्म विभागमेकं
तालाभ्रसत्त्ववरकाञ्चनभागयुक्तम्।
भृङ्गद्रवैः सुमिलितं पुटितं तथान्ध-
मूषागतं भवति यामयुगेन सिद्धम् ॥
भूयो हि मार्कवरसेन वटी प्रबध्य
सेव्या नृभिः प्रतिदिनं परया सुभक्त्या
लूताभगन्दरशिराव्रणरक्तवातान्
दुर्नामकुष्ठपिडिका विनिहन्ति सद्यः ॥

र. (मा.), कुष्ठे।

टि०—तालकस्य प्रथम रसेन कृत्वा पश्चान्निम्बुरसेन दिनानि त्रीणि मर्दयेत्, पश्चात्गमूत्रेण दिनानि त्रीणि मर्दयेत्, तदनु टङ्कणमरर्या चतुर्थांशेन दत्त्वा निम्बुकरसेन दिनमेकं मर्दयेत्। पश्चात्कुम्भे कृत्वा द्वादशप्रहरानग्निः कार्य। एवं तालकसत्त्वं समागच्छति। अभ्रकस्य प्रथमं धान्याभ्रकं कृत्वा पश्चात्तदर्धं गुड, गुग्गुलु, लाक्षा, सर्जरस, टङ्कणं प्रत्येकं चतुर्थभाग मिश्रय्य सर्वमेकत्र मर्दयित्वा माहिषीगोमयेन समभागेन पिण्डिका कार्या, कोष्ठीयन्त्रेण ध्मापयेद्विंशति प्रहरान् यावदेव सत्त्व पतति।

भाषा—अच्छी तरहसे शुद्ध किये हुए पारेकी भस्म, हरिताल और अभ्रकका सत्त्व और सुवर्ण १-१ भाग लेकर भागरेके रससे एकरोज मर्दनकर गोला बनाय अन्धमूषामे रखकर धोकनीसे धोके। जब सफेद लपट निकलने लगे तब बन्द करदे। स्वाङ्गशीतल होनेपर निकालकर भगरेके रससे घोटकर २-२ रत्तीकी गोलिये बनाकर रखछोडे। इनमेसे १-१ गोली यथोचितानुपानके साथ देनेसे लूता, भगन्दर, शिराव्रण, वातरक्त, अर्श, कुष्ठ, प्रमेहपिडिका इनसबको यह नष्ट करता है ॥ ९४ ॥

### ९५ तालकेश्वररसः ( द्वाविंशः )

भागैकशिग्रुपत्राढ्यं द्विभागं शुद्धतालकम्।
चूर्णयित्वाऽऽविदुग्धेन श्लक्ष्णपङ्कीकृतं भृशम् ॥
ततोगजपुटोत्तीर्णं भल्लातस्नेहभावितम्।

छायासु शोषितं सप्त शाल्मलीद्रुतिभिस्तथा ॥
तालकेश्वरनामाऽयं दुष्टकुष्ठनिबर्हणः ॥ ३८३ ॥
र. (मा.), कुष्ठे ।

भाषा—दो तोले हरितालका बारीक कपडछान चूर्णकर इसमे एक तोले सहिजनके ताजेपत्रोको डालकर भेडके दूधसे ३–४ रोज मर्दनकर ६–७ कपडमिट्टी दियेहुए शराव अथवा हडीमे इस हरितालको डालकर चलादे । और गुडचूनेसे सन्धि बन्दकर ६–७ कपडमिट्टी करके खूब सुखा दे। फिर जङ्गलीकण्डोमे गजपुटकी आच दे । स्वाङ्गशीतल होनेपर निकालकर पातालयन्त्रसे भिलावोका तेल निकाल सातदिनतक छायामे मर्दनकरे फिर सेमलकी द्रुति जो कि सूखनेपर मोचरस नामको पाती है वह अगर ताजी मिलसके तो उससे, नहींतो मोचरसका क्वाथकर उसके घनसे ७ रोज मर्दनकर डेढ १॥ रत्तीकी गोलियें बनाकर रखछोडे फिर वमन विरेकादिसे कुष्ठीको शुद्धकर १–१ गोली पुराने गुड अथवा घी और मधुके साथ सप्ताहमे सातरोज तक दे । ऐसे दूसरे सप्ताहमे २–२ गोली तीसरेमे ३–३ और चौथेमे चार ४ दे । ऐसे २८ रोजके बाद पकीहुई एकहर्रेके छिलकेकेसाथ जिसतरह हरितालकी मात्रा बढाई थी उसीतरह २८ वे रोज कमकरे । इसतरह ५६ रोजमे यह प्रयोग समाप्त होगा । इसमे पथ्य छाछभातके सिवाय कुछ न देतो काकणक और उदुम्बरको छोडकर और १६ कुष्ठोको यह नष्ट करता है ॥ ९५ ॥

## ९६ तालकेश्वररसः ( त्रयोविंशः )

रसस्त्रिभागो द्विगुणश्च तालं
गन्धंतदर्द्धश्च शिला तदर्द्धा ।
विमर्दनीयं फलकाञ्चनोत्थै-
रधोमुखीं स्थापय काचकूपीम् ॥ ३९४
समं ततस्तत्सुवालुकान्तरे
स्युश्शालयो यन्त्रवरोर्ध्वपृष्ठगाः ।
विवर्णतां यान्ति यदैव शालय-
स्तदैव सिद्धं रसमाशु धारयेत् ॥ ३९५
विभज्य तद्यन्त्रवरं सुयत्नतो
मरीचचूर्णेन सह द्विवल्लकम् ।
नियोजयेन्नागबलादलान्वितं
समस्तशीतज्वरनाशनं नृणाम् ॥ ३९६
सदुग्धमन्नं परिभोजयेन्नरं
हिमं मतं पथ्यमथक्षुधातुरे ।
शिवोदितोऽयं खलु तालकेश्वरो-
मरुत्कफाजीर्णविकारनाशनः ॥ ३८७ ॥
चि. र. ज्वराधिकारे ।

भाषा—शुद्धहरिताल ६ भाग, शिंगरिफसे निकाला हुआ पारा ३ भाग, शुद्धगन्धक डेढभाग शुद्धमॅनासिल ।॥। भाग, लेकर सबकी कज्जलीकर पके धतूरेके रससे २–३ रोज मर्दनकर सुखाकर ६–७ कपडमिट्टी दीहुई आतशीशीशीमे डालकर डाटलगाकर २–४ कपडमिट्टी करदे । सूखनेपर वालुकायन्त्रमे अधोमुखरखकर बालूसे ढककर मन्द, मध्य और तीक्ष्ण अग्नि देकर पकावे । १ रोज बाद बालूके ऊपर धान डालकर देखे जब वे काले पडने लगे तब आच बद करदे । स्वाङ्गशीतल होनेपर निकालकर रखछोडे । इसमेसे ६–६ रत्ती मरिचके चूर्णके साथ अथवा पानके साथ देनेसे समस्त शीतज्वर नष्टहो भूख लगनेपर दूधभातदे और शीतोपचार करे हर्रेके चूर्णके साथ देनेसे यह वायु, कफ और अजीर्णको नष्टकरताहै ॥ ९६ ॥

## ९७ तालकेश्वररसः ( चतुर्विंशः )

अष्टाष्टावथपट्टपलानिविमलोत्तुङ्गौ विशुद्धौ रसं,
मल्लंसार्धपलंविचूर्ण्य सकलं ह्यादित्यदुग्धेन च ।
सम्मर्द्याथविधायगोलकवरं दाढर्येन युक्तेन्यसे-
द्रम्येकिंशुकभूतिकार्धकभृते भाण्डेऽर्कपत्रान्विते
तद्गोलोपरिसंन्यसेद्रविदलं पश्चाच्च भूत्या भृशं,
भाण्डंसम्परिपूरयेदनलकं द्वात्रिंशयामान्कुरु ।
एतैःसंविधिभिःसमुज्ज्वलतरः श्रीतालकेशोभवे-
न्निर्धूमोयदिशुक्लवर्णसहितः शुद्धंतदातं वदेत्॥

पङ्गुत्वंननुकुब्जतांगलगदं सन्धिस्थवातं कफं,
हन्याद्धस्तकटिस्थवातनिचयं पृष्ठस्थवातभ्रमम्।
पाण्डुंपित्तचयंक्षयंगुदगदं श्वासञ्च कासं तथा,
मेहंदुर्विषशोकरोगनिचयं श्रीतालकेशो जयेत्॥

र मु, वातविकारे।

भाषा—अत्यन्तविशुद्ध हरिताल और गन्धक आठ ८ पल, शुद्धपारा ६ पल, शुद्धसोमल १॥ पल लेकर पारेगन्धककी नीलवर्ण कज्जलीकर अत्यन्त कपडछानकियेहुए हरिताल और मल्लके चूर्णमे मिलाकर १–२ रोज सूखे घोटकर आकके दूधसे यहातक मर्दनकरे कि चमक दीखनी बंदहोजाय। फिर इसकी छोटी टिकिया बनाकर पलाशके फूलोकी राख कपडछानकीहुई ६–७ कपडमिट्टी कीहुई हडीमे आधेतक दवादवाकर भरकर ऊपर पकेहुए आकके पत्ते बिछाकर उनपर उन टिकियोको जमाकर आकके पत्तोसे ढककर दूसरी राख गले तक भर खूब दवादे फिर उसके नीचे ३२ पहरतक अग्नि जलावे स्वाङ्गशीतल होनेपर बहुतसभालसे इसभस्मको निकाले। यह यदि निर्धूम और सफेदवर्ण हो तो सिद्धसमझना। इसमेसे आधी आधी रत्ती तत्तद्रोगहरानुपानके साथ देनेसे पङ्गुत्व, कुब्जत्व, गद्गदत्व, सन्धिस्थवात कफ, हस्त, कटि और पृष्ठस्थवात, भ्रम, पाण्डु, पित्त, क्षय, ववासीर, श्वास, कास, प्रमेह, दुष्टविष और शोकजरोग इन सवको यह नष्टकरताहै॥ ९७॥

## ९८ तालकेश्वररसः (पञ्चविंशः)

शुद्धं सूतं समं गन्धं सूतात्तालं चतुर्गुणम्
कुक्कुटीपर्णसाराणां वाकुच्याश्च कषायकैः ४०१
त्रिदिनं मर्दयेत्खल्वे त्रिभिस्तुल्यं मृतायसम्।
अयस्तुल्यं मृतं ताम्रं मर्दयेद्दिनपञ्चकम् ४०२
पूर्वक्वाथद्रवै र्वाऽथ सर्वं तद्गोलकीकृतम्।
वर्षाभूचित्रपत्रैश्च मूषागर्भं प्रलेपयेत्॥४०३॥
तन्मध्ये निक्षिपेद्गोलं लेपः कल्प्यस्तथोपरि।
रुद्ध्वाक्षि भूधरे पक्वं समुद्धृत्य विभावयेत् ४०४
सप्तधामलजैस्तोयै र्मधुमिश्रं निरुध्य च।
पुटैके भूधरे पक्वो रसःस्यात्तालकेश्वरः ४०५
चतुर्गुञ्जं पर्णखण्डे भक्षयेच्च पिबेदनु।
अजाजीद्वितयं त्र्यूषं गिरिकर्णी गवां पयः४०६
मुण्डीचूर्णं तथा क्षौद्रैः सर्वकुष्ठं नियच्छति।
हिङ्गुजम्बीरवातारितैलैः पवनपीडितैः ४०७
माधूकसारसिन्धूत्थवचाव्योपै र्हतौजसि।
शोफे भक्ताम्बुना कुष्ठे घृतेन पयसाऽथवा४०८
धारोष्णेनार्द्रकस्यापि कामलायां रसेन च।
रसस्तालेश्वराख्योऽयं सर्वकुष्ठहरः परः ४०९

र मु, चि क, र. र म, र का, कुष्ठे। र. (मा), महारोगेषु।

टि०—माणिक्यचन्द्रीयरसावतारे रसगन्धाभ्या पारदो द्विगुणो नियोजितोऽत्र तु द्वाभ्या सम। अत्र वर्षाभूचित्रकपत्रै मूषागर्भविलेपन—मस्ति तत्र तु भल्लातकपत्रैर्लेपो दत्त। तत्र गजपुटोगृहीत अत्र तु भूधरपुट इति विशेषोऽस्ति उभयस्य साम्य कृत्वा योगो निष्पादनीय इत्यस्माकं सम्मति गजपुटापेक्षया ताले भूधरपुटस्य ज्यायस्त्वमितिदिक्।

भाषा—शुद्धपारा और गन्धक १–१ भाग, शुद्धहरिताल ४ भाग लेकर नीलवर्ण कज्जलीकर कुक्कुटशिखा अथवा सुरवारीके पत्तोके रस तथा वाकुचीके अङ्गस्वरस अथवा क्वाथसे तीन तीन रोज मर्दनकर तीनोकी वरावर लोह और ताम्रभस्म मिलाकर पूर्वस्वरसोसे ५ रोज मर्दनकर गोला वनाकर सुखाले। फिर इटसिट, चित्रक और भिलावेके पत्तोके रसोसे मूषाको लेपदेकर सुखाकर उसमे उसगोलेको रख मुहवन्दकर ४–५ कपडमिट्टी देकर सुखाकर भूधरपुटमे आचदे वे स्वाङ्गशीतलहोनेपर निकालकर ७ वार ताजे आवलोके रससे मर्दनकर सुखाकर चतुर्गुणित मधुमिलाकर मूषामे वदकर भूधरपुटमे आचदेवे। स्वाङ्गशीतलहोनेपर निकालकर रखछोडे। इसमेसे ४–४ रत्ती पानमे रखकर खावे। ऊपरसे दोनो जीरे, त्रिकटु, विष्णुक्रान्ता, गायकादूध, गोरखमुण्डीका चूर्ण और मधु इनमेसे औचिती देखकर

चाहेजिसका अनुपान कायम करनेसे यह तमाम-कुष्ठोंको दूरकरताहै । वातग्रस्तरोगियोंके लिये हींग, जभीरीकारस और एरण्डका तैल ऊपरसे पिलावे जिनका ओज नष्ट होगयाहै उनके लिये महुएके फूल अथवा हीर, सेधानमक, वच, त्रिकुटु इनके साथ देवे सूजनमे माडकेसाथदे, कुष्टमे घी अथवा धारोष्णदूधके साथदे । कामलामे अदरखके रसके साथ देवे । ९८

### ९९ तालकेश्वररसः ( षड्विंशः )

तालकं दोलिकायन्त्रे पक्त्वा सूक्ष्मञ्च कल्कयेत्
कुमारीरसतो मर्द्यं समभागाऽथ शुक्तिका ॥
चक्रिकां कारयेद्वह्निं दद्यात्प्राज्ञः सुयन्त्रके ।
द्वादशप्रहरं यावत्ततः पश्चात्समुद्धरेत् ॥ ४११
निर्गन्धश्चाऽपि निश्चन्द्रं निर्धूमञ्च परीक्षयेत् ।
गुञ्जाद्वयं भक्षणीयं नागवल्लीदलाऽन्वितम् ॥
मासमेकं द्वयं वापि दुग्धौदनी जितेन्द्रियः ।
हरते सर्वरोगांश्च नाऽत्र कार्या विचारणा ॥
र ज्ञा, सर्वरोगे ।

**भाषा**—तण्डुलाकृति हरितालके टुकडेकर पोटली बनाय घीकुआरके रसमें ४ पहरतक दोलायन्त्रमे स्वेदनकर खूब वारीकपीस इसकी बरावर मोतीकी सीपकाचूर्ण मिलाकर कुमारीक रससे मर्दनकर टिकिया बनाय सुखाकर न. २४ वे तालकेश्वरकीतरह हडीमे भरकर १२ पहरकी आंचदेवे । स्वाङ्गशीतलहोनेपर निकालकर देखे । अग्निपर डालनेसे निर्धूम और निर्गन्ध होता उसकी २ रत्ती पके पानमे रखकर खानेसे एक अथवा दोमहीनेके बाद कुष्ठप्रभृति समस्तरोगोंको यह दूरकरताहै । इसमे दूध चावल खानेको देना और ब्रह्मचर्यसे रखना । ९९

### १०० तालकेश्वररसः ( सप्तविंशः )

तालके सममर्पीकृतमीशं
तुल्यभागमथ कारवेल्लजैः ।
अम्बुभिर्मुनिदिनानि विभाव्य
क्षुण्णगोलमिदं कृतमाशु ॥ ४१४ ॥
वालुकासु परिपूर्णभाण्डगा
चक्रिकोपरि निधाय गोलकम् ।
शुल्बभाजनपिधानयुक्तकं
चुल्हिकोपरि निधाय भाण्डकम् ४१५
मध्यवह्निसहितं दिनमेकं
स्वाङ्गशीतमवचूर्ण्यवल्लिकाम् ।
तालकेश्वररसस्स नाशये-
दुग्रमाशु विषमं सशर्करः ॥ ४१६ ॥
र. ल, रससारसङ्ग्रहे र. सु. ( मृतसंजीवन इति नाम ) विषमज्वरे । रससारसङ्ग्रहे शुल्वभाजनस्थाने शरावसम्पुटं विहितम् ।

**भाषा**—शुद्धहरिताल और पारेकी नीलवर्ण कज्जलीकर जङ्गलीकरेलेके रससे सातरोज घोटकर टिकडी बनाय सुखाकर ६—७ कपडमिट्टी दीहुई हडीमे आधेतक वालूभर तांबेकी गोल चद्दर वालूपर रख ऊपर हरितालकी टिकिया रखकर तांबेकी कटोरीसे ढककर गलेतक वालू भरके चूल्हेपर चढाय मध्यमाग्नि देकर ८ पहरतक पकावे । स्वाङ्गशीतलहोनेपर धीरेसे निकालकर रखछोडे । इसमेसे ३—३ रत्ती कालीमिर्चके चूर्णकेसाथ देनेसे यह तमाम विषमज्वरोंको नष्ट करताहै ॥ १०० ॥

### १०१ तालकेश्वररसः ( अष्टाविंशः )

द्वौ भागौ तालकाद्ग्राह्यौ भागैकं सूतकस्य च ।
सूतार्धं गन्धकं ग्राह्यं यत्नतः कज्जलीं कुरु ॥
निक्षिप्य तालकं तत्र कारवल्लीरसेन तु ।
मर्दयेद्दिनपर्यन्तं नष्टपिष्टो भवेद्रसः ॥ ४१८ ॥
विलिप्य ताम्रपात्रे तु श्रावपात्रेण रोधयेत् ।
बद्ध्वासूत्रेण सम्पूर्यमङ्गुष्ठद्वयमानतः ॥ ४१९ ॥
संरोधयेद्वालुकाभि श्चुल्या उपरि निक्षिपेत् ।
पात्रोपरिक्षिपेद्धान्यं ज्वालयेदनलं हठात् ॥
व्रीहयः स्फुटिता जातास्तदा पाकं विनिर्दिशेत्
आदाय मर्दयेत्सूतं श्लक्ष्णं कज्जलसन्निभम् ॥
रक्तिकाद्वयमानन्तु फणिवल्लीदलेन तु ।
शीतिकाज्वरिणे दद्यादैकाहिकतृतीयके ॥

अनेकरूपविषमे ज्वरे दद्यादिमं रसम् ।
अनुपानाय दातव्याः शुष्कमुद्गाश्च भक्षणे ॥
दधिभक्तश्च देयं स्यात्कर्तव्यं तालके रसे ॥
र क यो, वा, ज्वरे ।

भाषा—शुद्धहरिताल २ भाग, शुद्धपारा १ भाग, शुद्धगन्धक—आधाभाग लेकर सबकी नीलवर्ण कज्जली कर जङ्गलीकरेलेके रससे एकरोज मर्दनकर तीनोकी बराबर शुद्धताबेकी कटोरीके भीतर लेपकर सुखाकर दूसरी कटोरीसे बदकर इससम्पुटपर २ अङ्गुल ऊचा सूत लपेटदे फिर ६—७ कपडमिट्टी देकर हडीके भीतर रख दोअङ्गुल ऊचेतक वालूभर खाली ढक्कन रखके चूल्हेपर चढाकर अग्निलगावे । चार पहरके बाद भीतर हडीमे धान डालदे । फूटने लगे तब आचदेना बन्दकरदे । स्वाङ्गशीतलहोनेपर निकालकर जितनी ताबेकी कटोरी भस्म होगई हो उससहित रसको बारीक घोटकर रखछोड़े । इसमेसे २ रत्ती पके पानमे देनेसे ऐकाहिक, द्व्याहिक, तृतीयक और अनेकप्रकारके विषमज्वर इससे नष्ट होतेहै । अनुपानमे सूखे मूंग खानेकोदे अथवा दही भात देव । इससे तमाम ज्वर और कुष्ठ नष्टहोतेहै ।

## १०२ तालकेश्वररसः ( कुष्ठादिः )२९

कुनटी तालकं तुत्थं स्नुहीक्षीरेण मर्दयेत् ।
कृत्वैवं चक्रिकां शुष्कां सोष्णाऽपामार्गभस्मना
खर्परेऽङ्गुलिद्घनश्च पिदध्यात्तद्यथाक्रमम् ।
चषिका परितो देया क्षारेणैव पिधापयेत् ॥
क्रमाग्निना चैकदिनं पक्त्वा शीतलमुद्धरेत् ।
शर्कराघृतसम्मिश्रं व्रीहिमात्रं प्रदापयेत् ४२६
प्रातस्सायं सेवनेन सर्ववातविकारजित् ।
वातग्रन्थौ धातुशोषे प्रसुप्ते रसवैकृते ॥
अष्टादशसु कुष्ठेषु पथ्यं शाल्योदनं हितम् ॥
र. क. यो., कुष्ठे ।

भाषा— शुद्धमैनसिल, हरिताल, तुत्थ समभाग लेकर थूहरके दूधसे एकदोरोज मर्दनकर टिकडी बनाय सुखाकर नये खपड़ेमे रख ऊपरसे ४ अङ्गुल अपामार्गकी गरमभूभल डालकर दबादे । ऊपर शरावसे ढककर गुडचूने प्रभृतिसे सन्धिबदकर टक्नेकोभी उसीभूभलसे भरदे । फिर चूल्हेपर चढाय मन्द, मध्य और खर इसक्रमसे एक अहोरात्रकी अग्नि देकर स्वाङ्गशीतलहोनेपर निकालकर रखछोड़े । इसमेसे १—१ चावल घी और मधु मिलाकर सुबहशाम देनेसे समस्त वातविकार वातग्रन्थि, धातुशोष, प्रसुप्तवात, रसविकार, अठारहकुष्ट ये सब नष्ट होतेहै । इसमे पथ्य सफेद चावल, घृत, दूध और शक्कर हितकर है ॥ १०२ ॥

## १०३ तालकेश्वररसः ( त्रिंशः )

अश्वत्थशेखरिक्षारं घटे निक्षिप्य यत्नतः ।
तन्मध्ये तालकं रुद्ध्वा पचेद्द्वादशयामकम् ॥
रसांशं दापयेद्भस्म सर्वकुष्ठनिवारणम् ।
सर्ववातप्रशमनं ग्रन्थिवातविनाशनम् ॥४२९॥
र क यो., कुष्ठे ।

भाषा—पीपल और अपामार्गकी राखमे चौगुना पानी मिलाकर रखछोडे । दोतीनरोजकेबाद इसपानीको नितारकर इसमे शुद्धहरितालको ४—५ रोज यहातक मर्दनकरे कि चमकनष्ट होजाय । इसकी टिकडी बनाय खूबकडीधूपमे सुखाकर ६—७ कपडमिट्टी दीहुई हडीमे पलाश और अपामार्गकी राख आधेतक दबादबाकर भरकर ऊपर टिकियाको रखकर दोनो राखोसे गलेतक हाडीको भरकर १२ पहरकी क्रमाग्निसे पकाकर स्वाङ्गशीतलहोनेपर निकालल । इसमेसे १ रत्तीलेकर १ रत्ती पारदभस्मके साथ मिलाकर तत्तद्रोगहरानुपानके साथ देनेसे समस्तकुष्ठ, वातविकार, ग्रन्थिवात ये सब नष्टहोतेहै ।

## १०४ तालकेश्वररसः ( एकत्रिंशः )

गर्तं कुर्यादिष्टिकायां शिलायां षोडशाङ्गुलम् ।
अष्टाङ्गुलपरीणाहं तत्र पौनर्नवं रजः ॥४३०॥
नवसारं सार्धशाणं चीनकर्पूरटङ्कणम् ।
तदूर्ध्वं सोमजमलं तन्मध्ये तालकं क्षिपेत् ॥

चतुर्विंशतिनिष्कं तदूर्द्ध्वं पौनर्नवं रजः।
शरावेण पिधायैतन्मृत्कर्पटविलेपिनम् ४३२॥
शोषयित्वा ततश्चुल्यां संस्थाप्य रवियामकम्।
वह्निं दद्यात्क्रमेणैव मन्दं मध्यं खरं क्रमात्॥
तत्सत्त्वं जायते शुभ्रमधोमध्योर्द्ध्वसंस्थितम्।
ऊर्द्ध्वाधःस्थस्य गुञ्जैका तदर्द्धा मध्यगस्य च॥
गुञ्जाद्वयं भसनश्च वातरक्तादिनाशनम् ४३४
र. का, कुष्ठे।

भाषा—ईट अथवा शिलामे १६ अङ्गुलगहरा और ८ अङ्गुल चौडा गड्ढा खोदकर उसमे पहिले सात अङ्गुलतक पुनर्नवाकी जड़का चूर्णदे उसके ऊपर ६ माशे नोसादर और ६ माशे चीनीकपूर और उसपर ६ माशे सुहागा, सुहागेपर ६ माशे सोमलदेकर एकतोले पुनर्नवाके रससे २—३ रोज पीसकर कडेधूपमे सुखाईहुई हरितालकी टिकिया रखकर सोमल, सुहागा, चीनीकपूर, नोसादर और पुनर्नवाकाचूर्ण क्रमसे देकर दवादे। फिर सवपर ढक्कन ढककर गुडचूनेसे सन्धिवन्दकर समस्तशरावपर ६—७ कपडमिट्टी देकर सुखाले। फिर चूल्हेपर रख मन्द, मध्य, और खर इसक्रमसे १२ पहर अग्निदेवे। स्वाङ्गशीतलहोनेपर धीरजसे सम्पुटको खोलकर देखे। ऊपर, वीचमे और नीचे तीनजगह औषधिके फूलमिलेंगे। इनको जुदीजुदी शीशियोमे रखछोडे। नीचे और ऊपरवाली दवाकी १ रत्तीकी मात्रादे, मध्यकी आधीरत्ती दे और जो इसमे राखहै उसकी २ रत्ती देवे। उचितानुपानके साथ देनसे यह वातरक्तको नष्टकरताहै। १०४॥

## १०५ तालकेश्वररसः (द्वात्रिंशः)

कुडवैकं तालकस्य मर्दयेत्त्रित्रिवासरम्।
द्रवै रेतै र्नवनवपलैः प्रत्येकशो वुधः॥४३५॥
सम्यक् काञ्जिकगोमूत्रशरपुङ्खास्तैरपि।
गुडकाञ्जिकतः सूर्यक्षीरैः सूर्यखराऽऽतपे ४३६
शोषयित्वा प्रकुर्वीत चतस्रस्तस्य चक्रिकाः।
हण्डिकायां पलाशस्य भस्म निक्षिप्य यत्नतः
तस्योपरि पुनर्दद्यात्प्रतिचक्रिक्रमर्कतः।
वेदपत्राणि तस्योर्द्ध्वं भस्म दद्यात्पलाशजम्॥
विमुद्रय वह्निं संदद्यात् षट्त्रिंशत्प्रहरं भिषक्।
पलाशेन्धनतः सम्यक् स्वाङ्गशीतं समुद्धरेत्॥
निर्धूमं श्वेतवर्णं स्यादस्य गुञ्जां प्रदापयेत्
श्वेतजीरकयोगेन पथ्यं खण्डेन पूपिकाम्॥
वातव्याधीन्वातरक्तं कुष्ठाऽष्टादशकं हरेत् ४४०
र. का, कुष्ठे।

भाषा—सोलह तोले शुद्धहरिताललेकर खूव वारीक कपडछानचूर्णकर काञ्जी, गोमूत्र, शरपुङ्खका काढा, गुड और काजी आकका दूध इनके ९—९ पलमे तीनतीनरोज मर्दनकर चारटिकिया वनाय कडे धूपमे सुखाकर हडीमे पलाशके फूल अथवा छालकी राख आधेतक भर चारौ टिकियोको जमाकर हरएकके ऊपर ४—४ आकके पत्ते देकर गलेतक उपरोक्त भस्म भरकर ढक्कन लगाय २—४ कपडमिट्टी देकर सुखाकर ३६ पहरकी पलाशकी लकडीकी आंचदे। स्वाङ्गशीतलहोनेपर निकाललेवे। यह अगर अग्निमे डालनेसे निर्धूम और सफेद निकलेतो १—१ रत्ती सफेदजीरेके साथ देवे। पथ्यमे खाडके मालपूए देतो समस्तवातव्याधि और १८ प्रकारके कुष्ठ इससे नष्टहोतेहै॥१०५॥

## १०६ तालकेश्वररसः (त्रयस्त्रिंशः)

रसगन्धकतालानां त्रयं खल्वे विमर्दयेत्।
कनकस्य च वीजानां रसमादाय यत्नतः॥
प्राज्ञः सम्भावयेत्तेन भावनाः सप्तविंशतिः।
तत्समं रजनीचूर्णं सर्वमेकत्र मर्दयेत्॥४४२॥
रक्तिकां तस्य चूर्णस्य पत्रे कृत्वा सुभक्षयेत्।
स्वेदश्च नाशयेच्छीघ्रं सर्वदोषसमुद्भवम्
तालकेश्वरनामाऽयं रसवैद्यैः सुपूजितः॥४४३॥
रससारसङ्ग्रहे, अतिस्वेदे।

भाषा— शुद्धपारा, गन्धक और हरिताल समभागलेकर नीलवर्ण कज्जलीकर धतूरेके वीजोके रससे २१ रोजतक घोटकर इसकी वरावर हल्दीका

चूर्ण मिलाकर १ रत्तीसे ३ रत्तीतककी गोलिया वनाकर रखछोडे। इनमेसे १—१ गोली पानके साथ खानेसे चाहेजिसतरह अधिक प्रस्वेद होताहो उसको यह नष्टकरताहै और वारीके समस्त ज्वरोको रोकता है ॥१०६ ॥

**१०७ तालकेश्वररसः ( सिद्धाद्यः ) ३४**

भल्लातकं तालकतुल्यभागं
सद्वण्डिकायन्त्रवरे निदध्यात्।
दत्त्वा शरावश्च सुसन्धिरोधं
सुपट्टिकांस्तत्र किरेत्तु मध्ये ॥४४४॥
यदा च सर्वे स्फुटिता भवेयुः
सिद्धो रसः स्यातखलु तालकेशः।
कुष्ठानि सर्वाणि निहन्ति मासा-
ज्ज्वराऽऽमयं रूपमपास्य सर्वम् ॥
भवेदपूर्वं सकलं शरीर
निरामयं कान्तिवलाद्युपेतम् ॥ ४४५ ॥
मासमात्रममुं दद्याद्देहं कुर्यान्निरामयम्।
विजित्य सकलान्रोगान् कुर्यादानन्दसंयुतम् ॥
दीर्घायुर्जायते भूमौ सज्जदेहो निराकुलः।
साधनैः सकलै र्युक्तः सर्वसौभाग्यभाजनः ॥

रसचिं., र. का., कुष्ठादौ।

टि०—रसकामधेनौ द्वितीयस्थाने " सुशुद्धतालसम वीज भल्लातकस्य च। मर्दयेदर्कदुग्धेन वासरत्रितय दृटम् " इति। द्वितीयः पाठोऽस्ति, अतोऽत्रैव भल्लातकानर्कदुग्धे प्रपिष्य रस. सम्पादनीय इति भवत्युभयोरपि समावेश.।

भाषा—शुद्धहरितालका कपड़छानचूर्णकर भिलावेके तलमे ४—५ रोज मर्दनकर टिकिया वनाय कडेधूपमे सुखाकर इससे अष्टगुणित भिलावे कूट ६—७ कपड़मिट्टी कीहुई हंडीमे आधे नीचे और आधे ऊपर देकर ढक्कन लगाय सन्धिवन्दकर चूल्हेपर चढादे। और हंडीमे ऊपरसे वानडालदे जब धानोकी खील होजाय तव आगदेना वदकरदे। स्वाङ्गशीतलहोनेपर निकालकर रखछोड़े। इसमेसे १ रत्तीसे ३ रत्तीतक तत्तद्रोगहरानुपानके साथ देनेसे १ महीनेमे कुष्ठियोके तमामचिह्नोको हटाकर अपूर्व-शरीरको प्राप्तकराताहै। औरभी रोगोमे एकमहीनेके प्रयोगसे तमामव्याधियोसे निवृत्तहोकर दीर्घायुको प्राप्तहोताहै। १०७

**१०८ तालकेश्वररसः ( पञ्चत्रिंशः )**

हेमसूतघनभानुतालकं
शिग्रुवज्रकनकाम्बुमर्दितम्।
क्षारनीरशतपाचितं कुरु
सर्वकुष्ठहरतालकेश्वरः ॥ ४४८ ॥

र टी, कुष्ठे। टि०—अयं योग एकविंशतालकेश्वरेण सम प्रतीयते पर भावनाया विशेषात्तत्र ताम्राऽभावाच्च भिन्नावेतौ योगा।

भाषा—सुवर्ण, पारा, अभ्रक, तावा और हरिताल इनकी भस्मलेकर कडवासहिजन, जङ्गलीसूरण अथवा थूहरकादूध, धतूरेकेवीज इनमे एकएकरोज-मर्दनकर यथालाभ क्षारोके पानीमे घोटकर टिकिया वनाय शरावसम्पुटमे वन्दकर लघुपुटकी आचदे। ऐसे सो आच देनेसे **तालकेश्वर** सिद्ध होगा। इसमेसे १ रत्तीसे ३ रत्तीतक उचिताऽनुपानके साथ देनेसे यह समस्तकुष्ठोको दूर करता है॥ १०८॥

**१०९ तालकेश्वररसः ( षट्त्रिंशः )**

चूर्णादिवहुधाशुद्धतालकं काञ्जिके पचेत्।
दोलायां तस्य तालस्य सत्त्वं कूप्यां समाहरेत्
तेन सत्त्वेन सम्मिश्रं पारदं तुल्यभागिकम्।
विपचेद्वालुकायन्त्रे यामान् द्वादशसङ्ख्यकान्॥
स्वाङ्गशीतं समुद्धृत्य त्रिकटुत्रिफलान्विताम्।
जातीफललवङ्गैलाचूर्णयुक्तस्य रक्तिकाम् ४५१
भक्षयेत्सर्वकुष्ठार्तो गलत्कुष्ठी विशेषतः।
केचिद्दातुं समीहन्ते पारसीकयवानिकाम् ॥

र क., गलत्कुष्ठे।

भाषा— चूनेप्रभृतिके पानीसे वहुत विशुद्ध हरितालको काजीमे दोलायन्त्रसे ४ पहर स्वेदनकर दोआतशीशीशियोमे वदकर विद्याधरयन्त्रवनावे। एकशीशीको योड़ेवाढ़मे गर्भितकर दूसरी शीशीको खाली रखकर ४ पहरकी आच देनेसे नीचेकी शीशीका हरिताल उड़कर दूसरी शीशीमे चलाजायगा।

इस हरितालके सत्त्वमे समभाग शुद्धपारा मिलाकर आक या थूहरके दूधसे मर्दनकर आतशीशीशीमे रख १२ पहरकी आचदे । स्वाङ्गशीतलहोनेपर शीशीके मुहपर लगेहुए रसको निकालकर रखछोड़े। इसमेसे एकरत्तीसे २ रत्तीतक त्रिकटु, त्रिफला, जायफल, लौंग, इलायची इनकाचूर्ण २ आनेभर मिलाकर खानेसे तमामकुष्ठ खासकर गलितकुष्ठको यह दूरकरताहै। इसयोगमे कितनोकी रायहै कि खुरासानी अजवाइनभी देना ॥ १०९ ॥

**११० तालकेश्वररसः ( सप्तत्रिंशः )**

**सम्यक्काञ्जिकदेवपुष्पकवराक्काथेतुदोलाऽभिधे**
**यन्त्रेतालकशोधनंनिगदितंतत्तालकंभावयेत् ।**
**वारान्कुञ्जरभक्षणोत्थसलिलैर्विंशन्मितानातपे,**
**बध्वागोलमथास्यपिप्पलजयाभूत्यर्धपूर्णेन्यसेत्**
**भाण्डेतत्रपुनर्विभूतिभरणंकृत्वाशरावं मुखे,**
**दत्त्वाऽग्नौविपचेद्गजाह्वयपुटेवन्यैःसहस्रोत्पलैः ।**
**एवंयामचतुष्टयेनविशदंस्याद्भस्मशुभ्रंगदे**
**योग्यंकुष्ठखुडोपदंशपवनेनाडीव्रणेशस्यते४५४**

वृ. यो त., र. त., नि. र, कुष्ठे।

भाषा—हरितालको काञ्जी, लौंगऔर त्रिफलाके क्वाथमे एकएकरोज स्वेदितकर पीपलकी छालके काढेसे धूपमे २० रोज मर्दनकर गोलाबनाय सुखाकर पीपलकी छालकी राखको ६–७ कपडमिट्टी कीहुई हडीमे आधेतक दबादबाकर भरकर ऊपर इसटिकडीकोरख फिर दबादबाकर राख गलेतक भरकर शरावसे मुंहबढकर गुडचूने प्रभृतिसे सन्धिबन्दकर २–४ कपडमिट्टी देकर सुखाकर खड्डा खोद एक हजार जङ्गली कण्डोकी आचदे । इसखड्डेको इसतरह खोदनाकि जिसमे चारपहरमे यह ठढाहोजाय । स्वाङ्गशीतलहोनेपर इसमेसे धीरजसे सफेद हरितालभस्मको निकालकर रखछोड़े । इसकी १ रत्तीसे ३ रत्तीतक तत्तद्रोगहरानुपानके साथ देनेसे कुष्ठ, वातरक्त, उपदंश, वातरोग, नाड़ीव्रण इनसबको यह नष्टकरताहै ॥ ११० ॥

**१११ तालकेश्वररसः ( अष्टात्रिंशः )**

**स्थाल्यां निधाय नटमण्डनचूर्णमस्मिन्,**
**न्युब्जीकृतं कमलभाजनमन्धयित्वा ।**
**पक्त्वा तथैव शुद्धगन्धकमर्कजीर्णे,**
**पूर्वाशतो हि रसयुग्गुरुपातकारि ॥ ४५५ ॥**

र का, यो म, कुष्ठे।यो म वातरक्तान्तकेति नाम।

भाषा—शुद्धहरितालके टुकड़ेकर ६–७ कपड़मिट्टीकीहुई हडामे रखकर ऊपरसे उसकी बराबर तांबेकी कटोरीसे ढककर सन्धिबन्दकर सकोरेपर चार अङ्गुलऊची पलाशवगैरहकी राख देकर आच लगावे । जब राखपर रक्खाहुआ धान फूटजाय तब आचदेना बदकरदे । स्वाङ्गशीतलहोनेपर धीरेसे सम्पुटको उखाडके राखको निकालकर हरिताल जितनाशुद्धगन्धक हडीमे रख ऊपर तांबेकी उस कटोरीको ढककर पूर्वकीतरह पकाके स्वाङ्गशीतल होनेपर निकालके इसकी बराबर पारद भस्म मिलाके रखछोडे । इसमेसे तत्तद्रोगहरानुपानके साथ १–१ रत्ती देवे । यह तमामकुष्ठ और सन्निपातोको नष्टकरताहै ॥ १११ ॥

**११२ तालकेश्वररसः ( ऊनचत्वारिंशः )**

**तालकं निष्कमेकन्तु त्रिगुणं लवणं तथा ।**
**भृङ्गराजरसेनैव भावनाः सप्त दापयेत् ॥४५६॥**
**दिनसप्तप्रमाणेन छायायां शोषयेत्तथा ।**
**चतुर्गुञ्जाप्रमाणेन गुटिकां कारयेत्ततः ४५७**
**तालकेश्वरनामाऽयं वातरक्ते प्रदापयेत् ।**
**सर्वकुष्ठेषु दातव्यः सप्तसप्तदिनावधि ॥४५८॥**
**विदाहेषु च सर्वेषु छागीक्षीरेण संयुतम् ।**
**शून्यञ्च मण्डलं कुष्ठं श्वेतकुष्ठं तथैव च ॥**
**अष्टादशविधं कुष्ठं नाशयेन्नाऽत्रसंशयः॥४५९॥**

र का, कुष्ठे।

भाषा—हरितालभस्म ३ माशे, सफेद सेंधानमक ९ माशे, लेकर भगरेके रससे ७ दिन खरलकर ४–४ रत्तीकी गोलियें बनाकर सातरोज छायामे सुखाकर रखछोड़े । इनमेसे १–१ गोली तत्तद्रोग-

हरानुपानके साथ देनेसे शून्य, मण्डल, श्वेत इत्यादिककुष्ठोको यह नष्टकरताहै । सत्रतरहके दाहोंमे शर्करीके दूधमे देना ॥ ११२ ॥

### ११३ तालकेश्वररसः ( राजादिः ) ४०

सुजात्यं तालमादाय निर्मलं खल्वमध्यगम् ।
कन्याद्रवेणसम्पिष्टं मर्दयेत्प्रतिवासरम् ४६०
दिनसप्तकपर्यन्तं काचकूप्यां निधापयेत् ।
वालुकायन्त्रमध्यस्थं मुखे मुद्रां प्रदापयेत्४६१
याति धूमोऽस्यनीलाभः पीतवर्णश्च सर्वथा ।
उद्घाटितं मुखं कुर्यात्पश्चाल्लोहशलाकया ४६२
क्षिप्यते तस्य तालस्य मध्ये सम्भ्राम्यते क्षणम्।
आकृष्य नीयते सार्द्रा सा शलाका विलोक्यताम्
तालं पीतं यदा किञ्चित्स्वेदरूपं जलं भवेत् ।
दिनैकमपरं स्वेदं तत्र दद्याद्दिनद्वयम्॥४६४॥
अल्परूपो यदास्वेदो दृश्यते च शलाकया ।
शीतलं क्रियते तच्च यथास्थानं भवत्यदः४६५
रूपेण खोटकाकारं तालसत्त्वं महोज्ज्वलम् ।
गुरुरूपं दृढंप्रायः करस्पर्शे ससौष्ठवम्॥४६६॥
वल्लमात्रं विचूर्ण्याऽथ दद्यात्तत्कुष्ठिनेऽन्वहम् ।
रोहीतकजटाक्वाथमनुपानश्च दीयताम् ४६७
चतुर्दशदिनस्याऽन्ते कुष्ठं शुष्यत्पदं भवेत् ।
क्षुद्बोधोजायतेऽत्यर्थं सुभगश्च भवेद्वपुः ४६८
अत्यर्थं पच्यते भुक्तमत्यर्थं सुखमाप्नुयात् ।
अरुणोदुम्बर कुष्ठमृक्षजिह्व कपालिकम् ४६९
काकणं पुण्डरीकञ्च दद्रुकुष्ठं सुदुस्तरम् ।
स्थूलाणुश्च महाकुष्ठमेककुष्ठं सुदारुणम् ४७०॥
तथा च मण्डलंहन्याद्विसर्पं परिसर्पकम् ।
सिध्मं विचर्चिकां गाढां किटिभञ्च विशेषतः
पामाञ्च रकसां वापि किलासमपि नाशयेत् ।
चित्रञ्च द्वित्रिमासेन नाशयेत्प्रसभं नृणाम् ॥
काष्ठोदुम्बरिकामूलवारि चाऽनुपिबेद्यदि ।
सवृतश्च भवेत्सर्वं सद्व्यञ्जनमुदाहृतम् ४७३
वार्ताकं राजिकाशाकमम्लं दधिसुराऽऽसवम् ।
वर्जयेत्सततं कुष्ठी मत्स्यं मांसं द्विभोजनम् ॥

र का., कुष्ठे ।

भाषा—शुद्धकियेहुए नवर्की हरितालको घीगुआरके रससे सातरोज मर्दनकर सुखाकर ६–७ कपडमिट्टीदीहुई आतशी शीशीमे रख वालुकायन्त्रमे रखकर मुहपर शिथिल डाट रखदे । जिनमेकि इसका थोडा थोडा धूआ निकलता रहे । जिसवक्त इसमेसे नीलेरङ्गका धूआ निकलकर पीलेरङ्गका निकलने लगे तब डाटको हटाकर लोहेकी गरम शलाकाको नीचे पेंदेतक पहुचाकर घुमाकर बाहर निकालकर देखे यदि वह गीली हो और हरितालका रङ्गपीला और कुछस्वेद लगाहुआहो तो डाटको वदकर २ रोज और अग्निदे फिर तीसरे रोज शलाका घुमाकर देखे, यदि बहुतही अल्पस्वेद शलाकापर नजर आवे किन्तु धूआ न निकले तब डाट बदकर कोयलोंपर रहनेदे लकडी देना वद करदे । स्वाङ्गशीतल होनेपर शीशीको फोडकर देखे तो इसमेसे झामेकी तरह वजनदार और कठिन स्पर्श तालसत्त्व निकलेगा । इसमेसे २–२ रत्ती बहुत वारीक पीसकर मधुप्रभृति कुष्ठहराऽनुपानके साथ चटाकर रोहिडेकी छालका काढा देवे, ऐसे १४ दिन करनेके वाद कुष्ठव्रण सूखने लगेंगे और भूख अत्यन्त जागृत होजायगी शरीरमेसे कुष्ठके चिह्न निकलकर खूबसूरत होजायगा । इस प्रयोगसे अरुण, औदुम्बर, ऋष्यजिह्व, कापालिक, काकणक, पुण्डरीक, दद्रु, मण्डल, विसर्प, सिध्म, विचर्चिका, किटिभ, पामा, रकसा, किलास, चित्र इन सबको यह नष्ट करताहै । इसमे पानीकी जगह कठगूलरकी जडकी छालका काढा देवे । इसमे भोजन घी, चने, गेहूंके पदार्थोंकाकरे, वैगन, राई, शाक, अम्ल, दही, मद्य, आसव, मत्स्य, मास, दो वक्तका भोजन इनको छोड देवे ॥ ११३ ॥

### ११४ तालकेश्वररसः ( एकचत्वारिंशः )

सत्वचं निम्बमज्जानं काञ्जिकेन प्रपिष्य च ।

हण्डिकायां निवेश्याऽथ तत्रशुद्धञ्च तालकम् ॥
पूर्ववच्चाऽऽरनालेन पूरयित्वा निरुध्य च ।
पूर्ववच्चतुरो यामान् वह्निं कुर्याद्भिषग्वरः ४७६
स्वाङ्गशीतं तदादाय श्वेतवर्णं तु तालकम् ।
भागानष्टारिष्टपत्राादारनालेन पेषयेत् ॥४७७॥
पूर्वपक्वस्य तालस्य भागान्द्वादश चैतयोः ।
पिण्डं विधाय तं मापपिष्टके स्थापयेत्ततः ४७८
शरावसम्पुटे तच्च पुटेद्गजपुटेन च ।
स्वाङ्गशीतं समुद्धृत्य चूर्णयेद्भिषजांवरः ४७९
मरिचाऽऽज्ययुतं दद्याद्गुञ्जामेकां भिषग्वरः ।
क्रमाद्विवर्धयेत्तावन्मापमेकं यदा पुनः ४८०
व्याप्तिस्तदा गुडं सार्द्धपलं दद्यात्प्रशान्तये ।
क्षीरौदनाशी सर्वेभ्यः कुष्ठेभ्यः परिमुच्यते ॥
र. का , कुष्ठे ।

भाषा—वच और नीमकी मज्जाको काञ्जीमे पीसकर कपडमिट्टी दीहुई हडीके वीचमे रख ऊपर शुद्ध हरिताल रखकर ऊपरसे वही बच और निम्वका कल्क देकर हंडीको काञ्जीसे भरकर मुह बदकर ४ प्रहरकी अग्नि देवे । स्वाङ्गशीतल होनेपर इसमेसे श्वेतवर्ण तालभस्म निकलेगी । इसमेसे १२ भाग और निम्वपत्र ८ भाग लेकर काञ्जीमे पीसकर टिकड़ी वनाकर सुखाकर काञ्जीमे उडदके आटेको पीसकर बाटी बनाय उसमे इस टिकियाको रख शराव सम्पुटमे बन्दकर गजपुटकी आचदे । स्वाङ्ग शीतल होनेपर निकालकर रखछोडे । इसमेसे १-१ रत्ती मरिच और घीके साथ देवे, जबतक १ मागा पूरा न हो तबतक १-१ रत्ती रोज वढावे । जब मागा पूरा होजाय तब ४-४ तोले पुराने गुडके साथदे । इसतरह एक मण्डलतक सेवन करनेसे समस्त कुष्ठोसे निवृत्त होताहै । इसमे खानेके लिए दूध भात देना ॥ ११४ ॥

११५ तालकेश्वररसः ( द्विचत्वारिंशः )

भागास्त्रयस्तालकस्य नवसारस्य च त्रयः ।
पञ्चभागप्रमाणेन मध्येऽपामार्गभस्मकम् ४८२
खर्परे चाऽनलं दद्याद्यावन्मुद्राविभेदनम् ।
मुद्राभेदे पुनश्चूर्णं दद्यान्निर्धूमतावधि ॥
स्वाङ्गशीतं समुद्धृत्य तद्भवेत्सर्वकुष्ठजित् ४८३
र. का., कुष्ठे ।

भाषा—ढाई तोले अपामार्गकीभस्म ठीकरेपर जमाकर ऊपर डेढ तोला नोसादरका वारीक चूर्ण विछाकर ३ तोले शुद्धहरितालके टुकडे विछाकर १॥ तोला नोसादरका चूर्ण फिर २॥ तोले अपामार्गकी भस्म देकर खूब दबावे और आचदे, जब दबाई हुई राख फटकर धूआ निकलने लगे उसीसमय दूसरी अपामार्गकी राखसे उसे बद करदे ऐसे जबतक मुद्राका फटना और धूँएका निकलना बद न हो तबतक ध्यान रक्खे । जब अपामार्गकी भस्म एकदम अग्निवर्ण होजाय और कहींसेभी धूआ न नजर पडे तब अग्नि लगाना बदकरके चूल्हेहीपर यन्त्रको पडा रहनेदे । स्वाङ्गशीतलहोनेपर धीरेसे राख और नोसादरको अलग निकाल केवल हरिताल भस्मको रखछोडे । इसमेसे १ रत्तीसे ३ रत्तीतक कुष्ठहरानुपानके साथ देनेसे और कुष्ठोचित पथ्य रखनेसे यह समस्त कुष्ठोको दूर करताहै ॥ ११५ ॥

११६ तालकेश्वररसः ( त्रिचत्वारिंशः )

हरितालं त्रित्रिदिनं मर्दयेत्कन्यकाद्रवे ।
कार्पासबीजतैलेच कूष्माण्डस्वरसे पुनः ४८४
काञ्जिके त्रिदिन कूप्यां रुद्ध्वा सत्त्वञ्च पातयेत् ।
त्रियाममतसीतैले श्वेतैरण्डजतैलके ॥ ४८५ ॥
पिष्ट्वासिक्त्वा च दुग्धेषु पुनः स्वेद्यं दिनत्रयम्
यामद्वादशकं कूप्यां पुनः सत्त्वञ्च पातयेत् ॥
कदलीस्वरसे भूयस्त्रिदिनं वाऽतसीभवे ।
मर्द्यं स्वेद्यं पुनस्तद्वत्कूप्यां षोडशयामकम् ॥
अग्निं दत्त्वा च तत्सत्त्वरक्तिका सर्वकुष्ठजित् ।
र का , कुष्ठे ।

भाषा—शुद्धहरितालका कपडछान चूर्णकर घीकुआरकारस, कपासके वीजोका तैल, कूष्माडस्वरस और काजी इन प्रत्येकमे ३-३ रोज मर्दनकर ६-७

कपडमिट्टी दीहुई आतशी शीशीमे रख वालुकायन्त्रमे रखकर सत्त्वपातन करे, फिर उस सत्त्वको अलसी और सफेद एरडके बीजोके तैलसे २-२ रोज मर्दनकर आक, थूहर, उदुम्बर इनके दूधोंसे तीन तीन भावनाए देकर आतशी शीशीमे रख वालुकायन्त्रमे तीन रोजकी अग्निदे। स्वाङ्गशीतल होनेपर निकालकर केलेके कंदका रस और अलसीके तैलमे मर्दनकर आतशी शीशीमे रख वालुकायन्त्रमे १६ पहरकी अग्नि देवे। स्वाङ्गशीतल होनेपर निकालकर रखछोडे। इसमेसे १-१ रत्ती तत्तद्रोगहरानुपानके साथ देनेसे यह तमाम रोग और कुष्ठोको नष्ट करताहै ॥ ११६

**११७ तालकेश्वररसः (चतुश्चत्वारिंशः)**

तालं सप्तदिनं यावदर्कक्षीरेण मर्दयेत्।
पादांशं हिङ्गुलं सूतं दत्त्वा तैले च गन्धजे ॥
त्र्यहं रसोनस्वरसे श्वेतैरण्डजतैलतः।
नवसारकसत्त्वेन षोडशांशेन मर्दयेत् ॥४८९॥
स्फटिकासोरकाभ्याञ्च कूप्यां दद्यात्क्रमाऽनलम्
यामद्वादशकं वारत्रयमेवञ्च कारयेत् ॥
रक्तिकार्धञ्च तत्सद्यं सर्वकुष्ठाऽनिलाऽपहम् ॥

र. का, कुष्ठे।

भाषा—शुद्धहरितालका बारीक चूर्णकर आकके दूधमे सात रोज मर्दनकर इससे चतुर्थांश शिंगरिफसे निकालाहुआ पारा मिलाकर गन्धकका तैल डालकर तीनरोज मर्दनकर एक कली लशुनके रस और सफेद एरण्डके बीजोका तैल इनमे तीन तीन रोज मर्दनकर इससे सोलहवा हिस्सा नोसादरके पुष्प, फिटकडी और शोरा देकर कपडमिट्टी की हुई आतशी शीशीमे रख वालुकायन्त्रमे शीशीको रख १२ पहरकी आच दे। इसतरह तीनवार करनेसे यह तालकेश्वर रस सिद्ध होगा। इसमेसे आधीरत्तीसे १ रत्तीतक कुष्ठहराऽनुपानके साथ देनेसे यह तमाम कुष्ठोको दूरकरताहै।

**११८ तालकेश्वररसः (व्रणहररसः) ४५**

शरपुङ्खां समादाय पारदं मर्दयेत्ततः।
हरितालसमं कृत्वा यावत्सप्तदिनावधि ॥ ४९१
कृते शुष्के क्षिपेत्कूप्यां दृढवस्त्रेण वेष्टयेत्।
वालुकायन्त्रके न्यस्य मुद्रां कृत्वा प्रयत्नतः ४९२
ज्वालयेदग्नियामांस्तु क्रमाद् द्वादशसङ्ख्यकान्
स्वाङ्गशीतं समुद्धृत्य पूर्ववच्च क्रियां चरेत् ४९३
एवञ्च सप्तवारांस्तु पचेत्तत्सुसमाहितः
बलिपूजां ततः कृत्वा भक्षयेद्रक्तिमात्रकम् ४९४
घृतक्षौद्रयुतञ्चैव मेकविंशतिवासरान्।
तेन भक्षितमात्रेण सर्वरोगक्षयो भवेत् ४९५॥
गुल्मोदरार्शः प्लीहाऽऽमकुष्ठव्रणभगन्दरान्।
भग्नव्रणांश्च दुःसाध्यान्वह्निदग्धव्रणानपि ॥४९६
तद्रक्तिमात्रसंयुक्तं सिक्थकेन च वेष्टयेत्।
तेनैव वेधयेत्ताम्रं गद्याणद्वयमात्रकम् ॥ ४९७॥

र. का, व्रणाधिकारे।

भाषा—शुद्धपारा और हरिताल समभाग लेकर नीलवर्ण कज्जलीकर शरपुङ्खके रससे सातरोज मर्दनकर सुखाकर ६-७ कपडमिट्टी दीहुई आतशी शीशीमे रखकर डाटबंदकर वालुकायन्त्रमे रखकर १२ पहर मन्द, मध्य और खर इसक्रमसे अग्निदेकर स्वाङ्गशीतल होनेपर निकालकर फिर शरपुङ्खके रसमे घोट पूर्ववत् आतशी शीशीमे १२ पहरकी आचदे। इस तरह सातवार आच देनेसे यह रस तैयार होगा। बलि पूजा वगैरह करके घी और मधुके साथ इसकी १-१ रत्ती २१ रोजतक खानेसे गुल्म, उदर, बवासीर, प्लीह, आम, कुष्ठ, व्रण, भगन्दर, भग्नव्रण, अग्निसेजले हुए व्रण, इनको यह नष्टकरताहै। इसकी एक रत्ती सच्चे मोमके साथ मिलाकर विशेष शोधन किये हुए १ तोले ताम्रमे गलाकर डालनेसे उसका रग बदल जाताहै ॥ ११८ ॥

**११९ तालकेश्वररसः (षट्चत्वारिंशः)**

तालं विचूर्णयेत्सूक्ष्मं मर्द्य नागार्जुनीद्रवैः।
सहदेव्यामलायाश्च मर्दयेद्दिनद्वयम् ॥४९८॥
तत्तालचक्रिकां कृत्वा छायायाञ्च विशोषयेत्।
हण्डिकायन्त्रमध्ये तु पालाशभस्मकोपरि ॥
पाच्यञ्च वालुकायन्त्रे विधिना चण्डवह्निना।

स्वाङ्गशीतं समुद्धृत्य सर्वरोगेषु योजयेत् ॥
नि. र., सर्वरोगे ।

भाषा— विशुद्धहरितालका कपडछान चूर्णकर नागार्जुनी (छोटीदूधी), महदेवी और वला, इनके अङ्गस्वरससे दोदोरोज मर्दनकर टिकडीवनाय छायामे सुखाकर कपडमिट्टी दीहुई हडीमे आधेतक पलाशकी राख भरकर टिकडीको ऊपररख दूसरीराख गलेतक भरकर दवादे । फिर ढक्कन देकर खूबकपडमिट्टीकर सुखाकर वारहपहरतक खूबकडीआचदेवे । स्वाङ्गशीतलहोनेपर निकालकर रखछोडे । इसमेसे एक रत्तीसे ३ रत्तीतक तत्तद्रोगहरानुपानके साथ देनेसे यह तमामरोगोको दूरकरताहै ॥ ११९ ॥

**१२० तालकेश्वररसः (सप्तचत्वारिंशः)**

पत्राख्यं तालकं शुद्धं कर्पकं मृतलोहकम् ।
किञ्चिद्धेम तथा रूप्यं सर्वमेकत्र रोधयेत् ॥
काचकूपीं मृदा लिप्त्वा सप्तवारान्मुहुर्मुहुः ।
तालकं काचकूप्यन्तः प्रदद्यात् प्रयत्नतः ॥५०२
वज्रमुद्रां मुखे कुर्यात्किं वा मधुरवह्निना ।
आरोप्य वालुकायन्त्रे पचेद्यामचतुष्टयम् ॥
स्वाङ्गशीतलमुद्धृत्य पूजयेच्चेष्टदेवताम् ।
तत्तद्रोगेषु दातव्यमनुपानविशेषतः ॥५०४॥
नि र, सर्वरोगे ।

भाषा—शुद्धवर्की हरिताल और लोहभस्म १–१ तोला, सुवर्ण और रजतभस्म ४–४ मासे इनको कुमारी प्रभृति मारकवर्गके रससे ४ पहर मर्दनकर कपड़मिट्टी दीहुई आतशी शीशीमे डाल मुहवन्दकर वज्रमुद्राकरदे, फिर सुखाकर बालुकायन्त्रमे रख ४ पहरकी कडी आचदे । मुख उघडा रखना होतो थोडी बाट दे और आच मन्ददेवे । स्वाङ्गशीतलहोनेपर निकालकर रखछोडे । इसमेसे १ रत्तीसे ३ रत्तीतक इष्टदेवता का पूजनकर तत्तद्रोगहरानुपानके साथ देनेसे यह तमामरोगोको नष्टकरताहै॥ १२० ॥

**१२१ तालकेश्वररसः (अष्टचत्वारिंशः)**

एको विभागः शुचितालचूर्णा-
द्भागद्वयं सुन्दरधूमसारम् ।
मध्ये विमुञ्चेच्छुभतालचूर्ण-
मधस्तदूर्ध्वं खलुधूमसारम् ॥ ५०५ ॥
प्रपूरयेद्भूतिकयाऽथभाण्डे
शरावेणैव ततो निरुन्ध्यात् ।
निधाय चुल्यां ज्वलनं ततश्च
दद्याद्द्विपग्यामचतुष्टयञ्च ॥
एतैः प्रकारैर्मृतिमेति तालं
निर्धूममेवं किल शुक्लवर्णम् ॥ ५०६ ॥
नि र., कुष्ठे ।

भाषा— एकभाग गृहधूमके चूर्णको विछाय ऊपर शुद्धहरितालएकभागरख ऊपरसे उसकी वरावर गृहधूमसे दवादवाकर ऊपरसे पलाशप्रभृतिकी राख दवादवाकर हडीमे गलेतक भरदे । और ऊपर ढक्कनसे बंदकर चूल्हेपर रख चार पहरकी कडी आचदे । स्वाङ्गशीतलहोनेपर निकालकर रखछोडे यह शुक्लवर्ण भस्म निकलेगी । इसकी १ रत्तीसे २ रत्तीतक मात्रा तत्तद्रोगहरानुपानके साथ देनेसे समस्त रोगोको नष्टकरताहै ॥ १२१ ॥

**१२२ तालकेश्वररसः ( ऊनपञ्चाशः )**

तालकं मर्दयेत्सम्यक् ताम्बूलीपर्णवारिणा ।
त्रिदिनं मस्तुना मर्द्यं त्रिदिनं पयसा रवेः ॥
तद्गोलं भाण्डमध्यस्थं किंशुकक्षारसंयुतम् ।
त्रिदिनं पाचयेत्सम्यङ् मन्दमध्यहठाऽग्निना ॥
तालभस्म समाऽऽकृष्य तण्डुलद्वयमात्रकम् ।
आकल्लं जातिकापत्रं लवङ्गं जातिकाफलम् ॥
संयोज्य सर्पिषा जग्ध्वा सर्ववातकुलान्तकः ।
वातरक्तं तथा कुष्ठं ग्रहणीञ्च भगन्दरम् ॥
सर्वव्रणान्निहन्त्याशु नाम्ना तालेश्वरो रसः ॥
बृ यो त, नि र, कुष्ठे ।

टि०—निघण्टुरत्नाकरे कन्याकूष्माण्डमस्त्वर्कपयोभिर्भावना प्रदत्ता, अत्र कन्याकूष्माण्डाभ्यामधिका भावना प्रदाय रसोत्पादने भवति द्वयोरप्येकत्राऽवरोधोऽतो न रसान्तरताऽस्ति ।

भाषा—शुद्धहरितालको पान, घीकुंआर, कोहड़ा

दहीचातोड, और आकका दूध इनप्रत्येकमे २–२ रोज मर्दनकर टिकडी बनाय सुखाकर जिस हडीमे २ सेर पक्की राख आवे उसमे पलाशके फूलोकी राख आधेतक दबादबाकर भरकर ऊपर इस टिकडी को रख ऊपर दूसरी राख गलेतकभर ढक्कन लगाकर ३–४ कपडमिट्टी देकर सुखाकर चूल्हेपर रख ३ रोजकी मन्द, मध्य और खर अग्नि देकर स्वाङ्गशीतल होनेपर निकालकर रख छोडना। इसमेसे २ रत्तीकी मात्रा अकलकरा, जावित्री, लौंग, जायफल, समभागका, चूर्ण दो आनेभरके साथ मिलाकर घीकेसाथ देनेसे समस्त वातरोग, वातरक्त, कुष्ठ, ग्रहणी, भगन्दर और समस्तव्रण इनसबको यह नष्ट करता है॥

**१२३ तालकेश्वररसः ( पञ्चाशः )**

**अपामार्गस्य भूतिं तु घटे निःक्षिप्य यत्नतः।**
**तन्मध्ये तालकं क्षिप्त्वा पचेद् द्वादश यामकम्**
**धवलं जायते भस्म सर्वकुष्ठनिवारणम्।**
**सर्ववातप्रशमनं सर्वरोगनिवारणम्॥ ५१२॥**

नि. र, कुष्ठे।

भाषा—विशुद्ध हरितालक चूर्णको अपामार्गकी राखके पानीसे २–३ रोज घोटकर टिकड़ी बनाय सुखाकर कपडमिट्टीकीहुई हडीमे अपामार्गकी राखके बीचमे दबाकर १२ पहरकी क्रमाग्नि देनेसे सफेद भस्म होगी। इसमेसे १ रत्तीसे ३ रत्तीतक औचिती देखकर समयोचिताऽनुपानके साथ देनेसे यह समस्त रोगोको दूरकरता है॥ १२३॥

**१२४ तालकेश्वररसः ( एकपञ्चाशः )**

विमलपत्रकतालकखण्डकं
कृतमतीवसुवस्त्रनिवेशितम्।
घृतकुमारिरसाञ्चितकुम्भके
स्थितरसे स्थिरदोलकयाशुभे ५१३
प्रहरयुग्ममितं हुतवाहिनी
स्वतनुशैत्यमुपागतमुद्धरेत्।
महिषमूत्रगतं सुकुमारिका-
सघनचूर्णरसे शरपुङ्खजे॥ ५१४॥

सुजलनिम्बुसुपक्वरसेपुन-
स्तुदढकोकिलपक्वरसे ततः।
इति विधानविशोधितमालकं
भवति शुद्धतमं शुभकार्यकृत्॥५१५॥
कूष्माण्डतोयेन दिनं विमर्द्य
निम्बूरसे गोभिरसे तथैव।
छिक्काऽहिवल्ल्युत्थकुलत्थतोयै-
र्धत्तूरजैश्चार्द्रकभृङ्गराजैः॥ ५१६॥
नागार्जुनीजैः सहदेविकाजैः
सुब्रह्मदण्डीन्द्रयवैः पलाशैः।
एरण्डमूलैर्लशुनैः पलाण्डुभिः
सुवर्णवल्लीरसवायसीभवैः॥ ५१७॥
गोपालिकावज्रिपयोर्कदुग्धैः
त्रिःसप्तघस्रांश्च विघृष्य खल्वे।
पृथक्पृथङ् मासचतुर्दशान्ते
चक्राऽऽकृतिं वर्तुलरोटिकाभम्॥५१८
अश्वत्थभूत्या मृदुहण्डिकाया-
मधोर्ध्वमध्यस्थिततालकञ्च।
सुपूर्णपात्रं दृढभस्मसंस्थं
मृत्कर्पटैस्तस्य मुखं विमुद्रय॥५१९॥
दद्याच्च चुल्योपरि रक्षणीय-
मग्निं क्रमेणाऽपि दिनानि चाऽष्टौ।
शिवस्यपूजां द्विजभोजनञ्च
निष्कामयेद्युक्तियुतः सुतालम् ५२०॥
कुन्देन्दुशङ्खादिसमानवर्ण
तालं भवेत्सर्वमनोज्ञमेतत्।
सुवर्णरौप्यादिकरण्डमध्ये
रक्षेत्ततस्तालकभस्म युक्त्या ५२१॥
मात्रा ततस्तण्डुलकप्रमाणा
रोगानुसारेण नियोजनीया।
द्विकालपथ्यं लवणाऽम्लतीक्ष्ण-
वर्ज्जं ततो वातलतैलपक्वम्॥ ५२२॥
त्रिः सप्तवारानथ मण्डलं वा
गुणैर्युतं तत्सुबुधै र्निषेव्यम्।

कुष्ठानि चाऽष्टादश वातरक्तं
　ससन्निपातश्च भगन्दराणि ॥ ५२३ ॥
अपस्मृतिं वातकृताश्च सर्वा
　फिरङ्गरोगादिबृहत्पदानि ।
सर्वोपदंशप्रभवांश्च शोफान्
　सूतेर्गदोच्छ्वासमनेकवातम् ॥ ५२४ ॥
कासादिदुष्टानपि पीनसार्शः
　स्नाय्वामयान्वा विविधप्रकारान् ।
मेदोऽर्बुदं गृध्रसिगण्डमालाः
　कटिग्रहं दुस्तरमग्निमान्द्यम् ॥
निहन्ति कृच्छ्रादिकमेहजालं
　शोपांश्चसर्वान्क्षयराजयक्ष्म ॥ ५२५ ॥

नि. र, कुष्ठादौ ।

**भाषा**—अत्यन्तविशुद्ध हरितालके छोटे २ टुकडेकर पोटलीवनाय घीकुंआरके रससे भरेहुए घडेमे लटकाके दोपहरतक स्वेदनकरे । ठढाहोनेपर भैसकामूत्र, घीकुआर, चूनेकापानी, शरपुङ्खका स्वरस, पकेहुएनीबूकारस, पकेहुए तालमखानेके पत्रोकारस, इनप्रत्येकमे दोदोपहर स्वेदनकरनेसे यह अत्यन्तविशुद्धहोकर अच्छे कार्यकरनेके योग्य होजाती है । फिर इसको सफेदकोहड़ा, नीबूका रस, वनगोभी इनके रसोमे १—१ रोज़ मर्दनकर सुखाकर पान, नकछिकनी, कुलथी, धतूरा, अदरख, भंगरा, छोटीदूधी, सहदेवी, ब्रह्मदण्डी, इन्द्रजव, पलाश, एरण्डमूल, लशुन, प्याज, आकाशवेल, तुलसी, मकोय, अनन्तमूल, इनप्रत्येककारस, थूहर और आकका दूध, इनप्रत्येकमे इक्कीस २१ रोज़तक मर्दनकरे । चौदह महीनेके बाद इसकी गोलटिकिया वनाकर अच्छीतरह सुखाकर पलाशकी छालकी राखको अच्छीतरहसे छानकर ६—७ कपडमिट्टी दीहुई मजवूत हडीमे आवेतक दबादबाकर भरके ऊपर इस टिकियाको रख ऊपरसे दूसरीराख गलेतक भरकर दबाकर मुहपर ढक्कनदेकर गुडचूनेसे मुह बदकर ६—७ कपडमिट्टी देकर सुखाकर चूल्हेपर रख आठदिनतक क्रमसे अग्निदेकर स्वाङ्गशीतल होनेपर निकालकर रखछोडे यह एकदम कुन्दकेफूल अथवा शङ्खके समान सफेदभस्म निकलेगी इसको सुवर्ण अथवा चादीकी डब्बीमे रक्खे इसमेसे १—१ चावलभर तत्तद्रोगहराऽनुपानकेसाथ सुबहशाम दोनोवक्त देनेसे एकमण्डलमे १८ प्रकारके कुष्ठ, वातरक्त, सन्निपात, भगन्दर, अपस्मार, तमाम वातव्याधि, उपदंशके तमामविकार, शोथ, प्रसूतिरोग, श्वास, कास, दुष्टपीनस, बवासीर स्नायुरोग, मेदोवृद्धि, अर्बुद, गृध्रसी, गण्डमाला, कटिग्रह, मन्दाग्नि, मूत्रकृच्छ्र, प्रमेह, शोष, राजयक्ष्म, इत्यादिको यह नष्टकरताहै ॥ १२४ ॥

### १२५ तालकेश्वररसः ( द्विपञ्चाशः )

समतालां शिलां पिष्ट्वा देवदाल्या द्रवै र्दिनम् ।
द्रावैरीश्वरलिङ्ग्याश्च दिनमेकं विमर्दयेत्५२६॥
नागं वङ्गं रसं तुल्यं चूर्णितं पलपञ्चकम् ।
पूर्वकल्केनसंयुक्तं समालोड्य घृते पुटेत्॥५२७
एवं पुनःपुनःपाच्यं पूर्वकल्केन संयुतम् ।
भवेत्षष्टिपुटैः सिद्धं वङ्गं स्तम्भकरं परम् ॥
शतभागेन दातव्यं वेधं तारे करोत्ययम् ५२८

नि र. कुष्ठे ।

**भाषा**—शुद्धमैनासिल और हरिताल १—१ पलके बारीक चूर्णको वंदाल और शिवलिङ्गीके स्वरससे १—१ रोजमर्दनकर शुद्धनाग और वङ्ग एकएक पलको गलाकर नीचे उतारकर १ तोले शुद्धपारेको मिलाकर पूर्वकल्कसे सबको मिलाकर एकरोज घोटकर गोलावनाय सुखाकर कपडमिट्टी दियेहुए शरावमे घीकेबीच इसटिकडीको रखकर पाचसेर जङ्गली कडोकी आंचदे । स्वाङ्गशीतल होनेपर निकालकर पहिलेकी तरह मैनासिल और हरितालके कल्कमे घोटकर पुटदेवे । ऐसे ६४ पुट देनेसे यह तालकेश्वर सिद्धहोगा । इसका सोतोले वङ्गको गलाकर एकतोला देनेसे उसका पानी सूखेगा । इसीतरह चादीको गलाकर शतांश डालनेसे उसके रगको बदलेगा । इसकी ३—३ रत्ती तत्तद्रोगहरानुपानके

साथ देनेसे यह तमामव्याधियोंको दूरकरताहै और क्षय और शोष इनको नाश करताहै । १२५

### १२६ तालकेश्वररसः ( त्रिपञ्चाशः )

पलैकं तालकं शुद्धं तत्समं टङ्कणं भवेत् ।
मर्दयेन्मेपिकाक्षीरैः कूष्माण्डद्रवतः पुनः ५२९
कन्यानिम्बुकनीरेण वज्रार्कपयसा तथा ।
धातारितिलसंयुक्तं मर्दयेत्सकृदेव तु ॥ ५३०
वटकान्कारयेत्पश्चान्मध्वाज्येन समन्वितान् ।
काचकूप्यांविनिःक्षिप्यलेपयेन्मृत्स्नकर्पटैः ५३१
वालुकायन्त्रगं कुर्यात्पचेद्दिनचतुष्टयम् ।
सत्त्वंकुलिशसङ्काशमूर्ध्वलग्नंसमुद्धरेत् ॥ ५३२ ॥
तत्तद्रोगहरै र्दत्तं तत्तद्रोगविनाशनम् ।
खदिरादिकषायेण दत्तंकुष्ठान्यपोहति ॥ ५३३
नि. र. कुष्ठे ।

भाषा—शुद्धहरिताल और सुहागा १–१ पलके बारीक चूर्णमे भेड़कादूध, कोहड़ा, घीकुआर, नींबू इनकेरस, थूहर और आकका दूध इनप्रत्येकके १–१ रोज मर्दनकर सुखाकर बहुतथोड़ा एरण्डका तैलदेकर १–२ बार घोटकर इसकी बेरबराबर गोलियें बनाकर ६–७ कपड़मिट्टी दीहुई आतशी शीशीमे डालकर ऊपरसे दवाकी बराबर घी और मधु डालकर मुहबंदकर ६–७ कपडमिट्टी देकर सुखाकर वालुकायन्त्रमे मन्द, मध्य और खर इनक्रमसे ४ रोजकी अग्निदे । स्वाङ्गशीतल होनेपर शीशीको फोड़कर हीरेकीतरह चमकताहुआ सत्त्व निकाललें। इसमेसे १–१ रत्ती तत्तद्रोगहरानुपानकेसाथ देनेसे यह तमामरोगोको दूरकरताहै । खदिरादि गणक्वाथकेसाथ देनेसे तमाम कुष्टोको नष्टकरताहै। खदिरादिगण नीचे प्रमाणे समझना। खैरसार, अमिलतासकागूदा, त्रिकटु, निशोत, चित्रक, दन्ती,पटोल, त्रिफला, नीम, हल्दी, वाकुची, कुटकी, अतीस, पाठा, त्रायमाण, जवासा, कूठ, वरजकेबीज, अनन्तमूल, सरिवन, इन्द्रजव, भिलावेकीमज्जा, विडङ्ग और गूगल यह खदिरादिगण है ॥ १२६ ॥

### १२७ तालकेश्वररसः (चतुःपञ्चाशः)

तालं रसं तुवरिकां नगनेन्द्रनाग-
भार्गाविशुद्धबहुनागरसे विमर्द्य ।
दत्त्वा शरावयुगले प्रविधाय मुद्रां
दद्याद्गजाख्यपुटमस्य धरेत्सुभस्म ॥
दृष्ट्वाऽऽकृतिं प्रकृतिमप्यनिलामयस्य
दृष्ट्वा पुनश्च बहुधा बहुधा विचार्य ।
दद्याच्च तण्डुलमितां [illegible]मात्रां
विश्वामयावनिवर्गादिमपि [illegible] ॥
[illegible]

भाषा—[illegible] भाग, [illegible] भाग, फिटकरी ५ भाग, इन सीनोंको [illegible] नवेकर पुनर्नवा[illegible] ३–४ रोज [illegible] टिकरी बनाय सुखाकर [illegible] घरकर ६–७ कपड़मिट्टी देकर सुखाकर [illegible] । [illegible] होनेपर [illegible] । इसमेसे १–१ चावल भर मात्रा [illegible] साथ देनेसे यह वातरक्तादि तमाम व्याधियोंको दूर करताहै ॥ १२७ ॥

### १२८ तालकेश्वररसः ( पञ्चपञ्चाशः )

शुद्धं पत्राख्यतालंद्विपलपरिमितं मृत्रदुग्धैर्दिनैकं
सम्मर्द्यस्वल्पमध्येदृढतरगुटिकां
भस्मभूपेकृताञ्च
कृत्वा भस्माविलैस्त्रिःपरिमितवसनै-
र्लेपितां ताञ्च मूषां,
स्वच्छेमृत्स्नपर्परेऽश्वत्थजभसितयुग-
प्रस्थमात्रं निधेयम् ॥ ५३६ ॥
तस्मिन् मूषाञ्च धृत्वा तदुपरि भसितं
प्रस्थयुग्मं दृढञ्च ,
चुल्ल्यामारोप्य पश्चाद्वटुकभैरवतीन्
पूजयेद्योगसिद्ध्यै ।
कुर्यादश्वत्थकाष्ठैर्विधिवदथकृशा-
नुस्त्रियामञ्च पश्चा-,
च्छुद्धोऽभूत्तालकेशोहिमकरधवलः
सर्वरोगेषु योज्यः ॥ ५३७ ॥

गुञ्जैकं वाऽर्धगुञ्जं निखिलगदहरेणानुपानेन दद्यात्,
कुष्ठंमेहोपदंशान्पवनकसनकंरक्तपित्तंखुडञ्च ।
पाण्डुं शोफंज्वरादीन्व्रणमखिलमजीर्णंनिहन्ति क्रमेण,
क्षाराम्लंवातवर्ज्यंवलिपलितविहीनोभवेत्सेव्यमानः ॥ ५३८ ॥

बृ. यो. त, सर्वरोगे ।

**भाषा**—शुद्धवर्कीहरितालके २ पल चूर्णको आकके दूधमे एकरोज मर्दनकर टिकड़ी बनाय खूब अच्छी तरह सुखाकर पीपलकी छालकी भस्मको आकके दूधमे घोटकर इसकी मूषाबनाय सुखाकर इस टिकडीको रख पीपलकी राखमे कपड़ासानकर इस मूषापर लपेटकर सुखावे, इसतरह तीन कपडे लपेटकर मिट्टीकी मजवूत कडाहीमे एकसेर पीपलकी राखभरकर ऊपर इसगोलेको रख दूमरी सेरभरराखसे दवाकर चूल्हेपर चढावे फिर क्षेत्रपाल और वटुकप्रभृतिकी पूजाकर पीपलकी लकड़ीकी ३ पहर आचदे । स्वाङ्गशीतल होनेपर निकालकर रखछोडे । इसमेसे एक अथवा आधे चावलभर तत्तद्रोगहरानुपानके साथ देनेसे कुष्ट, प्रमेह, उपदश, वातविकार, कास, श्वास, रक्तपित्त, वातरक्त, पाण्डु, शोथ, ज्वर, व्रण, अजीर्ण इनसवको यह नष्टकरताहै, क्षार, अम्ल और वातल पदार्थका परित्याग करे । अधिक दिन सेवन करनेसे वलीपलित रहित होजाताहै ॥

### १२९ तालकेश्वररसः (षट्पञ्चाशः)

सूतमेकं द्वयं तालं विशुद्धं गन्धकत्रयम् ।
कारवल्लीरसेनैव मर्दयेद्दिवसत्रयम् ॥ ५३९ ॥
निष्कषष्टिमिते पात्रे ताम्रे दत्त्वा यथोचितम् ।
वालुकायन्त्रतः पक्त्वा तद्भस्मवलिताल्कम् ॥
समं त्रयं त्रिभिस्तुल्यं दरदं गरलं पृथक् ।
रक्षःकन्दरसैः सम्यङ् मर्दयेत्सूक्ष्मकज्जलीम् ॥
अर्धगुञ्जामितं सेव्यं नागवल्यामरीचकैः ।
स्वेदमुख्यं त्रिरात्रन्तु विषमैकाहिकं ज्वरम् ॥
सन्निपातमभिन्यासं तरुणं नाशयेज्ज्वरम् ।
तालकेश्वरनामाऽयं शङ्करेण विनिर्मितः ५४३

वा., सन्निपाते ।

**भाषा**—शुद्धपारा १ भाग, शुद्धहरिताल २ भाग, शुद्धगन्धक ३ भाग लेकर जङ्गलीकरेलेके रससे तीनरोज मर्दनकर १५ तोले तांवेके सम्पुटमे वदकर ३-४ कपड़मिट्टीकर ६-७ कपडमिट्टीकीहुई हडीमे रखकर एक सकोरेसे ढककर गुड़चूनेसे सन्धि वदकर इसपर वालुभर ४ पहरकी अग्निदेवे । स्वाङ्गशीतल होनेपर निकालकर सब कपड़मिट्टी छुड़ाकर उसकी वरावर शुद्धशिंगरिफ और वछनाग मिलाकर रक्ष.कद ( अभावमे जगलीसूरण ) के रससे २-३ रोज मर्दनकर रखछोडे । इसमेसे आधी आधी रत्ती पान और कालीमिरचके साथ देनेसे अत्यन्त पसीना, विषम और ऐकाहिक ज्वर, सन्निपात, अभिन्यास, तरुणज्वर इनसवको तीनरोजमे यह नष्टकरताहै यह शकरका कहा हुआहै ॥ १२९ ॥

### १३० तालकेश्वररसः ( सप्तपञ्चाशः )

जातीसौभाग्यतालानां समा भागाः पृथक्पृथक्
युक्त्या सर्वं विमर्द्याऽथ शिवास्वरसभावितम् ॥
तालकेश्वरनामाऽयं शीघ्रप्रत्ययकारकः ।
श्रेष्ठः कुष्ठहरः प्रोक्तस्त्रिगुञ्जो रुचिवर्धनः ॥

र र. कौ, रसायनस., कुष्ठे ।

**भाषा**—जावित्री, भुनासुहागा, हरितालभस्म ये सब समभाग लेकर हर्रेके काथसे १-२ रोज मर्दनकर ३-३ रत्तीकी गोलिये बनाकर रखछोड़े । इनमेसे १—१ गोली कुष्टहरानुपानके साथ देनेसे यह समस्तकुष्ठोको दूरकर रुचिको वढाताहै ॥ १३० ॥

### १३१ तालकेश्वररसः ( अष्टपञ्चाशः )

तालकं त्रिदिनं स्वेद्यं कूष्माण्डसलिले शुभम् ।
स्वाङ्गशीतलमुद्धृत्य खल्वेक्षिप्त्वा विचूर्णयेत् ॥
गैरिकं तत्समं मर्द्य बाणपुङ्खरसेनवै ।
सप्तधाभावयेदेवं विशोष्यरविरश्मिभिः ५४७
चूर्णितं वल्लमानं वै मरिचञ्च चतुर्गुणम् ।

सर्पिषा द्विगुणेनैव माक्षिकेण समेनच ॥
सर्वकुष्ठविनाशाय तालकं विनियोजयेत् ५४८॥

र र कौ, कुष्ठे।

भाषा—शुद्धहरितालको कूष्माण्डके रससे ३ रोज स्वेदनकर माणिक्यरस बनाकर इसकी बराबर स्वर्णगेरू मिलाकर शरपुङ्खके रससे धूपमे सातभावनाएं देकर तीन तीन रत्तीकी गोलिये बनाकर रखछोड़े। इसमेसे १ गोली लेकर १२ रत्ती मरिचके चूर्ण तथा घी और मधु २४–२४ रत्तीके साथ मिलाकर खानेसे समस्त कुष्ठ दूरहोतेहै ॥ १३१ ॥

## १३२ तालकेश्वररसः ( एकोनषष्टितमः )

तालसत्त्वचतुर्थांशं सूतं कृत्वा च कज्जलीम्।
सोमराजीकषायेण मर्दयित्वा पुनः पुनः ५४९
अधोभूधरगं पाच्यं काचकूप्यां दिनत्रयम्।
तालेन सदृशं किञ्चिदौषधं कुष्ठरोगिणाम् ॥
नाऽस्तिवातविकारघ्नं ग्रन्थिशोथनिवारणम्५५०

र चिं, कुष्ठे।

भाषा—शुद्धहरितालके सत्त्व अथवा रसमाणिक्यसे चतुर्थांश पारालेकर नीलवर्ण कज्जलीबनाय बाकुचीके क्वाथसे सातरोज मर्दनकर ६–७ कपड़मिट्टी दीहुई आतशी शीशीमे बन्दकर भूधरयन्त्रमे तीन दिनकी आचदेवे। स्वाङ्गशीतल होनेपर निकालकर रखछोड़े। इसमेसे १–१ रत्ती लेकर तत्तद्रोगहराऽनुपानके साथ देनेसे यह तमामरोगोको दूरकरताहै१३२

## १३३ तालकेश्वररसः ( षष्टितमः )

तथा सिद्धेन तालेन गन्धतुल्येन मेलयेत्।
द्वयोस्तुल्यं जीर्णताम्रं वालुकायन्त्रगं पचेत् ॥
अयं तालेश्वरो नाम रसः परमदुर्लभः।
हन्यात्कुष्ठानि सर्वाणि वातरक्तमथाऽपि च ॥
शूलमष्टविधं श्वित्रं रसस्तालेश्वरो महान् ५५२

र स, ध., र. च., वातरक्ते।

भाषा—हरितालभस्म और शुद्धगन्धक १–१ भाग, ताम्रभस्म २ भाग, इनसबको बाकुचीप्रभृति कुष्ठघ्न औषधोके क्वाथसे २–३ रोज मर्दनकर सुखाकर ६–७ कपड़मिट्टी दीहुई आतशी शीशीमे रख वालुकायन्त्रमे मुँह बन्दकरके तीनरोजकी आचदे स्वाङ्गशीतल होनेपर निकालकर रखछोड़े। इसमेसे १ रत्तीसे ३ रत्तीतक तत्तद्रोगहराऽनुपानके साथ देनेसे यह समस्तकुष्ठ, वातरक्त आठप्रकारका शूल और श्वित्र इन सबको नष्टकरताहै ॥ १३३ ॥

## १३४ तालकेश्वररसः ६१

अविमूत्रेण संस्वेद्य निरालम्बश्च तालकम्।
अतिचूर्णं प्रकर्तव्यं मृदुलं च भवेद्यदा ॥ ५५३
पश्चान्महति खल्वे तत्क्षिप्त्वा मर्द्यं सुवर्णजे।
रसे कूष्माण्डजेवापिगोजिह्वारसमर्दितम् ॥५५४
दिनद्वयं द्वयं गाढं प्रत्येकेन विमर्दयेत्।
अर्कदुग्धेन तत्तालं वज्रीदुग्धेन मर्द्यते ॥ ५५५
वाकुच्या गुञ्जिकायाश्च भल्लातानां तथैव च।
एषां तैलेन कर्तव्यं मर्दनं तालके भृशम् ॥५५६
दिनपञ्चाऽवधिर्यावत्तैस्तैलैरेव मर्दयेत्।
आरोप्य काचकुम्भेऽमुं वह्निः स्यात्पञ्चयामकम्
उत्तार्य च पुनः साक तेन तैलेन मर्द्यते।
वङ्गस्य खोटिकाकारं तले तस्य भविष्यति ॥
कूप्याश्च दृश्यते रूपं रौप्यस्येव न संशयः।
अधस्तात्तालजं सत्त्वं रसभस्म समं च यत् ॥
तद्द्विगुञ्जामितं देयं गलत्कुष्ठनिवृत्तये।
काकोदुम्बरिकामूलवारि श्वित्रेऽनुपाययेत् ५६०
वने तु विटपाकारं दृश्यते वनदण्डकम्।
वनदण्डिसमं पत्रैः किञ्चिद्दार्घश्च तद्भवेत् ॥
ग्राह्यं तन्मूलजं चूर्णं वटिकाः कोलसम्मिताः।
प्रत्यहं दीयते चैका क्षणं स्थित्वा विरेचयेत् ॥
अतीव रेचयत्येषा कुष्ठनाशे महौषधम्।
एकस्मात्सप्तकादूर्ध्वं गलत्कुष्ठं विशोषयेत् ५६३
कृमिलं घोररूपश्च दुर्निरीक्ष्यश्च यद्भवेत्।
अष्टादशसु कुष्ठेषु यदसाध्यं भिषग्वरैः ॥
योगोऽयं नाशयत्येव रसः कुष्ठेभकेसरी ५६४

रसचि., कुष्ठे।

भाषा—हरितालके छोटे छोटे टुकडेकर पोटली

वनाय भेडके मूत्रमे ४ पहर स्वेदनकर सुखाकर अत्यन्तबारीक चूर्णकरले। फिर काला धतूरा, सफेद कोहडा, जङ्गलीगोभी, आक और थूहरकादूध इन प्रत्येककेरसोसे २—२ रोज मर्दनकर सुखाकर बाकुची, गुञ्जा और भिलावेके तैलोमे ५—५ रोज मर्दनकर कपडमिट्टी दीहुई आतशी शीशीमे डालकर वालुकायन्त्रमे पाचपहरकी आचदे। स्वाङ्गशीतल होनेपर निकालकर फिर इन्ही तैलोमे ५—५ रोज मर्दनकर आतशीशीशीमे रख ५ पहरकी अग्निदे। स्वाङ्गशीतल होनेपर शीशीको फोडकर हरितालभस्मको निकालले। यह वङ्गके थक्के जैसी निकलेगी। इसमे समभाग पारदभस्म मिलाकर रखछोडे। इसमेसे २—२ रत्ती कुष्ठहराऽनुपानके साथ देनेसे समस्तकुष्ठ दूर होतेहै। श्वित्रमे कठगूलरकी जडका रस १ तोला अनुपानमे देना चाहिये। गलत्कुष्ठादिकोमे कोकणप्रभृति समुद्रके किनारेके प्रदेशोमे श्योनाकके झाडकीतरह एक लालडंडा जिमीनसे निकलताहै। उसके पत्ते एकान्तरितहोतेहैं वह भारी झाड़ नहीं होता कुछही लम्बा होकर गरमीके महीनोमे सूखजाताहै। और बरसातमे फिर जमजाताहै। जमतेसमय लालरंगका रहताहै। जड बहुतकोमल कद और मूलके मध्यवर्ती होती है। इसको पीसकर ६—६ मासेकी गोलिये बनाकर छायाशुष्ककर रखछोडे। इसमेसे दवा देनेके बाद १—१ गोली पानीके साथ दे, यह थोडीही देरमे रेचनकरेगी। कुष्ठके लिये यह अत्यन्त ही उपकारक वस्तुहै। एकसप्ताहतक लेनेसे गलत्कुष्ट जिसमे कि कृमिपडकर भयकररूप होगयाहो सूखने लगताहै। इसतरह १८ प्रकारके कुष्ठोमे देनेसे यह सबको नष्टकरसकताहै ॥ १३४ ॥

## १३५ तालकेश्वररसः ( द्विषष्टितमः )

तालकं शोधयेत्पश्चान्मूत्रे पोडशभागिके।
गवां निक्षिप्य संशुष्कं यावद्भवति तालकम् ॥
तावत्प्रज्वालयेदग्निं तालकं शुध्यते ततः।
शुद्धं तन्निक्षिपेत्सूते पक्वजम्बीरवारिणा ॥
मृद्गीयात्त्रिदिनं पिष्टं यावद्भवति कृत्स्नशः
गृहकन्यारसेनाऽथ त्रिवारं भावयेद्रसम् ५६७
मार्कवस्वरसेनाऽपि वारमेकं विभावयेत्।
वज्रकन्दरसेनैकां भावनां रचयेत्पुनः ॥५६८॥
रसो निष्पद्यते तस्य प्रयोगमभिदध्महे।
आर्द्रकस्वरसोपेतं त्रिवेलं प्रतिपादयेत् ॥५६९॥
गोक्षीरं शर्करायुक्तं स्तम्भनार्थं प्रकल्पयेत्।
कुष्ठं मण्डलकं हन्ति सुप्तवातं विशेषतः ५७०
शर्करामधुना योगे मण्डलादेव निर्हरेत्।
त्रिफलाक्वाथयोगेन कृष्णमण्डलनाशनः ५७१
गुडार्द्रकप्रयोगेण गजचर्म विलीयते।
तालकेश इति प्रोक्तः सर्वकुष्ठनिबर्हणः ५७२

र क यो कुष्ठे।

**भाषा**—शुद्धवर्की हरितालके छोटेछोटे टुकडेकर १६ गुने गोमूत्रमे रखकर पकावे। जबगोमूत्र जलजाय और हरिताल गोमूत्ररहित होजाय तब उसकी बराबर शुद्धपारा डालकर नीलवर्ण कज्जलीकर परिपक्व जभीरीके रससे तीनरोज मर्दनकर सुखाकर घीकुंआरके रससे ३, भगरेके रससे १, वज्रकन्द ( मानकद अथवा जङ्गलीसूरण ) के रससे १ भावनादेकर ३—३ रत्तीकी गोलिये बनाकर रखछोडे इनमेसे १—१ गोली तीनो समय शक्करमिले हुए गायके दूधके साथ देनेसे कुष्ठ बढनेसे तत्काल रुक जातेहै। शक्कर और मधुके साथ देनेसे मण्डल और सुप्तवात नष्ट होतेहै। त्रिफलाके काढेसे कृष्णमण्डलका नाश होताहै। गुड और अदरखके साथ देनेसे गजचर्म नष्टहोताहै ॥ १३५ ॥

## १३६ तालकेश्वररसः ( त्रिषष्टितमः )

शुद्धतालं पलैकं तु स्फटिकायाः पलं तथा।
इष्टिकाचूर्णकं दद्यात्सैन्धवं द्विगुणं तथा ५७३
जम्बुपाषाणचूर्णन्तु पलं पारदभस्मकम्।
श्वेतायाश्च मृदश्चूर्णं पलं सर्वं समं मतम् ५७४
धत्तूरजम्बूतुलसीरसैः सम्मर्द्य यत्नतः।
कापित्थफलमध्यस्थं कृत्वा डमरुयन्त्रके ५७५

सन्धिरोधं विधायाऽथ सप्तमृद्वस्त्रवेष्टनम् ।
चुल्यां निक्षिप्य तद्यन्त्रं मृदुमध्यदृढाग्निना ॥
पचेद् द्वादशयामान्तं स्वाङ्गशीतलमुद्धरेत् ।
ऊर्ध्वखर्परमध्यस्थं चन्द्रवच्च प्रकाशते॥५७७॥
तालभस्मेति विख्यातं दापयेद्वसुवासरान् ।
व्रणज्वरत्रिदोषांश्च नाशयेदनुपानतः ॥५७८॥
प्रयोगनिपुणैः सर्वरोगान्तकमितीरितम् ।
तण्डुलाम्बुयुतं पीत्वा भक्षयेत्कदलीदलम् ॥
योनिजान्विविधान्व्याधीन् रक्तञ्चहरतिध्रुवम्

र. क. यो. कुष्ठादौ ।

भाषा—शुद्धहरिताल, फिटकडी, ईंटकाचूर्ण येसब १–१ पल, सेंधानमक २ पल, सुरमा, पारदभस्म और खडिया मिट्टी १–१ पल लेकर धतूरा जामुन, तुलसी इनके रसोंसे १–१ रोज मर्दनकर कैथकीमज्जा सबकी बराबर देकर दोपहर घोटकर सुखाकर डमरूयन्त्रमे रख सन्धि बंदकरे। इसकेबाद तमामपर सातकपडमिट्टी चढाकर अच्छीतरह सुखाकर मृदु, मध्य और तीक्ष्ण अग्निसे १२ पहर पकावे। स्वाङ्गशीतल होनेपर ऊपरकी हंडीमे लगीहुई सफेद भस्मको निकालकर रखछोडे। इसमेसे १–१ रत्ती तत्तद्रोगहरानुपानकेसाथ ८ रोजतक देनेसे व्रण, ज्वर, त्रिदोषोत्थव्याधि इन सबको यह नष्ट करताहै। अनुपानरूपसे चावलका धोवन पिलाकर पकानारियल खानेसे योनिके तमामरोग और रक्तप्रदर इनको यह नष्ट करताहै ॥ १३६ ॥

## १३७ तालकेश्वररसः ( चतुःषष्टितमः )

पलाशमूलस्वरसैरथवा कन्यकोद्भवैः ।
वटार्कस्नुग्जैरथवा दुग्धै स्तालं विमर्दयेत्५८०
चन्द्रिकारहितं यावच्छायाशुष्काश्च चक्रिकाम्
पलाशार्कस्नुहीक्षारैरथवा तिन्तिडीभवैः ।
क्षारैः कवलिताङ्कृत्वा पाचयेद्युक्तितो भिषक् ।
भ्रामराज्यानुपानेन कुष्ठादौ सम्प्रयोजयेत् ॥

नू. क, कुष्ठादौ ।

भाषा–शुद्धहरितालको पलाशमूलस्वरस अथवा कुमारीस्वरस अथवा बड आक या थूहरके दूधसे यहातक मर्दनकरे कि उसमें चमक न रहे। फिर टिकडी बनाय अच्छीतरह सुखाकर पलाश, आक, थूहर, इमली इनमेंसे किसी एककी छालकी राखसे हंडीमें कवलितकर कपडमिट्टी लगाकर अच्छीतरह सूखनेपर हरितालके प्रमाणका अन्दाजकर ८, १२, १६ अथवा २४ पहरकी आंचदेनेसे तालकेश्वर तैयार होताहै। इसकी १–१ रत्ती भौरेके मधु और घीके साथ देनेसे यह तमाम कुष्ठोंको दूर करताहै ॥

## १३८ तालकेश्वररसः ( पञ्चषष्टितमः )

कन्याजातैं विमर्द्याऽथ तालकं कृतचक्रिकम् ।
गोमयेऽधिकर्फ न्यस्य कृतगर्ते विधानतः ॥
पुटेद्गजपुटे युक्त्या भूमौ गर्तेऽथवा सुधीः ।
स्वाङ्गशीतं समुद्धृत्य काचकूप्यां विनिःक्षिपेत् ।
तुलसीपत्रसम्भूतैं धुत्तूरस्वरसैस्सह ।
तण्डुलप्रमितं दत्तं विषमज्वरनाशनम् ॥५८५॥

नू. क., विषमज्वरे ।

भाषा—शुद्धहरितालको घीकुआरके रससे चमक नष्टहोने तक मर्दनकर टिकिया बनाय सुखाकर मोटी पाथीमे खड्डा खोदकर टिकियाके बराबर समुद्रझागको बारीक पीस नीचे बिछाकर ऊपर टिकिया रख उतनाही समुद्रफेनका चूर्ण ऊपर रखदे। फिर इसके ऊपर ६–७ कपडमिट्टी देकर सुखाकर खड्डेमें अथवा जिमीनपर आधेमन जंगलीकंडोकी आंचदे। स्वाङ्गशीतल होनेपर निकालकर शीशीमे रखछोडे। इसमेसे १–१ चावलभर मात्रा तुलसीके पत्तोके रस अथवा धत्तूरेके पत्तोके रसके साथ देनेसे यह समस्त विषमज्वरोको नष्टकरताहै ॥ १३८ ॥

## १३९ तालकेश्वररसः ( षट्षष्टितमः )

हरितालं पलं शुद्धं तथा कर्षं विषस्य च ।
श्वेताङ्कोठरसेनैव द्वयमेकत्र खल्वयेत् ॥५८६॥
पलाशभस्म द्विपलं निधाय स्थालिकोपरि ।
तद्भस्मोपरि तालस्य गोलकं स्थापयेत्सुधीः ॥
तस्योपरि ह्यपामार्गभस्म दद्यात्पलत्रयम् ।

स्थालीमुखे शरावञ्च दद्याद्यत्नेन लेपयेत् ॥
लेपयित्वा ततश्चुल्यामहोरात्रं पचेद्भिषक् ।
ततस्तु जायते भस्म शुद्धकर्पूरसन्निभम् ॥
गुञ्जात्रयं ततो भक्ष्यमनुपानविशेषतः ।
कटिग्रहश्च कुष्ठश्च दद्रुविस्फोटकाऽपचीः ५९०
विचर्चिकां चर्मदलं वातरक्तञ्च शोणितम् ।
रक्तपित्तं तथा शोथं गलत्कुष्ठं विनाशयेत् ॥
हलीमकं तथा शूलमग्निमान्द्यमरोचकम् ।

र स, ध, र चं, वातरक्ते।

**भाषा**—शुद्धहरिताल ४ तोले, वछनाग १ तोले लेकर वारीक चूर्णकर सफेद अकोलकी जडके रससे चमक दूर होनेतक मर्दनकर टिकिया वनाय सुखाकर ६-७ कपडमिट्टी दीहुई हडीमे ८ तोले पलाशकी राख विछाकर हरितालकी टिकिया रखदे। उसपर १२ तोले अपामार्गकी राख दवादवाकर रखकर हडीपर शरावरख ३–४ कपड़मिट्टी करदे । अच्छीतरह सूखनेपर चूल्हेपर चढाय एक अहोरात्रकी क्रमाग्नि देकर ठढा होनेपर शुद्धकपूरकी तरह सफेद भस्मको निकालकर रखछोंड । इसमेसे ३ रत्ती तत्तद्रोगहराऽनुपानके साथ देनेसे कटिग्रह, कुष्ट, दद्रु, विस्फोटक, अपची, विचर्चिका, चर्मदल, वातरक्त, रक्तपित्त, शोथ, गलितकुष्ट, हलीमक, शूल, अग्निमांद्य, अरोचक इन सवको यह नष्टकरताहै ॥ १३९ ॥

### १४० तालकेश्वररसः ( ससषष्टितमः )

तालभस्म पलार्धैकं तथा सौवर्चलस्य च ।
शतटङ्कमितं ग्राह्यं विंशत्यधिकमुत्तमम् ५९२
आरुष्करफलं पक्कं कुट्टितं सर्वमेकतः ।
सेहुण्डपयसाऽऽप्लाव्य कृतक्षारञ्च तत्रयम् ॥
द्विमापमानकं दद्याच्छागमूत्रेण रोगिणे ।
कुष्ठं कण्डूयुतं स्रावि पिडकाभिः समन्वितम् ॥
गतनासं गताङ्गञ्च दुर्गन्ध्यतीव पिच्छिलम् ।
नाशयेद्वेगतः सर्वमपूर्वं कुरुते वपुः ॥ ५९५ ॥
सेवितं निश्चितं मासं गुल्मप्लीहविनाशनम् ।
पलितञ्च जरां हन्यान्न विषैः परिभूयते ५९६
तिलतैले पचेदेकं कृकलासं शनैःशनैः ।
तेन लिप्तशरीरस्य मण्डलानि विनाशयेत् ॥

रसचि., यो म, र का., कुष्ठे ।

**भाषा**—हरितालभस्म २ तोले, सचलनमक २५ तो०, पकेहुए भिलावे ३० तोले इन सबको अच्छीतरह कूटकर थूहरके दूधमे एकरोज मर्दनकर ६–७ कपडमिट्टी दीहुई हडीमे बदकर ४ पहरकी अग्नि देवे। स्वाङ्गशीतलहोनेपर निकालकर रखछोंडे इसमेसे २–२ माशे वकरेकेमूत्रमे देनेसे कण्डू स्राव और व्रणयुक्त कुष्ठ, नासिका और हस्तपादादिअङ्ग जिसमे गिरपडेहो और अत्यन्त चिकना दुर्गन्धियुक्त जिसमे पीव आताहो इसतरहके कुष्ठ तथा गुल्म, प्लीहा, वली, पालित और विप इनसवको यह वहुत शीघ्र नष्ट करताहै । शरीरको दिव्यवनादेताहै। एकरत्तल तिलके तैलमे सद्योहत गिरगिटको धीरे धीरे पकावे। जबवह लालहोकर काला होनेलगे तव गिरगिटको निकालकर फेकदेवे। और तैलको उपयोगमे ले लेवे। इससे ये सव कुष्ठ निकलजातेहै ॥

### १४१ तालकेश्वररसः ( महान् ) ६८

तालं सप्तपलं ग्राह्यं स्वेदयेत्तण्डुलाऽम्भसा ।
दिनद्वयञ्च दुग्धेन रसाद्देयं पलद्वयम् ॥५९८॥
एकतः क्रियते घृष्ट्वा पश्चादत्र परिक्षिपेत् ।
वर्षाभूः पीतिका व्याघ्री गुडूची निम्बचित्रकौ
रोहीतकद्वये घृष्ट्वा शोषयित्वा भिषग्वरः ।
निम्बरोहीतकक्काथे तमाऽऽप्लुत्य निरोधयेत्॥
हण्डिकायन्त्रमध्यस्थं दिनमेकं शनैरिह ।
कर्तव्यश्च शनैरेव वह्निः शीतं तदुद्धरेत् ६०१
अर्चयित्वा शिवं देवं शिवां देवीं तथा श्रियम्।
भैरवं पूजयेद्यत्नात्पुष्पधूपादितर्पणैः ॥६०२॥
पश्चान्मापादिनैवेद्यैर्योगिनां प्रीतिकारिभिः ।
हुत्वाऽमृतं पुनर्दद्यात्ताप्यालं शुद्धमुत्तमम्६०३
गन्धकं पलमात्राणि श्वेताञ्च कटुकां तथा ।
द्रव्यं तत्सुन्दरं दद्यादेकमेकममुं रसम् ॥६०४॥
मधुना विल्वपत्रेण प्रातरुत्थाय रोगिणे ।

चर्व्याश्च तण्डुलाः पश्चाद्भोज्ये दुग्धश्च भक्तकम्
छागमांसरसं दद्यात्पथ्ये तत्सप्तसप्तकैः।
कुष्ठश्च स्फुटितं हन्ति निःशेषं भग्ननासिकम्॥
गताङ्गुलिं गलत्पार्श्वं साध्याऽसाध्यं न संशयः।
यान्यन्यान्यपि कुष्ठानि तानिसर्वाणि नाशयेत्॥
पुनर्नव्यमसौ देहं कुर्यात्कल्पस्थितं नृणाम्॥

रसचि, र का., कुष्ठे।

भाषा—शुद्धवर्कीहरिताल २५ तोलेको काटे वाली चौलाईकारस अथवा चावलका धोवन और गायकादूध इनसे २–२ रोज स्वेदनकर वारीक पीस शुद्धपारा ८ तोले मिलाकर नीलवर्णकज्जली वनाय इटसिट, हल्दी, भटकटैया, गुड़ची, नीम, चित्रक, दोनोरोहिडे इन प्रत्येकके स्वरस अथवा क्वाथोसे १–१ रोज मर्दनकर टिकडी वनाय सुखाकर २–४ कपटमिट्टी दीहुई मजवूत हर्डामे रखकर दोनो रोहिडोकी छालका क्वाथ भरदे। और शराव देकर ६–७ कपडमिट्टीकर सुखाकर चूल्हेपर रख एक अहोरात्रकी अग्निदेकर स्वाङ्गशीतलहोनेपर निकाल कर शिव, पार्वती, भैरव और योगिलोगोकी विधिपूर्वक पूजाकर ताम्र, सोनामाखी और हरितालभस्म, शुद्धगन्धक, शिवक्रान्ता, कुटकी येसव १–१ पल मिलाकर १–२ दिन घोटकर रखछोडे। इसमेसे ३–३ रत्ती मधुमे मिलाकर विल्वपत्रमे रखकर खावे और ऊपरसे थोडे चावल चवावे। भोजनमे दूध, भात और छागमासरस देवे। इसके ४९ रोजतक सेवन करनेसे नाक और अङ्गुली जिसमे गिरचुके हो तथा साध्याऽसाध्य समस्त कुष्ठोको यह नष्टकर मनुष्यको फिरसे युवाऽवस्थामे लादेताहै॥ १४१॥

## १४२ तालकेश्वररसः (एकोनसप्ततितमः)

सूताद्द्वौ वल्गुजात्त्रीणि कणाविश्वत्रिकात्त्रिकम्
सार्धैकं ब्रह्मपुत्रस्य मरिचस्य चतुष्टयम् ६०८
एकैकं निम्बधत्तूरबीजतो गन्धकात्त्रयम्।
जातीटङ्कणतालानां भागा दशदश स्मृताः॥
युक्त्या सर्वं विमर्द्याऽथाऽमृतास्वरसभावितम्।
सप्तधा शोषयित्वाऽथ धत्तूरस्यैव भावना ६१०
सम्मर्द्य गोलकं सान्द्रं धात्तूरं वेष्टयेद्दलैः।
गोमये वेष्टयेत्तच्च कुक्कुटाऽऽख्यपुटे पचेत्॥
रसः कुष्ठहरः सेव्यः सर्वदा भोजनप्रियैः॥

र. म., र का., कुष्ठे।

भाषा—शुद्धपारा २ तो., वाकुचीके वीज, पीपल, सोंठ ३–३ तोले, ब्रह्मपुत्र अभावमे वछनाग डेढतोले मरिच ४ तो०, नीम और धतूरेके बीज १–१ तोला, शुद्धगन्धक ३ तो०, जायफल, सुहागा और हरिताल ये प्रत्येक १० तोले लेकर सबको वारीक चूर्णकर पारेगन्धककी नीलवर्ण कज्जलीमे मिलाकर गिलोय और धतूरा इनके रसोंमे सुखासुखाकर ७–७ भावनाए देकर गोलावनाय सुखाकर धतूरेके पत्तोमे लपेटकर सूतसे वाधकर ऊपर २–२ अङ्गुलगोवर लगाकर सुखादे। फिर कुक्कुटपुटमे आचदेकर स्वाङ्गशीतल होनेपर निकालकर रखछोडे। इसमेसे ३–३ रत्ती तत्तद्रोगहराऽनुपानकेसाथ देनेसे कुष्ठ, मन्दाग्नि, धातुक्षीणता, उदररोग, तथा अन्य तमामरोग नष्टहोतेहै॥१४२॥

## १४३ तालकेश्वररसः (सप्ततितमः)

सम्यक् पत्रीकृतं तालं कूष्माण्डसलिले शनैः।
चूर्णोदके पृथक् तैले दोलायन्त्रे दिनंदिनम्॥
शोधयित्वा तदम्लेन दध्नाऽऽलोड्य विमर्दयेत्।
खल्वे लौहमये वाऽपि गाढं यामद्वयं पुनः॥
पुनर्नवायाः क्षारेण संयोज्य घनतां नयेत्।
दधि किञ्चित्पुनर्दत्त्वा घनीभूतं निवेशयेत्॥
स्थाल्यां दृढतरायाश्च क्षारे पौनर्नवे पुनः।
रोटिकासदृशं कृत्वा शरावेण पिधापयेत्॥
पचेत्तावद्भवेत्क्षारं शङ्खकुन्देन्दुसन्निभम्।
स्वाङ्गशीतं समुद्धृत्य पुनरग्नौ परीक्षयेत्॥
क्षिप्तमग्नौ च निर्धूमं दृश्यते न विलीयते।
तदासिद्धिं विजानीयाद्योजयेत्सर्वकर्मसु॥
एवं सिद्धेन तालेन तुल्यगन्धन्तु मेलयेत्।
द्वयोस्तुल्यं जीर्णताम्रं वालुकायन्त्रपाचितम्॥

अयं तालेश्वरो नाम रसः परमदुर्लभः ।
हन्यात्कुष्ठान्यशेषाणि वातशोणितनाशनः ॥
वातमण्डलमत्युग्रं स्फुटितं गलितं तथा ।
कुष्ठरोगं सर्वजातं नाशयेदविकल्पतः ॥
दुष्टव्रणञ्च वीसर्पत्वग्दोषानाशु नाशयेत् ।
वातमण्डलकुष्ठानामौषधं नास्त्यतः परम् ॥
दृष्टयोगशताऽसाध्यरोगवारणकेसरी ॥६२१॥

र चिं, भै र., ध, इ च., र स, र सु, कुष्ठे । भैषज्यरत्नावल्या स्वेदनस्थाने भावनैव प्रदत्ता । पाचनस्थले द्वात्रिंशद्यामपर्यन्तोऽग्निरभिहित । पलाशक्षारो गृहीत इति विशेष ।

**भाषा**—वर्कीहरितालके जुदेजुदे पत्रकर पोटली वनाय कोहड़ा—और चूनेके पानीमे १–१ रोज स्वेदनकर नीबूवगैरहकी खटाईसे धोकर गायके दहीसे यहातक खरलकरे कि चमक रहित होजाय। फिर पुनर्नवाके क्षारसे मर्दनकर थोडासा दही ऊपर देकर मलाईके आकारका बनाकर ६–७ कपडमिट्टी दीहुईमिट्टीकी मजवूत हडीमे रख पुनर्नवाकी राखको केलेप्रभृतिके रससे अथवा पुनर्नवाकेही रससे सानकर दोअङ्गुल ऊची रोटीसी बनाकर उसहरितालपर ढककर ऊपर से एक शराव ढकदे । और गुड़चूने वगैरहसे सन्धि बदकर ऊपरसे अपामार्गकी राख ४ अङ्गुलतक भरकर हडीका ३–४ कपडमिट्टीसे मुह वदकर सुखाकर ४ पहर तक चूल्हेपर अग्निदेवे । स्वाङ्गशीतलहोनेपर शङ्ख अथवा कुन्दकेसदृश सफेद भस्मको निकालकर अग्निपर परीक्षाकरे । यदि वह निर्धूम होकर वैसीकी वैसीही पडी रहेतो समझना चाहिये कि वह वनगई। फिर इसकी बराबर शुद्धगन्धक और इनदोनोकी बराबर ताम्रभस्म मिलाकर घीकुआर वगैरहके रससे एकरोज मर्दनकर सुखाकर ६–७ कपडमिट्टी दीहुई आतशी शीशीमे चारपहरकी आचदेकर पकावे । स्वाङ्गशीतलहोनपर निकालकर रखछोडे । इसको तत्तद्रोगहरानुऽपानके साथ देनेसे वातरक्त, अत्यन्तभीषण वातरोग, मण्डल स्फुटित, गलित और सर्वज कुष्टरोग, दुष्टव्रण, विसर्प, त्वग्दोष इनसबको यह नष्ट करताहै । इसके सदृश कुष्ठको नाशकरनेवाला दूसरा नही है॥ १४३ ॥

## १४४ तालकेश्वररसः (एकसप्ततितमः)

रसपादं मृतं तारं शिलाताले चतुर्गुणे ।
इक्षुवासारसाभ्याञ्च मर्दयेत्प्रहरद्वयम्॥ ६२२॥
द्वियामं बालुकायन्त्रे स्वेद्यमादाय चूर्णयेत् ।
गुञ्जाद्वयं निहन्त्याशु कासं श्वासं क्षतोद्भवम् ॥
रसस्तालेश्वरो नाम्ना ह्यनुपानञ्च कथ्यते ।
वचाकुष्ठहरिद्राश्च सैन्धवं टङ्कणं विषम् ६२४
पाठाऽक्षलाङ्गलीव्योषं प्रत्येकं चैकभागिकम् ।
भावितं भृङ्गसारेण दिनैकं तच्च भक्षयेत ६२५
माषं तालेश्वरो नाम्ना हिक्कावैस्वर्यकासजित्
दाडिमं त्रिफलाव्योषं त्रयाणाञ्च समं गुडम् ॥
चूर्णितं भक्षयेत्कर्षं क्षतकासाऽपनुत्तये ॥६२६॥

व रा., र. को., र. र., कुष्ठे । र सु, र क ल., नि. र, वै. चि., एषु ग्रन्थेषु तारकेश्वरेति नाम, कासाधिकारे पाठ । कुत्रचित्तालस्थाने ताप्य नियोजितम्, "इक्षुवासारसाभ्याञ्च,, इत्यस्य स्थाने " वासागोक्षुर साराभ्या, इति पाठ ।

**भाषा**—शुद्धपारा, मैनसिल और हरिताल येसब ४–४ तोले, रजतभस्म १ तोला लेकर सबकी कज्जली बनाय ईख और अडूसेके रससे २–२ पहर मर्दनकर गोला वनाय सुखाकर सम्पुटमे बन्दकर बालुकायन्त्रमे रखकर २ पहर स्वेदनकर स्वाङ्गशीतल होनेपर निकालकर दोदोरत्तीकी गोलिया उन्ही दोनो रसोसे बनाकर रखछोडे । इनमेसे १–१ गोली तत्तद्रोगहरानुपानके साथ देनेसे क्षतोद्भवकास और श्वासको नष्टकरताहै । वच, कुठ, हल्दी, सेधा, भुना सुहागा, शुद्धवछनाग, पाठा, बहेडेकीछाल, शुद्धकरिहारी, त्रिकटु, सब समभागका चूर्णकर भंगरेके रसकी २–३ भावनाए देकर इसमेसे १–१ माशके साथ पूर्वोक्तगोली देनेसे हिचकी, स्वरभङ्ग और कास इनको यह नष्ट करताहै । अनारदाना, त्रिफला, त्रिकटु, समभाग इनसबकी बराबर गुड़ मिलाकर इसमे १ तोलेकेसाथ १ गोली देनेसे क्षतज कास निवृत्त होताहै ॥ १४४ ॥

**१४५ तालकेश्वररसः ( द्विसप्ततितमः )**

गुञ्जा चाऽग्निशिखा करञ्जरजनी-
भल्लातकाः शङ्खजम्,
कन्यासूर्यपयः पुनर्नवरजो गन्धस्तथा सूतकम्।
गोमूत्रेण भृतं विडङ्गमरिचैः क्षौद्रश्च तत्तुल्यकं,
हन्यादाशु विचर्चिकारुजमिदं-
कण्डूं तथा कैटिभम् ॥ ६२७ ॥

र. चि , र सु., कुष्ठाधिकारे ।

भाषा—शुद्धसफेदगुञ्जा, अग्निशिखा, कञ्जाकेवीज, हल्दी, दोनो भिलावे, शङ्खभस्म, घीकुआरकारस, आककादूध, पुनर्नवा, शुद्धगन्धक और पारा इनसवको समभाग लेकर पारेगन्धककी नीलवर्णकज्जलीकर सवको इकट्ठेमिलाय अठगुने गोमूत्रमे पकाकर इनसवकी बरावर विडङ्ग और मरिचकाचूर्ण शामिलकर इसतमामकी बरावर मधुमिलाकर रखछोडे । इसमेसे ४—४ माशे कुष्ठहराऽनुपानके साथ लेनेसे विचर्चिका, कण्डू और किटिभ कुष्ठ नष्टहोते है१४५

**१४६ तालकेश्वररसः ( वृद्धाद्यः ) ७३**

काकजङ्घारसैः स्वेद्यं तालं पलचतुष्टयम् ।
नैर्मल्यं यात्यनेनाऽथ कुलत्थपलषोडश-६२८॥
जलेनाऽष्टाऽवशेषेण तत्संस्वेद्यश्च तालकम् ।
लघुक्षुद्राजलेनाऽथ स्वेद्यं दुग्धेन तावता ६२९
निर्विषं जायते तेन कूष्माण्डरसमर्दितम् ।
वेदवासरमानेन पश्चात्सूक्ष्मं विधीयते ॥६३०॥
तस्य चक्राऽऽकृतिं कुर्यात्पश्चात्तण्डुलनिर्मिते ।
चक्रकेऽन्तर्गतं कुर्याद्दोलायन्त्रे विलम्बितम् ॥
पचेदेकमहोरात्रं महानिम्बस्य वारिणा ।
वटारोहाम्भसा पश्चादेवमेव तु काञ्जिके ६३२
शोभाञ्जनस्य क्वाथेन त्रिफलावारिणा तथा ।
पुनस्तद्भृङ्गराजेन छागीदुग्धेन तत्तथा॥६३३॥
भावयेन्मेषिकादुग्धाऽशोकजाभ्यां भृशं च तत्
माषमात्रं दिने देयं मधुना सह भक्षणे ६३४
श्वित्रं कुष्ठं तथा दद्रुच्छदनं सव्रणं महत् ।
गजचर्म विचर्चीश्च नाशयेदुग्रकुष्ठकम्॥६३५॥
शुष्काङ्गं शुष्कनेत्रञ्च रक्ताङ्गं रक्तनासिकम् ॥
दोषत्रयोत्थं सहजं कष्टं कुष्ठं विनाशयेत् ६३६
वैद्यवृन्दैः परित्यक्तमसाध्यं यच्च विद्यते ।
तन्नूनं नाशयत्येवाऽसाध्यमेवाऽपि यद्भवेत्६३७

रसचिं., यो. म , र का , कुष्ठे ।

भाषा— १६ तोले वर्की हरितालको छोटे छोटे टुकडेकर दोलायन्त्रवनाय काकजङ्घाके रसमे ४ पहरस्वेदनकर चौसठतोले कुलथीका अष्टमाशाऽवशिष्ट क्काथ, भटकटैयाकारस और दूध इनप्रत्येकमे ४ पहर स्वेदनकरनेसे निर्विष होजाताहै। फिर उसको वारीकपीस ४ दिन सफेद कोहडेके रससे मर्दनकर गोलटिकडी वनाय सुखाकर इससेदूने चावलोको कोहडेके रससे पीसकर इसटिकियापर चढाकर दोलायन्त्र वनाय वकायन, बटजटा, काञ्जी, सहिजनकीजडकी छाल, त्रिफला, भगरा, वकरी और भेड़का दूध, अशोककी छाल इन प्रत्येकके स्वरस अथवा क्वाथोसे एकएकरोज गाढ मर्दनकर १—१ माशेकी गोलिया वनाकर रखछोडे । इनमेसे एक एकगोली मधुके साथ देनेसे सफेदकुष्ठ, दद्रु, छाजन, गजचर्म, विचर्चिका, उग्रकुष्ठ, शुष्काङ्ग, शुष्कनेत्र, रक्ताङ्ग, रक्तनासिका, सहज और तमामवैद्योसे परित्यक्त सव कुष्ठोको दूर करताहै ॥ १४६ ॥

**१४७ तालकेश्वररसः ( वृद्धाद्यः ) ७४**

गृहकन्यारसैः शुद्धं सूतं तालं विमर्दयेत् ।
द्विगुणं गन्धकं दत्त्वा कदलीकन्दवारिणा ॥
काकोदुम्बरिका वह्निस्त्रिफला राजवृक्षकः ।
सोमराजी विडङ्गानि क्वाथमेषां प्रसाधयेत् ॥
खदिरक्वाथतुल्यांशं वाकुचीचूर्णमेव च ।
पचेदेकमहोरात्रं गुटिका कर्षमात्रिका ॥६४०॥
श्वेतकुष्ठविनाशाय तृषिते त्रिफलाजलम् ।
पाययेद्रोगिणे वैद्यः श्वित्रिणे च विचक्षणः ॥
त्रिरात्रादूर्ध्वतस्तस्य श्वेते स्फोटश्च जायते ॥
सन्देहो नाऽत्र कर्तव्यो भिषग्भिः श्वित्रनाशने

रसचिं ,र. का.,कुष्ठे। र. कामधेनौ श्वित्रारिरसेति नाम।

भाषा— घीकुआरके रससे शुद्धकिया हुआ पारा और हरिताल १—१ भाग, शुद्धगन्धक २ भाग इनसबकी नीलवर्णकज्जलीकर केलेकाकन्द, कठगूलर, चित्रक, त्रिफला, अमिलतास, वाकुची, विडङ्ग इनप्रत्येकके स्वरस अथवा क्वाथोसे १—१ रोज घोटकर खैर और वाकुचीकेबीज येप्रत्येक सबकी बराबर, पूर्वोक्तचीजोके चतुर्गुणित क्वाथमे डालकर एकअहोरात्र कडाहींमे पकाकर १—१ तोलेकी गोलिये बनाकर रखछोडे । इनमेसे १—१ गोली पूर्वोक्त क्वाथसे देवे । अधिक प्यास लगनेपर त्रिफलाकाक्वाथ पिलावे। इसके देनेसे चौथेरोज श्वित्र-स्थानमे छाला उठेगा । उसको बेर प्रभृतिके काटेसे फोडदेना । ऊपर विडङ्ग और कत्थेको हल्दीके पानीमे पीसकर लेपकरनेसे श्वेतकुष्ठ बहुतशीघ्र नष्ट होता है ॥१४७॥

**१४८ तालकेश्वररसः ( वृद्धाद्यः ) ७५**

एकैकं भागमाहृत्य शुद्धगन्धकसूतयोः ।
तालकस्य विशुद्धस्य भागांश्च चतुरः क्षिपेत् ॥
खल्वे सम्मर्दयेत्तावद्यावन्निर्याति सत्वरम् ।
स्थाल्योर्मध्ये मृदं लिम्पेच्चित्रकूटसमुत्थिताम्
अश्मचूर्णे चतुर्थांशं गुडं प्रक्षिप्य मर्दयेत् ।
बाह्यं तयोस्तेन लेप्यं द्वित्रवारान् प्रयत्नतः ॥
शुष्कं लेपं समाज्ञाय गौरमृत्तिकया पुनः ।
संशुष्के मृत्तिकालेपे लवणञ्च विनिःक्षिपेत् ॥
अङ्गुलाऽऽत्मकमानेन कुर्यात्तस्य च चक्रिकाम्।
किञ्चिज्जलेन सम्प्रोक्ष्य पाणिना तां दृढां कुरु
वालुकां वस्त्रसंशुद्धां तावन्मानां विनिःक्षिपेत्
सूक्ष्मचूर्णं विनिःक्षिप्य तावन्मानं प्रयत्नतः ॥
किञ्चिज्जलञ्च सम्प्रोक्ष्य तत्र तालं निवेश्य च
चूर्णपांशुपटूनीह स्थापनीयानि पूर्ववत्॥६४९॥
द्वितीयांखटिकाभ्यक्तांस्थालीं-
स्थाल्यां परिक्षिपेत् ।
यन्त्रं डमरुकं कृत्वा नीरन्ध्रं वस्त्रमृत्स्नया ॥
समारोप्यमहोरात्रं चुल्ल्यां मृद्वग्निना पचेत् ।
ततः पश्चाद्धठाग्निश्च ज्वालयेद्दिनसप्तकम् ६५१
सूतो यात्युपरि स्थाल्यां मध्यादुड्डीय निश्चितम्
कर्पूराऽऽभो रसो जातो वृद्धोऽयं तालकेश्वरः॥
प्रभाते प्रत्यहं ग्राह्यो वल्लैको जलवर्जितः ।
प्राक् सरन्ति मला बद्धाः पश्चात्तापः प्रजायते
षष्टिकास्तण्डुलाः पथ्यं क्षुण्णा मुद्गगोघृतम् ।
शाकमार्द्रकतुण्डीरीहरिद्रातण्डुलीयकम् ६५४
कर्पटान्यामपक्वानि तैलं चाऽम्लादिकं त्यजेत्
श्वेतवर्जितकुष्ठानि हन्ति सप्तदश ध्रुवम् ६५५
अष्टावुदरजान्रोगान् सर्वान् रक्तविकारजान् ।
श्वासं कासञ्च मेदांसि श्वयथुं हन्ति तालकम्
रूपकान्ती शरीरस्य वर्धमाने प्रतिक्षणात् ।
सेवितो ह्यनया युक्त्या कुरुते वृद्धतालकः ॥

रसरु., कुष्ठे ।

भाषा—शुद्धपारा और गन्धक १—१ तोला, विशुद्ध हरिताल ४ तोला, लेकर नीलवर्ण कज्जली-कर मजबूतमिट्टीकी दो हडी लेकर इनके भीतर चित्रकूटकीमिट्टी ( रामरज ) का लेपकर पत्थरके चूनेमे चतुर्थांश गुड डालकर पानीमे पकाय हडि-योके बाहिर २—३ लेपकर सूखनेपर पीलीमिट्टीसे २—३ लेप करदे । फिर सेंधेनमकको बारीक पीस हडीके भीतर १—१ अङ्गुल बिछाकर थोडा जलका छींटा देकर इसकी रोटी जैसी बनाकर जमादे । फिर इसपर कपडेसे छानीहुई मीठीवालू १ अङ्गुल जमाकर इतनाही पत्थरका चूना जमादे । फिर थोडा जल छाटकर खूब जमाकर उसपर पूर्वोक्त कज्जलीको रखकर जमादे । और ऊपर उसीक्रम और प्रमाणसे चूना, वालू और नमक जमाकर दूसरी हडीमे ख-डिया मिट्टी पोतकर ऊपर रखकर डमरूयन्त्र बनाय खूब मजबूत ४—५ कपडमिट्टी देकर सुखाकर चूल्हे-पर चढाय एक दिनरातकी मन्द अग्निसे पकावे । फिर इसके बाद सात दिनकी कडी आचदे । तो इसमेसे पारा उडकर ऊपरकी हडीके पेदेमे सफेद कपूरके रगका होकर लगजायगा । इसको स्वाङ्ग

पशुगन्धा पूतिकर्णी सिन्दुवारकचित्रकम् ।
मेषशृङ्गी ह्यपामार्गो ग्रन्थिकं त्र्यूषणं वचा ॥
क्वाथमष्टाऽवशेषन्तु सन्निपातान्निहन्ति तत् ।
त्रयोदशविधांश्चैव पुराणज्वरनाशनम् ॥
मृत्युञ्जयकषायेण सारकान्विनिहन्ति सः ॥

व. रा, र. क यो., यो म, र. सु, र का, वै द, र को., भा प्र, चि. क्र, र. चि, नि र, सु. प्र., ज्वरे। वसवराजीयं विहाय सर्वत्र अभ्रस्थाने ताम्रं नियोजितम्। मृत्युञ्जयकषायोवसवराजीयादवगन्तव्य ।

भाषा—शुद्धपारा, गन्धक और अभ्रकभस्म सब समभाग लेकर नीलवर्णकज्जलीकर बराबरके गायके दूधसे मर्दनकरे फिर निर्गुण्डीके अङ्गस्वरससे एकरोज मर्दनकर गोलाबनाय सुखाकर शरावसम्पुटमे बन्दकर अथवा आतशी शीशीमे डालकर बालुकायन्त्रमे रख तीनपहर कडीआचदेकर पकावे । यदि शरावसम्पुटकियाहोतो मृदु आचदे । स्वाङ्गशीतल होनेपर निकालकर अष्टमाग शुद्धबछनाग मिलाकर रखछोडे । इसमेसे २–२ रत्ती पञ्चकोलके साथ देकर ऊपर बकरीकादूध पिलानेसे साध्य अथवा असाध्य त्रिदोषोल्वण सन्निपात दूरहोताहै । असगन्ध, घुडकरञ्ज, सभाळू, चित्रक, मेढासीगी, अपामार्ग, पिपलामूल, त्रिकटु, वच, येसब समभाग लेकर इसके अष्टमाशाऽवशेष क्वाथके साथ देनेसे तेरह सन्निपात और जीर्णज्वरको नष्टकरताहै । मृत्युञ्जयकषायके साथ देनेसे समस्त अतीसारोको दूरकरताहै

## १९१ त्रिनेत्ररसः ( द्वितीयः )

रसगन्धाऽभ्रभस्मानि पार्थवृक्षत्वगम्बुना ।
एकविंशतिधा घर्मे भावितानि विधानतः ॥
माषमात्रमदश्चूर्णं मधुना सह लेहयेत् ।
वातजं पित्तजं श्लेष्मसम्भूतं वा त्रिदोषजम् ॥
कृमिजश्चाऽपि हृद्रोगं निहन्त्येतन्न संशयः ॥

रसायनस, वृ यो न., र. कौ, यो. र, वै चि. नि. र., व. रा, र स मा हृद्रोगे नि. र, वसवराजीययो हृदयार्णव इतिनाम रसरत्नमणिमालायामभ्रस्थाने ताम्रं नियोजित, नाम तु हृदयार्णव इत्येव ।

भाषा—शुद्धपारा, गन्धक, और अभ्रकभस्म सब समभाग लेकर नीलवर्ण कज्जलीकर अर्जुनकी छालके रससे कडेधूपमे २१ भावनाए देकर १–१ माशेकी गोलिये बनाकर रखछोडे । इनमेसे १–१गोली तत्तद्रोगहराऽनुपानकेसाथ देनेसे अथवामधुकेसाथ चटानेसे वातज, पित्तज, श्लेष्मज और त्रिदोषजज्वर, कृमिजन्य हृद्रोग, इनसबको यह नष्ट करताहै ॥

## १९२ त्रिनेत्ररसः ( तृतीयः )

रसगन्धकताम्राणि सिन्धुवाररसै र्दिनम् ।
मर्दयेदातपे पश्चाद्वालुकायन्त्रमध्यगम् ॥ ८१३
अन्धमूषागतं यामत्रयं तीव्राऽग्निना पचेत् ।
पर्णखण्डेन सर्वेषु योज्यो रोगेषु वै रसः ॥
गुञ्जामितं देहसिद्ध्यै पुष्टिवीर्यबलाय च ।
रसोऽयं हेमताराभ्यामपि सिद्ध्यति कन्यया ॥

रसायनस, र चि, र कौ, यो म, रससागर, रसायने । रससागरे वृद्धाङ्कुशत्रिनेत्र इति नाम । रत्नाकरौषधयोगे अनुपाने पर्णखण्डस्थाने नीलकण्ठी गृहीता सा च यूनानिवैद्यके अनेनैव नाम्ना प्रसिद्धाऽस्ति ।

भाषा— शुद्धपारा, गन्धक और ताम्रभस्म येसब समभाग लेकर नीलवर्ण कज्जलीकर सभाळूके रससे एकरोज धूपमे मर्दनकर सुखाकर बालुकायन्त्रमे आतशी शीशीमे रखकर तीनपहरकी कडी आचदेकर स्वाङ्गशीतलहोनेपर निकालकर रखछोडे । इसमेसे १–१ रत्ती पानके साथ देनेसे समस्तरोग दूरहोतेहै । देहकी सिद्धि पुष्टि, वीर्य, बल इनको पैदा करताहै । ताम्रके स्थानमे शुद्धसोना और चादी डालनेसे और कुमारीके रससे भावना देनेसे भी यह तैयार होसक्ताहै । इसको तत्तद्रोगहरानुपानके साथ देनेसे समस्तरोगोको दूरकरताहै ॥ १९२ ॥

## १९३ त्रिनेत्ररसः ( चतुर्थः )

गरुत्मान्दरदस्तीक्ष्णं सुवर्णं वङ्गशुक्तिके ।
शुल्बञ्च गगनं फेनं रुधिरञ्च त्रिनेत्रकम् ८१६
पातालनृपतिश्चैव वह्निमूलञ्च रामठम् ।
त्रिकटुत्रिफला शिग्रुश्चाजमोदा यवानिका ॥
पिप्पलीमूलभार्ग्यौ च लशुनं जीरकद्वयम् ।
आर्द्रकस्य रसेनैव गुटिकां कारयेद्भिषक् ८१८

मन्दानलाऽऽमवातघ्नं श्लेष्माणञ्च जलोदरम् ।
अशीतिं वातजान्रोगान् प्रमेहांश्चैकविंशतिम् ॥
घ्राणाऽक्षिकर्णजिह्वानां गदश्चैव त्रिदोषजम् ।
गलिताङ्गं वातरक्तं सर्वमेतद् व्यपोहति ८२०

र र, र चं., वातरक्ते ।

भाषा—स्वर्णमाक्षिक, शिंगरिफ, लोह-सुवर्ण-वङ्ग शुक्ति-ताम्र और अभ्रक इनसबकीभस्मे, अफीम, केसर, रुद्राक्ष, गन्धक, चित्रकमूल, भुनाहीग, त्रिकटु त्रिफला, सहिजनके बीज, अजमोद, अजवाइन पिपलामूल, भारङ्गी, लशुन, दोनोंजीरे, सबसमभाग लेकर पारेगन्धककी नीलवर्णकज्जलीकर ३—४ रोज अदरखके रससे मर्दनकर २—२ रत्तीकी गोलिये बनाकर रखछोडे । इनमेसे १—१ गोली तत्तद्रोग-हराऽनुपानकेसाथ देनेसे मन्दाग्नि, आमवात, श्लेष्मरोग जलोदर, अस्सी वातरोग, २१ प्रमेह, नासिका अक्षि कर्ण और जिह्वा इनके त्रिदोषजरोग, गलिताङ्ग वातरक्त इनसबको यह दूरकरताहै ॥ १९३ ॥

### १९४ त्रिनेत्ररसः ( पञ्चमः )

वङ्गं सूतं गन्धकं द्रावयित्वा
लौहे पात्रे मर्दयेदेकयामम् ।
दूर्वायष्टीगोक्षुरैः शाल्मलीभि-
र्मूषामध्ये भूधरे पाचयित्वा ॥८२१॥
तत्तद्द्रावै र्भावयित्वाऽस्य वल्लं
दद्याच्छीतं पायसं वक्ष्यमाणम् ।
दूर्वायष्टीशाल्मलीतोयदुग्धै
स्तुल्यैः कुर्यात्पायसं तद्ददीत ॥
प्रातःकाले शीतपानीयपाना-
न्मूत्रे जाते स्यात्सुखित्वं क्रमेण ॥

र स, ध, र चि, र सु, मूत्रकृच्छ्रे ।

भाषा—शुद्धपारा, गन्धक और वङ्गभस्म समभागलेकर नीलवर्णकज्जलीकर लोहेकीकडाहीमे थोडाघी चुपडकर गलाकर दूब, मुलहठी, गोखरू, सेमलके-फूल या छाल इनप्रत्येकके रसोसे १—१ दिन मर्दनकर गोलाबनाय शरावसम्पुटमे बन्दकर भूधरयन्त्रमे चार पहरकी अग्निदेकर स्वाङ्गशीतलहोनेपर निकालकर पूर्वोक्तद्रवोसे १—१ भावना देकर २—२ रत्तीकी गोलिये बनाकर रखछोडे । इनमेसे १—१ गोली दूब, मुलहठी, सेमल इनकारस तथा दूध समभाग-लेकर खीर बनाकर इसके साथदेवे । प्यास लगनेपर ठंढा पानीदे । इससे पेशाबकी छूट होनेपर मूत्रकृच्छ्र छूटकर आदमी सुखी होताहै ॥१९४ ॥

### १९५ त्रिनेत्ररसः ( षष्ठः )

अथोच्यते त्रिनेत्राख्यो रसः परमदुर्लभः ।
सर्वरोगहरः पुंसां रसायनवरः परः ॥ ८२३॥
कृष्णाऽभ्रं चूर्णितं कृत्वा धान्याऽम्लैर्भावयेत्ततः।
त्रिदिनं वासयेत्तत्र तस्मादुद्धृत्य धारयेत् ८२४
आतपेऽथ ततो मेघनादमार्कववारिणा ।
त्रिदिनं स्थापयित्वा तु ततः खल्वे विनिःक्षिपेत्
मर्दयित्वाऽथ तत्रैव पारदं तच्चतुर्गुणम् ।
मर्दयेल्लोहजे खल्वे लोहमर्दकयोगतः ८२६
भृङ्गमेघरवानीरै र्यावत्पिष्टी भवेद्रसः ।
जम्बीरलुङ्गनिम्बोत्थरसं सैन्धवसंयुतम् ८२७
ताम्रपात्रे विनिःक्षिप्य मर्दयेत्ताम्रपात्रतः ।
यावत्कल्कं भवेन्नीलं पश्चात्कल्कं समाहरेत् ॥
सूताऽभ्रयो र्विनिःक्षिप्य चणकाऽम्लप्रयोगतः ।
मर्दनाज्जायते पिष्टिरभ्रकेण समं रसः ॥८२९॥
एवं जातां सूतपिष्टीं यन्त्रे विद्याधरे क्षिपेत् ।
अधिचुल्लि समारोप्य हठाग्निं ज्वालयेदधः ॥
प्रहरद्वयमानेन गृह्णीयान्मृतमूर्ध्वगम् ।
पुनः पूर्वोक्तमार्गेण पिष्टीं कृत्वा निपातयेत् ॥
तावन्निपातयेत्सूतं यावदग्नौ स्थिरीभवेत् ।
ततः संस्वेदयेत्सूतं पूर्वोक्तस्वेदनौषधैः ८३२
मुखं कुर्याच्च पूर्वोक्तैः षोडशांशेन जारयेत् ।
हेमबीजं ततो जार्यं बलिं शतगुणं ततः ८३३
अशक्तौ योगिनीसञ्चं गन्धकं पूर्वयोगतः ।
तत्राप्यशक्तौ पूर्वार्धं ततो न्यूनं न जारयेत् ॥
एवं जीर्णं रसं कृत्वा खल्वमध्ये निवेशयेत् ।
उत्तरावारुणीक्षीरैः श्वेताङ्कोलजटारसैः ८३५

मर्दयेत्रिदिनं यन्त्रे क्षिप्त्वा सोमाऽनले क्षिपेत् ।
भस्मीभवति सूतेन्द्रो वज्रलोहादिमारकैः ॥
दशभि र्दिवसैः सूतः सर्वथा भस्मतां व्रजेत् ।
एवं भस्मीकृतं सूतं यत्नतः स्थापयेत्ततः ८३७
शुल्वं शोध्यं वक्ष्यमाणक्रमेण च तथा बलिः
शुद्धः शुद्धिप्रकारोऽत्र त्रिनेत्रे योग्य उच्यते
कांस्यमारं तथा ताम्रं खरलोहं ततः परम् ।
आवर्तलोहं वङ्गञ्च सीसं सर्वं समं क्षिपेत् ॥
त्रयः क्षाराश्च पटवः पञ्चैते समभागिकाः ॥
लोहवर्ज्यं सर्वमन्यद्द्रावयेदम्लवर्गतः ।
पूर्वोक्तं लोहजातञ्च मूषामध्ये निवेशयेत्८४१
धमेत्तद्वङ्कनालेन खदिराऽङ्गारयोगतः ।
स्तोकंस्तोकं क्षिपेच्चूर्णं यावदर्कोऽवशिष्यते ॥
तच्छिष्टं ताम्रमादाय शुद्धं दोषविवर्जितम् ।
पात्रिकां कारयेत्पश्चात्तत्पादं सूतमाहरेत् ८४३
अन्यं शुद्धं तद्द्विगुणं गन्धकं मर्दयेच्च तौ ।
जम्बीराद्यम्लयोगेन दिनमेकं निरन्तरम् ८४४
शुष्कं कल्कञ्च मृद्भाण्डे क्षिप्त्वोर्ध्वं ताम्रपात्रिकाम्
दत्त्वालिप्त्वा पूरयित्वा भस्मना भाण्डकं ततः
अन्येन सम्पुटीकृत्य दृढं चुल्ल्युपरि क्षिपेत् ।
अधस्ताज्ज्वालयेद्वह्निं खदिराङ्गारजं ततः ८४६
दिनत्रयं मन्दमध्यतीक्ष्णादिक्रमयोगतः ।
ज्वालयित्वाऽथ निर्भिद्य यन्त्रं गृह्णीत भास्करम्
भस्मितं सह सूतेन ततः खल्वे विचूर्णयेत् ।
अजादुग्धेन मृद्वीयान्निक्षिपेन्मल्लिकापुटे ८४८
विलिप्य पुटयेत्पश्चात्कुक्कुटाख्येन यत्नतः ।
स्वाङ्गशीतलमुद्धृत्य पुनः क्षीरेण मर्दनम् ८४९
पुनः पुटं तथैवं पुटानां पञ्चविंशतिम् ।
दत्त्वा प्रमर्दयेद्दध्ना अजायाः पूर्ववत्पुटम् ८५०
दद्याद्दधिपुटान्येवं पञ्चविंशतिसङ्ख्यया ।
तदान्येन पुटान्येवं पञ्चविंशतिमात्रया॥८५१॥
ततः खण्डेन पुटयेत्पञ्चविंशतिसङ्ख्यया ।
मधुना पुटयेत्पश्चात्पञ्चविंशतिमात्रया॥८५२॥
एवं सिद्धो भवेदर्कः सर्वकर्मप्रसाधकः ।

उत्क्लेदभेदसन्तापभ्रममूर्च्छनवान्तिभिः ८५३
विमुक्तः सकलै र्दोषैः सुधारूपो न संशयः ।
एवं सुसाधयेदत्र ग्रन्थे सर्वत्र भास्करम् ८५४
ताम्रे शुद्धिरियं प्रोक्ता गुरुवक्त्रक्रमाऽऽगता ।
तत्रैव ढालयेद्यत्नात्प्रद्राव्य दनुजेश्वरम् ।
सप्त वारान् कृते चैव गन्धकः शुद्धतां व्रजेत्॥
पूर्वं भस्मीकृतं सूतं स्थापितं भास्करं तथा ।
शोधितं दानवश्चापि प्रत्येकं त्रिपलं भवेत् ॥
कृत्वैकत्र प्रयत्नेन सिन्धुवारजलैस्ततः ।
मर्दयेत्रिदिनं यावत्सर्वं पङ्कात्मकं यथा ८५८
भवेत्तावच्च तं कल्कं मूषामध्ये निवेशयेत् ।
वालुकायन्त्रमध्यस्थां मूषां कृत्वाविचक्षणः ॥
अधस्ताच्च ततो वह्निं मन्दमानेन योजयेत् ।
प्रहरत्रितयं यावत्स्वाङ्गशीतलमुद्धरेत् ॥८६०॥
पूजां कृत्वा योगिनीनां भैरवस्य गणेशितुः ।
ब्रह्मविष्णुहराणाञ्च विप्राणां परिपूजनम् ८६१
कृत्वा संतर्पयेद्वह्निं घृतैश्च तिलसंयुतैः ।
रसेश्वरं सम्प्रपूज्य रसेन्द्रं सेवयेत्ततः ॥८६२॥
विधाय पञ्चकर्माणि रोगिणां शास्त्रयुक्तितः ।
रक्तिकाद्वयमानेन नागवल्लीदलेन च ॥८६३॥
दातव्यः सर्वदा वैद्यै रसेन्द्रो रोगशान्तये ।
अस्याऽनुपानं वक्ष्यामि यथाशास्त्रनिरूपितम् ॥
मन्देऽग्नौ त्र्यूषणैः सार्धं रसेन्द्रं विनियोजयेत् ।
वातव्याधिषु सर्वेषु घृतत्रिकटुसंयुतम्॥८६५॥
श्लेष्मजेषु विकारेषु व्योषाऽऽर्द्रकरसै र्युतम् ।
सन्निपाते तथा घोरे दत्त्वा व्योषयुतं रसम् ॥
आर्द्रकोत्थं रसं पश्चात्पाययेच्चुलुकत्रयम् ।
सन्निपातो निवर्तेत सर्वथा नाऽत्र संशयः ॥
अपस्मारे तथा घोरे ब्राह्मीघृतसमन्वितम् ।
नियुञ्जीताऽनुपाने च तदेव घृतमिष्यते ८६८
ग्रहण्यां शर्करायुक्तं चाङ्गेरीतक्रपाचितम् ।
प्रयुञ्जीत घृतं पश्चादनुपाने च भोजने ८६९
पथ्यं तक्रं प्रयुञ्जीत शाल्यन्नं चाऽम्ललूणिकाः।
शाकार्थे विनियुञ्जीत सर्वमन्यद्विवर्जयेत् ८७०

अतीसारे प्रदातव्यस्तवराजेन संयुतः।
अनुपानमिदं दद्याच्छुण्ठी मुस्ता च वत्सकः॥
यवभद्रं देवदारु बिल्वश्चातिविषा भवेत्।
अष्टाऽवशेषं तं क्वाथमनुपाने नियोजयेत्८७२॥
अतिसारो निवर्तेत दुःसाध्योऽपि दिनत्रयात्।
पैत्तिकेषु विकारेषु तवराजेन योजयेत् ८७३॥
गुडूचीसारसंयुक्तं धारोष्णं गोपयः पिबेत्।
पक्तिशूले प्रयोक्तव्यो रसेन्द्रो व्योषसंयुतः॥
सकुबेराक्षरुचकहिङ्ग्वार्द्रकसमायुतम्।
उष्णोदकानुपानश्च पक्तिशूलविनाशनम्॥
पाण्डुरोगे प्रयोक्तव्यो रसो लोहसमन्वितः।
मधुना चानुपानेन पश्चाद्दुग्धौदनं स्मृतम्८७६
कामलाऽपि निवर्तेत पाण्डुरोगोक्तयोगतः।
हलीमकोऽपि तद्वत्स्यात्प्रमेहेष्वधुनोच्यते८७७
वङ्गभस्मसमायुक्तं भुक्त्वा सूतं ततः पिबेत्।
धात्रीरसश्च मधुना सर्वमेहाद्विमुच्यते॥८७८॥
शुक्रमेहे तु रजनीं क्वाथयित्वाऽनुपाययेत्।
हरिद्राचूर्णसंयुक्तं वङ्गभस्मसमायुतम्॥८७९॥
विमुच्यते शुक्रमेहाद्रक्तमेहे तु बीजकम्।
बोलचूर्णेन संयुक्तं क्वाथयित्वाऽनुपाययेत्॥
जलोदरे प्रदातव्य उष्ट्रीक्षीरानुपानतः।
वाकुचीचूर्णसंयुक्तः खादिरक्वाथपानतः ८८१
सर्वकुष्ठं निहन्त्येव रसेन्द्रश्चिरकालजम्।
पाषाणभेदगोकण्टक्वाथादश्मरिकां हरेत्८८२
कम्बुचूर्णेन संयुक्तः प्लीहानमपहन्ति च।
त्रिक्षारैः पञ्चलवणैः त्रिफलाव्योषहिङ्गुभिः॥
गन्धर्वतैलसंयुक्तैः सर्वं गुल्मं निवारयेत्।
निर्गुण्डीघृतसंयुक्तः पिप्पलीदशसंयुतः ८८४
निर्गुण्डीक्वाथसंयुक्तः कासश्वासौ निवर्तयेत्।
क्षयरोगे प्रदातव्यो रसेन्द्रस्तवराजयुक् ८८५॥
अजादुग्धश्च धारोष्णमनुपाने नियोजयेत्।
रात्रौ क्वाथं प्रयुञ्जीत श्रीखण्डं रक्तचन्दनम्॥
कर्पूरं प्रतिवापश्च शिलाजतु समन्वितम्।
क्षयरोगाद्विमुच्येत रोगी नैवाऽत्र संशयः ८८७
रसायने प्रयुञ्जीत त्रिफलासंयुतं रसम्।
घृतेन मधुना प्राश्य वलीपलितजिद्भवेत्८८८
रात्रौ क्वाथे प्रयुञ्जीत बीजकं खदिरं तथा।
भृङ्गराजं क्वाथयित्वा प्रतिवापे विनिक्षिपेत्॥
मृतं तीक्ष्णं शुक्तियष्टी बलाष्टकमतन्द्रितः।
त्रिवत्सरप्रयोगेण दिव्यदेहो भवेन्नरः ८९०
वलीपलितनाशस्तु द्विवर्षाज्जायते ध्रुवम्।
अर्शसां विनिवृत्तौ स्याद्रसेन्द्रो योगसंयुतः॥
वत्सकाऽरुष्करैर्युक्तस्तयोः क्वाथोऽनुपानतः।
शाकार्थे सूरणं देयं पक्वशुष्कं सहिङ्गुकम्॥
मासत्रयान्निवर्तन्ते सर्वाण्यर्शांसि निश्चितम्॥
भगन्दरे प्रयोक्तव्यः शिलाजतुसमन्वितः।
त्रिफलागुग्गुलुयुतो भगन्दरहरो भवेत्॥
ज्वरोक्तक्वाथयोगेन सर्वज्वरविनाशनः ८९४
वानरीबीजसंयुक्तः कामवृद्धिकरः परः।
गोकण्टको वाजिगन्धा वानरीबीजसूकरौ॥
गुडूचीसत्त्वसंयुक्तः समशर्करया युतः।
एतत्सर्वं निशीथिन्यां दुग्धेन सह मर्दयेत्॥
अतिप्रवृद्धकामः स्यादूर्ध्वलिङ्गः सदा भवेत्।
एव सूतेश्वरः सोऽयं सर्वरोगान्निवारयेत् ८९७
सर्वदा सेवनान्मर्त्यो वज्रदेहो भवेद्ध्रुवम्।
अयं रसेन्द्रः सम्प्रोक्तस्त्रिनेत्रः शास्त्रवर्त्मना॥
गुरूपदेशतो ज्ञात्वा तथा स्वानुभवेन च।
देवीशास्त्रानुसारेण विविच्य प्रतिपादितः८९९

रसाल, सर्वरोगे।

भाषा— काले वज्राभ्रकका धान्याभ्रक बनाकर धान्याम्ल (काञ्जी) मे तीनरोज रखकर चौथेरोज निकालकर कडीधूपमे सुखावे। सूखनेपर काटेवाली चौलाई और भगराके रससे तीनतीनरोज कड़ीधूपमे भावना देकर लोहेकी खरलमे लोहेके बट्टेसे घोटकर अभ्रकसे चारगुना शुद्धपारा डालकर मिलनेतक मर्दनकर भगरा और काटेवाली चौलाईके रससे पिष्ठी होनेतक मर्दनकरे फिर जभीरी, विजोरा और साधारणनीबूके रससे नमक मिलाकर ताबेके पात्रमे

डालकर तांबेकेही डंडेसे यहांतक मर्दनकरे कि वह बिल्कुल नीलवर्णहोजाय । फिर उसको पूर्वपिष्टीमे मिलाकर चणकाम्लसे मर्दनकर टिकिया बनाय सुखाकर डमरूयन्त्रमे बन्दकर चूल्हेपर चढाय दोपहर हठाग्नि देवे । स्वाङ्गशीतल होनेपर निकालकर ऊपर कहेहुएके अनुसार इसकी पिष्टी बनाकर उडावे, जबतक पारा अग्निस्थायी नहो तबतक इसीतरह करताजाय । अग्निस्थायी होनेके बाद पूर्वोक्त औषधोंके द्रवोंसे १-१ रोज स्वेदनकरनेसे यह बुभुक्षित होजायगा । फिर इसमे हेमबीज और गन्धक सोगुना जारणकरे, अगर इतना जारणकरनेकी शक्ति न होतो ६४ गुना जारणकरे । यदि इसमेभी अशक्त होतो ५० गुना जारणकरे । इससे न्यून जारण न करे । इसतरह इसजीर्णपारदको इन्द्रायणके रस और सफेद अङ्कोलकी जडके रससे ३-३ रोज मर्दनकर डमरूयन्त्रमे बन्दकर आंचदेवे । इसतरह दसरोज लगातार आंच देनेसे पारेकी भस्म होजाती है । स्वाङ्गशीतल होनेपर निकालकर देखे यदि भस्म न हुई होतो हीरा और लोहको मारनेवाली चीजोंसे मर्दनकर इसीतरह डमरूयन्त्रमे बन्दकर आंच देतो इसकी अवश्य भस्म होजाती है इसको सभालकर निकालकर रखछोडे । इसके बाद तांबे और गन्धकको वक्ष्यमाणप्रकारसे शुद्धकरे । कासा, पीतल, तांबा, विडलोह, फूल (ताम्र-वङ्गमिश्रण), वङ्ग, सीसा, सफेदकाच, तुत्थक, शिंगरिफ, गेरू, कासीस, सज्जी, सुहागा, यवक्षार, पाचोनमक ये सब समभाग लेकर काचादि समस्तवस्तुओका चूर्णकर अम्लवर्गसे भावना देकर रखछोडे । यह विड तैयार हुआ । फिर ताम्रादि सीसकान्त समस्त धातुओंके पाउडरको वज्रमूषामे डालकर धमनकरे और विडको बङ्कनालसे देताजाय, जब तमाम धातुएं जलकर ताम्रभाग अवशिष्ट रह जाय तब इसका एकसम्पुट बनावे फिर सम्पुटसे चतुर्थांश पूर्वोक्त शुद्धपारद भस्म लेवे और इससे द्विगुण गन्धक डालकर जंभीरी वगैरह किसी अम्लयोगसे एकदिन निरन्तर मर्दन कर सुखाकर ६-७ कपडमिट्टी कियेहुए मिट्टीके वर्तनमे रखदे फिर उसतांबेके सम्पुटको उल्टा रखकर गुड़चूने वगैरहसे सन्धि बन्दकर पलाशवगैरहकी कपडछान कीहुई राखसे गलेतक हंडीको भरकर ढक्कन देकर २-४ कपडमिट्टी लगाय सुखाकर चूल्हेपर खैरकी लकड़ियोसे मन्द, मध्य और खर इसक्रमसे ३ रोजकी अग्नि देकर उस तांबेके सम्पुटको निकालकर पारेसहित ४ पहरतक बकरीके दूधसे मर्दनकर गोला बनाय एक कुल्हड़ीमे बन्दकर ६-७ कपडमिट्टी देकर कुक्कुट पुटकी आंचदे । शीतलहोनेपर निकालकर फिर उसीतरह मर्दनकर गलाकर उसीके रसमे बुझावे । इसतरह सातबार करनेसे गन्धक शुद्धहोजाताहै । यह गन्धक और ऊपरकहाहुआ ताम्र प्रत्येक ३-३ पल-लेकर संभालूके रससे तीनरोज मर्दनकर पङ्कके सदृश बनाकर गोलाबनाय सुखाकर आतशीशीशी अथवा वज्रमूषामे रख वालुकायन्त्रमे धरके तीनपहर मन्दाग्नि-देकर स्वाङ्गशीतल होनेपर निकालकर योगिनी, गणेश, ब्रह्मा, विष्णु, महेश और ब्राह्मण इनकी यथाशक्ति पूजाकरके घृततैलसे अग्निको तृप्तकर रसेश्वरकी पूजा-कर रोगीकी शास्त्रोक्तविधिसे पञ्चकर्मसे शुद्धिकर दो रत्तीकी मात्रा पानके साथ देवे । मन्दाग्निमे त्रिकटुसे समस्तव्याधियोमे घृत और त्रिकटुसे, समस्त श्लेष्म-विकारोंमे त्रिकटु और अदरखके रससे, घोरसन्निपातमे त्रिकटुकेसाथ देकर ऊपरसे अदरखका रस ३ चुल्लू पिलावे तो सन्निपात अवश्य दूरहोताहै । घोर अप-स्मारमे ब्राह्मीघृतसे, ग्रहणीमे शक्करके साथ देकर चाङ्गेरीस्वरस और तक्रके साथ पकाया हुआ घी पिलावे । पथ्यमे छाछ, भात, चावल और तिपतिया के शाकके अतिरिक्त और कुछ नदे । अतिसारमे वंशलोचनकेसाथ देकर सोंठ, नागरमोथा, कुरैयाकी छाल, इन्द्रजव, देवदारु, बेलगिरी अतीस इनका अष्टमांशाऽवशेष क्वाथकर अनुपानकी जगह देनेसे

तीनरोजके अन्दर दुःसाध्य अतिसार निवृत्तहो। पैत्तिकविकारोमे वंशलोचनके साथ देकर गुडूचीका सत्त्व धारोष्णदूधकेसाथ देवे। पक्तिशूलमे त्रिकटुकेसाथ देकर करञ्ज, सज्जल, भुनाहींग अदरखकारस यथाग्निवल देकर गरमपानी पिलानेसे पक्तिशूल नष्ट होताहै। पाण्डुरोगमे लोहभस्मकेसाथ मधुमिलाकर चटाकर दूधभात खिलावे। पाण्डुरोगघ्न अनुपानकेसाथ देनेसे कामला और हलीमक निवृत्तहोवे। प्रमेहमे वङ्ग भस्म, आवलेकारस और मधुकेसाथ, शुक्रमेहमे हल्दीके सायदेकर हल्दीका क्वाथ पिलावे अथवा हरिद्राचूर्ण वङ्गभस्मके साथदे। रक्तमेहमे बोलचूर्णकेसाथ विजयसारका क्वाथ पिलावे। जलोदरमे उष्ट्रीदूधकेसाथ देवे। कुष्ठमे वाकुर्चीकेचूर्णकेसाथ देकर खैरसारका काढा पिलावे तो बहुतदिनका भी कुष्ठ दूरहो। पापाणभेद और गोखरूके साथ देनेसे पथरी दूरहो शङ्खभस्मकेसाथ देनेसे प्लीहा नष्टहो। सज्जी, सुहागा, यवक्षार, पञ्चलवण, त्रिफला, त्रिकटु, हींग और एरण्डतैलकेसाथ देनेसे समस्त गुल्म नष्टहो। निर्गुण्डीघृत १ तो., पीपल १० नगकेसाथ चटाकर निर्गुण्डीका क्वाथ पिलानेसे कास, श्वास, निवृत्तहो। क्षयरोगमे वंशलोचनकेसाथ देकर धारोष्णवकरीका दूध पिलावे। रात्रिमे लाल और सफेद चन्दनके काढेमे कपूर और शिलाजतु मिलाकर देनेसे अवश्यही क्षयरोगसे निवृत्तहो। पीपल, घी और मधुके साथ देनेसे वलीपलित नष्टहो। रातमे वीजक, खदिर और भंगरेका क्वाथ वनाकर इसमे लोहभस्म, शुक्तिभस्म मुलहठी और वलाष्टक (८ प्रकारकी वला) इनका चूर्ण डालकर पिलावे। ऐसे ३ वरसतक लगातार प्रयोग करनेसे दिव्य शरीर होवे। दोवर्षमे वलीपलित नष्ट होते है। अर्शोघ्न अनुपानके साथ देकर कुरैया और भिलावेका काढा देवे। शाकमे परिपुष्ट सूरणको सुखाकर घीमे तलकर हींग और नमकके साथ दे। ऐसे ३ महीनेतक करनेसे समस्त बवासीर दूरहो। भगन्दरमे शिलाजतुके साथ अथवा त्रिफलागुग्गुलके साथ दे। ज्वरोक्तक्वाथोंके साथ देनेसे समस्तज्वर नष्टहो, केवाचके बीजोंके साथ देनेसे कामकी वृद्धिहो। रात्रिमे गोखरू, असगन्ध, केवाचके बीज, वाराहीकन्द, गिलोयसत्व के साथदेकर दूध पिलानेसे अत्यन्त कामान्ध होजाता है। इसतरह इसरसके सेवनकरनेसे सब रोग नष्ट होते हैं। इसका सेवन यदि हमेशः रक्खे तो वज्रदेह होजाता है। यह प्रयोग शास्त्रसिद्धान्त, गुरूपदेश तथा स्वीयानुभवसे लिखा गया है ॥ १९५ ॥

## १९६ त्रिनेत्ररसः ( सप्तमः )

**रसताम्रगन्धकानां द्विगुणान्तरवर्धितांशानाम्।**
**हस्तेन मर्दितानां पुटपक्वानां निषेवितं भस्म॥**
**गुञ्जाप्रमाणमार्द्रकसिन्धूद्भवचूर्णसंयुक्तम्।**
**सैरण्डतैलमाक्षिकमथवा तद्धिङ्गुदुग्धकोपेतम्॥**
**शमयति शूलमशेषं तत्तद्रसभावितं बहुशः।**
**उपचूर्णैरनुपानैस्तैस्तैःसहितंकफानिलार्तिहरम्॥**
**एतच्च हरिणशृङ्गं मृतकाञ्चनहरिणटङ्कणोपेतम्।**
**सघृतमधुपक्तिशूलं शमयति नक्तं त्रिनेत्ररसः॥**

रससारसङ्ग्रहे, र. र. स., शूले।

भाषा—शुद्धपारा १ भाग, ताम्रभस्म २ भाग और शुद्धगन्धक ४ भाग, लेकर जभीरी वगैरहके रससे एकरोज मर्दनकर गोलावनाय सुखाकर सम्पुटमे वन्दकर चारपहर वालुकायन्त्रमे स्वेदितकर स्वाङ्ग शीतल होनेपर निकालकर १-१ रत्ती सोठ और सैन्धवके चूर्णके साथ अथवा एरण्डतैल और मधुके साथ अथवा हीग और दूधके साथ लेनेसे समस्तशूलोको यह नष्टकरताहै। तत्तद्रोगहरौषधोके काथोसे कईवारभावना देकर उन्हींके चूर्णोकेसाथ देनेसे यह तत्तद्रोगोको, कफ और वायुकी पीडाको दूरकरता है। यह रस और हरिणशृङ्ग, सुवर्णभस्म वारहसिङ्गाकी भस्म, भुनासुहागा सब समभागलेकर घी और मधुकेसाथ रात्रिमे लेनेसे यह समस्त पक्तिशूलोको दूरकरता है॥ १९६ ॥

१९७ त्रिनेत्ररसः ( अष्टमः )

पूर्वौषधीशोधितसूतकस्य
तथैव संशोधितगन्धकस्य ।
कर्षेण कर्षोन्मितमभ्रकञ्च
सिद्धं यथावल्लघुना पुटेन ॥ ९०४ ॥
सम्भावितं तद्बहुधा च घर्मे
लज्जावतीस्वाङ्गभवद्रवेण ।
सौवर्चलत्र्यूषणहिङ्गुयुक्तं
भुक्तं वयोवह्निबलाऽनुरूपम् ॥ ९०५ ॥
हरत्यतीसारमुदग्ररूपं
ज्वरं कफोत्थं ग्रहणीविकारम् ।
आध्मानमग्ने र्बलसादमर्शो-
विकारशोथानविनिद्रताञ्च ॥ ९०६ ॥

लो. प. ( स० ), अतिसारे ।

भाषा—त्रिफला, शतावरी, नागरमोथा, सुगन्धवाला, मुसली, इनप्रत्येकके रसोसे शुद्धपारेको १-१ रोज़ मर्दनकर डमरूयन्त्रसे ऊर्ध्वपातित करले । इसी तरह इनप्रत्येकके स्वरसोंमे गन्धकको गलागलाकर वुझावे । इनदोनोमेसे १–१ तोले लेकर नीलवर्ण कज्जलीकर एकतोला अभ्रकभस्म मिलाकर पूर्वोक्तऔषधियोके रसोसे १–१ रोज़ मर्दनकर गोला वनाय सुखाकर शरावसम्पुटमे वन्दकर लघुपुटकी आचदेकर स्वाङ्गशीतल होनेपर लज्जालुके अङ्गस्वरससे जितनीहोसके उतनी भावनाए देकर सचल, त्रिकटु, हिङ्गु इनसवकाचूर्ण वनाय सममात्रामे पूर्वरसमे मिलाकर रखछोड़े । इसमेसे अवस्था, अग्नि और वलके अनुसार मात्रा खाकर ज्वर, कफोत्थग्रहणीविकार, आध्मान, मन्दाग्नि, ववासीर, शोथ, और निद्रानाश इनसे निवृत्त होता है ॥ १९७ ॥

१९८ त्रिनेत्ररसः ( नवमः )

पूर्वौषधीशोधितशुद्धसूत–
गन्धाश्मशुल्वानि समानि कृत्वा ।
रसाम्बुदस्वाङ्गसमुद्भवेन
द्रवेणचाऽऽप्लाव्य पुटे लघिष्ठे ॥
सिद्धं सजीरोषणहिङ्गुयुक्तं
निहन्त्यतीसारमिदं न चित्रम् ॥ ९०७ ॥

लो. प., ( स. ), अतिसारे ।

भाषा—पूर्वरसकीतरह पारा और गन्धक शुद्धकर १–१ तोलेकी नीलवर्ण कज्जलीकर एकतोला पारदभस्म मिलाकर खैरसार और नागरमोथेके अङ्गस्वरस अथवा क्वाथमे १–१ रोज मर्दनकर गोला वनाय शरावसम्पुटमे वन्दकर लघुपुटमे पकावे । स्वाङ्गशीतल होनेपर निकालकर रखछोडे । इसमेसे १ रत्तीसे ३ रत्तीतक जीरा, मरिच और हीगके समभाग चूर्णकेसाथ लेनेसे यह अतिसारको निवृत्त करता है । इसमे आश्चर्य करनेकी जरूरत नही ॥

१९९ त्रिनेत्ररसः ( दशमः )

शुल्वं वज्रं गगनमुरगं हेमवङ्गाऽऽलताप्यं,
तारं तीक्ष्णं रसकगरलं टङ्कणं तुत्थकञ्च ।
सूतं गन्धं सममिति सुधाभास्करक्षीरपिष्टं,
वारान्सप्त त्रुटितमनिले चारुचूर्णीकृतञ्च ॥
तालीकृष्णाकनककिणिहीकङ्गुणीकाकजङ्घा–
कौन्तीकन्याकुलककटभीकोलकुद्दालकुष्ठैः ।
श्वेतास्फोतासहचरशमीशल्लकीसोमवल्ली–,
चक्राचक्राऽशनशतमखै र्भावयेत्सप्तवारम् ॥
गुञ्जोवल्लोऽखिलगदचये योजितः साऽनुपानैः,
वाते पित्ते कफगदचये सन्निपाते तथैव ।
शूलाऽऽध्माने ग्रहणिगुदजोन्मादमन्दाग्निहन्ता
पुष्टिंवीर्यंवलमतिरसोऽयं त्रिनेत्रो विधत्ते ॥

र. श , सन्निपाते ।

भाषा—तांवा, हीरा, अभ्रक, नाग, सुवर्ण, वङ्ग, हरिताल, सोनामाखी, रजत, लोह इनसबकी भस्मे, शुद्धखपरिया और वछनाग, भुनासुहागा, शुद्धतुत्थक, पारा और गन्धक ये सब समभाग लेकर पारेगन्धककी नीलवर्ण कजलीमे मिलाकर थूहर, आक इनके दूधमे सात ७ वार घोटकर गोला वनाय सुखाकर शरावसम्पुटमे वन्दकर लघुपुटकी आचदेकर स्वाङ्गशीतल होनेपर निकालकर कालीमुसली, पीपल,

धतूरा, अपामार्ग, मालकागण, काकजङ्घा, रेणुका, घीकुआर, कुलफा अथवा पटोल, कटभी—( श्वेताऽपराजिता ), वेर, कोदो, वच, अपराजिता, पीयावासा, शमी, शल्लकी, वाकुची, गुडूची, पाठा, असन, कुटज, इन प्रत्येकके रसोंसे ७–७ भावनाएं देकर ६ रत्तीकीमात्रा तत्तद्रोगहराऽनुपानके साथ देनेसे वात, पित्त, कफके रोगोका सघ, सन्निपात, शूल, आध्मान, ग्रहणी, ववासीर, उन्माद, मन्दाग्नि, इन सबको नष्टकर वलवीर्य और पुष्टिको करताहै ॥१९९॥

### २०० त्रिपुरभैरवरसः ( प्रथमः )

**भागो रसस्याऽश्महेम्नां भागो ग्राह्योऽतियत्ततः**
**तेभ्यो द्वादशभागानि ताम्रपत्राणि लेपयेत् ॥**
**पचेच्छूलहरः सूतो भवेत्त्रिपुरभैरवः ।**
**माषो मध्वाऽऽज्य संयुक्तो देयोऽस्य परिणामजे**
**अन्यस्मिन्नुवुतैलेन हिङ्गुत्रययुतो रसः॥९१२॥**

र. स , र क ल , ध., र. च , यो र , र. का , नि. र , र को., रसायनसं , र. सु., भै. सा , र. र. दी., टो, र. ( मा ), शूले ।

भाषा—शुद्धपारा, गन्धक और सुवर्णभस्म, १–१ भाग लेकर नीलवर्ण कज्जलीकर नीबूवगैरहके रसमे मर्दनकर इन तीनोसे १२ गुने ताबेके वारीक पत्रोंपर लेपकर सुखाकर शरावसम्पुटमे वन्दकर वालुकायन्त्रमे रख ४ पहरकी आचदे । स्वाङ्गशीतल होनेपर निकालकर १–१ माशा मधु और घीके साथ देनेसे यह परिणामशूलको दूरकरताहै । और दूसरे शूलोमे एरण्डतैल, हीग, सोठ, और मिर्चके साथ देनाचाहिये ॥ २०० ॥

### २०१ त्रिपुरभैरवरसः ( द्वितीयः )

**विषटङ्कवलिम्लेच्छदन्तिवीजं क्रमैधितम् ।**
**दन्त्यम्वुमर्दितं यामं रसस्त्रिपुरभैरवः ९१३**
**वल्लं व्योषेण चाऽऽर्द्रस्य रसेन सितयाऽथवा ।**
**दत्तो नवज्वरं हन्ति मान्द्यामाऽनिलशोथहा ॥**
**हन्ति शूलं सविष्टम्भमर्शांसि क्रिमिजान्गदान् ।**
**पथ्यं तक्रेण भुञ्जीत रसेऽस्मिन्रोगहारिणि ॥**

र. चि., र. च., ध., र. का., भै. र., वृ यो. त., रसायनसं., र सु., र. क., नि. र., व. रा., यो. म., नवज्वरे ।

भाषा—शुद्धवछनाग १ भाग, सुहागा २ भाग, गन्धक ३ भाग, ताम्रभस्म ४ भाग, शुद्धदन्तीवीज ५ भाग, क्रमवृद्ध लेकर पारेगन्धककी नीलवर्ण कज्जलीकर सवको इकट्ठे मिलाकर दन्तीमूलके स्वरससे मर्दनकर ३–३ रत्तीकी गोलिये वनाकर रखछोडे । इनमेसे एक २ गोली त्रिकटु अथवा अदरखके रस या शक्करके साथ देनेसे यह नवज्वर, मन्दाग्नि, वातशोथ, शूल, विष्टम्भ, ववासीर क्रिमिजरोग, इन सवको नष्ट करताहै । इसमे पथ्य छाछभातदेना ।

### २०२ त्रिपुरभैरवरसः ( तृतीयः )

**मृताऽर्कगोलकाविन्दुनिधिभागौ सुमर्दितौ ।**
**म्रक्षणाक्तौ स्नुहीक्षीरमग्नौ कर्पौ विपाचयेत् ॥**
**रत्त्यर्धमात्रो हन्त्येष रसस्त्रिपुरभैरवः ।**
**वीजपूरसितायुक्तो ग्रीष्मे शरदि वा ज्वरान् ॥**
**वीजपूराऽऽर्द्रकयुतो मधौ शेषऋतुत्रिके ।**
**आर्द्रकेणाऽहिवल्ल्या वा पत्रखण्डेन वेष्टितः ॥**

र. ( मा. ), ज्वराधिकारे ।

भाषा—ताम्रभस्म १ तोला, शुद्धजयपाल ९ तोला, लेकर थोडासा मक्खन देकर एकपहर घोटकर १ तोले थूहरका दूध डालकर मन्द अग्निसे पकावे । जव गोली वनाने लायक होजाय तव आधी आधी रत्तीकी गोलिये वनाकर रखछोड़े । इनमेसे १–१ गोली ग्रीष्मऋतुमे विजोरेके रससे सर्दीमें शक्करकेसाथ, वसन्तमे विजोरा और अदरखके रसकेसाथ वाकी तीन ऋतुओमे अदरख अथवा पानके साथ देनेसे समस्त ज्वरोको यह नष्टकरताहै ।

### २०३ त्रिपुरभैरवरसः ( चतुर्थः )

**सूतकं मरिचं शुण्ठी टङ्कणं चाऽमृतं तथा ।**
**गन्धकं चैकचत्वारि वेदवह्निधराधराः ॥**
**चूर्णितो मधुना लीढो वाते त्रिपुरभैरवः ९१९**

र प्र. सु , वाते ।

भाषा—शुद्धपारा १ भाग, मरिच ४ भा., सोठ

४भा., सुहागा ३ भा., शुद्धवछनाग और गन्धक १-१ भाग, लेकर एकदोदिन मर्दनकर रखलेवे । इसमेसे ३—२ रत्ती वातहराऽनुपानकेसाथ देनेसे यह समस्तवातरोगो को दूरकरताहै ॥ २०३

### २०४ त्रिपुरभैरवरसः ( पञ्चमः )

विषमहौषधमागधिकोषण—
　　द्युमणिरक्तकमार्द्रकमर्दितम् ।
क्रमविवर्धितमुद्दलति ज्वरं
　　त्रिपुरभैरव एष रसो ज्वरान् ॥९२०॥

भा. प्र , र ध , टो , र. को.. र (मा.), नि. र , त्रि., यो. म , र. सु., रससारसङ्ग्रह, वा., ज्वराऽधिकारे ।

**भाषा**—शुद्धवछनाग १ भाग, सोठ २ भाग, पीपल ३ भा., मरिच ४ भा., ताम्रभस्म ५ भा., शिंगरिफ ६ भा., लेकर सबका बारीकचूर्णकर शिंगरिफकेसाथ मिलाकर अदरखके रससे चारपहर घोटकर एक या दोरत्तीकी गोलिये बनाकर रखछोडे । इनमेसे १—१ गोली समयोचिताऽनुपानकेसाथ देनेसे यह समस्तज्वरोको दूरकरताहै ॥ २०४ ॥

### २०५ त्रिपुरभैरवरसः ( षष्ठः )

गन्धेशाऽऽर्कशिलाऽऽलकाऽमृततप—
　　स्युद्भूतहृद्द्रात्रिका,
तुत्थं टङ्कणमाखुहा सुदरदो—
　　वैक्रान्तनागाऽऽयसम् ।
भाव्यश्चाऽग्निमुखीजयात्रिकटुह—
　　द्वात्रीहलिन्यग्निभि—
र्भृङ्गैः सिन्धुफलैः क्रमेण भिषजा
　　पित्तैस्ततः पञ्चभिः ॥ ९२१ ॥
गुञ्जयाऽऽर्द्रकरसेन रसोऽयं
　　सन्निपातमखिलं विनिहन्ति ।
पथ्यमस्य दधिभक्तकमुक्तं
　　स्नापनं त्रिपुरभैरवनामा ॥ ९२२ ॥

र. शं., र. शि., ज्वरे । र शि , तुत्थस्थाने वङ्ग दृश्यते । भृङ्गस्थाने आभा गृह्यते । आभाशब्देन बब्बूलिका ग्राह्या ।

**भाषा**—शुद्धगन्धक, ताम्रभस्म, मैनसिल, हरितालभस्म अथवा रसमाणिक्य शुद्धवछनाग, सोनामाखी, कसीस, तुत्थ, सुहागा, सोमल, शिंगरिफ, वैक्रान्त, नाग, लोह येसब विशुद्ध और भस्म किये हुए समभागलेकर अग्निशिखा भाग, त्रिकटु, अमलोनिया, करिहारी, चित्रक, भंगरा समुद्रफल, इन प्रत्येकके स्वरससे १—१ रोज मर्दनकर पञ्चपित्तोसे १—१ भावना देकर एकएक रत्तीकी गोलिये बनाकर रखछोडे । इनमेसे १—१ गोली अदरखके रसकेसाथ देनेसे यह तमाम सन्निपातोको दूरकरताहै। इसमे पथ्य दहीभात देना और ठंढे जलसे स्नानकराना । अधिक दाह होतो ठंढेजलकी सिरपर धारा देना ॥ २०५ ॥

### २०६ त्रिपुरभैरवरसः ( सप्तमः )

त्रिंशांशहेमसहितार्धरसेन लिप्तं,
शुल्वं सगन्धमृगशृङ्गकटङ्कयुक्तम् ।
ग्रन्थीयकाऽम्बुपुटसिद्धमथद्विवल्लं,
क्षौद्राऽऽज्ययुग्व्यपनयेत्परिणामशूलम्॥९२३॥
मासत्रयप्रयोगेण रसोऽयं शूलनोदनः ।
साऽम्बूरुबूकमूलाद्यक्षीरक्वाथाऽनुपानतः ९२४

र. (मा.), शूले ।

**भाषा**—सुवर्णभस्म तीसवा भाग, शुद्धताम्रपत्र १ भाग, शुद्धपारा आधाभाग, शुद्धगन्धक, मृगशृङ्ग, सुहागा येसब १—१ भाग लेकर इनमेसे सुवर्ण भस्म और पारेको नीबूवगैरहके रससे खरलकर ताम्रपत्रपर लेपकरदे । फिर बाकीकी चीजोको पिपलामूलके रसमे मर्दनकर इसपर लेपकरदे । सूखजानेपर शरावसम्पुटमे बन्दकर ४—५ कपड़मिट्टी देकर सुखाकर लवण, भस्म अथवा वालुकायन्त्रमे बन्दकर ४ पहरकी तीक्ष्ण अग्निसे पकाकर स्वाङ्गशीतल होनेपर निकालकर खरलकर रखछोडे । इसमेसे ६—६ रत्तीकी मात्रा मधु और घीके साथ देनेसे यह परिणामशूलको दूरकरताहै । तीनमहीनेतक लगातार इसको लेकर सुगन्धवाला, एरण्डकी जड़की छाल प्रभृति शूलघ्न औषधोसे क्षीरपाक

अथवा क्वाथकरके पीनेसे यह असाध्यसे असाध्य शूलको दूरकरताहै ॥ २०६ ॥

### २०७ त्रिपुरभैरवरसः ( अष्टमः )

ताम्रश्चतुर्थांशरसोपलिप्तं
निम्बुद्रवस्थं रवितापतप्तम् ।
गन्धोपगुप्तं त्रिकटुद्विभागं
मृत्स्नाऽतिरुद्धं पुटितं दिनांशम् ॥
निसर्गशीतश्च ततोऽपनीत-
मेरण्डतैलेन निपीतमेतत् ।
गुञ्जामितं वाऽथ सितामधुभ्यां
हन्त्येष शूलं परिणामनाम ॥९२६॥
रात्रौ च चिञ्चिणीक्षारतोयं वा शीतलंजलम् ।
पीतं निवारयेच्छीघ्रं वैद्यवृन्दविवर्जितम् ॥

र. ( मा. ), टि०—त्रिकटुद्विभागमित्यस्य स्थाने पुस्तकाऽन्तरे झषदृङ्निगूढमिति पाठो दृश्यते तत्र मत्स्याक्षीकल्केन निगूढ कृत्वा पुटनीयमिति वोध्यम् ।

भाषा—एकतोले पारेको नीवूके रसमे मर्दनकर चार तोले तावेके पत्रोपर लेपकर नीवूकेरसमे डुवाकर कडीधूपमे रक्खे । जब यह एकदम गरम होजाय तब उसीरसमे तावेसे द्विगुण गन्धकको पीसकर तावेके पत्रोपर लेपकरके सुखाले । फिर इस गोलेसे दो गुने त्रिकटुके चूर्णको नीवूकेरसमे पीसकर अथवा मत्स्याक्षीके कल्कको इसपर लपेटकर सुखाले । सूखनेपर चारतह कपडेमे लपेटकर डोरेस वांधकर ऊपर ६—७ कपडमिट्टी देकर शरावसम्पुटमे वन्दकर लवण, भस्म अथवा वालुकायन्त्रमे रखकर एकदिनरात अग्निदेकर स्वाङ्गशीतल होनेपर निकालकर खरलकर रखछोडे । इसमेसे १—१ रत्ती एरण्डतैल, शक्कर अथवा मधु इनमेसे चाहेजिसके साथ लेकर रात्रिमे इमलीके क्षारके पानी अथवा ठण्ढे जलके साथ लेनेसे यह परिणाम शूलको नष्ट करता ह ॥ २०७ ॥

### २०८ त्रिपुरराजमदनरसः

कर्पूरफेनं रसजं समांशं
धत्तूरतोयैश्च विमर्द्य सूक्ष्मम् ।
मरीचमात्रं शुभपर्णयुक्तं
खादेन्नरेशस्त्रिपुरक्षितीशम् ॥ ९२८ ॥

रसायनसं., स्तम्भने ।

भाषा—शुद्धकपूर, अफीम, पारदभस्म, अभावमे रसकर्पूर ( रसयोगसागर नं० ७३ ) सव समभाग लेकर धतूरेके तैल अथवा रससे एकरोज मर्दनकर मरिच वरावर गोलिये वनाकर रखछोडे । इनमेसे १—१ गोली पकेपानकेसाथ खानेसे वीर्यका स्तम्भन होता है ॥ २०८ ॥

### २०९ त्रिपुरसुन्दररसः

सिन्दूरमभ्रं त्वथ हेममाक्षिकं
मुक्ताफलं हेम च तुल्यभागिकम् ॥
कन्याऽम्बुना मर्दय सप्तवासरान्
गुञ्जाप्रमाणां वटिकां विधेहि च ॥

भै र, आमाशयरोगे ।

भाषा—रससिन्दूर, अभ्रकभस्म, सोनामाखी, मोती, सुवर्णभस्म, ये सव समभाग लेकर घीकुंआरके रससे सातरोज मर्दनकर १—१ रत्तीकी गोलिये वनाकर रखछोडे । इनमेसे १—१ गोली मन्दाग्निनाशनानुपानकेसाथ लेनेसे यह तमाम आमाशयके रोगोंको नष्टकरताहै ॥ २०९ ॥

### २१० त्रिपुरान्तकरसः ( पित्तभञ्जनः )१

रसगन्धाऽभ्रकं तुल्यं दिनमेकं विमर्दयेत् ।
भृङ्गराजरसैः खल्वे वज्रमूषान्तरे क्षिपेत् ॥
कुक्कुटाऽऽख्यपुटे पाच्यं स्वाङ्गशीतलमुद्धरेत् ।
मत्स्याऽजकोलजैः पित्तै स्त्रियामं मर्दयेत्पृथक्
आर्द्रकस्याऽनुपानेन गुञ्जामात्रं पिवेत्तथा ।
वातिकं पैत्तिकश्चैव श्लैष्मिकश्चाऽऽहिकं ज्वरम्॥
त्रिदोषं द्वन्द्वजं हन्ति ह्यनुपानविशेषतः
तक्रभक्तं भवेत्पथ्यं तृषार्ते शर्कराजलम् ॥
शम्भुना कथितः पूर्वं रसोऽयं त्रिपुरान्तकः ॥

वै चि., व. रा, ज्वराधिकारे ।

टि०—वसवराजीयवैद्यचिन्तामण्योरयमेव योग द्वितीयस्थाने पित्तभावनारहितोऽस्ति स क्षुधापित्ते नियोजितोऽस्ति । तस्य नाम च **पित्तभञ्जन** इति ।

भाषा—शुद्धपारा और गन्धक, अभ्रकभस्म ये तीन समभागलेकर भंगरेके रससे मर्दनकर गोला बनाय वज्रमूषामे बन्दकर कुक्कुटपुटमे पकाकर स्वाङ्गशीतलहोनेपर निकालकर मछली, बकरा, सूअर इनके पित्तोसे १–१ रोज मर्दनकर १–१ रत्तीकी गोलिये बनाकर रखछोड़े । इनमेसे १–१ गोली अदरखके रसकेसाथ देनेसे वातिक, पैत्तिक और श्लैष्मिक, त्र्याहिक, त्रिदोपज और द्वन्द्वज ज्वरोको यह अनुपानभेदसे नष्ट करता है । इसके ऊपर मछभात पथ्यदेना । प्यासलगने पर शक्करका शरबत देना ॥ २१० ॥

## २११ त्रिपुरान्तकरसः ( द्वितीयः )

रससममृतशृङ्गं शृङ्गवेरं विडङ्गं,
मधुरदहनपाठाः सिन्धुवारश्च वन्ध्या ।
त्रिफलकनकबीजान्यृद्धिवृद्धी निशे द्वे;
छगलसलिलपिष्टं सर्वमेतेन जाता ॥
लघुबदरसमानस्थूलगोली नराणां,
हरति पवनपित्तश्लेष्मसञ्जातकुष्ठम् ॥ ९३४ ॥
उक्तस्त्रिपुरया पूर्वं रसोऽयं त्रिपुरान्तकः ।
सर्वदोषोत्थकुष्ठघ्नः कृपानिघ्नमनस्कया ९३५

र. र. स., र. को., कुष्ठे ।

भाषा—पारद और मुर्दासङ्गभस्म, सोठ, विडङ्ग, मुलहठी, चित्रक, पाठा, निर्गुण्डी, बाझखेखसाकाकद, त्रिफला, धतूरेकेबीज, ऋद्धि, वृद्धि, दोनो हल्दी, सब समभाग लेकर बारीक चूर्णकर बकरेके मूत्रमे १–२ रोज मर्दनकर छोटे बेर बराबर गोलिये बनाकर रखछोड़े । इनमेसे १–१ गोली कुष्ठहराऽनुपानके साथ देनेसे तथा चने, घी और शक्कर पर रखनेसे यह वातज, पित्तज, श्लेष्मज, तमामकुष्ठोको दूर करताहै । मनुष्योपर दया करके इसको त्रिपुरादेवीने कहाहै ॥ २११ ॥

## २१२ त्रिपुरारिरसः

हुताशमुखसंशुद्धं रसं ताम्रञ्च गन्धकम् ।
लौहमभ्रविषश्चैव सर्वं कुर्यात्समांशकम् ९३६
रसार्धं मृतरूप्यञ्च शृङ्गवेराऽम्बुमर्दितम् ।
द्विगुञ्जं मधुना देयं सितयाऽऽर्द्ररसेन वा९३७
ज्वरमष्टविधं हन्ति वारिदोषभवन्तथा ॥
प्लीहानमुदरं शोथमतिसारं विनाशयेत् ॥
रोगानेतान्निहन्त्याशु शङ्करस्त्रिपुरं यथा ९३८

भै. र., र. मु., ज्वरे ।

भाषा—अग्निस्थायी किया हुआ पारा, शुद्धताम्र और गन्धक, लोहभस्म, अभ्रकभस्म, शुद्धबछनाग ये सब १–१ तोला, रजतभस्म आधा तोला इन सबकी कज्जली बनाय अदरखके रसमे १–२ रोज मर्दनकर २–२ रत्तीकी गोलिये बनाकर रखछोड़े । इनमेसे १–१ गोली मधु, शक्कर, अथवा अदरखके रसके साथ देनेसे आठप्रकारका ज्वर, जलदोषज्वर, प्लीहा, उदर, शोथ, अतिसार इन सब रोगोको यह इसतरह नष्ट करताहै जैसे कि शङ्करने त्रिपुरका नाश किया था ॥ २१२ ॥

## २१३ त्रिफलागुटी

त्रिफलारुष्करलौहैःसावल्गुजभृङ्गलाङ्गलीव्योषैः
सगुडैर्वराहकन्दैः पलिकैरेकत्र सम्मिश्रैः ॥
गुटिकां प्रकल्प्य खादेदेकैकामक्षसम्मितांप्रातः
कुष्ठं दद्रुकिलासं जित्वा वर्षेण सर्वथा पलितम्
जीवति वर्षशतं वै दीप्तहुताशो युवेव सोत्साहः

नि. र., यो. र., त्वग्दोषे ।

टि०—अत्र योगे अक्षसम्मितामित्यस्य स्थाने माषसम्मितामिति पाठोऽस्माभिर्नियोजितोऽस्ति, माषकप्रमाणात्क्रमेण यावत्सात्म्य वृद्धि करणीया ।

भाषा—त्रिफला, भिलावा, लोहभस्म, बाकुची, भंगरा, करिहारी, त्रिकटु, गुड़, वाराहीकन्द, ये प्रत्येक १ पल लेकर सबका बारीक चूर्णकर १–१ माशेकी गोलिये बनाकर रखछोड़े । इनमेसे १–१ गोलीसे शुरूकर जहातक सहन होसके वहातक रोज बढ़ाताजाय । इसमे पथ्य चनेकी रोटी, घी और शक्कर के सिवाय कुछ न खायतो दद्रु, कुष्ठ, श्वित्र, वली, पलित इनसबसे निवृत्तहोकर एकवर्षमे दिव्यशरीर होकर दीप्ताऽग्नियुक्त सोवर्षतक जीताहै ॥

## २१४ त्रिफलापारदयोगः

त्रिफला पारदः कृष्णा गुडेन सह मोदकः ।
सप्तरात्रेण हन्त्येतत्परिणामभवां रुजम् ९४१

र. क परिणामशूले ।

भाषा—त्रिफला, पारदभस्म अथवा रससिन्दूर और पीपल सव समभाग लेकर बराबरके पुराने गुड़केसाथ ३–३ माशेकी गोलिये वनाकर रखछोड़े इनमेसे १–१ गोली परिणामशूलहरानुपानके साथ देनेसे सातदिनमे यह परिणामशूलको नष्टकरता है ॥

## २१५ त्रिफलाऽभ्रकम्

फलत्रिकक्षोदसमानमभ्रकं
यदा विलीढं मधुना ससर्पिषा ।
समाः सहस्रं वितनोति जीवितं
विजित्य नूनं पलितं वलीयुतम् ९४२

लो प ( स. ) रसायने ।

भाषा—त्रिफलाके चूर्णकी वरावर अभ्रकभस्म मिलाकर १–१ माशा मधु और घीकेसाथ रोज्ञ खानेसे १०० वर्षतक वलीपलित रहित होकर जीता है ॥ २१५ ॥

## २१६ त्रिफलामण्डूरम् ( प्रथमम् )

त्रिफला कुण्डली भृङ्गकेशराजाऽऽटरूषकम् ।
शतावरी श्रावणी च वलाकूलकपर्पटाः ९४३
भार्ङ्गी किराततिक्तश्च निम्बं मण्डूकपर्णिका ।
कषायै र्भावयेदासां मण्डूरं बहुवार्षिकम् ९४४
त्रिफलाया रसे पूते पचेदष्टगुणे ततः ।
मण्डूरेण समं दद्यात्सिता सर्पिः सुमाक्षिकम्
त्रिकटुत्रिफलामुस्तं विडङ्गाऽजाजिचित्रकम् ।
यवानी मधुकं धान्यं चातुर्जातं च पादिकम् ।
भक्षयेत्तद्यथाकालमम्लपित्तेन पीडितः ९४६

र. का , पाण्डुरोगे ।

भाषा—त्रिफला, गुडुच, भंगरा, कालाभंगरा, अड्डूसका पञ्चाङ्ग, शतावर, गोरखमुण्डी, बला, पटोल, पित्तपापड़ा, भारङ्गी, चिरायता, निम्बपञ्चाङ्ग, ब्राह्मी, इनसबकी १–१ भावना मण्डूरभस्ममे देकर मण्डूर से अठगुनीत्रिफलाके काढेमे इसको मधुर आंचसे पकाकर सुखाकर वरावरकी शक्कर, मधु और घी मिलावे । तथा त्रिकटु, त्रिफला, नागरमोथा, विडङ्ग, जीरा, चित्रक, अजवाइन, मुलहठी, धनिया, चातुर्जात, सव समभाग लेकर कूटकपड़छानचूर्णकर मण्डूरसे चतुर्थांश उसमे मिलावे । इसमेसे अपनी प्रकृतिके अनुसार मात्रामे अम्लपित्तहरानुपानकेसाथ खानेसे यह अम्लपित्तको दूरकरताहै ॥ २१६ ॥

## २१७ त्रिफलामण्डूरम् ( द्वितीयम् )

गोमूत्रसिद्धमण्डूरं त्रिफलाचूर्णसंयुतम् ।
विलीढं मधुसर्पिर्भ्यां शूलं हन्त्यम्लजित्परम्

र र , भै र., ध., र. क ल., च. द , वै. चि., टो , व रा., नि र , शूले । नि. र., च. द , गोमूत्रमण्डूर । क्वचित् शूलं हन्ति त्रिदोषजमिति पाठान्तरम् ।

भाषा—बहेड़ेके कोयलोमे पुराने मण्डूरको गरम कर गोमूत्रमे यहातक बुझावे कि उसका बारीक चूर्ण होजाय फिर उसी गोमूत्रमे पीसकर टिकिया वनाकर आचदे । जव वारितरभस्म होजाय तव वरावरका त्रिफलाका चूर्ण मिलाकर रखछोडे । इसमेसे ३–३ माशे मधु और घीकेसाथ चाटनेसे यह शूल और अम्लपित्तको दूरकरता है ॥ २१७ ॥

## २१८ त्रिफलामण्डूरम् ( तृतीयम् )

त्रिफलारसे विपक्वं द्विगुणगुडं लोहजं किट्टम् ।
भुक्तं जयति च शूलं चिरजं हृद्रोगजं सपदि ॥
कलायचूर्णभागौ द्वौ तावल्लौहस्य चूर्णकम् ।
कारवेल्लपलाशस्य रसेनैव विमर्दयेत् ॥ ९४९ ॥
मण्डाऽनुपानं तल्लिह्यात्कर्षमात्रं यदृच्छया ।
जरत्पित्तं जयत्याशु घोरमन्नद्रवं तथा ९५० ॥

र , च द., शूले । टि०—प्रथममण्डूरेण समानोऽयं योगः । मूत्रेण भस्मीकृत गोमूत्रमण्डूरेऽस्ति मण्डूरम्, अत्र तु त्रिफलासिद्धमित्येव विशेषोऽस्ति, अनुपानकृतविशेषस्तु न योगान्तरे हेतुस्तस्याऽनवस्थिततत्वात् । अत्र यद्यपि कर्षपरिमिता मात्रोक्ता पर माषत्रयादारम्भ. करणीय इति ।

भाषा—त्रिफलाके अङ्गस्वरस अथवा क्वाथमे मण्डूरको गरम करकरके यहातक बुझावे कि जीर्णशीर्ण होजाय फिर इसीमे घोटकर टिकिया बनाय सुखाकर यहातक पुटे दे कि वारितर भस्म होजाय फिर द्विगुणगुड मिलाकर खिलानेसे पुरानेशूल और हृद्रोगको बहुतशीघ्र नष्टकरताहै। इसमण्डूरका १ भाग, खिसारी अथवा मटरकाचूर्ण २ भाग लेकर करेला और पलाशके रससे एकरोज मर्दनकर गोलिये बनाकर रखछोड़े। इनमेंसे १–१ गोली माडके साथ देनेसे जरत्पित्त और घोरअन्नद्रवजशूल नष्ट होताहै ॥ २१८ ॥

## २१९ त्रिफलामोदकः

त्रैफलस्य तु चूर्णस्य पलानि दशपञ्च च ।
सप्त चैव विडङ्गानां लोहचूर्णं पलद्वयम् ९५१
शतं भल्लातकानाञ्च पलानि दश बाकुची ।
शिलाजतु पलार्द्धन्तु द्वे पले गुग्गुलोस्तथा ॥
पलं पुष्करमूलस्य पलार्द्धं त्रैवृतं तथा ।
सचित्रकं समरिचं पिप्पलीविश्वभेषजम् ९५२
त्वक्पत्रं कुङ्कुमं मुस्ता कार्षिकानुपकल्पयेत् ।
यावन्त्येतानि चूर्णानि तावत्खण्डं प्रदापयेत् ॥
पालिकान्मोदकान्कृत्वा प्रातरुत्थाय नित्यशः।
एकैकं भक्षयेत्प्राज्ञो यथेष्टं चाऽत्र भोजनम् ॥
कुष्ठान्यष्टादशाऽपीह प्लीहगुल्मभगन्दरान् ।
अशीतिं वातजान्रोगांश्चत्वारिंशच्च पैत्तिकान् ।
विंशतिंश्लैष्मिकांश्चाऽपिसंसृष्टान्सान्निपातिकान्
शलाकाजेयरोगांश्च शिरोऽक्षिभ्रगतांस्तथा९५७
कण्ठतालुगतांश्चापि जिह्वायामुपजिह्वकम् ।
ऊर्द्ध्वजत्रुगते रोगे भुक्तस्योपरि दापयेत् ९५८
शारीरे दापयेत्पूर्वमौदरे मध्यभोजने ।
निर्दिष्टरोगांश्छमयेत्क्रियमाणं रसायनम् ९५९

यो. र., नि. र, रसायने ।

भाषा—त्रिफलाका चूर्ण १५ पल, विडङ्गतण्डुल ७ पल, लोहभस्म २ पल पकेहुए भिलावे १०० नग, बाकुचीके वीज १० पल, शिलाजतु आधापल, गुग्गुलु, २ पल, पोहकरमूल १ पल, निशोत आधापल, चित्रक, मरिच, पीपल, सोठ, तज, पत्रज; केसर, नागरमोथा ये प्रत्येक १ तोला लेकर कपडछान चूर्णकर गुग्गुलु और भिलावोको कूटकर उनदोनोकी बराबर गोमूत्रमे पिसाहुआगुडूचीका कल्क देकर गोमूत्रकेसाथ एकदोरोज खरलकरे। फिर सुखाकर इस चूर्णमे मिलादें। इस समस्त चूर्णकी बराबर मिश्री अथवा शक्करकी चाशनी बनाकर १–१ तोलेके लड्डू बनाकर रखछोड़े। इनमेसे शरीरशोधनकर १–१ लड्डू रोज खाकर ऊपरसे दूधपीवे। जैसे जैसे सात्म्य होताजाय, वैसे वैसे मात्रा बढाकर एकपलतक कायमकरे। इसके सेवनसे १८ कुष्ठ, प्लीह, गुल्म, भगन्दर, अस्सीप्रकारके वातरोग, ४० पित्तरोग और २० श्लेष्मरोग, द्वन्द्वज और सान्निपातिक, शलाकासे जीतनेयोग्यरोग, शिर-आख और भ्रूगतरोग, कण्ठ-तालु-जिह्वागत रोग नष्ट होते है। ऊर्द्ध्वजत्रुगतरोगोमे भोजनकेऊपर देना, साधारणरोगोमे भोजनके पहिले, उदररोगोमे भोजनके बीचमे देना। इसमे आहार विहारका विशेष नियन्त्रण नही है ॥ २१९ ॥

## २२० त्रिफलायसचूर्णम्

त्रिफलाद्विकरञ्जाऽग्निकुण्डलीचूर्णसंयुतम् ।
पाण्डुरोगी पिबेल्लोहरजस्तक्रेण मण्डलम् ९६०

व-रा., पाण्डुरोगे ।

भाषा—त्रिफला, दोनों करञ्ज, चित्रक, गुडुच, येसब समभागलेकर चूर्णकर सबकी बराबर लोहभस्म मिलाकर रखछोडे। इसमेसे ३–३ माशे पाण्डुहरानुपानकेसाथ देनेसे अथवा तक्रके साथदेनेसे एक मण्डलमे यह पाण्डुरोगको दूरकरताहै ॥२२०॥

## २२१ त्रिफलारसायनम् ( प्रथमम् )

त्रिफलायाः पलशतं पृथग्भृङ्गजभावितम् ।
विडङ्गं लोहचूर्णञ्च दशभागसमन्वितम् ॥
शतावरीगुडूच्यग्निपलानां शतविंशतिः ।

मध्वाऽऽज्यतिलजै र्लिह्याद्वलीपलितवर्जितः ॥
शतमब्दान् हि जीवेत सर्वरोगविवर्जितः ॥
आग्नेयपुराणे, रसायने ।

भाषा—१०० पल त्रिफलाकाचूर्ण लेकर भांगरेके रसकी सातभावनाएं देकर विडङ्गतण्डुल और लोहभस्म प्रत्येक १० भाग, शतावर, गुडूची, मिलावे और चित्रक येप्रत्येक ४० पल लेकर बारीक कपडछान चूर्णकर रखलेवे । इसमेसे १ तोलेसे आरम्भकर २॥ तोलेतक घी और मधुकेसाथ मिलाकर सालभर खानेसे वलीपलित और समस्तरोगोसे रहितहोकर सो वर्षतक जीताहै ॥ २२१ ॥

### २२२ त्रिफलारसायनम् ( द्वितीयम् )

त्रिफलायाः पलशतं चूर्णं भृङ्गभवाऽम्बुना ।
भावयेत्सप्त वारांस्तु छायाशुष्कन्तु कारयेत् ॥
पादं गन्धकचूर्णस्य तदर्धं पारदं क्षिपेत् ।
लिह्यान्मधुघृताभ्याञ्च मात्रया प्रत्यहं पुमान्॥
जीर्णे भुञ्जीत लघ्वन्नं गुणानेतानवाप्नुयात् ।
प्रसन्नदृष्टिरव्याधि र्जीवेद्वर्षशतत्रयम् ॥९६५॥
र. र., ध., रसायने ।

भाषा— १०० पल त्रिफलाके चूर्णको भांगरेके रसकी सात भावनाएं देकर छायाशुष्ककरे । इसमे चतुर्थांश शुद्धगन्धक और गन्धकसे आधी पारदभस्म या शुद्धपारद लेकर पारेगन्धककी नीलवर्ण कज्जलीमे मिलाकर रखछोडे । इसमेसे तीनमाशेसे १ तोलेतक घी और मधुकेसाथ चाटकर जीर्णहोनेपर हलका अन्न खानेसे समस्तव्याधियोसे निवृत्त होकर दिव्यदृष्टियुक्त ३०० वर्षतक जीसक्ताहै ॥

### २२३ त्रिफलारसायनम् ( तृतीयम् )

त्रैफलेनाऽऽयसीं पात्रीं कल्केनाऽऽलेपयेन्नवाम्
तमहोरात्रिकं लेपं पिबेत्क्षौद्रोदकाऽऽप्लुतम् ।
प्रभूतस्नेहमशनं जीर्णे तत्र प्रशस्यते ।
अजरोऽरुक् समाभ्यासाज्जीवेच्चैव समाः शतम्
च, स, र. (मा.), रसायने । र. (मा.) त्रिफलाकान्तयोगः ।

भाषा—एकतोले अथवा एकपल त्रिफलाके कल्कसे कान्तलोह अथवा लोहके नये घडेमे भीतर लेपकर एक रात्रिभर रहनेदे । सुवहमे पानीसे धोकर उसपानीमे अन्दाजसे मधुमिलाकर पीवे और अधिक स्निग्ध भोजनकरे । इसके १ वर्ष प्रतिदिनके अभ्याससे १०० वर्षतक नीरोगहोकर जीसक्ता है ॥ २२३ ॥

### २२४ त्रिफलारसायनम् ( चतुर्थम् )

सर्वलोहैः सुवर्णेन वचया मधुसर्पिषा ।
विडङ्गपिप्पलीभ्याञ्च त्रिफला लवणेन च ॥
संवत्सरप्रयोगेण मेधास्मृतिबलप्रदा ।
भवत्यायुःप्रदा धन्या जरारोगनिबर्हणी ॥
च स, रसायने ।

भाषा—समस्तलोहभस्मोकेसाथ अथवा सुवर्णभस्म अथवा बचा अथवा मधु,घृत अथवा विडङ्ग,पीपल अथवा लवण इनमेसे चाहे जिसकेसाथ त्रिफलाका एक वर्षभर प्रयोग करनेसे यह मेधा, स्मृति, बल और आयु इनको देती है । और बुढापेको दूर करती है ॥

### २२५ त्रिफलालोहम् ( प्रथमम् )

त्रिफलामुस्तवेल्लैश्च सितया कणया समम् ।
खरमञ्जरिबीजैश्च लौहं भस्मकनाशनम् ॥
र स, यो. म, र सि, र. क, र चि, भस्मके ।

भाषा—त्रिफला, नागरमोथा, विडङ्ग, शक्कर, पीपल, अपामार्गके बीज, इन प्रत्येकमेसे चाहे जिसकेसाथ लोहभस्म लेनेसे भस्मकरोगका नाश होता है ॥ २२५ ॥

### २२६ त्रिफलालोहम् ( द्वितीयम् )

तीक्ष्णाऽयश्चूर्णसंयुक्तं त्रिफलाचूर्णमुत्तमम् ।
क्षीरेण पाययेद्धीमान्सद्यः शूलनिवारणम् ॥
र स., र चि., ध, भा. प्र, र सु., यो म, र., लो प., चि. क्र., च द, टो., वृ मा, र. क, शूले । भा प्र., सितामधिकतया प्रक्षिप्य मधुना लेहनमुक्तम्, प्रमेहाधिकारे पाठ –यो. म, र. क., वृ मा, चि. क्र., मधुसर्पिर्भ्यां लेहनमुक्तं, लोहपद्धत्यां रसकामधेनौ च तीक्ष्णस्थाने ताम्रं नियुज्य त्रिफलार्के इति नाम स्थापितम् । अम्लपित्ताऽधिकारे चेति विशेषः ।

**भाषा**—त्रिफलाकाचूर्ण और लोहभस्म ये समभाग मिलाकर दूधकेसाथ पिलानेसे तत्क्षण शूल दूर होताहै।

## २२७ त्रिफलालोहम् ( तृतीयम् )

त्रिफलामृतलोहञ्च भृङ्गराजञ्च चूर्णितम् ।
चूर्णमर्जुनपत्रस्य त्रिजातकशिलाजतु ॥९७२॥
त्र्यूषणं तुल्यतुल्यांशं सर्वेषाञ्च समांशतः ।
क्षौद्रेण वटिका कार्या कर्षमात्रान्तु भक्षयेत् ॥
सर्वज्वरहरः श्रेष्ठो ह्यनुपानं प्रकल्पयेत् ९७३

र. र., ग नि., र. क ल, र. का ( लोहगुटी ) ज्वराऽधिकारे–ग.नि, घृतक्षौद्ररसायनं विहितम्-र. क. ल, सर्वसमा सिता निक्षिप्ता । तथा च त्र्यूषणं तुल्यतुल्याशमित्यस्यस्थाने त्र्यूषण तुल्यतुल्याशमिति पाठो दृश्यते नाम च ज्वरान्तकेति स्थापितम् ।

**भाषा**—त्रिफला, लोहभस्म, भंगरा, अर्जुनके-पत्र, त्रिजात, शिलाजतु, त्रिकटु ये सब समभाग लेकर सबकी बराबर मधु मिलाकर १–१ तोलेकी गोलिये बनाकर रखछोडे । इनमेसे १–१ गोली समयोचिताऽनुपानकेसाथ देनेसे यह समस्तज्वरोंको दूर करता है ॥ २२७ ॥

## २२८ त्रिफलालोहम् ( बृहत् ) ४

द्व्याढकं त्रिफलायाश्च चतुर्गुणजलेपचेत् ।
पादाऽवशिष्टं विज्ञाय कषायमवतारयेत् ९७४
सुतप्तं निर्वपेल्लोहं गुडूच्यर्द्धं शतं तथा ।
सर्पिषः षोडशपलं तच्चूर्णैः सह योजयेत् ॥
गुडूचीकन्दकदलीतालमूलीयवासकम् ।
चित्रकं पिप्पलीमूलं चविका जीरकद्वयम् ॥
त्वगेलाऽरुष्करव्योषद्विक्षारलवणत्रयम् ।
विडङ्गं टङ्कणक्षारं यवानी द्विपलिकांशिकान्॥
लोहं पचेत्तदैकध्यं यावत्सान्द्रत्वमागतम् ।
भक्षयेन्मधुसर्पिर्भ्यां यथासात्म्यञ्च भोजनम् ॥
वातजं पित्तजं शूलं कफजं द्वन्द्वजं तथा ।
परिणामसमुत्थञ्च सन्निपातसमुद्भवम्॥९७९॥
अष्टादशविधं कुष्ठं पाण्डुरोगं भगन्दरम् ।
मन्दाग्निं गुदजञ्चैव जयेदेतन्न संशयः॥९८०॥

र र., परिणामशूले ।

**भाषा**—दोआढक त्रिफलाके जवकुटचूर्णको चौगुने पानीमे पकाकर चतुर्थांशाऽवशेषरहनेपर उतारकर छानकर ५० तोले लोहभस्मको अग्निसात् कर इसमे बुझावे । फिर इतनाही गुडूचीकाचूर्ण और १६ पल घी डाले । फिर गुडूचीकन्द, केले-काकन्द, तालमूली, जवास, चित्रक, पिपलामूल, चव्य, दोनोजीरे, तज, इलायची, भिलावे, त्रिकटु, सज्जी, यवक्षार, तीनोनमक, विडङ्ग, सुहागा, अज-वाइन ये प्रत्येक २–२ पल डालकर पकावे । और चलातारहे । जब वह घट्ट होजाय तब उतारकर रखछोडे । इसमेसे उचित मात्रामे अर्थात् १ तोलेसे २ तोले तककी मात्रा मधुकेसाथ मिलाकर खाकर जो अनुकूलहो वह भोजनकरे । इससे वात, पित्त, कफज तथा द्वन्द्वजशूल, परिणामज और सन्निपात-जशूल, अठारहप्रकारके कुष्ठ, पाण्डुरोग, भगन्दर, मन्दाग्नि, बवासीर, ये सब रोग दूर होते है ॥२२८

## २२९ त्रिफलालोहम् ( पञ्चमम् )

त्रिफलालोहशिलाजतुपथ्याचूर्णञ्च लीढमेकैकम्
मधुनाऽसुरान्सुरा इव सर्वान्मेहान्निवारयति ॥

टी०, प्रमेहाऽधिकारे ।

**भाषा**—त्रिफला, लोहभस्म, शिलाजतु, हर्रे ये प्रत्येक मधुकेसाथ चाटनेसे समस्तप्रमेह नष्ट होते है ॥

## २३० त्रिफलालोहम् ( षष्ठम् )

त्रिफलां कटभीं चव्यं बिल्वमध्यमयोरजः ।
रोहिणीं कटुकां मुस्तं कुष्ठं पाठाञ्च हिङ्गु च ॥
मधुकं मुष्ककयवक्षारौ त्रिकटुकं वचाम् ।
विडङ्गं पिप्पलीमूलं स्वर्जिकां निम्बचित्रकौ ॥
मूर्वाऽजमोदेन्द्रयवान् गुडूचीं देवदारु च ।
कार्षिकं लवणानाञ्च पञ्चानां पलिकान् पृथक्॥
भागान् दग्ध्वा त्रिकुडवे घृततैलेन मूर्च्छितान्
अन्तर्धूमं शनैर्दग्ध्वा तस्मात्पाणितलं पिबेत् ॥
सर्पिपाकफवातार्शो ग्रहणीपाण्डुरोगवान् ।
प्लीहमूत्रग्रहश्वासहिक्काकासक्रिमिज्वरान् ॥
शोषातिसारौ श्वयथुं प्रमेहानाहहृद्ग्रहान् ।

हन्यात्सर्वविषश्चैव क्षारोऽग्निजननो वरः ॥
जीर्णे रसै र्वा मधुरैरन्नं स्यात्पयसाऽपि वा ॥
च. स., ग्रहणीरोगे ।

भाषा—त्रिफला, मालकंगनी, चव्य, विल्वमज्जा, लोहभस्म, कुटकी, नागरमोथा, कुठ, पाठा, हींग, मुलहठी, मुष्कक्षार, यवक्षार, त्रिकटु, वचा, विडङ्ग, पिपलामूल सज्जी, नीमकीछाल, चित्रक, मूर्वा, अजमोद, इन्द्रजव, गुडूची, देवदारु, ये प्रत्येक १ कर्ष, पाचोनमक १–१ पल, दही १२ पल, घी और तैल इतना डाले कि सब चीजे तर होजांय । फिर इन सब चीजोको कूटकपड़छानकर नये मजबूत मिट्टीके घडेमे डाल मुह वन्दकर ३–४ कपड़मिट्टी समस्तपर देकर सुखाकर चूल्हेपर रखकर यहातक आंचदे कि तमाम जलजाँयँ । स्वाङ्ग शीतल होनेपर निकालकर खरलकर रखछोड़े । इसमेसे १–१ तोला घीकेसाथ देनेसे कफ और वायुके ववासीर, ग्रहणी, पाण्डु, प्लीहा, मूत्रग्रह, श्वास हिचकी, कास, क्रमि, ज्वर, शोष अतिसार, शोथ, प्रमेह, आनाह, हृद्ग्रह, समस्तविष इन सबको दूरकर अग्निको पैदा करता है । दवा पचजानेपर मधुर मासरसोसे अथवा दूधकेसाथ भोजनदे ॥ २३० ॥

### २३१ त्रिफलालोहम् ( सप्तमम् )

फलत्रयं लोहरजोविडङ्गं
शैलोत्थमुस्ताऽग्निसुताप्यचूर्णम् ।
क्षौद्रेण लीढं प्रकरोति दार्ढ्यं
कोष्ठाऽग्निवृद्धिं कृशतां क्षिणोति ॥
ना वि, रसायने ।

भाषा—त्रिफला, लोहभस्म, विडङ्ग, शिलाजीत, नागरमोथा, चित्रक, सुवर्णमाक्षिक, सव समभागलेकर इकट्ठेकर रखछोड़े । इसमेसे एकमाशेसे तीनमाशेतककी मात्रा मधुकेसाथ चाटनेसे शरीरकी दृढताको करता है । मन्दाग्नि और कृशताको दूर करता है ॥२३१॥

### २३२ त्रिफलालोहम् ( अष्टमम् )

चूर्णानि लोहत्रिफलानिशानां
क्षौद्रेण लीढानि पृथक् समं वा ।
मेहान्समस्तानपि नाशयन्ति
पीतः महाऽनेन रसो गुडूच्याः ॥
र. को., प्रमेहाधिकारे ।

भाषा—लोहभस्म, त्रिफला, हल्दी, दारुहल्दी, ये सव समभागलेकर चूर्णकर रखछोड़े । अथवा इन सवको अलग अलग या इकट्ठे मिलाकर उचितमात्रासे लेनेसे और ऊपर गुडूचीका रस पीनेसे समस्तप्रमेह नष्ट होते है ॥ २३२ ॥

### २३३ त्रिफलालोहम् ( नवमम् )

वरावरीव्योपवलाद्वयानां
रजोरजोलोहसमुद्भवश्च ।
समं विलीढं मधुना घृतेन
क्षयं ससैन्यं विनिहन्त्यवश्यम्॥९९०॥
लो. प. ( स. ), क्षये ।

भाषा—त्रिफला, शतावरी, त्रिकटु, वला, नागवला, येसव समभाग लेकर वरावरकी लोहभस्म मिलाकर रखछोडे । इसमेसे अवस्थोचितमात्रा मधु और घीकेसाथ चटानेसे यह समस्त उपद्रवसहित क्षयको दूर करता है ॥ २३३ ॥

### २३४ त्रिफलालोहम् ( सोमलसत्त्व )१०

गण्डमालां जयेल्लोहं पटुक्षारफलत्रयैः ।
लवङ्गत्र्यूपसंयुक्तं सत्त्वं सोममलस्य वा ९९१
र का., गण्डमालायाम्

भाषा—तीनोलवण ( विड, सैन्धव और रुचक), सज्जी, यवक्षार, सुहागा, त्रिफला येसव समभाग, इनसवकी वरावर लोहभस्म मिलाकर उचितमात्रामे खानेसे अथवा लौग और त्रिकटु ६–६ रत्तीकेसाथ सोमलकासत्त्व आधे चावलभर खानेसे मनुष्य गण्डमालाको जीतताहै ॥ २३४ ॥

### २३५ त्रिफलालोहम् ( एकादशम् )

त्रिफला मुस्तकं व्योषं विडङ्गं पुष्करं वचा ।
चित्रकं मधुकश्चैव पलांशं श्लक्ष्णचूर्णितम् ॥

अयश्चूर्णपलान्यष्टौ तावानेव च गुग्गुलुः ।
आलोड्य मधुनोपेतं पलद्वाशकेन च ॥९९३॥
प्रातर्विलिह्य भुञ्जानो जीर्णे तस्मिञ्जयेद्द्विजः ।
दुःसाध्यमामवातञ्च पाण्डुरोगं हलीमकम् ॥
जीर्णान्नसम्भवं शूलं श्वयथुं विषमज्वरम् ९९४

भै. र, र. र, आमवाते । र. च., वृ. यो. त, नि. र., यो. र., र का, लोहगुग्गुलु. शूलाऽधिकारे । र. र. त्रिफलागुग्गुलु' ।

**भाषा**—त्रिफला, नागरमोथा, त्रिकटु, विडङ्ग, पोहकरमूल, वचा, चित्रक, मुलहठी ये प्रत्येक १ पल, लोहभस्म और गुग्गुलु ८–८ पल, लेकर सबको कूटकपडछानकर लेवे । गुग्गुलुको गायकाघीदेकर एकरोजकूटे जिसमे कि इसका द्रव होजाय, फिर सबचीजोका चूर्ण और १२ पल मधु मिलाकर एकजीव करलें । इसमेसे एकमाशेसे तीनमाशेतककी मात्रालेकर उचिताऽनुपानसे देनेसे दुःसाध्य आमवात, पाण्डु, हलीमक, परिणामशूल, शोथ, विषमज्वर, इनको यह नष्टकरताहै ॥ २३५ ॥

### २३६ त्रिफलालोहम् ( निशालोहम् )१२

लोहचूर्णं निशायुग्मं त्रिफलां कटुरोहिणीम् ।
प्रलिह्य मधुसर्पिर्भ्यां कामलाऽऽर्तः सुखी भवेत्

र. कौ., वै चि., च. स.,यो. र,वै. क, र का, ध., र. क. ल, र सु, र सं यो म, र. चं, र. चि, कामलायाम् । क्वचिन्निशालोहमिति नाम्ना व्यवहृतम् ।

**भाषा**—लोहभस्म, दोनोहल्दी, त्रिफला, कुटकी सब समभाग लेकर कूटकपड़छानकर रखछोडे । इसमेसे ३–३ माशेकी मात्रा मधु और घींकेसाथ लेनेसे प्रमेह, कामला, प्लीह, यकृत्, जीर्णज्वर, नष्टहोताहै ॥ २३६ ॥

### २३७ त्रिभुवनकीर्तिरसः ( प्रथमः )

हिङ्गुलञ्च विषं व्योषं टङ्कणं मागधीं शिफाम् ।
सञ्चूर्ण्य भावयेत्त्रेधा सुरसाऽऽर्द्रकहेमभिः ॥
रसस्त्रिभुवने कीर्तिर्गुञ्जैकाऽऽर्द्ररसेन वै ।
विनाशयेज्ज्वरान् सर्वान् सन्निपातांस्त्रयोदश ॥

यो र., रसायनस., चि सा, र च, नि र.,र र. कौ., ज्वरे । र. र कौ व्योषस्थाने कणा दृश्यते।

**भाषा**—शुद्धहिंगरिफ, वछनाग, त्रिकटु, भुनासुहागा, पीपल, पिपलामूल सब समभागलेकर वारीक कपडछानचूर्णकर तुलसी, अदरख और धतूरेके रसोसे ३–३ भावनाए देकर एकएकरत्तीकी गोलियें बनाकर रखछोडे । इनमेसे १–१ गोली समयोचिताऽनुपानके साथ अथवा अदरखकेसाथ देनेसे १३ सन्निपात और समस्तज्वरोको यह नष्टकरताहै ॥

### २३८ त्रिभुवनकीर्तिरसः ( द्वितीयः )

शुद्धस्य ताम्रस्य दलानि कुर्यात्
पलानित्रीण्येव च गन्धकस्य ।
पलद्वयं वै रुचकस्य चैकं
पलं रसस्याऽपि विमर्द्य खल्वे ॥९९८॥
चूर्णं विधायाऽथ च सिन्धुवार–
रसेन पत्राणि विलेपयेच्च ।
तत्सम्पुटस्याऽन्तरतो निधाय
विमुद्रय तत्सम्पुटमेव वह्नौ ॥९९९॥
यामं तथैकं छगणैःपुटेत्त-
ज्जातंसुशीतं हि विचूर्णयेच्च ।
तन्नागवल्लीदलमध्यतोऽपि
वल्लैकमात्रं सकलोदरघ्नम् ।

र. प्र. सु., र. चं., उदरे ।

**भाषा**—शुद्धतावेके बारीकपत्र और गन्धक ३–३ पल, संचल २ पल, शुद्धपारा १ पल, लेकर सबको सभाळूकेरसमे ४ पहर खरलकर तावेके पत्रोपर लगाकर सुखाले । फिर ३–४ रोज कपड़मिट्टी दियेहुए शरावमे वन्दकर सुखाकर एकपहरकी आंचदे । स्वाङ्गशीतलहोनेपर निकालकर पकेपानोके रससे २–३ रोज घोटकर रखछोड़े । इसमेसे ३–३ रत्ती पकेपानमे देनेसे समस्त उदररोग नष्ट होते हैं ॥ २३८ ॥

### २३९ त्रिभुवनकीर्तिरसः ( तृतीयः )

मुक्ता सुवर्णदरदौविषटङ्कणौ च
व्योषं रसेन दहनस्य दिनं सुमर्द्यम् ।
चूर्णाऽऽक्तजीर्णघटमध्यगतं निरुन्ध्या-

दल्पं पुटेच्च भुवनत्रयकीर्तिरेषः ॥
सद्योज्वरग्रहणिकाक्षयसन्निपाता-
ऽतीसारमेहनिखिलाऽनिलकासकेषु ।
स्वस्वाऽनुपानमथवा मधुपिप्पलीभ्यां
पथ्यं तथैव हितमस्य ददीत गुञ्जाम् ॥

र. शं, ज्वरे ।

भाषा—मोती, सुवर्णभस्म, शुद्धशिंगरिफ और वछनाग, भुनासुहागा, त्रिकटु सब समभाग-लेकर कपड़छानकर चित्रकके अङ्गस्वरससे १–२ रोज़मर्दनकर गोला बनाय पुराने मिट्टीके पात्रमे चूनेके दो तीन लेपदेकर सुखाकर उसमे गोलेको रखकर चूने पुतेहुए शरावसे बन्दकर ३–४ कपड़मिट्टी देकर सुखाकर दोसेर कण्डोकी खुली आंचदे । स्वाङ्गशी-तलहोनेपर निकालकर रखछोडे । इसमेसे १ रत्तीसे २ रत्तीतक यथारोगानुपानकेसाथ अथवा मधु और पीपलकेसाथ देनेसे नवीनग्रहणी, क्षय, सन्निपात, अतिसार, प्रमेह, समस्तवातरोग, कास, इनसबको यह नष्टकरता है ॥ २३९ ॥

## २४० त्रिमूर्तिरसः ( प्रथमः )

सूतगन्धमयोभस्म समं सम्मेल्य भावयेत् ।
निर्गुण्डीपत्रतोयेन मुसलीकन्दवारिणा ॥
ततः सिद्धममुं माषमात्रं रसमनुत्तमम् ।
लोध्रक्षौद्रेण चाऽश्नीयाच्चूर्णं खादेत् पिचून्मितम्
षट्कटुत्रिफलापञ्चलवणाऽवल्गुजोद्भवम् ।
मेदःशोथाऽग्निमान्द्याऽमवातश्लेष्मगदप्रणुत् ॥

यो. र र कौ, व रा, रसायनस, नि. र, वृ. यो. त, वै. क. वै. चि, मेदोरोगे ।

भाषा—शुद्धपारा और गन्धक, लोहभस्म सब समभागलेकर निर्गुण्डीकेपत्ते और मुशलीके कन्दके रससे १–१ रोज़ मर्दनकर १–१ माशेकी गोलिये बनाकर रखछोडे । इनमेसे १ गोली लोध और मधुके साथ खाकर षड्षण ( पीपल, पिपलामूल, चव्य, चित्रक, मिरच और सोंठ), त्रिफला, पाचोनमक ( काच, सैन्धव, सामुद्र, विड और सौवर्चल ), वाकुचीके वीज, सब समभागलेकर बारीक चूर्णकर १ तोला ऊपरसे लेनेसे मेद, सूजन, मन्दाग्नि, आमवात और श्लेष्मरोग नष्ट होतेहै ॥ २४० ॥

## २४१ त्रिमूर्तिरसः ( द्वितीयः )

रसमन्यं प्रवक्ष्यामि सर्वोदरविनाशनम् ।
पातितात्स्वेदितात्सूतात्पलद्वयमुपाऽऽहरेत् ॥
शुद्धस्य दानवेन्द्रस्य ग्राह्यं पलचतुष्टयम् ।
निर्गुण्डीसलिलै मर्द्यो दिनत्रयमतन्द्रितैः ॥
पश्चाद्गोलं समाऽऽपाद्य दृढे भाण्डे निवेशयेत् ।
वक्ष्यमाणक्रमेणाऽथ शुल्वं संशोध्य बुद्धिमान् ॥
पलद्वयप्रमाणेन ताम्रपात्रीं पिधापयेत् ।
अधोमुखीं ताम्रपात्रीं सूतगोलोपरि क्षिपेत् ॥
सन्धिं निरोधयेद्यत्नादुपरिष्टात्पटुं क्षिपेत् ।
पारदोपरि सन्दध्याच्छरावं सुदृढाऽव्रणम् ॥
सन्धिं निरोध्य तंस्रावं वालुकाभिः प्रपूरयेत् ।
भाण्डेनाऽन्येन संरच्य सम्पुटं सन्धिलेपतः ॥
उपरिष्टाच्चुल्लिकायां यन्त्रमारोपयेद्बुधः ।
अधस्ताज्ज्वालयेद्वह्निं मध्यमानेन सर्वदा ॥
दिनानि पञ्च यत्नेन स्वतः शैत्येऽवतारयेत् ।
म्रियते सह शुल्वेन रसेन्द्रो नाऽत्र संशयः ॥
विचूर्णयेत्ताम्रपात्रीं तच्चूर्णं विभजेत्त्रिधा ।
एकं भागं समादाय भावयेदौषधैरथ ॥
मदनस्य फलोत्थेन वारिणाऽऽदौ विभावयेत्
पुटयेच्छतवारं तमङ्कोलत्वग्भवै रसैः ॥
कुसुम्भनीरैः पुटयेत्प्रत्येकं शतशस्ततः ।
पञ्चपैश्छाणकै दद्यात्पुटमारण्यकोद्भवैः१०१६
मदनस्य फलाम्भोभिस्त्रीन्वारान् भावयेद्रसम् ।
अङ्कोलमूलत्वक्काथै र्देवदालीरसैस्तथा १०१७
एवं सिद्धरसं पश्चाद्वल्लमानेन योजयेत् ।
गोमूत्रजेन मण्डेन चुलुकत्रयमानतः ॥
दत्त्वा घर्मे स्थापयेत्तं क्षणमात्रमतन्द्रितः ।
आबाल्यात्संगृहीतं यन्मलं देहे व्यवस्थितम् ॥
तत्सर्वं घटिकामध्ये वमत्येव न संशयः ।
वमनीयो रसो नाम्ना जलोदर विनाशनः ॥

द्वितीयं भागमादाय पुटयेद्दौषधैस्ततः ।
त्रिवृत्तिक्ता च सगुडा रेचनी शङ्खिनी तथा ॥
इन्द्रवारुणिका चैषां क्वाथं कुर्याद्विचक्षणः ।
तेन क्वाथेन पुटयेच्छतं वारान् रसेश्वरम् ॥
ततश्च भावना देया लिङ्गिनीस्वरसैस्त्रिधा ।
कम्पिल्लक्वाथतस्तिस्रो दन्तीनीरैश्च तावतीः ॥
त्रिवृत्क्वाथेन तिस्रः स्युश्शङ्खिनीक्वाथतस्तथा ।
लिम्पाकफलनीरेण मूलनीरेणवा पुनः ॥
अष्टादशैवं जायेरन् भावना रेचने रसे ।
यत्नतः स्थापयेत्पश्चात्करण्डे तं रसेश्वरम् ॥
अर्धवल्लप्रमाणेन रसं दद्याच्च रोगिणे ।
अनुपाने जलं देयं सुशीतं चुलुकाऽवधि ॥
यावद्वारांश्च चुलुकान् पिबेत्तावद्विरेचयेत् ।
अयं चुलुकभेदाख्यो रसो जठररोगिणः ॥
जलोदरादि रोगाणां मूलकर्तनदक्षिणः ।
तृतीयं भागमादाय पुटयेत्त्रिफलोदकैः ॥
शतं वारान् रसेन्द्रोऽयं सिद्धत्येव न संशयः ।
रसेन्द्रस्याऽस्य योग्यं स्याद्द्विवल्लं तु रसायने ॥
खदिराऽसनजैः क्वाथैस्त्रिफलां भावयेच्छतम् ।
वारान् सा त्रिफला योज्या रसायनविधौ नरैः ॥
संवत्सरेण पलितं नाशयेत्पारदेश्वरः ।
द्वाभ्यां रोगान्हरेत्सर्वान् दीर्घं सञ्जीवयेन्नरम् ॥
कालारिसञ्ज्ञया सोऽयं रसेन्द्रः परिकीर्तितः
एवं त्रिमूर्तिनामाऽयं रसः शङ्करनिर्मितः ॥
जीर्णशाल्योदनं पथ्यं गोघृतं कृत्स्नमुद्गकाः ।
गोपयस्तद्भवं तक्रं यत्नाद्दधि विवर्जयेत् १०३३
शाकं न किञ्चिद्योज्यं स्याद्रसायनविधौ नरैः ।
मद्यं मांसं मैथुनञ्च वर्जयेद्रससेवने ॥१०३५॥
रसेन्द्रोऽयं त्रिमूर्त्याख्यः स्वस्थैः सर्वैश्च सेव्यते
रसायनार्थिनः कुर्युर्दशभि र्दशभिर्दिनैः ॥
वान्ति विरेकं कालाऽरिं नित्यं खादेत्पुरातनम्
जलोदरी तु कालारिमिच्छया सेवनेन वा ॥
त्रिदिनात्त्रिदिनात्कुर्याद्वान्तिमेकाञ्च बुद्धिमान् ।
दृष्टप्रभावः सृष्टोऽत्र लोकोपकृतिहेतवे ॥
देवीशास्त्राऽनुसारेण विविच्य प्रतिपादितः ॥

रसालं, टी., । टोडरानन्दे त्रिफलया संसिद्धया इत्यस्य स्थाने ससिद्धया त्रिवृतया इति पाठो दृश्यते ।

टि०—चतुर्दशोदयभास्करेणाऽऽपाततोऽस्य साम्य प्रतिभाति परमानयो र्भावनाऽऽदौ महान्विशेषोऽस्ति इतिकृत्वा भिन्नावतौ रसाविति बोध्यम् । गुणेषु तु प्रायः साम्य मस्त्येवेति बोध्यम् ।

**भाषा**—पातनादि सस्कारकियाहुआपारा २ पल, शुद्धगन्धक ४ पल, इन दोनोकी नीलवर्णकज्जलीकर निर्गुण्डीके रससे तीनरोज लगातार मर्दनकर गोलावनाय सुखाकर मिट्टीके मजवूत भाण्डमे रखदे । फिर दोपल शुद्धतावेकी कटोरी वनाय इसगोलेके ऊपर उल्टी रखकर सन्धि यत्नपूर्वक बन्दकर ऊपरसे ४ अङ्गुलऊचा पिसा हुआ नमक डालकर उसपर कपड़छानकीहुई वालु दवादबाकर भरदे । और ढक्कन देकर समस्तपर २–४ कपडमिट्टीकर सुखाकर चूल्हेपररख ५ दिनकी मध्यमाऽग्निदे । स्वाङ्गशीतलहोनेपर इसमेरहुए ताम्रको धीरजसे निकालकर इसके तीन विभागकरे । इनमेसे एकभागको लेकर मैनफल, अङ्कोल और कुसुम्भ इनके रसोकी सो१०० भावनाएं देकर गोलावनाय सुखाकर शरावसम्पुटमे वन्दकर ५ जङ्गलीकण्डोकी आचदे । स्वाङ्गशीतलहोनेपर मैनफलकारस, अङ्कोलकी जड़काक्वाथ, वन्दालकारस इनप्रत्येकसे तीन भावनाए देकर रखछोड़े । इसमेसे ३ रत्तीलेकर ३ चुल्लू गोमूत्रके मड ( एक दोपहरतक रक्खेहुए गोमूत्रका ऊपरि घनभाग ) केसाथ पिलाकर थोड़ीदेर धूपमे बैठावै । इससे बचपनकाभी सङ्गृहीत देहकामल एकघड़ीमे वमनहोकर निकलजायगा । इसरसका **वमनीय** नामहै और जलोदरको दूरकरताहै ।

इसीतरह दूसरे भागको लेकर निशोत, कुटकी, थूहरकादूध, कालादाना, इन्द्रायण इनके अङ्गस्वरस अथवा क्वाथोसे सो १०० भावनाएं देकर अखीरमे शिवलिङ्गी, कमीला, दन्तीमूल, निशोत, काला-

दाना, अमिलतासकागूदा और जडकीछाल इनप्रत्येकके यथासम्भव स्वरस अथवा क्वाथोकी ३-३ भावनाए देकर डेढ १॥ रत्तीकी गोलिये वनाय छायामे सुखाकर रखछोड़े। इनमेसे १ गोलीलेकर २ चुल्लू पानीकेसाथ निगलजाय। उसकेबादमे जितने चुल्लू पानी पीवेगा उतनेही वार दस्त होंगे। इसका **चुलुक** भेद नामहै। जलोदरादिरोगोको यह जड़से नष्टकरताहै।

तीसरे भागमे त्रिफलाके क्वाथकी १०० भावनाए देकर २-२ रत्तीकी गोलिये वनाकर रखछोडे। इनमेसे १-१ गोली खदिर और असनके क्वाथोसे त्रिफलाको १०० भावनाएं देकर उसके एकतोले चूर्णकेसाथ एकवर्षभर लगातार खानेसे पलितका नाश होता है। दोवर्षलगातार लेनेसे समस्तरोगोको दूरकर मनुष्योको दीर्घायु करदेता है। इसका **कालारि**भी नाम है। पथ्यमे पुराने चावल, गायका घी, मूग, गोदुग्ध और छाछ देवे। शाक और दहीका भूलकरभी उपयोग न करे। मद्य, मास, मैथुन ये रसायनार्थीको वर्जित है। रसायनकेलिये जो आदमी इसका प्रयोगकरे वह १०-१० दिनका अन्तरदेकर वमन और विरेचनका सेवनकरे तो पुराना जलोदर नष्ट होता है। अथवा केवल ३-३ रोजके अन्तरसे केवल वमनके लिये **कालारि**रसका सेवनकरे। यह देवीशास्त्रके अनुसार लोगोके कल्याणके लिये कहागया है॥२४१

## २४२ त्रिमूर्तिरसः ( तृतीयः )

**सूतगन्धकताम्राणि समभागानि कारयेत्।**
**सर्वार्धश्चाऽपिजैपालं गोमूत्रे मर्दयेच्चिरम्॥**
**स्नेहे नष्टे वटीःकुर्याद्गुञ्जात्रयमिता भिषक्।**
**रसस्त्रिमूर्तिसिद्धोऽयं हन्यात्पाण्डुं जलोदरम्॥**

र. क. यो., वै. चि., पाण्ड्वधिकारे।

**भाषा**—शुद्धपारा और गन्धक, ताम्रभस्म समभाग, सवसे आधे शुद्धजमालगोटे लेकर सवकी नीलवर्ण कज्जलीकर गोमूत्रमे यहातक मर्दनकरे कि इसकी चिकनाई विल्कुल जातीरहे। फिर ३-३ रत्तीकी गोलिये वनाकर रखछोड़े। इनमेसे १-१ गोली जलोदरहरानुपानकेसाथ देनेसे यह पाण्डु और जलोदरको दूरकरता है॥ २४२॥

## २४३ त्रियोनिरसः

**ताम्रस्य तुर्यभागेन रसेनोत्प्लुत्य लेपयेत्।**
**निम्बुद्रावेण संयोज्य सूर्यतापे विनिक्षिपेत्॥**
**ऊर्ध्वाधो गन्धकं दत्त्वा पाचयेदतियत्नतः॥**
**मत्स्याक्षीमभितो दत्त्वा मृत्स्नया सन्निरुध्य च**
**यामद्वयं तु पक्वश्च स्वाङ्गशीतं समुद्धरेत्।**
**गुञ्जामात्रं ददीताऽस्य साभयं गुडसंयुतम्॥**
**त्रियोन्याऽऽख्यो रसो ह्येष शोफपाण्ड्वपनोदनः**

र र. स., र (मा.), र. को., र सु, र सि., कामलापाण्ड्वधिकारे।

टि०—माणिक्यचन्द्रीयरसावतारे चूर्णकलिकानां मध्ये हण्डिकायामग्निप्रदानमभिहितम्। रसेन्द्ररत्नकोपरसराजसुन्दरयो. केवलं हण्डिकाया अग्निप्रदानमभिहितम्-तत्केवलमज्ञानविलसितम् प्रतिभाति। यामद्वयपरिमितोऽग्निरत्र न कार्यकारी भविष्यति। नायमपूर्वो रसः किन्तु शार्ङ्गधराऽभिहितताम्रमारणस्य प्रयोगएव तत्र स्पष्टतया प्रतिपादित स एव क्रमोऽत्रापि अनुसरणीय. तेन निर्विघ्नो भविष्यति इति अस्माकं मतम्।

**भाषा**—शुद्धपारेको नीवूकेरसमे ४ पहरघोटकर पारेसे ४ भाग शुद्धतावेके पत्रोपर लेपकर धूपमे सुखादे। सूखनेपर ताम्रपत्रोसे द्विगुणगन्धककी नीवूके रसमे पिष्टी वनाय इनपत्रोपर लपेटकर एकगोला वनाले। और गोलेसे अठगुनी मत्स्याक्षीको पीसकर गोलेपर चढादे और ६-७ कपड़मिट्टी देकर सुखाले फिर ६-७ कपडमिट्टीदीहुई हंडीमे रखकर ऊपर एकढक्कन उल्टामारकर उसकी सन्धि गुडचूनेसे वन्दकर ऊपर कलीका चूना, नमक अथवा छनीहुईसफेदराखको गलेतक भरकर दवादे। और ऊपरसे सेधानमक वारीकपीसकर १-१ अङ्गुलमोटी तहमे विछाकर पानीका छीटा इतना दे कि नमक तरहोजाय। फिर ढक्कन देकर ६-७ कपड़मिट्टीकर सुखादे। सूखनेपर चूल्हेपर रख ४ पहर-

की खूब तीक्ष्ण अग्निदेकर स्वाङ्गशीतलहोनेपर निकालकर जङ्गलीसूरणके रसमे २–३ रोज घोटकर गोलाबनाय सुखाकर सूरणके कन्दमे गर्तबनाकर उसमे गोलेको रख सूरणकीही डाटदेकर ६–७ कपडमिट्टी देकर सुखाले। फिर इसको पूरे गजपुटमे जङ्गलीकण्डोकी आंचदे। स्वाङ्गशीतलहोनेपर निकालकर रखछोडे। इसको खट्टीदहीमे थोडासा डालकर रातभर रक्खे यदि दहीका रङ्ग वैसाही रहे तब काममे लेवे यदि नीला होजायतो फिरसे सूरणके रसमे घोटकर पहिलेकीतरह आंचदे। स्वाङ्गशीतलहोनेपर निकालकर १ रत्तीसे ३ रत्तीतक हर्रेकेचूर्ण और गुड ३–३ मागेकेसाथ मिलाकर देनेसे शोफ और पाण्डु को नष्टकरता है। श्वास, कास और रक्तप्रदरकेलिये यह रामबाणकी तरह कामकरता है॥ २४३॥

## २४४ त्रिरात्रज्वरगजकेसरीरसः

तालकस्य च द्वौ निष्कावेकनिष्कं तु सूतकम्।
मर्दयेत्तालवल्ल्यद्भिः शुल्वपात्रे विपाचयेत्॥
पलमेकं गृहीत्वा तु शुद्धस्येश्वररेतसः।
नागस्य च तथैवैकं तालकस्य पलद्वयम्॥
कारवल्लीदलद्रावैं मर्दयित्वैकगुञ्जिकाम्।
मर्दयेद्धूर्तजद्रावैस्त्र्याहिकस्य निवृत्तये १०४५

र क यो., ज्वरे।

भाषा—शुद्धहरिताल २ टक, शुद्धपारा १ टंक लेकर कज्जलीकर ताड्वालीके रससे मर्दनकर बराबरके शुद्धताबेके पत्रपर लेपकर शरावसम्पुटमे बन्दकर गजपुटकी आंचदे। अथवा लवणयन्त्रमे पकाकर भस्मकरले। स्वाङ्गशीतल होनेपर निकालकर शुद्धपारा १ पल, नागभस्म १ पल, हरिताल भस्म अथवा रसमाणिक्य २ पल लेकर सबकी नीलवर्ण कज्जलीकर करेलेके रससे २–३ रोज मर्दन कर १–१ रत्तीकी गोलिये बनाकर रखछोडे। इनमेसे १–१ गोली बुखार आनेके एकघटा पहिले धतूरेके रसकेसाथ देनेसे त्र्याहिक ज्वरको नष्टकरता है

## २४५ त्रिलोचनरसः

त्रिलोचनो हरिः पक्षी पार्वती नागभूषणम्॥
दरदं तीक्ष्णपुष्पं कां वसुं रुधिरवासकौ॥
विडङ्गसैन्धवं हिङ्गु पटोलाऽमृतमुस्तकम्।
पिप्पलीचविकैरण्डचित्रकोषणगोक्षुरम् १०४७
देवदारुसमं चूर्णं गुडेन वटकीकृतम्।
उदरं कुक्षिरोगञ्च प्लीहगुल्मौ विनाशयेत्॥
नेत्ररोगं पार्श्वशूलं शिरःशूलं प्रमेहकम्।
हृच्छूलमरुचिं सर्वं दुर्नामं चाऽश्मरीं पराम्॥
मूत्रकृच्छ्रं तथा वातं सर्वमेतद् व्यपोहति -

र र, यकृत्प्लीहोदरे।

भाषा—शुद्धपारा, हरिताल, सुवर्णमाक्षिक, गन्धक, सीसा, कौडी, शिङ्गरिफ, लोह, कसीस, कान्तपाषाण, कान्तलोह, सुवर्ण इनसबकी भस्मे, केसर, अडूसा, विडङ्ग, सैन्धव, हींग, पटोलपत्र, बछनाग, नागरमोथा, पीपल, चव्य, एरण्ड और चित्रककीजड, मरिच, गोखरू, देवदारु, येसब समभागलेकर कपडछान चूर्णकर पारेगन्धककी नीलवर्ण कज्जलीमे मिलाकर बराबरके गुडमे १–१ मागेकी गोलिये बनाकर रखछोडे। इनमेसे १–१ गोली तत्तद्रोगहरानुपानकेसाथ देनेसे उदररोग, कुक्षिरोग, प्लीह, गुल्म, नेत्ररोग, पार्श्वशूल, शिरःशूल, प्रमेह, हृदयशूल, अरुचि, बवासीर, अश्मरी, मूत्रकृच्छ्र, आमवात, इनसबरोगोको यह दूरकरताहै॥

## २४६ त्रिविक्रमरसः (प्रथमः)

मृतताम्रमजाक्षीरे पाच्यं तुल्ये गते द्रवे।
तत्ताम्रं शुद्धसूतञ्च गन्धकञ्च समंसमम्॥
निर्गुण्ड्युत्थद्रवै मर्द्यं दिनं तद्गोलमन्धयेत्।
यामैकं वालुकायन्त्रे पाच्यं योज्यं द्विगुञ्जकम्॥
बीजपूरस्य मूलन्तु सजलं चाऽनुपाययेत्।
रसस्त्रिविक्रमो नाम्ना मासैकेनाऽश्मरीप्रणुत्॥

र र स, र स., यो म., यो र., र. सु., र प्र, भे सा, चि. र भ., नि. र., रसचि, र. चि, शा, र, चं., र स क., र र दी, व., र र, वृ. यो त, र. क, रसायनस., व. रा, ढो., र प्र. सु, र (मा), वै. चि,

र सि, र. क. ल, चि क, र. र कौं, ना वि, अश्मरीरोगे।

भाषा—ताम्रभस्मको बराबरके बकरीके दूधमे धीरेधीरे पकावे। दूधसूखजानेपर उसके बराबर शुद्ध पारा और गन्धक मिलाकर नीलवर्ण कज्जलीकर निर्गुण्डीकन्द अथवा सभालूके पत्तोंके रससे एकरोज मर्दनकर गोलाबनाय सुखाकर शरावसम्पुटमे बन्दकर ६–७ कपडमिट्टी समस्तपर देकर सुखाले। फिर ३–४ कपडमिट्टी दीहुई हंडीमे यन्त्रको रखकर ऊपरसे बालू भरकर एकपहर कड़ी आचदेकर उन्हीकोयलोपर रहनेदे। स्वाङ्गशीतल होनेपर निकालकर रखछोडे। इसमेसे २–२ रत्ती मधु वगैरहमे चाटकर विजोरेकी एकतोला जडको पानीमे पीसकर ऊपर पिलानेसे यह एक महीनेमे असाध्य पथरी को नष्ट करता है॥ २४६॥

## २४७ त्रिविक्रमरसः ( द्वितीयः )

शुद्धसूतं विषं तालं भृङ्गनीरेण मर्दितम्।
प्रहरद्वयमात्रञ्च वालुकायन्त्रके पचेत् १०५३
वज्रमूषागतं पक्कं स्वाङ्गशीतं विचूर्णयेत्।
वल्लद्वयप्रमाणेन देयं निर्गुण्डिकाद्रवैः॥
त्रिविक्रमरसो नाम सन्निपातकुलान्तकः॥

वै चि, सन्निपाते।

भाषा—शुद्धपारा, बछनाग और हरिताल समभागलेकर नीलवर्णकज्जलीकर भंगरेकेरससे एकरोज मर्दनकर गोलाबनाय सुखाकर शरावसम्पुटमे बन्दकर ऊपरकी तरह वालुकायन्त्रमे दोपहरस्वेदनकर स्वाङ्गशीतलहोनेपर निकालकर रखछोडे। इसमेसे ६–६ रत्तीकी मात्रा सभालूके पत्तोके एकतोले रसकेसाथ देनेसे यह सन्निपातको नष्टकरताहै॥

## २४८ त्रिविक्रमरसः ( तृतीयः )

दरदश्चाऽहिफेनश्च टङ्कणं बर्बरस्तथा।
क्षौद्रेण योजयेद्वैद्यो गुञ्जाद्वयमितं रसम्॥
त्रिविक्रमरसो नाम रक्ताऽतीसारमुल्बणम्।
सशूलमामसहितं नाशयेन्नाऽत्रसंशयः १०५६

रसायनस, अतिसारे।

भाषा—शुद्धहिंगरफ, अफीम, सुहागा, लोबान ये सब समभागलेकर सबका बारीकचूर्णकर मधुमिलाकर २–२ रत्तीकी गोलियें बनाकर रखछोडे। इनमेसे १–१ गोली समयोचिताऽनुपानके साथ देनेसे अत्यन्तबढेहुए रक्ताऽतिसार और आमसहितशूलको यह नष्टकरताहै॥ २४८॥

## २४९ त्रिविष्टपरसः ( प्रथमः )

रौप्यगन्धकताम्राणां कृत्वा चैकत्र पिष्टिकाम्।
तत्समश्चाऽभ्रकं श्लक्ष्णं गन्धकं पञ्चमांशतः॥
विषञ्च षोडशांशेन द्वौ भागौ मृतकस्य च।
एकीकृत्य प्रयत्नेन जम्बीररसमर्दितम् १०५८
भाजने मृन्मये स्थाप्यं वराक्काथे विपाचयेत्।
दशमूलशतावर्योः क्वाथे पाच्यः क्रमेण हि॥
तथोत्तार्य प्रयत्नेन वटिकाः कारयेद्बुधः।
गुञ्जात्रयप्रमाणेन शूलोदावर्तहृद्ग्रहे॥१०६०॥

यो. म., रसेन्द्रसं, शूले

भाषा—रजतभस्म, शुद्धगन्धक और ताम्रभस्म समभागलेकर अदरखवगैरहके रसमे १–२ रोज मर्दनकर पिट्ठीबनाले। इसपिट्ठीके बराबर अभ्रकभस्म और पञ्चमाश शुद्धगन्धक, सोलहवाहिस्सा शुद्धबछनाग और दोभाग शुद्धपारद मिलाकर सबको इकट्ठेकर जभीरीके रससे १–२ रोज मर्दनकर मिट्टीकेबर्तनमे रखकर इससे अष्टगुणित अथवा षोडशगुणित त्रिफलाकाक्वाथ देकर बहुतमन्द आचसे पकावे। फिर दशमूल और शतावरीका दस दस गुणित रस डालकर पकावे। जब गोलीबधनेलायक होजाय तब उतारकर ३–३ रत्तीकी गोलिये बनाकर रखछोडे। इनमेसे १–१ गोली समयोचिताऽनुपानकेसाथ देनेसे शूल, उदावर्त, हृदयकाजकड़ना येसब नष्टहोतेहैं॥ २४९॥

## २५० त्रिविष्टपरसः ( द्वितीयः )

भागद्वयं सूतवरस्य तार—
ताम्राऽभ्रगन्धं पृथगेकभागम्।

जम्बीरनीरेण दिनं विमर्द्य
विपाचयेन्मृन्मयभाजनस्थम् ॥१०६१॥
वर्या वरायाः दशमूलजेन
क्वाथेन घस्त्रत्रितयं सुयुक्त्या।
त्रिविष्टपो नाम रसस्त्रिदोषजं
शूलंजयेद्वातरुजं तथोग्रम् ॥ १०६२ ॥
घृतोषणं वल्लयुगो घृताढ्यः
सामुद्रयुक्तस्त्रिफलाऽनुपानः।
वा पुष्कराऽङ्घ्र्यम्बुसुरामठाढ्यो
कणाऽभयासैन्धवहिङ्गुयुग्वा ॥१०६३॥

र., शूले।

भाषा—शुद्धपारा २ भाग, रजत—ताम्र—अभ्रकभस्म और शुद्धगन्धक एकएक भाग लेकर सबकी नीलवर्ण कज्जलीकर जभीरीकेरससे एकदिन मर्दनकर मिट्टीके वर्तनमे रखकर, त्रिफला और दशमूलके काथोसे क्रमसे १—१ रोज मन्द अग्निपर पकावे और निरन्तर चलाताजाय। गोली बधनेलायक होजानेपर ६—६ रत्तीकी गोलिये बनाकर रखछोडे। इनमेसे १—१ गोली एकतोला घी और २९ कालीमिर्चोंके चूर्णकेसाथ अथवा गायके घीकेसाथ अथवा सेंधेनमककेसाथ अथवा त्रिफलाके काढेके साथ अथवा पोहकरमूलके काढेकेसाथ अथवा हींग—पीपल—हर्रे—सेंधानमक इनके चूर्णकेसाथ अथवा केवलहींगकेसाथ देनेसे त्रिदोषजशूल और घोर वातव्याधिको यह नष्टकरताहै ॥ २५० ॥

## २५१ त्रिवृताद्ययस्कृतिः

त्रिवृच्छ्यामाऽग्निमन्थसप्तलाकेबुकशङ्खिनीतिल्वकत्रिफलापलाशशिंशपानां रसमादाय पलाशद्रोण्यामभ्यासिच्य खदिराङ्गारतप्तमयःपिण्डमेकविंशतिवारान्निर्वाप्य ततस्तं रसमासिच्य स्थाल्यां गोमयाऽग्निना साधयेत्। सिद्ध्यति चाऽवपेत्। पिप्पलीचूर्णस्य भागं द्वौ मधुनस्तावन्तौघृतस्य ततश्चतुर्भागाऽवशिष्टेऽवतीर्णे भूयोऽग्नितप्तमयःपिण्डं तस्मिन् प्रक्षिपेत्, प्रशान्तं च लोहपात्रे सुगुप्तं निदध्यात्। इयमयस्कृतिर्दुस्साध्यमपि कुष्ठं मेहं वा साधयति। स्थूलं कर्पयति शोफमुपहन्ति, सन्नमग्निमुद्धरति, विशेषेण राजयक्ष्मिणामुपदिश्यते। वर्षशतायुश्चैनामुपयुज्य पुरुषो भवति ॥ १०६४ ॥

अ सं., रसायने।

टि०—पिप्पलीचूर्णस्य भागमित्यत्र भागशब्देन अशोऽभिप्रेतस्स च कलार्थकत्वात्पोडशांशपरो बोध्योऽन्यथा चतुर्भागाऽवशिष्टेऽवतीर्णे इत्यादि न निष्पद्येतेति सुधीभिर्विभावनीयम्।

भाषा—सफेद तथा लाल निशोत, अरणी, सीकाकाई, केउवाघास, कालादाना, देशीलोध अभावमे रेवनचीनी, त्रिफला, पलाश, शीशम, इनसबका। अङ्गस्वरस लेकर तत्कालबनाईहुई पलाशकीजड अथवा स्तम्भकी द्रोणीमे भरके खैरके कोयलोंमे लालकिया हुआ लोहेका गोला उसमे २१ वार बुझावे। फिर उसरसको निकालकर मिट्टीकी हंडीमे अग्निपरएकआधा उफान आजाय तब उससे षोडशांश पीपलकाचूर्ण और पीपलसे दूना मधु तथा घृत मिलाकर जङ्गलीकण्डोकी मधुर आचसे पकावे। जब चतुर्थांश बाकीरहे तब उतारकर पूर्ववत् लोहेके गोलेको लालकर उसमे एकबार बुझाकर मिट्टीकेवर्तनसे निकालकर लोहेके वर्तनमे रखकर एकान्तस्थानमे रक्खे। एकसप्ताहके बाद इसमेसे यथाग्निवलकीमात्रा लेकर दूधभातपररहे। इससे दुःसाध्यकुष्ठ और प्रमेह नष्टहोता है। यह स्थूलको कृशकरती है सूजनको मिटाती है नष्टअग्निको दीप्तकरती है राजयक्ष्मियोकेलिये खास दवा है। इसके सेवनकरनेसे मनुष्य १०० वर्षतकजीसक्ता है ॥ २५१ ॥

## २५२ त्रिशक्तिकाञ्चनम्

विशुद्धगन्धाऽश्मपलं पलं रसात्
पलं तथा शोधितशुद्धकाञ्चनात्।
पुटेन वह्नौ पुटितं कनीयसा
क्षौद्रेणसाऽऽज्येन यथाऽग्निभक्षितम्॥

जयेद्ग्रहण्यामयमाशुघोर-
मर्शांस्यतीसारमुरःक्षतञ्च ।
क्षयं ससैन्यं जठरं प्रवृद्धं
गुल्मान्प्रमेहानथ वह्निमान्द्यम् १०६६॥
लो प. ( स ), उदररोगे ।

भाषा— शुद्धगन्धक, पारा और सोनेकेवर्क समभागलेकर तुलसीके रससे एकरोजमर्दनकर गोला-बनाय शरावसम्पुटमे बन्दकर ३—४ कपड़मिट्टीदेकर सुखाकर २ सेर जङ्गलीकण्डोकी खुलीआचदेकर स्वाङ्गशीतलहोनेपर निकालकर रखछोडे । इसमेसे ३ रत्तीसे ६ रत्तीतक अग्निबलदेखकर मधु और घीकेसाथ देनेसे उत्कट ग्रहणी, अर्श, उरःक्षत, उपद्रवसहित क्षय, बढाहुआ उदररोग, गुल्म, प्रमेह और मन्दाग्नि इनको यह नष्टकरता है ॥ २५२ ॥

## २५३ त्रिशक्तिपारदः

पारदं गन्धकं तुल्यं सीसकञ्च समं शुभम् ।
विमर्द्य पोट्टलीं गाढं स्वर्जिका सर्वतः समा ॥
बन्धयेत्तां शरावस्थां मुद्रयित्वा दृढं पुनः ।
पुटेद्गजपुटे सम्यक् ततः सिद्धो भवेद्रसः ॥
गुञ्जामितः प्रदातव्यो लवङ्गस्याऽनुपानतः ।
अरोचके क्षये श्वासे कासे चैव सुदुस्तरे ॥
ग्रहण्यां पाण्डुरोगे च सर्वरोगेच शस्यते ।
अनुपानस्य भेदेन शीघ्रं वह्निविवर्द्धनः ॥
शतशो ह्यनुभूतश्च पारदोऽयं महागुणः ॥
ना वि , र म मा , अरोचके ।

भाषा—पारदभस्म, शुद्धगन्धक दोनो समभाग, सीसाभस्म दोनोकी बराबर लेकर सबको अदरख वगैरहके स्वरस अथवा पानीसे घोटकर गोला बनाकर चारतह मलमलमे लपेटकर डोरेसे कसदे । फिर पोटलीके बराबर लोटासज्जी लेकर एकदूसरे कपडेमे सज्जीकेभीतर इसपोटलीको बाधदे जिसमेकि सज्जी इसपोटलीके चारो तरफ आजावे । फिर इसको शरावमे बन्दकर ४—५ कपड़मिट्टीदेकर सुखाकर गजपुटकी आचदे । स्वाङ्गशीतलहोनेपर निकालकर रखछोडे । इसमेसे १—१ रत्ती लौंगकेसाथ देनेसे अरुचि, क्षय, श्वास, दुस्तरकास, ग्रहणी, पाण्डु इनसबको और अनुपानभेदसे मन्दाग्नि वगैरह बहुतसे रोगोंको यह नष्ट करता है । यह सैकडों वारका अनुभूत है ॥ २५३ ॥

## २५४ त्रिशक्तिरसः

रसगन्धकलोहमाक्षिकं
क्रमवृद्धं कुनटीं त्रिभागिकाम् ।
अविमूत्रकणाशमीरसैः
पृथगेकैकदिनं विमर्दयेत् ॥ १०७१ ॥
कृत्वा गोलं तस्य संशोष्य घर्मे
मृत्पात्रान्तर्वालुकान्तर्निदध्यात् ।
द्वित्राः कार्या मृत्पटानां प्रलेपा-
मन्दाऽग्नौ तत्पाचयेच्छक्रघस्रान् ॥
स्वाङ्गशीतं समुद्धृत्य कुर्यान्मात्रास्त्रिगुञ्जिकाः ।
यथोचिताऽनुपानैस्तु रसोऽयं सर्वरोगहा ॥
र. क यो , सर्वरोगे ।

भाषा—शुद्धपारा १ भा., गन्धक २ भा., लोहभस्म ३ भा., सोनामाखी ४ भा., शुद्धमैनसिल ३ भा., लेकर सबको भेडकेमूत्र, पीपल और शमीके स्वरसमे एक एक रोज मर्दनकर गोलाबनाय सुखाकर ४—५ कपडमिट्टीदीहुई हडीमे एक बिलस्त-भर बालूभरके उसपर सम्पुटको रख ऊपरसे बालू-भरके हडीपर शरावसम्पुट देकर १४ रोजकी बहुत मन्द अग्निदेकर स्वाङ्गशीतलहोनेपर निकालकर रखछोडे । इसमेसे ३—३ रत्ती तत्तद्रोगहराऽनुपानकेसाथ देनेसे यह समस्तरोगोंको दूरकरता है तीनोदोषोंपर एकजैसा गुण करता है इसलिये इसको त्रिशक्ति रस कहते है ॥ २५४ ॥

## २५५ त्रिसद्धटरसः

सूताऽर्कहेमताराणां समां पिष्टिं प्रकल्पयेत् ।
जम्बीरनीरसंयुक्तामातपे शोषयेद्दिनम् १०७४
ऊर्ध्वाऽधोद्विगुणंगन्धंदत्त्वा स्रावे निरोधयेत् ।
भाण्डगर्भे निरुद्ध्याऽथ द्वियामं पाचयेल्लघु ॥

आदाय चूर्णयेच्छ्लक्ष्णं त्रिसङ्कुटो महारसः ।
हरीतक्या समं देयं द्विगुञ्जं पाण्डुरोगजित् ॥
र. सु., र. का., पाण्ड्वधिकारे ।

भाषा—शुद्धपारा, ताम्र और सुवर्णभस्म सम-भागलेकर जभीरीकेरससे एकरोजमर्दनकर गोलीबना-कर एकरोज धूपमे सुखाकर इससे द्विगुण गन्धक नीचे ऊपर देकर शरावसम्पुटमे बन्दकर ३–४ कपड़मिट्टीदेकर सुखाकर ३–४ कपड़मिट्टीदीहुई हंडीमे बालुके बीचमे इसको बन्दकर ४ पहरकी मन्दाग्निसे स्वेदितकर स्वाङ्गशीतलहोनेपर निकालकर रखछोड़े । इसमेसे २–२ रत्ती हर्रेकेचूर्णकेसाथ देनेसे यह पाण्डुरोगको दूर करता है ॥२२५

## २५६ त्रैलोक्यकीर्तिरसः

गोलाहिङ्गुलतालकाऽमृतबलिब्रध्नाभ्रमूतायसं,
वङ्गं सीसकताप्यकाञ्चनमिदंतुल्यंत्र्यहंमर्दितम्।
भूतालीस्वरसेन वह्निशुकजैर्नीरैस्ततःकाचजे,
संरुध्याऽऽथ मृदाऽऽप्लुते तरणिना
संशोष्य तत्पात्रकम् ॥ १०७७ ॥
वन्यैरुत्पलकैःपुटेल्लघुतरंत्यक्त्वामृदोवेष्टनं,
शुद्धंकाचजपात्रगंरसवरंखल्वेदिनंमर्दितम् ।
ज्वालाऽऽस्याऽतलभृङ्गिभङ्गशिखरि-
क्षाराऽजमोदाऽमृतं,
स्वर्णाम्भोधिफलैःपुरेणलवणैरार्द्रेणभाव्यंत्रिशः
पित्तैःपञ्चभिरेवसप्तगुणितंभाव्यंततःसूतक-
स्याऽर्धेनाऽपिविषेणधूपितमिदंतच्छृङ्गवेराम्बुना
वद्धागुञ्जदलोन्मितासुगुटिकादत्तानिजैर्भेषजै-
रश्वानामपिदन्तिनामपिनृणांदुःसन्निपाताञ्जयेत्
वारांकुम्भशतानितत्रविकिरेद्विण्मूत्रकम्पावधि,
द्राक्षादाडिमबीजपूरकफलं दध्योदनं शर्करा ।
गुल्मानोदरशूलकुष्ठमरुताऽतीसार दुर्नामक-
प्लीहाऽपस्मृतिमुख्यरोगदलनस्त्रैलोक्यकीर्तिरसः
र श, र ल., र का, टी, ज्वराऽधिकारे ।

भाषा—शुद्धमैनसिल, शिंगरिफ, रसमाणिक्य, वछनाग, गन्धक, तांबा, अभ्रक, पारा वङ्ग, सीसा, सोनामाखी, सुवर्ण, येसव यथासम्भव शुद्ध और भस्मकियेहुए समभागलेकर नीलवर्ण कज्जलीकर मुसली, चित्रक, अनार इनप्रत्येकके रसोसे एकएकरोज मर्दनकर सुखाकर ६–७ कपडमिट्टी दीहुई आतशी शीशीमे डालकर खडियामिट्टी वगैरहसे शीशीका मुंह बन्दकर २–३ कपडमिट्टी देकर सुखाकर दोसेर जङ्गली कण्डोकी आचदेवे। अथवा बालुकायन्त्रमे रखकर चारपहरकी आचदे । स्वाङ्गशीतल होनेपर निकालकर ज्वालामुखी, चित्रक, भगरा, भाग, अपामार्गक्षार, अजमोद, वछनाग, धतूरेकेफल, समुद्रशोप, गुग्गुल, बडीलोनी, अदरख इन प्रत्येकके अङ्गस्वरसोसे तीनतीन भावनाएं देकर पाचपित्तोसे ६–७ भावनाए सुखासुखाकरदेकर इसरससे आधे वछनागकी धूपदेकर अदरखके रससे घोटकर आधी आधी रत्तीकी गोलिये बनाय छायाशुष्ककर रख-छोडे । इनमेसे १–१ गोली समयोचिताऽनुपानके-साथ देनेसे घोडा, हाथी और मनुष्य इनके असाध्य सन्निपातोको यह दूरकरता है । इसके देनेसे गर्मी लगनेपर ठढेपानीके १०० घडोकी धारा मस्तकपर छोडे अथवा झाडा, पेशावहोकर कम्पहोनेतक पानीकी धारादे । द्राक्षा, अनार, विजोरेकाफल, दही, भात और शक्कर ये खानेकोदे । इसके सेवनसे गुल्म, उदर, शूल, कुष्ठ, वाताऽतिसार, बवा-सीर, प्लीह, अपस्मार प्रभृति रोगनष्ट होते है॥२५६

## २५७ त्रैलोक्यचिन्तामणिरसः (प्रथमः)

भागद्वयं स्वर्णभस्म द्विभागं तारमभ्रकम् ।
लौहात्पञ्च प्रवालञ्च मौक्तिकं वह्निभागिकम्॥
भस्मसूतं सप्तभागं सर्वं मर्धन्तु कन्यया ।
छायाशुष्का वटी कार्या छागीदुग्धाऽनुपानतः
क्षयं हन्ति तथा कासं गुल्मञ्चाऽपि प्रमेहनुत् ।
जीर्णज्वरहरश्चाऽयमुन्मादस्य निकृन्तनः ॥
सर्वरोगहरश्चाऽपि वारिदोषनिवारणः १०८३
र. स., र. च, ज्वरे ।

भाषा—सुवर्ण-रजत और अभ्रकभस्म २-२ भाग, लोहभस्म ५ भाग, प्रवाल और मोती ३-३ भाग, पारदभस्म ७ भा., लेकर सबको इकट्ठेकर घीकुआरके रसमे १-२ रोज मर्दनकर १-१ रत्तीकी गोलियें बनाकर छायामे सुखाकर एकएक गोली बकरीके दूधकेसाथ देनेसे क्षय, कास, गुल्म, प्रमेह, जीर्णज्वर, उन्माद, जलदोष इनसबको यह नष्टकरताहै। तत्तद्रोगहरानुपानकेसाथ देनेसे औरभी तमामरोगोंको दूरकरता है ॥ २५७ ॥

## २५८ त्रैलोक्यचिन्तामणिरसः(द्वितीयः)

हीरं सुवर्णं सुमृतञ्च तार-
मेषांसमं तीक्ष्णरजश्चतुर्णाम्।
समं मृताऽभ्रं रसभस्मकञ्च
निष्पिष्य तीक्ष्णस्य तथाऽश्मनोवा ॥
खल्वे द्रवेणैव कुमारिकाया-
गुञ्जाप्रमाणां वटिकां प्रकुर्यात्।
त्रैलोक्यचिन्तामणिरेष नाम्ना
सम्पूज्य सम्यग् गिरिजां दिनेशम् ॥
हन्त्यामयान् योगशतैर्विवर्ज्या-
नथ प्रणाशाय मुनिप्रणीतः।
अस्य प्रसादेन गदानशेषान्
जरां विनिर्जित्य सुखं प्रयाति १०८६
स्निग्धे श्लेष्मण्यार्द्रकस्य रसेन पाययेत्सुधीः।
शुष्के च माक्षिकेणैव पित्ते घृतसितायुतम् ॥
श्लेष्मणा मारुते युक्ते दुष्टे च समतां गते।
कणाचूर्णं क्षौद्रयुतं प्रमेहे दुग्धसंयुतम् ॥
बलवर्णाऽग्निजननः कासघ्नः कफवातजित्।
आयुःपुष्टिकरो वृष्यः सर्वरोगनिषूदनः ॥

र स, र चं, ध, आ. वि, र सु, वाताधिकारे।

भाषा—हीरा, सुवर्ण, रजतभस्म १-१ भाग, लोहभस्म ४ भाग, इनसबकी बराबर अभ्रक भस्म और पारदभस्म लेकर सबको इकट्ठे मिलाय खूब चिकने लोहे अथवा पत्थरके खरलमे घीकुआरके रसमे १-२ रोज मर्दनकर १-१ रत्तीकी गोलियें बनाकर छायाशुष्ककर रखछोडे। इनमेसे १-१ गोली गिरिजा और सूर्यकी पूजाकर आर्द्रकफमे अदरखके रसकेसाथ, सूखेहुएमे मधुकेसाथ, पित्तमे घी और शक्करकेसाथ, श्लेष्मयुक्त वायुमे पीपलके चूर्ण और मधुकेसाथ, प्रमेह प्रभृतिमे दूधकेसाथ देनेसे यह इनतमामको नष्टकर बलवर्ण और अग्निको पैदाकरताहै। खासी और कफको दूरकर सबरोगोको-नष्टकरताहुआ आयु और पुष्टिको बढाताहै और अत्यन्त वृष्यहै। जोरोग हजारो दवाओके देनेसे शान्त न हुए हो उनकोभी यह दूरकरताहै॥२५८॥

## २५९ त्रैलोक्यचिन्तामणिरसः (तृतीयः)

रसभस्मत्रयोभागा द्विभागश्च भुजङ्गमम्।
कालकूटश्च पड्भागं भागैकं तालकन्तथा ॥
गोदन्तं गगनं तुत्थं शिलागन्धकटङ्कणम्।
जयपालोन्मत्तदन्त्यः करवीरश्च लाङ्गली ॥
पलाशमूलजैर्नीरैः सप्तधा भावितं दृढम्।
चित्रमूलकषायेण चार्द्रकस्य च वारिणा ॥
मात्स्यमाहिषमायूरच्छागवाराहडौण्डुभैः।
मायुभिर्दशधा मर्द्यं शिलाखल्वे च संक्षयात् ॥
धान्यद्वयां वटीं कुर्याच्छुद्धभाण्डे च धारयेत्।
दातव्यश्चाऽनुपानेन नारिकेलोदकेन च ॥
ताम्बूलञ्च ततो दद्याद्भक्ष्यं शीतोपचारकम्।
तिलतैलैः सदास्नानं घृतमत्स्यादि भोजनम् ॥
शीताम्लदधिसंयुक्तं पुराणान्नञ्च भक्षयेत्।

भै र, र सु, ज्वराधिकारे।

भाषा—पारदभस्म ३ भाग, नागभस्म २ भाग, शुद्धबछनाग ५ भाग, हरितालभस्म १ भाग, गोदन्ती हरिताल, अभ्रकभस्म, तुत्थ, मैनसिल, गन्धक और सुहागा येसब यथासम्भव विशुद्ध और मारेहुए १-१ भाग लेकर सबको इकट्ठे मिलाय जमालगोटा, धतूरा, दन्ती, सफेदकनेर, करिहारी, पलाशकी जड इनके यथासम्भव स्वरस अथवा क्वाथोसे ७-७ भावनाएं देकर चित्रकमूलक्वाथ, अदरखकारस, मछली भैंसा, मोर, बकरा, वराह, दुमुहीसाप इनके पित्त,

इनप्रत्येकमे १०–१० रोज मर्दनकर २–२ चावल भरकी गोलिया बनाकर छायाशुष्ककर शीशीमे रखछोडे । इनमेसे १–१ गोली नारियलके पानीके साथ देकर पानका बीड़ा खिलाना चाहिए । गर्मी, माळूम होतो ठढीचीजे खिलावे । तिलकेतैलकी मालिशकर स्नानकरे । घी, मछली, खट्टीदही, पुराने चावल ये यथायोग्य खानेको देवे ॥ २५९ ॥

## २६० त्रैलोक्यचिन्तामणिरसः (चतुर्थः)

मृताऽभ्रस्वर्णताराऽरुणभिदुरशिला
 ताप्यगन्धप्रवाला-
ऽयोमुक्ताशङ्खतालं वरमिदमनल–
 क्वाथतः सप्तभाव्यम् ।
निर्गुण्डीसूरणाऽम्भःपविरविपयसा
 त्रिः पृथग्भावयित्वा,
तेनाऽऽपूर्या वराटा अथ मिहिरपय–
 ष्टङ्कणाऽऽलिप्तवक्त्रान् ॥ १०९६ ॥
कृत्वा भाण्डे च रुद्ध्वा गजपुटजठरे
 युक्तितस्तांस्तु पक्त्वो–
द्धृत्यैतान्मर्दयित्वा तदखिलतुलितं
 सूतभस्माऽत्र दद्यात् ।
वैक्रान्तं सूततुर्यांशकमथ मिलितं
 सप्तशः शिग्रुमूल–
त्वङ्नीरैः श्वित्रमूलोद्भवसलिलकृता
 भावनास्त्वेकनेत्राः ॥ १०९७ ॥
आर्द्रजम्बीरनीरैः पृथगथ
 विजयालुङ्गतोयैश्च सप्त-
भाव्यं शुष्कञ्च कृत्वाऽप्यथसकलचतु–
 र्थांशकं टङ्कणञ्च ।
टङ्कात्पादं विषं तत्समरिचमथो
 नागरं देवपुष्पं,
पथ्याजातीफलाख्यं पृथगथ मिलितं
 पादभागं विषस्य ॥ १०९८ ॥
पश्चाल्लुङ्गाऽऽर्द्रनीरैरपि मृगमदे
 भावयेत्तच्च सर्वं,
गोलं कृत्वा सुलग्ने विधिवदथभजे-
 द्राजयोग्यो रसेन्द्रः ।
एष त्रैलोक्यचिन्तामणि रखिलगद-
 ध्वान्तविध्वंसहंस–
स्तत्तद्रोगानुपानादुपसि कवलितः
 सार्धवल्लप्रमाणः ॥ १०९९ ॥
वातव्याध्याऽऽमवातज्वरजठरकृमि
 श्वासशूलाऽस्रवाता-,
ऽसृक्पित्तक्लैब्यकासक्षयकफजगदो–
 रःक्षताजीर्ण मेहे ।
कुष्ठातीसारपाण्डुग्रहणिमुखमुखो-
 ष्ठव्रणार्शः प्रकष्टे,
खाड्येखञ्जाढ्यवातश्रुतिसकलगदे
 सर्वथैव प्रशस्तः ॥ ११०० ॥

वृ यो. त, र. मु, रसायन म., वै चि (ल), र च., र सु., भै. र, नि र, र श, र प, यो. र, र क यो, वै. चि., वै वि, वा., क्षयाऽधिकारे ।

भाषा—पारा, अभ्रक, सुवर्ण, रजत, ताम्र, हीरा, मैनसिल, सोनामाखी, गन्धक, प्रवाल, लोह, मोती, शङ्ख, हरिताल येसब यथासम्भव शुद्ध और मारेहुए समभागलेकर चित्रकके क्काथसे सातरोज मर्दनकर निर्गुण्डीकन्द अथवा संभाळूकेपत्ते, सूरण, थूहर, आक इनप्रत्येकसे ३–३ रोज मर्दनकर इसकल्कको पीलीकौड़ियोमे भरकर आककेदूधमे सुहागेको पीसकर कौडियोका अच्छीतरह मुहबन्दकर मिट्टीका मजबूत नया वर्तन लेकर भीतर चूना पोत सुखाकर उसकेभीतर इनकौडियोको रख शरावसे ढककर आककेदूधमे पिसेहुए सुहागेसे मुहबन्दकर ६–७ कपड़मिट्टीदेकर सुखाकर गजपुटकी आचदे । स्वाङ्गशीतलहोनेपर निकालकर इसकी वरावर पारदभस्म और पारेसे आधीवैक्रान्तभस्म मिलाकर सहिजनकी जड और चित्रकमूलके अङ्ग स्वरससे इक्कीस २१ भावनाए देकर अदरख जंभीरी, भाग, बिजोरा इन प्रत्येकके स्वरससे ७–७ भाव-

नाए देकर सुखाकर इससमस्तका चतुर्थांश भुना-सुहागा, सुहागेका चतुर्थांश शुद्धवछनाग, मरिच, सोठ, लौग, हर्रे और जायफल मिलावे । फिर इस-समस्तसे चतुर्थांश शुद्धवछनाग मिलाकर विजोरा, अदरख, इनकी १—१ भावना और कस्तूरीकी १ भावनादेकर साढेचार रत्तीकी गोलिये बनाकर छाया-शुष्ककर रखछोडे । इनमेसे १—१ गोली तत्तद्रोग-हरानुपानकेसाथ प्रात:कालदेनेसे समस्त वातरोग, आमवात, ज्वर, मन्दाग्नि, कृमि, श्वास, शूल, वातरक्त, रक्तपित्त, क्षीणता, कास, क्षय, कफरोग, उर:क्षत, अजीर्ण, प्रमेह कुष्ट, अतिसार, पाण्डु, ग्रहणी, मुखरोग, ओष्टरोग, बवासीर, खञ्जता, उरु-स्तम्भ, कान, मस्तक प्रभृतिके समस्तरोग नष्टहोतेहैं ॥

## २६१ त्रैलोक्यचूडामणिरसः

सूतं सुगन्धं दरदेन तुल्यं
विमर्दयेदम्लजलैर्दिनैकम् ।
निर्गुण्डिकाभृङ्गकृशानुहिङ्गु-
कोरण्टतोयेन दिनत्रयञ्च ॥ ११०१ ॥
सूतेन तुल्ये रविसम्पुटेऽथ
निक्षिप्य संवेष्ट्य पुटं ददीत ।
गुडूचिकात्र्यूपणजातवारा
विमृद्य यत्नेन पचेत्सकृत्तम् ॥ ११०२
दत्त्वा विषश्चाऽस्य कलाप्रमाणं
गुडूचिका शुण्ठिकृशानुतोयैः ।
त्रैलोक्यचूडामणिरेष सूतः
कणाऽऽर्द्रकेणाऽस्य ददीत वल्लम् ११०३
अष्टाऽवशेषं त्वमृतासुशुण्ठी-
कषायकश्चाऽनु नियोजयेत ।
दिनान्तकाले च ददीत पथ्यं
घृतादिकश्चाऽत्र विवर्जयेत ॥११०४॥
वातज्वरे भोजनपूर्वकाले
जातेऽप्ययं तत्र विधिर्नियोज्यः ।
विरेकशोषाऽऽस्यकटुत्वतीव्र-
तापप्रलापभ्रममूर्च्छितानि ॥ ११०५॥
एतानि पित्तज्वरलक्षणानि
पूर्वोक्तसूतं मधुपिप्पलीभिः ।
गुडूचिकानीरकणैस्तुयद्वा
भूनिम्बयूषं तमनुप्रदद्यात् ॥
यद्वाऽमृतापर्पटनागरोत्थं
गुडूचिकाशुण्ठिसुधान्यजं वा ।
नीरं सुशीतं कथितं ददीत
मुद्गाऽम्भसा भक्तमिहाऽऽज्यवर्ज्यम् ॥
सुतीव्रतापे तु रसं नियोज्य
नीरं क्षिपेच्छीतमुपैति यावत् ।
पित्तज्वरः शान्तिमुपैतितेन
दिनत्रयेणाऽपि नवोऽपि तीव्रः ॥

र. टी., ज्वरे ।

भाषा—शुद्धपारा, गन्धक, शिंगरिफ, येसब समभागलेकर जभीरीवगैरहके रससे एकरोज मर्दनकर निर्गुण्डीकन्द अथवा सभालूके पत्ते, भंगरा, चित्रक, हीग, कटसरैया इनप्रत्येकके रसोसे ३—३ रोज मर्दनकर पारेकी बराबर तावेकी चद्दरमे लपेटकर शरावसम्पुटमें बन्दकर ३—४ कपडमिट्टीदेकर सुखा-कर भस्म, लवण अथवा बालुकायन्त्रमे ४ पहरकी कडी आचदेकर स्वाङ्गशीतलहोनेपर निकालकर गिलोय, त्रिकटुकाक्वाथ, थूहरऔर आककादूध इनमे १—१ रोज मर्दनकर टिकिया बनाय सुखाकर शरावसम्पुटमे बन्दकर २ सेरकण्डोकी आचदे । स्वाङ्गशीतलहोनेपर निकालकर सोलहवा हिस्सा शुद्धवछनाग मिलाकर गिलोय, सोंठ और चित्रक इनके अङ्गस्वरस अथवा क्वाथोसे १—१ रोज मर्दनकर रखछोडे । यह **त्रैलोक्यचूडामणि** रस तैयार हुआ । इसमेसे ३—३ रत्ती पीपल और अदरखके रसके साथदेकर गिलोय और सोठ १—१ तोले लेकर अष्टगुणितपानीमे काढाबनाय अष्टाऽव-शेष रहनेपर पिलावे । और दिनभर कुछ खानेको नदे । सन्ध्याकालमे घीरहित उचितपथ्य देवे । वातज्वरमे सुवहके भोजनका समय होगयाहो

तोभी भोजन न देकर इसदवाका प्रयोगकरे । विरेचन, शोप, मुहका कडवापन, ज्वरका अत्यन्तवेग, प्रलाप, भ्रम और मूर्च्छा ये जिसरोगमे हो उसे पित्तज्वर समझकर इसरसको मधु और पीपलकेसाथ अथवा गिलोय और जलपीपलकेसाथ देकर चिरायतेका क्वाथ अथवा गिलोय और पित्तपापड़ेका क्वाथ अथवा गिलोय, सोठ और धनियेकाक्वाथ इनमेसे किसी एकको पिलावे । ठढा कियाहुआ गरमपानी पीनेको दे । मूगके पानीके साथ विना घीका भातदे। अत्यन्त दाहमे इसरसको देकर ऊपर ठढेपानीकी धारा ठढलगनेतकदे । इस तरह तीनरोजमे पित्तज्वर और नवज्वर शान्तहो जातेहै ॥ २६१ ॥

## २६२ त्रैलोक्यडम्बररसः ( प्रथमः )

**रसगन्धकताम्राणि लोहमभ्रं विपं तथा ।**
**टङ्कणं स्वर्जिकाक्षारं दरदञ्च कपर्दिकाम् ॥**
**अर्कक्षीरेण खल्वे च वज्रीक्षीरेण भावयेत् ।**
**निर्गुण्डीभृङ्गराजेन चाऽऽर्द्रद्रावेण भावयेत् ॥**
**गुल्मे जलोदरे रोगे शोथे पाण्डौ क्षये तथा ।**
**शूले विसूचिकायाञ्च ह्यनुपानैः प्रयोजयेत् ॥**
**त्रैलोक्यडम्बरो नाम कथितो रोगशान्तये ।**
**वल्लमात्रप्रमाणेन त्रिःसप्ताहं प्रदापयेत् ॥**

वै. क., नि र., चि. सा , रसायनस., वै चि., उदराऽधिकारे ।

**भापा**—शुद्धपारा और गन्धक, ताम्र-लोह-अभ्रकभस्म, शुद्धबछनाग, भुनासुहागा, सज्जी, शुद्धशिंगरिफ, कौड़ीभस्म, सबसमभागलेकर आक और थूहरके दूध तथा सभाळ, भगरा और अदरख इन प्रत्येकके स्वरसमे एकएकरोज मर्दनकर ३–३ रत्तीकी गोलिये बनाकर रखछोडे । इनमेसे १–१ गोली तत्तद्रोगहरानुपानकेसाथ देनेसे गुल्म, जलोदर, शोथ, पाण्डु, क्षय,शूल,हैजा इनसबको यह २१ रोजमे नष्टकरताहै।

## २६३ त्रैलोक्यडम्बररसः ( द्वितीयः )

**द्वौ भागौ शिववीजस्य गन्धकस्य चतुष्टयम् ।**
**अभ्रवह्निविडङ्गानां गुडूचीसत्त्वनागयोः ॥**



**कृष्णजीरकटूनाञ्च लवणक्षारयोरपि ।**
**प्रत्येकं भागमादाय मर्दयेत्सुरसाद्रवैः ॥**
**वीजपूररसैर्भूयो मर्दयित्वा विशोपयेत् ।**
**त्रैलोक्यडम्बरो नाम वातोदरकुलान्तकः ॥**
**गुञ्जाद्वयं ततश्चाऽस्य दद्दीत घृतसंयुतम् ।**
**भोजयेत्स्निग्धमुष्णञ्च पायसञ्च विवर्जयेत् ॥**

र स, रसायनस., र चि., र. च., र. क., र. का., उदराऽधिकारे ।

**भापा**—शुद्धपारा २ भाग, शुद्धगन्धक ४ भा., अभ्रकभस्म, चित्रकमूल, विडङ्ग, गुडूचीसत्त्व, नागभस्म, कालीजीरी, त्रिकटु, सेधानमक, यवक्षार १–१ भागलेकर सबका वारीक चूर्णकर तुलसी और बिजोरेके रससे ७–७ भावनाए देकर २–२ रत्तीकी गोलिये बनाय सुखाकर रखछोड़े । इनमेसे १–१ गोली घीकेसाथ देनेसे वातोदरका समूल नाश होताहै । स्निग्ध और उष्णभोजनदे, दूधपाक न दे ।

## २६४ त्रैलोक्यडम्बररसः ( तृतीयः )

**शुद्धगन्धस्य गद्याणा ग्रहीतव्यास्त्रयोदश ।**
**शुद्धरौप्यस्य वा ग्राह्याः गद्याणाश्च त्रयः खलु॥**
**ताम्रपत्रस्य गद्याणा ग्राह्याः पञ्च भिषग्वरैः ।**
**एकविंशतिगद्याणान्खल्वे कृत्वा दिनाऽष्टकम्**
**नैम्बुकेन रसेनैव पेषयेच्च निरन्तरम् ।**
**पिष्ट्वापिष्ट्वा प्रकर्तव्या पिष्टिः सूक्ष्माऽतिसुन्दरा**
**वस्त्रे वध्वाऽथ तां पिष्टिं स्वेदनीयन्त्रके ततः ।**
**निम्बूरसाऽऽरनालेन सक्षारेण प्रपूरिते ॥**
**स्वेद्या दिनाऽष्टकं यावच्छुष्के देयः पुना रसः**
**ततो वहिर्विनिष्कास्य कुर्याच्चूर्णं हि खल्वके ॥**
**शुद्धगन्धकगद्याणास्त्रिचत्वारिंशदाहृताः ।**
**सप्तभिः स्वर्णमाक्षीकैरेकसप्ततिसम्मितैः ॥**
**सर्वं सार्धञ्च सम्पिष्य चैकरूपं ततो नयेत् ।**
**त्र्यहं सेहुण्डदुग्धेन रविदुग्धेन च त्र्यहम् ।**
**काञ्चनारस्य मूलेन सश्रीखण्डेन च त्र्यहम् ।**
**चित्रकस्य रसेनाऽथ दिनमेकञ्च भावयेत् ॥**
**दशाहभावितं चूर्णं कुर्याद्रम्यञ्च गोलकम् ।**

शरावसम्पुटे क्षिप्त्वा तत्सन्धिं वस्त्रमृत्स्नया ॥
वेष्टयित्वा पुटो देयश्चतुर्भिश्छाणकैः ध्रुवम् ।
वारम्वारं तोलयित्वा पुटो देयो मुहुर्मुहुः ॥
दह्यते गन्धको यावद्द्देवेदैश्चच्छाणकैः ॥
शरावसम्पुटे मृत्स्नां वस्त्रयुक्तां ददेत्पुटेत् ॥
अष्टाविंशतिगद्याणाः शेषास्तावत्पुटेच्च तम् ।
पेषितायाश्च निर्गुण्ड्या गुडूच्याश्च रसेन वै ॥
त्रिकटोः पयसा वाऽपि त्रिफलावारिणा तथा।
प्रत्येकेन पृथग्देया भावनाश्चैकविंशतिः ११२९
सर्वाश्चतुरशीतिश्च मिलित्वा भावनाः खलु ।
करवीरस्य पुष्पाणि पुष्पाणि कनकस्य च ॥
तुल्यतुल्यानि सम्मेल्य रविदुग्धेन मर्दयेत् ॥
दातव्या तद्रसेनैका वत्सनाभविषेण च११३१
श्रीखण्डकरसेनैका सप्ताऽशीति समाश्च ताः ।
भावनाःस्युस्ततःखल्वेसम्मर्द्याऽथविचूर्णयेत् ॥
तच्चूर्णं कूप्यके धार्यं रसस्त्रैलोक्यडम्बरः ।
वल्लैकः प्रत्यहंप्रातर्ग्राह्योऽयश्वपलान्वितः ॥
सन्निपातेषु सर्वेषु शूलेषु विविधेषु च ।
प्रमेहेषु च सर्वेषु सर्वेषूदररोगिषु ॥ ११३४॥
समस्तेष्वपि वातेषु गुल्मयो र्वातरक्तयोः ।
तैलक्षाराऽम्लवर्ज्यैश्च भोजनं मधुरं स्मृतम् ॥
मासैकेन समस्ताश्च रोगा नाशं व्रजन्ति हि ॥

रसचि., रसकं, सन्निपाते ।

भाषा—शुद्धगन्धक ६॥ तो., शुद्धचादी १॥ तो., शुद्धताम्रपत्र २॥ तो. लकर नीबूकेरससे आठरोजतक लगातार मर्दनकर गोलीवनाय चारतह मलमलके कपडेमे बाधकर नीबूकारस, काञ्जी, यवक्षार मिलाकर हडीभरकर उसमे उसको लगातार ८ रोजतक स्वेदनकरे। काञ्जी वगैरह सूखनेपर दूसरी देताजाय । नवे रोज स्वाङ्गशीतलहोनेपर निकालकर खरलकर शुद्धगन्धक २१॥ तोले, सुवर्णमाक्षिक ३॥ तोले मिलाकर थूहर और आकके दूधसे ३-३ रोज, चन्दनमिलेहुए कचनारकी जड़केरससे ३ रोज, त्रिचकके रससे १ रोज घोट्कर गोलावनाय शरावसम्पुटमे रख ३-४ कपडमिट्टीदेकर सुखाकर चार जङ्गलीकण्डोंकी आचदे इसतरह वारम्वार भावनादेकर आचदेवे । पर यह ख्याल रक्खे कि पुटदेनेमे केवल गन्धकही जले पारद वगैरहको नुकसान न पहुचे । इसतरह प्रत्येक पुटमे ३॥ तोले स्वर्णमाक्षिक और २१॥ तोले गन्धक तथा तमाम भावनाएं देवे । प्रत्येक पुटके अन्तमे इसका वजनकरे जब १४ तोले वजन आजावे तब सिद्ध हुआ समझे । फिर निर्गुण्डीकन्द अथवा सभालूके पत्ते गिलोय, त्रिकटु, त्रिफला. इनप्रत्येकके यथासम्भव अङ्गस्वरस अथवा क्वाथोसे २१-२१ भावनाए देकर सफेद कनेर और धतूरेके फूल येप्रत्येक १४-१४ तोले मिलाकर आकके दूधसे १ रोज मर्दनकर शुद्धवछनागके क्वाथसे एकरोज, चन्दनकल्कसे एक रोज, भावनादेकर ३-३ रत्तीकी गोलिये बनाय छायाशुष्ककर शीशीमे रखछोडे । इनमेसे १-१ गोली प्रातःकालमे पीपलकेसाथ देनेसे समस्त सन्निपात, नानातरहके शूल, समस्तप्रमेह और उदररोग तमाम वातव्याधि, गुल्म, वातरक्त इनसवको एक महीनेमे यह नष्ट करता है । तैल, क्षार और अम्ल को छोड़कर मधुर भोजनदे ॥ २६४ ॥

## २६५ त्रैलोक्यडम्बररसः ( चतुर्थः )

भास्करक्षीरजम्बीररसैः शुल्वस्य पिष्टिकाम् ।
कृत्वाऽथ पातयेत्प्राग्वद्दशधा पारदेश्वरम् ॥
मुखमुत्पादयेत्ताभ्यां चूलिकालवणैः सह ।
यन्त्रे सोमाऽनले वीजं जारयेत्स्वरभागतः ॥
बलिश्च षोडशगुणं जारयेद्द्रावितश्च तैः ।
पादेन गन्धकं दत्त्वा पयसा मर्दयेद्रवेः ११३८
दिनानि सप्त यत्नेन दिवानक्तमतन्द्रितः ।
कृष्णधत्तूरकरसैस्तद्वत्तिलदलारसैः ॥११३९॥
सूतकल्कश्च तद्यन्त्रे रुद्ध्वा सोमाऽनले ततः ।
दिनानि सप्त तं सूतं भस्मीभूतं समुद्धरेत् ॥
पलद्वयश्च सूतेन्द्राद्भस्मीभूतं समाहरेत् ।
दैत्येन्द्रं द्विगुणं तस्य विशुद्धं तत्र निःक्षिपेत् ॥

मृताऽभ्रं पलमेकं स्यात्त्रीण्येकत्रविमर्दयेत् ।
सुरसासलिलैस्त्रीणि दिनानि तदनन्तरम् ॥
वह्निमूलत्वचः कृष्णजीरकं त्रिकटुं पटु ।
कृमिशत्रुं गुडूचीजं सत्त्वं क्षारत्रयं तथा११४३
मृतनागमिदं सर्वं प्रत्येकं पलमाहरेत् ।
सम्यग्विचूर्ण्य तत्सर्वं सूतकल्के विनिःक्षिपेत्॥
पुनश्च सुरसानीरैस्त्रिदिनं मर्दयेद्बुधः ।
फलपूररसैः पश्चात् षड्दिनानि प्रमर्दयेत् ॥
छायायां शोषयेत्कृत्वा रसस्य वटिकास्ततः ।
गुञ्जाचतुष्टयमितास्त्रिगुञ्जामानकाश्च वा११४६
वातोदरविनिर्भेत्ता नाम्ना त्रैलोक्यडम्बरः ।
घृतेन संयुतं दद्याद्रसेन्द्रं चाऽर्जुनीभुवा११४७
पथ्यं देयं सदैवोष्णं सुस्निग्धं गोघृतेन वै ।
पायसं वर्जयेच्छश्वद्यावद्रोगनिवर्तनम् ११४८

रसालं., उदररोगे ।

भाषा—शुद्धतावेकाचूर्ण और शुद्धपारा समभाग मिलाकर आकके दूध और जभीरीके रससे १–१ रोज मर्दनकर सुखाकर डमरूयन्त्रमे वन्दकर ४ पहरकी अग्निदेकर उड़ावे । स्वाङ्गशीतल होनेपर पारेको निकालकर डमरूयन्त्रमे नीचे रहेहुए तावेको मिलाकर पहिलेकीतरह घोटकर उड़ावे । इसतरह दसवार ऊर्ध्वपातनकर इसका चतुर्थांश नोसादर देकर आकके दूध और जभीरीके रससे मर्दनकर ऊर्ध्वपातनकरे तो इसमे मुख उत्पन्न होजायगा । इसके वाद सोलहवा हिस्सा वीजसस्कार दियाहुआ ताम्रदेकर विडोसे जभीरीके रसके साथ मर्दनकर काञ्जीमे ४ रोज स्वेदनकर ऊर्ध्वपातनकरे । नीचे वचे हुए सुवर्णको फिरसे मिलाकर मर्दनकर ऊर्ध्वपातनकरे । जवतक सुवर्णवीजका ग्रास न होजाय तवतक इसीतरह स्वेदन, मर्दन और ऊर्ध्वपातन करताजाय । इसके वाद १६ गुना गन्धक देकर जारणकरे । इकट्ठा सोलहगुना गन्धक जारण न होसके तो वरावरका गन्धक १६ वार जारणकरे फिर पारेसे चतुर्थांग गन्धक और नोसादर मिलाकर कालाधतूरा और हुरहुर इनप्रत्येकके रसोसे७-७ रोज मर्दनकर सुखाकर डमरूयन्त्रमे वन्दकर ७ रोज लगातार अग्नि देनेसे इसकी भस्म होजायगी । स्वाङ्ग शीतल होनेपर निकालकर इसमेसे भस्म २ पल, शुद्धगन्धक ४ पल, अभ्रकभस्म १ पल, तीनोको इकट्ठेकर तुलसीके रससे ३ रोज मर्दनकर चित्रकमूलकीछाल, कालीजीरी, त्रिकटु, सेधानमक, विडङ्ग, गिलोयकासत्त्व, सज्जी, सुहागा, यवक्षार, कस्तूरी ये सव १–१ पललेकर वारीकचूर्णकर पूर्वकल्कमे मिलाय फिर तुलसीके रससे ३ रोज, विजोरेकेरससे ६ रोज मर्दनकर ३ या ४ रत्तीकी गोलिये वनाकर छायाशुष्ककर शीशीमे रखछोडे । इनमेसे १–१ गोली नागार्जुनीमे सिद्धकियेहुए घीक साथ देनेसे वातोदरको यह जडसे नष्ट करदेताहै । इसमे पथ्य स्निग्ध और गरम गायकेघीके साथदे, जवतक-रोगनिवृत्त न हो तवतक खीर न दे ॥ २६५ ॥

## २६६ त्रैलोक्यतिलकरसः

शुक्लकृष्णाऽभ्रजं सत्त्वं शोधितं काचटङ्कणम् ।
घर्षणेन रजः कृत्वा भर्जयित्वा घृतेन तत् ॥
अष्टांशसस्यकोपेतं पुटेद्वारत्रयं ततः ।
त्रिवारं नृपवर्तेन लुङ्गस्वरसयोगिना ॥ ११५०
चतुर्वारश्च वर्षाभूत्रासामत्स्याक्षिकारसैः ।
गुग्गुलुत्रिफलाकाथैस्त्रिंशद्वाराणि यत्नतः ॥
तुल्याशरसगन्धोत्थकज्जल्याऽष्टांशभागया ।
पुटेत्पश्चाशतं वारान् मर्दयेच्च पुटेपुटे ॥
शोधितं रेतितं कान्तं सत्त्वश्च घृतभर्जितम् ।
पुटेदष्टांशदरदैः संयुतं लकुचाऽम्वुना ॥
दशवारं तथा सम्यक् तारं शुद्धं मनोह्वया ।
तथा विंशतिवाराणि वलिना मीनदृग्रसैः ॥
दशवाराणि ताप्येन कृष्णगोघृतयोगिना ।
उभयं समभागं तत्पुटेत्त्रिर्गुण्डिकारसैः ११५५
रसगन्धोत्थकज्जल्या दशवारं पुटेत्पुनः ।
तस्मिन्नष्टांशभागेन क्षिपेद्वैक्रान्तभसकम् ॥
राजावर्तं कलांशेन समभागेन पर्पटी ।

तत्सर्वं परिमर्द्याऽथ भावयित्वाऽऽर्द्रकाम्बुना ॥
गुडूच्याः स्वरसेनाऽपि भूरुदम्बरसेन वा ।
भृङ्गराजरसेनाऽपि चित्रमूलरसेन च ॥
व्योषगङ्गाकिनीकन्दैर्भूयोऽप्याऽऽर्द्रद्रवेण च ।
पटचूर्णमतः कृत्वा क्षिपेच्छुद्धकरण्डके ॥
त्रैलोक्यतिलकः सोऽयं ख्यातः सर्वरसोत्तमः
सर्वव्याधिहरः श्रीमाञ्छम्भुना परिकीर्तितः ॥
उदावर्तञ्च विड्बन्धं व्यथाञ्च जठरोद्भवाम् ।
लोहलं मन्दबुद्धित्वं शूलित्वमपि वन्ध्यताम् ॥
सूतिरोगानशेषांश्च शूलं नानाविधं तथा ।
परिणामाऽऽख्यशूलञ्च तथा भिन्द्यात्समुत्कटम्
रक्तगुल्मञ्च नारीणां रजःशूलञ्च दुःसहम् ।
अनुपानञ्च पथ्यञ्च तत्तद्रोगानुरूपतः ११६३

र र स., र. सु., र को, अर्शोरोगे ।

भाषा—सफेद और काले अभ्रकका शुद्धकियाहुआसत्त्व, काचका बारीकरेता, भुनासुहागा, सब समभागलेकर घीमे सेककर अटभाग तुल्य डालकर शरावसम्पुटमे बन्दकर दोसेर जङ्गलीकण्डोकी आचदे । इसतरह तीनबार करे । फिर अमिलतासकी जडकी छालके रससे घोटघोटकर ३, विजोरेकेरससे ४, इटसिट, अडूस, मछेछी, गुग्गुलु, त्रिफला, इनके क्वाथोसे ६–६ भावनाए देकर इससे अष्टमाश तुल्यपारेगन्धककी कज्जली मिलाकर घीकी एक और उपरोक्त सात चीजोकी ७–७ भावनाए दे । और प्रत्येकभावनाके पीछे २–३ सेर कण्डोकी आचदे । ऐसे ५० वार मर्दनकर पुटदेवे । कज्जलीका योग प्रत्येकपुटमे करता जाय। इसकेवाद शुद्धकान्तलोहके रेतेहुये सत्त्वको घीमे सेककर उसमे आठवा हिस्सा शिंगरिफ डालकर बडहलकेरससे घोटकर टिकिया बनाय सुखाकर शरावसम्पुटमेबन्दकर दोसेर कण्डोकी आचदे । इसप्रकार शिंगरिफका योगकर मर्दनकरके १० पुटेदे । फिर शुद्धचादीकेरेतमे शुद्धमैनसिल आठवा हिस्सा देकर लकुचकेपानीसे मर्दनकर पूर्ववत् दस आचे दे । इसकेवाद गन्धक आठवाहिस्सादेकर मछेछीकेरससे मर्दनकर सुखाकर वीसपुटेदे । इसके वाद आठवाहिस्सा सोनामाखीदेकर कालीगायकेघीकेसाथ मर्दनकर दसपुटेदे । प्रक्षेपवस्तु प्रत्येकपुटमे देताजाय । फिर सिद्ध कान्तसत्त्व और रजतको पूर्वरसकी वरावर २ इकट्ठे मिलाकर निर्गुण्डीकन्द अथवा सभालूके पत्तोके रससे मर्दनकर पूर्ववत् १० पुटेदे, पर इन प्रत्येक पुटोमे समभागपारदगन्धककी कज्जली आठवा हिस्सा मिलाताजाय । इसके वाद इन दोनोसे अष्टाश वैक्रान्तभस्म, षोडशाश लाजवर्दभस्म और इनसवकी वरावर रसपर्पटी और पूर्वोक्तरसमिलाकर अदरख, गिलोय, गोरखमुण्डी, भगरा, चित्रकमूल, त्रिकटु, सूरण, अदरख इन प्रत्येकके रसोसे १–१ भावना देकर १–१ रत्तीकी गोलिये बनाकर छायाशुष्ककर रखछोडे अथवा कपडछान चूर्णही रहनेदे । इनमेसे १–१ गोली तत्तद्रोगहरानुपानके साथ देनेसे उदावर्त, विवन्ध, उदरकीपीडा, तुतलापन, मन्दबुद्धित्व, शूल, वन्ध्यात्व, समस्त सूतिकारोग, तमामशूल, परिणामशूल, रक्तगुल्म, दुःसह रजःशूल, इनसवको यह दूरकरताहै ॥ २६६ ॥

### २६७ त्रैलोक्यनाथरसः

पलानि चत्वारि रसस्य पञ्च
गन्धस्य सत्त्वस्य गुडूचिकायाः ।
व्योषस्य चूर्णस्य च तालमूल्याः
सशाल्मलस्यापि पलत्रयं स्यात् ११६४
पृथक्पृथक् पड् गगनस्य चाऽष्टौ
लोहस्य सर्वं त्रिफलाजलेन ।
घृष्टं चतुःषष्टिमितं तदधोः
स्युर्भावना मार्कवजद्रवस्य ॥११६५॥
शिग्रुत्थनीरेण च षोडशाऽथ
तथाऽनलोत्या गृहकन्यकायाः ।
आर्द्रद्रवस्यैति रसोऽयमुक्तः
पाण्डुक्षयश्वासगदान्निहन्ति ॥११६६॥
क्षौद्रेण वा शर्करया घृतेन
निष्कार्धमेतस्य भजेत्प्रयत्नात् ।

रसेन सार्धं यवचिञ्चिकायाः
शोफाऽधिके वा जयपालमिश्रः॥११६७
वज्रीघृतेनाऽपि समस्तमद्या-
न्मृगाङ्कसूतप्रतिपादितं यत्।
त्रैलोक्यनाथप्रकटीकृतोऽयं
नरेन्द्रयोगीन्द्रमतादनर्घ्यः॥११६८॥

रसायनम., यो र, र. र दी, र कौ., र च., चि क, भै सा, नि. र, बृ. यो त, र. (मा), र सु, र का., वै चि., र क ल, व रा, र क यो, पाण्डुरोगे। व. रा र क. यो, मुसलीत्रिफलात्रिकटुशाल्मली गुडूची-सत्वाना पञ्चभागा नाम च त्रैलोक्यसुन्दरेति।

भाषा—शुद्धपारा ४ पल, शुद्धगन्धक ५ पल, गिलोयसत्त्व, त्रिकटु, मुसली मोचरस, येप्रत्येक ३–३पल,अभ्रकभस्म ६ पल, लोहभस्म ८ पललेकर सबको इकट्ठेकर त्रिफलाके क्वाथसे ६४, भंगरेके रससे ३२, सहिजन, चित्रक, घीकुआर और अदरख इनके स्वरसोसे १६–१६ भावनाए देकर एकमाशेसे आरम्भकर २ माशेतककी मात्रा मधु, शक्कर अथवा घी इनकेसाथ देनेसे पाण्डु, क्षय और श्वास इनको यह दूरकरताहै। अथवा यवचिञ्चिका (तितली)के रससे देवे। शोफ अधिकहोतो शुद्धज-मालगोटेके साथदे, अथवा थूहरके दूधमे पकायेहुए-घीके साथ देवे। अन्य पथ्य सब मृगाङ्ककी तरह देवे

## २६८ त्रैलोक्यमोहनरसः

शुद्धसूतस्तथागन्धो वङ्गभस्म शिलाजतु।
मौक्तिकश्च समं सर्वं शुष्कमादौ विमर्दयेत्॥
पाषाणभेदक्वाथेन कुमारीस्वरसेन च।
मूर्वागुडूचीत्रिफलाकषायेण पृथक्पृथक्
दिनानि पञ्च सम्मर्द्य घर्मे संशोषयेत्ततः।
काचकूप्यां विनिःक्षिप्य मुखं तस्या विमुद्रयेत्
माषान्नविषचूर्णानां कल्केन भिषगुत्तमः।
संस्थाप्य वालुकायन्त्रे चतुर्यामं विपाचयेत्॥
चोपचीनीयचूर्णेन माषमानेन योजितः।
त्रैलोक्यमोहनो नाम्ना गुञ्जामात्रो रसोत्तमः
पर्णखण्डेन दातव्यः प्रमेहमथनः परः ११७३

र सु, र प्र., प्रमेहे।

भाषा—शुद्धपारा और गन्धक, वङ्गभस्म, शिलाजीत, मोती, सब समभागलेकर १–२ पहर सूखे खरलकर पाषाणभेद, घीकुवार, मूर्वा, गिलोय, त्रिफला इनके स्वरस अथवा क्वाथोसे ५–५ रोज मर्दनकर धूपमे सुखाकर ६–७ कपडमिट्टी दीहुई काचकी शीशीमे भरके उडद, वछनाग और चूनेसे मुह वन्दकर वालुकायन्त्रमे रख चारपहरकी आचदे-कर स्वाङ्गशीतल होनेपर निकालकर इसमेसे १–१रत्ती लेकर १ माशा चोपचीनीके चूर्ण अथवा पानके-साथ देनेसे यह तमाम प्रमेहोको नष्टकरताहै २६८॥

## २६९ त्रैलोक्यविजयरसः

अष्टैकद्व्यष्टपञ्चकुञ्जरगणितलवा-
न्भूरसाऽश्मोपगानां,
तिन्दोष्टङ्कस्य भागांस्तनुतरमृदितान्
खल्वके वामरैकम्।
वर्षाभूभृङ्गगुञ्जाऽऽर्द्रकजनितरसै
र्दीप्यकेनाऽपि भाव्यं,
प्रत्येकं त्रिस्त्रिवार तरणि–दलवृतं
स्वेदयेद्यामशस्तम्॥११७४
खल्वे चूर्णीकृतोऽथ प्रबलबलगदे
रोगगजे ग्रहण्यां,
शस्तो वल्लैकमात्रः क्षितिधरतनया-
निर्मितः स्वानुपानैः।
रोगानेकोऽप्यशेषानिव जयतिसदा
क्षत्रियाञ्जामदग्न्यः,
सोऽयं विख्यातकीर्तिस्त्रिभुवनविजयो
भूर्भुवःस्वःप्रसिद्धः॥११७५॥

र ल, र ग, सर्वरोगे। टि०—अत्र भूशब्देन रस-साहचर्याद्गन्धकोग्राह्यः। गुणगुणिनोरसमवायाद्भूरवतीप्र थ्वीति गन्धस्य पृथ्वीगुणत्वात्तद्वाचकशब्दान्तराऽभावाच्च।

भाषा—गन्धक ८ भाग, पारा १ भा., कान्त-पाषाणभस्म अथवा शुद्ध सोमल २ भा., मरिच

८ भा., शुद्धकुचिला ६ भा., भुनासुहागा ८ भा., लेकर सबकी एकरोज कज्जलीकर इटसिट, भंगरा, गुञ्जाकेपत्ते, अदरख, अजवाइन इनके रस अथवा क्वाथोसे ३–३ रोज मर्दनकर गोलाबनाय आकके-पकेहुए पत्तोमे लपेटकर एकविलस्तभरके गड्ढेमे रखकर ऊपर अभ्रकके पटलसे अथवा ढक्कनसे खड्डेका मुह-बन्दकर २ सेर जङ्गलीकण्डोकी आचदेकर स्वेदनकरे। स्वाङ्गशीतल होनेपर निकालकर पूर्वोक्तरसोसे मर्दनकर पुटदे। ऐसे ५ वार स्वेदनकरनेके बाद ३–३ रत्तीकी गोलिये बनाकर रखलेवे । इनमेसे १–१ गोली तत्तद्रोगहरानुपानकेसाथ देनेसे समस्त उपद्रवयुक्त राजयक्ष्म और सङ्ग्रहणी इनको यह बहुतजल्दी नष्टकरताहै। अन्यरोगाऽनुपानके साथ देनेसे अन्य बहुतसे रोगोको यह दूरकरताहै २६९

## २७० त्रैलोक्यसम्मोहनरसः

**मातुलानीं घृते भृष्टां कर्षद्वादशसम्मिताम् ।**
**घृतादिपक्कं दरदं रससिन्दूर मभ्रकम् ॥**
**लवङ्गाऽऽकरभौ शङ्खभस्म कर्षमितं पृथक् ।**
**गोकण्टवानरीबीजे चन्द्रकर्कटशृङ्गिकाः ॥**
**पृथक्कर्षद्वयं सर्वं मातुलानीवरीरसैः ।**
**विभाव्य मुनिवेलं तद्यथाशक्ति निषेवयेत् ॥**
**वाजीव रमते स्त्रीषु नच शुक्रक्षयं व्रजेत् ।**
**कासश्वासक्षयाऽर्शांसि नाशयेदतिवेगतः ॥**

नू क., वाजीकरणरसायनयो । टि०—अत्र चन्द्र-स्थाने रसकर्पूरश्चेन्नियुज्येत तर्हि वाजीकरणे अद्वितीयोऽय भविष्यति। पर तदा प्रत्यहमुपयोगो न करणीयोऽन्यथा लालास्रावादिभीति स्यात्।

**भाषा**—मालकागन, मिलावे, निम्बमज्जा बीस २० तोले को कूटकर कडाहीमे आधाकल्क बिछा-कर एकएकतोलेकी रूमी शिंगरिफकी डली मलमल-के कपडेमे बाधकर उसपर रक्खे, ऐसे थोडेथोडे अन्तरपर पाच डलिये रखकर ऊपर बचा हुआ आधाकल्क जमादे। फिर इसकल्ककी बराबर घी और मधु डालकर खुलीहवामे चूल्हेपर मन्द अग्निसे पकावे। यह ध्यान रक्खेकि इसमेसे उफान खाकर दवा नीचे न गिरे। अखीरमे कडाहीमे आग लग-जायगी उसवक्त अग्नि लगाना बन्दकरदे। स्वाङ्गशी-तल होनेपर शिंगरिफकी डलियोको निकालले। यह शिंगरिफ, रससिन्दूर, अभ्रकभस्म, लवङ्ग, अकल-करा, शङ्खभस्म ये प्रत्येक १–१ तोला, गोखरू, दूधमे स्वेदनकरके छिलके निकालेहुए केवाचकेबीज, रसकपूर, काकडासीगी ये प्रत्येक २–२ तोले, साफकरके घीमे भूनीहुई भाग १२ तोले, लेकर सबको इकट्ठे खरलकर भाग और शतावरीकाकद इनके रसोसे सातसातबार भावनाए देकर १ मासेसे तीन माशेतककी गोलिये बनाकर रखलेवे। इनमेस १–१ गोली दूधकेसाथ देनेसे कास, श्वास, क्षय, अर्श और प्रमेह इनसबको यह बहुतशीघ्र नष्टकरता है। रतिसमयसे १ घटापहिले इसकासेवनकरनेसे यथेष्टस्तम्भनहोताहै । टि०—जब रसकपूर देना होतो इसका रोजसेवन नही करना नहीतो मुंह आनेका सम्भव रहताहै । यह योग स्तम्भनके लिये अद्वितीय है ॥ २७० ॥

## २७१ त्रैलोक्यसुन्दररसः ( प्रथमः )

**शुद्धसूतं द्विधा गन्धं ताम्राऽभ्रं सैन्धवं विषम् ।**
**कृष्णजीरं विडङ्गश्च गुडूचीसत्त्वचित्रकम् ॥**
**उग्रगन्धा यवक्षारं प्रत्येकं कर्षमात्रकम् ।**
**निर्गुण्डिकाद्रवैरग्निबीजपूरद्रवैर्दिनम् ॥११८१**
**मर्दयेच्छोषयेत्सोऽयं रसस्त्रैलोक्यसुन्दरः ।**
**गुञ्जाद्वयं घृतैर्लेह्यं वातोदरकुलान्तकम् ११८२**
**वह्निचूर्णं यवक्षारं प्रत्येकञ्च पलद्वयम् ।**
**घृतप्रस्थं विपक्तव्यं गोमूत्रैश्च चतुर्गुणैः ॥**
**घृताऽवशेषं कर्तव्यं कर्षमात्रं पिबेदनु ११८३**

र. स, र र स, र र कौ., र र., र सु, रसाय-नस, चि र भ., र कौ, व रा, र. चि, ध., र. च., ना वि, र. का, र क यो, उदराऽधिकारे।

**भाषा**—शुद्धपारा १ भा., शुद्धगन्धक २ भा., ताम्रभस्म,अभ्रकभस्म,सेधानमक,शुद्धवछनाग, काली-

जीरी, विडङ्ग, गुडूचीसत्त्व, चित्रकमूल, वचा, यवक्षार, येप्रत्येक एकतोलालेकर सबका बारीकचूर्णकर पारे-गन्धककी नीलवर्ण कज्जलीमे मिलाकर सभाळूके पत्ते, चित्रकमूल, विजोरा इनके रसोसे १–१ भावना देकर २ या ३ रत्तीकी गोलिये वनाकर छायामे सुखाकर रखलेवे। इनमेसे १–१ गोली घीके साथ देनेसे वातोदरका समूल नाशहोताहै। चित्रकमूल, यवक्षार २–२ पल, घी १ सेर, गोमूत्र ४ सेर लेकर एकजगह पकावे। घीमात्र बाकीरहनेपर उतारकर रखछोड़े। इसमेसे एकतोला गोली देनेके बाद पिलावे ॥ २७१ ॥

## २७२ त्रैलोक्यसुन्दररसः ( द्वितीयः )

**रसगन्धकलोहाऽभ्रगुडूचीसत्त्वसूकराः ।**
**त्रिफला शिग्रुमूलानि भृङ्गसारेण भावयेत् ॥**
**त्रैलोक्यसुन्दरः सोऽयं सघृतक्षौद्रशर्करः ।**
**मृगाङ्कवत्पथ्यभुजः पाण्डुशोफौ नियच्छति ॥**
**युतः किञ्चिद्घृतक्षौद्रगुडतित्तिरिगुग्गुलैः ।**
**त्रिनेत्रेण युतो योज्यः शोषे तोयाऽनुपानतः॥**

र. र स, र च., वै चि, पाण्डुरोगे।

भाषा— शुद्धपारा और गन्धक, लोहभस्म, अभ्रकभस्म, गिलोयसत्त्व, वाराहीकन्द, येसव समभाग लेकर बारीकचूर्णकर सहिजनकी जडकीछाल, भंगरा इनके रसोसे १–१ भावना देकर ३–३ रत्तीकी गोलिये वनाकर रखछोडे। इनमेसे १गोलीसे ३ गोलीतक घी, शक्कर और मधुकेसाथ अथवा मधु, घी, गुड, गुग्गुलु, १–१ माशा और शुद्धजमालगोटा योग्यतानुसार मिलाकर इसकेसाथ देनेसे पाण्डु और शोफको दूरकरताहै। इसकी १ गोली त्रिनेत्ररस, ( रसयोगसागर, त्रिगुणाख्य १ ) केसाथ मिश्रितकर पानीकेसाथ देनेसे शोप दूरहोताहै। इसमे पथ्य मृगाङ्ककी तरह देना ॥ २७२ ॥

## २७३ त्रैलोक्यसुन्दररसः ( तृतीयः )

**रसगन्धकयोः कर्षौ प्रत्येकं कज्जलीकृतौ ।**
**शक्रश्च मुशली चैव धुस्तूरं केशराजकम् ॥**
**देवदाली जयन्ती च तथा मण्डूकपर्णिका ।**
**पृथग्गुणमितैः कर्षैं रसैरासां विमर्दयेत्११८८**
**मापमात्रां वटीं कृत्वा स्वाऽनुपानैः प्रयोजिता**
**त्रिदोपजं ज्वरं हन्ति तथा प्रबलकोष्ठकम् ॥**
**दाहे तु नारिकेलस्य जलं देयं प्रयत्नतः ।**
**त्रैलोक्यसुन्दरो नाम सन्निपातहरोरसः११९०**

र. स, ज्वराऽधिकारे।

भाषा— शुद्धपारा और गन्धक १–१ तोलालेकर नीलवर्ण कज्जलीकर कुरैया, मुशली, धतूरा, काला भगरा, बन्दाल, जैत, ब्राह्मी इनप्रत्येकके पत्तोके ३–३ तोलेरससे अलग अलग खरलकर १–१ माशेकी गोलिये वनाकर छायाशुष्ककर रखछोडे। इनमेसे १–१ गोली समयोचिताऽनुपाकेसाथ देनेसे त्रिदोपजज्वर और प्रबल उदरको यह नष्टकरताहै। इसकेदेनेसे दाह माळूमहो तो नारियलका जल देना। यह सन्निपातको बहुतशीघ्र दूरकरताहै।

## २७४ त्रैलोक्यसुन्दररसः

**मानश्चैकं ततः सूतं षडभ्रं वसुलौहकम् ।**
**गन्धकं त्रिफलाव्योषचूर्णं मोचरसस्य च ॥**
**मुशली चाऽमृतासत्त्वं प्रत्येकं पञ्चभागिकम् ।**
**भावयेत्सर्वमेकत्र त्रिफलानां कषायके ११९२**
**भावना विंशति र्देया दशरात्रं सुभावनाः ।**
**शिग्रुचित्रकमूलाभ्यामष्टधा च पृथक्पृथक् ॥**
**त्रैलोक्यसुन्दरो नाम रसो माषमितो हितः ।**
**सितया च समं क्षौद्रैः शोथपाण्डुक्षयौ जयेत्॥**
**ज्वराऽतिसारमत्युग्रं सर्वोपद्रवसंयुतम् ११९४**

र स, टो, पाण्डुरोगे। अय त्रैलोक्यनाथादभिन्नः पाठ द्रव्यप्रमाणे भावनासु च काल्पनिको भेद कृतोऽस्ति।

भाषा— शुद्धपारा १ भाग, अभ्रकभस्म ६ भा., लोहभस्म ८ भा., शुद्धगन्धक, त्रिफला, त्रिकटु, मोचरस, मुशली, गिलोयसत्त्व, येप्रत्येक ५–५ भाग, लेकर सबका बारीकचूर्णकर गन्धकपारका नीलवर्ण कज्जलीमे मिलाकर त्रिफलाके काढेसे १० रोजमे २० भावनाए देकर सहिजन-

कीजडकीछाल और चित्रकमूलके स्वरससे आठआठ भावनाए देकर १—१ माशेकी गोलिये बनाकर रखछोडे। इनमेसे १—१ गोली शक्कर और मधुकेसाथ देनेसे शोथ, पाण्डु, क्षय, औरसभी उपद्रवोंकेसाथ बढाहुआ ज्वराऽतिसार इनको यह नष्टकरताहै

## २७५ त्र्यम्बकाऽभ्रम्

अभ्रं मेचकमारितं पलमितं व्याघ्रीबला गोक्षुरं,
कन्यापिप्पलिमूलभृङ्गवृषभाः पत्रं तथा बादरम्
धात्रीरात्रिगुडूचिकाः पृथगतःसत्त्वैःपलांशैर्युतं,
सम्मर्द्याऽतिमनोरमंसुवलिनंकृत्वायदासेवितम्
कल्पोत्थंकफपित्तजंस्वरगतंयञ्चत्रिदोषात्मकमत्युच्चैर्वदतोहतं बहुविधं पानीयदोषोद्भवम्।
कासंश्वासमुरोग्रहंयकृतिजंहिक्कांतृषांकामलामर्शांसिग्रहणींज्वरंबहुविधंशोथंक्षयञ्चाऽर्बुदम्॥
हन्ति त्र्यम्बकमभ्रमद्भुततरं वृष्याऽतिवृष्यं परं,
वह्नेर्वृद्धिकरंरसायनवरंसर्वाऽऽमयध्वंसि तत्॥

भै. र., स्वरभेदे।

भाषा— निश्चन्द्र अभ्रकभस्म १ पल लेकर वनभाटा, बला, गोखरू, घीकुआर, पिपलामूल, भंगरा, अडूसा, पत्रज, बेर, आवले, हल्दी, गिलोय, इनप्रत्येकका १—१ पल घन मिलाकर मर्दनकर १—१ माशेकी गोलिये बनाकर रखछोडे। इनमेसे १—१ गोली समयोचिताऽनुपानकेसाथ खानेसे प्रातःकाल होनेवाला ज्वर, कफपित्तज, जिह्वकसन्निपात,नानातरहका स्वरभङ्ग, खराबपानीसे उत्पन्नहोनेवालाज्वर, कास, श्वास, उरोग्रह, यकृत्, हिक्का, तृषा, कामला, बवासीर, ग्रहणी, शोथ, क्षय, अर्बुद इनसबको यह दूरकर धातुओंको अत्यन्त बढाताहै। और अग्निको दीप्तकर आयुको बढाताहै॥

## २७६ त्र्याहिकारिरसः ( प्रथमः )

रसकेन समं शङ्खं शिखिग्रीवञ्च पादिकम्।
गोजिह्वया जयन्त्या च तण्डुलीयैश्च भावयेत्॥
प्रत्येकं सप्तसप्ताऽथ शुष्कं गुञ्जाचतुष्टयम्।
जरणेन घृतेनाऽद्यात्त्र्याहिकज्वरशान्तये॥१९८

र. स., र. सु., र. च., र. कौ./च. रा., ज्वराधिकारे।

भाषा— शुद्धखपरिया और शङ्खभस्म १—१ तोला; शुद्धतुत्थक ४ माशे लेकर सबको बारीकपीस वनगोभी, जैत, चौलाई, इनके रसोंसे सातसात भावनाए देकर ४—४ रत्तीकी गोलिये बनाकर रखछोडे। इनमेसे १—१ गोली १ घंटे पहिले जीरा और घीकेसाथ लेनेसे त्र्याहिक ज्वरको यह नष्टकरताहै॥ २७६॥

## २७७ त्र्याहिकारिरसः ( द्वितीयः )

रसगन्धशिलातालं सर्वैरतिविषा समा।
रसस्य द्विगुणं लौहं रौप्यं लोहाऽङ्घ्रिसम्मितम्
पिचुमर्दरसेनाऽपि विष्णुक्रान्तारसेन च।
सर्वं सम्मर्द्य वटिकाः कुर्याद्गुञ्जात्रयोन्मिताः॥
हन्यादतिविषाक्वाथसंयुतोऽयं रसोत्तमः।
त्र्याहिकादीन् ज्वरान्सर्वे रक्षांसीव रघूद्वहः॥

भै. र., ज्वराधिकारे।

भाषा—शुद्धपारा, गन्धक, मनसिल, हरिताल येसब समभाग, अतीस सबकी बराबर, लोहभस्म पारेकी बराबर, रजतभस्म लोहसे चतुर्थांश मिलाकर नीलवर्ण कज्जलीकर निम्ब, विष्णुक्रान्ताके पत्तोंके रससे १—१ रोज मर्दनकर ३—३ रत्तीकी गोलिये बनाकर छायाशुष्ककर रखछोडे। इनमेसे १—१ गोली अतीसकेकाढेकेसाथ देनेसे यह त्र्याहिकादिज्वरोंको इसतरह नष्टकरता है जैसे श्रीरामचन्द्रजीने राक्षसोंका नाशकियाहै॥ २७७॥

## २७८ त्र्यूषणादिमण्डूरम् ( प्रथमम् )

पृथक् त्र्यूषणमक्षांशं वन्ध्यालोहोद्भवं पलम्।
प्रत्येकं त्रिफलायाश्च कर्षद्वयमपि क्षिपेत्॥
प्रसारिण्याः पञ्चपलं बीजपूरच्छदस्य च।
सबीजपीतवल्याश्च लतायाश्चोदकस्य च॥
निष्पीडितं रसं तेषां पृथगष्टपलं मतम्।
मण्डूरस्य पलान्यत्र चत्वारिंशच्च दापयेत्॥
सर्वाण्येकत्र विधिवत् क्वाथ्यमानं विशोषयेत्।
ततोमण्डूरमादाय श्लक्ष्णं चूर्णीकृतं तथा॥

हिङ्ग्वष्टमापकं व्योपं प्रत्येकं वेदमाषकम् ।
धात्र्याः पञ्चपलान्यत्र चूर्णे दद्याच्च तानि वै ॥
पृथक् पलानि पञ्चैव शर्करामधुनोरपि ।
पाषाणभेदचूर्णन्तु पलानां पञ्चकं हरेत् ॥
धान्यजीरकसिद्धेन सर्पिषा प्राग्विमर्दयेत् ।
एतन्मण्डूरमादौ तु मध्येऽन्ते भोजनस्य च ॥
कुर्वन् पयोऽनुपानेन शूली शूलं त्रिदोषजम् ।
परिणामकृतं सर्वं हन्यादेतन्न संशयः ॥
अम्लपित्तविकारेषु विविधेषूदरेषु च ।
त्र्यूषणाद्यमिदं ख्यातं भैषज्यममृतोपमम् ॥

र. का., पाण्डुरोगे ।

भाषा— सोंठ, मिर्च, पीपल १-१ तोला, खेखसाकीजड, अगर, ४-४ तोले, त्रिफला ६ तो., प्रसारिणी, बिजेरकीछाल ५-५ पल, मालकागनीकी छाल और बीज, मजीठ, सुगन्धवाला इनप्रत्येकका यथासम्भव अङ्गस्वरस अथवा क्वाथ ८-८ पल, मण्डूरभस्म ४० पल लेकर सबको इकट्ठेकर मन्द आंचसे घर्षणकरताहुआ पकावे । सूखनेपर बारीककर हींग ८ माशे, त्रिकटु १ तोला, आवले ५ पल, शक्कर और मधु ५-५ पल, पाषाणभेद ५ पल, मिलाकर धनिया और जीरेसे पकायेहुए घीसे १-२ रोज मर्दनकर रखछोडे । इसमेंसे भोजनके मध्य अथवा अन्तमें उचिताऽनुपानकेसाथ अथवा दूधकेसाथ देनेसे त्रिदोषजशूल, परिणामशूल, सबतरहके अम्लपित्त, सम्पूर्ण उदररोग, इनसबको यह दूरकरता है ॥ २७८ ॥

## २७९ त्र्यूषणादिमण्डूरम् ( द्वितीयम् )

त्र्यूषणं त्रिफला चव्यं विडङ्गाऽनलजीरकम् ।
भृङ्गी मुस्तं देवकाष्ठं कारवी धान्यतुम्बुरु ॥
दन्तीत्रिवृतयोर्मूलं ग्रन्थिकं गजपिप्पली ।
त्वगेलापत्रकं चूर्णमेषामर्धपलं पृथक् ॥
गृह्णीयाद्गन्धपाषाणं केशरञ्चाऽक्षसम्मितम् ।
मण्डूरस्य विशुद्धस्य पलानां पञ्चविंशतिः ॥
कृत्वा चूर्णं ततः सूक्ष्मं स्वरसैर्भावयेत्तु तम् ।
कन्दोत्कटं केशराजं वन्ध्यातालसमुद्भवैः ॥
धात्रीफलरसप्रस्थं मूत्रमष्टगुणं तथा ।
दत्त्वा विपाचयेत्तावद्यावत्पाकञ्च गच्छति ॥
खादेदग्निबलं मत्वा परिहारविवर्जितः ।
सर्वशूलं निहन्त्याशु भास्करस्तिमिरं यथा ॥

र. का., शूले ।

भाषा— त्रिकटु, त्रिफला, चव्य, विडङ्ग, चित्रक, जीरा, काकडासींगी, नागरमोथा, देवदारु, मगरैल अथवा कालीजीरी, धनिया, तुम्बुल, दन्तीमूल, निशोत, पिपलामूल, गजपीपल, तज, इलायची, पत्रज, इनप्रत्येकका चूर्ण आधापल, शुद्धगन्धक, केसर १-१ तोला, मण्डूरभस्म २५ पल, ऊटकटाला, कालाभंगरा, वाझखेखसेकाकद, ताडवाली, आवले, इनप्रत्येकका रस १-१ सेर देकर धीमी आंचसे पकावे और हरवक्त चलातारहे । जब रस जलकर गोलिये बधनेलायक होजाय तब उतारकर ३ माशेसे ६ माशेतक समयोचितानुपानकेसाथ देनेसे यह समस्तशूलोंको दूरकरताहै । इसमें अधिक परहेजकी जुरूरत नहीहै ॥ २७९ ॥

## २८० त्र्यूषणादिमण्डूरम् ( तृतीयम् )

स्विन्नमष्टगुणे मूत्रे लोहकिट्टं सुशोधितम् ।
पाकाऽन्ते त्र्यूषणं वह्निवरादार्वीसुरद्रुमान् ॥
विडङ्गबीजचूर्णञ्च मुस्तं किट्टसमं क्षिपेत् ।
प्रातः कर्षं भजेदस्य जीर्णे तक्रौदनं भजेत् ॥
हलीमकं पाण्डुरोगमर्शांसि श्वयथुं तथा ।
ऊरुस्तम्भं जयेदेतत्कामलां कुम्भकामलाम् ॥

र स, र सु, पाण्डुरोगे ।

भाषा— सोवर्षसे-पुराने मण्डूरका गोमूत्रमें शोधनकर उसीमें घोटघोटकर भस्मकरले । फिर मण्डूरसे अठगुना गोमूत्रदेकर मन्दआंचसे पकावे । जब गोलिये बधनेलायकहोजाय तब त्रिकटु, चित्रकमूल, त्रिफला, दारुहल्दी, देवदारु, विडङ्गतण्डुल, नागरमोथा येसब मिलकर मण्डूरकी बराबर बारीक-

चूर्णकर उसमे डालकर १ मासेसे ३ मासेतककी गोलिये बनाकर रखछोडे । इनमेसे अग्निबलके अनुसार खानेसे हलीमक, पाण्डु, बवासीर, शोथ, ऊरुस्तम्भ, कामला, कुम्भकामला, येसब नष्टहोतेहै ।

## २८१ त्र्यूषणादिलोहम् ( प्रथमम् )

त्र्यूषणं त्रिफला चव्यं चतुर्लवणमभ्रकम् ।
वाकुची लोहचूर्णश्च भक्षयेन्मधुसर्पिषा १२२०
परं स्थौल्यहरं वह्निबलवर्णविवर्द्धनम् ।
श्रेष्ठं रसायनं मेहकुष्ठघ्नं यन्त्रणां विना १२२१

र र, र का, स्थौल्ये । र. का अभ्रस्थाने विडङ्गंदृश्यते ।

भाषा— त्रिकटु, त्रिफला, चव्य, चारलवण (सैन्धव, सामुद्र, विड, सौवर्चल) अभ्रकभस्म, वाकुचीबीज और लोहभस्म येसब समभाग मिलाकर चूर्णकर रखछोडे । इसमेसे १ मासेसे ३ मासेतककीमात्रा लेकर मधु और घीकेसाथ चाटनेसे अत्यन्तस्थूलता, अग्नि, बल और वर्णकी हानि, प्रमेह, कुष्ठ इनसबको यह नष्टकरताहै । इसमे अधिकपरहेजकी जुरूरत नही है ॥ २८१ ॥

## २८२ त्र्यूषणादिलोहम् ( द्वितीयम् )

त्र्यूषणं त्रिफला चव्यं वाकुचीचित्रकं तथा ।
लवणानि च चत्वारि सर्वतुल्यमयोमृतम् ॥
भक्षयेन्मधुसर्पिभ्यां स्थौल्यकृद्बलवर्णकृत् ।
मेदोघ्नं कुष्ठशमनं सर्वव्याधिविनाशनम् ॥
त्र्यूषणाद्यमिदं लोहं रसायनमनुत्तमम् १२२३

र. क, र. स, यो. र., र. च, वै चि, र सु, र चि, र क. ल, व, र सि, रसायनस नि र, स्थौल्याविकारे । बहुपुस्तकेषु त्रिफलास्थाने विजयेति पाठो दृश्यते । कैश्चित्कैश्चिन्महाशयै हरीतकीति व्याख्यानं कृतम् । वस्तुतस्तुत्र्यूषणसाहचर्यात्प्रयोगौचित्याच्च त्रिफला इत्येव पाठ साधीयान् । रसरत्नाकरादौ तथैव दर्शनादितिदिक् ।

भाषा— त्रिकटु, त्रिफला, चव्य, वाकुचीबीज, चित्रकमूल, चारोनमक, येसब समभाग, इनसबकी बराबर लोहभस्म मिलाकर रखछोडे । इसमेसे १ मासेसे २ मासेतक अग्निबल देखकर घी और मधुकेसाथ देनेसे मेदोवृद्धि, कुष्ट, मन्दाग्नि, श्वास, कास, कामला, हलीमक, बलवर्णाऽभाव, इनसबको यह दूरकर कृशोको स्थूलकरताहै और आयुको बढाता है

## २८३ त्र्यूषणादिलोहम् ( तृतीयम् )

त्र्यूषणं त्रिफला दारु हरिद्रे नीलिनीफलम् ।
द्राक्षाचेन्द्रयवं मुस्तं मञ्जिष्ठां कटुरोहिणीम् ॥
शतावरीशिग्रुबीजं चित्रकं गजपिप्पली ।
शालिपर्णी पृथक्पर्णी बृहती कण्टकारिका ॥
पाठा भल्लातकं दन्ती विशाला सदुरालभा ।
शटी मधुरसा रास्ना विडङ्गश्च समाक्षिकम् ॥
एतैश्चूर्णैः समं वाऽपि लोहं द्विगुणमावपेत् ।
यावशूकश्च संसृज्य गवां मूत्रेण पाचयेत् ॥
ततोऽक्षमात्रां गुटिकां पाययेत्तण्डुलाऽम्बुना ।
पाण्डुरोगं जयत्याशु ब्रह्मदण्ड इवाऽपरः ॥

र का, पाण्डुरोगे ।

भाषा— त्रिकटु, त्रिफला, देवदारु, हल्दी, दारुहल्दी, कालादाना, द्राक्ष, इन्द्रयव, नागरमोथा, मजीठ, कुटकी, शतावर, सहिजनकेबीज, चित्रकमूल, गजपीपल, शालिपर्णी, सारिवा, दोनो भटकटैया, पाठा, भिलावे, दन्तीमूल, इन्द्रायण, छोटाजवास, कचूर, गिलोय, रास्ना, विडङ्ग, सोनामाखी येसब समभाग, इनसबकी बराबर अथवा इनसबसे दूनी लोहभस्म और यवक्षार मिलाकर अठगुने गोमूत्रमे धीरे २ पकावे । जबगोलिया बधने लायकहोजाय तब ६ मासेकी गोलिया बनाकर छायाशुष्ककर रखछोडे । इनमेसे अग्निबल देखकर १ या २ गोली चावलके धोवनकेसाथ देनेसे यह पाण्डुरोगको बहुत शीघ्र नष्टकरताहै ॥ २८३ ॥

## २८४ त्र्यूषणादिवटी ( प्रथमा )

त्रीणि कटूनि तथाऽतिविषा च
क्षारयुता त्रिवृता त्रिफला च ।
दन्तिकवासकलोध्रनतानि
चन्दनवारिविषेभकणाश्च ॥ १२२९ ॥
ग्रन्थिकपुष्करमूलघनाश्च-
तिक्तककट्फलकेन्द्रयवाश्च ।

त्वग्दलनीलसरोजघनाश्च-
वालमलाऽऽलसुजातिफलश्च ॥ १२३०
द्रव्यमिदं पिचुमात्रकमेत-
च्चाऽष्टपलानि तथाऽऽयसकस्य ।
अष्टपलन्तु शिलाजतुकं स्या-
च्छर्करया-शुभया च समानम् ॥
शुभवासरभक्षणमस्य वरं
मुखमस्तकरोगनिरोधकरम् ।
भ्रमकाचतमोऽर्बुदपिष्टहरं
नवयौवनकान्तिकलापकरम् ॥ १२३२

र. र, रसायने ।

भाषा— त्रिकटु, अतीस, सज्जी, यवक्षार, सुहागा, त्रिफला, निसोत, शुद्धजमालगोटा, अडूसकेपत्ते, लोध, तगर, चन्दन, खस, शुद्धवछनाग, गजपीपल, पिपलामूल, पोहकरमूल, अभ्रकभस्म, चिरायता, कायफल, इन्द्रयव, तज, पत्रज, नागरमोथा, नीलोतपल, सुगन्धवाला, शुद्धकपूर, हरिताल भस्म अथवा रसमाणिक्य और जायफल येप्रत्येक १ तोला, मण्डूरभस्म ८ पल, शुद्धशिलाजीत ८ पल, शक्कर सवकी बराबर लेकर मिलाकर रखछोडे। इसमेंसे ३ माशेसे ६ माशेतक तत्तद्रोगहरानुपानके साथ शुभ नक्षत्रमे शुरूकरनेसे मुख और मस्तकके रोग, कुष्ठ, पाण्डु, श्वास, कास, कामला, हलीमक, उदररोग, ववासीर इनसबको दूरकर आयुको वढाताहै बुढापेको दूरकरताहै। इसका अञ्जन करनेसेभ्रम, मोतिया, तम, अर्बुद और गदलापन दूरहोते है ॥

## २८५ त्र्यूषणादिवटी ( द्वितीया )

कटुत्रयं पारदगन्धटङ्कणं
सद्वत्सनाभश्च कपर्दिकायुतम् ।
विमर्द्य निम्बुद्रवतस्त्रिघस्रकं
भजेत्त्रिमरिचाऽऽज्यविमिश्रितां ताम् ॥
पित्तप्रधाने ग्रहणीविकारके
पित्ताऽतिसारेऽनिलरक्तकाऽऽमये ।
सशर्करं योजयत प्रबुद्धिभिः
गुदाऽऽमये शूलचये च गुल्मके ॥
हिङ्गु घृतश्चापि पिबेत्प्रयत्नत-
स्तक्रं ग्रहण्यामहिवल्लितातम् ।
शैत्ये मरीचैर्वमथौ प्रयोज्यः
लाजाजमन्थं विधिवद्विधिज्ञः १२३५॥
कृमौ विडङ्गैः कुटजैः स्रुतौ च
रक्तस्य गन्धेन किलाससद्भवे ।
जीर्णज्वरे क्षौद्रकणायुतश्च
वाते रसोनैः सघृतो नियोज्यः ॥
कटुत्रिकं क्षौद्रयुतश्च कासे
ज्वरे सपांसुजलदः प्रशस्तः ।
वरा सिताढ्या च हिता प्रमेहे
क्षौद्रान्विताद्रेश्च तथा त्रिदोषे ॥
इत्थं हि योज्यं किल चानुपानं
योग्यं यदेतत्कुशलैस्तथाऽन्यत् १२३७॥

रसायनस, ग्रहण्यादौ ।

भाषा—त्रिकटु, शुद्धपारा और गन्धक, सुहागा शुद्धबछनाग, कौडीभस्म सब समभागलेकर नीबूके रससे ३ रोज मर्दनकर ३—३ रत्तीकी गोलिये बनाकर रखछोडे। इनमेसे १ गोली लेकर ३ मरिच और ३ माशे घीकेसाथ चटानेसे पित्तप्रधान ग्रहणीरोग, पित्ताऽतिसार और वातरक्तको दूरकरताहै। ववासीर, शूल, गुल्म इनमे शक्करकेसाथ देकर हीग और घी पिलानेसे इनको दूरकरता है। ग्रहणीमे पानमे देकर ऊपरसे छाछ पिलावे। शीतमे मरिचके साथ, वमनमे लाजके सत्तूके साथ, कृमिमे विडङ्गके साथ, रक्ताऽतिसारमे कुटजकी छालके साथ, कफाधिक्यमे गन्धकके साथ, जीर्णज्वरमे मधु और पीपलके साथ वायुमे लशुन और घीके साथ, खासीमे त्रिकटु और मधुके साथ, ज्वरमे गन्धक और नागरमोथेके साथ, प्रमेहमे त्रिफला और शक्करके साथ त्रिदोषज्वरमे अदरख और मधुके साथ देना २८५॥

## २८६ त्वगाद्यागुटिका

त्वगेलागन्धकश्चैव गुग्गुलुः समभागतः ।
कुर्याद्वातारितैलेन गुटिका वातरोगिणाम् ॥

ग. नि., वातरोगे ।

भाषा—तज, इलायची, गन्धक, गुग्गुलु येसव समभागलेकर एरण्डके तैलसे ३—३ माशेकी गोलिये बनाकर वातहरानुपानके साथ देनेसे समस्त वायुके रोगोको दूरकरतीहै ॥ २८६ ॥

## २८७ दण्डिलोहम् ( प्रथमम् )

अथातः सम्प्रवक्ष्यामि दण्डिलोहस्य च क्रियाम्
सङ्गृह्य त्रिफलाक्वाथाद्बिल्वं बिल्वार्धमेव वा ॥
लौहे कटाहे निक्षिप्य लौहदण्डेन मर्दयेत् ।
गुञ्जाप्रमाणां लौहस्य भूतिं तदुपरि क्षिपेत् ॥
एतद्द्वियामपर्यन्तं मर्दयेत्सुदृढं भिषक् ।
घनीभूतं यदा जातं कृष्णं किट्टनिभं तदा ॥
पाययेद्रोगिणं पश्चाल्लघ्वन्नं भोजयेन्नरः ।
एवं द्विसन्ध्यं कुर्वीत मासं प्रतिदिनं ध्रुवम् ॥
ग्रहणीमतिसारञ्च वह्निमान्द्यमजीर्णताम् ।
ज्वरं गुल्ममुदावर्तं कासश्वासक्षयक्रिमीन् ॥
विशेषाद्ग्रहणीं हन्ति योगोऽयं दुस्तरामपि ।
अनुभूतः पुरा वैद्यै मया भिषगनुज्ञया ॥

रसायनस , रसायने ।

भाषा—तीनतोले त्रिफला लेकर ४ पल पानीमे क्वाथकर एकपल अवशिष्ट रहनेपर मसलकर छानले । इसको लोहेकी कडाहीमे डालकर एकरत्ती से लेकर ३ रत्तीतक लोहेकीभस्म डालकर लोहेके डंडेसे दोपहरतक लगातार मर्दनकरे जब यह गाढाहोकर किट्टकीतरह कालाहोजाय तब रोगीको पिलादे । इसके जीर्णहोनेपर हल्का भोजनदे । इस-तरह दोनो समय रोजकरनेसे ग्रहणी, अतिसार, मन्दाग्नि, अजीर्ण, ज्वर, गुल्म, उदावर्त, कास, श्वास, क्षय, क्रिमि, विशेषकर दुस्तरसङ्ग्रहणी इनको यह योग दूरकरताहै । यह कईवारका अनुभव किया हुआ है ॥ २८७ ॥

## २८८ दण्डिलोहम् ( द्वितीयम् )

पलमात्रन्तु गोमूत्रमथवा शुद्धवारि च ।
लोहपात्रे विनिक्षिप्य लोहदण्डेन मर्दयेत् ॥
पथ्याचूर्णस्य कर्षैकं तत्समं लोहचूर्णकम् ।
यामार्धं मर्दयेदेवं वारि पथ्यासमं पुनः ॥
एवं त्रिःशोषितं वारि सायं प्रातः सुपेवयेत् ।
पथ्याचूर्णं पुनर्योज्यं वारिणा नित्यमेव च ॥
पुनः प्रतिदिनं मर्द्य लोहचूर्णं क्षये पुनः ।
कृष्णीभूतमिदं वारि जायते मधुरं परम् ॥
तद्वारि सेवनात्पुंसां नवो देहः प्रजायते ।
जीर्णज्वरोदरे शूले आमशूले तथा क्रमौ ॥
अरुचिश्चाऽम्लपित्तञ्च श्वासं कासं निवारयेत् ।
जीर्णधातुत्वहृद्रोगौ गात्रभङ्गं तथा क्षयम् ॥
सकलं राजयक्ष्माणं नाशयेत्परमौषधम् ।
मन्दाऽग्निं ग्रहणीञ्चाऽपि पीनसं नाशयेत्परम् ॥
सेव्यमानं तु यत्पुंसां क्षुधाकरणमुत्तमम् ।
त्रिःसप्तदिवसैरस्य सेवनं यदि चेत्कृतम् ॥
सर्वरोगविनाशश्च भवेदेव न संशयः ।
षण्मासं वा वत्सरं वा सेवनाल्लोहवत्तनुः ॥
जायते नाऽत्रसन्देहो ह्यनुभूतं मयाऽपि च ॥

रसायनस , रसायने ।

भाषा—एकपल गोमूत्र अथवा पानीको लोहेकी कडाहीमे डालकर १ तोला हर्रेकाचूर्ण और एकतोला वारीकलोहचूर्ण मिलाकर लोहेके डंडेसे आधे पहर तक घोटे । पानीसूखनेपर १ तोला पानी और डाले । इसतरह तीनवार १—१ तोला पानी सुखाकर १ पल पानी और डालकर इसमेसे जितनाद्रव टेढाकरनेसे चलाआवे उतनाही लेकर पीजाय और इसमे एकपल पानी और डालकर रहनेदे । फिर उसको आधापहर घोटकर सन्ध्याके समय पीजाय फिर उसपात्रमे १ तोला हर्रेकाचूर्ण और एक पलपानी डालकर रहनेदे सुबहमे आधा-पहर खरलकर नितारकर पानी पीजाय और नया एकपल पानी डालदे ऐसे रोजानाकरे । हर्रेका चूर्ण रोजाना रातको डालदियाकरे । लोहेका चूर्ण जब बिल्कुल समाप्त होजाय तब दूसरा डाले । ऐसे २१ रोज सेवनकरनेसे मनुष्यका शरीर नवीन होजाताहै और जीर्णज्वर, उदररोग, शूल, आम-

शूल, कृमि, अरुचि, अम्लपित्त, श्वास, कास, धातुओंकी जीर्णता, हृद्रोग, गात्रभङ्ग, क्षय, उपद्रवोसहित राजयक्ष्म, मन्दाग्नि, ग्रहणी, पीनस, इनसबको २१ रोजके सेवनसे नष्टकरताहै । ६ महीने अथवा १२ महीने इसकासेवन कियाजायतो लोहके सदृश शरीर होजाताहै ॥ २८८ ॥

**२८९ दद्रुकुष्ठविद्रावणः१०( नागार्जुनगुटी**

**रसगन्धकतालाऽभ्रकान्तकृष्णाऽभ्रभस्मकम् ।**
**हिङ्गुलं मधुकं कुष्ठं सर्वं समविभागिकम् ॥**
**अम्लवेतसतोयेन त्रिदिनं परिमर्दयेत् ।**
**विशोष्याऽऽज्यमधुभ्याश्चमृदित्वा त्रिदिनं पुनः**
**दत्त्वा जीर्णं गुडं तुल्यं कोलाऽस्थिप्रमिता वटीः**
**छायाशुष्काः प्रकुर्वीत शम्भोरग्रे च पूजयेत् ॥**
**इयं हि पञ्चाङ्गकृताऽभिधाना-**
**नागार्जुनोक्ता गुटिका च नूनम् ।**
**सर्वाणि कुष्ठानि विचर्चिकाश्च**
**दद्रूणि विद्रावयति क्षणेन ॥१२५७॥**

र. र. स, र क ल, र. को, र र कौ., कुष्ठाधिकारे ।

**भाषा**—शुद्धपारा, गन्धक, हरितालभस्म, अभ्रक, कान्तलोह और कृष्णाभ्रक इनकीभस्मे, शुद्धशिंगरिफ, मुलहठी, कुठ, सब समभागलेकर बारीक चूर्णकर पारेगन्धककी नीलवर्ण कज्जलीमे मिलाकर अम्लवेतके रससे ३ रोज मर्दनकर सुखाकर घी और मधुमे एकरोज मर्दनकर उसकी बराबर पुरानागुड मिलाकर बेरकी गुठलीके बराबर गोलिये बनाय छायामे सुखाकर रखछोडे । इसको शुभतिथि वार-नक्षत्र-योग और करण इनमे तैयारकरे । महादेवजीकेआगेइनकी पूजाकर इनमेसे १-१ गोली तत्तद्रोगहराऽनुपानके साथ देनेसे कुष्ठ, विचर्चिका, दद्रु, इनसबको यह बहुतशीघ्र नष्ट करती है ॥ २८९ ॥

**२९० दद्रुहररसः**

**त्रिकटु द्वे निशे क्षारावपामार्गकमोक्षयोः ।**
**ताम्रश्च टङ्कणं क्षारः कज्जली रसगन्धयोः ॥**
**मेषशृङ्गीरसै मर्द्य लेपाद्दद्रूणिनाशयेत् १२५८**

र. दद्रुकुष्ठे ।

**भाषा**—त्रिकटु, हल्दी, दारुहल्दी, सज्जी, यवक्षार, अपामार्ग और मोखाकाक्षार, ताम्रभस्म, भुनासुहागा, शुद्धपारा और गन्धक सब समभागलेकर पारेगन्धककी नीलवर्णकज्जलीमे मिलाकर मेढासीगीके रससे मर्दनकर रखछोडे । इसका लेपकरनेसे कुष्ठ, विचर्चिका, दद्रु येसब नष्ट होते है ॥ २९० ॥

**२९१ दधिवातारिरसः**

**रसगन्धकनेपालं समं खल्वे विमर्दयेत् ।**
**चित्रमूलकषायेण दोलायन्त्रेण पाचयेत् ॥**
**गुञ्जामात्रं पाययेत्तु दधिवातो विनश्यति ॥**

दधिवातस्य लक्षणं यथा—अक्षिशूलं कर्णशूलं नासाशूलं शिरोभ्रम । हिक्काऽतिसारकश्चैव दधिवातस्य लक्षणम्॥

व रा, वै चि, दधिवाते ।

**भाषा**—शुद्धपारा, गन्धक और जमालगोटा समभागलेकर चित्रकमूलके काथमे दोलायन्त्रसे एकरोज स्वेदनकर १-१ रत्तीकी गोलिये बनाकर रखछोडे । इनमेसे १-१ गोली समयोचिताऽनुपानके साथ देनेसे दधिवात नष्ट होता है । आख-कान-नाककाशूल, शिरोभ्रम, हिचकी, अतिसार येजिसरोगमे हो उसे दधिवात कहतेहै ॥ २९१ ॥

**२९२ दन्तविकासनरसः**

**मृतं रङ्गं मृतं ताम्रं मृतमभ्रं समंसमम् ।**
**मर्दयेदमृताद्रावैरातपे शोषयेद्भृशम् ॥१२६१॥**
**ततो पुटेद्वारमेकं सितया सम्प्रयोजयेत् ।**
**त्रिफलाचूर्णसंयुक्तं रसं दन्तविकासनम् १२६२**
**गुञ्जाद्वयं त्रयं वापि लवणं परिवर्जयेत् ।**
**सर्वान्दन्तोद्भवात्रोगानोष्ठरोगांस्तथैव च ॥**
**जिह्वारोगांस्तालुरोगान्नाशयेदचिरादयम् ॥**

ना वि, दन्तरोगे ।

टि०—द्वित्रगुञ्जापरिमिता मात्रा बालकाना कृतेऽतिमात्राऽस्त्यतोगुञ्जायाश्चतुर्थभागादारभ्य मात्राप्रमाणं निर्धारणीयम्, यूनाकृते तु समीचीनमेव मूले प्रमाणं न्यस्तमस्ति।

**भाषा**—वङ्ग, ताम्र, अभ्रक इनसबकीभस्मे समभागलेकर गिलोयके काथसे धूपमे मर्दनकरे । ऐसे ७ रोज मर्दनकर गोलाबनाय सुखाकर सम्पुट

मे वन्दकर २ सेर जङ्गलीकण्डोकी आचदे। स्वाङ्गशीतल होनेपर निकालकर इसमेसे २—२ रत्ती शक्करकेसाथ देनेसे बच्चोके दांतजल्दी निकल आते है। इसकेसेवनमे लवणछुडादेना चाहिये। इसके-सेवनसे दात, ओष्ठ, जिह्वा और तालुके समस्तरोग नष्टहोतेहै॥ २९२॥

## २९३ दन्तोद्भवगदान्तकरसः

पिप्पलीपिप्पलीमूलं चव्यचित्रकनागरैः।
अजमोदायवानीभ्यां निशया मधुकेन च॥
दारुदार्वीविडङ्गैलानागकेसरनीरदैः।
शटीभृङ्गीविडै र्व्योम्ना शङ्खाऽयोहेममाक्षिकैः॥
विधाय वटिकां पिष्ट्वा वटिका वल्लसम्मिता।
दन्तवर्षेऽभ्यवहृतौ योजयेच्च प्रयोगवित्१२६६
प्रयोगादस्य दन्तानां त्वरयोद्गमनं भवेत्।
ज्वराऽऽक्षेपाऽतिसाराद्या निवर्तन्ते न संशयः॥

र. च, दन्तरोगे।

भाषा— पीपल, पिपलामूल, चव्य, चित्रक, सोठ, अजमोद, अजवाइन, हल्दी, मुलहठी, देवदारु, दारुहल्दी, विडङ्ग, इलायची, नागकेसर, नागरमोथा, कचूर, काकडासींगी, विडनमक, अभ्रक, शङ्ख, लोह, सुवर्णमाक्षिक इनकी भस्मे सब समभाग मिलाकर बारीकचूर्णकर पानीमे एकदोरोज मर्दनकर ३—३ रत्तीकी गोलियें बनाकर रखछोडे। इनको योग्यतानुसार मञ्जन करने और खानेमे काममे लानेसे ज्वर, आक्षेप ( खींचतान ), अतिसारवगैरह उपद्रव दूरहोकर दातजल्दीसे निकलआतेहै॥ २९३॥

## २९४ दरदभस्मयोगः

एकोनवसुभागेतु चूर्णे सौराष्ट्रिमम्भवे।
कर्षैकं दारदं खण्डं शुद्धंमध्ये निधापयेत्१२६८
विद्याधरेण यन्त्रेण भस्म कुर्याद्यथाविधि।
दुग्धेन सह दातव्यं माषमात्रञ्च रोगिणे॥
पथ्यं तैलाऽम्ललवणं वर्ज्यं वातलमित्यपि।
प्रमेहमुपदंशञ्च मण्डलानि च नाशयेत्१२७०

रसायनस, उपदंशे।

भाषा—साततोले फिटकडीक चूर्णमे १ तोला रूमीशिंगरिफकी डलीको बन्दकर डमरूयन्त्रमे चार-पहरकी मध्यमाऽग्निदे। स्वाङ्गशीतलहोनेपर फिटकडी सहित निकालकर चूर्णकररखछोडे। इसमेसे १—१ माशा दूधकेसाथ लेनेसे और तैल, अम्ल, लवण, वातल चीजोंको छोडनेसे यह प्रमेह, उपदंश और मण्डलकुष्ठ इनको नष्टकरताहै॥ २९४॥

## २९५ दरदरसायनम्

गम्भीरे लोहपात्रे कुडवघृतभृते
खण्डकान् दिङ्मितानां,
पक्त्वा भल्लातकानां पचनविधिगत
स्नेहकान्सन्त्यजेत्तान्।
शाणं क्षिप्त्वा च तस्मिन् दरदमथशुभं
सन्निदध्याल्लताया-,
स्ताम्बूल्याः सारमस्योपरि पलमथ च
क्षौद्रशुक्तिं निदध्यात्॥ १२७१॥
तत्सर्वं लघ्ववह्निज्वलितगतमवा-
प्याऽथ शीतं विगृह्य,
तत्खण्डं चूर्णयित्वा तदनु च रजसा
रक्तवर्णस्य तस्य।
गुञ्जामानेन मात्रां मृगमदमधुस-
त्कुङ्कुम देवपुष्पं,
त्वक्कृष्णायास्तु मूलं तदपि च सहितं
ग्रन्थिजातीफलाभ्याम्॥ १२७२॥
जातीपत्रीतिसर्वं विदलितमथत-
न्मापमात्रं नियोज्यं,
पण्ढोऽप्यासाद्य लेह्यं युवति गणशतं
सेवयेत्कामुकः सन्।
वातोत्थैः प्रोक्तरोगैः कफकृतविविधै
रोगसङ्घै र्विमुक्तः,
कान्त्या कन्दर्पतुल्यो भवति च वलिना-
मग्रगण्यश्चिरायुः॥ १२७३॥

रसायनस, रसायने।

भाषा— लोहेके गहरेपात्रमे १६ तोले घीभरके दसभिलावेके टुकडे डालकर धीरे २ आचदेकर भिलावोको पकावे । जब इनमेसे तमामतेल निकलआवे तब इनको निकालकर फेकदे । फिर ४ माशे रूमीशिंगरिफका टुकडा डालकर अग्निपरसे नीचे उतारले । धीठटाहोनेपर पकेपानोकारस ४ तोले शुद्धमधु ८ तोले डालकर फिर अग्निपर चढावे और धीरे २ आचदे जिसमे कि उफान न आवे । अखीरमे आचलगकर शान्तहोजानेपर शिंगरिफकी डलीको निकालकर पीसकर रखछोडे । इसमेंसे १–१ रत्तीलेकर कस्तूरी, केसर, लौग, तज, पिपलामूल, वाराहीकंदकाफल, जायफल, जावित्री, सब समभागका वारीकचूर्णकर इसमेसे १ माशा मिलाकर मधुकेसाथ देनेसे धातुए पुष्टहोकर वात, कफजनितरोग दूरहोकर स्त्रियोंमे यथेष्ट रमणकरसक्ता है । वलवानोंमे अग्रेसर रहताहै । इसकेसेवनसे नपुसकभी मदोन्मत्तस्त्रियोकी इच्छाको पूर्णकर सक्ता है ।

## २९६ दरदसिन्दूररसः

**नवकर्षमितः शुद्धः पारदस्तत्प्रमाणतः ।**
**रसकर्पूरकश्चैव रसार्द्धो दरदः स्मृतः ॥**
**सार्धपञ्चाऽक्षमात्रः स्याद्गन्धकश्च सुशोधितः ।**
**सर्वमेकत्र सम्पिष्य पूरयेत्काचकूपिकाम् ॥**
**वालुकायन्त्रमध्यस्थां तां पचेत्क्रमवह्निना ।**
**अहोरात्रद्वयादूर्ध्वं स्वाङ्गशीतं समुद्धरेत् ॥**
**युक्ताऽनुपानतो हन्याद्रसोऽयं वातजान्गदान् ।**
**सन्निपातादिकांश्चाऽपि ज्वरादीन्हन्त्यशेषतः ॥**
**नाम्ना दरदसिन्दूरो रसोऽयं सर्वरोगहृत् ॥**

रसायनस, सर्वरोगे ।

भाषा—शुद्धपारा और रसकपूर ९–९ तोले, शुद्धशिंगरिफ ४॥ तोले, शुद्धगन्धक ५॥ तोले लेकर इकट्ठे पीसकर ६–७ कपडमिट्टी दीहुई आतशी शीशीमे डालकर शीशीका मुह खडियामिट्टी वगैरह से वन्दकर वालुकायन्त्रमे रखकर दोदिनरातकी क्रमवृद्ध अग्निदेकर स्वाङ्गशीतल होनेपर निकालकर रखछोडे । इसमेसे १–१ रत्ती उचिताऽनुपानके साथ देनेसे वातरोग, समस्तसन्निपात और उपदश नष्ट होते है ॥ २९६ ॥

## २९७ दरदादिवटी ( प्रथमा )

**दरदं शृङ्गिकं मुस्ता पिप्पली मरिचं समम् ।**
**निम्बुनीरैस्त्र्यहं पिष्ट्वा मुद्गाभाः कारयेद्वटीः ॥**
**द्विसन्ध्यं द्वे गिलेद्गुटयौ कासवेगनिवृत्तये ।**
**कत्रयं वद्वयं तैलं खण्डश्चाऽपि विवर्जयेत् ॥**

सि भे., म, कासे ।

भाषा—शुद्धशिंगरिफ और वछनाग, नागरमोथा, पीपल, मरिच, लौग येसब समभागलेकर ३ रोज लगातार नीबूके रससे मर्दनकर मूग वरावर गोलिये वनाकर रखछोडे । इनमेसे २–२ गोलिया अदरख वगैरहके रसके साथ लेनेसे पाच प्रकारके कास निवृत्त होते हैं । करेला, केला, कूष्माण्ट और वीजसहित तमाम सेम, तैल, खाड, इनको न खाय ॥ २९७ ॥

## २९८ दरदादिवटी ( द्वितीया )

**म्लेच्छं सार्धपलंततोऽष्टगुणितंमानेगुडश्चोभयं,**
**मृत्पात्रे निहितं विधाय लगुडे स्थूलेसुनिम्बद्रुजे**
**मुद्रां ताम्रमयीं निकील्य पुरतो सङ्घर्षयेद्यततः,**
**सप्ताहंवसुमाषमात्रगुटिकाःकुर्याद्भिषक्सत्तमः ॥**
**द्विसन्ध्यं सेवनादेषा श्वासकासाऽनिलव्यथाः ।**
**कुष्ठोपदंशकण्डूश्च हरेद्योग्याऽनुपानतः १२८१**

नू क, कुष्ठादौ ।

भाषा—शिंगरिफ ६ तोले, गुड ४८ तोले लेकर मिट्टीके कूडेमे ( जिसे पञ्जावमे बट्ठलकहते है) डालकर तावेका मोटा पैसा नीचे लगवायेहुए नीमके ताजे डडेसे सातरोज लगातार घोटे । इसकेबाद इसकी ८–८ माशेकी गोलिये वनाकर रखछोडे । इनमेसे १–१ गोली सुवहशाम तत्तद्रोगहराऽनुपानके साथ देनेसे उपदश, कुष्ठ, कण्डू, श्वास, कास और तमाम वातविकार नष्ट होते है ॥ २९८ ॥

### २९९ दरदादिवटी ( तृतीया )

भागैकं स्याद्दरदतः सार्द्धभागोऽहिफेनकः।
अर्धभागो भवेट्टङ्कः पिष्टिकाश्च प्रपेपयेत् ॥
जातीफले च विन्यस्य सम्यक्पुटविपाचितम्।
मुद्गमात्रं गिलेन्नित्यं पयसा च गवां हि तत् ॥
ज्वराऽतिसारे मान्द्ये च निद्रानाशेऽरुचौ तथा
योजयेद्भेपजं नित्यं बलपुष्टिकरं हि तत् १२८४

रसायनस, वै चि., नि र., वैं वि, ज्वरातिसारे वैद्यचिन्तामणिनिघण्टुरत्नाकरयो दरदादिपुटपाक इतिनाम स्थापितम् ॥

भाषा—शिंगरिफ १ भा, अफीम १॥ भा., भुनासुहागा आधा भा, इनसबको एकजगहपीसकर गोली बनाय जायफलके भीतर रखकर इसीकी डाटसे बन्दकर कच्चेसूतसे लपेटकर गेहूंके आटेकी बाटीमे बन्दकर कण्डोकी निर्धूम आचमे उस बाटीको पकावे। उसका ऊपरकाहिस्सा कुछ जलनेलगे तब निकालकर स्वाङ्गशीतलहोनेपर जायफलको निकालकर पीसकर मूग-बराबर गोलिये बनाकर रखछोडे। इनमेसे योग्यता-ऽनुसार १,२ अथवा ३ गोलिये गायकेदूधकेसाथ देनेसे ज्वर, अतिसार, मन्दाग्नि, निद्रानाश, अरुचि इन सबको दूरकर बल और पुष्टिको करतीहै ॥

### ३०० दरदेश्वरोरसः

दरदं पञ्चपलिकं पलमेकं बलेस्तथा।
मृदुवह्निगतां कुर्यात्कज्जलीमञ्जनाऽऽकृतिम् ॥
बलिमानं शुद्धतालं निक्षिपेत्तत्र बुद्धिमान्।
पश्चात्खल्वे विनिःक्षिप्य त्रिदिनं मर्दयेत्तथा ॥
नियोज्य काचकूप्यान्तु लिप्तायां मृत्तिकाऽम्बरैः
सिकतासु पचेद्दहनैः पडहं
तदनु स्वत एव हिमं दहनात्।
दरदेश इति क्षयकासहरो
भवतीह रसः सकलाऽऽमयजित ॥

र. का., कामाधिकारे।

भाषा— रूमीशिंगारफ २० तो, शुद्धगन्धक चार तोला लेकर दोनोकी कज्जलीकर लोहेके बर्तनमे रखकर अङ्गारोंपर रक्खे। जब इसका द्रवहोजाय तब नीचे उतारकर घोटे। एकदम नीलवर्ण होनेपर एकपल शुद्धहरितालकाचूर्ण मिलाकर तीनरोजतक मर्दनकर ६–७ कपडमिट्टी दीहुई आतशी शीशीमें डालकर मुह बन्दकर बालुकायन्त्रमे ६ रोजतक क्रमवृद्ध अग्निसे पकाकर स्वाङ्गशीतल होनेपर निकाल-कर रखछोडे। इसमेसे १–१ रत्ती तत्तद्रोगहराऽ-नुपानकेसाथ अथवा समयोचिताऽनुपानकेसाथ देनेसे क्षय, कास, कुष्ठ और वातव्याधि इनसबको यह नष्टकरताहै ॥ ३०० ॥

### ३०१ दर्दुररसः ( प्रथमः )

मण्डूकाऽऽयसजश्चूर्णं समं सूतस्य चारितम्।
दन्तीद्रवेण संघृष्टं ग्रहणीदोपनाशनम् १२८८

रसेन्द्रम., ग्रहणीदोषे।

भाषा बीजसस्कारकियाहुआ अभ्रक और लोहे-काचूर्ण समभागपारेको खिलाकर दन्तीमूलकेद्रवसे २–३ रोज मर्दनकर ३–३ रत्तीकी गोलियेबनाकर रखछोडे। इनमेसे १–१ गोली दूध अथवा तक्रके साथ देनेसे यह ग्रहणीरोगको दूरकरताहै ॥३०१॥

### ३०२ दर्दुररसः ( द्वितीयः )

सुश्लक्ष्णतीक्ष्णचूर्णन्तु रसेन्द्रसमभागिकम्।
काञ्चनाररसैर्घृष्ट्वा सर्वाऽतीसारनाशनम् १२८९
पिष्टः समेन तीक्ष्णेन काञ्चनाराऽम्बुमर्दितः।
पुटपाकोऽतिसारघ्नः सूतोऽयं दर्दुराह्वयः ॥

र रसेन्द्रः, रसेन्द्रम खगेन्द्रः, यो म तीक्ष्ण-रसः, र र स, अतिसारे।

भाषा—बहुतबारीक फौलादका रेता और शुद्धपारा समभागलेकर कचनारके रससे २–३ रोज मर्दनकर रखछोडे। इसमेसे ३–३ रत्तीकी मात्रा उचिताऽनुपानकेसाथ देनेसे यह समस्त अति-सारोको दूरकरताहै। अथवा इसका पुटपाक करके देवेतो यह अधिककामकरताहै ॥ ३०२ ॥

### ३०३ दशाऽऽयसम् ( दशाम्बु )

वराऽम्बुदव्योपविडङ्गवह्नि
रसाभ्रकैस्तुल्यमयो निहन्ति।

मध्वाज्ययुक् पाण्डुसकामलाऽऽम-
वाताऽस्रहृल्लासवलासहिक्काः॥१२९१॥

र. (मा ), पाण्डुकामलायाम् । नवाऽऽयसे एव रसाऽभ्रके विशेषतया नियुज्याऽय निष्पादितो योग ।

भाषा— त्रिफला, नागरमोथा, सोठ, मिरच, पीपल, विडङ्ग, चित्रकमूल, पारदभस्म और अभ्रकभस्म समभागलेकर सबका बारीक चूर्णकर इनसबकी बराबर लोहेकीभस्म मिलाकर रखछोडे । इसमेसे ३–३ माशे मधु और घीकेसाथ खानेसे पाण्डु, कामला, आमवात, वातरक्त. जीकामिचलाना, कफ ( श्वासकास), हिचकी इनसबको यह नष्टकरताहै ॥

## २०४ दाडिमादियोगः

शुद्धसूतं विषं गन्धं वराटीव्योषटङ्कणम् ।
धातक्यतिविषारोध्रं मूत्रगन्धा च वालकम् ॥
बिल्वाऽब्दं कुटजं विश्वापाठाहिङ्गु च दाडिमम्
अहिफेनमथो धान्यमाम्राऽस्थि जातिकोषकम् ।
जातीफलं कुङ्कुमञ्च नागकेसरकं तथा ।
कर्षैकं पृथगादद्याच्चूर्णीकृत्य प्रयत्नतः १२९४
शुद्धाया विषमुष्टयाश्च पलञ्चैव प्रयोजयेत् ।
जम्बीरस्वरसेनैव भावयेदष्टयामतः ॥१२९५॥
वल्लद्वयमितां खादेद्वटीं गोघृतसंयुताम् ।
नानाऽनुपानयोगैश्च विसूच्यां सम्प्रयोजयेत् ॥
विंशतौक्रमिरोगाणामतिसारेषु षट्स्वपि ।
अनलादिसमुद्भूतां दुस्तरां ग्रहणीञ्जयेत् १२९७
पथ्यं तक्रौदनं योज्यं दध्योदनमथापि वा ।
कोष्णं जलं पिबेच्चाऽनु तप्तं वार्यथवा पिबेत् ॥

रसायनस , अतिसारे ।

भाषा—शुद्धपारा, वछनाग और गन्धक, कौडीभस्म, त्रिकटु, भुनासुहागा, धावडीकेफूल, अतीस, लोध, कुडरू, सुगन्धवाला, वेलगिरी, नागरमोथा, कुरैयाकीछाल, सोठ, पाठा, हीग, दाडिमकीछाल, अथवा बीज, अफीम, धनिया, आमकीमज्जा, जावित्री जायफल, केसर, नागकेसर, येप्रत्येक १ तोला, शुद्धकुचिला ४ तोले लेकर सबका बारीक चूर्णकर पारेगन्धककी नीलवर्ण कज्जलीमे मिलाय जभीरीके रससे ८ पहर मर्दनकर ६–६ रत्तीकी गोलिये वनाकर रखछोडे । इनमेसे १–१ गोली गोघृतके साथ अथवा तत्तद्रोगहराऽनुपानकेसाथ देनेसे हैजा, बीसप्रकारकेकृमि, ६ प्रकारकेअतिसार और दुस्तरग्रहणी येसब नष्टहोते है । इसकेऊपर कदुष्णजलएक चुल्लूदेवे । पथ्यमे छाछभात अथवा दहीभात देवे ॥

## २०५ दारुभस्म

दारुसैन्धवगन्धञ्च भस्मीकृत्य प्रयत्नतः ।
प्लीहानमग्रमांसञ्च याकृतञ्च विनाशयेत् ।

र स, ध., र. चि., उदररोगे ।

भाषा—देवदारु,सैन्धव, और गन्धक इनसबको बारीक चूर्णकर ६–७ कपडमिट्टीदीहुई हडीमें डाल शरावसम्पुटमे बन्दकर सुखाकर ४ पहरकी आचदे । स्वाङ्गशीतल होनेपर हडीमेसे खुरचकर सबभस्म निकालकर वारीक पीसकर रखछोडे । इसमेसे ३–३ माशे तत्तद्रोगहराऽनुपानके साथ देनेसे प्लीह, अग्रमास, यकृद्वृद्धि येसब नष्टहोते है ॥

## २०६ दार्व्यादिलोहम्

दार्वीत्वक्त्रिफलाव्योषविडङ्गान्ययसो रजः ।
मधुसर्पिर्युतं लिह्यात्कामलापाण्डुरोगवान् ॥

र र, वै चि., र मु, च स., लो प., (स.), यो. र, नि र, च. द, यो. म, वृ. मा, टो., र. का, पाण्डुकामलायाम् ।

भाषा—दारुहल्दीकीछाल, त्रिफला, त्रिकटु विडङ्ग येसब समभाग, इनसबकी बराबर लोहभस्म मिलाकर रखछोडे । इसमेसे ३–३ माशे मधु और घीकेसाथ लेनेसे कामला और पाण्डुरोग दूरहोते है॥

## २०७ दाहज्वरघ्नीवटी

सेवन्त्युशीरयष्टीनां कषायोद्भावितं ज्वरी ।
स्वर्णसिन्दूरमम्भोऽपि तासां सेवेत दाहयुत् ॥

रसायनसार. दाहे ।

भाषा—गुलाब, खस, मुलहठी, इनके क्वाथसे स्वर्णसिन्दूरको भावना देकर रखछोडे । इसमेसे

१–१ रत्ती इन्ही औषधोंके काढे अथवा हिमके साथ देनेसे दाह दूर होता है ॥ ३०७ ॥

### ३०८ दाहशमनरसः

**सीसं रङ्गेण तुल्यं स्याद्गुडूचीरसमर्दितम् ।**
**पक्वं गजपुटे खादेच्छिलाजतुसमन्वितम् १३०२**
**गुञ्जाद्वयं सितायुक्तं युक्तं त्रिफलयाऽथवा ।**
**अचिरादुद्धरेद्दाहाद्गङ्गेव दुरितात्क्षणात् १३०३**

ना. वि., र. म. मा., दाहे ।

**भाषा**—शुद्धनाग और वङ्ग समभाग लेकर गुडूचीकारस वारवारदेकर लोहेके डंडेसे चलाताहुआ अग्निपर भस्मकरे । जब एकदम भस्म होजाय तब गुडूचीके स्वरससे २-३ रोज मर्दनकर छोटी २ टिकिया बनाय सुखाकर गुडूचीके कल्कमे बन्दकर गजपुटकी आचदे । स्वाङ्गशीतल होनेपर गुडूचीस्वरसमे घोटकर आच देव । इसतरह जबतक मुलायम भस्म न होजाय तबतक करताजाय । शुद्धभस्म होनेपर इसमेसे २–२ रत्ती ३ मासे शिलाजतुकेसाथ अथवा शक्कर अथवा त्रिफलाकेसाथ देनेसे जिसतरहगङ्गा पापको नष्ट करती है उसीतरह यह दाहको दूरकरता है । और तत्तद्रोगहरानुपानकेसाथ देनेसे प्रमेह, मूत्रकृच्छ्र, मूत्राऽऽघात, सुजाक, हाथपैरोकी जलन, भ्रम, कास, श्वास, राजयक्ष्म येसब दूरहोतेहै ॥

### ३०९ दाहादित्यरसः

**जातीफलेशबलयस्त्रिरथद्विरर्कान्,**
**माक्षीकधातुरहिफेनमनःशिलैका ।**
**वह्नीजभृङ्गदशकं ह्यनुभावितं त–**
**द्विश्वाम्बुना च जरणक्वथनैस्त्रिवारम् ॥१३०४॥**
**दाहादित्यो रक्तिकामात्र एषः,**
**प्रातर्भुक्तो विश्वजीराऽनुपानः ।**
**दाहं दीर्घं सज्वरं चाऽतिसारं,**
**हन्ति प्रौढं सङ्ग्रहण्यामयञ्च ॥ १३०५ ॥**

रसायनस, ग्रहण्याम् ।

**भाषा**—जावित्री, जायफल, शुद्धपारा और गन्धक १-१ भाग, ताम्रभस्म २ भाग, सोनामाखी, अफीम, मैनसिल, मरिच, भगरा येसब १–१ भाग, लेकर सबका वारीक चूर्णकर पारेगन्धककी नीलवर्ण कज्जलीमे मिलाकर सोठ और जीरेके काढेसे ३–३ भावनाए देकर १–१ रत्तीकी गोलिये बनाकर रखछोडे । इनमेसे योग्यताऽनुसार १ या २ गोली सोठ और जीरके पानीकेसाथ देनेसे बहुतदिनका दाह और ज्वराऽतिसार, नवीनसङ्ग्रहणीरोग, इनको यह नष्टकरताहै ॥ ३०९ ॥

### ३१० दिनज्वरप्रशमनीवटी

**सूतः शुद्धबलिःसुतोहुतभुजोनागोद्विभागामताः**
**प्रत्येकंत्रिकभागिकाःसमगधाविश्वौषधंवल्लिजम्**
**कायस्थाऽऽमलकंसुपक्वकुलकंतज्जीर्णशुद्धंशुभं,**
**दन्तीबीजमकल्मषञ्चसकलंसञ्चूर्ण्यभद्रंकृतम्**
**आर्द्रस्यस्वरसेनमर्दितमिदंपिष्टीसमंसूत्तमं,**
**कार्यामुद्गसमारहःसुगुटिकाध्यायन्हरिंशांतिदम्**
**सन्तापञ्चदिनज्वरप्रशमनींक्षुद्बोधसंदायिनीं,**
**श्रीधन्वन्तरिणा हिताय जगतांब्रह्मा-**
**ऽऽज्ञया निर्मिता ॥ १३०७ ॥**

र. का, ज्वरे ।

**भाषा**— शुद्धपारा, गन्धक, सुवर्ण, नाग इनकीभस्मे प्रत्येक २ भाग, पीपल, सोठ, मिर्च, हर्रे, आवला, बहेड़ा ये तीनो पकेहुए और पुराने, शुद्धजमालगोटा ये प्रत्येक ३ भाग, इनसबका वारीक चूर्णकर पारेगन्धककी नीलवर्ण कज्जलीमे मिलाकर अदरखके रससे १–२ रोज मर्दनकर मूगबराबर गोलिये बनाकर रखछोड़े । इनमेसे १ या २ गोली उचिताऽनुपानसे देनेसे सन्ताप और दिनमे आनेवाले ज्वर को दूरकर क्षुधाको जागृत करतीहै। इसका प्रयोगकरतेसमय हरिका ध्यानकरना।

### ३११ दिनार्धरसः

**विशुद्धं पारदं श्रेष्ठं हेमगन्धकजारितम् ।**
**रसेन गन्धकं तुल्यं काञ्चनं त्रपु सीसकम् ॥**
**तारताम्रं रीतिकांस्यं होन्नालं वर्तलोहकम् ।**
**व्योम कान्तं मृतं योज्यं रससिन्दूरनागजम् ॥**

रविकान्तं चन्द्रकान्तं कुवत्रं नृपवर्तजम् ।
भूनागजं तुत्थताम्रं रसकं माक्षिकद्वयम् १३१०
जाम्बूनदादिलोहानां सिन्दूरं जीर्णकिट्टजम् ।
गोदन्तगैरिकशिलाकासीसद्वयमञ्जनम् १३११
वराटं नरसारञ्च पाषाणद्वयहिङ्गुलम् ।
टङ्कणं मृगनाभिश्च शशिकुङ्कुमशैलजम् १३१२
विषतिन्दुकनेपालं रत्ननायकभस्मकम् ।
मौक्तिकं विद्रुमं हीरं गोमेदं नीलगारुडम् ॥
वैदूर्यं पुष्परागञ्च शङ्खस्फटिकभस्मकम् ।
हालाहलं पृथक् कर्षं सर्वं खल्वे विनिक्षिपेत् ॥
कृष्णरम्भाप्रमूनैश्च दशमूलैः सुमर्दितम् ।
वराहव्याघ्रगोमत्स्यकुरङ्गशशवानरम् १३१५
विषोल्वणफणापित्तैः पृथक्सर्वैश्च मर्दयेत् ।
गजाऽश्वखरजैरुष्ट्रनरजातैर्मयूरजैः ॥१३१६॥
महिषीक्रोडमार्जारमूषिकक्रोष्टुकाऽजजैः ।
सर्वैर्जाङ्गलजातैश्च पित्तैः साधारणैस्तथा१३१७
आनूपजातैर्भाव्यश्च स्नुहीक्षीरैश्च भावयेत् ।
अर्कक्षीरवटक्षीरैरश्वत्थक्षीरकैरपि ॥१३१८॥
उदुम्बरबहुक्षीरैर्भावयेत्सप्तविंशतिः ।
मदनादिगणैः पश्चाद्भावयेदेकविंशतिम् १३१९
निकुम्भादिगणैः सिद्धं न्यग्रोधाद्यैश्च मर्दयेत् ।
मालतीचम्पकाद्यैश्च सर्वैः पुष्पैश्च भावयेत् ॥
दधिदुग्धैश्च बहुधा शोषयेच्च पुनःपुनः ।
काचकूप्यां निवेश्याऽथ द्वौ यामौ वालुकाऽग्निना
स्वाङ्गशीतलमुद्धृत्य गन्धपुष्पाऽक्षताऽर्चनैः ।
धूपं दीपञ्च नैवेद्यं ताम्बूलञ्च समर्पयेत् १३२२
हाटकं रौप्यकं म्लेच्छं नागवङ्गञ्च तीक्ष्णकम् ।
रीतिघोषं कान्तलोहं पूर्वेणाऽर्द्धं विनिक्षिपेत् ॥
तद्भस्मनस्तृतीयांशं रससिन्दूरसंयुतम् ।
पूर्वोक्तैरौषधैर्भाव्यं पुनः पित्तैश्च भावयेत् ॥
पचेत्ताम्रस्य पात्रस्थं त्रियामं लवणाऽग्निना ।
स्वाङ्गशीतलमादाय गन्धाद्यैश्च तथैव च१३२५
पूर्वोक्तैरौषधैस्तिक्तैर्भाव्यं शोष्यं पुनःपुनः ॥
सर्वं खल्वोदरे स्थाप्यं तदंशौ सूतगन्धकौ ॥
वेदांशं गरलं युक्तमर्कक्षीरेण मर्दयेत् ।
सौवर्णे राजते शौल्वे चाऽऽयसे वा करण्डके ॥
अथवा वंशनाले तु शृङ्गे वा कुम्भके क्षिपेत् ।
मुद्गमात्रप्रमाणेन सर्वव्याधिनिषूदनम् १३२८
सर्वरोगेषु ताम्बूलीदलेन सह भक्षणम् ।
सन्निपातं शिरःकम्पं धनुर्वातं क्षयाऽपहम् ॥
पक्षाऽऽघातं शिरःशूलं वातशोणितविद्रधीः ।
मूत्रकृच्छ्राणि योन्यर्तिं हेमपाण्डुं सकामलम्
वन्ध्यत्वं रक्तगुल्मानि मूत्राघातं विषार्तिनुत् ।
बालानां मध्यमानाञ्च वृद्धस्त्रीणाञ्च योजयेत् ॥
अपस्मारे च ह्युन्मादे दुराऽऽलापे ह्यसृग्दरे ।
स्नायौ तालौ श्वासकासे ह्यर्दिते क्षुद्ररोगके ॥
अन्त्रवृद्धिसमुद्भूते ह्यर्बुदे रक्तपित्तके ।
नेत्ररोगे पीनसे च सर्वहिध्मविसूचिजे १३३३
सर्वज्वरे सर्वशूले ह्युदरे च हलीमके ।
नासारोगे छर्दिरोगे शल्यस्रावे च दापयेत् ॥
ग्रहण्यामामशूले च विसर्पे ह्युपदंशके ।
दन्तरोगे कर्णरोगे मूर्च्छाये गररोगके १३३५
सद्यामके श्लीपदे च गण्डमालामसूरिजे ।
भगन्दरे शीतपित्ते ह्युरगादिविषाऽर्दिते१३३६
अस्थिभङ्गव्रणाऽऽनाहे तृष्णाक्रिमिमदात्यये ।
अष्ठीलिकास्वम्लपित्ते वाजिनां रोगसङ्घके ॥
सर्वाऽनिलविकारे च सर्वपैरयं विनाशयेत् ।
सर्वश्लेष्मभवान्रोगान् हरिचक्रमिवाऽसुरान् ॥
नागवल्ली च सुरभी कुठेरकरसो ह्यनु ।
इदं विष्णुमुखोद्भूतं सेवितं तु सदा नृभिः ॥
यामाऽर्धेन ज्वरं हन्याद्दिनाऽर्धे सुखदं भवेत् ।
दध्यन्नं दापयेत्पथ्यं तृषाऽऽर्ते शीतलं जलम् ॥
नारिकेलोदकं दाहे पिबेदिक्षुरसं तथा ।
महादिनार्धको नाम रसो लोकोपकारकः

र. क. यो, सर्वरोगे।

टि०—खर सारञ्च ह (हो) न्नाल तारावर्तपटन्तथा ।
काललोह वाजराख्य (गजाख्य) षड्विध तीक्ष्णमुच्यते ॥

भाषा— सुवर्ण और गन्धक जारितक्रियाद्वारा-
पारा और गन्धक, सुवर्ण, वङ्ग, नाग, रजत, ताम्र,

पीतल, कांस्य, ह्र (हो) न्नाल (खरलोह), विडलोह, अभ्रक, कान्तलोह इनसबकी रक्तभस्मे, नागसिन्दूर, ( लालनागभस्म ) सूर्यकान्त, चन्द्रकान्त, वैक्रान्त, लाजवर्द, केंचुओकाताबा, तुत्थमें निकालाहुआ तांबा, खर्पर, सोनामाखी, रूपामाखी, मण्डूरभस्म, गोदन्ती हरिताल, सोनागेरू, मैनसिल, दोनोंकसीस, रसौत, कौडी, नोसादर, सफेद और कालासोमल, शिंगरिफ, सुहागा, कस्तूरी, कपूर, केशर, शिला-जीत, कुचिला, जमालगोटा, माणिक्य, मोती, मूगा, हीरा, गोमेद, नीलम, पन्ना, वैदूर्य, पुखराज, शङ्ख, स्फटिक, येसबचीजे यथासम्भव मारीहुई और शुद्धकीहुई, और शुद्धविष येसब १–१ तोला लेकर पीपल, केलेकेफूल, दशमूल इनके स्वरस अथवा क्वाथ, वराह-व्याघ्र-गौ-मछली-हरिण-खरगोश वानर इनके पित्त, जहरी सापकाजहर और पित्त, इनसबकी १–१ भावना देकर हाथी, घोड़ा, गधा, ऊंट, मनुष्य, मोर, भेसा, सूअर, विल्ली, चूहा, शृगाल, बकरा जगली, साधारण, और जलज तमामजानवरोके पित्त, थूहर, आक, वट, पीपल, गूलर, दूधी इनप्रत्येकसे २०–२० भावनाएं देकर मदनादिगणसे २१, निकुम्भादि, न्यग्रोधादि, माल-त्यादि, चम्पकादि और जितने मिलसके तमामफूलो-से १–१ भावना देकर दूध और दहीसे यथाशक्ति मर्दनकर सुखाताजाय, फिर ६–७ कपड़मिट्टीदीहुई आतशी शीशीमें रख मुंहबदकर वालुकायन्त्रमे रख दोपहर अग्निदेकर स्वाङ्गशीतलहोनेपर निकालकर गन्ध पुष्प, अक्षत, धूप, दीप, नैवेद्य, ताम्बूल, ये समर्पणकरे। फिर सुवर्ण, रजत,ताम्र, नाग, वङ्ग,लोह-पीतल-कास्य और कान्त लोहभस्म पूर्वरससे आधी-मिलावे। फिर इससबमे तृतीयाश रससिन्दूर मिला-कर पूर्वोक्तऔषधियोसे १–१ भावना देकर अखीरमे पित्तोंसे भावना देकर ताबेके सम्पुटपर कपड़-मिट्टीकर ताबेकी कड़ाहीमे लवणयन्त्रबनाय ३ पहर आंचदेकर स्वाङ्गशीतलहोनेपर निकालकर पूर्ववत् पूजनकर पूर्वोक्तनिक्तऔषधोसे भावनाएं देकर शोषणकरे। इसतरह बारम्बार यथाशक्ति भावनाएं दे। फिर इसका चतुर्थांश शुद्धपारा, गन्धक और सर्पविष देकर आकके दूधसे मर्दनकरे। फिर सुवर्ण, रजत, ताम्र अथवा लोहेकी डिब्बीमे रक्खे अथवा बास या सींगमे रक्खे। इसमेसे मूग बराबर मात्रा पानकेसाथ देनेसे सन्निपात, शिरःकम्प, धनुर्वात, क्षय, पक्षाऽऽघात, शिरःशूल, वातरक्त, विद्रधि, मूत्रकृच्छ्र, योनिकी पीडा, पाण्डु, कामला, कुम्भका-मला, वांझपना, रक्तगुल्म, मूत्राऽऽघात, जहर, अपस्मार, उन्माद, बकवाद, रक्तप्रदर, नहरुवा, तालुरोग, श्वास, कास, लकवा, क्षुद्ररोग, अन्त्रवृद्धि, अर्बुद, रक्तपित्त, नेत्ररोग. पीनस, हिचकी, हैजा, समस्तज्वर और शूल, उदर, हलीमक, नासारोग, वमन, शल्यस्राव, ग्रहणी,आमशूल, विसर्प, उपदश, दन्तरोग, कर्णरोग, मूर्च्छा, गररोग, सन्न्यास, श्लीपद, गण्डमाला, मसूरिका, भगन्दर, शीतपित्त, सर्पविष, अस्थिभङ्ग, व्रण,आनाह,तृषा,कृमि, मदात्यय,अष्ठीला, अम्लपित्त, घोडोके तमामरोग, समस्त वात, पित्त और कफविकार, इनसबको यह असुरोको सुदर्शन-चक्रकी तरह नष्टकरताहै। इसकेबाद पान, तुलसी, बनतुलसी इनकारस देना चाहिये। इसके देनेसे आधे पहरमे ज्वर उतरजाताहै और दोपहरमें बिल्कुल तन्दुरुस्त होजाताहै। भूख लगनेपर दहीभातदेना। प्यासलगनेपर ठण्ढाजल और नारियलका जलदे। अधिक दाह होनेपर ईखका रसदे। इसरसमे जो औषधोके गण आयेहैं वे नीचे दियेजातेहैं—

मैनफल, वन्दाल, कड़वीतूंबी, नितुवा, कडवी-तरोई, यह मदनादिगणहै। कालीनिसोत,अमलतास, रेवनचीनी, अथवा देशीलोध, थूहर, अङ्गुलियाथूहर, कालादाना, दन्ती, मोटीदन्ती ( घनसर म० ) यह निकुम्भादिगणहै।

वट, गूलर, पीपल, पाकर, महुवा, अम्बाडा, अर्जुन, आम्र,जगलीआम्र, चोरक, तमालपत्र, जामुन,

कठजामुन, चिरोजी, मुलहठी, रोहण, वेत, कदम्ब, वेर, तेद, सलई, देशीलोध्र, पठानीलोध, मिलावा, ढाक, नंदेरू (नान्दुक म० ) यह न्यग्रोधादि गणहै ।

मालत्यादि और चम्पकादि गणोकेलिये किसीभी निघण्टुमेसे पुष्पवर्गको ले लेना ॥ ३११ ॥

### ३१२ दिनार्धरसः ( द्वितीयः )

**रसाऽमृतं गन्धकश्च दलं त्रिपुरभैरवम् ।**
**धात्री हरीतकी चैव कर्ष टङ्कणकारकम् ॥**
**नेपालं समभागं स्यादार्द्रकद्रवमर्दितम् ।**
**वटिका वल्लमात्रेण ज्वराङ्कुशरसः स्मृतः ॥**

वा , ज्वरे ।

भाषा—शुद्धपारा, वछनाग और गन्धक १–१ तोला लेकर सबकी नीलवर्णकज्जलीकर इससे आधा त्रिपुरभैरव ( र. यो. सा. सख्या ५ ) मिलाकर आवला, हर्रे, सुहागा, अजवाइन १–१ तोला लेकर बारीक चूर्णकर कजलीमे मिलाय सबकी बराबर शुद्धजमालगोटा मिलाकर अदरखके रससे १ रोज मर्दनकर ३–३ रत्तीकी गोलिये बनाकर रखछोडे । इनमेसे १–१ गोली समयोचिताऽनुपानके साथ देनेसे यह दोपहरमे समस्तज्वरोको उतारदेताहै ।

### ३१३ दिनार्धरसः ( तृतीयः )

**गन्धकं हिङ्गु नेपालं दन्तिमूलञ्च मर्दितम् ।**
**दिनार्धेन ज्वरं हन्याद्गुञ्जैकं सितया सह ॥**

वा. ज्वरे ।

भाषा—शुद्धगन्धक, भुनाहींग, शुद्धजमालगोटा, दन्तीमूल सब समभाग लेकर बारीक पीसकर रखछोडे । अथवा अदरख या दन्तीमूलप्रभृतिके रससे १–२ रोज मर्दनकर १–१ रत्तीकी गोलिये बनाकर रखछोडे । इनमेसे १–१ गोली शक्करकेसाथ अथवा यथोचिताऽनुपानकेसाथ देनेसे समस्तज्वर नष्टहोतेहै ।

### ३१४ दिव्यखेचरीवटी ( प्रथमा )

**स्वर्णं कृष्णाऽभ्रसत्त्वञ्च तारं ताम्रं सुचूर्णितम् ।**
**समांशं द्वन्द्वलिप्तायां मूषायां चाऽन्धितं धमेत्**
**तत्खोटभागाश्चत्वारो भागैकं मृतवज्रकम् ।**
**माक्षिकं तीक्ष्णकान्तञ्च भागैकैकं सुचूर्णितम् ॥**
**समस्तं द्वन्द्वलिप्तायां मूषायां चाऽन्धितं धमेत् ।**
**तत्खोटसूक्ष्मचूर्णन्तु चूर्णाग द्रुतसूतकम् ॥**
**त्रिदिनं तप्तखल्वे तु मर्द्य दिव्यौषधिद्रवैः ।**
**रुद्ध्वाऽथ भूधरे पक्वमहोरात्रात्समुद्धरेत् १३४८**
**द्रुतसूतं पुनस्तुल्यं दत्त्वा मर्द्य पुटेत्तथा ।**
**इत्येवं सप्तवारांस्तु द्रुतं सूतं समंसमम् १३४९**
**दत्त्वा मर्द्य पुटे पक्त्वा जायते सूतभस्मकम् ।**
**भस्मसूतसमं गन्धं दत्त्वा रुद्ध्वा धमेद् दृढम् ॥**
**जायते गुटिका दिव्या विख्याता दिव्यखेचरी**
**वर्षैकं धारयेद्वक्त्रे जीवेत्कल्पसहस्रकम् १३५१**
**तस्य मूत्रपुरीषाभ्यां सर्वलोहस्य लेपनात् ।**
**जायते कनकंदिव्यं समावर्ते न संशयः १३५२**
**पलद्वयं भृङ्गराजद्रवश्चाऽनु पिबेत्सदा ।**
**पूर्वोक्तं भस्मसूतं वा गुञ्जामात्रं सदा लिहेत् ॥**
**कर्षैकं मधुनाऽऽज्येन दीर्घायुर्जायते नरः ।**
**वलीपलितनिर्मुक्तो महाबलपराक्रमः १३५४**

र स., रसायने ।

भाषा—सुवर्ण, कृष्णाऽभ्रसत्त्व, रजत, ताम्र, इनसबका बारीकचूर्ण समभाग लेकर नाग और वङ्ग गलाकरलेपनकीहुई अन्धमूषामे बन्दकर ४ पहर धमनकरनेसे इसका खोट तैयार होगा । स्वाङ्गशीतलहोनेपर यह खोट ४ भाग, हीराभस्म १ भा., सुवर्णमाक्षिक, फोलाद, कान्तलोह, इनका बारीकचूर्ण १–१ भागलेकर सबको १–२ दिन मर्दनकर नागवङ्गलिप्त अन्धमूषामे बन्दकर ४ पहर धमन करनेसे खोट तैयार होगा । स्वाङ्गशीतलहोनेपर इसखोटमे समभाग शुद्धद्रुतपारद डालकर तप्तखल्वमे दिव्यौषधियोका ( दिव्यौषधियेरसेन्द्रचूडामणि वग़ैरह मे देखलेना ) स्वरसदेकर एकरोज मर्दनकर सुखाकर भूधरयन्त्रमे इतनी अग्निदे कि अहोरात्रमे ठढाहोजाय फिर इसमे शुद्धद्रुतपारद बराबरका डालकर दिव्यौषधियोकारस देकर ४ पहर मर्दनकर सुखाकर पूर्ववत् भूधरयन्त्रमे आचदे । इसतरह सातआचदे-

नेसे इसकी भस्महोजायगी । इसभस्मकी वराबर शुद्धगन्धक डालकर पूर्ववत् अन्धमूषामें चारपहर धमनकरनेसे इसकी गोली बनजायगी । इसगोलीको एकवर्षतक मुहमे धारणकरनेसे दीर्घायु होताहै और उसके मूत्र और पुरीषका सबलोहोपर लेपकर धमन करनेसे सुवर्णहोताहै । इसगोलीको मुहमे रखनेकेवाद ८ तोले भगरेकारस पिलावे अथवा इसकी गोली न बाधकर पारेकीभस्मही १–१ रत्ती दोपलभागरेके रससे देवे । अगर १–१ तोला मधु और घृत अनुपान रक्खे तो दीर्घायु होताहै । वलीपलित नष्टहोकर दिव्यपराक्रम बढताहै ॥ ३१४ ॥

### ३१५ दिव्यखेचरीवटी ( द्वितीया )

हेम्ना यद्वन्द्वितं वज्रं कुर्यात्तत्सूक्ष्मचूर्णितम् ।
एतद्देयं गुह्यसूते मूषायामधरोत्तरम् ॥१३५५॥
पादमात्रं प्रयत्नेन रुद्ध्वा सन्धिं विशोषयेत् ।
भूधराऽऽख्ये दिनं पक्त्वा समुद्धृत्याऽथ मर्दयेत्
दिव्यौषधदलद्रावैस्तप्तखल्वे दिनावधि ।
रुद्ध्वाऽथ भूधरे पक्त्वा दिनं लघुपुटैःपुटेत् ॥
समुद्धृत्य पुनस्तद्वन्मर्द्य रुद्ध्वा दिनत्रयम् ।
तुषाग्निना शनैः स्वेद्यमूर्ध्वाऽधः परिवर्तयन् ॥
जायते भस्म सूतोऽयं सर्वयोगेषु योजयेत् ।
द्रुतसूतस्य भागैकं भागैकं पूर्वभस्मकम् ॥
शुद्धनागस्य भागैकं सर्वमम्लेन मर्दयेत् ।
अन्धमूषागतं ध्मेयं खोटो भवति स रसः ॥
धमेत्प्रकटमूषायां यावन्नागक्षयो भवेत् ।
द्रुतसूतप्रकारेण द्रावयित्वा त्विमं रसम् ॥
निक्षिपेत्कच्छपे यन्त्रे विडं दत्त्वा दशांशतः ।
स्वर्णादिसर्वलोहानि क्रमेणैव च जारयेत् ॥
प्रत्येकं षड्गुणं पश्चाद्वज्रद्वन्द्वश्च जारयेत् ।
त्रिगुणं तु भवेद्यावत्ततो रत्नानि वै क्रमात् ॥
जारयेद्द्रावितान्येव प्रत्येकं त्रिगुणं शनैः ।
ततो यन्त्रात्समुद्धृत्य दिव्यौषधद्रवैर्दिनम् ॥
मर्द्य रुद्ध्वा धमेद्गाढं जायते गुटिका शुभा ।
पूजयेदङ्कुशीमन्त्रै र्नाम्नेयं दिव्यखेचरी ॥
यस्य वक्त्रे स्थिता ह्येपा स भवेद्रुद्रतुल्योपमः ।
दिव्यतेजा महाकायः खेचरत्वेन गच्छति ॥
यत्रेच्छा तत्र तत्रैव क्रीडते ह्यङ्गनादिभिः ।
महाकल्पान्तपर्यन्तं तिष्ठत्येव न संशयः ॥
तस्य मूत्रपुरीषाभ्यां ताम्रं भवति काञ्चनम् ।
पलाशपुष्पचूर्णन्तु तिलाः कृष्णाः सशर्कराः ॥
सर्वं पलत्रयं खादेन्नित्यं स्यात्क्रामणे हितम् ॥

र. ख , रसायने ।

भाषा—सुवर्ण और हीरा समभागलेकर नागवद्धलिप्त अन्धमूषामे रखकर चारपहर धमनकराय स्वाङ्गशीतलहोनेपर निकालकर वारीकचूर्णकर अन्धमूषामे इसकेवीचमे चतुर्गुणित पारेको कवलितकर सन्धि बन्दकर सुखाकर भूधरयन्त्रमे चारप्रहर पकाकर स्वाङ्गशीतलहोनेपर निकालकर दिव्यौषधियोके फलोके रससे तीनरोजलगातार तप्तखल्वमे मर्दनकर भूधरयन्त्रमे एकरोज लघुपुटकी आचदेकर स्वाङ्गशीतलहोनेपर निकालकर इसीतरह दिव्यौषधियोके पत्तोंकेरससे एकरोज मर्दनकर भूधरयन्त्रमे लघुपुटकी आच देकर स्वाङ्गशीतलहोनेपर निकालकर उसीतरह एकरोज मर्दनकर शरावसम्पुटमे वन्दकर तुषाग्निमें रोटीकीतरह लोटपोटकर सम्पुटको सेके । इसतरह एक पहर स्वेदनकरनेसे इसकीभस्म होजायगी । यहभस्म शुद्धद्रुतपारद और नागभस्म बराबर लेकर अम्लवर्गमे एकरोज मर्दनकर गोलाबनाय सुखाकर अन्धमूषामें वन्दकर ४ पहर धमनकरानेसे इसका खोट होजायगा । उसखोटको निकालकर खुली मूषामे रखकर धमनकरे जवतक कि नाग विल्कुल नष्ट न हो । द्रुतसूतकीतरह इसरसको द्रुतवनाकर कच्छपयन्त्रमे रख इसका दशांश विडक्षार और स्वर्णादि समस्त धातुओको देकर इसमे जारणकरे । एकएक धातु ६–६ गुना जारणकर हीरा और सुवर्ण ३-३ गुना जारणकरे । फिर समस्तरत्नोकी द्रुति वनाकर ३–३ गुनी जारणकरे । इसके वाद यन्त्रमेसे निकालकर दिव्यौषधियोके रससे एकरोज मर्दनकर गोली

बनाय धमनकरे तो इसकी दिव्यगुटिका तैयार हो-जायगी। फिर रसाङ्कुशीदेवीकी पूजाकर जिसके मुहमे इसको रक्खे वह भैरव सदृश। होजायगा। अधिकदिन मुहमे रखनेसे दिव्यतेज और कान्ति-युक्तहोकर अपनी इच्छाके अनुसार जहाचाहे तहा जासक्ताहै। और दिव्याङ्गनाओके साथ रमणकर-सक्ताहै। इसके दीर्घ अभ्याससे महाकल्पान्ततक जीसक्ताहै। उसके मलमूत्रसे ताम्र काञ्चनहोजाताहै इसगोलीको २-३ घण्टे मुहमे रखनेकेवाद सफेद पलाशके फूलोका चूर्ण, कालेतिल और शक्कर१-१ पल इकट्ठेकर रोजखायतो इसका शरीरमे क्रामणहोताहै

### ३१६ दिव्यदृष्टिकररसः

रसं नागाऽञ्जनं चन्द्रमेकैकं द्व्यर्धभागिकम्।
सूक्ष्मचूर्णीकृतं नेत्रस्याऽञ्जनाद्दिव्यदृष्टिकृत् ॥

र. स. क, रसायनस., नेत्ररोगे।

भापा—पारा, नाग, सुरमा, कपूर ये क्रमसे १-१-२ और आधाभाग लेकर ३-४ रोज मर्दन कर कज्जलवनावे। इसको नेत्रमे डालनेसे नेत्रके तमामरोग दूरहोकर दिव्यदृष्टि होती है ॥३१६॥

### ३१७ दिव्यामृतरसः (महाकल्कः)

धान्याऽभ्रकं विनिक्षिप्य मुसलीरसमर्दितम्।
स्थाल्यांक्षिप्त्वानिरुद्ध्याऽथपिधान्यामध्यरंध्रया
स्थाल्यधो ज्वालयेद्वह्निं यामपर्यन्तमुद्धतम्।
ततः क्षिपेत्पिधान्यां हि व्योम्नस्त्वष्टगुणं पयः
जीर्णे पयसि पिष्ट्वा तत्तालमूलीरसैः पुनः।
इत्थं हि साधयेद् व्योम त्रिवारमतियत्नतः ॥
अजादुग्धपुटैः पश्चाद्वाराणि खलु विंशतिम्।
कम्पिल्लकरसेनाऽपि विष्णुक्रान्तारसेन च ॥
कदलीकन्दतोयेन तालमूलीरसेन च।
शतवारं पुटेदेवं भवेद्व्योम रसायनम् ॥
तद्व्योमभसितं ताप्यभस्म ताम्रस्य भस्म च।
शुद्धं भस्म च तत्सर्वं समांशं परिकल्पयेत् ॥
भावयेत्सप्तधा निम्बरसै र्लोध्ररसेन च।
त्रिफलायाः कदल्याश्च केतक्या मार्कवस्य च ॥
केतकस्याऽपि सारेण तावद्वाराणि यत्नतः।
इति निष्पन्नकल्केऽस्मिंस्तत्समां त्रिफलां क्षिपेत्
भस्मसूतं सिताव्योषं चित्रकञ्च पृथक्पृथक्।
मधुना गुटिकाः कार्याः शाणेन प्रमिताः खलु
महाकल्क इति ख्यातो दस्राभ्यां परिकीर्तितः
वटीमेकां समारभ्य तथैकैकां विवर्द्धयेत् ॥
चतुर्गोलकपर्यन्तं मण्डलेमण्डले खलु।
सेवितो द्वादशाऽब्दन्तु जरामृत्युविवर्जितः ॥
सर्वव्याधिविनिर्मुक्तो दीर्घायुर्जायते नरः।
भीमतुल्यबलः श्रीमान् पुत्रसंततिसंयुतः ॥
सर्वाऽऽयाससहिष्णुश्च शीततापसहस्तथा।
अमन्दसंमदोपेतः प्रौढस्त्रीरतिरञ्जनः ॥
दृढसर्वेन्द्रियो भूत्वा जीवेद्वर्पशतत्रयम्।
श्वासं कासं क्षयं पाण्डुं तथैवाऽष्टौ महागदान्
मण्डलार्द्धेन शमयेज्ज्वरादीनां तु का कथा।
सर्वगोरससंयुक्तं पथ्यं कार्यं रसायने ॥
रोगोचितमथान्यच्च ददीत खलु रोगिणे।
संसारसुखमिच्छद्भिः सुखं जीवितुमिच्छुभिः
नित्यं रसो निपेव्योऽयं दिव्याऽमृतसमो नृभिः

र. र स, रसायने।

भापा— वज्राऽभ्रकका धान्याभ्रक बनाकर मुसलीके स्वरससे ३-४ रोज मर्दनकर २-३ कपड़मिट्टी दीहुई हडीमे डालकर वीचमे छिद्रकिये-हुए शरावसे ढककर चूल्हेपर चढाय एकपहरतक वहुतकडी आचदे। इसकेबाद ढक्कनमे अभ्रकसे अठगुना दूध डालदे। जबवह दूध निःशेप जलजाय तव आच लगाना बन्दकरदे। स्वाङ्गशीतलहोनेपर निकालकर तालमूलीके रससे पूर्ववत् मर्दनकर अग्निपर चढ़ाकर पूर्वकीतरह पकावे। ऐसे ३ वार पकाकर वकरीके दूधसे १-२ रोज मर्दनकर टिकिया बनाय सुखाकर गजपुटकी २० आचदे। इसके वाद कमीला, विष्णुक्रान्ता, कदलीकन्द, तालमूली इनके रसोसे दस १० आचदेनेसे यह अभ्रकभस्म रसायनहोगा। इसकेवाद यह अभ्रकभस्म, सुवर्ण-

माक्षिकभस्म, ताम्रभस्म, येसब समभागलेकर निम्ब, लोध, त्रिफला, केला और केतकीकी जड, केवडा इनप्रत्येकके स्वरससे ७–७ भावनाए देकर त्रिफला, पारदभस्म, मिश्री, त्रिकटु, चित्रक ये प्रत्येक पूर्व-भस्मकी बराबर मिलाकर मधुमे ३–३ मासेकी गोलिये बनाकर रखछोडे। इनमेसे १–१ गोलीसे आरम्भकर हररोज मात्रा बढाताजाय। जब चार गोली होजॉय तब १ मण्डलतक स्थिर रक्खे। दूसरे मण्डलमे ६–६ गोलिये ले। इसीतरह चौथे मण्डलमे १–१ गोली कमकरदे। जब कमकरतेहुए १ गोली रहजाय तब फिर पूर्वकीतरह वृद्धिकरे। इसतरह १२ वर्ष सेवनकरनेसे बुढापा मृत्यु और समस्तव्याधियोसे निर्मुक्तहोकर दीर्घायु होताहै। भीमकीतरह बलप्राप्तहोताहै। ऐश्वर्ययुक्तहोकर पुत्रपौत्रादिसन्ततिको प्राप्तहोताहै। समस्तकष्ट, शीत और ताप इनको सहनकरनेकी शक्तिवाला होताहै। हमेशः आनन्दयुक्त होकर प्रौढस्त्रियोको रतिमे प्रसन्नकरताहै। समस्तेन्द्रियशक्तियुक्तहोकर २०० वर्षकी आयुको प्राप्तहोताहै। श्वास, कास, क्षय, पाण्डु, अष्टमहारोग इनको आधेमण्डलके भीतर नष्टकरताहै। फिर ज्वरादिकोके विषयमेतो कहनाही क्याहै। रसायनार्थ इसका प्रयोग कियाजायतो गोरस युक्त पथ्यदे। रोगहरणार्थ प्रयोगकरनाहो तो रोगोचित पथ्यदेवे। ससारके सुखकी तथा दीर्घजीनेकी इच्छाहोवे तो इसरसायनकासेवनकरे॥ ३१७॥

### ३१८ दीपिकारसः

**सन्तप्तसीसभागश्च पारदं गन्धकं कणाम्।**
**समभागं पृथक् तत्र मेलयेच्च यथाविधि॥**
**जम्बीरस्य रसे सर्वं मर्दयेच्च दिनत्रयम्।**
**दिनद्वयमजामूत्रे गवां मूत्रे दिनत्रयम्॥**
**मेघनादकुमार्योश्च रसे चाऽपि दिनत्रयम्।**
**भावयेच्च यथायोग्यं तस्मिन्नेतानि दापयेत्॥**
**सौवर्चलं सैन्धवञ्च चित्रश्चैकैकभागिकाः।**
**तेन सम्मेलनं कृत्वा भावयेच्च पुनः क्रमात्॥**
**अनेन विधिना सम्यक् सिद्धो भवति स रसः**
**शर्कराघृतसंयुक्तं दद्याद्वल्लत्रयं रसः॥१३९०॥**
**गोधूमस्यौदनं पथ्यं माषमूपश्च वास्तुकम्।**
**धात्रीफलसमायुक्तं सर्वज्वरविनाशनम्॥**
**दीपिकारस इत्येष तन्त्रज्ञैः परिकीर्तितः॥**

र र स, र सु, र. को, ज्वरे।

भाषा—एकतोलेशुद्धनागकोगलाकर उसमे १ तोला शुद्धपारा मिलाकर १ तोला शुद्धगन्धकडाले। जब तीनोगलकर एकजीवहोजॉय तब नीचे उतारकर १ तोले पीपलके चूर्णमेसे थोडा २ डालताहुआ चलावे अखीरमे इनकीनीलवर्णकज्जलीकर जभीरीकेरससे ३ रोज, बकरीकेमूत्रसे २ रोज मर्दन कर गोमूत्र, काटेवालीचौलाई और घीकुआर इनसे ३–३ रोज मर्दनकर सचल, सैन्धव, चित्रकमूल इनकाचूर्ण १–१ तोला मिलाकर ऊपरकीतरह फिर भावनाए देकर सुखाकर ९–९ रत्तीकी गोलिये बनाकर रखछोडे। इनमेसे १–१ गोली शक्कर और घीकेसाथ देनेसे सबप्रकारके ज्वर निवृत्तहोतेहै। गेहूका दलिया, उडदकीदाल, भात, बथुएकाशाक, आवलेके यूपकेसाथदेना॥ ३१८॥

### ३१९ दुग्धवटी ( प्रथमा )

**अमृतं धूर्तबीजञ्च हिङ्गुलञ्च समंसमम्।**
**धूर्तपत्ररसेनैव मर्दयेद्याममात्रकम्॥ १३९२॥**
**मुद्गोपमां वटीं कृत्वा दुग्धेन सह पाययेत्।**
**दुग्धेन भोजयेदन्नं वर्जयेल्लवणं जलम् १३९३**
**शोथं नानाविधं हन्ति पाण्डुरोगं सकामलम्॥**
**सेयं दुग्धवटी नाम्ना गोपनीया प्रयत्नतः॥**

भै र., वै क, ध, शोथे।

भाषा—शुद्धबछनाग, धतूरेकेबीज और शिंगरिफ समभागलेकर कपडछानचूर्णकर धतूरेकेपत्तोकेरससे १ पहरमर्दनकर मूगबराबर गोलिये बनाकर रखछोडे। इनमेसे १–१ गोली खानेकोदे। दूधकेसाथ भोजनदे। लवण और जल बिल्कुल छुडादे-तो यह ( दुग्धवटी ) नानाप्रकारकेशोथ, पाण्डु, कामला, इनसबको नष्टकरतीहै॥ ३१९॥

## ३२० दुग्धवटी ( द्वितीया )

गृहीत्वा दरदात्कर्षं तदर्द्धं देवपुष्पकम् ।
फणिफेनं विषं जातीफलं धुस्तूरबीजकम् ।
सम्मर्द्य विजयाद्रावै र्मुद्गमात्रां वटीश्चरेत् ॥
अनुपानं प्रदातव्यं शोथे क्षीरं भिषग्वरैः ।
ग्रहण्यां विजयाक्काथः पथ्यं दुग्धाऽन्नमेव हि॥
जलञ्च लवणञ्चाऽपि वर्जनीयं विशेषतः ।
प्रबलायामुदन्यायां सलिलं नारिकेलजम् ॥
पातव्यं वटिका चैषा शोथं हन्ति न संशयः ॥
ग्रहणीमतिसारञ्च ज्वरं जीर्णं निहन्ति च ॥

भै. र., शोथाधिकारे ।

भाषा—शुद्धशिंगरिफ १ तो., लौंग, अफीम, वछनाग, जायफल, धतूरेकेबीज ये प्रत्येक आधा-तोला लेकर कपडछानकर भागकेरसमे घोटकर मूगबराबर गोलिये बनाकर रखछोड़े । इनमेसे औचिती देखकर १ या २ गोली दूधकेसाथशोथमे और भागके काढेसे सङ्ग्रहणीमे देवे । पथ्यमे दूधके-साथ अन्नदे । लवण और जल भूलकर न दे । कदाचित् जलबिना न रहसकेतो नारियलका पानी देना चाहिये । इसके सेवनसे भीषणशोथ, ग्रहणी, अतिसार, जीर्णज्वर येसब नष्टहोतेहै ॥ ३२० ॥

## ३२१ दुग्धवटी ( तृतीया )

अमृतं सूर्यगुञ्जं स्यादहिफेनं तथैव च ।
पञ्चरक्तिकलौहञ्च षष्टिरक्तिकमभ्रकम् ॥
दुग्धै र्गुञ्जाद्वयमिता वटी कार्या भिषग्विदा ।
दुग्धाऽनुपानं दुग्धैश्च भोजनं सर्वथा हितम् ॥
शोथं नानाविधं हन्ति ग्रहणीं विषमज्वरम् ।
मन्दाऽग्निं पाण्डुरोगञ्च नाम्ना दुग्धवटी परा॥
वर्जयेल्लवणं वारि व्याधिनिःशेषताऽवधि ॥

भै. र, शोथे ।

भाषा—शुद्धवछनाग और अफीम १२–१२ रत्ती, लोहभस्म ५ रत्ती, अभ्रकभस्म ६० रत्ती, लेकर सबको इकट्ठेकर गोदुग्धसे घोटकर २–२ रत्तीकी गोलिये बनाकर रखछोडे । इनमेसे १–१ गोली दूधकेसाथदेनेसे और केवलदूध अथवा दूध-भात देकर जलकापरहेज रखनेसे नानाप्रकारका शोथ, सङ्ग्रहणी, विषमज्वर, मन्दाऽग्नि, पाण्डुरोग, इनसबको यह नष्टकरती है । जबतक व्याधि निःशेष न हो तबतक जल और लवण न दे ॥ ३२१ ॥

## ३२२ दृष्टप्रभावः

प्रागुक्तेन विधानेन रसं सम्यग्विशोधितम् ।
आदाय सूतं खल्वे च निक्षिप्याऽथ प्रमर्दयेत्॥
हंसपाद्यर्कताम्बूलीलाङ्गलीचक्रमुण्डिकाः ।
एषां रसैः सम्मिलितै र्दिनानि त्रीणि मर्दयेत्॥
तस्य सूतस्य भागैकं गन्धकं द्विगुणं मतम् ।
कुमारीपत्रनिर्यासैस्त्रिदिनं मर्दयेद् दृढम् ॥
ततोगोलकमापाद्य भाण्डमध्ये निवेशयेत् ।
सूतत्रिगुणताम्रस्य पात्रेणाऽधो मुखेन च ॥
निरुद्ध्य सम्यग्लेपेन पात्रं पूर्येत भस्मना ।
उपरिष्टाच्छरावं तु दत्त्वा सम्यङ्निरोधयेत् ॥
चुल्ल्यामारोपयेत्पश्चादग्निं प्रज्वालयेदधः ।
प्रचण्डं प्रहरांस्त्रींस्तु स्वाङ्गशीतलमुद्धरेत् ॥
तत्सर्वं सूतकं ग्राह्यं सह ताम्रेण भस्मितम् ।
जम्बीरवारिणा घृष्ट्वा रोधयेत्स्रावसम्पुटे ॥
आरण्यच्छाणकै र्वैद्यः पुटं दद्यात्तु कौक्कुटम् ।
स्वाङ्गशीतलमाकृष्य पुनस्तेनैव मर्दयेत्१४०९
पूर्ववत्पुटनं कृत्वा मर्दयित्वा पुनः पुटेत् ।
त्रिःसप्तवारान् कुर्वीत पुटान्यत्र रसेश्वरे ॥
ततः सूतं समादद्यात्क्षिपेत्पूर्वोक्तभाण्डके ।
ज्वरेऽतिविषमे घोरे जीर्णे वा सान्निपातिके ॥
नवे वा तं प्रयुञ्जीत रसेन्द्रं चन्द्रसंयुतम् ।
गुञ्जामात्रं ददीताऽस्मै ज्वरितायाऽनुपानकम् ॥
भद्रमुस्तापर्पटकक्काथमष्टाऽवशेषितम् ।
ज्वरो निवर्तते सद्यो ज्वरपीडा च या भवेत् ॥
पथ्यं तस्मै प्रदातव्यं शाल्यन्नं घृतवर्जितम् ।
मुद्गक्काथेन संयुक्तं दिनाऽन्ते भोजयेल्लघु ॥
एवं दिनत्रयं कार्यं यथेष्टञ्च ततो भजेत् ।
दृष्टप्रभावः सम्प्रोक्तो योगिनीभिरुदाहृतः ॥

देवीशास्त्राऽनुसारेण विविच्य प्रतिपादितः ॥
रसाल, सर्वज्वरे ।

भाषा—बुभुक्षान्तसस्कारकियेहुएपारेको हसराज, आक, पान, करिहारी, चकवड, गोरखमुण्डी इनसवका रस बरावर प्रमाणमे इकट्ठा मिलाकर उससे ३ रोज लगातारमर्दनकर दूना शुद्धगन्धक मिलाकर घीकुआरकेरससे ३ रोज मर्दनकर ६–७ कपडमिट्टीदीहुई हंडीमे रखकर इससवगोलेकी वरावर तावेकी कटोरीसे ढककर गुडचूने प्रभृतिसे सन्धिबन्दकर पात्रकोगलेतक सफेदभस्मसे भरदे । ऊपरशराव रख ३–४ कपडमिट्टीसे वन्दकर सुखाकर चूल्हेपर रख ३ पहरतक प्रचण्ड अग्निदेकर स्वाङ्गशीतलहोनेपर निकालकर ताम्रपात्रसहितरसको जभीरीकेरससे १–२ रोजमर्दनकर गोलावनाय शरावसम्पुटमेरख ४–५ कपडमिट्टीदेकर सुखाकर कुक्कुटपुटकीआचदे । स्वाङ्गशीतलहोनेपर निकालकर उसीतरहफिर मर्दनकर आचदे । ऐसे २१ वार आचदेकर निकालकर रखछोडे । इसमेसे १–१ रत्ती धतूरकेसाथदेकर १–१ तोला नागरमोथा और पित्तपापडेका अष्टाऽवशेषक्काथ पिलानेसे अत्यन्तघोर विपमज्वर, जीर्ण, सान्निपातिक, नवीनज्वर इससे निवृत्तहोजातेहै । पथ्यमे घीरहितपुरानेचावल मूंगकेयूपकेसाथ देने चाहिये । ऐसे ३ रोजकरकेयथेष्टाऽऽहारविहारकरे ॥ ३२२ ॥

## ३२३ दृष्टिप्रसादनोरसः

सूतकं गन्धकोपेतं चाङ्गेरीरससूर्च्छितम् ।
अञ्जनं दृष्टिदम्पुंसां नेत्राऽऽमयविनाशनम् ॥
र कौ, नेत्ररोगे ।

भाषा—शुद्धपारा और गन्धक समभागलेकर नीलवर्णकज्जलीकर ७–८ रोजतक तिपतियाके रससे मर्दनकर सुखाकर रखछोडे । इसका नेत्रमे अञ्जनकरनेसे तमामनेत्रकेरोग दूर होतेहै ॥ ३२३ ॥

## ३२४ देवाऽऽनन्दरसः

चत्वारोरसजाःपडभ्रकभवाअष्टावयोजाःपृथ-,
ग्गन्धाद्धित्रिकसत्त्वमोचमुशलीनां पञ्चपञ्चांशकाः।
भृङ्गव्यालकुमारिकाऽऽर्द्रकवराशिग्रूदकैर्भावना,
दन्तात्यष्टिगजाष्टिपष्टिदशधाकल्कीकृतश्चक्रमात्
दत्तः शाणोन्मितः सोऽयं देवानन्दाह्वयो रसः
सितया मधुनाऽप्येपः शुष्कपाण्डुक्षयापहः ॥
चन्द्रप्रभ इवाऽमुष्मिन् पथ्यापथ्यविधिर्मतः ।
यवचिञ्चीसमायुक्तः शोफपाण्डुनिकृन्तनः ॥
जयपालरजोभिर्वा स्नुहीक्षीरघृतेन वा ।
पथ्यश्च जीर्णशाल्यन्नं नाऽतिस्निग्धं सतक्रकम्
वह्निचूर्णं त्रिधा धात्रीरसेन परिभावितम् ।
निशायां प्राशयेत्प्राज्ञो गव्येनाऽऽज्येन संयुतम्
र (मा), शोफे ।

भाषा—शुद्धपारा ४ भाग, अभ्रकभस्म ६ भा., लोहभस्म ८ भा., शुद्धगन्धक, त्रिफला, त्रिकटु, गिलोयसत्त्व, मोचरस, मुशली ये सब ५–५ भाग लेकर सूक्ष्मचूर्णकर पारेगन्धककी नीलवर्ण कज्जलीमे मिलाकर भगरेकेरसकी ३२, चित्रककी १७, घीकुआरकी ८, अदरखकी १६, त्रिफलाकी ६० और सहिजनकेरसकी १० भावनाए देकर ४–४ रत्तीकी गोलिये वनाकर रखलेवे । इनमेसे १–१ गोली शक्कर और मधुकेसाथदेनेसे यह शुष्कपाण्डु और क्षयको दूरकरताहै । यवचिञ्चा (तितली) अथवा जमालगोटे अथवा थूहरके दूधमे पकाएहुए घीकेसाथ देनेसे शोथ और पाण्डुको दूरकरताहै । रस जीर्णहोनेपर पुराने चावलोका भात छाछकेसाथदे । पर इसमे अधिकघी नही देनाचाहिये । चित्रकमूलके चूर्णको आवलेकेरसकी ३ भावनाए देकर सुखाकर रखछोडे । इसमेसे ३ माशे गायके घीकेसाथ रातमे सोतेसमयदेवे । वाकी पथ्याऽपथ्यविधि चन्द्रप्रभकीतरह समझना ॥ ३२४ ॥

## ३२५ देहसिद्धिकरताम्रम्

कन्यातोये ताम्रपत्रं सुतप्तं
कृत्वा वारान्विंशतिं प्रक्षिपेत्तत् ।

शुद्धं गन्धं तद्द्विभागं विमर्द्य
निम्बूतोयैस्ताम्रपत्राणि लिप्त्वा ॥
भाण्डे कृत्वा रोधयित्वा तु भाण्डं
शालाऽग्नौ तं निक्षिपेत्पञ्चरात्रम् ।
शीतं जातं भावयेदुक्ततोयै
र्यद्वा नीरैः स्त्रैफलैरेकवस्त्रम् ॥१४२३॥
मध्वाज्याभ्यां पेषयित्वा पुटेत-
च्छुद्धं सिद्धं जायते देहसिद्ध्यै ।
गुञ्जामात्रं शाल्मलीनीरयुक्तं
मध्वाज्याभ्यां सेवयेद्वत्सरार्धम् ॥
दुग्धं खण्डं चाऽनुपानं प्रदद्या-
त्सायं भोज्यं गौडमम्लेन युक्तम् ।
वीर्यं पुष्टिं दीपनं देहदार्ढ्यं
दिव्यां दृष्टिं दीर्घमायुः करोति ॥

रसायनस, यो म, र दी ( ताम्ररसायनम्,) रसायने ।

भाषा—शुद्धतांबेके बारीकपत्रोको अग्निमे तपाकर घीकुवारके रसमे २० वार बुझावे । फिर इससे दूनेगन्धकको नीवूकेरसमे मर्दनकर पत्रोपर लेपकर सुखाकर ६–७ कपडमिट्टीदीहुई हडीमे रखकर, ढक्कनलगाय सन्धिवन्दकर हडीको सफेद-राख अथवा नमकसे भरकर मुहपर ३–४ कपड-मिट्टीदेकर सुखाकर पाचरोजतक सखुएकीलकडीकी आचदे । अथवा दोशरावमे वन्दकर ६–७ कपड-मिट्टीदेकर सुखाकर ५ रोजतक सखुएके कोयलोंकी अग्निमे रक्खे । स्वाङ्गशीतलहोनेपर निकालकर घीकु-वार और नीवू अथवा त्रिफलाके क्वाथसे एकरोज मर्दनकर सुखाकर मधु और घीसे मर्दनकरे । फिर गोलाबनाय सुखाकर शरावसम्पुटमे बन्दकर गजपुट-की आचदे । स्वाङ्गशीतलहोनेपर निकालकर इस-मेंसे १–१ रत्ती घी और मधुकेसाथ चाटकर ऊपर-से १ पल सेमलकास्वरस अथवा क्वाथ खाडमिले हुए दूधमे डालकर पीवे । इसप्रकार ६ महीनेतक-करे । जीर्णहोनेपर गुडकेपदार्थ खटाईके साथदेवे । इसके सेवनसे वीर्यकीपुष्टिहोकर अग्निप्रदीप्तहोताहै । देह मजबूतहोकर दिव्यदृष्टि और दीर्घायु प्राप्त होती है ॥

### ३२६ द्राक्षादिचूर्णम् ( महत् )

द्राक्षादाडिमखर्जूरचातुर्जातकटुत्रयम् ।
त्वक्षीरी नारिकेलं चन्दनं मधुकं शिवा ॥
प्रियालमज्जा ह्रीवेरमुशीरं जातिपत्रकम् ।
विदारी गोक्षुरं मोचा कपिकच्छुभवं तथा ॥
जातीफलञ्च तक्कोलं तिलमाषमधूकजम् ।
यवमज्जा लोध्रपुष्पं मुस्तानागबलाकणाः ॥
द्विजीरकं ह्यजामोदं मेथीतालीसपत्रकम् ॥
सैन्धवं धान्यकं भार्ङ्गी शृङ्गीभृङ्गपुनर्नवाः ॥
अरुष्कराऽस्थिबीजञ्च सम्यङ्मारितमभ्रकम् ।
एतत्सर्वं समं कृत्वा द्विगुणाऽमृतशर्करा ॥
तस्य चूर्णञ्च कर्षांशं क्षिपेत्क्षीरे पिबेन्नरः ।
पित्तक्षयं रक्तपित्तं पाददाहमसृग्दरम् ॥
विनिहन्यात्प्रमेहञ्च सोमरोगञ्च शर्कराम् ।
मूत्राऽऽघात मूत्रदोषं वातकुण्डलिकान्तथा ॥
अम्लपित्ताङ्गदाहौ च धातूनाञ्च ज्वराऽऽमयम् ।
त्रिदोषप्रभवान्रोगान्पाण्डुरोगञ्च कामलाम् ॥
कण्डूर्तिं सिध्मकुष्ठञ्च विड्बन्धाऽन्त्रविकूजनम् ।
वन्ध्या च लभते गर्भं वृद्धस्तारुण्यमाप्नुयात् ॥
तुरङ्ग इव सन्तुष्टो मातङ्गबलविक्रमः ॥
गच्छेद्गन्धर्वदर्पाङ्गो रागवेगाऽऽकुलस्त्रियः ॥
महाद्राक्षादिचूर्णोऽयं चन्द्रराजवन्द्रभाषितः ॥

वा, पित्तरोगे ।

भाषा—द्राक्ष, अनारदाना, छुहारा, तज, पत्रज, इलायची, नागकेसर, त्रिकटु, वशलोचन, नरियल, सफेदचन्दन, मुलहठी, हर्रे, चिरोजी, सुगन्धवाला, खस, जावित्री, विदारीकन्द, गोखरू, केलेकाकन्द, केवाचके बीज, जायफल, शीतलचीनी, तिल, उड़द, महुएकेफूल, जव, लोध्रकेपुष्प, नागरमोथा, नागवला, गजपीपल, स्याहजीरा, सफेदजीरा, अजमोद, मेथी, तालीसपत्र, सेंधानमक, धनिया, भारङ्गी, काकड़ासींगी, भगरा, पुनर्नवा,

मिलावेकी मज्जा, अभ्रकभस्म सवसमभाग, मिश्री अथवा शक्कर सबसे दूनी मिलाकर रखछोड़े । इसमेसे १-१ तोला दूधमे मिलाकर पीनेसे पित्तक्षय, रक्तपित्त, पाददाह, रक्तप्रदर, प्रमेह, सोमरोग, पथरी, मूत्राऽऽघात, मूत्रदोष, वातकुण्डलिका, अम्लपित्त, अङ्गदाह,धातुगतज्वर, त्रिदोषजरोग, पाण्डुरोग, कामला, खुजली, सिध्मकुष्ठ, विड्विबन्ध, अन्त्रकूजन, वन्ध्यात्वदोष, वार्धक्य इनसवको यह नष्टकरताहै । समस्त धातुओसे पूर्णकर यथेष्टरतिसुखको देताहै ॥

## ३२७ द्राक्षापाकः

द्राक्षादुग्धसिताः पृथक् परिमिताः
प्रस्थेन सम्पादिताः,
युक्त्या वैद्यवरेण चूर्णितमिदं
देयं पलार्धं पृथक् ।
चातुर्जातकटुत्रयं मृगमदं लोहाऽभ्रकं केशरं,
पत्री जातिफलं मृगाङ्करजतं
कस्तूरिकाचन्दनम् ॥ १४३६ ॥
सम्यग्जातरसं प्रभातसमये सेव्यं द्विकर्षोन्मितं,
स्निग्धं शुक्रकरं प्रमेहशमनं
पित्ताऽऽमयध्वंसनम् ।
मूत्राऽऽघातविबन्धकृच्छ्रशमनं
रक्ताऽर्तिनेत्रार्तिहृत्,
पादे पाणितले विदाहशमनं
सौख्यप्रदं प्राणिनाम् ॥ १४३७ ॥

रसायनस , यो. र., प्रमेहे ।

भाषा—द्राक्ष, दूध, शक्कर येप्रत्येक १ सेर, चातुर्जात (तज, पत्रज, इलायची, नागकेसर), त्रिकटु, कस्तूरी, लोहभस्म, अभ्रकभस्म, केसर, जावित्री, जायफल, मृगाङ्क, रजतभस्म, लताकस्तूरी, चन्दन, इनसवको इकट्ठे मिलाय बहुतमन्द आचसे चलाताहुआपकावे । जब गोली़बधनेलायकहोजाय तब उतारकर रखछोडे । सातरोजकेवाद इसमेसे २ तोले दूधयाँगूरहकेसाथ लेवे । जीर्णहोनेपर भोजनकरे। इससे प्रमेह, पित्तरोग, विबन्ध, मूत्रकृच्छ्र, रक्त विकार, नेत्ररोग, हाथपैरोकादाह ये सब नष्टहोतेहै ॥ ३२७ ॥

## ३२८ द्रुतिसाररसः

युक्तं हि व्योमजद्रुत्या तुल्यांशबलिना रसम् ।
लक्ष्मणारसतः पिष्ट्वा मल्लसम्पुटके क्षिपेत् ॥
वस्त्रमृत्तिकयाऽऽलिप्य शतं वारान् पुटेत्ततः ।
सम्यङ् निष्पिष्यसङ्गाल्य करण्डे तं विनिःक्षिपेत्
इत्युक्तो द्रुतिसारनामकरसो वन्ध्यामयध्वंसनः,
मात्रातःखलुसूतिकाऽऽमयहरोवृष्यश्चिरायुःप्रदः
सम्यक्सिद्धबलिद्रुतिप्रकृतिको
गुञ्जोन्मितः सेवितः,
कुर्यात्तीव्रतरांक्षुधांक्षयहरोरोगादिरोगाञ्जयेत्॥
विभुः सर्वामयध्वंसी रसोऽय नन्दिनोदितः ।
जीवत्पुत्रप्रदः स्त्रीणां स्थिरयौवनदायकः ॥
भूतप्रेतपिशाचानां भयेष्वभयदायकः ।
जडानां लोहलार्तानां मन्दबुद्धिमतामपि ॥
मण्डूकीरससंयुक्तो दातव्यो वचया सह ।
वन्ध्या च लभते पुत्रं नाऽत्र कार्या विचारणा॥

स्त्री. वि , पुत्रप्राप्तये ।

भाषा—अभ्रकद्रुति, शुद्धपारा और गन्धककी कज्जलीवनाय लक्ष्मणाकेरससे १-२ रोज मर्दनकर गोलावनाय शरावसम्पुटमे वन्दकर ६-७ कपड़मिट्टी देकर सुखाकर कुक्कुटपुटकी आचदे । ऐसे १०० वार करनेसे पारदभस्महोगी । इसमेसे उचितमात्रा उचितानुपानकेसाथ देनेसे सूतिकारोग, शोष, अल्पायु, मन्दाग्नि, क्षय इनसवको नष्टकर अत्यन्त क्षुधाको वढाताहै । और समस्तरोगोको दूरकर दीर्घायुपुत्रको पैदा करता है । मनुष्योके यौवनको स्थिर करता है गद्गददोष, और मन्दबुद्धियोको ब्राह्मी केरस अथवा वचाकेसाथ देना चाहिये । इसके सेवनसे वन्ध्याको अवश्य पुत्रकी प्राप्ति होती है ॥३२८॥

## ३२९ द्वादशाऽऽयसम्

गरुत्मान्दरदस्तीक्ष्णो शर्वाख्यो वङ्गशुक्तिके ।
शुल्बश्च गगनं हेम रुधिरश्च त्रिनेत्रकम् ॥

पातालनृपतिश्चैव वह्निमूलं सरामठम् ।
त्रिकटु त्रिफला शिग्रु ह्यजमोदा यमानिका ॥
पिप्पलीमूलभार्ग्यौ च लशुनं जीरकद्वयम् ।
आर्द्रकस्य रसेनैव वटिकां कारयेद्भिषक् १४४६
वातरक्तं महाकुष्ठं गलिताङ्गं त्रिदोषजम् ।
शोथं कण्डूश्च रुधिरं सर्वमेतद्व्यपोहति ॥
मन्दाऽनलाऽऽमवातौ च श्लेष्माणश्च जलोदरम् ।
घ्राणाऽक्षिकर्णजिह्वानां सर्वान्रोगान्विनाशयेत् ॥

भै र, वातरक्ते।

टि०—अत्र एकादशभागेषु धातवो गृहीता· द्वादशे भागे काष्ठौषधित्वेनैकत्व निश्चीय द्वादशायसमिति नाम निर्वोढव्यम् ।

भाषा—सोनामाखी, शिंगरिफ, शुद्धपारद, लोह, वङ्ग, शुक्ति, ताम्र, अभ्रक, सुवर्ण, माणिक्य इनकी भस्मे, रुद्राक्ष, गन्धक, चित्रकमूल, हींग, त्रिकटु, त्रिफला, सहिजनमूल, अजमोद, अजवाइन, पिपलामूल, भारङ्गी, लशुन, स्याहसफेदजीरा, इनसबका बारीकचूर्णकर पारेगन्धककी नीलवर्ण कज्जलीमे मिला कर अदरखके रससे १–२ रोज घोटकर १–१ माशेकी गोलिये बनाकर छायाशुष्ककर रखछोडे इनमेसे १–१ गोली समयोचिताऽनुपानके साथ देनेसे वातरक्त, महाकुष्ठ, गलित, त्रिदोषज, शोथ कण्डू, दुष्टरक्त, मन्दाग्नि, आमवात, श्लेष्मजलोदर, नाक, आख, कान और जिह्वाके तमाम रोगोको यह नष्ट करता है ॥ ३२९ ॥

### ३३० द्वाविंशत्यायसम् (हरिद्राद्यवलेहः)

हरिद्रे त्रिफला दन्ती व्योपं चित्रक आहुली ।
कटुका रोहिणी श्यामा पिप्पलीमूलमेव च ॥
वचा विडङ्गं त्रिफला त्रिवृता हस्तिपिप्पली ।
चूर्णान्येषां तु तुल्यानि द्विगुणं स्यादयोरजः ॥
तानि क्षीराऽनुपानानि लेहयेन्मधुसर्पिषा ।
पाण्डुरोगं नुदत्येष श्वयथुश्चाऽपकर्षति १४५१

ग. नि, र सु, पाण्डुरोगे।

टि०—रसराजसुन्दरे पद्यस्थु वस्तुषु व्यत्ययं कृत्वा पलमात्र लोहभस्म सर्वार्धकं किट्टय नियुज्य द्वाविंशत्यायसमिति नाम स्थापितम्, तस्याप्यत्रैवाऽन्तर्भाव, नचायसमिति नाम्नस्तत्र दुर्व्यूढत्वात् । अस्माच्चूर्णात्तत्र गुणाऽतिरेकाऽभावाच्च ।

भाषा—हल्दी, दारुहल्दी, त्रिफला, दन्तीमूल, त्रिकटु, चित्रकमूल, हुरहुर, कुटकी, कालीनिशोत, पिपलामूल, वच, विडङ्ग, त्रिफला, ( सुपारी, जायफल, लौंग ), लालनिशोत, गजपीपल येसब समभाग, इनसबसे दूनी लोहभस्म मिलाकर रखछोडे । इसमेसे १–१ माशा मधु और घृतके साथ देनेसे पाण्डुरोग और शोथ नष्ट होता है ॥ ३३० ॥

### ३३१ द्विगुणाऽऽयसम्

दन्ती विडङ्गं त्रिफला त्र्यूषणं कटुरोहिणी ।
चित्रकं देवकाष्ठञ्च त्रिवृता हस्तिपिप्पली ॥
चूर्णान्येतानि तुल्यानि द्विगुणं स्यादयोरजः ।
क्षीरेणाऽऽलोड्य तत्पीतं श्रेष्ठं श्वयथुनाशनम्

भै. र, श्वयथौ ।

भाषा—दन्तीमूल, विडङ्ग, त्रिफला, त्रिकटु, कुटकी, चित्रक, देवदारु, निशोत, गजपीपल, येसब समभाग, लोहभस्म सबसे दूनी लेकर कपडछान चूर्णकर उचितमात्रामे लेकर दूधकेसाथ पीनेसे शोथ ( सूजन ) नष्ट होता है ॥ ३३१ ॥

### ३३२ द्विजरोपणी गुटिका

नागस्य त्रिफलाक्वाथे रसे भृङ्गस्य गोघृते ।
अजादुग्धे च गोमूत्रे शुण्ठीक्वाथे मधुन्यपि ॥
वापान्सप्तपृथग्दत्त्वा तत्समं ग्राहयेद्रसम् ।
लौहपात्रे द्रावयित्वा युक्त्या च गुटिकाश्चरेत्
सा मुखे धारिता हन्ति दन्तरोगानशेषतः ।
दृढीकरोति दशनान् बद्धमूलानशेषतः १४५६

र कौ, र. क, रसायनस, र. चि, र. का, र लि., दन्तरोगे ।

भाषा—त्रिफलाक्वाथ, भांगरेकारस, गोघृत, बकरीकादूध और मूत्र, शुण्ठीक्वाथ और मधु इनप्रत्येकमे नागको गलाकर सातसातवार बुझाकर फिर गलाकर इसकीबराबर शुद्धपारा मिलाकर गोली

बनाले। इसगोलीको मुंहमे रखनेसे दातोकी तमाम व्याधिया दूर होकर दात मजबूत हो जाते है ३३२

३३३ द्विजेन्द्ररसः

अभ्रकं तालकं तार्प्यं शिलाजित्कुनटीरजः।
भूलतासत्त्वसंयुक्तं समांशैः समपारदम् ॥
त्रिसञ्चयक्षारसंयुक्तं चणकाऽम्लसुभावितम् ॥
त्रिकटुत्रिफलापाठासुरदालोसुमर्दितम् ॥
द्विजेन्द्रनाम सूतोऽयं विषदोषं द्रुतं जयेत् ॥

रसेन्द्रम, विषविकारे।

भाषा—अभ्रक और हरितालभस्म, शुद्धसोनामाखी, शिलाजीत, मैनसिल, केचुओंके तावेकीभस्म सज्जी, सुहागा, यवक्षार, येसब समभागलेकर सबकी बराबर पारदभस्म मिलाकर चणकक्षार, त्रिकटु, त्रिफला, पाठा, बन्दाल इन प्रत्येकके रसोसे १–१ रोज मर्दनकर ३–३ रत्तीकी गोलिये बनाकर रखछोडे। इनमेसे १–१ गोली समयोचितानुपानकेसाथ देनेसे यह समस्तविषोको दूरकरताहै ॥३३३॥

३३४ द्विभुजरसः

म्लेच्छाद्विगुणजैपालं जम्बीररसमर्दितम्।
रक्तिकाप्रमितं दत्तं नवज्वरविनाशनम् ॥

नू क, नवज्वरे।

भाषा—शिंगरिफसे दूना शुद्धजमालगोटा लेकर जभीरीकेरससे मर्दनकर १–१ रत्तीकी गोलिये बनाकर रखछोड। इनमेस १–१ गोली उचितानुपानकेसाथ देनसे नवीनज्वर नष्ट होताह॥ ३३४ ॥

३३५ धत्तूरतैलबद्धवटी

पलं रसस्य शुद्धस्य तथैव द्विपलं बलेः।
तयोः कज्जलिकां कृत्वा रुबुतैलेन मर्दयेत् ॥
अथवाऽप्यणुतैलेन गुटिकां कारयेत्ततः
दृढं वस्त्रेण संवेष्ट्य दाडिमीपत्रजं ततः
कल्कं तदुपरि स्थाप्य वालुकामध्यगं पचेत्।
विधिना कुक्कुटपुटे यावद्गन्धो विलीयते
लेपं पुनः पुनर्दत्वा देयः साग्निपुटस्ततः।
एवं तां गुटिकां सिद्धां तैले धत्तूरजे पचेत् ॥
ततः खाखसवल्कोत्थे तोये क्षीरे पचेत्पुनः।
क्षणं तदुपरि न्यस्य वह्निस्तत्र रसं क्षिपेत् ॥
तं रसं त्वरितं भूमौ सङ्क्षिपेदथ युक्तितः।
सङ्गृह्य गुटिकां कृत्वा तैले धत्तूरजे पचेत् ॥
बहुशो दृढतां यावद्याति तावत्पचेत्सुधीः।
पश्चात्क्षीरादिके पाच्या गुटिका कार्यसिद्धिदा॥
निरास इति विख्याता कथिता रसवादिभिः ॥

यो. म, रसायनाधिकारे।

भाषा—शुद्धपारा १ पल शुद्धगन्धक २ पल, इनकी नीलवर्ण कज्जलीकर एरण्डका तैल अथवा अणुतैल थोडासा डालकर मर्दनकरे जिसमेकि इसकी कडीगोली बनजाय फिर इसको मलमलके टुकडेमे बाधकर इससे चतुर्गुणित अनारके पत्तोकाकल्क इसके ऊपर चढाकर एककपडमिट्टी देकर शरावसम्पुटमे वालुकेबीचमे रखकर सम्पुटपर १–२ कपडमिट्टी देकर कुक्कुटपुटकी आचदे जिसमेकि केवलगन्धकजलजाय। स्वाङ्गशीतलहोनेपर निकालकर एरण्डतल अथवा अणुतैल मिलाकर पूर्ववत् अनारपत्रके कल्कमे रखकर आचदे। ऐसे जबतक इसमेसे गन्धकका अश बिलकुल न जलजाय तबतक आच देताजाय। गन्धक निकलजानेपर गोलीकारंग लालहोजायगा। इसकेबाद धतूरेके बीजोके तैलमे मर्दनकर अनारके पत्रोकेकल्कमे कवलितकर दोलायन्त्रसे धतूरेके बीजोके तैलमे ४ पहर पकावे। स्वाङ्गशीतलहोनेपर निकालकर पोस्तके ताजे डोडोके कल्कमे कवलितकर दोलायन्त्रमे डोडोकेहीरससे स्वेदनकरे। फिर उसीतरह डोडोके कल्कमे रखकर दूधमे स्वेदनकरे। फिर कपडेसे निकालकर जलतेहुए अङ्गारोमे थोडीदेरतक रक्खे जिसमेकि यह गरमहोजाय। इसकेबाद इसपर थोडापारा रक्खे और उसको तुर्त जिमीनपर गिरादे। फिर इसगुटिकाको धतूरेके तैलमे कईबार पकावे। जब यह एकदम कठिन होजाय तब दूध और पोस्तके डोडोके रसमे

पकाकर रखछोडे । धातुवादमे इसका नाम निरास है। यह युक्ति विशेषसे तमामकार्योको करती है ॥

### ३३६ धनुर्वातभञ्जनरसः

तुत्थं गन्धकतालकं सुकुनटी तार्क्ष्यं रसं तैत्तिरं,
क्ष्वेडं टङ्कणसंयुतं मधुफलं सर्व समं मर्दयेत् ।
कृष्णाऽक्षप्रभवेणमायुपयसाताम्रोत्थपात्रेन्यसेत्,
ब्रह्मद्वारिविभिन्नरोमनिचयेप्रच्छानिकेनिक्षिपेत्
दुश्चाल्येऽनिलदंष्ट्रशृङ्खलपदे शङ्खे हिमे मारुते,
ह्युन्मादे स्मृतिनाशने त्रिकगदेतन्द्राविमोहादिषु

र. श, धनुर्वाते।

भाषा—शुद्धतुत्थक, गन्धक, हरिताल और मैनसिल, सोनामाखी, शुद्धपारा, जमालगोटा, बछनाग, भुनासुहागा, नरियल, सब समभागलेकर कृष्णसर्प और रोहूमछलीके पित्तोसे ७ भावनाए देकर तावेके पात्रमे रखछोड़े। इसमेसे १ रत्तीकी मात्रा उचिताऽनुपानकेसाथ खिलानेसे सन्न्यास, दन्तवन्ध, शृङ्खलवात, शङ्खरोग, सर्वाङ्गशैत्य, उन्माद, अपस्मार, त्रिकग्रह, तन्द्रा, प्रमोहप्रभृति रोग नष्ट होतेहै। और इन्हीरोगोंमे तालुके ऊपरसे वालोको निकालकर पाछदेकर उसपर घिसनेसे ये नष्ट होतेहै

### ३३७ धन्वन्तरिरसः (प्रथमः)

सूतगन्धाऽर्कसौभाग्यंकङ्कुष्ठं रक्तचन्दनम् ।
कणा चैतानि तुल्यानि मर्दयेल्लुङ्गवारिणा ॥
एकाऽहमथ संशोष्य स्थापयेदतियत्नतः ।
रसो निःशेषकुष्ठघ्नो धन्वन्तरिरितिस्मृतः ॥
निर्दिष्टः शम्भुना सर्वरोगभीतिविनाशनः ।
पथ्याघृतयुतो वायुं सिन्धुविश्वान्वितोऽपि वा

र. र. स, चि. क, कुष्ठे।

भाषा—शुद्धपारा, गन्धक, ताम्रभस्म, भुनासुहागा, कङ्कुष्ठ, लालचन्दन, पीपल, येसव समभाग लेकर कूटकपड़छानकर पारेगन्धककी नीलवर्णकज्जलीमे मिलाकर विजोरेकेरसमे १ रोजमर्दनकर १–१ माशेकी गोलिये वनाय सुखाकर रखछोड़े। इनमेसे १–१ गोली समयोचिताऽनुपानकेसाथ देनेसे यह समस्तकुष्ठोको दूरकरताहै । हर्रे और घृत अथवा सैन्धव और सोठकेसाथ देनेसे तमामरोगोको दूरकरताहै

### ३३८ धन्वन्तरिरसः ( द्वितीयः )

शुद्धसूतं विषश्चाऽभ्रं स्वर्णलोहश्च मौक्तिकम् ।
त्रिक्षारं माक्षिकं वङ्गं हिङ्गुल गन्धकं समम् ॥
चित्रमूलकषायेण हंसपादीरसेन च ।
अर्कमूलकषायेण भृङ्गराजरसेन च ॥१४७२॥
पञ्चकोलकषायेण चैभिर्मर्द्य दिनत्रयम् ।
काचकूप्यां निवेश्याऽथ वालुकायन्त्रके पचेत् ॥
त्रियामाऽन्ते समुद्धृत्य पञ्चपित्तैश्चभावयेत् ।
माषमात्रमिदं खादेदनुपानविशेषतः ॥
सन्निपातन्निहन्त्याशु धन्वन्तरिमतो रसः ॥

वै चि., वा., सन्निपाते।

भाषा—शुद्धपारा और बछनाग, अभ्रक-सुवर्ण लोह और मोतीभस्म, सज्जी, सुहागा, यवक्षार, सोनामाखी, वङ्गभस्म, शिंगरिफ, गन्धक येसब समभागलेकर कूटकपडछानकर पारेगन्धककी नीलवर्ण कज्जलीमे मिलाकर चित्रकमूलक्वाथ, हसराजस्वरस, अर्कमूलक्वाथ, भृङ्गस्वरस, पञ्चकोलकषाय इनसे १–१ रोज मर्दनकर सुखाकर ६–७ कपड़मिट्टीदीहुई आतशीशीशीमे डालकर मुहबन्दकर ३ पहर वालुकायन्त्रमे अग्निदेकर ५ पित्तोसे भावना देकर १–१ माशेकी गोलिये वनाकर रखछोड़े । इनमेसे १–१ गोली अनुपानविशेषसे देनेसे यह तमाम सन्निपातोको दूरकरताहै ॥ ३३८ ॥

### ३३९ धन्वन्तरिवटी

निम्बूकबीजं विनिकास्य सम्यक्
तदन्तरे दन्तिफलन्निधाय ।
दलीकृतं वै दिवसत्रयं पृथक्
पश्चात्समुद्धृत्य विशोध्य सम्यक् १४७५
क्षिपेत्ततो वै दरदस्य टङ्कं
सस्यैकटङ्कञ्च मरीचटङ्कम् ।
एकत्र सञ्चूर्ण्य विमर्द्य नीरे
निम्बूद्रवे वै वटकं विधेयम् ॥१४७६॥

गुञ्जैकमानाऽखिलरोगवृन्दं
धान्वन्तरी जूर्तिचयन्निहन्ति ।
सामे ज्वरे चैव निरामके च
विरेकमेकैव मलान्भिनत्ति ॥१४७७॥
द्वाभ्यां द्विवारं वटिकात्रयेण
विरेचयेद्राममितञ्जवेन ।
विबन्धशूलं परिकर्त्तयन्ति
प्लीहाऽऽमशूलज्वरगुल्मशोथान् ॥

र र, कौ, शूले ।

भाषा—कागजीनीबूको बीचमेसे चीरकर बीज-निकालकर जमालगोटेकी दाल बीजोके स्थानमे दबादे । फिर बन्दकर ३ रोजतक रखछोड़े । चौथे-रोज इसमेसे दन्तीबीजोको निकालकर अच्छीतरह पोछकर ४ माशे शुद्धशिंगरिफ, धनिया और मरिच १-१ टङ्क मिलाकर नीबूके रससे १-२ पहर घोटकर १-१ रत्तीकी गोलिये बनाकर रखछोड़े । इनमेसे १-१ गोली उचिताऽनुपानके साथ देनेसे साम और निरामज्वरको दूरकरतीहै । एकगोली देनेसे बद्धमल द्रुतहोजातेहै, २ गोलियोसे दोवार और ३ से तीनवार रेचन करके विबन्ध, शूल, प्लीहा, आमशूल, ज्वर, गुल्म, शोथ इनको यह दूरकरतीहै ॥ ३३९ ॥

### ३४० धर्मसुन्दररसः ( कैशोरगुग्गुलुः )

अश्मजातरसभस्म किशोर-
व्योमलोहरजसामथ कल्कः ।
धर्मघोप इव काकणिमात्रः
शोषमेषमशितः परिमार्ष्टि ॥१४७९॥
मगधामधुभिर्मरिचैः
सघृतै र्वा नित्यमेवसेव्योऽसौ ।
त्रिफलामृताम्बुसिद्धं
किशोरमिति गुग्गुलं प्राहुः ॥१४८०॥

र. ( मा ) शोपे ।

भाषा—सोमल और पारेकीभस्म, किशोर-गुग्गुलु, अभ्रक, लोहभस्म सब समभागलेकर इकट्ठे-कूटकर १-१ रत्तीकीगोलियें बनाकर रखछोड़े । इनमेसे १-१ गोली पीपल और मधुकेसाथ अथवा मरिच और घीकेसाथ लेनेसे यह शोषको जडसे नष्टकरताहै ॥ ३४० ॥

### ३४१ धातुज्वराङ्कुशरसः

लोहाऽभ्रकं ताम्रभस्म पारदं गन्धकं विषम् ।
व्योषं फलत्रिकं कुष्ठं समभागेन मर्दयेत् ॥
भृङ्गनीरेण चाऽर्द्रस्य वारा निर्गुण्डिकारसैः ।
त्रिदिनं मर्दयित्वा तु मुद्गमाना वटी कृता ॥
यथारोगाऽनुपानेन सर्वव्याधिविनाशिनी ।
अजीर्णवातकासघ्नी दीपनी रुचिवर्धनी ॥
सर्वधातुज्वरान्हन्ति सोऽयं धातुज्वराङ्कुशः ॥

नि र., ज्वरे ।

भाषा—लोह, अभ्रक और ताम्रभस्म, शुद्ध-पारा, गन्धक और बछनाग, त्रिकटु, त्रिफला, कुठ ये सब समभागलेकर बारीकचूर्णकर पारेगन्धककी नीलवर्णकज्जलीमे मिलाकर भगरा, अदरख, निर्गुण्डी इनप्रत्येकके रसोसे ३-३ रोज मर्दनकर मूगबराबर गोलियें बनाकर रखछोड़े । इनमेसे १-१ गोली तत्तद्रोगहराऽनुपानकेसाथ देनेसे अजीर्ण, वातकास, मन्दाग्नि, समस्तधातुज्वर इनको यह नष्टकरतीहै ॥

### ३४२ धातुपञ्चाऽमृतरसः (प्रथमः)

सौराष्ट्रिका हिङ्गुलवत्सनाभं
भागार्धभागं नवसारकञ्च ।
कर्कोटिकाचूर्णसमञ्च सर्वं
निष्पिष्य खल्वे परिवर्तितं तत्
गुञ्जैकमात्रो मधुपिप्पलीभ्यां
जीर्णे ज्वरे धातुगते त्रिदोषे ।
योज्यो रसोऽयं विषमज्वरे च
स्याद्धातुपञ्चाऽमृतनामधेयः ॥

रसायनस., ज्वरे ।

टि०—अस्य योगस्य रसायनसङ्ग्रहे स्थानद्वये पाठस्तत्र द्वितीयस्य पञ्चामृतमिति नाम, तत्र कर्कोटिकायास्त्रयो-भागा नियोजिता, अत्रतु सर्वसमा नियोजिता, योगाऽनुगु-

ण्यात्सर्वसमैव ग्राह्या । गन्धकप्रक्षेपस्तु प्रमादात्सञ्जातस्त त्प्रक्षेपात्पञ्चाऽमृतमितिनामाऽभावात् ।

**भाषा**—फिटकडी, शुद्धशिंगरिफ और वच्छनाग समभाग इनसवसे आधेप्रमाणमे नोसादर और इनसवकी वरावर वाझखेखसेकेकन्दकाचूर्ण मिलाकर खेखसेके कन्दके रससे मर्दनकर १–१–रत्तीकी गोलिये वनाकर रखछोड़े । इनमेसे १–१ गोली उचिताऽनुपानकेसाथ देनेसे जीर्णज्वर, धातुगतज्वर, त्रिदोषज, विषमज्वर इनसवको यह नष्टकरताहै ॥

## ३४३ धातुपञ्चाऽमृतरसः (द्वितीयः)

**द्विपलं भस्म सौतञ्च द्विपलं हेमभस्मकम् ।**
**तारं वङ्गञ्च गगनं वैक्रान्तं विद्रुमाऽऽयसम् ॥**
**शुल्वमौक्तिकयोर्भस्म गन्धटङ्कणकन्तथा ।**
**सर्वाण्येतानि शुद्धानि कर्षमात्राणि कारयेत् ॥**
**कुमारीभृङ्गनीरेण त्रिफलापत्रकेसरैः ।**
**विजयादेवकुसुमै र्मर्दितं दिनसप्तकम् ॥**
**कर्पूरकुङ्कुमैश्चाऽपि गन्धाऽऽढ्यं सुमनोहरम् ।**
**पञ्चाऽमृतमिति ख्यातं सर्वरोगेषु योजयेत् ॥**
**मन्दज्वरे क्षये कासे हृद्रोगे च हलीमके ।**
**पाण्डौ शोफे ग्रहण्याञ्च श्वासहिक्कावमिज्वरे ॥**
**वहुमूत्राऽश्मरीमेहमूत्राऽऽघातेषु सर्वथा ।**
**सर्ववातविनाशाय आयुषो वर्धनाय च ॥**

रसायनस, रसायने ।

**भाषा**—पारद और सुवर्णभस्म २–२ पल, रजत-वङ्ग-अभ्रक-वैक्रान्त-प्रवाल-लोह-ताम्र-मोती इन सवकीभस्मे, शुद्धगन्धक और सुहागा ये सव १–१ तोलालेकर कपडछानचूर्णकर घीकुवार, त्रिफला, पत्रज, केसर, भाग, लौंग इनप्रत्येकके यथासम्भव स्वरस अथवा क्वाथोसे ७–७ रोज मर्दनकर षोडशांश कपूर और केशर मिलाकर १–१ रत्तीकी गोलिये वनाकर रखछोड़े । इनमेसे १–१ गोली तत्तद्रोगहराऽनुपानकेसाथ देनेसे मन्दज्वर, क्षय, कास, हृद्रोग, हलीमक, पाण्डु, शोथ, ग्रहणी, श्वास, हिक्का, वमि, ज्वर, वहुमूत्र, पथरी, प्रमेह, मूत्राऽऽघात, इनसवको नष्टकर आयुको वढाताहै॥३४३॥

## ३४४ धातुबद्धरसः

**गन्धकेन शिला वाऽपि सीसको माक्षिकेण वा।**
**अभ्रं लौहेन वा तद्वत्समभागेन पारदः ॥**
**सुभृष्टटङ्कणेनाऽपि रसपादेन संयुतः ।**
**रसेन पारिजातस्य कारवेल्लया रसेन वा ॥**
**द्रवन्तीतण्डुलीयोत्थैरेकाहं मर्दयेद्रसम् ।**
**अर्ध सञ्चूर्ण्य मण्डूरं दिनान्तं परिमर्दयेत् ॥**
**तज्जलं भाजने क्षिप्त्वा सूर्यतापे निधापयेत् ।**
**जलादुत्सृज्य मृत्स्नाञ्च पथ्यया सह मर्दयेत् ॥**
**पूर्वसूतस्य तं कल्कं मृत्स्नया परिलेपयेत् ।**
**अङ्गुलोत्सेधमानेन ततः संवेष्ट्य मृत्पटैः ॥**
**विशोष्य तं धमेद्गाढं सार्धैकघटिकावधि ।**
**तस्मादुद्धृत्य तं भित्वा शीतलाऽङ्गाञ्च मूषिकाम्**
**धातुबद्धरसस्सोऽयं सर्वरोगनिकृन्तनः ॥**

र. र, ध., सर्वरोगे ।

**भाषा**—शुद्धगन्धक, मैनसिल अथवा नाग, माक्षिक अथवा अभ्रक, लोह, समभागलेकर इनकी वरावर शुद्धपारा डालकर पारेसे चतुर्थांश भुनासुहागा डालकर हारसिंगार अथवा करेलेके रससे मर्दनकर द्रवन्ती ( घनसर ), चौलाई इनके रसोंसे १–१ रोज मर्दनकर इससे आधी मण्डूरभस्म डालकर पूर्वोक्तरसोसे मर्दनकरे, रसकुछ अधिक प्रमाणमे डाले और अखीरी मर्दनकरनेके वाद इसमेसे कुछपानी वाकीरहे उसको नितारकर धूपमे रखदे । नितरनेके वाद पानीको अलगकर जो कुछ धातुओंका कल्क नीचे जमगयाहो उसको धातुकल्कमें मिलाकर गोला वनाकर सुखादे और नितारेहुए रसमे हर्रेका चूर्ण मिलाकर थोडीदेर मर्दनकर इसगोलेपर लेप करदे । सूखनेपर इसपर १ अङ्गुलऊची कपड़मिट्टी देकर सुखाकर इसको खुलीमूषामे रख १॥ घड़ीतक तीक्ष्णाग्निमें धमनकरे फिर अग्निपरसे हटाकर ठंढाहोनेके वाद सम्पुटको फोड़कर रसको निकालले । यह **धातुबद्धरस** तैयार होगा । इसमेसे १–१ रत्ती

तत्तद्रोगहराऽनुपानकेसाथ देनेसे यह तमामरोगोको दूर करेगा ॥ ३४४ ॥

### ३४५ धात्रीखण्डाऽऽयसम्

धात्रीरसेनाऽऽढकसम्मितेन
लौहं रजश्चाऽष्टपलप्रमाणम् ।
सितां समानां कुडवोन्मिताऽऽज्ये
विपाच्य तस्मिन्नथ किञ्चिदुष्णे ॥
क्षिपेद्रजोविश्वकणोषणोत्थं
त्रिजातकोत्थञ्च फलत्रिकोत्थम् ।
पलप्रमाणं पृथगेव शीते
मधु प्रदेयं कुडवप्रमाणम् ॥ १४९९ ॥
तद्भक्षयेद्वह्निबलं विदित्वा
हिताऽन्नसेवी जयति प्रसह्य ।
चिराऽनुबन्धं परिणामशूलं
प्लीहान्त्रवृद्धिं जठराऽग्निमान्द्यम् १५००

लो प, ( स ), शूले ।

भाषा—आवलेकारस ४ सेर, लोहेका वारीक-रेता आधासेर, शक्कर आधासेर, गोघृत पावभर, लेकर बहुतमन्द आचसे पकावे । जब इसकी चाग-नीहोजाय तब उतारकर सोंठ, मिर्च, पीपल, त्रिजात, त्रिफला, इनप्रत्येकका १—१ पलचूर्ण डालकर खूब चलादे । शीतलहोनेपर पावभर मधु मिलाकर रख-छोड़े । ६—७ रोजकेबाद अग्निबल देखकर मात्रा का-यमकर खाकर हिताऽन्नभोजन करनेसे बहुतदिनका परिणामशूल, प्लीहा, अन्त्रवृद्धि, मन्दाऽग्नि इनसबको यह नष्टकरताहै ॥ ३४५ ॥

### ३४६ धात्रीपाकः

धात्रीफलानि पक्वानि तीक्ष्णलोहेन वेधयेत् ।
विश्वावरुणपत्रैश्च फलानि स्वेदयेद्भृशम् १५०१
ततो दुग्धे च संस्वेद्य जले च तदनन्तरम् ।
मधुमध्ये क्षिपेद्भाण्डे स्थापयेद्दिनविंशतिम् ॥
विनष्टं मधु सन्त्याज्यं क्षौद्रमन्यं पुनः क्षिपेत् ।
सितां धात्रीं गजकणां लवङ्गं मुस्तकं बलाम्
एलां चैव तुगाक्षीरीं लोहं वङ्गं तथैव च ।
षोडशांशेन सम्मिश्य प्रातः कर्षमितं भजेत् ॥
बले क्षीणे क्षये चैव पथ्यं मधुरमाचरेत् ।
प्रमेहं मूत्रकृच्छ्रञ्च नाशयेत्तत्क्षणादपि १५०५
वीर्यवृद्धिकरश्चैव वाजीकरणमुत्तमम् ।
कुष्ठं पित्तप्रकोपञ्च नाशयेन्नाऽत्र संशयः १५०६
अन्येऽपि पित्तजा रोगाः शोणिताद्यास्तथैव च ।
ते सर्वे प्रशमं यान्ति धात्रीपाकस्य सेवनात् ॥

नि र, क्षये ।

भाषा—पके आवलोको सूईके मुहेसे गोदकर सोठ और वरुणके पत्तोके काढेमे स्वेदनकर गायके-दूध और जलसे स्वेदनकरे । इसकेबाद धूपमे रखकर उनकापानी सुखादे फिर चिकनेवर्तनमे धीरजसे जमाकर मधु भरकर एकान्तस्थानमें रखदे । २१ रोजकेबाद इसकामधु ( जोकि कालापड़गयाहो ) निकालकर दूसराभरदे । फिर शक्कर, आवले, गज-पीपल, लौंग, नागरमोथा, बला, इलायची, वशलो-चन, लोहभस्म, वङ्गभस्म येसव मिलकर १६ वा हिस्सा मिलाकर रखछोड़े । इसमेसे १—१ तोला प्रातःकाल खाकर मधुराहारपर रहनेसे क्षीणता, क्षय, प्रमेह, मूत्रकृच्छ्र, वीर्यहानि, पुरुषत्वनाश, कुष्ठ और पित्तप्रकोप, वातरोग, रक्तविकार येसब नष्टहोते है

### ३४७ धात्रीलोहम् ( प्रथमम् )

धात्रीलोहरजोव्योषनिशाक्षौद्राऽऽज्यशर्कराः ।
भक्षणाच्च विनिघ्नन्ति कामलाश्च हलीमकम् ॥

र स, र र, बृ. मा, र सि, ध., लो. प. ( स., ) र सु, र क ल, रसायनस, र. चि, टो, र क, चि. र., च द., र का., यो म, ना वि, कामलायाम् ।

भाषा—आवला, लोहभस्म, त्रिकटु, हल्दी येसव समभाग मिलाकर रखछोडे । इसमेसे उचित मात्रामेलेकर मधु, घृत और शक्करकेसाथ खानेसे कामला और हलीमक नष्टहोतेहै ॥ ३४७ ॥

### ३४८ धात्रीलोहम् ( द्वितीयम् )

प्रस्थंप्रस्थं सिता ग्राह्या धात्रीफलगुडूचिकाः ।
प्रस्थैकं गुग्गुलुं दत्त्वा लोहपात्रे सुकुट्टयेत् ॥

त्रिकटुत्रिफलान्यष्टौ लोहं पलचतुष्टयम् ।
यष्टीमधु पलद्वन्द्वं चूर्णयित्वा तु दापयेत् ॥
भावयेदमृताक्काथै यावत्सप्तदिनावधि ।
चण्डाऽऽतपेन संशुष्कं चूर्णयित्वा च तत्क्षणात्
मध्वाऽऽज्येन समायुक्तं घटे स्थाप्यं तदौषधम् ।
आदौ मध्ये तथा चान्त्ये भक्षयेत्सुसमाहितः ॥
तैस्तैः खादेत्प्रकारैश्च पथ्यं दोषाऽनुसारतः ।
भुक्तस्तु हरते दोषान्वातपित्तसमुद्भवान् १५१३
मध्ये विष्टम्भिदोषञ्च तथाऽन्ते सलिलञ्जयेत् ।
अन्नपानकृतान्दोषांश्छूलञ्च परिणामजम् ॥
अम्लपित्तकफद्वन्द्वपाण्डुत्वं कामलामपि ।
जयेद्रोगांस्तथा चान्यान्धात्रीलोहं न संशयः॥

रससागर, शूले ।

भाषा—एकएकसेर गिलोय और आवलेका कपडछान चूर्णकर शक्कर और गुग्गुलु प्रत्येक१–१ सेर मिलाकर लोहेके हावनदस्तेमे लोहेके मूसलसे थोडा घी चुपडकर इसतरह कूटे कि इसका द्रव होजाय । इसकेबाद त्रिकटु, त्रिफला, ८–८ पल लोहभस्म ४ पल, मुलहठी २ पल, इनसवको मिलाकर गिलोयके काढेसे ७ दिनतक भावनादे फिर कडीधूपमे सुखाकर चूर्णबनाकर मधु और घी मिलाकर अवलेह बनाले । फिर चिकने वर्तनमें रख ७ रोजतक रहनेदे । इसमेसे अग्निवल देखकर मात्रा- कायमकरके भोजनके आदि मध्य तथा अन्तमे खावे । और रोगानुकूल पथ्य सेवनकरे तो वात, पित्त, कफज व्याधियोको यह दूरकरताहै । मध्यमे खानेसे विष्टम्भताको और अन्तमे खानेसे जलदोष, अन्नपानजदोष, परिणामशूल, अम्लपित्त, कफद्वन्द्व, पाण्डु, कामला वगैरह सवरोगोको नष्टकरताहै ॥

## ३४९ धात्री लोहम् ( तृतीयम् )

धात्रीचूर्णस्याऽष्टौ पलानि चत्वारि लोहचूर्णस्य ।
यष्टीमधुकस्य रजो द्विपलं दद्यात्पटे घृष्टम् ॥
अमृताकाथेनैतच्चूर्णं भाव्यञ्च सप्ताहम् ।
चण्डाऽऽतपे विशुष्कंभूयः पिष्टानवेघटेस्थाप्यम्
घृतमधुना संयुक्तं भक्तास्यादौ भक्तमध्येऽन्ते च
त्रीनपि वारान्खादेत्पथ्यं दोषाऽनुबन्धेन ॥
भक्तस्याऽदौनाशयतिव्याधीन्पित्तानिलोद्भूतान्
मध्येऽन्ने विष्टब्धं जयतिचनृणांविदह्यतेनाऽन्नम्
पानान्नकृतान्दोषान्भक्तान्ते शीलितो जयति ।
एवं जीर्यति चाऽन्ने शूलं नृणां यत् सुकष्टम् ॥
हरति च सहसा युक्तो योगश्चाऽयं जरत्पित्तम् ।
चक्षुष्यः पलितघ्नः कफपित्तसमुद्भवाञ्जयति॥
प्रसादयति च रक्तं पाण्डुत्वं कामलाञ्जयति ॥

यो. म., र. सं., र. र., लो. प. (स), र. चं., वृ. यो. त , र इ., र. को., रसायनस , भै. र., टो., च. द., र का., पित्तरोगे शूले च । लो. प. (स.) यष्ट्यादिलोह । टो. लोहाऽमृत ।

भाषा—आंवलेकाचूर्ण ८ पल, लोहभस्म ४ पल, मुलहठीकाचूर्ण २ पल, लेकर गिलोयकेक्काथसे ७ रोजभावनादेकर प्रचण्डधूपमे सुखाकर चूर्णकर मधु और घृत उचितमात्रामे मिलाकर नयेघडेमे रखछोडे । इसमेसे उचितमात्रामे दोषाऽनुकूलपथ्य भोजनके आदि, मध्य और अन्तमे सेवनकरे । भोजनके आदिमे लेनेसे वातपित्तव्याधियोको, मध्यमें विष्टम्भ और अन्तर्दाहको, और अन्तमे लेनेसे अन्नपानकृतदोषोको नष्टकरताहै और शूल, जरत्पित्त, कफपित्तजरोग, पाण्डु, कामला वगैरहको दूरकर रक्तकोसाफकरताहै ॥ ३४९ ॥

## ३५० धात्रीलोहम् ( चतुर्थम् )

कुडवं शुद्धमण्डूरं यवञ्च कुडवं तथा ।
पाकार्थञ्च जलं प्रस्थं चतुर्भागाऽवशेषितम् ॥
शतावरीरसस्याऽष्टावामलक्या रसस्य च ।
तथा दधिपयोभूमिकूष्माण्डस्य चतुःपलम् ॥
चतुःपलमिक्षुरसं दद्यात्तत्र विचक्षणः ।
प्रक्षिपेज्जीरकं धान्यं त्रिजातं करिपिप्पलीम् ॥
मुस्तं हरीतकीश्चैवमभ्रं लोहं कटुत्रयम् ।
रेणुका त्रिफला चैव तालीसं स्वर्णकेसरम् ॥
कटुका मधुकं रास्ना हयगन्धा च चन्दनम् ।
एतेषां कार्षिकं भागं चूर्णयित्वा विनिःक्षिपेत् ॥

भोजनाद्यवसाने च मध्ये चैव समाहितः।
तोलैकं भक्षयेन्नित्यमनुपानं पयस्तथा १५२७॥
शूलमष्टविधं हन्ति साध्याऽसाध्यमथापि वा।
वातिकं पैत्तिकं चैव श्लैष्मिकं सान्निपातिकम्॥
परिणामसमुत्थञ्च ह्यन्नद्रवभवन्तथा।
द्वन्द्वजान्यपि शूलानि ह्यम्लपित्तं सुदारुणम्॥
सर्वशूलहरं श्रेष्ठं धात्रीलोहमिदं शुभम्॥

र. स., र. सु., ध., भै र., यो. र., शूले।

भाषा—शुद्धमण्डूर और जव ४–४ पल, जल १६ पल डालकर पकावे। चतुर्भागाऽवशेष रहनेपर छानकर शतावर और आवलेकारस ८–८ पल, दही, दूध, भूमिकूष्माण्डकारस, ईखकारस ४–४ पल डालकर पकावे। जव पाकहोनेपर आवे तव जीरा, धनिया, त्रिजातं, गजपीपल, नागरमोथा, हर्रे, अभ्रक और लोहभस्म, त्रिकटु, रेणुका, त्रिफला, तालीसपत्र, नागकेसर कुटकी, मुलहठी, रास्ना, असगन्ध, चन्दन, इनप्रत्येकका १–१ तोले चूर्ण मिलाकर रखछोडे। इसमेसे भोजनके आदि मध्य तथा अन्तमे १–१ तोला खाकर दूधपीवे तो वातिक, पैत्तिक, श्लैष्मिक, सान्निपातिक, परिणामज, अन्नद्रवज और द्वन्द्वज शूल तथा घोर अम्लपित्त येसब नष्टहोतेहै॥ ३५०॥

## ३५१ धात्रीलोहम् ( पञ्चमम् )

धात्रीफलस्य चूर्णन्तु भावयेत्त्रिफलाद्रवैः।
एकविंशतिवारान्वै शोष्यं पेष्यं पुनःपुनः॥
तत्पादांऽशं मृतं लोहं मध्वाज्यशर्करान्वितम्।
पलैकं भक्षयेन्नित्यं सिताक्षीरं पिबेदनु॥
धात्रीलोहप्रभावेण रमयेत्कामिनीशतम्॥

र. ख, र. र., ध, वाजीकरणे। धन्वन्तरिरसरत्नाकरयोरस्तव्यस्ततया पाठोऽस्ति।

भाषा—आवले के चूर्णको त्रिफलाके स्वरससे एकरोज भावितकर सुखाडाले। सूखनेपर फिर दूसरे रोज घोटकर सुखावे। इसतरह २१ बार होनेकेवाद चतुर्थांश लोहभस्म मिलाकर इसकी वरावर शकर और अन्दाजसे मधु और घी मिलाकर रखछोडे। इसमेसे १–१ पल खाकर शक्कर डाला हुआदूधपीनेसे मनुष्य उत्साहयुक्त अनेकस्त्रियोंके साथ रमणकरसक्ताहै॥ ३५१॥

## ३५२ नयनचन्द्रलोहम्

त्रिकटु त्रिफला भृङ्गी शटी रास्ना महौषधम्।
द्राक्षा नीलोत्पलञ्चैव काकोली मधुयष्टिका॥
वाट्यालकं केशरञ्च कण्टकारीद्वयं तथा।
लौहाभ्रयोः पलं दत्त्वा भावयेदौषधैरथ॥
त्रिफलाक्वाथतैलेन भृङ्गराजरसेन च।
भावयित्वा वटी कार्या वदरास्थिमिता शुभा॥
यावन्तोनेत्ररोगाश्च तान्निहन्ति न संशयः॥

भै र, व, र स, र सु, नेत्ररोगे। रसेन्द्रसारसङ्ग्रहरसराजसुन्दरयो नयनाऽमृतलोहेति नाम।

भाषा—त्रिकटु, त्रिफला, काकड़ासींगी, कचूर, रास्ना, अतीस, द्राक्ष, नीलोफर, काकोली, मुलहठी, कघी, भगरा, छोटी और वड़ी कटेरी, लोह, अभ्रक भस्म सव समभागलेकर वारीकचूर्णकर त्रिफलाक्काथ, तिलकातैल, भंगरेकारस इनप्रत्येकमे १–१ रोज घोटकर वेरकीगुठलीके वरावर गोलिये वनाकर रखछोडे। इनमेसे १–१ गोली खाने तथा लगानेसे नेत्रके तमामरोग दूरहोतेहै॥ ३५२॥

## ३५३ नयनामृतम् ( प्रथमम् )

रसेन्द्रभुजगौ तुल्यौ तयोर्द्विगुणमञ्जनम्।
सूततुर्यांशकर्पूरमञ्जनं नयनाऽमृतम्॥
तिमिरं पटलं काचं शुक्रमर्माऽर्जुनानि च।
क्रमात्पथ्याऽशिनोहन्ति तथान्यानपि मृद्विकाम्॥

वृ. यो त, शा, र कौ, नि र, रसायनस, र. को, र क, नेत्ररोगे। शार्ङ्गधरे कृष्णाञ्जन नागसूतयोस्तुल्यं द्वयोर्दशमांशेन कर्पूर नियोजितमिति विशेष। प्रत्यञ्जनं नयनामृतमिति च नामद्वयमिति विशेष।

भाषा—शुद्धपारा और नाग समभाग, दोनोसे दूना सुरमा, पारेकीवरावर कपूर लेकर नागको गलाकर पारामिलाकर उतारले। फिर सवचीजे डालकर लोहेकी कडाहीमे लोहेके डंडेसे ६–७

रोजतक इसतरहघोटेकि एकदम यह कज्जलजैसा होजाय । इसको सुवहशाम सीसा अथवा जस्तकी सलाईसे डालनेसे धुधलापन, जाला, मोतिया, फूला, अर्म, अर्जुन इनसवको और एवंविध अन्यरोग तथा किल्लनीको यह नष्टकरताहै । इसकाअञ्जन करनेके समय पथ्यसे रहे ॥ ३५३ ॥

### ३५४ नयनाऽमृतम् ( द्वितीयम् )

चरा वेदमुख्या नदीजातयुग्मं
स्फुटत्काचकासीसकर्पूरलोध्रम् ।
वचापीतमुक्ताफलस्फाटिकाऽऽख्यान्
समंखर्परीयेणसञ्चूर्ण्यचारु ॥ १५३७ ॥
दिनंनिम्बुनीरेणसौवीरकेण
विमर्दीकृताछाययाशुष्कवर्ती ।
जलस्रावतैमिर्यकेचार्बुदादी-
ञ्जयत्यञ्जनादम्बुनैवोपितेन ॥

र. कौ., नेत्ररोगे ।

भाषा—त्रिफला, खदिरसार, नदीकीसीप और घोंघा, सफेद काचकी भस्म, कसीस, कपूर, लोध, बचा, हल्दी, दारुहल्दी, केसर, मोती, फिटकडी, इनसवकी वरावर खपरियालेकर कपड़छानचूर्णकर नीवू और काञ्जीमें १–१ रोजमर्दनकर वेरकीगुठली के वरावर गोलिये वनाकर छायामे सुखाकर रखछोडे । इनमेसे १–१ गोली उचिताऽनुपानकेसाथ घिसकरलगानेसे जलस्राव, तिमिर, अर्बुद इत्यादि-रोगोंको यह नष्टकरताहै ॥ ३५४ ॥

### ३५५ नयनाऽऽमृतम् ( तृतीयम् )

कर्पूरमञ्जनं तुत्थताक्ष्यपीतकरोहिणीः ।
वराटं सैन्धवं व्योपं फेनं मधुकचन्दनम् ॥
शङ्खश्च तत्समं पिष्ट्वा मातुलुङ्गरसेन तु ।
मधुसर्पिर्युतश्चैतदञ्जनं नयनाऽमृतम् ॥

व. रा., नेत्ररोगे ।

भाषा—कपूर, सुरमा, तूतिया, सोनामाखी, हल्दी, दारुहल्दी, केसर, कुटकी, कौडीभस्म, सेन्धानमक, त्रिकटु, समुद्रफेन, मुलहठी, चन्दन, शङ्ख-भस्म सव समभागलेकर कपडछानकर विजोरेके रससे २–३ रोज मर्दनकर गोलिये वनाकर रखछोड़े । इनमेसे १–१ गोली मधु और घीकेसाथ अञ्जनकरनेसे यह नेत्रकेरोगोको नष्टकरताहै ॥ ३५५ ॥

### ३५६ नयनाऽमृतम् ( चतुर्थम् )

मयूरतुत्थसिन्धूत्थं तुत्थं फेनं रसाञ्जनम् ।
टङ्कणं मरिचं तुल्यं जम्बीररसपेषितम् १५४१
त्रिरात्रं ताम्रपात्रस्थं काचाऽर्मपटलाऽपहम् ॥
कण्डूव्रणहरं नाम्ना नयनाऽमृतमुत्तमम् १५४२

व. रा., नेत्ररोगे ।

भाषा—तूतिया, सेधानमक, खपरिया ( अभाव मे जस्तभस्म ) कसीस, रसाञ्जन, समुद्रफेन, रसोत, सुहागा, मिरच येसव समभाग लेकर कपडछान चूर्णकर तावेके पात्रमे डाल जंभीरीके रसमे ताम्रके डंडेसे तीनरोजतक घोटकर वेरकी-गुठलीके-वरावर गोलिये बनाकर छायाशुष्ककर रखछोड़े । इनमेसे १–१ गोली उचिताऽनुपानके साथ अञ्जनकरनेसे मोतिया, अर्म, जाला, खुजली और घाव येसव नष्टहोतेहैं ॥ ३५६ ॥

### ३५७ नवग्रहरसः ( प्रथमः )

रसश्च गन्धकश्चैव मौक्तिकञ्च मनःशिला ।
कङ्कुष्ठं शङ्खभस्माऽपि टङ्कणं माक्षिकं तथा ॥
नेपालश्च समांशानि निक्षिपेत्खल्वमध्यतः ।
मर्दयित्वा शनैः सम्यक् त्रिफलाखरसेन च ॥
निम्बदाडिमसूर्वाश्च बालचित्ररसैः पृथक् ।
काचकूप्यां विनिक्षिप्य बालुकायन्त्रमध्यतः ॥
पटमृत्तिकयोगेन सप्तवारं विपाचयेत् ।
पक्त्वा सप्तदिनान्येतत् स्वाङ्गशीतलमुद्धरेत् ॥
गुञ्जामात्रं प्रयुञ्जीत नागवल्लीदलाऽन्वितम् ।
सर्वे ज्वरा विनश्यन्ति शीतिकाविषमादयः ॥
मरीचमागधीविश्वैः पित्तवातकफोत्तरे ।
कूष्माण्डफलनीरेण तापज्वरनिवारणम् १५४८
तिन्तिडीभसनीरेण पञ्च गुल्मान्विनाशयेत् ।
सैन्धवेन समायुक्तमष्टशूलनिवारणम् ॥१५४९

भृङ्गस्वरससंयुक्तं श्लेष्मरोगं निहन्ति च।
तत्तत्सौम्याऽनुपानेन सर्वरोगहरं भवेत् ॥
नवग्रहरसो नाम्ना प्रसिद्धो भुवि राजते१५५०

र. क. यो., र. कौ. ( ज्ञा ), सर्वज्वरेषु।

भाषा—शुद्धपारा, गन्धक, मोती, मैनसिल, कङ्कुष्ठ, शङ्खभस्म, सुनासुहागा, सोनामाखी, ताम्रभस्म येसब समभागलेकर कपडछान चूर्णकर पारेगन्धककी नीलवर्णकज्जलीमे मिलाकर त्रिफला, नीम, अनार, मूर्वा, सुगन्धवाला, चित्रक इनके स्वरसोसे १-१ रोज मर्दनकर सुखाकर आतशी शीशीमें वन्दकर ६-७ कपडमिट्टी देकर वालुकायन्त्रमे चढाय सातरोजतक अग्निदेकर स्वाङ्गशीतल होनेपर निकालकर रखछोडे इसमेसे १-१ रत्ती पानकेरसकेसाथ देनेसे शीतज्वर और विषमज्वरको नष्टकरताहै। त्रिकटु केसाथ देनेसे त्र्युल्वणसन्निपात नष्टहोताहै। कूष्माण्ड के रसकेसाथ प्रभापातज्वर दूरहोताहै। वकरीके दूधसे शीतज्वर, इमलीकीराखके पानीसे गुल्म, सेंधेनमककेसाथ आठोशूल भंगरेके रसकेसाथ श्लेष्मरोग और तत्तद्रोगहराऽनुपानकेसाथ देनेसे सभीरोगोको यह नष्टकरताहै ॥ ३५७ ॥

### ३५८ नवग्रहरसः ( द्वितीयः )

गौरी शिला हिङ्गुलगन्धकश्च
रसश्च दुग्धाऽश्ममयूरतुत्थम्।
तालं शिला खर्परसंयुतश्च
कृत्वा समांशं नवखल्वमध्ये॥१५५१॥
सकारवल्लीरसनिम्बतोयैः
यामद्वयेनाऽपि विमर्द्य गाढम्।
कूप्याश्च मध्ये विनिवेशयेच्च
सवालुकाऽग्निं च दिनं ददीत १५५२॥
सुस्वाङ्गशीतञ्च समुद्धरेत्तं
व्रीहिप्रमाणं नवनीतयुक्तम्।
समस्तवातादिसपायुजञ्च
सग्रन्थिकोटिम्बहुमार्गजालम् १५५३
निवारयेच्चाऽपि विचित्रमेत-
न्नीरोगदेही सुखमाप्नुयाच्च।
नवग्रहो नाम रसोत्तमो हि
समस्तगुल्मोदरशूलनाशी ॥१५५४॥

र. क यो गुल्मे शूले च।

भाषा—सोमल, शिंगरिफ, गन्धक, पारा, गोदन्ती तुत्थ, हरिताल, मैनसिल, खपरिया येसब समभाग लेकर वारीक चूर्णकर करेला और नीमके रसोंसे २-२ पहर मर्दनकर सुखाकर ६-७ कपड़मिट्टीदीहुई आतशी शीशीमे डालकर मुंहवन्दकर वालुकायन्त्रमे रख एकरोज अग्नि जलाकर स्वाङ्गशीतलहोनेपर निकालकर रखछोड़े। इसमेसे १ चावलभरमात्रा मक्खनकेसाथ देनेसे समस्तवातविकार, ववासीर ग्रन्थि, फैलनेवाला फोडा, इनसवको यह नष्टकरताहुवा शरीरको नीरोगकर गुल्म तथा शूलको नष्टकरताहै ॥

### ३५९ नवजीवनरसः

सिन्दूरं विषमुष्टिश्च चित्रकाऽभ्रकलोहकम्।
पृथक्कर्षद्वयं सर्वं त्र्यूषणं वेदकर्षकम्॥१५५५॥
चित्रकाऽऽर्द्रकनिर्यासैर्नागवल्लीदलद्रवैः।
भावयित्वा वटीं कुर्यात्त्रिगुञ्जाफलमानतः॥
तत्तद्रोगाऽनुपानेन सर्वान्रोगान्नियच्छति।
दीपनः पाचनश्चैव वलसञ्जननः परः॥
हृदयोत्थापने दक्षो रतौ प्रीतिविवर्धनः।
शूलाऽऽध्मानाऽतिसारांश्च नाशयेन्नवजीवनः॥

नू. क., सर्वरोगे।

भाषा—रससिन्दूर, लोह और अभ्रकभस्म, शुद्धकुचिला, चित्रकमूल, येप्रत्येक २—२ तोले, त्रिकटु ४ तो. लेकर सवकावारीक चूर्णकर चित्रक, अदरख, पान इन प्रत्येकके रसोसे १—१ रोज घोटकर ३—३ रत्तीकी गोलिये वनाकर रखछोडे। इनमेसे १—१ गोली तत्तद्रोगहराऽनुपानकेसाथ देनेसे मन्दाऽग्नि, वलहानि, हृदयव्यापारकी शिथिलता, शूल, आध्मान, अतिसार इनसबको यह नष्टकरताहै।

स्त्रीसङ्गमे अधिकइच्छाको उत्पन्नकरताहै तथा स्तम्भ-नकरताहै ॥ ३५९ ॥

## ३६० नवज्वरभैरवीवटी

सूताऽमृताऽनलविषा बृहती सपाठा
तालो हलो ग्रलिवसा विषतिन्दुकश्च ।
तार्ष्यं रसो वनसुतासुरसारसेन
सम्मर्दयेन्मुनिमितान्मिलितं समांशम् ॥
क्षुद्रारसेन दिवसत्रितयं गुडूची-
तोयेनवासरयुगं परिमर्द्य यत्नात् ।
शाणाऽधिकाः प्रविकिरेद्गुलिकास्ततस्ताः
सच्छृङ्गवेरसलिलेन सितायुतेन १५६०
संसेविता जयति तापमशेषमुग्रं
नव्यक्षयं ज्वलनमान्द्यमपीह कृच्छ्रम् ।
श्रीभैरवेण कथिता किल भैरवीयं
पथ्याऽशिनां मधुरमुद्गरसाशिनाञ्च ॥

रसावतारे, ज्वरे ।

**भाषा**—शुद्धपारा, वछनाग, चित्रक, अतीस, भटकटैया, पाठा, हरितालभस्म अथवा रसमाणिक्य, करिहारीकीजड, शुद्धगन्धक और कुचिला, सोना-माखी, पारा सब समभागलेकर सबचीजोका वारीक-चूर्णकर पारेगन्धककी नीलवर्णकज्जलीमे मिलाकर अनन्तमूल और वाकुचीके रसोसे सातदिन मर्दनकर भटकटैयाके रसमे ३ दिन और गिलोयके रसमे२ दिन मर्दनकर ४–४ माशेकी गोलिये बनाकर रखछोडे। इनमेसे १–१ गोली अदरखकेरसमे शक्कर मिलाकर इसके साथ लेनेसे तमामज्वर, नवीनक्षय, मन्दाऽग्नि, मूत्रकृच्छ्र इनसबको यह नष्टकरतीहै । इसमें मूगके यूपके साथ मधुरभोजन देना ॥ ३६० ॥

## ३६१ नवज्वरमुराररिसः

हरश्च गन्धकश्चैव कुनटी च समंसमम् ।
मर्द्य कर्कोटिकायाश्च रसेन विनियोजयेत् ॥
नवज्वरमुरारिः स्याद्वल्लं शर्करया सह ।
तन्दुलीयरसेनाऽनुपानं शर्करयाऽपि वा ॥
गुञ्जाद्वयप्रमाणेन ज्वरान्हन्ति नवान् हठात् ॥

र. र. स, नवज्वरे ।

**भाषा**—शुद्धपारा, गन्धक, मैनसिल समभाग लेकर नीलवर्णकज्जलीकर बाझककोड़ेके कदकेरससे १ रोज मर्दनकर ३–३ रत्तीकी गोलिये बनाकर रखछोड़े । इनमेसे १–१ गोली शक्करमिलेहुए चौलाईके रसके-साथदेनेसे यह तमामज्वरोको नष्टकरताहै । नवीन-ज्वरकोतो दोही रत्तीमें दूरकरताहै ॥ ३६१ ॥

## ३६२ नवज्वररिपुरसः

ताम्रं पत्रमयं प्रताप्य बहुशो निर्वाप्य पञ्चाऽमृते
गोमूत्रेऽग्निजलेबलिद्विगुणितंम्लेच्छेनपिष्टेन च ।
लिप्त्वा सप्तमृदंशुकैरथपुनः सामुद्रयामान् पचे-
द्यन्त्रेलावणिकेनवज्वररिपुःस्याद्गुञ्जयासम्मितः

र चि, रसायनस., र. सु., र. का., यो म., नव-ज्वरे । योगमहार्णवे आर्द्रकरस अनुपानत्वेन उपदिष्ट. ॥

**भाषा**—तावेके वारीकपत्र बनाकर गरमकर पञ्चामृतमे ७ वार बुझावे । फिर गोमूत्र और चित्रककेक्वाथमे ७–७ वार बुझाकर दूने गन्धक और शिंगरिफको नीबूके रससे पीसकर पत्रोपर चढ़ाय गोलाबनाय सुखाकर शरावसम्पुटमे रख ७ कपडमिट्टीदेकर सुखाकर लवणयन्त्रमे बन्दकर ४ पहरकीकडीआचमे पकाकर स्वाङ्गशीतलहोनेपर निकालकर रखछोड़े । इसमेसे १–१ रत्ती समयोचि-तानुपानकेसाथ देनेसे यहतमामज्वरोको नष्टकरताहै ॥

## ३६३ नवज्वरहरी वटी

सूतगन्धविषरुक्त्रिफलाभि-
र्व्योषमार्द्ररसतो वटिकैषा ।
हन्ति मुद्गतुलिता नवमह्ना
स्वागतेव वनिताऽखिलतापम्॥१५६५॥

र शं., र. शि., ज्वराधिकारे ।

**भाषा**—शुद्धपारा, गन्धक और बछनाग, कुठ, त्रिफला, त्रिकटु, सबसमभाग लेकर सबका-वारीकचूर्णकर पारेगन्धककी नीलवर्णकज्जलीमे मिलाकर अदरखकेरससे एकरोज मर्दनकर मूंगबरा-बरगोलिये बनाकर रखछोड़े । इनमेसे १-१ गोली

समयोचितानुपानकेसाथ देनेसे एकरोजमे यह तमाम नवीनज्वरोको नष्टकरतीहै । ३६३

## ३६४ नवज्वरहरो रसः

रसबलिटङ्कणदरदं सशुल्वजैपालकं क्रमतः ।
द्विद्विद्वित्रिद्विकरसतुलितं दन्तीरसैस्त्रिदिनम् ॥
भावितमथ तद्गुञ्जाद्वयमिह देयं सितासहितम् ।
सद्राक्षं वा तक्रं दद्यात्पथ्यं ज्वरहरो यामात् ॥

र. का ज्वरे।

भाषा—शुद्धपारा, गन्धक और भुनासुहागा२-२ भाग, शिंगरिफ३ भाग, ताम्रभस्म २ भाग, शुद्धजमालगोटा ६ भा., लेकर पारेगन्धककी नीलवर्णकज्जलीमे सबको मिलाकर दन्तीमूलके स्वरससे ३ रोजमर्दनकर गोलाबनाय शरावसम्पुटमे बन्दकर सुखाकर गजपुटकीआचदे । स्वाङ्गशीतल होनेपर निकालकर रखछोड़े । इसमेसे१—१रत्ती शक्करअथवाद्राक्षकेसाथ देनेसे यह तत्काल नवीनज्वरकोएकपहरमे दूरकरता है पथ्यमे छाछदेना । ३६४

## ३६५ नवज्वराङ्कुशरसः

क्रमेण वृद्धान्रसगन्धहिङ्गुला-
न्नैकुम्भबीजान्यथ दन्तिवारिणा ।
विमर्द्य गुञ्जाऽस्य नवज्वरापहा
जलेन चार्द्रासितया प्रयोजिता ॥

र स, र र. स., र क. ल, र च, टो, वृ यो, त, र. शं, र. सु, र का, ध, रसायनस., भै र, यो म, नि. र, र सि, र. र दी., चि. र भ, भैं. सा, चि र., र ( मा ), र क., भा. प्र, चि. क्र, र र कौ, ना वि, र को नवज्वरे। र. र समुच्चये गन्धको निष्कासित नाम च **वृद्धज्वराङ्कुशेति** । र र, कौ, नारायणविलासयो रसगन्धहिङ्गुला समभागेन नियोजिता. नाम च **शीतभञ्जीति** स्थापितम् । रसायनसङ्ग्रहे **जयरसेति** नाम द्वितीयस्थाने **ज्वराऽङ्कुशेति** नाम। वृ यो त, योगमहार्णवे च **ज्वरघ्नीति** नाम । र. सि, **चिन्तामणिः** । चि क्र. **शीघ्रज्वरारिः** ।

भाषा—शुद्धपारा १ भाग, गन्धक २भा. शिंगरिफ ३भा. दन्तीबीज ४ भा. लेकर पारेगन्धककी नीलवर्णकज्जलीकर दन्तीमूलकेरससे मर्दनकर १-१ रत्तीकी गोलिये बनाकररखछोडे । इनमेंसे १-१ गोली अदरख, शक्कर अथवा जलकेसाथ देनेसे यह तमामनवीनज्वरोको नष्टकरताहै ॥ ३६५ ॥

## ३६६ नवज्वरारण्यकृशानुमेघरसः

विमर्दिताभ्यां रसगन्धकाभ्यां
नीरेण कुर्यादिह गोलकं तम् ।
भाण्डे नवीने विनिवेश्य पश्चा-
त्तद्गोलकस्योपरि ताम्रपात्रम् ॥१५६९
सार्धं मुहूर्तं विनिरुद्ध्य धीमा-
नुद्दीपयेद्दीप्तकृशानुनाऽस्य ।
अधस्ततः सिद्ध्यति पर्पटीयं
नवज्वरारण्यकृशानुमेघः ॥ १५७० ॥
विलिप्य पूर्वं रसनाञ्च तालु-
देशञ्च सिन्धूद्भवजीरकाद्रैः ।
वल्लोन्मितां चाऽऽर्द्रकतोयमिश्रा-
मेनां नियोज्य स्थगयेत्पटेन ॥१५७१
घर्मोद्गमो यावदतः परञ्च
तक्रौदनं पथ्यमिह प्रयोज्यम् ।
कुर्याद्दिनानां त्रितयं यदीत्थं
ज्वरस्य शङ्काऽपि तदा भवेत्किम् १५७२

र र स., र च, र को, र. सु., र र का, र. म मा, नवज्वरे। र. च. ज्वराङ्कुशेति र. र स, र. र कोशयो द्वितीयस्थाने **नवज्वरारिः** इति नाम स्थापितम् र. सु., **पर्पटीरसः** ।

भाषा—शुद्धपारा, गन्धक समभागलेकर नीलवर्ण कज्जलीकर पानीसे पीसकर गोलाबनाय नवीन भाण्डमे रखकर इनकी बराबरके ताम्रपत्रसे ढकदे और सान्धिवन्दकर ३ घडीकी तीव्र अग्निमें पकावे स्वाङ्गशीतल होनेपर निकालले यह **पर्पटीरस** तैयार हुआ इसको पीसकर रखछोड़े । फिर अदरखके रसमें सेधानमक और जीरा डालकर जीभ और तालुको पोतकर इस पर्पटकी ३ रत्ती अदरखके रसकेसाथ देकर गरमकपड़ेसे ढकदेवे, इससे जव-

पसीना होजाय तव छाछभात खानेको दे । ऐसे ३ रोज़ करनेसे ज्वरकी शङ्कातक नही रहती ॥३६६॥

### ३६७ नवज्वराऽरिरसः

सूताऽयोऽभ्रकताम्रगन्धरसकंतुल्यांशकं मर्दयेत्,
कन्यापर्पटनिम्बवासकशिवा-
तिक्ताम्बुभि र्नाभियुक् ।
सिद्धोवल्लमितो जयेदभिनवं तापं कणाक्षौद्रयुक्,
गोक्षूरत्रिफलापटोलमधुयुक्द्राक्षाऽत्र विश्वायुता

र अम्लपित्ताऽधिकारे ।

भाषा—शुद्धपारा, गन्धक, लोह, अभ्रक और ताम्रभस्म, खपरिया येसव समभागलेकर पारेगन्धककी नीलवर्ण कज्जलीमे मिलाकर घीकुआर, पित्तपापडा नीम, अड्रूसा, हर्रे, कुटकी, इनके यथासम्भव स्वरस अथवा क्वाथोंसे १—१ रोज मर्दनकर ३—३ रत्तीकी गोलिये बनाकर रखछोडे । इनमेंसे १—१ गोली पीपल और मधुकेसाथ अथवा गोखरू, त्रिफला, परवल इनके क्वाथ अथवा चूर्ण और मधुकेसाथ अथवा द्राक्षायुक्त सोंठके साथ देनेसे अभिनवज्वर दूरहोता है ॥ ३६७ ॥

### ३६८ नवज्वराऽरिरसः

मरिचं पिप्पलीं शुण्ठीं दरदाऽऽमलटङ्कणम् ।
कर्षमानमिदं सर्वं नेपालं पलसम्मितम् ॥
मातुलाऽऽर्द्रकतोयेन गुटीं गुञ्जोन्मितां भिषक्
कृत्वा शीताऽम्भसा दद्यान्नवज्वरहरं परम् ॥

नू क, ज्वराऽधिकारे ।

भाषा—त्रिकटु, शुद्धशिंगरिफ, आवले, भुनासुहागा, येप्रत्येक १—१ तोला, शुद्धजमालगोटा ४ तोले लेकर सवको वारीक पीस धतूरा और अदरखके रससे १—१ रोज मर्दनकर १—१ रत्तीकी गोलियें वनाकर रखछोडे । इनमेंसे १—१ गोली ठंढेपानीसे देनेसे यह नवज्वरोको नष्टकरता है ॥

### ३६९ नवज्वरेभसिंहोरसः

शुद्धसूतं तथा गन्धं लोहं ताम्रञ्च सीसकम् ।
मरीचं पिप्पलीं विश्वं समभागं विचूर्णयेत् ॥

र. सा. ८५

अर्धभागं विषं दद्यान्मर्दयेद्वासरद्वयम् ।
शृङ्गवेराऽनुपानेन दद्याद्गुञ्जाद्वयं भिषक् ॥
नवज्वरे महाघोरे वातसङ्ग्रहणीगदे ।
नवज्वरेभसिंहोऽयं सर्वरोगे प्रयोजयेत् १५७८

र. स., र. का, र. च, यो म., वै. क., र. सु, भै. र., र. म., रसायनस., व रा., र. प्र., भै. सा., नि र., र. चि, नवज्वरे । रसराजसुन्दरस्य द्वितीयस्थाने मन्थानभैरव नाम्ना दृश्यते भै. सा., रोगमुरारीति ।

भाषा—शुद्धपारा, गन्धक, लोह, ताम्र, नागभस्म, त्रिकटु येसव १—१ तोला, शुद्धवछनाग ६ माशे लेकर सवको बारीक पीसकर पारेगन्धककी नीलवर्ण कज्जलीमे मिलाकर रखछोडे । इनमेसे२—२ रत्ती अदरखके साथ देनेसे महाघोर नवज्वर, वातज सग्रहणी, कास, श्वास, इनसवको यह नष्टकरताहै ॥

### ३७० नवज्वरेभाऽङ्कुशरसः

बीजं भवस्याऽथगिरेशपुत्र्या-
स्सशोषणं टङ्कणशुभ्रखण्डम् ।
मीनस्य पित्तैरथ भावितं वै
नवज्वराऽरिः प्रथितस्तु लोके ॥ १५७९
खण्डं समानञ्च वदन्ति चाऽत्र
तद्भक्षणे वल्लयुगञ्च मानम् ।
तथाऽऽर्द्रकोत्थेन रसेन देय-
स्त्रिरात्रितोऽयं ज्वरनाशनेऽलम् ॥
शान्ते तापे तत्र युक्तञ्च पथ्यं
वृन्ताकाद्यं तक्रयुक्तञ्च भक्तम् ।
पित्ताऽऽधिक्ये मूर्ध्नि तोयं निपात्यं
तापाऽपायं कारयेत्सद्भिषग्यः ॥१५८१

चि. क, र चं., नि. र, र सु, र. शं., रसायनसं, वै. वि, र ल, र सं, वै चि, यो र, नवज्वरे । रसेन्द्रसारसङ्ग्रहे ऊपणस्थाने तालकं नियोजितम् । चि. क. कल्प वल्ली विहाय सर्वत्र शर्कराया अभावो दृश्यते ।

भाषा—शुद्धपारा, गन्धक, मरिच, भुनासुहागा, मिश्री येसव समभागलेकर मछलीकेपित्तेसे ३-४ भावनाए देकर ६-६ रत्तीकी गोलियें बनाकर रखछोड़े । इनमेसे १-१ गोली अदरखके रसकेसाथ

देनेसे ३ रोजमे यह तृतीयकज्वरको नष्टकरतीहै। बुखारउतरजानेपर वृन्ताक, और छाछयुक्तभातदे। पित्तकी अधिकतामे शिरपर जलकी धाराएदे और पित्तघ्न तमाम उपचारकरे ॥ ३७० ॥

### ३७१ नवज्वरेभाऽङ्कुशरसः

रविरसगन्धकटङ्कणवृद्ध्या
जयपालरेणुना सहितम्।
सम्मर्द्याऽऽर्द्रकनीरे दिनत्रयं याति सिद्धत्वम्॥
ससितं वल्लमितं तद्विरेचनं स्वेच्छया कुरुते।
पथ्यं ससितं देयं दधियुक्तं तक्रयुक्तं वा॥
एवं विशुद्धदेहो यो मृगाङ्कं सेवते युक्त्या।
स जयति यक्ष्मरोगं प्राप्नोति च चिराऽऽयुष्ट्वम्
उपद्रवोपचारस्तु रसमात्रे प्रयोजयेत्।
क्षयोपयोगिकं पथ्यं यदुक्तं तन्नियोजयेत्॥

र., क्षये।

भाषा—ताम्रभस्म १ भा, शुद्धपारा २ भा; गन्धक ३ भा; सुहागा ४ भा, शुद्धजमालगोटा ५ भा., लेकर पारेगन्धककी नीलवर्णकज्जलीकर सबको इकट्ठे मिलाय ३ रोज अदरखकेरससे घोटकर ३ रत्तीकी गोलिये बनाकर रखछोड़े। इनमेसे १-१ गोली ठंढेपानीकेसाथलेकर जितनीबार ठंढापानी-पीवेगा उतनेहीदस्तहोगे, गरमपानीपीनेसे बंदहोजा-यंगे। पथ्यमे शक्कर, दही, भात और छाछदे। इसतरह विशुद्ध शरीरहोकर बादमे जो मृगाङ्कका सेवनकरताहै वह यक्ष्मरोगसे निवृत्तहोकर दीर्घायुको-प्राप्तहोताहै। इसमे दाहादिकउपद्रवहोंतो उनका-उपचार दूसरे रसोकीतरहकरे। क्षयकेलिये जो पथ्य कहागयाहै वह देवे ॥ ३७१ ॥

### ३७२ नवनाथरसः

विषं विषां द्वितुत्थश्च रसको हि शिला वचा।
तालकं गन्धकं तुल्यं मर्दितं लशुनद्रवे॥
दोलायन्त्रे दिनं पाच्यं भाव्यं जम्बूकपित्तकैः।
गुञ्जामात्रं प्रदातव्यमजाक्षीराऽनुपानतः॥
आहिकास्थिगतं दोषं शीतजूर्तिं हरेत्परम्।
क्षीराऽन्नं शर्करायुक्तं भोजयेद्घृतसंयुतम्॥
दाहे शीतजलं पेयं नारिकेलोदकं तु वा।
प्राणिनां हितदो नित्यं नवनाथरसोत्तमः॥

वै. चि., वा., अस्थिगतज्वरे।

भाषा—शुद्धवछनाग, अतीस, तुत्थ, कसीस, खपरिया, मैनसिल, वच, हरिताल और, गन्धक सबसमभागलेकर लशुनके पानीसे एकरोज मर्दन-कर गोलाबनाय दोलायन्त्रमे १ रोज लशुनके द्रवसे स्वेदनकर शृगालके पित्तसे भावनादेकर १-१ रत्तीकी गोलियें बनाकर रखछोड़े। इनमेसे १-१ गोली बकरीके दूधकेसाथ देनेसे रोजका अस्थिगत शीतपूर्वकज्वर नष्ट-होताहै दूधभात, शक्कर और घीकेसाथ भोजनकरावे। दाहहोनेपर शीतलजल और नारियलकापानी पिलावे ॥ ३७२ ॥

### ३७३ नवनेत्रदात्रीवटी

ताम्राऽग्र्यलवणशङ्खै
स्तुल्यामगधोद्भवाऽथ वै धात्री।
जलपिष्टा गुलिकेयं सायंसमयाऽऽन्ध्यमपहरति

र. र. स, नेत्ररोगे।

भाषा—तांबेकाचूर्ण, सैन्धव, शङ्ख, येसबसम-भाग, इनतीनोकीबराबर पीपल और आवलेकाचूर्ण मिलाकर पानीकेसाथ ४-५ रोज मर्दनकररखछोड़े सायंकालमे इसको पानीकेसाथ घिसकर अञ्जनक-रनेसे रतोधी दूरहोतीहै ॥ ३७३ ॥

### ३७४ नवनेत्रदावटी

द्विरष्टौ ताम्ररजसो मधुकस्य चतुर्दश।
कुष्ठस्य द्वादशांशाः स्युर्वचायाश्च दशैव तु॥
रजतस्य च चत्वारो द्वौ भागौ कनकस्य च।
सैन्धवस्याऽष्टसङ्ख्याता पिप्पल्याश्च षडेव तु॥
अजाक्षीरेण सम्पेष्य ताम्रपात्रे निधापयेत्।
अभिष्यन्दमधीमन्थं व्रणशुक्रं कुकूणकम्॥
तिमिरं पटलं काचं कण्डूं हन्ति विशेषतः॥

र. र. स., नेत्ररोगे।

भाषा—ताबेका बारीकचूरा १६ भाग, मुलहठी १४ भाग, कुठ १२ भा., वच १० भा., चादीका चूरा ४ भा., सोनेका चूरा २ भा., सैन्धव ८ भा., पीपल ६ भा., इनसबको इकट्ठेकर बकरीके दूधसे ताम्रपात्रमे ताबेके सोटेसे ६–७ रोज मर्दनकर गोलिये बनाय सुखाकर रखछोडे। इनका बकरीके दूधसे अञ्जनकरनेसे अभिष्यन्द, अधिमन्य, व्रण, धौलापन, कुकूणक, तिमिर, जाला, मोतिया, खाज इनसबको यह नष्टकरतीहैं ॥ ३७४ ॥

## ३७५ नवायसम् ( महत् )

चपला मरिचं विश्वं शिवा पथ्या च पारदः ।
विडङ्गमुन्द्रे वह्निश्च निशे दार्वी च धान्यकम् ।
रेणुका पिप्पलीमूलं गगनं तीक्ष्णलोहकम् ।
कान्तलोहं समांशानि मण्डूरं द्विगुणं भजेत् ॥
निष्कमात्रं घृतक्षौद्रैर्ग्रहणीपाण्डुशोफके ।
अष्टोदरेषु गुल्मेषु कामलाक्षयरोगिषु ॥
महानवायसं ख्यातं जठरे परमौषधम् १५९६

र. क यो, पाण्डौ । टि०—अत्रयोगेऽष्टादशद्रव्ययोगत्वादुचितमेवमहानवायसमिति सञ्ज्ञा ।

भाषा—त्रिकटु, आवले, हर्रे, पारा, विडङ्ग, मोथा, चित्रक, हल्दी दारुहल्दी, धनिया, रेणुका, पिपलामूल, अभ्रक, फोलाद, कान्तलोहभस्म येसब समभागलेकर सबसे दूनी मण्डूरभस्म मिलाकर रखलेवे। इसमेसे २–३ माशे घी और मधुकेसाथ खानेसे पाण्डु, ग्रहणी, शोथ, आठप्रकारके उदररोग, गुल्म, कामला, क्षय, मन्दाग्नि येसब नष्टहोतेहै ॥

## ३७६ नवायसरसायनम्

विडङ्गत्रिफलाक्वाथश्चित्रको वृक्षको परः ।
इन्द्रलेखायसश्चूर्णं भृङ्गराजरजोऽपि च १५९७
क्रमाद्विवृद्ध्या संयुक्तं तेनैव सुपरिप्लुतम् ।
नवायस्सन्निभं नाम रसायनमनुत्तमम् १५९८
कुष्ठानि शमयत्येतत् षडर्शांसि न संशयः ।
सर्वाङ्गव्यापकमपि श्वित्रमाशु निहन्ति च ॥
शूलश्वासक्रिमीन्हन्ति यक्ष्महृद्रोगनाशनम् ।
एषां मध्ये क्षिपेत्ताप्यं भस्माऽऽयसमिदं ततः
एकादशाऽऽयसं वाऽपि भवत्यश्मजतूत्कटम् ।
द्वादशाऽऽयसमेतच्च नीलाऽभ्रकसमन्वितम्
इदं रसायनवरं सर्वव्याधि विनाशनम् ।
कुष्ठं श्वित्रं जरां हन्यात् किं चित्रं बलवर्णदम्
सर्वान्रोगान्निहन्त्याशु कृपया शम्भुनोदितम् ॥

र. क, कुष्ठे । अत्र त्रिफलायास्त्रित्वगणनया नवसङ्ख्या पूर्णाभवति ।

भाषा—विडङ्गकाघन १ भा., त्रिफलाकाघन २ भा., चित्रक ३ भा., थूहरकादूध ४ भा., बाकुची ५ भा., लोहभस्म ६ भा., भंगरा ७ भाग लेकर सबका बारीकचूर्णकर भगरेके रससे १ भावनादेकर रखछोडे। यह त्रिफलारसायनतैयारहुआ। इसमेसे २–३ माशे घी और मधुकेसाथ देनेसे समस्तकुष्ठ, सबप्रकारके बवासीर, समस्ताऽङ्गव्यापकश्वित्र, शूल, श्वास, कृमि, राजयक्ष्म, हृद्रोग, इनसबको यह नष्टकरताहै। इसमे सबकीबराबर सोनामाखी डालदेनेसे **भस्माऽऽयस** होताहै। भस्मायसमें उसकी बराबर शिलाजतु डालनेसे **एकादशायस** होताहै। एकादशायसमे समभाग अभ्रकभस्म डालनेसे **द्वादशाऽऽयस** होताहै। यह द्वादशाऽऽयस पथ्यपूर्वक सेवनकियाजायतो कुष्ठ, श्वित्र, बलवर्णनाश वगैरह समस्तरोगोको नष्टकरताहुआ बुढापेको दूरकरताहै ॥ ३७६ ॥

## ३७७ नवाऽऽयसलोहम् ( प्रथमम् )

त्र्यूषणं त्रिफला मुस्तं विडङ्गं चित्रकाः समाः।
नवाऽयोरजसोभागास्तच्चूर्णं क्षौद्रसर्पिषा ॥
भक्षयेत्पाण्डुहृद्रोगकुष्ठार्शःकामलाऽपहम् ।
नवाऽऽयसमिदं चूर्णं कृष्णात्रेयेण भाषितम् ॥
गोमूत्रेण पिबेद्वातपाण्डुरोगञ्च नाशयेत् ।
शोथहृद्रोगमुदरं क्रिमिकुष्ठभगन्दरम् ॥
नाशयेदग्निमान्द्यञ्च दुर्नामकमरोचकम् ।
आर्द्रकस्य रसेनाऽपि लीढं कफसमुद्भवम् ॥
गुञ्जामेकां समारभ्य यावत्स्युर्नवरक्तिकाः ।

**तावल्लोहं समश्नीयाद्यथादोषबलं नरः ॥**
**नवायसमिदं चूर्णं नरोऽष्टादशरक्तिकाः ।**
**प्रलिह्यान्मधुसर्पिर्भ्यां पिबेत्तक्रेण वा सह ॥**

च. स., सु. स,. ना., वि , र प्र., रसायनस., र. क ल., वृ. यो. त , लो प (स.) र चं , अ. हृ., ग. नि , वै. र , यो म., र सु., यो र , भा. प्र , चि र. भ., नि. र , चि र , वै. द , वै. क., र. क , वै वि , र र , र. का., भै र., वृ मा , च द , वा , ना स , वै चि , अ. स , टो , र (मा ), यो त , व रा , पाण्डुरोगे । वसवराजीये मुस्तं न दृश्यते नाम च महायसचूर्णेति स्थापितम् । योगमहार्णवे-एवं सति प्रथमदिवसे त्र्यूषणादिसहित रक्तिकाद्वयमित खादेत् । तत प्रतिदिनं रक्तिकाद्वयद्वय वर्द्धयेत् । एवं त्र्यूषणादिसहिता अष्टादशरक्तिका स्युस्ततस्ता प्रतिदिनं खादेत् इत्यधिक । चि र. भ , शोथाग्निवटीतिनाम स्थापितम् ॥

**भाषा**—त्रिकटु, त्रिफला, नागरमोथा, विडङ्ग, चित्रक येनव चीजे समभाग, लोहभस्म ९ भाग, लेकर सबको इकट्ठेमिलाय रखछोड़े । इसमेसे १ माशाचूर्णमधु और घीकेसाथलेनेसे पाण्डु, हृद्रोग, कुष्ठ, ववासीर और कामला इनको दूरकरताहै । गोमूत्रकेसाथ लेनेसे वातपाण्डु, शोथ, हृद्रोग, कृमि, कुष्ठ, भगन्दर, अग्निमान्द्य, ववासीर और अरोचक इनको यह नष्टकरताहै । अदरखकेरससे लेनेसे अत्यन्तवढेहुए कफको दूरकरताहै । अत्यन्त कमजोर आदमीको १ रत्तीसे आरम्भकर ९ रत्तीतकवढावे । बलवान् आदमीकेलिये १८ रत्तीतकवढावे । मधु और घी इसका साधारण अनुपानहै । ग्रहणीवगैरहमे तक्रकेसाथभी देसक्तेहैं ॥ ३७७ ॥

### ३७८ नवायसलोहम् ( द्वितीयम् )

**मुस्ताऽमृताचित्रकयष्टिपिप्पली-**
**विडङ्गशुण्ठीत्रिफलै यथोत्तरम् ।**
**चूर्णं नवायोरसभागसंयुतं**
**समाक्षिकं पाण्डुगदाऽपहं परम् ॥**

र. (मा.) पाण्डुरोगे । नवायोरसभागसंयुतमित्यत्र-अयोनव, रसस्य-सिद्धपारदस्य भागेन-एकभागेन संयुतं पूर्वं चूर्णं कर्त्तव्यमित्यर्थं करणीय ।

**भाषा**—शुद्धपारद भस्म १ भा., नागरमोथा १ भा., गिलोय २ भा., चित्रक ३ भा., मुलहठी ४ भा., पीपल ५ भा., विडङ्ग ६ भा., सोठ ७ भा., त्रिफला ८ भा., लोहभस्म ९ भाग, लेकर सबको इकट्ठेमिलाकर रखछोड़े । इसमेसे १ रत्तीसे आरम्भकर ९ रत्तीतक वढाकर मधुकेसाथ लेनेसे पाण्डुरोगको यह नष्टकरताहै ॥ ३७८ ॥

### ३७९ नवायसलोहम् ( तृतीयम् )

**त्रिकटुत्रिफलैलाभि जातीफललवङ्गकैः ।**
**नवभागोन्मितैरेतैः समं तीक्ष्णं मृतं भवेत् ॥**
**सञ्चूर्ण्याऽऽलोडयेत्क्षौद्रे नित्यं यः सेवते नरः ।**
**कासं श्वासं क्षयं मेहं पाण्डुरोगं भगन्दरम् ॥**
**ज्वरं मन्दाऽनलं शोफं सम्मोहं ग्रहणीञ्जयेत् ॥**

ग नि , यो र., वृ, यो त , यो. म., वै क , नि. र , राजयक्ष्मणि । यो म अग्निरस । वै क., नि. र. त्रिकट्वादिलोहम् ।

**भाषा**—सोठ, मिर्च, पीपल, हर्रे, वहेडा, आंवला, इलायची, जायफल, लौग येप्रत्येक १–१ भागलेकर बारीकचूर्णकर सबकीवरावर लोहभस्म मिलाकर रखछोडे । इसमेसे १–१ माशा मधुमे मिलाकर खानेसे कास, श्वास, क्षय, प्रमेह, पाण्डु, भगन्दर, ज्वर, मन्दाग्नि, शोथ, चित्तविक्षेप, ग्रहणी इनसबको यह नष्टकरताहै ॥ ३७९ ॥

### ३८० नवायसलोहम् ( चतुर्थम् )

**त्र्यूषणं त्रिफला मुस्ता विडङ्गं चित्रकं समम् ।**
**भागमेकं लोहचूर्णं भावयेदिक्षुजै रसैः ॥**
**अष्टभागश्च मण्डूरं दत्त्वा भाव्यश्च पूर्ववत् ।**
**शीलितं तु मधुनाऽपि घृतेन**
**पाण्डुरोगहृदयाऽऽमयाऽपहम् ।**
**सेवितं प्रखरकामलाऽर्शसां**
**नाशनं खलु हलीमकस्य च ॥**

हा स पाण्डुरोगे ।

**भाषा**—सोठ, मिर्च, पीपल हर्रे, वहेड़ा, आवला, नागरमोथा, विडङ्ग, चित्रक, लोहभस्म

सुहागा, सज्जी, पत्रज, तज, इलायची, वङ्गभस्म, स्याहजीरा, सफेदजीरा, येसवसमभागलेकर कपड़छानचूर्णकर इसतमामसेआधा चित्रकमूलका चूर्ण मिलाकर रखछोड़े। इसमेसे २-२ माशे मधुकेसाथ चाटनेसे यह मूत्रातिसार औरसोमरोगको अवश्य नष्ट करता है ॥ ३७७ ॥

### ३७८ गगनामृतरसः

त्वग्दलैलकरिकेशरान्वितं
व्योपतुल्यसमवारिदायसम् ।
चूर्णितं समसितं प्रयोजितं
हन्तिपायुजमथाग्निमार्दवम् ॥१६३०॥

लो. प. ( स. ), अर्शस्तु।

भाषा—तज, पत्रज, इलायची, नागकेसर, त्रिकटु, अभ्रकभस्म, लोहभस्मइनसबको समभाग लेकर अथवाकाष्ठौषधियोंकीबराबर अभ्रकभस्म और लोहभस्म लेवे। इनसबकीबराबर मिश्री मिलाकर रखछोड़े। इसमेंसे२ माशे अथवा१॥माशायथारोगानुपानकेसाथदेनेसे बवासीर, मन्दाग्निवग़ैरह नष्टहोतेहैं ॥ ३७८ ॥

### ३७९ गगनायसचूर्णम्

त्रिकटु त्रिसुगन्धश्च लवङ्गं जातिकाफलम् ।
त्वगाक्षीरी शटी शृङ्गी वाजिगन्धा च दाडिमम्
एतानि समभागानि सर्वतुल्यमयोरजः ।
आयसेन समं देयं गगनञ्च ततो बुधैः ॥
यावदेतानि सर्वाणि तावतीञ्च सितोपलाम् ।
ततो मात्रां प्रयुञ्जीत गद्याणेन समन्विताम् ॥
कासं पञ्चविधं हन्ति सुरुच्यं वह्निदीपनम् ।
प्रमेहान् विंशतिश्चैव वाजीकरणमुत्तमम् ॥
स्वरभेदं निहन्त्याशु चूर्णंहि गगनायसम् ॥

यो म, रसायनसं, कासश्वासयो ।

टि०--मूले मात्राया विडालपदमात्रिकामितिपाठ आसीत्तत्स्थाने समयमनुसृत्याऽस्माभि र्गद्याणेन समन्वितामितिपाठ कृतोस्ति।

भाषा—त्रिकटु, तज, पत्रज, इलायची, लौंग, जायफल, वंशलोचन, कचूर, काकड़ासींगी, असगन्ध, अनारकीछाल, येसवसमभागलेकरसबकी बराबरलोहभस्म और अभ्रकभस्म तथासबकीबराबर शक्करडालकररखछोड़े । इसकी ६माशे अथवा ३माशेकीमात्रा यथारोगानुपानकेसाथ देनेसे पाचप्रकारकी खासी, अरुचि, मन्दाग्नि, प्रमेह, स्वरभेद, येसबदूरहोतेहै औरउत्तमवाजीकरणहै ॥ ३७९ ॥

### ३८० गगनायसरसायनम्

कृत्वा धान्याभ्रकं श्लक्ष्णं मुस्ताक्वाथेन मर्दयेत्
दिनैकमातपे तप्तं चक्रीः कृत्वा ततः परम् ॥
शरावसम्पुटे क्षिप्त्वा देयश्चोपरि खर्परः ।
वस्त्रमृत्तिकया लिप्त्वापुटं दद्यात्ततः परम् ॥
स्वाङ्गशीतलतां याते तच्चूर्णं पेपयेत्पुनः ।
मुस्तानीरेण च क्षुण्णं चक्रीः कुर्यात्पुनःपुनः
एकविंशतिवारांश्च दद्याद्युक्त्याऽनया पुटम् ।
वारम्वारं च सञ्चूर्ण्य शरावस्थं तदभ्रकम् ॥
एवं हि पुटितं व्योम भवेन्निश्चन्द्रकं परम् ।
एवं कान्तायसं सिद्धमेतन्निश्चन्द्रमभ्रकम् ॥
समं क्षिप्त्वाऽथ खल्वे तद्द्वयं पिष्टीकृतां नयेत् ।
रसायनं द्वयोर्योगान्निष्पन्नं गगनायसम् ॥
प्रातरुत्थाय मापैको ग्राह्यः शीतजलान्वितः ।
माक्षिकेणाप्लुतोवाऽथ दद्याद्रोगानुपानतः ॥
अष्टादशसु मेहेषु वातश्लेष्मादिरोगिषु ।
अतिसारेषु पैत्तेषु देयमेतद्रसायनम्॥१६४२॥
प्रत्यहं प्रातरुत्थाय यः करोति सदा नरः
तेजस्वी बलवांश्छूरो बलेन गजसन्निभः ॥
स्तम्भितो तेन वा हस्ती पदमेकं न गच्छति

रसचिं , रसकं., यो.म.,

टि०—अत्रमूले गद्याणो ग्राह्य इत्यस्यस्थाने मापैकोग्राह्य इतिपाठ स्थापित ।

भाषा—कृष्णाभ्रककोधान्याभ्रकबनाकर नागरमोथेके काढेसे मर्दनकर एकरोज़कडीधूपमे रखदे, गरमहोनेपर इसकीछोटी२ टिकिया बनाकर धूपमे रखदे, खूबसूखजानेपर शरावअथवा मिट्टीकीकड़ाहीमे

रखकरभट्टीमेरखदे ऊपरसे एकखपडा राखमिलनेके बचावकेलिये रखदे । स्वाङ्गशीतलहोनेपर फिर नागरमोथेके क्राथमे टिकियाबनाकर फूके । इसतरह २१ वारकरनेसे अभ्रकनिश्चन्द्रहोजाताहै । इसीप्रकारकान्तलोहकोभीतैयारकरले, फिरइनदोनोंको समभागलेकर इकट्ठेखरलकर रखछोडे । यह **गगनायस** तैयारहुआ । इसकी १ माशेकीमात्रा ठढेपानीकेसाथ अथवामधुके साथअथवा तत्तद्रोगहरानुपानकेसाथदेनेसे सबप्रकारकेप्रमेह, वातश्लेष्मरोग औरपैत्तिकअतीसारको नष्टकर तेजस्वी औरबलमेहाथीकेसमान बनादेताहै । अगर इसकाप्रयोग रसायनविधिसे कियाजायतो उससे पकड़ाहुआ हाथीछूटनहींसक्ताहै ॥ ३८० ॥

## ३८१ गगनायसम्

तत्र लोहगगनं पृथक् पलैः
पञ्चभिर्मिततयान्वितं पलैः ।
पञ्चभिश्च रजसोमृतावरा-
हस्तिकर्णकरिकेशरत्वचाम् ॥१६४४॥
जीवनीयघनतण्डुलीयक-
त्र्यूषणाग्नियवशूकसम्भवान् ।
जीवकद्वयमुकूलका बला-
ब्रह्मवृक्षफलविश्वगन्धकान् ॥१६४५॥
कैरलीमधुकतालमूलिका-
गोस्तनीत्रिलवणान् सचन्दनान् ।
जातिसस्यकदलीसितात्रिवृ-
त्पिण्डखर्जुरफलात्सरोचनात् ॥ १६४६
पत्रकाच सहचन्द्रवालिका-
त्पाचयेत्पयसितत्पलाष्टके ।
आज्यषोडशपले तदुन्मिते
त्रैफलाम्भसि मृदौ हुताशने॥१६४७॥
मूषकोत्करनिभं यदा तदा
सिद्धमेतदवतार्य घट्टितम् ।
शुद्धलोहविधिना प्रयोजितं
तं तमेवकुरुते गुणोत्तरम् ॥ १६४८॥

लो. प, ( स० ) रसायने ।

टि०—अग्निमन्योगे पाकोचितशर्कराया अभावान्माक्षिकप्रक्षेपस्याप्यदर्शनाचत्वारिंशत्पला शर्करा योजनीया, तदभावाद्योगस्य रक्षेव दुर्वारा स्यादिति सुधीभिर्विभावनीयम् ।

**भाषा**—लोहभस्म, अभ्रकभस्म ५–५ पल, गुडूची, त्रिफला, हस्तिकर्णपलाश, नागकेसर, तज, येसब ५ पल, जीवनीयगण ( देखोचरक सू०, ४ अ० ), नागरमोथा,काटेवालीचौलाईकीजड़, त्रिकटु, चित्रक, यवक्षार, इनकोमिलाकर ५पल, जीवक, ऋषभक, मुकूलक ( चिलगोजा अथवाशुद्धजमालगोटा ), पलाशबीज, गन्धक अथवाएलुआ या मुरामासी, येसबमिलकर ५ पल,छोटीइलायची, मुलहठी स्याहमुशली, कालीद्राक्ष, सेन्धानमक, साभरऔरसञ्चलनमक तथाचन्दनइनकेमिलकर ५पल,जावित्री, केलेकाकन्द, सफेदनिशोत, पिण्डखजूर, गोरोचन, इनके ५ पल, पत्रजऔर बड़ी इलायची ५ पल, गायका दूध १६ पल, घी ३२ पल, त्रिफलाकाकाढा ३२ पल, शक्कर ४० पल, इनसबको कूटकपड़छानकर लोहेकीकडाहीमे डालकर बहुतहीमन्दआचसे पकानाचाहिये । जबइसकीगोलीबननेलगें तबइसकोखूबघोटकर शुद्धपात्रमे रखलेना । इसकी २ माशेकीमात्रा अथवा योग्यतानुसारदेकर ऊपरदूधअथवा तत्तद्रोगोचितानुपानकेसाथ देनेसे यह योग समस्तरोगोंको दूरकरताहै॥ ३८१ ॥

## ३८२ गगनार्कोरसः

कुष्ठचित्रकशिवायमानिका
विश्वपिप्पलीवचाः सशर्कराः ।
पूर्ववर्द्धितविभागयोजितास्तत्समाभ्रक
मथार्कजं रजः ॥ १६४९ ॥
साज्यमेतदवलीढमादरा-
त्कोष्णतोयमनुपायिनोऽचिरात् ।
हन्ति कोष्ठगतवायुजान्गदानग्नि-
मान्द्यमथपायुजानपि ॥ १६५० ।

लो प ( स० ) कोष्ठगतवायुरोगे ।

**भाषा**—कुठ १भाग, चित्रक२ भाग,हर्रै३भा०, अजवाइन४भा०,सोंठ ५ भा०, पीपल ६भा० वच७

मा०, शक्कर ८मा०, येसवक्रमवृद्धभागसे इकट्ठेकर इन सबकीबराबर अभ्रकऔर लोहभस्मदेकर इकट्ठेखरलकर धररक्खे इसकी ४ रत्तीसे ८ रत्तीतककीमात्रा घीकेसाथचाटकर गरमपानीपीनेसे कोष्ठगतवातरोग, अग्निमान्द्य औरबवासीर येसवनष्टहोतेहै ॥ ३८२ ॥

### ३८३ गगनेश्वरो रसः

पारदो गगनं कान्तं तीक्ष्णं च मारितं समम् ।
भृङ्गधात्रीफलद्रावैश्छायायां भावयेत्त्यहम् ॥
सितामध्वाज्यकैस्तुल्यं सर्व भाण्डे निरोधयेत् ।
धान्यराशौ स्थितं मासं ततो निष्कत्रयं समम्॥
भक्षयेच्च पिबेत्क्षीरं कर्षैकं त्रिफलामनु ।
रात्रौ शुण्ठीं कणां खादेद्वर्षैकादजरो भवेत् ॥
जीवेद्ब्रह्मदिनं वीरः स्याद्रसो गगनेश्वरः१६५३

र सं, रसायनसं, रसायने ।

भाषा—शुद्धपारा, अभ्रकभस्म, कान्तपाषाणभस्म, कान्तलोहभस्म, फोलादभस्मयेसव समभागलेकर भागरा, आवलाइनप्रत्येकके स्वरससे ३–३रोज भावनादेकर औरसुखाकर बराबरभागमे मिश्री, घीऔर मधुमिलाकर स्निग्धभाण्डमे रखकर धान्यकीराशिमे दवादे, १ महीनेवादइसमेसे ३ टङ्कखाकर १ तोला त्रिफलाका चूर्णफंकाकर ऊपरसेदूधपिलावे, रात्रिमे सोंठऔरपीपलका चूर्णदेकर दूधपिलावे । एकवर्षतक लगातार प्रयोगकरनेसे आदमी बुढापेसेरहितहोकर ब्रह्माने मनुष्यकेलियेजितनाप्रमाणअधिकसेअधिकनियतकियाहै उतनेदिनतकजीताहै ॥ ३८४ ॥

### ३८४ गगनेश्वरो रसः

अभ्रं ताम्रं रसं लोहं प्रत्येकं संस्कृतं पलम् ।
सर्वमेतत्समाहृत्य गृहीयात्कुशलो भिषक् ॥
आज्ये पलद्वादशके दुग्धे तच्छरसंख्यके ।
पक्त्वा तत्र क्षिपेच्चूर्णं तण्डुलीयकमुस्तकम् ॥
विडङ्गत्रिफलावह्नित्रिकटूनां तथैव च ।
पिष्ट्वा पूर्वोन्मितानेतान्यथा सम्मिश्रितं नयेत् ॥
ततोघृष्ट्वा शुभे भाण्डे स्थापयेत्तद्विचक्षणः ।
आत्मनः शोभने चाह्नि पूजयित्वा गुरुं रविम् ।
घृतेन मधुना मद्यैः पाययेन्माषकादिकम् ।
अष्टौ माषान् क्रमेणैव वर्धयेत्सुसमाहितः ॥
अनुपानेन दुग्धेन नारिकेरोदकेन वा ।
शर्करादुग्धशाल्यन्नं मुद्गमांसरसादयः १६५९॥
तत्तद्रोगविरुद्धानि द्रव्याण्यन्यानि योजयेत्।
हृच्छूलं पार्श्वशूलं च ह्यामवातं कटिग्रहम् १६६०
गुल्मशूलं शिरःशूलं यक्ष्मशूल विशेषतः ॥
अग्निमान्द्यं क्षयं कुष्ठं कासंश्वासं विचर्चिकाम्॥
अश्मरीं मूत्रकृच्छ्रञ्च योगेनानेन साधयेत् ।
दातव्यमनुपानेन शूलरोगहरं भवेत् १६६२॥

र को, शूलाविकारे ।

भाषा—अभ्रकभस्म, ताम्रभस्म, शुद्धपारा, लोहभस्मयेप्रत्येक एकएकपललेकर सबकोइकट्ठेकर घी १२ पल, दूध ६० पलमेंडालकर पकावे, जबदूधकाखोवाहोजाय तबनीचेउतारकर चौलाईकीजड़,नागरमोथा, विडङ्ग, त्रिफला, चित्रक, त्रिकटुयेप्रत्येक १–१ पललेकर चूर्णकर मिलाकर चिकनेवर्तनमे रखदे । अपनेजन्मनक्षत्रवगैरहकी अनुकूलतादेखकर गुरूऔरसूर्यकापूजनकर अग्निकी योग्यता देखकर १ माशावगैरहकीमात्रा नियतकर घी, मधुअथवामद्यकेसाथलेवे औरइसमात्राकोवढाताहुआ ८ माशेतकलेजाय परजहाकुछविगाड़हो वहापरमात्राको स्थिरकरदे आगेनवढै, अनुपान गायकादूधअथवा नारियलकापानीदेवे । इसकेपचजानेपर दूध, शक्कर, चावल,मूग, मासरसवगैरहदे । तत्तद्रोगको नष्टकरनेवालेजो द्रव्यहैं उनकाउपयोगकरे, इसकेसेवनसे हृदयशूल, पार्श्वशूल आमवात, कटिग्रह, गुल्मजनितशूल, शिरःशूल, यक्ष्मशूल, अग्निमान्द्य, क्षय, कुष्ठ, कास, श्वास, विचर्चिका, अश्मरी, मूत्रकृच्छ्रइनसबको यह दूरकरताहै ॥ ३८४ ॥

### ३८५ गगनेश्वरी वटी

टङ्कणं कर्कटास्थीनि चूर्णा चैव शिलाजतु ।
महिषीकर्णनेत्रोत्थं मलं स्त्रीस्तन्यकैः समम् ॥
पिष्ट्वा तल्लिप्तमूषायामभ्रसत्त्वं क्षिपेद्धमेत् ।

सत्त्वतुल्यं क्षिपेत्तत्र पूर्ववद्द्रुतपारदम् ॥१६६४
द्रवं दिव्यौपधीनाञ्च दत्त्वा तत्रैव तद्धमेत् ।
मिलितो जायते बद्धः पूर्ववत्काचटङ्कणैः ॥
ध्मातो मूषाशतेनायं तेजःपुञ्जो भवेद्रसः ।
वर्षैकं धारयेद्वक्त्रे शिवतुल्यो भवेन्नरः१६६६॥
अजरामरतां कुर्याद् गुटिका गगनेश्वरी ।
बिल्वबीजोत्थितं तैलं निष्कमात्रं पिबेदनु ॥
उदरे जायते वह्निः पिबेत्क्षीरं पुनःपुनः ।
साक्षाज्जातिस्मरत्वञ्च कवित्वं श्रुतधारणम् ॥
खेचरत्वमदृश्यत्वं जायते नात्र संशयः१६६८॥

र खं, रसायने ।

भाषा—सुहागा, केकड़ेकीहड्डी, ऊन, शिलाजतु, भैंसकेकानऔरआखोंकामल, स्त्रीकादूध, येसब समभागलेकर खूबबारीकपीसकर इसकावज्रमूषामे लेपदेकर उसमेअभ्रसत्त्वको डालकरधमनकरे, उसकेगलजानेपर अग्निस्थायीकियाहुआद्रुतपारा उतनाही डाले औरयथालाभदिव्यौषधियोंकारस डालकर इसकोधमनकरेतो यहपारा अभ्रसत्त्वके साथमिलकर बंधजायगा फिरइसमे काचऔरसुहागा डालकर १०० वार धमनकरनेसे एकदमवहगोली चमकीलीहोजायगी इसको १ वर्षतकमुंहमे रखनेसे शिवकेसदृशहोकर अजरऔरअमरहोजाताहै । इसगोलीकोमुहमे रखनेकेबाद बिल्वबीजसे निकालाहुआतैल ४ माशेरोजपीनाचाहिये । इसकेपीनेकेबाद पेटमेअग्निमान्द्यमपड़े- उसवक्तवारम्वारदूधपीवे, इसतरहकरनेसे पूर्वजन्मकास्मरणहोनेलगताहै काव्यकरनेकीशक्तिआतीहै एकवारके सुनेहुएको नहीं भूलता इसीसेखेचरत्व औरअदृश्यत्व होताहै ॥ ३८५ ॥

### ३८६ गङ्गाधरचूर्णम्

बिल्वं मोचरसं पाठां धातकीं धान्यमेव च ।
समङ्गां नागरं मुस्तं तथैवातिविषां समम् ॥
अहिफेनंलोध्रकञ्च दाडिमं कुटजन्तथा ।
पारदंगन्धकञ्चैव समभागं विचूर्णयेत् १६७०॥
तक्रेण खादयेत्प्रातश्चूर्णं गङ्गाधरं महत् ।
ज्वरमष्टविधं हन्यादतीसारं सुदुस्तरम् ॥
ग्रहणीं विविधाञ्चैव कोष्ठव्याधिहरं परम् ॥

भै र, ग्रहण्याम् ।

भाषा—बेलगिरी, मोचरस, पाठा, धावड़ीके फूल, धनियां, मजीठ, लज्जालुकेबीज, सोंठ, नागरमोथा, अतीस, अफीम, लोध, दाड़िमकीछाल, कुटज, पारा, गन्धक इनसबको समभाग लेकर सुवहकेसमयछाछकेसाथदेनेसे ८प्रकारकाज्वर दुस्तर अतिसार, संग्रहणी औरउदरकीव्याधियोकोदूर करता है ॥ ३८६ ॥

### ३८७ गङ्गाधरो रसः ( प्रथमः )

मुस्तं मोचरसं रोध्रं धातकीबिल्वकौटजम् ।
अहिफेनं रसं गन्धं सूक्ष्मचूर्णन्तु कारयेत् ॥
वल्लमात्रमिदं खादेद्गुडतक्रविमिश्रितम् ।
अतिसारे प्रवाहे च ग्रहण्यामपि योजयेत् ॥
अहिफेनं सुसंभृष्टं खर्परे मृदुवह्निना ।
पक्वातीसारशमनं भेषजं नास्त्यतः परम् ॥

र. सु., र चं., रसायन स, र प्र, वै. र., नि. र, र सि, रसायनसार, अतिसारे। टि०—रससग्रह सिद्धान्ते त्रुटित पाठोऽस्ति ।

भाषा—नागरमोथा, मोचरस, लोध, धावड़ीके फूल, बेलगिरी, इन्द्रजव, अफीम, पारा, गन्धक ये सब समभागलेकर खूबबारीकचूर्णकरके रखछोड़े । इसमेसे ३ रत्तीगुड़मिलाईहुई छाछकेसाथलेनेसे अतिसार, प्रवाहिका, ग्रहणीयेरोगनष्टहोतेहै । पक्वातिसारको दूरकरनेकेलिये इससेबढकर दूसरीदवा नहीं है । इसमेजो अफीमदियाजायउसको मिट्टीके खपड़ेमे रखकर बहुतमन्द आचसे सेककर देवै ॥ ३८७ ॥

### ३८८गङ्गाधरो रसः(द्वितीयः)(कुटजलेहः)

कुटजानाञ्च मूलानि बिल्वदाडिममूलकम् ।
कपित्थचूतमूलानि कुमुदानाञ्च मूलकम् ॥
कमलानाञ्च कन्दानि चन्दनं खदिरं तथा ।
वटोदुम्बरमूलानि सुगन्धाश्वत्थमूलकम्१६७६
एतानि समभागानि घटे क्षिप्त्वा प्रयत्नतः ।